सूत धन्योऽसि धन्योऽसि शिवभक्तिरियं त्वया । कथं प्राप्ता पुरा पुण्यं किं किं चीर्णमनश्वरम् ॥
केन पुण्यप्रभावेन भवता मङ्गलावहम् । मङ्गलापतिपादाब्जस्मरणं क्रियते वद ॥ ३५ ॥

सूतः —

पुरा व्यासः समागत्य केदारेश्वरसन्निधौ । केदारेश्वरमभ्यर्च्य स्थितः सन्तुष्टमानसः ॥ ३६ ॥
तदा शिवार्चनपरं व्यासं शिष्यगणावृतम् । प्रणम्योक्तं शिवज्ञानं कथं जातं तवेत्यपि ॥ ३७ ॥
स शिवाराधनासक्तः शिवपञ्चाक्षरं स्मरन् । स्पृष्ट्वा विभूतिं लिङ्गं च केदारेशमुवाच माम् ॥

व्यासः —

सूताऽधुना तत्त्वमेकं वक्ष्ये शैवं सनातनम् । रहस्यं परमं गुह्यमनाख्येयं विचक्षणैः ॥ ३९ ॥
पश्यत्सु शैववर्येषु सर्वेष्वेतेषु सादरम् । रहस्यमुच्यते किञ्चित् त्वं भक्तोऽसि ममेत्यपि ॥ ४० ॥
यद्रहस्यं मया नोक्तं तदिदानीं मयोच्यते । गोपनीयं प्रयत्नेन शिवभक्तिपुरस्सरम् ॥ ४१ ॥
शिवभक्ताय वक्तव्यमातुराय विशेषतः । विलोक्य सर्वतो दिक्षु न यत्र स्वविरोधिनः ॥ ४२ ॥
अशांभवाय सहसा [1] न वदामीति निश्चयात् । अनाप्ताय न वक्तव्यं रहस्यमिति निश्चयात् ॥
शपथः क्रियतामत्र केदारेश्वरसन्निधौ । अशांभवाय सहसा न वदामीति निश्चयात् ॥ ४४ ॥
निधानकुम्भं चोराय दुष्टाय हितमात्मनः । कः प्रयच्छति यत्नेन तं संपाद्य प्रयत्नतः ॥ ४५ ॥
अन्ये निधानकलशा देयाः सन्तु कथञ्चन । अयं निधानकलशः सर्वथा देय एव न ॥ ४६ ॥
शृण्वन्त्वद्य भवन्तोऽपि मुनयः शिवतत्पराः । प्रसङ्गादधुना शैवं रहस्यं रम्यमुच्यते ॥ ४७ ॥
इदं भवद्भिर्यत्नेन गोपनीयं समाहितैः । रहस्यानामिदं तावद्रहस्यं शैवमुत्तमम् ॥ ४८ ॥
यथा रत्नानि दिव्यानि गोपनीयानि यत्नतः । तथा हररहस्यानि गोपनीयानि यत्नतः ॥ ४९ ॥
रहस्यरत्नमित्येतत् प्रख्यातं वेदसंश्रुतम् । इदं रहस्यं वेदान्तं (?) गोपनीयं महत्तरम् ॥ ५० ॥
मयापि श्रद्धया तावत् भवत्सु दयया परम् । रहस्यमुच्यते शैवं अवक्तव्यमपि ध्रुवम् ॥ ५१ ॥
रत्नान्यत्यन्तदिव्यानि प्रदेयानि कदाचन । इदं रहस्यं परमं न देयं शिवतत्पराः ॥ ५२ ॥
प्राणरक्षामणित्वेन प्रसिद्धमिदमादरात् । अत एव भवद्भिस्तु गोपनीयं विशेषतः ॥ ५३ ॥
इदं रहस्यमित्युक्तं शिवेन गिरिजां प्रति । तया गुप्तमिदं पुण्यं भवान्या भक्तिपूर्वकम् ॥ ५४ ॥
तया तावत् कुमाराय पृष्टया भक्तिपूर्वकम् । स्नेहेनोक्तं रहस्यं हि शैवं वेदान्तसंस्तुतम् ॥ ५५ ॥

---

1 न वक्तव्यमिदं त्वया c, d

तदुक्तं नन्दिकेशाय कुमारेण कदाचन। प्रणताय विनीताय कृताञ्जलिपुटाय च ॥ ५६ ॥
इदं नारायणायोक्तं नन्दिकेशेन धीमता। तत्पादपद्मरजसा [1] संस्तुताय यतात्मने ॥ ५७ ॥
इदं नारायणेनोक्तं चतुर्वक्त्राय धीमते। प्रणतायातिनम्राय सरस्वत्या सहान्वहम् ॥ ५८ ॥
ब्रह्मणा सनकादिभ्यः प्रोक्तमेतन्महत्तरम्। तैरुक्तं नारदायाद्य मह्यं तेनोक्तमादरात् ॥ ५९ ॥
अभ्यासार्थमिदं तावत् तद्विस्मरणशङ्कया। मया वक्तुं समारब्धं भवद्भ्यो मुनिपुङ्गवाः ॥ ६० ॥
अत एव प्रयत्नेन विनीताय हिताय च। भवद्भिरपि वक्तव्यं नान्यस्मै सर्वथा द्विजाः ॥ ६१ ॥
इदं मत्प्रार्थितं तावत् कर्तव्यं नात्र संशयः। इदमेव वरं सत्यं ममेयं गुरुदक्षिणा ॥ ६२ ॥

ऋषयः —

यदुक्तं श्रीमता भक्त्या तत्सर्वं श्रुतमेव हि। हितायास्मभ्यमप्युक्तं त्वया तत्त्वविदां वर ॥ ६३ ॥
यद्गोपनीयं देवानां रहस्यं शांभवं मुने। तद्गोपनीयमस्माकं रत्नवत् नात्र संशयः ॥ ६४ ॥
इदं कण्ठमणित्वेन रक्षणीयं विशेषतः। अस्मिन्नर्थे संशयोऽपि श्रीमता कार्य एव न ॥ ६५ ॥
यद्रहस्यं त्वया नोक्तं श्रीमतापि त्वया मुहुः। पृष्टेनापि प्रयत्नेन रहस्यं तदिहोच्यते ॥ ६६ ॥
इति श्रुत्वा मुनिवचो व्यासः सन्तुष्टमानसः। रहस्यं वक्तुमुद्योगं चकार चतुरस्ततः ॥ ६७ ॥
प्रणम्य शिवमद्वैतं भस्मधारणपूर्वकम्। शिवलिङ्गमुपस्पृश्य पुनर्नत्वा महेश्वरम् ॥ ६८ ॥
आनन्दाश्रुसमाकीर्णः तूर्णं गद्गदया गिरा। हृदि साम्बं स्मरन्नेव घोरसंसारशामकम् ॥ ६९ ॥

व्यासः —

धन्या यूयं न सन्देहो भस्मभूषितविग्रहाः। शिवविद्यादानपात्रं त्रिनेत्रप्रियमीदृशम् ॥ ७० ॥
पात्रे दत्तानि रत्नानि धनानि विविधानि च। सर्वसौख्यप्रदानीति श्रुतानि श्रुतिभिर्मुहुः ॥ ७१ ॥
शिवविद्यादानपात्रं दुर्लभं भुवनेष्वतः। लब्धे पात्रे परित्यागः कथं कार्यो मनीषिभिः ॥ ७२ ॥
शिवविद्याप्रदानेन दातुः पात्रस्य च द्वयोः। तरणं तु भवत्येव घोरसंसारसागरात् ॥ ७३ ॥

यत्रापारहराजरामरकथासिन्धुः समुज्जृंभते
तत्रांबागणनाथषण्मुखयुतः शंभुः स्वयं नृत्यति।
विष्णुर्वेत्रकरश्चतुर्मुखमुखान् दूरीकरोत्यादरात्
नन्दीशः स्वकटाक्षवीक्षणभयत्रस्तान् समस्तान् सुरान् ॥ ७४ ॥

---

1 संयताय ढ.

पदार्धमपि वा मुदा मदनमर्दनानन्ददप्रसाददकथागतं कथमपि स्मृतं वा श्रुतम् ।
ददाति मुदमन्तकप्रणतमाशु तावत्करोत्यपारसुकृताम्बुधिप्रविसोऽर्धवृद्धा मुहुः ॥ ७५ ॥

पायात् सोयमलौकिकः शिवकथागङ्गातरङ्गानिलः
श्रोतॄन् पावयतीति नाद्भुतमिदं तत्सन्ततिं तत्कुलम् ।
तत्पोष्यानपि पावयत्यनुदिनं नूनं सकृद्वा स्मृतः
किं वक्तव्यमनुक्षणं स्मृतिपथारूढो मृडानीपतेः ॥ ७६ ॥

गात्रश्रोत्रविशालनेत्ररसनाचित्तायुपामक्षया वृत्तिः पुण्यवशेन तेन गणनाप्येषां परार्धाधिका ।
यद्यप्यस्तु तथापि शङ्करकथापीयूषसिन्धुस्फुरत्कोट्यंशांशविशेषतत्त्वकथनं शक्यं न सर्वात्मना ॥

द्राक्षेक्षुक्षीरसाराद्यतिरुचिररसास्वादनख्यापनाद्यैः
अद्यालं कालकालश्रुतिकथितकथायूथपीयूषधाराम् ।
धीराकारप्रसारस्फुरदुरुसरसासारधारानुरक्तां
व्यक्तां शक्के विविक्ते पिब पिब रसने स्वादनामोदमाना ॥ ७८ ॥

वामे मेरुशरासनं हरिशरं सव्ये दधानं करे संहर्तुं त्रिपुराणि भूरथवरन्यस्ताग्रपादांगुलिम् ।
आपादप्रणतामितामरशिरःकोटीररत्नप्रभास्पर्धावर्धकपादुकाघचरणं फालेक्षणं भावयेत् ॥ ७९ ॥

वन्दे मेरुशरासनोरुशिखरज्याकारकाकोदरग्रीवालङ्कृतवामपाणिचरणं नाराचनारायणम् ।
सव्याकुञ्चितपाणिना सकरुणं संभावयन्तं पुरा जित्वा वीक्ष्य शिवासहायममरस्रग्वृष्टितुष्टं मुहुः ॥

प्रणामानम्रेन्द्रप्रमुखवनितायल्लकमणिप्रभास्पर्धामर्धाम्रितकरशिरोरत्नमहिला ।
मुहुर्दृष्ट्वा हृष्टा निजचरणजाग्रच्छविकृतां स्मितव्यक्तानन्दा दिशतु मम कल्याणसरणिम् ॥

जाताः शाङ्करसुन्दरोदरदरी द्वारोर्वरास्वङ्कुराः
सिक्ताः शङ्करनामधेयसुधया सद्यः प्रवृद्धा फलैः ।
आनम्राः शिवनामलक्षणसुधा यन्त्राभिलाषां मुहुः
कुर्वन्तो रसनारसैरभिनवां कर्तुं किमद्योद्यताः ॥ ८२ ॥

इति [1] श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे [2] प्रथमोऽध्यायः ॥

—×—

1 d कोशे श्रीस्कान्दमहापुराणे हिमवत्खण्डे शिवरहस्ये... । एवमुपरितनाध्यायेष्वपि दृश्यते ।

2 ऋषिप्रश्ने शिवभक्तमहिमशिवकथासारवर्णनं नाम c.

# अथ द्वितीयोऽध्यायः ।

ऋषयः —

शिवविद्या महाविद्या सा विद्या मुक्तिदायिनी । तां विद्यां वेद वेदो वा गौरी वा शङ्करोऽथवा ॥
कुमारो वा गणेशो वा नन्दिकेशोऽपि वा स्वयम् । यदि स्याद्गिरिजाकान्ते भक्तिरव्यभिचारिणी ॥
तदैव शिवविद्यायाः स्वरूपप्रवणो भवेत् । भक्तिरीशे तथा तावत् न कस्याप्यद्भुतं तपः ॥ ३ ॥
शिवविद्याप्रभावज्ञो दुर्लभो भूतले मुने । यथा भक्तिर्महादेवे तत्र सा तपसा खलु ॥ ४ ॥
तथाऽद्यापि न दृष्टैव भक्तिरव्यभिचारिणी । भक्तिरलतया ख्याता सैव भक्तिर्महेश्वरे ॥ ५ ॥
सा भक्तिर्मुक्तिदा नॄणां संसारभयमोचिनी । महादेवश्चिदाकारः परमानन्दविग्रहः ॥ ६ ॥
निर्गुणोऽपीति निर्णीतः पार्वतीपतिरित्यपि । चन्द्रचूड इति ख्यातः त्रिपुरान्तक इत्यपि ॥ ७ ॥
स्मराररिति विख्यातः कालकण्ठ इति स्मृतः । त्रिशूलपाणिः सर्वेशो जटामण्डलमण्डितः ॥ ८ ॥
उमार्धविग्रहत्वेन प्रख्यातः परमेश्वरः । अन्धकारिरिति ख्यातो वृषभध्वज इत्यपि ॥ ९ ॥
लिङ्गाकार इति ख्यातो भस्मोद्धूलितविग्रहः । रुद्राक्षभूषणः शान्तो नीलकण्ठ इति स्मृतः ॥
विरूपाक्ष इति ख्यातो दक्षो दाक्षायणीप्रियः । कुमारगुरुरव्यक्तो व्यक्तः सुन्दरविग्रहः ॥ ११ ॥
कामारिरिति विख्यातः कामदत्वेन कीर्तितः । अक्षरत्वेन विज्ञातो विज्ञानानन्दसागरः ॥ १२ ॥
ईश्वरः परमात्मा च परमात्मा परात्परः । इत्यन्योन्यं विरुद्धं हि नाम सर्वे चिदात्मके ॥ १३ ॥
चिद्विलास इति ख्यातं चिदित्यपि विशेषतः । इदं सर्वं वदास्मभ्यं शिवधर्मान् विशेषतः ॥ १४ ॥
तद्धर्मश्रवणादेव तज्ज्ञानं च भविष्यति ॥

व्यासः —

शृणुध्वं मुनयः सर्वे भूतिधारणपूर्वकम् । हृदि ध्यात्वा महादेवं मङ्गलार्धाङ्गमव्ययम् ॥ १५ ॥
शिवार्चनं परो धर्मः सर्वधर्मोत्तमोत्तमः । तद्भिन्नधर्माः सर्वेऽपि तदर्था एव केवलम् ॥ १६ ॥
शिवः परं परं ब्रह्म सच्चिदानन्दलक्षणम् । विज्ञानघन एवेति सानन्दघनमुच्यते ॥ १७ ॥
तन्निर्विकारं निर्लिप्तं तदाद्यन्तविवर्जितम् । ज्योतिःस्वरूपममलं नामरूपविवर्जितम् ॥ १८ ॥
अप्रमेयं निर्गुणं च निरञ्जनमनामयम् । वाचामगोचरं मन्ये मनसामप्यगोचरम् ॥ १९ ॥

यतो वाचो निवर्तन्ते अप्राप्य मनसा सह । वेदवेदान्तवचनैरशक्यं तन्निरूपणम् ॥ २० ॥
पुराणानां का कथात्र वाङ्मार्गार्गलमेव तत् । अनर्गलप्रवाहाणां कथानामपि वा कथा ॥ २१ ॥
वागगोचरमप्येतत् कथञ्चित् कृपया प्रभोः । शम्भोर्विषयतामाप (?) ततस्तद्वचसामपि ॥ २२ ॥
इदमप्युच्यते तावत् प्रेरितेन कथञ्चन । शिवेनैव मया विप्राः स बुद्धिप्रेरकः शिवः ॥ २३ ॥
देवस्य सवितुर्बुद्धिं प्रचोदयति शङ्करः । स एव भगवान् भर्गो धियो यो नः प्रचोदयात् ॥
देवस्य दीप्यमानस्य सवितुः ज्ञानमुत्तमम् । प्रचोदयति विश्वात्मा वरेण्यः शिव एव सः ॥ २५ ॥
अन्यः को वा तद्वरेण्यं सवितुर्वा प्रचोदयात् । अस्माकमितरेषां वा स भर्गः शङ्करस्ततः ॥ २६ ॥
अस्य भर्गपदस्यैव माहात्म्यं श्रुतिषु श्रुतम् । संसारभर्जनाद्भर्गः सोयं स्वर्गापवर्गदः ॥ २७ ॥
पुरा चकार गायत्री तपो घोरतरं परम् । प्रीतस्तत्तपसा शंभुः तद्भक्त्या परया तदा ॥ २८ ॥
ततः परं स भगवान् भर्गः सर्गादिकारणम् । तामुवाचातिचतुरो घनगम्भीरया गिरा ॥ २९ ॥

श्री सदाशिवः —

त्वया तप्तं तपो घोरं कल्पानामयुतं ध्रुवम् । तेन प्रीतोऽस्म्यहं देवि वरं वृणु यथेच्छया ॥ ३० ॥
वरदेषु वरेण्योहं त्वदीप्सितवरप्रदः । किमदेयं ममास्त्यत्र प्रीतये तपसाऽधुना ॥ ३१ ॥
इति तद्वचनं श्रुत्वा प्रणम्य भुवि दण्डवत् । गायत्री मूर्तिमासाद्य स्वानन्दाश्रुपरिप्लुता ॥ ३२ ॥

गायत्री —

भगवन् देवदेवेश भर्ग संसारभर्जक । प्रसीद करुणासिन्धो वरं देहि ममेप्सितम् ॥ ३३ ॥
मन्त्रः शिवपदाभावे जपायोग्य इति श्रुतिः । प्रसिद्धा सा श्रुतिस्तावत् मान्या धन्यस्य केवलम् ॥
मन्त्रे शिवपदं यत्र तेन सिद्धिः प्रजायते । अतो मुनीश्वराः सर्वे शिवमन्त्रजपोत्सुकाः ॥ ३५ ॥
शिवमन्त्रे विद्यमाने सर्वविद्याप्रकाशके । अविद्यानाशके तस्मिन् अन्यो मन्त्रो न [1] विद्यते ॥
व्यर्थायासप्रदा मन्त्राः शिवशब्दविवर्जिताः । अतस्तैर्बहुधा जप्तैः अल्पं वा न फलं ध्रुवम् ॥
नीरसैस्तरुभिः पुष्पं न फलं वा यथा तथा । शिवमन्त्रान्यमन्त्रेण प्रजप्तेनापि किं फलम् ॥ ३८ ॥
किं वन्ध्या जरठा पुत्रं सूते विद्याविशारदम् । तथा मन्त्रास्तु ते वन्ध्याः शिवनामविवर्जिताः ॥
शिवनामस्वरूपेण दोहदेन महेश्वर । फलं भक्तितरुः सूते भक्तिसिक्तः पुनः पुनः ॥ ४० ॥
[2] शिवनामप्रवेशेन मन्त्रो भाति यथा रविः । उदयाचलमासाद्य सहस्रकिरणोऽपि सन् ॥ ४१ ॥

---

1 जप्यते c जायते d । 2 अयं श्लोकः d कोशे नास्ति ।

शिवमन्त्राभावबद्धो न फलायोपयुज्यते । मन्त्राकारं दिनं भातुं अपेक्ष्यासाद्य भासते ॥ ४२ ॥
मन्त्ररूपदिनस्यायं भर्गशब्दस्तु भास्करः । दिनं न भास्कराभावे दिनत्वमपि यास्यति ॥ ४३ ॥
यथा तथा मन्त्रताऽपि मन्त्रे तेन विना तु न । सृष्टं शिवपदं पूर्वं त्वया तावन्महात्मना ॥
तद्यत्र मन्त्रे न भवेत् स मन्त्रो जप्य एव न । कण्ठे मङ्गलसूत्रं चेन्न नारी मङ्गलावहा ॥ ४५ ॥
तथैव मन्त्रविद्याऽपि मङ्गलाय न तं विना । शिवमन्त्रस्तु मन्त्राणां तावन्मङ्गलसूत्रवत् ॥ ४६ ॥
जातो मङ्गलदानाय किमन्यैः साधनैरपि । रत्नभूषणयुक्तापि न रण्डा भाति सर्वथा ॥ ४७ ॥
विना मङ्गलसूत्रेण तथा मन्त्रो न तं विना । किं तया क्रियते धेन्वा न दोग्ध्री न च गर्भिणी ॥
शिवमन्त्रविहीनेन जप्तेन मनुनाऽपि किम् । या गौः सगर्भा सा पोष्या साधनैर्विविधैस्तथा ॥
शिवमन्त्रेण संयुक्तो मनुर्जप्यो मनीषिभिः । शिवमन्त्रात्मकं रत्नं मन्त्रः प्राप्य विराजते ॥ ५० ॥
यथा धरा रत्नगर्भा फलं सूते मनोहरम् । पतिव्रताऽपि या नारी पुत्रहीना न राजते ॥ ५१ ॥
तथा शिवपदाभावे मन्त्रविद्या न राजते । मन्त्रो मन्त्रत्वमाप्नोति शिवमन्त्रप्रवेशनात् ॥ ५२ ॥
तदभावे स मन्त्रः स्यादमन्त्रः केवलः शिवः । महिमा शिवशब्दानां न ज्ञातुं शक्यते मया ॥
वेदैरपि न विज्ञातो मुनिभिश्च सुरैरपि । मन्मन्त्रे जपयोग्यत्वं नास्तीति मुनिभिः प्रभो ॥ ५४ ॥
न जपाय प्रयुक्तोऽयं मनो दुःखमिदं मम । एतद्दुःखविनाशस्तु त्वत्प्रसादं विना कथम् ॥
त्वयि प्रसन्ने भगवन् अप्राप्यमपि किं प्रभो । यन्न वेदैरपि ज्ञातं तव रूपं महेश्वर ॥ ५६ ॥
तदद्य दृष्टं भगवन् प्रसीद परमेश्वर ।

नमो नमस्तेऽस्तु महेश तुभ्यं नमो नमस्ते वृषभध्वजाय ।
नमो नमस्ते गिरिजाधवाय विद्यास्वरूपाय नमो नमस्ते ॥ ५७ ॥

नमो नमस्ते परमात्मने नमः स्वर्गापवर्गप्रद भर्ग शंभो ।
भवत्पदांभोजविलोकनेन सुखांबुधिर्मय्यनुवृत्तिमाप ॥ ५८ ॥

आपत्कुलं नष्टमनन्तमीश त्वत्पादपद्मार्पितचित्तवृत्तेः ।
शुभास्पदत्वं समवाप्य शंभो प्रसन्नचित्तोऽपि भवेन्नरोऽपि ॥ ५९ ॥

अणोरणीयान् महतो महीयान् आत्मा गुहायां निहितोऽस्य जन्तोः ।
तमक्रतुः पश्यति वीतशोको धातुः प्रसादान्महिमानमीशम् ॥ ६० ॥

उमासहायं परमेश्वरं प्रभुं त्रिलोचनं नीलकण्ठं प्रशान्तम् ।
ध्यात्वा मुनिर्गच्छति भूतयोनिं समस्तसाक्षिं तमसः परस्तात् ॥ ६१ ॥

अव्यक्तरूपं परमात्मतत्त्वं न वेद वेदान्तपरिश्रमेऽपि ।
ज्ञेयं परन्त्वीश्वरपादपद्मं प्रसादविज्ञेयमिति प्रमा मे ॥ ६२ ॥

न यत्स्वरूपं तव वेददृष्टं न दृष्टमीशानसुरैरपीदम् ।
मया परं भाग्यवशेन दृष्टं भाग्यस्य को वा भगवन्नियन्ता ॥ ६३ ॥

यत्पादपद्मस्मरणप्रवृत्ताः कृतान्तवार्तामतिदुःसहां ताम् ।
विहाय चानन्दजलाब्धिमग्नाः संसारतापैर्न च पीडिताः स्युः ॥ ६४ ॥

महेश्वर श्रीचरणारविन्दं निधाय चित्तांबुजकर्णिकायाम् ।
आनन्दधारावृतसच्छरीरां सुराः प्रपश्यन्ति नरा न धीराः ॥ ६५ ॥

यदि क्षणं वा शिवपादपद्मं हृत्पद्मसंविष्टमतिप्रकृष्टम् ।
प्रकृष्ट एवातिनिकृष्टजन्माप्युत्कृष्टजन्मा स तु किं पुनः स्यात् ॥ ६६ ॥

स्वर्गापवर्गप्रदमीश्वरं त्वां भजन्ति धन्याः परमन्तरायैः ।
विना विमुक्ताघपरंपरास्ते समस्तलोकेषु किलास्तिकास्ते ॥ ६७ ॥

अनन्तकल्याणपरंपरासु तिष्ठन्ति ते शङ्करपूजकास्ते ।
नान्यत् प्रपश्यन्ति कदापि धीराः धीरास्त एवेति विचारिताश्च ॥ ६८ ॥

मयि प्रसादोऽपि कृतस्त्वयाऽयं त्वत्पादसन्दर्शनदानरूपः ।
आनन्दकन्दोऽयमनुक्षणं मे सूते महानन्दनिधानमीश ॥ ६९ ॥

कारुण्यपूर्णाम्बुधिमीश्वर त्वां स्मृत्वाऽपि सन्तोषमहाब्धिपूर्णाः ।
दृष्ट्वा भवन्तं भगवन्तमीश को वा न तृप्तः तरसा सुखेन ॥ ७० ॥

अनुक्षणं तस्य शुभानि शम्भो सुखानि संपज्जलराशयोऽपि ।
यस्यानपाया त्वयि भक्तिरीश सा तावदत्यन्तसुदुर्लभा न ॥ ७१ ॥

येनाप्रमादेन कृतोऽस्ति धर्मो महेश पादार्चनरूप एव ।
तस्यैव तद्भक्तिशुभप्रवाहः न दुर्लभं किं नु सतामधीश ॥ ७२ ॥

शम्भो यथा भर्गपदप्रवेशो मन्त्रे मदीयेऽपि तथा प्रसादः ।
भवत्वयं मे भगवन् वरोऽस्य वरत्वमित्येव मतिर्ममास्तु ॥ ७३ ॥

व्यासः —

इत्युक्तं तद्वचः श्रुत्वा तथाऽस्त्विति महेश्वरः । गायत्रीपूजिते लिङ्गे प्रविष्टो गणसंवृतः ॥ ७४ ॥

गायत्रीपूजितं लिङ्गं यः पूजयति सादरम् । स सर्वसिद्धिसंपन्नः सिद्धेषु प्रथितो भवेत् ॥ ७५ ॥
तदाप्रभृति गायत्रीजपयोग्या मुनीश्वराः । स्वर्गापवर्गदातृत्वात् भर्गो भर्गत्वमागतः ॥ ७६ ॥
यो गायत्रीस्तवं पुण्यं महेशध्यानपूर्वकम् । पठेत् जपफलं प्राप्य सिद्धमन्त्रो भविष्यति ॥
एतादृशः शिवः केन नार्चितो न नतो मुहुः । न ध्यातो न स्मृतः पुण्यैः अपारैर्विविधैरपि ॥
शिवमन्त्रजपं कृत्वा शिवध्यानपुरःसरम् । शिवं यान्ति शिवाचाराः सदाचाररताः सदा ॥
अतः शिवपदाभावे मन्त्रो जप्यो न सर्वथा । शिवमन्त्रान्वितो मन्त्रो जपनीयः प्रयत्नतः ॥
वेदोक्तत्वेन शब्दस्तु न जपायोपयुज्यते । नहि रासभशब्दस्य शुद्धस्य जपयोग्यता ॥ ८१ ॥
तृणं प्रसूनसहितं यथा मौलिविभूषणम् । तथा शिवपदोपेतो मन्त्रः कण्ठविभूषणम् ॥ ८२ ॥
मुक्तिकान्ताकराक्रान्ता शिवमन्त्रजपैः परम् । वेदांबुराशिः सर्वोऽपि नालङ्काराय जायते ॥
रत्नाकरत्वं जलधेः दिव्यरत्नचयात् परम् । किरीटयोग्यं तद्रत्नं तत्रत्यं न तृणं तथा ॥ ८४ ॥
समुद्रस्थत्वमात्रेण तत्रत्याः सिकता अपि । केन वा शिरसा वाह्याः तत्रत्या मणयो यथा ॥
शिवमन्त्रमणिस्तावत् वेदरत्नाकरस्थितः । ग्राह्यो जपाय योग्यत्वात् तदन्यो ग्राह्य एव न ॥८६ ॥
अलं किं बहुनोक्तेन शिवशब्दः परात्परः । शिव एवेति विज्ञेयः शिवलिङ्गं च तादृशम् ॥ ८७ ॥
शिवश्च शिवलिङ्गं च रुद्राक्षः सितभस्म च । शिवक्षेत्रं च भाग्येन लभ्यते मुनिपुङ्गवाः ॥ ८८ ॥
शैवो भूत्वा शिवं प्राप्य भस्म लिङ्गं च शांभवम् । शिवमन्त्रं च संप्राप्य मुच्यते पापबन्धनात् ॥

शैवा एव वयं विभूतिविलसद्रुद्राक्षभूषाश्रयाः
पूज्यं नः शिवलिङ्गमेव सततं ध्येयः शिवः केवलम् ।
अस्मद्भाग्यवशेन भर्गपदभाङ्मन्त्रोऽपि पञ्चाक्षरो
रुद्राध्यायगतो जपाय विविधक्लेशप्रहाणाय च ॥ ९० ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे[1] द्वितीयोऽध्यायः ॥

—:×:—

1 गायत्रीतपोवर्णनतत्प्रसादनिरूपणं नाम C

# अथ तृतीयोऽध्यायः ।

सूतः —

इति तद्वचनं श्रुत्वा सर्वे ते मुनिपुङ्गवाः । आनन्दाश्रुप्रवाहाक्ताः संसक्ताः शिवपूजने ॥ १ ॥
पुनः प्रणम्य तं व्यासं शिवतत्त्वोपदेशकम् । शिवतत्त्वोपदेशाय प्रेरयामासुरादरात् ॥ २ ॥

मुनयः —

शिवः कथं पूजनीयः शिवधर्माश्च के मुने । शिवाचाररताः के वा शिवः केन प्रसीदति ॥ ३ ॥
शिवायै कुत्र वा प्रोक्तं रहस्यं शैवमुत्तमम् । तदावासः कीदृशं च स्वरूपं मुनिपुङ्गव ॥ ४ ॥
तदावासस्य किं मानं तत्र केषामवस्थितिः । इदं सर्वं विशेषेण विचार्य वद सादरम् ॥ ५ ॥

व्यासः —

साधु पृष्टं मुनिश्रेष्ठाः श्रीकण्ठार्चनतत्पराः । एतत्कथानुवादेन महानन्दः प्रवर्धते ॥ ६ ॥
संपदंबुनिधिः प्राप्तो विनष्टाः पापपर्वताः । [1]एतदर्थं पुरा प्राह जैगीषव्याय पृच्छते ॥ ७ ॥
तारकारिरुवाचेत्थं सन्तुष्टेनान्तरात्मना ।

जैगीषव्यः —

जगतां जननी देवी कैलासे शङ्करान्तिकम् । कदा गता वदास्मभ्यं स्कन्द शिक्षिततारक ॥ ८ ॥

स्कन्दः —

शृणुष्व जैगीषव्याद्य अशेषैः भूसुरैः सुरैः । गायत्र्याश्च तपस्सिद्धिं देव्या यानं हिमाचलात् ॥
शृणु कैलासगमनं गणानां प्रेषणं मुने । तवाद्य कुशलप्रश्नैः ममानन्दः प्रजायते ॥ १० ॥
महाशांभवयोगेन भवाब्धिरपि शुध्यति । शैवो धर्मोपदेशाय योग्यो भाग्यवतां वरः ॥ ११ ॥
अतः शिवप्रभावोऽपि वर्णनीयो मयाऽधुना । सुमेरुतुङ्गशृङ्गेषु शृङ्गमेकमनुत्तमम् ॥ १२ ॥
न तुङ्गशृङ्गमस्त्यन्यत् तच्छृङ्गापेक्षया द्विजाः । तच्छृङ्गोपरि रत्नानां प्रासादः कश्चिदुत्तमः ॥
तत्प्रासादप्रभावोऽपि वेदानामप्यगोचरः । परार्धयोजनायामः तावद्योजनमुन्नतः ॥ १४ ॥
दिगष्टकमपि व्याप्य दिगन्तेष्वपि तिष्ठति । न तत्प्रासादशृङ्गेषु सूर्यचन्द्रादिरश्मयः ॥ १५ ॥
सूर्यस्य तत्र का वार्ता चन्द्रस्य च मुनीश्वराः । तत्प्रासादप्रान्तदेशे नित्यपुष्पाः सुरद्रुमाः ॥

---

1 'एतदर्थं' इत्यारभ्य 'ममानन्दः प्रजायते' श्लो. १० इत्यन्तं तु कोशे न दृश्यते ।

सुधाप्रवाहकल्लोला मणिकान्तिविराजिताः। प्रासादः सोऽप्ययत्नेन नवरत्नविनिर्मितः ॥ १७ ॥
तद्रत्नकान्तिपूराणां अन्त एव न सर्वथा। तत्प्रासादस्य मध्येऽपि कोटिशो मणिमण्टपाः ॥
विचित्ररचनाबद्धाः कोटिशो मणिवेदिकाः। रत्नशृङ्गाणि तेष्वेव संख्याहीना मनोहराः ॥ १९ ॥
रत्नद्वाराणि तस्यैव विपुलान्यपि कोटिशः। न सूक्ष्मद्वारसंख्याऽपि कदाचिदपि सर्वथा ॥ २० ॥
कर्तुं न शक्यते नूनं कल्पान्तेऽपि सुरैरपि। रम्ये सुरतरोर्मूले मनोज्ञा मणिवेदिकाः ॥ २१ ॥
सा तत्तरुप्रसूनानां समूहैः परिवारिता। समरन्दानि पुष्पाणि स्रवन्त्येव पुनः पुनः ॥ २२ ॥
तासु सर्वासु सर्वत्र शिवलिङ्गानि कोटिशः। स्फुरत्स्फुलिङ्गरूपाणि तेजःपुञ्जमयान्यपि ॥ २३ ॥
तन्मरन्दाभिषिक्तानि तत्पुष्पैः पूजितान्यपि। रत्नप्रासादकान्तीनां प्रवाहाः प्रचलन्ति ये ॥ २४ ॥
तैरावृतानि लिङ्गानि कोटिशः सर्वदा द्विजाः। तत्पुष्पगन्धवाहानां मन्दानामतिसुन्दरः ॥
स्पर्शः सुधातरङ्गाणां अन्वयेन सुखावहः। तत्प्रासादोत्तुङ्गशृङ्गमणिमण्टपशोभया ॥ २६ ॥
भूषितानि भवन्त्येव शिवलिङ्गानि शांभवाः। एकैकस्मिन् द्वारदेशे गणाः सन्ति सहस्रशः ॥
तेजोरूपाश्च ते तावत् प्रासादमणिकान्तिभिः। तत्रान्धकारवार्ताऽपि न कदाऽपि मुनीश्वराः ॥
तत्तेजःपुञ्जसङ्गेन दीपापेक्षा न जायते। सूर्यचन्द्राद्यपेक्षाऽपि तत्रत्यानां न जायते ॥ २९ ॥
सुरद्रुमैश्च तत्रत्यैः सुधाफलसमन्वितैः। गणास्तृप्ता भवन्त्येव सर्वथाऽपि प्रतिक्षणम् ॥ ३० ॥
न तेषामशनापेक्षा गणानामपि सर्वथा। तत्प्रासादवरोत्तुङ्गशृङ्गमण्टपवेदिकाः ॥ ३१ ॥
या तत्र रत्नखचितं सिंहासनमुमापतेः। कोटियोजनविस्तीर्णं कोटियोजनमुन्नतम् ॥ ३२ ॥
तन्मन्दारतरुस्रस्त पुष्पमालाविराजितम्। [1] तद्रत्नच्छविभिः क्रान्तः स्वतः कान्तः परात्परः ॥
प्रविष्टस्तेजसां राशिः मनोवाग्विषयोऽपि न। क्षीरसागरसंकाशपट्टकूलपरिच्छदः ॥ ३४ ॥
नानापरिमलद्रव्यदिव्यचन्दनचर्चितः। त्रिपुण्ड्रविलसत्फालो रुद्राक्षमणिभूषणः ॥ ३५ ॥
अनन्तरत्नसन्नद्धकन्धराभरणान्वितः। रत्नाङ्गदैश्च केयूरैः मणिमण्डलमण्डितैः ॥ ३६ ॥
मुक्ताहारैश्च विविधैः भूषितो भूतिभूषणः। अमूल्यरत्नखचितैः विविधैरंगुलीयकैः ॥ ३७ ॥
सुरत्नकटिसूत्रेण विपुलेन विभूषितः। अपारचित्ररत्नौघैः किरीटप्रभया युतः ॥ ३८ ॥
नानामणिसुमाकीर्णकर्णभूषणमण्डितः। रत्नमालासमाक्रान्तरत्नच्छत्रार्बुदश्रिया ॥ ३९ ॥
रत्नदण्डाग्रविलसच्चामरार्बुदवीजितः। ध्वजैश्च मणिसंबद्धैः विविधैर्वृषभाङ्कितैः ॥ ४० ॥

---

1 तद्रूपयंबिकाकान्तः ८

परितो व्यावृतः शंभुः स्थितः सुखनिधिः प्रभुः । महाप्रभुं तमीशानं दूराद्दृष्ट्वा गणा अपि ॥
सकम्पाश्च विनीताश्च हेमवेत्रकराः परम् । तत्र तावन्न गन्धर्वाः किन्नरा न सुरा अपि ॥ ४२ ॥
तावद्दूरं न गमनं तेषां संभावितं यतः । सुमेरुमूले देवानां स्थलानि विविधान्यपि ॥ ४३ ॥
तेषां नारायणादीनां तावद्गमनमेव हि । सुमेरुमध्ये कैलासात् कदाचित् तत्र शङ्करः ॥ ४४ ॥
विहारार्थे समायाति लीलाविग्रहसुन्दरः । तत्र तावन्नन्दिकेशप्रसादेन कदाचन ॥ ४५ ॥
नारायणादयः शंभुं प्रणमन्त्यतिदूरतः । तत्रापि वेत्रसंघातभीता नारायणादयः ॥ ४६ ॥
ततोऽपि दूरं गच्छन्ति सकम्पाः प्रभुदर्शने । तथा सति तदुत्तुङ्गशृङ्गप्रासाददर्शनम् ॥ ४७ ॥
तेषां नारायणादीनामतिदुर्लभमेव हि । तत्र तावत्कुमारस्य गणेशस्यापि दूरतः ॥ ४८ ॥
अवस्थानं ततस्तत्र नान्येषां गमनं मतम् । तत्र स्थितं महादेवं गिरिराजकुमारिका ॥ ४९ ॥
द्रष्टुमभ्युद्यता शंभुं प्रपश्यामीति सादरम् । गिरिजाऽपि सुखासीनं हिमवन्तं नगेश्वरम् ॥ ५० ॥
पप्रच्छ मन्दहासेन दिव्यवेषविराजिता । अद्य पश्यामि शैलेन्द्र शंकरं लोकशंकरम् ॥ ५१ ॥
प्रासादशृङ्गप्रासादरत्नसिंहासने स्थितम् । न तत्र सूर्यकिरणाः चन्द्रस्यापि न रश्मयः ॥ ५२ ॥
विद्युतामपि ताराणां तत्र वार्ता च न ध्रुवम् । तदेकान्तस्थलं रम्यं सुन्दराणां च सुन्दरम् ॥
कल्याणानां च कल्याणं पावनानां च पावनम् । पुण्यानां पुण्यमत्यन्तं ततो नास्त्यधिकं क्वचित् ॥
अद्य तद्दर्शनोत्कण्ठा पुनः पुनरुदेति मे । इति तद्वचनं श्रुत्वा हर्षाश्रुपरिपूरितः ॥ ५५ ॥
अम्बामाह स शैलेन्द्रो विनयानतकन्धरः ॥ ५६ ॥

हिमवान् —

शिवे तत्राद्य गमने विलंबस्ते कियान् वद । पुनरागमने देवि किमुत्कण्ठा प्रजायते ॥ ५७ ॥
त्वद्वियोगव्यथां सोढुं शक्त एव न सर्वथा । अतिदूरे हि गमनं मम तत्र गतिर्न हि ॥ ५८ ॥
न यत्र सूर्यकिरणाः प्रसरन्त्युर्ध्वमप्युत । कथं तत्रास्मदादीनां गमनं कमलानने ॥ ५९ ॥
इति तद्वचनं श्रुत्वा मेनया सह पार्वती । आनन्दाश्रुसमाक्रान्ता मन्दमाह गिरीश्वरम् ॥ ६० ॥

पार्वती —

सायं वा श्वः परश्वो वा पुनरागम्यते मया । त्वया चिन्ता न कार्यात्र सत्यमेवोच्यते मया ॥
इत्युक्त्वा प्रस्थितां गौरीं स विलोक्य मुहुर्मुहुः । आनन्दाश्रुपरिश्रान्तो न च वाचमुवाच च ॥
तं दुःखितं विलोक्याम्बा मेनकामपि दुःखिताम् । विरता गमने तस्थौ शिवा शैलेन्द्रसन्निधौ ॥

एवं स्थिता मासमात्रं नयन्ती दिवसानि सा । संलापैश्च विहारैश्च शैलेन्द्रानन्दसाधनैः ॥ ६४ ॥
ततः परं कदाचिद्वा भवानी पतिमन्दिरम् । प्रयास्यतीति हिमवान् उपचारादरो यतः ॥ ६५ ॥
विलक्षणोपचाराणां प्रचारैस्तामनुक्षणम् । पूजयामास गिरिजां वात्सल्येन विशेषतः ॥ ६६ ॥
यस्मिन् दिने साधनानि तत्पूजार्हाणि तानि न । दिनान्तरे तदन्यानि तदन्यानि दिनान्तरे ॥
एवं प्रतिक्षणं शैलः शिवामाराधयन्मुदा । मासं क्षणमिवापश्यत् मेनया सह सादरम् ॥ ६८ ॥
ततः परं नन्दिकेशः शिवाज्ञाकारिणां वरः । समागतो हिमगिरिं गणैर्दिव्यैः समन्वितः ॥ ६९ ॥
समालोक्य स शैलेन्द्रो नन्दिकेशं गणेश्वरम् । प्रहृष्टः स्वासनं तस्मै ददौ कम्पसमन्वितः ॥ ७० ॥
ततः पूजां यथायोग्यं कृत्वा नन्दीश्वराय सः । कृतांजलिपुटो भूत्वा पप्रच्छ विनयान्वितः ॥

हिमवान् —

कुतः समागतं नन्दिन् कुशली खलु शङ्करः । किमस्ति कार्यमेतावत् भवदागमने वद ॥ ७२ ॥

नन्दिकेश्वरः —

गिरे कुशलरूपस्य शङ्करस्य महात्मनः । सर्वदा कुशलं सत्यं कुशलं कुशलस्य तु ॥ ७३ ॥
यत्पादपद्मस्मरणात् कुशलं सर्वदा गिरे । तस्य नाकुशलं नूनं स एव कुशलप्रदः ॥ ७४ ॥
महामृत्युञ्जयस्तस्य मृत्युवार्तापि दूरतः । न व्याधिवार्तापि गिरे स यतो व्याधिनाशकः ॥
यन्नामस्मरणेनापि विनष्टो रोगसागरः । तस्य रोगभयं कुत्र नित्यानन्दस्य वस्तुतः ॥ ७६ ॥
यदक्षिमीलनेनैव ब्रह्मादिप्रलयो भवेत् । तस्य स्वकुशलं किन्तु सा शङ्कापि न जायते ॥ ७७ ॥
नारायणाद्याः सर्वेऽपि ब्रह्मान्ताः प्रलयं गताः । तान् पश्याम्यहमप्यद्धा शिवपादप्रसादतः ॥
महामृत्युञ्जयत्वेन वेदवेदान्तसंस्तुतः । महादेवस्ततस्तस्य कुशलं सर्वथा खलु ॥ ७९ ॥
[1] मदागमनवार्तेयं ज्ञापनीया त्वयाऽधुना । अंबिकायै प्रणामाश्च वक्तव्याश्च मया कृताः ॥ ८० ॥
अंगुलीयकमप्येतत् महादेवस्य भूषणम् । प्रदर्शनीयमम्बायै येनानन्दः प्रवर्धते ॥ ८१ ॥
इति तद्वचनं श्रुत्वा गृहीत्वाऽप्यङ्गुलीयकम् । ददौ सत्वरमम्बायै निवेद्यागमनं च तत् ॥ ८२ ॥
तदंगुलीयकं दृष्ट्वा हृष्टा सा भववल्लभा । दधार शिरसा भक्त्या नेत्रस्पर्शनपूर्वकम् ॥ ८३ ॥
तदालोकनमात्रेणाप्यानन्दाश्रुकणान्विता । स्वात्मसंवेदनं त्यक्त्वा शिवध्यानं चकार सा ॥ ८४ ॥

---

1 यच्छिङ्गपूजको भक्त्या नरो मृत्युं न पश्यति । तस्य देवादिदेवस्य कुशलं सर्वथा खलु ॥ इति d कोशेऽधिकः पाठः ।

तेन ध्यानेन नीतोऽपि भूयान् कालस्तया ततः। स्वात्मसंवेदनं प्राप्य जगाद वचनं शिवा ॥
कुशली खलु विश्वात्मा महामृत्युञ्जयस्य तत्। कुशलं सर्वथा ज्ञातं तत्राकुशलधीः कुतः ॥ ८६ ॥
स महाकालकालोऽतः कालशङ्का न जायते। कालाग्निरुद्रो भगवान् पतिर्मम महाप्रभुः ॥८७॥
अपमृत्युविनाशः स्यात् महामृत्युनिवारणम्। यस्य स्मरणमात्रेण स पतिर्मम शङ्करः ॥ ८८ ॥
यत्पादपद्मस्मरणात् महाव्याधिर्विनश्यति। स एव मम भाग्येन भर्ता सौभाग्यदायकः ॥ ८९ ॥
या सर्वमङ्गला नाम्ना सा तावदहमेव हि। तन्नाम तावदेतस्याः तत्पाणिग्रहणादभूत् ॥ ९० ॥
पूजयन्ति महादेवं सुराः सौभाग्यदायकम्। स सौभाग्यप्रदो भर्ता मम मृत्युविवर्जितः ॥ ९१ ॥

भक्त्या शङ्करपूजनोद्यतमतिर्भाग्यालयो जायते
सौभाग्यं मम सर्वदाऽपि न कुतः सौभाग्यदानोन्मुखे।
सौभाग्यप्रदपादपद्मनियमध्यानेन मे सर्वदा
सौभाग्यं कुशलं सुखान्यनुदिनं सौभाग्यवृद्धिश्च मे ॥ ९२ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे [1]तृतीयोऽध्यायः ॥

—×—

## अथ चतुर्थोऽध्यायः।

व्यासः—

इति तद्वचनं श्रुत्वा प्रहृष्टः शैलपुङ्गवः। चकार भार्यया साकं विचारमतिसादरम् ॥ १ ॥
नन्दिकेशो गणाधीशः प्रमथेष्वधिकः परः। तेन सत्वरमागत्य शिववार्ता कृता खलु ॥ २ ॥
अतः परं स न स्थाता त्रिणेत्रप्रेषितोऽस्त्यतः। न तेन सह वक्तव्यं गमनप्रतिबन्धकम् ॥ ३ ॥
अम्बिकायाः प्रेषणार्थप्रयत्नः क्रियतां त्वया। बहुकालं किमत्राम्बा सती संस्थातुमिच्छति ॥
पतिव्रता पतिं त्यक्त्वा नान्यत्र स्थातुमिच्छति। पतिसेवापरो धर्मः सर्वसंपत्प्रवृद्धिदः ॥ ५ ॥
परिचर्या परं भर्तुः तदनुग्रहकारणम्। तेनेष्टसिद्धिं सा यातु न धर्मान्तरतः प्रिये ॥ ६ ॥
प्रीतिपूर्वकमद्याम्बा प्रेषणीया किलान्यथा। कोपोऽपि प्रमथेशस्य कथं वा न भविष्यति ॥ ७ ॥
हारास्तारतराश्चारादपराभरणान्यपि। रत्नबद्धानि देयानि केयूरादीनि कोटिशः ॥ ८ ॥

---

1 हिमाचलं प्रति नन्दिकेशागमनं, देव्यै महाङ्गुलीयकदानं, देव्या आनन्दवर्णनं नाम ०.

यानि नूतनरत्नानि सागरेणाहृतान्यपि । तानि सर्वाणि देयानि तदर्थान्येव तान्यपि ॥ ९ ॥
[1] यदर्थानीति निश्चित्य तान्यानीतानि यत्नतः । तानि तावत्तदर्थानि तेषां कृत्यं च किं मम ॥
अत्युत्तमा हि मणयः कङ्कणान्युत्तमान्यपि । शिवायै तानि देयानि रम्याण्यन्यान्यपि प्रिये ॥
प्रिये सत्वरमाहारो गौर्यै रसविजृम्भितः । संपादनीयो यत्नेन भक्ष्याद्यैर्विविधैरपि ॥ १२ ॥
खाद्यैर्लेह्यैश्च पेयैश्च मधुराम्लैर्मनोहरैः । कल्पद्रुमसमुत्पन्नैः फलैरप्यमलैः प्रिये ॥ १३ ॥
आच्छादयन्ति छायाभिः सुमेरुशिखराण्यपि । नमेरुतरवस्तेऽपि प्रेषणीयाः सहाम्बया ॥ १४ ॥
प्रसूनमालाजालानि तैर्मेरुशिखरावधि । कल्पनीयान्यपाराणि सान्द्राणि विपुलान्यपि ॥ १५ ॥
तन्मरन्दैः सनीहारैः पुष्पच्छायासमन्वितैः । सान्द्रैः हिमकराकारैः न सूरकरसङ्गमैः ॥ १६ ॥
तुषारकरसंकाशैः आकाशांशविजृम्भितैः । अम्बिकायानमार्गोऽपि प्रच्छन्नः पटमण्टपैः ॥ १७ ॥
विमानान्यपि दिव्यानि कामगानि मनोरमैः । संपादनीयान्यधुना वाहनान्यपि कोटिशः ॥
चन्द्रमण्डलसंकाशः चन्द्रमण्डलमण्डितः । सिंहोऽपि वाहनं देव्याः गिरिस्पर्धां करोति सः ॥
औन्नत्यं वर्धते तस्य यस्य यावदपेक्षितम् । विलक्षणं तदौन्नत्यं सोऽपि रत्नपरिच्छदः ॥ २० ॥
अन्यान्यान्यप्यनुक्तानि भवानीगमनं प्रति । तानि संपादनीयानि प्रिये सत्वरमद्य मे ॥ २१ ॥
इत्युक्त्वा गिरिजां दृष्ट्वा दूरादेव गिरीश्वरः । आनन्दबाष्पसंवीतो नन्दिकेशमुपागतः ॥ २२ ॥
उपहारादिकं सर्वं भवान्या प्रेषितं मुदा । गृहीत्वा नन्दिकेशोऽपि भुक्त्वा सुखमवाप सः ॥
तत्प्रेषितं चन्दनं च कस्तूरीकुङ्कुमान्वितम् । स्वाङ्गे विलेपयामास कृत्वा शर्वार्पणं मुदा ॥ २४ ॥
वसनान्यपि दिव्यानि दिव्यान्याभरणान्यपि । गृहीत्वा नन्दिकेशोऽथ दधार परया मुदा ॥
एतस्मिन्नन्तरे केचित् गणास्तस्मादुपागताः । विलम्बः किमभूदेवमिति सत्वरभाषणाः ॥ २६ ॥
तानप्यभ्यागतान् दृष्ट्वा गणान् गिरिवरस्ततः । तेषां च सांत्वकं तावच्चकार वचनैर्मुहुः ॥
ततः पूजां चकाराथ भवानीसन्निधिं ययौ । अम्बां भोजनसन्तुष्टामुवाच वचनं मुदा ॥ २८ ॥

गिरिराजः —

अम्बान्येऽपि गणास्तावत् अधुना समुपागताः । विलम्बः किमिति प्रीत्या शङ्करप्रेषिताः शिवे ॥
इत्युदीर्य गिरीन्द्रोऽपि सर्वाभरणभूषिताम् । गौरीं दृष्ट्वा मेनकां च प्राह मन्दं विचक्षणः ॥
अम्बाद्य सुमुहूर्तोऽस्ति मध्याह्ने पुष्ययोगतः । गुरुयोगाच्च गमने शुभमेवानुवर्तते ॥ ३१ ॥

1 इतः परमर्धत्रयं ढ कोशे नोपलभ्यते ।

शङ्करेच्छानुसारेण गन्तव्यमिति मे मतिः । विलम्बश्चेत् पुनः शंभुः न प्रेषयति सत्वरम् ॥
शिवेच्छामनुसृत्यैव यस्तु कार्यं करिष्यति । तस्य प्रतिक्षणं सौख्यं अन्यथा तत् कथं भवेत् ॥
इत्युक्त्वा सत्वरं शैलो नानावाद्यसमन्वितः । मन्दं मन्दं गृहद्वारान्निर्ययावम्बिकायुतः ॥ ३४ ॥
ततः प्रोवाच तामम्बां अम्बिके वाहनान्यपि । बहूनि सन्ति ते कुत्र प्रीतिर्वद विचक्षणे ॥
विमानानां कामगानामर्बुदं द्वारि तिष्ठति । कण्ठीरवोऽपि गिरिजे सोत्कण्ठस्तिष्ठति प्रियः ॥
एतासां निष्ककण्ठीनां दासीनामर्बुदानि ते । तिष्ठन्ति तानि नेयानि त्वत्प्रियार्थमनुक्षणम् ॥
इति तद्वचनं श्रुत्वा विमानं वीक्ष्य सादरम् । मेनया सह सा गौरी मन्दं वाचमुवाच ह ॥
अम्ब त्वया मया साकमामेरुशिखरावधि । आगन्तव्यं गिरीशेनाप्ययोगः सह्य एव न ॥
इत्युक्त्वा तां समादाय करेण गिरिजाऽऽदरात् । आरुरोह वरारोहा विमानं कामगं मतम् ॥४०॥
देवदुन्दुभयो नेदुः जगुर्गन्धर्वनायकाः । ववुर्वाताः शीतलाश्च सुगन्धपरिवेष्टिताः ॥ ४१ ॥
पुष्पवृष्टिरभूद्भूयो मकरन्दरसाकरा । ननृतुश्चाप्सरस्सङ्घाः चारुनाट्यविशारदाः ॥ ४२ ॥
रत्नच्छत्रार्बुदच्छाया चारुचामरकोटिभिः । समाक्रान्ता बभौ तावत् यावन्निर्याति शांभवी ॥४३॥
तदानीं पुरतस्तस्थौ चन्द्रमण्डलमण्डितः । पञ्चाननोऽपि मामेवं न संभावयतीति किम् ॥
सिद्धयो निधिभिः सार्कं [1]अंबिकाग्रे मुदा स्थिताः । मन्दारतरुभिः सार्कं पुष्पमालासमाकुलैः ॥
तदानीमागतः प्रीत्या सत्वरं रत्नसागरः । रत्नभारगणोपेतः तत्प्रभाव्याप्तभूधरः ॥ ४६ ॥
उपेन्द्राद्यमराः सर्वे देवदुन्दुभिजध्वनिम् श्रुत्वा सन्तुष्टहृदयाः किं मङ्गलमिदं त्विति ॥
अद्य प्रायो महादेवनिलयं प्रति पार्वती । गन्तुमेवोद्यता नूनं शुभचिह्नप्रभावतः ॥ ४८ ॥
एवं न शुभचिह्नानि कदाऽपीत्यवधारितम् । गौरीविवाहसमये परं जातानि तानि तु ॥
इत्युक्त्वा ब्रह्मविष्ण्वाद्याः सर्वे देवाः सुहृद्गणैः । स्ववल्लभाभिः सहिताः तदा सत्वरमागताः ॥
तपोनिष्ठाश्च सिद्धाश्च सर्वे गिरिवराश्रयाः । स्वस्वभार्यादिसंयुक्ताः शिवादर्शनकांक्षया ॥ ५१ ॥
तदा किलातिसंमर्दः समभूद्यो न सर्वदा । कदाचिद्वा नानुभूतः कृतार्थास्तेन सर्वथा ॥ ५२ ॥
दूराद्विमानभृङ्गाणि दृष्ट्वा नारायणो मुदा । प्रणतः कमलायुक्तः स मुहुस्तद्विलोकयन् ॥
ब्रह्मादयोऽपि प्रणताः प्रणताश्च पुनः पुनः । दृष्ट्वा विमानभृङ्गाणि कृतार्था वयमित्यपि ॥
ततश्च नन्दिकेशोऽपि तत्संमर्दावलोकनात् । गणानपश्यद्विविधान् रत्नवेत्रसमन्वितान् ॥

---

1 'अम्बिकाग्रे इत्यारभ्य' 'तरुभिः सार्कं' इत्यन्तं d कोशे नास्ति ।

ततो वेत्राण्युन्नतानि दृष्ट्वा ब्रह्मादयः सुराः । वेत्रमूलगतं भानुं विस्मयाविष्टमानसाः ॥
अत्युन्नतानि वेत्राणि वेगेन पतितानि चेत् । तदाघातस्त्वसह्यः स्यादिति चिन्तासमाकुलाः ॥
वेत्राघातभयादद्य यदि यामो दिगन्तरम् । तदा कथं वा द्रष्टव्यं भवानीचरणाम्बुजम् ॥
अस्तु वेत्रवराघातः तावताऽपि न नः क्षतिः । भवानीचरणाम्भोजदर्शनं दुर्लभं खलु ॥ ५९ ॥
वेत्राघातजमूर्छायामन्ततो मरणेऽपि वा । गौरीचरणवातेन किं नष्टं तेन जीवनम् ॥ ६० ॥
यो गौरीचरणाम्भोजगन्धवाहः स जीवनम् । तेन सञ्जीवनापेक्षा जीवनान्नोपजायते ॥
गौरीपदाब्जगन्धेन गन्धवाहः समन्वितः । गन्धवाहत्वमापन्नः स तावदतिदुर्लभः ॥ ६२ ॥

प्राप्तानि जन्मानि बहूनि पूर्वं न तानि धन्यानि कदाचिदेवम् ।
न जातमेवेति विचारयामः विमानशृङ्गं न कदापि दृष्टम् ॥ ६३ ॥
विमानरत्नाश्रितशैलकन्यापदाब्जगन्धान्वितगन्धवाहः ।
पुण्यैरनन्तैरपि दुर्लभोऽयं प्राप्योऽधुना वेत्रवराभिघाते ॥ ६४ ॥
पश्यन्ति सर्वे ऋषयोऽपि सिद्धाः त्यक्त्वा समाधिं फलमेतदेव ।
[1]अंबाविमानाग्रविलोकनं वा किं नैव तत्तत् तपसोऽधुनेति ॥ ६५ ॥
फलं यदेवोग्रतपःप्रभावात् प्राप्तव्यमस्माभिरिहाधुना तु ।
विमानशृङ्गाग्रविलोकनेन जातः प्रभावः श्रुतिषु श्रुतोऽपि ॥ ६६ ॥
अस्माकमिष्टं फलमद्य जातं शिवः प्रसन्नोऽपि भविष्यतीति ।
चिह्नानि दृष्टानि बहूनि तेषां फलं विमानाग्रविलोकनं नः ॥ ६७ ॥
यत्पादपद्मप्रभया विमानं तत् पद्मरागान्वितवत् विभाति ।
तद्दर्शनं नैव विलोकितं च शिवापदाम्भोजमिति स्मरामः ॥ ६८ ॥
तत्पादपद्मप्रभया समेताः वयं क्षणार्धेन मुदा भवामः ।
ततश्चलत्येव न तद्विमानं सर्वात्मना सर्वफलाश्रयं वा ॥ ६९ ॥
यदूर्ध्वदेशेषु यदि प्रयाति तदा तु तद्दर्शनमेव नात्र ।
आयाति चेदत्र सुमेरुमूलं तदा वयं धन्यतमाः सुरेषु ॥ ७० ॥
यद्यस्माकमनन्तजन्मतपसा प्रीतो भवानीपतिः
भाग्यं चेदनुकूलमद्य बहुधा गौरीपदाम्भोरुहम् ।

---

1 अयं श्लोकः d कोशे नोपलभ्यते ।

द्रक्ष्यामः सकलेष्टदानानिपुणं पुण्याकरं पुण्यदं
नो चेद्दुर्लभमेव जन्म सुकृतप्राप्यं जगन्मण्डले ॥ ७१ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे कैलासं प्रति देवीप्रयाणवर्णने समस्तदेवगणविमानदर्शनं नाम चतुर्थोऽध्यायः ॥

—×—

## अथ पञ्चमोऽध्यायः ।

व्यासः —

ततः परं सुराः सर्वे तद्विमानावलोकनात् । उत्पश्यन्तोऽपि सन्त्रस्ताः तदाघातभयादपि ॥ १ ॥
तद्वेत्रच्छायया त्रस्तो निर्गतो नात्र भानुमान् । अदृश्य एव संजातः चन्द्रवार्तापि तत्र न ॥ २ ॥
ततः परं प्रचलितं घण्टाघोषविजृंभितम् । पताकार्बुदसंवीतं चामरार्बुदसंयुतम् ॥ ३ ॥
चन्द्रकोटिगणोपेतं [1] महामालाविराजितम् । प्रतिक्षणं नवमभूत् तद्विमानं मुनीश्वराः ॥ ४ ॥
शक्तं दिगन्तं तद्गन्तुं क्षणेनैव न संशयः । तथापि मन्दमेवेदं चरति प्रेमपूर्वकम् ॥ ५ ॥
पुष्पवृष्टिरभून्मध्ये प्रतिक्षणमनुत्तमा । मन्दमन्दारपवनैः परिवीता प्रतिक्षणम् ॥ ६ ॥
मन्दारतरवोऽप्युच्चाः तेन प्रचलितास्तदा । स्वच्छायया समाक्रान्ताः कुर्वन्तः सादरं मुहुः ॥
तारहारगणच्छन्नपुष्पगुच्छसमन्वितम् । विमानं दूरतो दृष्ट्वा ननृतुः देवतागणाः ॥ ८ ॥
ततः परं मन्दमेव मेनका प्राह तां शिवाम् । तत्सन्तोषप्रवृद्ध्यर्थं सुरानुग्रहकांक्षया ॥ ९ ॥
शिवे पश्य सुरान् दूरे प्रणतान् भक्तिपूर्वकम् । सुरनारीगणं पश्य पश्य सिद्धाङ्गनाः शिवे ॥
पश्य गन्धर्वनारीणां गणं किन्नरयोषिताम् । तत्पाददर्शनोद्योगात् उद्यताभिविनिर्गतम् ॥ ११ ॥
मुनिपत्नीगणान् पश्य सिद्धपत्नीगणानपि । नागनारीगणान् पश्य परितः प्रणतान् शिवे ॥
पश्य नारायणं गौरि प्रणमन्तं मुहुर्मुहुः । तस्यैव निकटे लक्ष्मीं प्रणतामतिसादरम् ॥ १३ ॥
शूलपाणिप्रिये पश्य वाणीं तां प्रणतां मुहुः । चतुर्वक्त्रं प्रपश्यांब शचीनाथं तया युतम् ॥ १४ ॥
गणवेत्रगणत्रस्तान् पश्यान्यानमरानपि । गौरि त्वच्चरणांभोजप्रभासंभावनादरात् ॥ १५ ॥
नाट्यं करोति कमला पश्य तां कमलानने । स्वाभीष्टसिद्धिरधुना शिवासंप्रेषणादिति ॥ १६ ॥

---

1 ग्रहमाला ८

वाणी गुणगणानम्ब तव स्तौति पुनः पुनः । स्ववाणी पुण्यतां यातु शिवासंकीर्तनादिति ॥
सुमेरुमूलगमने तदिष्टावाप्तिरित्यतः । मेरुमार्गेण गन्तव्यं अद्य शङ्करमन्दिरम् ॥ १८ ॥
कामगस्य विमानस्य विचित्रा [1]मतिरस्त्यतः । नान्यमार्गेण गन्तव्यं दया यदि सुरोपरि ॥ १९ ॥
इत्युक्त्वा गिरिजां दृष्ट्वा क्षुत्तृष्णादिकशङ्कया । विविधानुपहारांश्च कल्पयामास मेनका ॥ २० ॥
सुधां पीत्वा सुधास्यन्दिकल्पानल्पफलान्यपि । विविधानि समासाद्य सन्तुष्टा गिरिकन्यका ॥
दिव्योपहारसन्तुष्टा तांबूलललितानना । उत्फुल्लपद्मवदना सा गौरी रुरुचे द्विजाः ॥ २२ ॥
ततः परं प्रचलितं विमानं रत्नरञ्जितम् । मेरुमूलमुमा देवान् प्रीणयत्विति सत्वरम् ॥ २३ ॥
ततः सुरगणाः सर्वे सन्तुष्टाः प्रणतां शिवाम् । तुष्टुवुर्विविधैः स्तोत्रैः कृतार्थाः स्म इति द्विजाः ॥

देवा ऊचुः —

जय गौरि जगद्वन्द्ये जय शंकरवल्लभे । जय पद्मानने देवि जय श्रीसर्वमङ्गले ॥ २५ ॥
जय स्मरहरार्धाङ्गतुङ्गसिंहासनाश्रिते । जय श्रीकण्ठविविधशृङ्गाररससंश्रये ॥ २६ ॥
जय कर्पूरकस्तूरीचन्दनाङ्गविलेपने । जय मन्दारविलसन्मल्लिकासमलंकृते ॥ २७ ॥
जय हारविहाराढ्यकुचकुम्भान्तरस्थले । जय रत्नगणाकीर्णकोटीरवरभासुरे ॥ २८ ॥
जयानन्तमणिच्छन्नसुवर्णाभरणान्विते । जय पूर्णसुधारश्मिसमानवसनोज्ज्वले ॥ २९ ॥
तारहीरवराक्रान्तताटङ्कघटितालके । मणिदर्पणसङ्काशकपोलललिते शिवे ॥ ३० ॥
जय नीलाचलाकारवेणीमण्डलमण्डिते । जय मत्तेभकुम्भाभसुधापूर्णकुचाश्रये ॥ ३१ ॥
उन्मत्तमीनसङ्काशनयनश्रीसमन्विते । गङ्गावर्तातिगम्भीरनाभिकान्तिविराजिते ॥ ३२ ॥
जयाणुमध्यललितरोमालिभ्रमरावृते । उन्मत्तहंसगमने जय चन्द्रालिके शिवे ॥ ३३ ॥
जय मौनिमनःपद्मसद्माश्रितपदांबुजे । जय भक्तजनानन्दप्रवृद्धिकरणोद्यते ॥ ३४ ॥
जय श्रीकण्ठकण्ठस्थबाहुवल्लीविराजिते । जय स्वभक्तदुःखाब्धिविशोषणविचक्षणे ॥ ३५ ॥
जयानन्दसुधाम्भोधिस्वरूपे जय शांभवि । जय स्वर्गापवर्गादिफलदानोन्मुखे शिवे ॥ ३६ ॥
पाहि पाहि सुरानस्मान् त्वत्पादांबुरुहार्चकान् । अनन्यशरणानम्ब जगदालंबने जय ॥ ३७ ॥

भजामो भजामः स्मरारिप्रियां त्वां भजामो भजामो भजामो भवानीम् ।
भजामो भजामो भजामो भजामः शरण्याग्रगण्यां भजामो भजामः ॥ ३८ ॥

---

1 गतिरित्यतः c, d कोशयोः ।

भजामो भवत्पादपद्मप्रसादप्रभावानुबद्धाः प्रबुद्धाः सुखेन ।
भजामश्चिरं गौरि संसारबन्धं सनिबन्धमाशु प्रलीनं कुरुष्व ॥ ३९ ॥

भवत्पादसेवासमासक्तचित्ताः श्रिया सेविताः सर्वदा भाग्यवन्तः ।
भवत्पादपद्मं विनाऽन्यन्न विद्मः प्रसादानुकूलं न विघ्नो न विघ्नः ॥ ४० ॥

भवत्पादुकाराधका एव लोके नराः स्युर्धराधीशपूज्यादिपूज्याः ।
भवद्दर्शनं जातमस्माकमम्ब प्रसन्नाः कृतार्थाः कृतार्थाः कृतार्थाः ॥ ४१ ॥

सकृद्वा भवत्पादपद्मप्रभाभिः वयं भूषिताश्चेत् तवाद्यांब किं वा ।
धनं याति दीनेषु दत्तं धनं चेत् धनं वृद्धिमेतीति धन्या वदन्ति ॥ ४२ ॥

प्रतीक्षा कृता तावदद्यांब शीघ्रं त्वदङ्घ्र्यंबुजाराधने साऽधुनापि ।
न जाता तथापि स्वचित्तेषु दुःखं न वृत्तं भवत्पादपद्मश्रिया नः ॥ ४३ ॥

अनन्तैस्तपोभिस्तुलाकोटिदानैः तथा यागपूगैः व्रतानां समूहैः ।
भवत्पादसन्दर्शनं धर्मबीजं परन्तु प्रसादात्तवैवाद्रिकन्ये ॥ ४४ ॥

भवत्पादपद्मांबुजादेतु वातः करोतु श्रिया संयुतानेव लोकान् ।
स लोकोपकाराय सृष्टस्त्वयाऽपि त्वमेवासि माता पिताऽसि त्वमेव ॥ ४५ ॥

भवत्पादपद्मश्रिया संयुतानां पवित्राणि गात्राणि शर्वाणि गौरि ।
गिरीन्द्रोऽपि धन्यस्त्वदाराधनेन स्त्रिया मेनका सापि धन्यापि मान्या ॥ ४६ ॥

तदानुग्रहः प्रार्थितोऽपि प्रयासो न लभ्यः कृतेपि प्रयासं विनापि ।
अकस्माद्यदि त्वत्पदाम्भोजभक्तिः तदा सोपि लभ्यो भवत्येव गौरि ॥ ४७ ॥

भवत्पादपद्मप्रसादस्य पात्रं वयं तावदम्बाधुना धन्यधन्याः ।
इतोऽप्यन्यदस्माकमाशास्यमस्तीत्युपेक्षा न कार्या त्वया दीनवर्गे ॥ ४८ ॥

शिवे किञ्चिदन्यत् न नः प्रार्थनीयं भवत्पादपद्मानुरागं विनाऽपि ।
स एवानुरागो महाभोगहेतुः स सेतुः सुराभीष्टरानाम्बुराशेः ॥ ४९ ॥

नमस्ते कल्याणि त्रिपुरवरवामाङ्गसदने नमस्ते शर्वाणि स्मरहरमनोहारिवदने ।
नमस्ते रुद्राणि स्खलदमलनीलोत्पलदलच्छलच्छायाच्छन्नच्छदिमधुरगम्भीरनयने ॥ ५० ॥

नमस्ते नीलाद्रिद्रवविपुलकल्लोलविविध प्रभाभावाभावद्रवललितनीलालककुले ।
नमस्ते भक्तेष्टप्रदचतुरपादाम्बुजयुगे नमस्ते भूयस्ते पुनरपि नमस्ते पुनरपि ॥ ५१ ॥

[1] प्रणामानम्रेन्द्रप्रमुखवनितायल्लकमणिप्रभास्पर्धामर्धामृतकरशिरोरत्नमहिला ।
मुहुर्दृष्ट्वा दृष्ट्वा निजचरणजाग्रच्छविकृतस्मितव्यक्तानन्दा दिशतु मम कल्याणसरणीम् ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे देवतास्तुतिर्नाम पञ्चमोऽध्यायः ॥

—:×:—

## अथ षष्ठोऽध्यायः ।

व्यासः —

इति प्रसादिता देवैः मेरुमूलसमाश्रितम् । स्वर्गलोकमवाप्याम्बा दिव्यपुष्पकसंश्रिता ॥ १ ॥
पुष्पवृष्टिरभूत् तत्र सांद्रा सुन्दरमञ्जरी । मन्दमन्दारपुष्पौघगन्धवाहसमन्विता ॥ २ ॥
ततः परं सुराः सर्वे विमानवरसंस्थिताः । तत्प्रभासङ्घसंक्रान्तां द्रष्टुमभ्युद्यता मुदा ॥ ३ ॥
अत्युन्नतविमानस्थां न शेकुर्द्रष्टुमम्बिकाम् । ततः परं गद्गदाभिः वाग्भिस्तुष्टुवुरम्बिकाम् ॥

देवाः —

गिरिराजकुमारिके शिवे चरणं ते कमलामलं कथम् ।
न निरीक्षितमादरेण तत् निगमैरप्यवधारितं न हि ॥ ५ ॥

अधुना चरणांबुजं शिवे यदि ते दृष्टिपथं प्रयास्यति ।
कथमप्यघकोटिनाशकं सकलाभीष्टदमप्यसंशयम् ॥ ६ ॥

न विमानमणिप्रभागणैः कथमप्यादरतोऽपि सर्वथा ।
नयनैर्न निरीक्षितं ततः कथमस्माकमुमे मतिर्भवेत् ॥ ७ ॥

शफरीचटुलोलदृष्टिभिः कथमप्यम्ब विलोकयाशु नः ।
यदि ते करुणारसालयः सुरवर्गोऽप्यपवर्गसाधनम् ॥ ८ ॥

अतिदीनदयालुता शिवे त्वयि वेदैरपि निश्चिता ततः ।
अतिदीनगणेषु वाऽसुरान् गणयित्वा जगदंब पाहि नः ॥ ९ ॥

किमशक्यमिहाम्ब ते शिवे नहि दीनोच्चवचः श्रुतं च किम् ।
अतिदूरविलोकनेऽपि ते श्रम एवेति विशेषतो मितम् ॥ १० ॥

---

1 श्लोकोऽयं पुनरुक्तः See अ. 1 श्लो. 82

निकटस्थितभक्तपालनं करुणावीक्षणदृष्टिभिः शिवे ।
कथमप्यनुवारमम्बिके न हि ते कोऽपि तथा भवेच्छ्रमः ॥ ११ ॥

अधुना यदि गम्यते त्वया त्रिदशाधीश्वरशंकरालयः ।
निलयः सुखसागरस्य ते पुनरप्यागमनं कथं भवेत् ॥ १२ ॥

न वयं गिरिराजकन्यके करुणापात्रमिति प्रमाऽपि ते ।
पतितानपि पावयस्युमे पतितेष्वेव सुरान् विलोकय ॥ १३ ॥

तव दृष्टिरदृष्टतो भवेदिति निर्णीतमतिप्रयत्नतः ।
तपसाऽपि न तस्य साधनं भवतीति प्रमितं प्रमातृभिः ॥ १४ ॥

किमहो न दया गिरीन्द्रजे दयनीयाः कति ते जगत्त्रये ।
नहि तेषु सुराः पतन्ति वा दुरदृष्टं किमिहामरेष्वपि ॥ १५ ॥

शिवपूजनसाधिता पुरा सुरता सा न कथं मता तव ।
शिवपूजकभक्तिरस्तु ते त्वमुमे शङ्करतत्परा खलु ॥ १६ ॥

तव यद्यपि शंकरे रतिः त्वरया गन्तुमुमार्धविग्रहः ।
कथमद्य भविष्यतीति सा गिरिजे नैव हि विघ्निता भवेत् ॥ १७ ॥

अतिदीनसुरानुपालने न च विघ्नोऽपि पथि प्रियादरे ।
परमापदगाधसागरे पतितानुद्धर सादरं सुरान् ॥ १८ ॥

यदि गौरि भवेदुपेक्षया गमनं ते हरमन्दिरं प्रति ।
स शिवोऽपि कथं न पृच्छति त्रिदशाः किं न विलोकिता इति ॥ १९ ॥

गमनप्रतिबन्धकं च किं क्षणमात्रानवलोकनेऽपि ते ।
अतिदुःखमहाब्धिमालया वलिता एव सुराः शिवेन किम् ॥ २० ॥

तव दर्शनमात्रतः शिवे दुरिताब्धिः प्रलयं प्रयास्यति ।
सुखसागरपङ्क्तिरादरात् अनुयात्येव शिवार्चकालयम् ॥ २१ ॥

गिरिजे स वदान्यतामगात् चरणस्तेन च तन्निरीक्षणम् ।
अधुना सुखसाधनं शिवे न तवायासलवोऽपि सर्वथा ॥ २२ ॥

तव कल्पतरुर्न यांचिके न च चिन्तामणिरद्रिकन्यके ।
सुरधेनुरियं परं त्वहो चरणः कोपि सुधाघनो घनः ॥ २३ ॥

स सुधाघनतामुपागतः चरणस्ते सुररूपपादपान् ।
अभिषिञ्चतु दुःखपावकप्रतितप्तानधुना मुहुर्मुहुः ॥ २४ ॥
क्व सुधाघनता क्व धीरता सुरचित्ताम्बुजपूजनार्हता ।
क्व सुरानवलोकनादरः [1]चरणस्यास्य तवाम्ब शांभवि ॥ २५ ॥
करुणाब्धितरङ्गमालया ललितं ते नयनांबुजं शिवे ।
तदिदं सुरबृन्दमन्दिरे प्रसरत्वाशु सुखांबुधिप्रदम् ॥ २६ ॥
गिरिजानयनावलोकनं सुरनारीसमपेक्षितं क्षणम् ।
कमलाप्यनुवेलमम्बिका चरणांभोजरजःप्रसादजा ॥ २७ ॥
कमला कमलैरलं बलिं गिरिजापादुकपूजनप्रिया ।
पुरतः पुरतः प्रसर्पति प्रवहन्ती गिरिजे विलोकय ॥ २८ ॥
किमतः परमस्ति वांछितं गिरिजापादुकदर्शनं विना ।
तदनन्तसुखप्रदं शिवे त्रिदशानामपि दुर्दशापहम् ॥ २९ ॥
क्व चतुर्दशलोकनाथता क्व कृपासागरता दयार्द्रता ।
क्व निरन्तरदीनबन्धुता क्व तवाद्याप्यकृपा सुरेष्वपि ॥ ३० ॥
[2]मनुजेष्वपि ते दया शिवे गुरुसंसाररतेष्वनुक्षणम् ।
न वयं तदपेक्षया क्षताः क्षणमप्यम्ब विलोकयाशु नः ॥ ३१ ॥
यदि ते चरणारविन्दयोः प्रभयाऽपि प्रभुभूतयाऽनया ।
न वयं परितो विभूषिताः कथमस्माकमपीह जीवनम् ॥ ३२ ॥
अमरानव शङ्करप्रिये करुणापात्रमिति स्मरामरान् ।
शरणं तव पादपङ्कजं न तदन्यच्छरणं सुरप्रियम् ॥ ३३ ॥
वयमेवमुमार्धविग्रहं गिरिजामप्यभयाय सर्वदा ।
शरणं शरणाय कुर्महे शरणं नान्यदपेक्षितं खलु ॥ ३४ ॥
अनुवारमुमाहरौ परं प्रणताः स्मः स्मरणैरनुक्षणम् ।
गतकल्मषराशयः पुनः प्रणताः स्मः प्रणताः पुनः पुनः ॥ ३५ ॥

---

1 चरणस्यास्येति पूर्वार्धेऽन्वेति नोत्तरार्धे ।

2 क्व वदान्यवदान्यमान्यता क्व दयातुङ्गतरङ्गलोलता ।
क्व शिवार्चकमातृता शिवे क्व तवाद्याप्यकृपा सुरेष्वपि ॥ इत्ययं श्लोकः अधिकः ।

यदि दैवतदैवतं प्रभुं भवं अंबां भवभारभीरवः ।
न वयं प्रणताः पुनः पुनः न कृतान्तोऽपि किमत्र नृत्यति ॥ ३६ ॥

अमिता प्रभुता तवाम्बिके तव या सैव महेश्वरेऽपि सा ।
न तदन्यगता ततः क्व वा शरणं नः शरणार्थिनामपि ॥ ३७ ॥

न महाप्रभुसेवकाः परं भवदुःखं न भवं प्रपेदिरे ।
न मृगेन्द्रगृहेषु कीकसाः करिमुक्ताफलमन्थरेष्वपि ॥ ३८ ॥

यदि ते चरणारविन्दयोः प्रसवः कोऽपि समर्पितस्तदा ।
अधमोऽपि नरो जगत्पतिः भवतीत्येव वदन्ति साधवः ॥ ३९ ॥

अमरानतिदीनवत्सले क्षणमप्यंब विलोकयादरात् ।
करुणारससारधारया दरसंसारदवातुरानुमे ॥ ४० ॥

यदि ते न विलोकनं तदा सुरतायामपि नादरोऽस्ति नः ।
न तया फलमस्ति किं तया गिरिजे वन्ध्यतनुस्वरूपया ॥ ४१ ॥

तव वा किमुपेक्षया फलं प्रविलापोऽपि न नः श्रुतस्त्वया ।
अयि मातरुमे किमास्तिकेष्वदयाकारणमस्ति शांभवि ॥ ४२ ॥



शिव एव दयानिधिः शिवे तव तावत्कठिनं मनो यतः ।
अधुनाऽपि न दीनवीक्षणं क्रियते सादरमम्बुजानने ॥ ४३ ॥

सुतमप्यपराधसङ्कुलं जननी पालयतीति न श्रुतम् ।
किमुमे वद पातकानि नः तव नामस्मरणेऽप्यनुक्षणम् ॥ ४४ ॥

बहुतूलगिरिप्रदाहको दवलेशो न शिवे तथैनसाम् ।
कुलमाशु विनाशमेत्यहो शिवनामस्मरणाग्निलेशतः ॥ ४५ ॥

यदि पापविनाशसाधनं शिवनामस्मरणं न शैलजे ।
वद तर्हि किमस्ति साधनं वद सत्यं वद तद्विमर्शतः ॥ ४६ ॥

निगमेष्वघनाशसाधनं शिवनामस्मरणं परं श्रुतम् ।
तदिदं न कथं विनाशकं त्रिविधाघौघकुलस्य शैलजे ॥ ४७ ॥

सितभूतिविभूषणः शिवं यदि तावत्प्रणतः स्मरन् मुदा ।
प्रपतन्ति महाघकोटयः पुनरुत्थानविवर्जिताः परम् ॥ ४८ ॥

वयमीश्वरलिङ्गपूजकाः क्व महापातकभीतिरद्रिजे ।
न महानलसन्निधिं गतो हिमभीतः पतितः प्रधावति ॥ ४९ ॥

क्षुधितोप्यमृताशनः पुमान् तृषितोऽपीति यथा तथा शिवे ।
शिवलिङ्गसमर्चनप्रियः न च दुःखांबुनिधिं प्रयास्यति ॥ ५० ॥

न च शङ्करपूजकार्चकोऽप्यघलेशाश्रयतामुपैत्यतः ।
अघसंशयवार्तयाऽपि वा न वयं शैलसुते समावृताः ॥ ५१ ॥

कृपया परया शिवप्रिये त्वरया पश्य दयासुधाकरान् ।
कुरु कापि न तावता क्षतिः न सुधारश्मिसमानता तव ॥ ५२ ॥

गिरिजे न चकोररक्षकः क्षणदानायक इत्यपि श्रुतः ।
न हि तेन समेधितस्तथा कृपया पश्य सुरान् शिवप्रिये ॥ ५३ ॥

किमनाथसनाथतां त्वया गिरिजे कर्तुमनुद्यमः कृतः ।
किमनेन फलं फलार्थिनां किमयं धर्म इति श्रुतस्त्वया ॥ ५४ ॥

न भवत्कृपया विना गतिः यदि गत्यन्तरमस्ति नः सदा ।
तव मास्तु निरीक्षणं ततो गतिहीनानमरानवाम्बिके ॥ ५५ ॥

अस्माकं शरणागतामरशिरःकोटीरहीरप्रभा-
पारावारतरङ्गसङ्गतशिवाकान्तांघ्रिपङ्केरुहे ।
पद्मायल्लकमल्लचञ्चलतले श्रीचन्दनापादुके
दुष्टानिष्टनिवारके शरणमित्यन्यं न मन्यामहे ॥ ५६ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे देवगणप्रार्थनं नाम षष्ठोऽध्यायः ॥

—:×:—

# अथ सप्तमोऽध्यायः ।

व्यासः —

इति वृन्दारकाः स्तुत्वा कृताञ्जलिपुटा मुहुः । उत्पश्यन्तो विमानाग्रं ननृतुः ससुहृद्गणाः ॥ १ ॥
ततः शिवपदाम्भोजप्रभाधारानुलोकनम् । कृत्वा कृतार्थतां प्राप्य प्रणतास्ते मुहुर्मुहुः ॥ २ ॥
ततः प्रचलितं तावद् स्वर्गं लोकमतीत्य तत् । ब्रह्मलोकं विष्णुलोकं कैलासमगमत् ततः ॥ ३ ॥
तदानीममराः सर्वे परस्परविलोकनैः । परिश्रान्ताश्च तुष्टास्ते वार्तां चक्रुर्यथोचिताम् ॥ ४ ॥
पश्य तुङ्गतमं देवि विमानमतिसत्परम् । तन्नास्मद्दृष्टिविषयः तत्कान्तिर्दृश्यते सुराः ॥ ५ ॥
तपः फलितमस्माकं तद्द्वारा वीक्षणादपि । द्रष्टव्यं कथमस्माभिः शिवाचरणपङ्कजम् ॥ ६ ॥
[1] तद्द्वारा दर्शनेनैव कृतार्थाः प्रमथा अपि । अस्माकं तत्र का वार्ता तावतैव कृतार्थता ॥ ७ ॥
यत्पादपद्मरजसः प्रसादेन जगत् त्रयम् । समुत्पन्नमिदं देवाः समुत्पन्नास्तदद्भुतम् ॥ ८ ॥
तद्धाराप्रभया छन्नः सुरलोकोऽतिपावनः । सत्यलोकोऽपि वैकुण्ठोऽप्ययमत्यन्तपावनः ॥ ९ ॥
अतः परमिहास्माकं अग्रेऽपि कुशलं खलु । तत्पादप्रभया सर्वेप्यावृताः स्मो वयं क्षणात् ॥ १० ॥
किं किं पुण्यं पुरा चीर्णं न विद्मस्तत्फलेन तत् । अनेनानुमितं देवाः तद्धारामण्डलेन हि ॥
अस्माकमपि गात्राणि पवित्राण्यद्य धारया । शिवाचरणकान्तीनां सा धारा खलु दुर्लभा ॥
दुर्लभात् दुर्लभा धारा शिवाचरणकान्तिजा । सा पावनं पावनानां शोभनानां च शोभनम् ॥
अस्मन्मणिकिरीटानां तद्धाराकान्तिसङ्गमात् । कान्तिः प्रवृद्धा सङ्गेन तेन किं चित्रमद्भुतम् ॥
हेम्नः पावकयोगेन कान्तिवृद्धिर्यथा तथा । तद्धारासङ्गमाद् वृद्धाः किरीटमणिभूप्रभाः ॥ १५ ॥
इत्यन्योन्यं वदन्तस्ते तद्वार्तामेव तत्पुनः । कुर्वन्तः सुखमापन्नाः ते हर्षाश्रुसमावृताः ॥ १६ ॥
ततः परं तद्विमानं कैलासमगमत् द्विजाः । अवतीर्य ततो गौरी मेनकामाह सादरम् ॥ १७ ॥
चित्राणि मन्दिराण्यत्र सुन्दरास्तरवः परम् । ये ते हारविहारार्हाः प्रदेशाः सुरदुर्लभाः ॥
न दृष्टास्ते त्वया पूर्वमधुना नात्र शङ्करः । ततः प्रपश्य तच्चित्रं गिरिराजसमन्विता ॥ १९ ॥
इत्युक्तं तद्वचः श्रुत्वा मेनका गिरिणा सह । कैलासद्वारसन्नद्धवेदिकाकान्तिसंवृताम् ॥ २० ॥
विचित्ररत्नखचितां वेदिकां वीक्ष्य पर्वतः । अतिविस्मयमापन्नस्तद्रत्नप्रभया वृतः ॥ २१ ॥
किमाश्चर्यमिदं गौरि रत्नान्येतादृशानि न । रत्नाकरेऽपि रम्याणि दृष्टपूर्वाणि न ध्रुवम् ॥ २२ ॥

---

1 तद्धारा इति C.

कैलासनगरद्वारवेदिकारत्नकान्तिभिः । कान्तमेतच्छरीरं मे दृष्टपूर्वमिदं तु न ॥ २३ ॥
[1]कान्तिः फणिरुणारत्नकान्ति दूरीकरोत्यतः । वेदिका सङ्गता सेयं विमानेनापि सङ्गता ॥
एतत्कान्तिसमाक्रान्तं विमानमिह राजते । अत्याश्चर्यमिदं दृष्टं अग्रे किं किं भविष्यति ॥
ते धन्याः प्रमथाः सर्वे वेदिकाकान्तिसंवृताः । नित्यमत्र प्रभारूपाः स्वानुरूपविवर्जिताः ॥
अहो महदिदं भाग्यं दृष्टमेवमिदं स्थलम् । अस्माभिरीदृशं स्थानं न श्रुतं च कदाचन ॥ २७ ॥
इत्युक्तं गिरिवाक्यं सा श्रुत्वा गौरी शिवप्रिया । तत्रोपविष्टा तेनापि मेनयाऽपि सहादरात् ॥
ततः परं मेनका सा सुन्दरैः सुरभूरुहैः । फलान्यादाय रम्याणि गौरीमाह मनोहरा ॥ २९ ॥
एतादृशानि दृष्टानि न फलानि पुरा मया । तरवोऽपि तथा दृष्टाः प्रहृष्टाः तुष्टिहेतवः ॥ ३० ॥
एतद्दर्शनमात्रेण [2]संपूर्णं सुन्दरं शिवे । अतः परं भक्षणेच्छा जातु गौरि न जायते ॥ ३१ ॥
इत्युक्तं तद्वचः श्रुत्वा गौरी तामाह मेनकाम् । अत्राप्यद्भुतबुद्धिस्ते तथा मम न जायते ॥
[3]अन्तःपुरप्रवेशेन सुखं यद्भविष्यति । तदपूर्वं भवत्येव प्रतिक्षणमसंशयम् ॥ ३३ ॥
इत्युक्त्वा परितो दृष्ट्वा तान्यास्वाद्य फलान्यपि । मन्दं मन्दं प्रविष्टा सा गिरिजा शिवमन्दिरम् ॥
तत्राद्भुतानि दृष्टानि मन्दिराणि बहून्यपि । रत्नैरेव विचित्रैस्तैः कृतानि सुमनोहरम् ॥ ३५ ॥
सुधाप्रवाहसंवीताः कुल्यास्तुल्या न कैरपि । तत्तीरकल्पतरवोऽप्यपारफलसंवृताः ॥ ३६ ॥
अंबागमनकाले तैः प्रहृष्टैस्तरुभिस्तदा । पुष्पवृष्टिः कृता कापि या न पूर्वमभून्मुहुः ॥ ३७ ॥
तत्र तत्तरुमूलेषु रत्नलिङ्गानि कोटिशः । दृष्ट्वा सा पूजयामास मरन्दैः कुसुमैरपि ॥ ३८ ॥
तन्मध्ये मण्टपस्तावत् अखण्डमणिमण्डितः । योजनायुतविस्तीर्णः तावद्योजनमुन्नतः ॥ ३९ ॥
तत्रैव प्रतिमाः काश्चिदपूर्वाश्चातिसुन्दराः । हृष्टाः सहासाश्चान्योन्यं गानतानविजृम्भिताः ॥ ४० ॥
पर्यङ्कमेकं तत्रैव शतयोजनमुन्नतम् । शतयोजनविस्तीर्णं प्रभाकूटविराजितम् ॥ ४१ ॥
मन्दारपुष्पसंवीतं शयनार्हं शिवस्य तत् । शिवाविहारगन्धेन तत्संवीतमनुत्तमम् ॥ ४२ ॥
रत्नसोपानसंवीतमष्टदिक्षु विशेषतः । सोपानेष्वपि पुष्पाणि नूतनानि क्षणे क्षणे ॥ ४३ ॥
तादृशं मञ्चमालोक्य शैलेन्द्रो मेनया सह । उवाच वचनं चारु भवानीं च विलोक्य सः ॥
इदं प्रायो महेशस्य विलाससदनं प्रिये । दृष्टमानन्दजं जातं स्पृष्टं चेत् किं प्रयच्छति ॥ ४५ ॥
गौरीमनोहरं रम्यं शङ्करस्य मनोहरम् । पर्यङ्कं दृष्टमस्येदं धन्योऽहं नात्र संशयः ॥ ४६ ॥

---

1 कान्तां c  2 संपूर्णमुदरं c. d. कोशयोः ।  3 अयं श्लोकः c कोशे नास्ति ।

इदं न दृष्टममरैः गन्धर्वैरुरगैरपि । किन्नरैरपि सिद्धैर्वा गणैरपि विशेषतः ॥ ४७ ॥
एतादृशे मणिमये पर्यङ्के शङ्करालये । गौरी तिष्ठति सन्तुष्टा शङ्करानुग्रहात् परम् ॥ ४८ ॥
एतादृशं स्थलं तावत् उग्रयापि तपस्यया । न लभ्यते सत्यमेव न क्वाप्येतादृशं स्थलम् ॥ ४९ ॥
अस्मत्प्रीतिप्रदानाय गौर्या तावत्प्रदर्शितम् । नाधुना शङ्करोऽस्तीति तस्मिन् सत्पतिदुर्लभम् ॥
सभामण्टपपर्यन्तं सञ्चरन्ति गणा अपि । अमराणां न वार्ताऽपि द्वारि तेषामवस्थितिः ॥ ५१ ॥
सभामण्टपमालोक्य कस्तृप्तिं न प्रयास्यति । तन्मण्टपमणिस्तम्भगाम्भीर्यं वर्ण्यते कथम् ॥ ५२ ॥
तदर्बुदमणिस्तम्भप्राकारपरिवेष्टितम् । अखण्डास्ते मणिस्तम्भाः चित्ररत्नविराजिताः ॥ ५३ ॥
घनीभूता रत्नकान्तिः तत्रास्तरणमव्ययम् । कोटिशः सन्ति परितः रम्यास्ते रत्नमण्टपाः ॥ ५४ ॥
तेषु सर्वेषु पुष्पाणि मन्दारतरुनिःसृताः । मरन्दधारासंकीर्णाः तेषु लिङ्गानि कोटिशः ॥ ५५ ॥
तदेव रमणीयानां रमणीयं मनोहरम् । रमणीयत्वमेतस्य किं वक्तव्यमतः परम् ॥ ५६ ॥
एतादृशं विहायाम्बास्थलं मन्मन्दिरे कथम् । स्थातुमिच्छति कल्याणी प्रेम्णापि सततं प्रिये ॥
यादृशानि फलान्यत्र तादृशानि फलानि न । अस्मन्मन्दारतरुषु तथा सुरतरुष्वपि ॥ ५८ ॥
तैरर्कतरुसंङ्काशैः मन्दारतरुभिश्च किम् । एते विलक्षणा एव तरवः सफलाः सदा ॥ ५९ ॥
नाममात्रेण समता तरुणा नार्थतस्तदा । अतस्ते तरवस्तावत् नैतत् तरुसमाः प्रिये ॥ ६० ॥
एतत्तरुफले दृष्टोऽप्यानन्दोऽपि प्रवर्धते । न तत्तरुफलैरेवं भक्षणे नापि भूरिशः ॥ ६१ ॥
इत्युक्त्वा मणिपर्यङ्कं दूरान्नत्वा पुनः पुनः । गिरिः प्रदक्षिणं कृत्वा स्वं कृतार्थममन्यत ॥ ६२ ॥
ततः परं घनीभूतविचित्रमणिकान्तिषु । मृदुलेषूपविश्याम्बा गिरिमाह विचक्षणा ॥ ६३ ॥
तल्पैरनल्पैर्मृदुलैः सुखस्पर्शस्तु नेदृशः । स्वतः सुगन्धिरेवायं रत्नकान्तिसमुच्चयः ॥ ६४ ॥
इदमेतादृशं रम्यं स्थलमेतदपेक्षया । अनन्तगुणिते रम्ये स्थले तिष्ठति शङ्करः ॥ ६५ ॥
तन्मेरुशिखराग्रेषु रत्नेनैकेन निर्मितः । प्रासादस्तस्य शृङ्गेषु प्रासादः कश्चिदुत्तमः ॥ ६६ ॥
तत्रास्ति स महादेवः परमानन्दविग्रहः । अनन्तेन्दुरविप्रख्यः प्रख्यातः श्रुतिषु स्वतः ॥ ६७ ॥
तद्दर्शनार्थमधुना गन्तव्यं त्वरया मया । [1]भवतो गमनं तत्र नैव संभावितं गिरे ॥ ६८ ॥
चन्द्रमण्डलमादातुं नरः किमभिवांछति । कृतायामपि वांछायां कथं तत्तेन लभ्यते ॥ ६९ ॥
एवमेव गिरिश्रेष्ठ तन्मन्दिरविलोकनम् । दुर्लभं तत्र गमनं गन्तव्यमित एव हि ॥ ७० ॥

---

1 भवतां c, d.

निधीन् पश्य गिरिश्रेष्ठ पश्याभरणमण्टपान् । दुकूलमण्डपान् पश्य विचित्रमणिमण्टपान् ॥
मण्टपे मणयः सन्ति सर्वाभीष्टप्रदाः सदा । अपेक्षितं प्रयच्छन्ति स्वयमानीय सादरम् ॥ ७२ ॥
इत्युक्त्वा रत्नपात्रेषु विशालेषु तदा शिवा । मनोहरान्नपूर्णेषु चकार परिवेषणम् ॥ ७३ ॥
ततो भुक्तं तया साकं मेनया शिवया सह । सुधाफलानि भुक्तानि पक्वान्यन्नानि कोटिशः ॥
पश्चादाचम्य सुधया ताम्बूलमपि सादरम् । गृहीत्वा विस्मयापन्नो गिरिरानन्दसंवृतः ॥ ७५ ॥
ततः परं विचित्राणि वसनानि ददौ शिवा । कल्पान्तेऽपि न नश्यन्ति मलिनान्यपि तानि न ॥
तेषामुज्ज्वलता तावत् वृद्धिमेति प्रदक्षिणम् । परिधानेऽपि जीर्णत्वमसंभावितमेव हि ॥ ७७ ॥
[1]रत्नान्यपि ददौ तस्मै सा रत्नाभरणानि च । अपाराणि विचित्राणि मेनकायै ददौ तदा ॥ ७८ ॥
ऐरावतमदस्तम्भहेतुभूतान् गजानपि । तुरङ्गांश्च तथोत्तुङ्गान् देवाश्वमदनाशकान् ॥ ७९ ॥
ददौ गाश्च विचित्रास्ताः सुरगोमदनाशिनीः । [2]प्रकृष्टान् सर्वफलदान् मन्दारानपि कोटिशः ॥
विमानान्यपि दिव्यानि कामगान्यपि कोटिशः । अन्यान्यपि विचित्राणि फलानि प्रददौ शिवा ॥
ददौ परिमलद्रव्याण्यपाराणि शिवप्रिया । ददौ हारानुदारान् सा तारहीरसमावृतान् ॥ ८२ ॥
गृहीत्वा तावदेतावत् अम्बादत्तमिदं गिरिः । वियोगभीत्या सन्तुष्टोऽप्यसन्तुष्ट इव स्थितः ॥
एतस्मिन्नन्तरे काले विमानवरसंस्थिताः । अन्ये गणाः शङ्करेण प्रेषिताः समुपागताः ॥ ८४ ॥
ते सर्वे नन्दिकेशेन गणैरन्यैश्च संवृताः । कैलासनगरद्वारवेदिकायां परं स्थिताः ॥ ८५ ॥

गणाः —

विलम्बः समभून्नन्दिन् किमेवमुचितं तव । स्वामिकार्यार्थमुद्युक्तो न विलम्बं करोति हि ॥८६॥
कदाचित् कुपितः स्वामी यदि कार्यविरोधतः । [3]तदा कथं जीवनं स्यात् सेवकानां विशेषतः ॥
सेवकानां च यत्कृत्यं तत्कृत्यमपि यत्नतः । कर्तव्यं सत्वरं तेन तुष्टः स्वामी भविष्यति ॥ ८८ ॥
रुष्टश्चेत् कष्टमेवास्य फलं किं न भविष्यति । तत्कष्टापेक्षया कष्टं स्वामिकार्यविनाशने ॥ ८९ ॥
तदेव कार्यं कर्तव्यं भृत्यैर्येन स्वनायकः । तुष्टो भवति तद्भिन्नं न कार्यं प्रलयेऽपि वा ॥ ९० ॥
अन्यानुरोधकृत्यं किं स्वामिकार्यविरोधतः । सर्वैः प्रयत्नैः कर्तव्यं सर्वथा स्वामितोषणम् ॥ ९१ ॥
इत्युक्तं तद्वचः श्रुत्वा नन्दिकेशो विचक्षणः । प्राह प्रसन्नवचनं विनयान्वयसंयुतम् ॥ ९२ ॥

नन्दिकेशः —

---

1 अयं श्लोकः d कोशे नास्ति । 2 प्रवृत्ताः सर्वफलदाः c 3 तथातथं d.

यूयमाप्ततमा एव शङ्करस्य न संशयः । भवदुक्तं हितं सत्यं न तत्राप्यस्ति संशयः ॥ ९३ ॥
यदि कार्यान्तरे स्वामी नियोजयति मां तदा । तत् क्षणेनैव कर्तव्यं असाध्यं न जगत्त्रयम् ॥
अंबा स्वतन्त्रा तस्यास्तु दर्शनं मम दुर्लभम् । तस्यास्त्वरा तु केनापि कर्तुमेव न शक्यते ॥
सा चेच्छति विहारं चेत् करिष्यति तदा कथम् । अस्माकं प्रतिबन्धोऽपि कर्तव्यः सादरं वद ॥
महाप्रभुत्वमम्बायाः शङ्करस्य यथा तथा । तदग्रे वक्तुमिच्छामि कथं वा भवति स्फुटम् ॥ ९७ ॥
कोटियोजनदूरस्थाः सुराः सर्वेऽपि सादराः । पूजार्थमागतास्तेषां दर्शनं जातमेव नः ॥ ९८ ॥
प्रणामैस्तैः परिश्रान्ताः स्वेदधारापरिप्लुताः । तद्धाराभिः समुद्रोऽपि पूर्णोऽप्युद्वेलतां गतः ॥
देवाङ्गनाश्च पद्माया‌ः प्रणतास्ताः पुनः पुनः श्रान्ताः केवलमम्बायाः तासु दृष्टिर्न सर्वथा ॥
विमानरत्नमारूढा भवानी संस्थिता तदा । उत्पश्यन्ति सुराः सर्वे स्वस्वदारसमावृताः ॥ १०१ ॥
अहो स संभ्रमस्तावदवाङ्मनसगोचरः । तद्विहारप्रभावोऽपि वेदानामप्यगोचरः ॥ १०२ ॥
अहो शिवविलासोऽयं विलासः शैव एव हि । तद्दर्शनं न पुण्यानां राशिभिर्वा प्रजायते ॥
तदागमनवेलायामुत्साहो यादृशः पुरा । तादृशो न कदाप्यग्रे भविष्यति विशेषतः ॥ १०४ ॥
विलक्षणः स समयः शिवागमनसंयुतः । तानि तूर्याणि [1]ता वार्ताः तादृश्यः पुष्पवृष्टयः ॥
ते जयध्वनयो देव्यास्तानि स्तोत्राणि यैः सुरैः । कृतानि श्रवणेनापि सिद्धिदानि पदे पदे ॥
सिद्धानामपि संमर्दो गन्धर्वाणां च कोटिशः । किन्नराणां मुनीनां च वक्तुमेव न शक्यते ॥
वेत्रप्रहारसन्त्रस्ताः सर्वे नारायणादयः । अद्यापि कम्पसम्पन्नाः सुरनारीगणैः सह ॥ १०८ ॥
सन्त्रस्ता अपि सानन्दाः सर्वे नारायणादयः । स वाग्विषयतां नाप मनोविषयतामपि ॥
न भवद्भिः कृतं भाग्यं तत्संमर्दावलोकने । रत्ननीराजनानां च राजयस्ते तथाविधाः ॥ ११० ॥
देवाङ्गनाभिः सर्वाभिस्तदा गानपुरस्सरम् । नीराजनादि दत्तानि तेषां संख्या न सर्वथा ॥
नीराजनप्रभाकूटो मेरुकूटप्रभाकरः । स किं न दृष्टः सहसा भवद्भिर्मेरुकूटगैः ॥ ११२ ॥
मन्नेत्राणां फलं जातं तत्संमर्दावलोकने । शङ्करस्यैव कृपया तत्फलं जातमद्य वै ॥ ११३ ॥
तत्फलेन पवित्रस्य मम भीतिर्न सर्वथा । शङ्करेणापि तज्ज्ञातमेतत्[2] केन भयं मम ? ॥ ११४ ॥
स सर्वज्ञो महादेवः कुपितः किमपि प्रभुः । अस्वातन्त्र्यमपि ज्ञातं तेनाप्यागमनोत्सवे ॥
इदानीं संप्रविष्टाऽस्ति कैलासभवनान्तरे । तत्रास्माकं प्रवेशः किं येन स्यात् गमनत्वरा ॥

---

1 ते वाताः c । 2 अतः केन भयं मम d ।

अतः परं प्रयत्नोऽपि कर्तव्यो भवतां यदि । सामर्थ्यं तत्र वार्ता वा कः करिष्यति सत्वरम् ॥
एवं वदत्सु सर्वेषु गणेष्वन्योन्यमादरात् । वाणी कापि समुत्पन्ना तस्मिन्नेवाशरीरिणी ॥ ११८ ॥
अम्ब प्रयातु शैलेन्द्रो मेनया सह मन्दिरम् । स्वमन्दिरपरिष्कारः कर्तव्यस्तेन किं शिवे ॥
विलम्बोऽपि कियानेवं शिवदर्शनलालसे । शिवानुग्रहवांछायां विलम्बो युक्त एव न ॥ १२० ॥
इति तद्वचनं श्रुत्वा सिंहमारुह्य शैलजा । प्रेषयामास शैलेन्द्रं सर्वसंपत्समन्वितम् ॥ १२१ ॥

सा दृष्टा गिरिणा पुनः पुनरुमा दृष्ट्वाऽथ सा मातरं
सा दृष्ट्वाऽपि पुनः पुनः पुनरपि प्रेम्णा पुनर्दर्शने ।
इच्छां साऽपि चकार सोऽपि गिरिराडानन्दधारावृतः
प्राहाम्बामनुवारमम्ब कृपया मां पश्य पश्येत्यपि ॥ १२२ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे कैलासपर्वतं प्रति पार्वत्यागमनं नाम सप्तमोऽध्यायः ॥

—×—

## अथ अष्टमोऽध्यायः ।

व्यासः —

आरुह्य सिंहमम्बा सा क्षणमात्रं ततः परम् । शङ्करप्रेपितं दिव्यं विमानवरमाश्रिता ॥ १ ॥
तस्मिन् विमाने संविष्टा यदा शङ्करवल्लभा । तदा दुन्दुभयो नेदुः जयशब्दपुरस्सरम् ॥ २ ॥
ततस्ते प्रमथाः सर्वे शर्वाणीचरणाम्बुजम् । स्मृत्वा प्रहृष्टाः प्रणताः पुनः पुनरनातुराः ॥ ३ ॥
तूर्यदुन्दुभिघोषैस्ते जयध्वनिपुरस्सरम् । वेत्रहस्ताः प्रचलिताः कम्पयन्तः सुराचलम् ॥ ४ ॥
शिवनामानुवादेन शिवसन्तोषहेतुना । सानन्दा एव सर्वेऽपि धावन्तः पुरतो बभुः ॥ ५ ॥
श्रुत्वा नामानि तान्यम्बा मनोज्ञानि शिवप्रिया । आनन्दपरिपूर्णा सा स्मरन्ती शङ्करं मुदा ॥
शिवनामानि गायन्ती मधुरं मधुरस्वरा । मधुराक्षरसम्पन्नान्यनुवारं शिवप्रिया ॥ ७ ॥

शिव हर भव भर्ग भीम शम्भो स्मरहर शङ्कर शर्व चन्द्रमौले ।
त्रिणयन वृषकेतनान्तकारे गिरिश गिरीश मृडेश रुद्र पाहि ॥ ८ ॥

शम्भो भर्ग भवेन्दुशेखर महादेव स्मरारे हर श्रीकण्ठेश महेश शङ्कर मृड त्र्यक्षाक्षरोमापते ।

शर्वोग्रेश्वर रुद्र भीम भगवन् शूलिन् कपर्दिन् भव श्रीमृत्युञ्जय विश्वनाथ गिरिश श्रीवामदेवाव माम्
शम्भुं शङ्करमिन्दुशेखरमुमाकान्तं महेशं शिवं शर्वं रुद्रमनङ्गदक्षमथनं मृत्युञ्जयं शङ्करम्।
भर्गं भूतपतिं भवं पशुपतिं फालाक्षमुक्षध्वजं भीमं दिग्वसनं मृडं हरमजं श्रीकण्ठमीशं भजे॥

शम्भो क्वापि न तारकापि च न वा चन्द्रो न वा भानुमान्
अन्यः कोऽपि सुरोऽत्र कुत्र वसति श्रीचन्द्रमौले तव।
प्रासादद्युतिकोटिकोटिघटिता दृष्टिर्ममाद्याधुना
विद्युत्सङ्घसमावृतेव शिव नः सर्वात्मना कुण्ठिता॥ ११॥

एतन्निर्मितमत्र किं मणिमयस्थानं प्रभामण्डलैः व्याप्तं मण्डितमेव मण्डलमिदं किं मण्डनं वांछति।
स्थानं नैव विलोक्यते घनतरं गम्भीरमेतादृशं तेजःपुञ्जघनं घनान्तरमिदं नापेक्षते सर्वथा॥

यत्रानन्तसुरादिसेवकगणाः त्रस्ताः स्वनारीगणैः
साकं शोकविवर्जिताः प्रतिदिनं कम्पायमाना अपि।
सेवन्ते तदनुत्तमं स्थलमुमाकान्तो विहायात्र किं
तिष्ठत्यत्र महाप्रभुः [1]प्रभुतमं रम्यं स्थलं केवलम्॥ १३॥

व्यासः—

इत्युक्त्वा सा शिवा तस्मिन् विमाने विपुले स्थिता। एकैवाहं वसामीति चिन्ताव्याकुलमानसा॥
महेशनिकटे तावदेवं गन्तुं न शक्यते। परिचर्यार्थमत्रान्याः कल्पनीया मनोरमाः॥ १५॥
मयैव यदि तत्राद्य गम्यते शङ्करोऽपि माम्। विलोक्य सादरं किं मां वदिष्यति विशेषतः॥
एकाकिनी कथं नारी विमाने विपुले स्थिता। नारीपरिजनाक्रान्ता नारी तावद्विराजते॥
अमरप्रवरार्धाङ्गमहमेकाकिनी कथम्। गन्तुमभ्युद्यता धीरा वीरशङ्करमन्दिरम्॥ १८॥
इत्यालोच्य तदा गौरी दिव्यसौन्दर्यविग्रहात्। ससर्ज क्षणमात्रेण कोटिशो मुनिपुङ्गवाः॥ १९॥
रत्नाभरणसंपन्नाः यौवनाक्रान्तविग्रहाः। रूपलावण्यसंपन्नाः नवा एव प्रतिक्षणम्॥ २०॥
विचित्रमाल्यवसनाः सुरनारीविनिन्दकाः। रूपेणानन्यतुल्येन स्वयौवनमदेन च॥ २१॥
रुद्रवीणाः समादाय ताः सर्वाश्च पृथक् पृथक्। शिवनामानि दिव्यानि गायन्तिस्म मनोहराः॥
तानि नामानि शृण्वन्ती परमानन्दरूपिणी। सा कल्याणी मुदं प्राप सच्चिदानन्दलक्षणा॥ २३॥
आदाय स्वयमप्येकां वीणां वाणीषु लालसा। वीणाप्रवीणा रुद्राणी गानतानरता बभौ॥ २४॥

---

1 प्रभुमतं d

[1]न तद्गानं विजानन्ति गन्धर्वाः किन्नरा अपि । तथान्येऽपि सुराः सर्वे सुरनारीगणा अपि ॥
एवं गानविलोला सा वीता चामरकोटिभिः । छत्रार्बुदच्छाययापि संछन्ना सा ययौ शिवा ॥
शङ्करस्तत्सभारम्भं ज्ञात्वा तत्तोषकारणम् । पुनः संप्रेषयामास [2]गणानमितविग्रहान् ॥ २७ ॥
योषिद्गणांश्च विविधान् नानाभरणभूषितान् । सौन्दर्यभेदसंपन्नान् गानलोलान् मनोहरान् ॥
गणतूर्यध्वनिं श्रुत्वा तद्गानमपि दूरतः । अद्भुतं गानमेतावत् कृत्यमित्याह शाम्भवी ॥ २९ ॥
प्रायः सोऽयं शिवेनैव तोषः सम्पादितो मया । अपूर्वनारीसृष्ट्यापि गानसृष्ट्यापि शङ्करः ॥
शङ्करत्वान्महादेवः शङ्करत्वं स्वकं पुनः । प्रवृत्तं कर्तुमेवेदं सृष्टं सर्वमिति स्मृतम् ॥ ३१ ॥
अशक्यं किं महेशस्य मदनुग्रहवाञ्छया । सृष्टमेतावदधुना विविधं चन्द्रमौलिना ॥ ३२ ॥
मयि तावत्कृपादृष्टिः अद्यापि गिरिशस्य सा । सा तावद्रक्षणीया मे विरूपाक्षावलोकनात् ॥
मत्कृतेऽपि विलम्बोऽद्य विस्मृतश्चन्द्रमौलिना । कृपालुत्वं मया स्वामी प्रकटं कर्तुमिच्छति ॥
तस्य देवाधिदेवस्य शङ्करस्य महात्मनः । मदनुग्रहवांछापि तपसा भूयसाऽपि सा ॥ ३५ ॥
इत्यालोच्य पुनर्गौरी महेशप्रेषितं गणम् । नारीणामपि तं दृष्ट्वा प्रहृष्टा सा पुनः पुनः ॥
ततस्ताः सुरनारीणां पराभवविचक्षणाः । दण्डवत्प्रणताः सर्वाः स्तुतिपूर्वकमादरात् ॥ ३७ ॥
नीराजनानि दत्तानि दिव्यरत्नगणश्रिया । नानामणिगणाकीर्णपात्राण्यादाय कोटिशः ॥
उपहाराननेकांश्च [3]तदाऽऽनीतान् गिरीन्द्रजा । शिवनैवेद्यशेषत्वबुद्ध्या जग्राह सादरम् ॥ ३९ ॥
तान्यास्वाद्य विचित्राणि फलानि जगदम्बिका । कृतार्थत्वमतिं चक्रे शिवनैवेद्यसेवनात् ॥ ४० ॥
दुर्लभं शिवनैवेद्यमद्य प्राप्तमिदं मया । पावनं चित्तमप्यद्य पावनानां च पावनम् ॥ ४१ ॥
शिवनैवेद्यकोट्यंशकोट्यंशोऽप्यतिदुर्लभः । संपूर्णं शिवनैवेद्यं कस्य वा सुलभं भवेत् ॥ ४२ ॥
पुरोडाशं धिक्करोति शिवनैवेद्यमीदृशम् । पुरोडाशैः किमेतावत् भक्षितैः फलमाप्यते ॥ ४३ ॥
अलं यागसहस्रेणाप्यलं योगार्बुदैरपि । भक्षिते शिवनैवेद्ये शिवसायुज्यमाप्नुयात् ॥ ४४ ॥
अतः परं शङ्करस्य सन्निधानमविघ्नितम् । येनेदं शिवनैवेद्यं अकस्मात् समुपागतम् ॥ ४५ ॥
न यद्यपि क्षुधा तावदधुना मे तथाऽपि किम् । नोपेक्षणीयं सहसा शिवनैवेद्यमागतम् ॥ ४६ ॥
[4]दृष्टेऽपि शिवनैवेद्ये यान्ति पापानि दूरतः । भुक्ते तु शिवनैवेद्ये पुण्यान्यायान्ति कोटिशः ॥

---

1 न तद्गानं c d
2 गणान् नमित d.
3 तदानीं तान् c.
4 दृष्ट्वाऽपि शिवनैवेद्यं c

दूरतः शिवनैवेद्यगन्धोऽप्यायाति चेत् तदा । पापसङ्घास्तु सहसा प्रलयं यान्ति वस्तुतः ॥ ४८ ॥
यद्गृहे शिवनैवेद्यप्रचारोऽपि प्रजायते । तद्गृहं पावनं सर्वं अन्यपावनकारणम् ॥ ४९ ॥
आगतं शिवनैवेद्यं गृहीत्वा शिरसा मुदा । भक्षणीयं प्रयत्नेन शिवस्मरणपूर्वकम् ॥ ५० ॥
क्षीरं वा फललेशं वा जलं वा शङ्करार्पितम् । गृहीत्वा मुच्यते सद्यः पापकोटिगणादपि ॥ ५१ ॥
आगतं शिवनैवेद्यमन्यदा ग्राह्यमित्यपि । विलम्बे पापसंबद्धो भवत्येव हि मानवः ॥ ५२ ॥
न यस्य शिवनैवेद्यग्रहणेच्छा प्रजायते । स पापिष्ठगरिष्ठः स्यात् नरकं यात्यपि ध्रुवम् ॥ ५३ ॥
इत्युक्त्वा शिरसा गौरी तानि सर्वाणि सादरम् । आस्वाद्यास्वाद्य सन्तुष्टा शङ्करस्मरणोत्सुका ॥
महेशपतिशेषां तां सुधामादाय शैलजा । पुनः पुनः पपौ भक्त्या धाराभूतां धुनीमिव ॥ ५५ ॥
ततस्ताम्बूलमादाय शिवार्पितमुमा तदा । तत्कृतं गानमाकर्ण्य नाट्यं द्रष्टुं समुद्यता ॥ ५६ ॥
ततस्तत्कृतनाट्यानि विचित्राणि विशेषतः । दृष्ट्वा विस्मयमापन्ना गानाकर्णनतत्परा ॥ ५७ ॥
न केनापि कृतं नाट्यं पूर्वं शङ्करमन्दिरे । कैलासेऽपि विलासाढ्ये तादृशं तद्विलक्षणम् ॥ ५८ ॥
मत्प्रीत्यर्थमिदं सृष्टं नाट्यमीशेन वस्तुतः । मयि तावत्कृपा शम्भोरधुनाप्यनुवर्तते ॥ ५९ ॥
इदं नाट्यं विहायाग्रे गन्तुमेव न शक्यते । प्रायः शिवापराधोऽपि गमने मे भविष्यति ॥
प्रेषितः शङ्करेणैव नाट्यस्त्रीणां गणोऽधुना । एतद्विहाय गमने प्रत्यवायो भविष्यति ॥ ६१ ॥
अस्य नाट्यस्य समयः कियानारम्भमात्रतः । सन्तोषराशयो वृद्धाः किमग्रे मे भविष्यति ॥
नेत्रत्रयेण तन्नाट्यं द्रष्टुमेव न शक्यते । सहस्रेणापि नेत्राणां लक्षेणाप्यर्बुदेन वा ॥ ६३ ॥
किन्त्वपाराणि नेत्राणि विशालान्यमलानि च । तैर्नाट्यमीदृशं दृष्ट्वा सन्तुष्टा न भवामि किम् ॥
इति गौरी विचार्यादौ ससर्ज नयनानि सा । विपुलानि विचित्राणि रम्याण्यपि विनोदतः ॥
तैर्नेत्रैः तादृशं नाट्यं विलोकयांबा प्रतिक्षणम् । सन्तुष्टा स्वस्वरूपं च विस्मृत्य विवशा स्थिता ॥
तन्नाट्यालोकनेनैव नीतः कालः कियानपि । प्रतिक्षणं नवं नाट्यं केन वा तन्न दृश्यते ॥ ६७ ॥
तन्नाट्यवार्ताश्रवणं कृत्वा रंभादिका अपि । विस्मयाविष्टहृदयाः पुरा देवेन्द्रमन्दिरे ॥ ६८ ॥
प्रतिक्षणं नवं नाट्यं कथं ताभिः कृतं तदा । नाट्यविद्याऽपि सात्यल्पा न तत्तद्विषयं खलु ॥
विचित्रं निर्मितं नाट्यं तद्विद्यायां न यन्मतम् । तादृशं नाट्यमीशेन सृष्टमत्राद्भुतं च किम् ॥
विचित्रसृष्टिकरणे समर्थः शङ्करः खलु । ततस्तत्रापि किं चित्रं तदस्माकं हि दुर्लभम् ॥ ७१ ॥
प्रासादः खलु सृष्टोऽस्ति शङ्करेण स तादृशः । न यादृशः [1]स्वर्गलोके सत्ये विष्णुपदेऽपि वा ॥

---

1 नागलोके C.

तथैव नाट्यसृष्टिः स्यात् सा विद्या तत्र सात्र न। तावताऽपि किमज्ञत्वं अज्ञत्वेऽपि न नः क्षतिः॥
या विद्या स्वर्गलोकेऽस्ति तदभ्यासो न चेत् तदा। अस्माकमज्ञता सेयमभ्यस्ता सा विलक्षणा॥
अस्माकं तादृशं भाग्यं तद्विद्याभ्यसने कुतः। सा विद्या परमा विद्या शङ्करेण विनिर्मिता॥
दैवादत्र समायाति कृपया शङ्करस्य सा। अभ्यासस्तत्र कर्तव्यः तदा गमनमेव न॥ ७६॥
गानवार्ता श्रुता पूर्वं तद्गानं नात्र [1] संशयः। नूतना गानविद्या चेदत्र साऽपि कथं भवेत्॥
किं च सौन्दर्यधाराऽपि दिव्यनाट्याङ्गनाश्रिता। साधारा केन वा लभ्या सा किलात्यन्तदुर्लभा॥
प्रतिक्षणं नवं तासां सौन्दर्यमतितोषदम्। [2] तत्कथं प्राप्यते लोके दुर्लभं तदिति श्रुतम्॥ ७९॥
तद्वांछां कमला तावदधुनाऽपि करोति सा। वाणी शची च छाया च तदिहात्यन्तदुर्लभम्॥
किं वांछया फलप्राप्तिः विलक्षणफलोदयः। भूरिपुण्यतपोलभ्यः तत्तपस्तासु कुत्र वा॥
कैलाससदनावासः शिवदासीगणस्य तु। तत्सौन्दर्यं हि लोकेऽत्र सुरनारीषु सर्वथा॥ ८२॥
कैलासदासीवदनं दृष्ट्वा दृष्ट्वा पुनः पुनः। कमला लज्जया तावद्दूरात् नम्रमुखी स्थिता॥
कुरूपं सृष्टमीशेन किमेतन्मम दुर्भगा। साहं तपस्यया शंभुः प्रीतो मत्कृपया खलु॥ ८४॥
सौन्दर्यमेव नारीणां विधिस्तेन विना सुखम्। न प्राप्यते हि नारीभिः धनलाभेऽपि भूरिशः॥
न चाभरणवांछापि सौन्दर्ये सति यौवने। दुर्लभं तद्द्वयं प्राप्य नारी किञ्च मनोरमा॥ ८६॥
नारीरत्नमिति प्रोक्तं रम्यं सौन्दर्ययौवनैः। तदभावात् तृणप्राया पतितं तत् तृणं वरम्॥ ८७॥
पातिव्रत्यं यौवनं च सौन्दर्यं च विशेषतः। शङ्करानुग्रहेणैव नारीभिः प्राप्यते परम्॥ ८८॥
शिवदासीमुखं दृष्ट्वा नम्रा का न सुराङ्गना। वैरूप्याश्रयतां प्राप्य का स्वनिन्दां चकार न॥
तद्दासीयौवनस्यापि वैलक्षण्यं महत्तरम्। तन्नामराङ्गनाप्राप्यं तदन्यत्र कुतो भवेत्॥ ९०॥
तादृशं भाग्यमस्माभिः बहुजन्मतपस्यया। कृतयाऽपि न संप्राप्यं शङ्करानुग्रहं विना॥ ९१॥
अकस्माद्यदि संप्राप्यः शङ्करानुग्रहस्तदा। सर्वभाग्यसमाकीर्णा तूर्णमेव भवत्यपि॥ ९२॥
कुर्वन्ति तपसा प्रीतं शङ्करं लोकशङ्करम्। संसारवार्तां त्यक्त्वाऽपि तद्वार्तायाः फलं च न॥ ९३॥
किञ्च यद्यत्फलं रम्यं विलक्षणमनुत्तमम्। तदनुग्रहमात्रेण शङ्करस्य प्रजायते॥ ९४॥
शङ्करानुग्रहे बीजं शिवलिङ्गसमर्चनम्। तदर्चनेन यत्प्राप्यं तत्प्राप्यं नान्यधर्मतः॥ ९५॥
धर्मः को वा भवेद्येन सुप्रीतः शङ्करो भवेत्। शिवलिङ्गार्चनं त्यक्त्वा तदर्चनमनुत्तमम्॥ ९६॥

---

1 सर्वथा c, d  2 कुत्यं d

किं च मुख्यः स्वर्गलोकः शिवलोक इति श्रुतः । तस्मिन् लोके पुण्यपुञ्जैः स्थीयते शाङ्करैः परम् ॥
न स्वर्गनाममात्रेण स्वर्गलोकोऽयमीदृशः । शास्त्रेषु स्वर्गशब्दार्थः प्रसिद्धः स तु नात्र तु ॥
दुःखान्यत्र बहून्येव सुखैरिक्तान्यपि । दुःखाक्रान्तः स्वर्गलोकः कथं वा शास्त्रनिश्चितः ॥
मुख्य( )स्वर्गाख्यया ख्यातः कैलास इति विश्रुतः । नायं स्वर्गः स्वर्गवार्ता भ्रान्तानामत्र केवलम् ॥
किं च यत् दुर्लभं लोके सर्वेषामपि तादृशम् । लिङ्गार्चनेन संप्राप्यं अन्यत् प्राप्यं न सर्वथा ॥
अधिकारोऽपि लोकेऽस्मिन् दुर्लभः शिवपूजने । तस्मिन् सति किमप्राप्यं फलं शङ्करपूजने ॥
तथापि तादृशं नाट्यं दृष्ट्वा गौरी मनोहरम् । तदा न विरता जाता तत्तन्नाट्यविलोकनात् ॥

अभिनवशिवदासीनाट्यमानन्दराशिः गिरिवरतनया सा सादरं वीक्ष्य तस्मात् ।
अनुगतमनुवृत्ता वर्तमाना विमाने पुनरपि शिवदासीनाट्यलोला बभूव ॥ १०४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिवदासीनाट्यावलोकनं नामाष्टमोऽध्यायः ॥

—×—

## अथ नवमोऽध्यायः ।

व्यासः —

नाट्यावलोकनानन्दपारावारवरैः परम् । गौरी समावृता रेजे तन्नारीगानलालसा ॥ १ ॥
विचित्रप्रतिमानाट्यमपूर्वं द्रष्टुमुद्यता । अपूर्वगानलोला च विवशा जगदम्बिका ॥ २ ॥
ततः परं महादेवः तद्विलम्बं विलोक्य सः । पुनर्गणानपूर्वांस्तु प्रेषयामास सत्वरम् ॥ ३ ॥
तेऽपि सर्वे महोत्साहा नन्दीशप्रमुखैर्गणैः । प्रमुखाः शङ्कराज्ञायाः स्वरूपं प्राहुरादरात् ॥ ४ ॥

श्रीशङ्करः —

किं कृत्यं नन्दिकेशेन किं वा कृत्यं गणैरपि । किमन्यैरपि मे कृत्यं स्वकार्यकरणोद्यतैः ॥ ५ ॥
क्षणः कल्पायते सोऽयं गौरीदर्शनवर्जितः । उत्साहवृद्धिहेतुश्च दृश्यते न तया विना ॥ ६ ॥
लोके सन्ति पदार्थास्तु बहवस्तोषहेतवः । किं तैरनन्तैरपि मे परार्थैरर्थसाधितैः ॥ ७ ॥
रमणीयतरं वस्तु गौरीरूपं मनोहरम् । तदन्यत्तादृशं लोके न जातं न भविष्यति ॥ ८ ॥
नारीसृष्टिरपूर्वाऽपि विलासाय कदाचन । क्रियते तादृशी सृष्टिः तत् कल्पेऽपि न जायते ॥
कस्मिन् मुहूर्ते सा सृष्टा स मुहूर्तोऽपि दुर्लभः । मुहूर्तमहिमा को वा सा सृष्टिस्तावदद्भुता ॥

सृष्टो मुहूर्तोऽपि मया स मुहूर्तो विलक्षणः । तन्मुहूर्तसमानस्तु मुहूर्तोऽपि न दृश्यते ॥ ११ ॥
न तत्कल्पोऽपि कल्पान्ते कल्पमध्येऽपि दुर्लभः । कल्पादिसमये तस्मिन् समये दृश्यतेऽपि न ॥
इत्युक्तं तद्वचः श्रुत्वा नन्दिकेशादयो गणाः । परस्परं मुखं दृष्ट्वा विचारं चक्रुरादरात् ॥
सत्यमुक्तं महेशेन तत्कार्यं तदपेक्षितम् । विलक्षणमिदं कार्यं कर्तुमेव न शक्यते ॥ १४ ॥
पुरा देवगणाः सर्वे तृणेनैकेन तन्तुना । बिसवल्या निबद्धाश्च सामर्थ्यं तादृशं मम ॥
चुलकान्तःस्थिताः सर्वे सागराः सरितस्तथा । सरांसि च तथाऽन्यच्च जलं मुक्ताफलाकृति ॥
मद्वेत्राग्रनिपातेन कम्पयन्ते सुरा अपि । ब्रह्माण्डमण्डलं सर्वमणुकल्पं कृतं मया ॥ १७ ॥
मद्भृत्यभृत्यभृत्योऽपि ब्रह्मविष्ण्वादिपूजितः । तं दृष्ट्वाऽपि सकम्पास्ते किमिहागत इत्यपि ॥
तदागमनवेलायां कृताञ्जलिपुटास्तदा । दण्डवत्प्रणता एव भवन्ति सनराः सुराः ॥ १९ ॥
सामर्थ्यमीदृशं सर्वं महेशस्यैव यद्यपि । तथापि तत्कृपालेशादभिमानो ममेदृशः ॥ २० ॥
शिवकिंकरभावेन मम सामर्थ्यमीदृशम् । तथापि किं करोम्यत्र सामर्थ्यं कुण्ठितं मम ॥ २१ ॥
कुण्ठिते सति सामर्थ्ये कार्योत्कण्ठा न जायते । अतस्तत्कार्यकरणं दुर्लभं चाधुना मम ॥ २२
क्वाम्बाप्रभुत्वं क्वास्माकं तत्कार्यकरणोद्यमः । महाप्रभुर्महादेवः किं न जानाति तत् द्वयम् ॥
ज्ञात्वाऽपि स महादेवो महाप्रभुरिति स्वयम् । [1]अस्माकं ज्ञापयत्येवमस्मद्भाग्यमिदं खलु ॥
अहमादौ प्रेषितोऽस्मि ततः प्रचलिता शिवा । सोत्कण्ठया परं तत्र न कृत्यं मम सर्वथा ॥
अतिस्वातन्त्र्यमीशेन गौर्यास्तावद्विनिश्चितम् । नान्याज्ञावशगा गौरी स शिवानुग्रहस्तथा ॥
महेश्वरानुग्रहस्य किमशक्यं जगत्त्रये । तदनुग्रहपात्रत्वं दुर्लभं जगतीतले ॥ २७ ॥
शिवानुग्रहमप्राप्य तावन्नारायणादयः । तपस्याकरणोद्युक्ताः सर्वेऽपि गिरिकन्दरे ॥ २८ ॥
मध्ये समागताः केचित् भवद्भिरधुना गणाः । समागतं किमेतेन भवदागमने तव ॥ २९ ॥
नाद्यावलोकनोद्युक्ता गिरिराजकुमारिका । भवदागमनं तावत् तया न ज्ञायते खलु ॥ ३० ॥
क्व तन्नाट्यसमारम्भः क्व गणागमनादरः । भवदागमनेनापि न कार्यं भावि दृश्यते ॥ ३१ ॥
भवतां गणना कुत्र मम वान्यस्य वाऽधुना । कोटिशो वा समायान्तु गणाः किं तैः प्रयोजनम् ॥
न गणानां प्रवेशोऽस्ति तन्नारीनाट्यमण्टपे । तद्द्वारदेशेऽपि गतिः अस्माकमतिदुर्लभा ॥ ३३ ॥
पुनः पुनः समायान्ति तत्र नाट्याङ्गनाः किल । गतागतानुमानेन नूतनेनानुमीयते ॥ ३४ ॥

1 अस्मानाज्ञापयत्येव d

गणाः शृण्वन्तु तद्गानं नानुभूतं पुरा मया । नान्यैर्विघ्नेश्वराद्यैर्वा महेशेनापि वा ततः ॥ ३५ ॥

सृष्टास्ताः शङ्करेणैव गाननाट्यविशारदाः । तिरस्कारः शारदायाः परं ताः कर्तुमुद्यताः ॥ ३६ ॥

क्व शारदा क्व कमला क्व तदन्यामराङ्गनाः । तद्गन्धगन्धगन्धोऽपि किमत्र प्रसरिष्यति ॥ ३७ ॥

गाननाट्यविलोलायाः पार्वत्याश्चलने यदि । विलम्बस्तावता का वा स्याद् साकं विडम्बना ॥

अयं विलम्बो देवस्य महादेवस्य सर्वथा । अपेक्षितो भवत्येवेत्यनुमीयत एव हि ॥ ३९ ॥

अन्यथा नाट्यनारीणां प्रेषणं नः पुनः पुनः । पुनः पुनः फलान्नादिपदार्थप्रेषणं कथम् ॥ ४० ॥

गन्धः समागतः कोऽपि गन्धः पूर्वविलक्षणः । पक्वान्नानामनन्तानां अपूर्वाणां विशेषतः ॥

पक्वान्नकरणायासो न शिवस्य कदापि च । तदिच्छया परं सृष्टिः तेषान्तु स्यादनुक्षणम् ॥ ४२ ॥

प्रसूनानि प्रेषितानि महादेवेन सादरम् । विलक्षणानि तद्गन्धः कथमत्रानुभूयते ॥ ४३ ॥

ब्रह्माण्डमण्डलं प्राप्तोऽप्ययं गन्धो विलक्षणः । पुष्पसृष्टिर्गन्धसृष्टिः शङ्करेण कृता खलु ॥४४॥

न कल्पतरुपुष्पेषु सुगन्धोऽपीदृशः खलु । अस्य गन्धस्य महिमा शिवेन ज्ञायते परम् ॥ ४५ ॥

महेशसृष्टिचातुर्यमिदमत्रानुभूयते । अतस्तेन विलम्बाय सृष्टिरेव प्रकल्पिता ॥ ४६ ॥

सहस्रशः प्रयास्यन्ति ब्रह्मकल्पास्तथाप्ययम् । नाट्योत्सवो न शान्तः स्यादधुनाऽभिनवो यतः ॥

नाट्येनाभिनवेनायं नूतनाभिनयोत्सवः । पुनः पुनर्भवत्येव नवनाट्यविलोकनम् ॥ ४८ ॥

नारीणां नाट्यसामान्यविलोकनरतिर्नवा । किं पुनर्नाट्यभेदानां अवलोकनसंभ्रमः ॥ ४९ ॥

अतः परं महेशेन नाट्यनारीगणो यदि । न प्रेष्यते तदा तावत् निर्विघ्नगतिरम्बिका ॥ ५० ॥

वान्त्येते पवना मन्दाः प्रसूनासारसंवृताः । मरन्दवृष्टिरधुना प्रकृष्टा दृष्टिगोचरा ॥ ५१ ॥

चिरं जीवतु वातोऽयं आसारासारसङ्गमः । गन्धोऽपि नाट्यगानं च किमस्माकमितो भयम् ॥

स्वयं विलम्बं सोढ्वापि विलम्बस्यास्य कारणम् । प्रयत्यंबिकानाथः किमम्बाऽपि करिष्यति ॥

अत्राभिनवनाट्यस्य प्रसङ्गोऽपि न चेद्यदि । तदा प्रविष्टमेव स्यादम्बया शिवमन्दिरम् ॥ ५४ ॥

किञ्चावगणना तावदम्बया न कृताऽधुना । नाट्यस्यास्य महेशेन प्रेषितस्यादरः कृतः ॥ ५५ ॥

नाट्यानादरमात्रेण शङ्करानादरो यदि । तदा कठिनमित्येव कृतं नाट्यावलोकनम् ॥ ५६ ॥

अनादरस्य विषयोऽप्येतन्नाट्यं न सर्वथा । अपूर्वस्यास्य नाट्यस्य कथं वा स्यादनादरः ॥ ५७ ॥

नाट्यकोलाहलस्यापि श्रवणं मङ्गलायते । नाट्यावलोकनरसो वर्णनाविषयोऽपि न ॥ ५८ ॥

एतन्नाट्यविलोकनं श्रममहाम्भोधेर्महावाडवो-
ऽप्यानन्दाब्धिसुधाकरः शिवगणाशास्यः शिवाशास्यताम् ।
प्राप्तः प्रापक एव दीर्घसुकृताम्भोधेरयं वर्णना
मार्गातीत इति श्रमोऽपि न तथा तद्वर्णनाभ्युद्यमे ॥ ५९ ॥

सामर्थ्यं गिरिशः स्वकं मुनिगणावेद्यं प्रकृष्टं परं
तन्नाट्यैः प्रकटीकृतं पटुतरा सृष्टिः क्व वा तादृशी ।
मायामात्रमिदं न येन विपुलो विद्याविलासो भवेत्
सोऽयं शर्वविलास एव सकलः कोऽन्यो विलासो भवेत् ॥ ६० ॥

भाग्यं तावदिहेदृशं सुरगणाशास्यं स्वतो दुर्लभं
श्रुत्यन्तैरपि सर्वथा न विदितं देवैर्मुनीन्द्रैरपि ।
गन्धर्वैरपि किन्नरैरपि तथा नागेश्वरैरप्ययं
सन्तोषो ननु भूत इत्यनुदिनं नाट्योत्सवो मृग्यते ॥ ६१ ॥

वार्ता सेयमुमासहायनिकटे यास्यत्ययं सर्वथा
नाट्यानन्दसुधार्णवः प्रतिपदं वृद्धिं प्रयास्यत्ययम् ।
विघ्नायागमने गिरीन्द्रतनयासङ्गेऽधुना दुर्लभः
विघ्नध्वान्तनिवारकोऽपि [1]जगतीदृष्टेन दृष्टः पुनः ॥ ६२ ॥

विघ्नेशोऽपि न शक्त एव सहसा नाट्योत्सवध्वंसने
तन्नाट्यस्य विनाशनाय स कथं यत्नं करिष्यत्यपि ।
नाट्योत्साहविघातकस्तदितरः को वा जगन्मण्डले
शुण्डादण्डविराजितः खलु महाढुंढिः स नाट्योद्यतः ॥ ६३ ॥

इति शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे मार्गे शिवाऽऽगमनं प्रति
शिवगणनन्दीश्वरविचारो नाम नवमोऽध्यायः ॥

— :×: —

1 जगतीपृष्ठो न d जगतीपृष्ठे न इति भाव्यं इति भाति ।

# अथ दशमोऽध्यायः ।

व्यासः —

शिवानागमनं दृष्ट्वा शङ्करो लोकशङ्करः । तद्विलम्बस्य किं बीजं प्रायः श्रान्ता पतिप्रिया ॥ १ ॥
प्रायः सूरकराघातः पथि वृत्तोऽन्यथा कथम् । अनागमनमेतस्याः कोमलावयवा शिवा ॥ २ ॥
शिरीषप्रसवस्यापि मार्दवं तादृशं नहि । यादृशं गिरिजादेहे सुगन्धपरिवेष्टिते ॥ ३ ॥
गिरिजादेहसंबद्धमार्दवश्रवणे न किम् । शिरीषकुसुमं प्राप महारण्यतरं परम् ॥ ४ ॥
क्क वा शिरीषकुसुमं क्क शिवादेहमार्दवम् । कियदन्तरमेतस्य तस्यापि मृदुलान्वये ॥ ५ ॥
कैलासदुर्गमार्गस्य भास्करः स्वकरैः परम् । चकार खलु दुर्गत्वं दुर्गत्वं च गिरेरपि ॥ ६ ॥
तन्मार्गे रविजा कान्तिः प्रवृत्ता प्रायशस्तथा । शान्ता सा गिरिजा तान्ता लतान्ततनुकोमला ॥
सुधाकरकराणां वा मृदुलत्वं न तादृशम् । ततः सा श्रान्तिमापन्ना मार्गो दूरतरोऽप्ययम् ॥
अमन्दवातसङ्गो वा तद्विमानेन भूरिशः । तदाघातेन वा श्रान्ता सा परं सर्वमङ्गला ॥ ९ ॥
यद्वा चामरवातानां अमन्दानां प्रसारतः । श्रान्ता तावन्न विश्रान्ता किं तद्विश्रामसाधनम् ॥
न तदाप्तजनस्तत्र श्रमापहरणक्षमः । विना तेन कथं मार्गे समायास्यति शांभवी ॥ ११ ॥
मेनका किं परित्यक्ता तया कैलासमन्दिरात् । सा चेत्सह समायाति तदा खलु न स श्रमः ॥
तया विनान्नोपहारं गौर्यै का वा समर्पयेत् । उपहारादरा गौरी साऽनुवारमिति श्रुतम् ॥ १३ ॥
सा सुप्ता किं परिश्रान्ता स्वभावेनालसा परम् । चिन्तया वा परिश्रान्ता किं तया चिन्तया फलम् ॥
श्रान्तायाः पथि विश्रामो जननीजनकान्वये । पतिसङ्गेन वा नूनं स न तेन विना भवेत् ॥
चिरं संभ्रमसंक्रान्ता मेनया सह सङ्गमे । तद्वियोगेन सा श्रान्ता कोमलं तन्मनोऽपि हि ॥ १६ ॥
मयाऽपि तावन्न गतं यत्र सा गिरिकन्यका । तत्राभ्याशसहायेन सुखाऽऽगमनमिच्छति ॥ १७ ॥
यद्यप्येषा गिरिसुता तथापि कठिना न सा । दृष्टाऽपि बहुधा काले गिरिजा कोमला लता ॥
तपस्यया तनुर्दूना भवान्याः पूर्वमेव सा । तान्ता नितान्तमधुना श्रान्ता पथि विशेषतः ॥ १९ ॥
तपसा दूनदेहायाः गौर्यास्तनुविजृम्भणम् । अद्यापि न भवत्येव श्रान्ता पथि विशेषतः ॥ २० ॥
तयाऽप्युग्रं तपः पूर्वं तन्न तावत्कृतं खलु । तस्यास्तनुस्तनुस्तावत् तनुतामगमत् पुनः ॥ २१ ॥
अतः परं मया तावत् तत्र गन्तुं न शक्यते । वक्तुमप्यधुना शक्तिस्तदनागमनात् न मे ॥

न तदाप्तमुखाद्वार्ता काऽप्यत्र श्रूयते मया । कस्याप्यागमने नात्र यतो दूरतरं स्थलम् ॥ २३ ॥
आवासोऽप्युचितो नात्र वार्ताऽनागमनादिह । यत्र वार्ताप्रसारः स्यात् तत्रावस्थानमीप्सितम् ॥
प्रतिक्षणं प्रियावार्ता प्रियेण श्रूयते यदि । तदा प्रिया प्रीतचित्ता विश्रान्तिमुपयास्यति ॥ २५ ॥
अवैराग्यादयं सर्वो विचारः क्रियते मया । भार्याचर्याविचारोऽपि विरक्तस्य कथं भवेत् ॥
[1] वैराग्यं परमं भाग्यं तद्भाग्यमतिदुर्लभम् । अत एव विचारोऽयं क्रियतेऽपि प्रतिक्षणम् ॥
किञ्चापरिग्रहः पूर्वं न कृतः स कृतो यदि । तत्पालनपरित्यागे प्रत्यवायोऽपि जायते ॥ २८ ॥
न साध्वी युवती त्याज्या तन्मनोरक्षणं क्षणम् । क्षणार्धं वा यदि कृतं तेन न प्रत्यवैत्ययम् ॥
ऋतुकालाभिगमनं ब्रह्मचर्यमिति श्रुतम् । तदभावे प्रत्यवैति तेन नैव तपःक्षयः ॥ ३० ॥
प्रत्यक्षतः श्रूयमाणा प्रजातन्तुमिति श्रुतिः । भार्यासङ्गपरित्यागे दूना किं न भविष्यति ॥
विशेषतः तपः प्राप्तं भर्तृत्वं तस्य पालनम् । भार्यापालनमात्रेण तन्न तेन विना भवेत् ॥ ३२ ॥
गौरीविशालनयनभ्रमणभ्रमणोत्सवः । मन्मुखांभोजमासाद्य सद्यः संप्रति वर्धताम् ॥ ३३ ॥
मयाऽपि तावदधुना तदागमनहेतवः । न दृश्यन्ते तद्विलम्बे बीजं किमिति चिन्त्यते ॥ ३४ ॥
इति सञ्चिन्त्य सस्मार कुमारं गणनायकम् । ततः परं स विघ्नेशः सत्वरं हृष्टमानसः ॥ ३५ ॥
सन्तोषकारणं किं वा विलक्षणमिहाधुना । आनन्दो वर्धते सोऽयं सुधानिधिपराक्रमः ॥ ३६ ॥
प्रायः स्मरहरः किं मां सस्मार स्मरपूर्वकम् । अन्यथा कथमेतावानानन्दाब्धिः प्रवर्धते ॥ ३७ ॥
चिह्नान्यपि मनोज्ञानि दृश्यन्ते शिवदर्शने । सांबदर्शन[2]मस्याद्य भविष्यति न संशयः ॥ ३८ ॥
पुण्यानां परिपाकोऽयमधुना समुपस्थितः । [3]यत्पादपद्मं भक्त्याद्य दृष्ट्वा प्रीतो भवाम्यहम् ॥
वेदान्तैरपि तत्तावत् न दृष्टं कष्टनाशकम् । द्रष्टव्यमधुना रम्यं रमणीयवरोत्तमम्[4] ॥ ४० ॥
रमणीयानि दृष्टानि वस्तूनि विविधान्यपि । न तत्तुल्यं क्वापि दृष्टं दुरदृष्टविनाशकम् ॥ ४१ ॥
वांछन्ति यत्पदाम्भोजं द्रष्टुं नारायणादयः । तैर्न दृष्टं न केनापि [5]द्रष्टव्यमपि तत्परम् ॥ ४२ ॥
तपसा नातिघोरेण धर्मैर्वा विविधैरपि । परं तु तद्भवत्यद्य शङ्करानुग्रहान्मम ॥ ४३ ॥
इत्युक्त्वा सत्वरं साम्बं स्मृत्वा शङ्करपादुके । ध्यात्वा ययौ गणाधीशः शिवसन्निधिमादरात् ॥
ततः प्रणम्य बहुधा कृताञ्जलिपुटः प्रभुः । शम्भुं स्तोतुं मतिं चक्रे सर्वाभीष्टप्रदायकम् ॥ ४५ ॥

---

1 अयं श्लोकः 'c' कोशे नोपलभ्यते । 2 मात्रेण c.
3 तत्पाद c. 4 मनुत्तमम् c. 5 द्रष्टव्यमधुना c.

गणेशः —

[1]नमस्ते देवदेवाय नमस्ते रुद्रमन्यवे। नमस्ते चन्द्रचूडायाप्युतोत इषवे नमः ॥ ४६ ॥
नमस्ते पार्वतीकान्त [2]एकरूपाय धन्वने। नमस्ते भगवन् शंभो बाहुभ्यामुत ते नमः ॥ ४७ ॥
इषुः शिवतमा या ते तया मृडय रुद्र माम्। शिवं धनुर्यद्बभूव तेनापि मृडयाधुना ॥ ४८ ॥
शरव्या या शिवतमा तयापि मृडय प्रभो। या ते रुद्र शिवा नित्यं सर्वमङ्गलसाधनम् ॥
तयाऽभिचाकशीहि त्वं तनुवा मामुमापते। [3]अघोरयापि तनुवा रुद्राऽऽद्याऽपापकाशिनी ॥
या तया मृडय स्वामिन् सदा शन्तमया प्रभो। गिरिशन्त महारुद्र हस्ते यामिषुमस्तवे ॥ ५१ ॥
बिभर्षि तां गिरित्राद्य शिवां कुरु शिवापते। शिवेन वचसा रुद्र नित्यं वाच्छा वदामसि ॥ ५२ ॥
त्वद्भक्तिपरिपूताङ्गं मा हिꣳसीः पुरुषं जगत्। यन्नः शर्व जगत्सर्वमयक्ष्मꣳ सुमना [4]असत् ॥
यथा तथाव मां रुद्र तदन्यदपि मे प्रभो। रुद्रत्वं प्रथमो दैव्यो भिषक् पापविनाशकः ॥ ५४ ॥
अधिवक्ताऽध्यवोचन्मां भावलिङ्गार्चकं मुदा। अहीन् सर्वान् यातुधान्यः सर्वा अप्यद्य जम्भयन् ॥
असौ ताम्रोऽरुणो बभ्रुः नीलग्रीवः सुमङ्गलः। विलोहितोऽस्त्ययं शम्भो त्वदधिष्ठानमेव हि ॥
नमो नमस्ते भगवन् नीलग्रीवाय मीढुषे। सहस्राक्षाय शुद्धाय सच्चिदानन्दमूर्तये ॥ ५७ ॥
उभयोरार्त्नियोर्ज्या या धन्विनस्तां प्रमुञ्चताम्। संप्राप्य धनुरन्येषां भयाय प्रभविष्यति ॥ ५८ ॥
अस्मद्भयविनाशार्थं अधुना भयदाः प्रभो। याश्च ते हस्त इषवः पराता भगवो वप ॥ ५९ ॥
अवतत्य धनुस्तत् त्वं सहस्राक्ष शतेषुधे। मुखा निशीर्य शल्यानां शिवो नः सुमना भव ॥६०॥
विज्यं धनुरिदं भूयात् विशल्यो बाणवानपि। अनेशन्निषवोऽप्यस्याप्याभुरस्तु निषङ्गधिः ॥
कपर्दिनो महेशस्य यदि नाभुर्निषङ्गधिः। इषवोऽपि समर्थाश्चेत् साग्रत्वेन भयं भवेत् ॥ ६२ ॥
या ते हेतिर्धनुर्हस्ते मीढुष्टम बभूव या। तयाऽस्मान् विश्वतस्तेन पालय त्वमयक्ष्मया ॥ ६३ ॥
अनाततायायुधाय नमस्ते धृष्णवे नमः। बाहुभ्यां धन्वने शम्भो नमो भूयो नमो नमः ॥
परिते धन्वनो हेतिः विश्वतोऽस्मान् वृणक्तु सः। इषुधिस्तव यस्तावत् अस्मदारे निधेहि तम् ॥
हिरण्यबाहवे तुभ्यं सेनान्ये ते नमो नमः। दिशां च पतये तुभ्यं पशूनां पतये नमः ॥ ६६ ॥

---

1 अत्र श्रीरुद्राध्यायः यथासंभवं श्लोकरूपेण अनूद्यते।

2 नमस्ते मेहधन्वने c.

3 अघोरयेत्याद्यर्धत्रयं g कोशे नोपलभ्यते। 4 भवत् c।

त्विषीमते नमस्तुभ्यं नमः सस्पिञ्जराय ते। नमः पथीनां पतये बभ्रुशाय नमो नमः ॥ ६७ ॥
नमो विव्याधिनेन्नानां पतये प्रभवे नमः। नमस्ते हरिकेशाय रुद्रायास्तूपवीतिने ॥ ६८ ॥
पुष्टानां पतये तुभ्यं जगतां पतये नमः। संसारहेतिरूपाय रुद्रायाप्याततायिने ॥ ६९ ॥
क्षेत्राणां पतये तुभ्यं सूताय सुकृतात्मने। अहन्त्याय नमस्तुभ्यं वनानां पतये नमः ॥ ७० ॥
रोहिताय स्थपतये मन्त्रिणे वाणिजाय च। कक्षाणां पतये तुभ्यं नमस्तुभ्यं भुवन्तये ॥ ७१ ॥
तद्वारिवस्कृतायास्तु महादेवाय ते नमः। ओषधीनां च पतये नमस्तुभ्यं महात्मने ॥ ७२ ॥
उच्चैर्घोषाय धीराय धीरान् क्रन्दयते नमः। पत्तीनां पतये तुभ्यं कृत्स्नवीताय ते नमः ॥ ७३ ॥
धावते धवलायापि सत्वनां पतये नमः। नमस्ते सहमानाय तुभ्यं निव्याधिने नमः ॥ ७४ ॥
आव्याधिनीनां पतये ककुभाय निषङ्गिणे। स्तेनानां पतये तुभ्यं दिव्येषुधिमते नमः ॥ ७५ ॥
तस्कराणां च पतये वञ्चते परिवञ्चते। स्तायूनां पतये तुभ्यं नमस्तेऽस्तु निचेरवे ॥
नमः परिचरायापि महारुद्राय ते नमः। अरण्यानां च पतये मुष्णतां पतये नमः ॥ ७७ ॥
उष्णीषिणे नमस्तुभ्यं नमो गिरिचराय ते। कुलुञ्चानां च पतये नमस्तुभ्यं भवाय च ॥ ७८ ॥
नमो रुद्राय शर्वाय तुभ्यं पशुपते नमः। नम उग्राय भीमाय नमो अग्रेवधाय च ॥ ७९ ॥
नमो दूरेवधायापि नमो हन्त्रे नमो नमः। हनीयसे नमस्तुभ्यं नीलग्रीवाय ते नमः ॥ ८० ॥
नमस्ते शितिकण्ठाय नमस्तेऽस्तु कपर्दिने। नमस्ते व्युप्तकेशाय सहस्राक्षाय मीढुषे ॥ ८१ ॥
गिरिशाय नमस्तेऽस्तु शिपिविष्टाय ते नमः। नमस्ते शंभवे तुभ्यं मयोभव नमोऽस्तु ते ॥
मयस्कर नमस्तुभ्यं शङ्कराय नमो नमः। नमः शिवाय शर्वाय नमः शिवतराय च ॥ ८३ ॥
नमस्तीर्थ्याय कूल्याय नमः पार्याय ते नमः। अवार्याय नमस्तेस्तु नमः प्रतरणाय च ॥
नम उत्तरणायापि हरातार्याय ते नमः। अलाद्याय नमस्तेऽस्तु भक्तानां वरदाय च ॥ ८५ ॥
नमः शष्प्याय फेन्याय सिकत्याय नमो नमः। प्रवाह्याय नमस्तेऽस्तु ह्रस्वायास्तु नमो नमः ॥
वामनाय नमस्तेऽस्तु नमोऽस्तु बृहते नमः। वर्षीयसे नमस्तेऽस्तु नमो वृद्धाय ते नमः ॥
संवृध्वने नमस्तुभ्यं अग्रियाय नमो नमः। प्रथमाय नमस्तुभ्यं आशवे चाजिराय च ॥ ८८ ॥
शीघ्रियाय नमस्तेऽस्तु शीभ्याय च नमो नमः। नम ऊर्व्याय शर्वायाप्यवस्वन्याय ते नमः ॥
स्रोतस्याय नमस्तुभ्यं द्वीप्याय च नमो नमः। ज्येष्ठाय च नमस्तुभ्यं कनिष्ठाय नमो नमः ॥
पूर्वजाय नमस्तुभ्यं नमोऽस्त्वपरजाय च। मध्यमाय नमस्तुभ्यं अपगल्भाय ते नमः ॥ ९१ ॥

जघन्याय नमस्तुभ्यं बुध्नियाय नमो नमः । सोभ्याय प्रतिसर्याय ते याम्याय नमो नमः ॥
क्षेम्याय च नमस्तुभ्यं याम्याय च नमो नमः । उर्वर्याय नमस्तुभ्यं खल्याय च नमो नमः ॥
श्लोक्याय चावसान्यायावस्वन्याय च ते नमः । नमो वन्याय कक्ष्याय मौञ्ज्याय च नमो नमः
श्रवाय च नमस्तुभ्यं प्रतिश्रव नमो नमः । आशुषेणाय शूराय नमोऽस्त्वाशुरथाय च ॥ ९५ ॥
वरूथिने वर्मिणे च बिल्मिने च नमो नमः । श्रुताय श्रुतसेनाय नमः कवचिने नमः ॥ ९६ ॥
दुन्दुभ्याय नमस्तुभ्यं आहनन्याय ते नमः । प्रहिताय नमस्तुभ्यं धृष्णवे प्रमृशाय च ॥ ९७ ॥
पाराय पारविन्दाय नमस्तीक्ष्णेषवे नमः । सुधन्वने नमस्तुभ्यं स्वायुधाय नमो नमः ॥ ९८ ॥
नमः स्रुत्याय पथ्याय नमः काट्याय ते नमः । नमो नीप्याय सूद्याय सरस्याय च ते नमः ॥
नमो नाद्याय भव्याय वैशन्ताय नमो नमः । अवट्याय नमस्तुभ्यं नमः कूप्याय ते नमः ॥
अवर्ष्याय च वर्ष्याय मेध्याय च नमो नमः । विद्युत्याय नमस्तुभ्यं ईध्रियाय नमो नमः ॥
आतप्याय नमस्तुभ्यं वात्याय च नमो नमः । रेष्मियाय नमस्तुभ्यं वास्तव्याय च ते नमः ॥
वास्तुपाय नमस्तुभ्यं नमस्सोमाय ते नमः । नमो रुद्राय ताम्रायाऽप्यरुणाय च ते नमः ॥
नम उग्राय भीमाय नमः शङ्गाय ते नमः । नमस्तीर्थ्याय कूल्याय सिकत्याय नमो नमः ॥
प्रवाह्याय नमस्तुभ्यं इरिण्याय नमो नमः । नमस्ते चन्द्रचूडाय प्रपथ्याय नमो नमः ॥
किंशिलाय नमस्तेऽस्तु क्षयणाय च ते नमः । कपर्दिने नमस्तेऽस्तु नमस्तेऽस्तु पुलस्तये ॥
नमो गोष्ठ्याय गृह्याय ग्रहाणां पतये नमः । नमस्तल्प्याय गेह्याय गुहावासाय ते नमः ॥
काट्याय गह्वरेष्ठाय हृदय्याय च ते नमः । निवेष्प्याय नमस्तुभ्यं पाँसव्याय ते नमः ॥
रजस्याय नमस्तुभ्यं परात्परतराय च । नमस्ते हरिकेशाय शुष्क्याय च नमो नमः ॥ १०९ ॥
हरित्याय नमस्तुभ्यं हरिद्वर्णाय ते नमः । नम ऊर्व्याय सूर्म्याय पर्ण्याय च नमो नमः ॥
नमोऽपगुरमाणाय पर्णशद्याय ते नमः । अभिघ्नते चाख्खिदते नमः प्रख्खिदते नमः ॥ १११ ॥
विश्वरूपाय विश्वाय विश्वाधाराय ते नमः । त्रियम्बकाय रुद्राय गिरिजापतये नमः ॥ ११२ ॥
मणिकोटीरकोटिस्थकान्तिदीप्ताय ते नमः । वेदवेदान्तवेद्याय वृषारूढाय ते नमः ॥ ११३ ॥
अविज्ञेयस्वरूपाय सुन्दराय नमो नमः । उमाकान्त नमस्तेऽस्तु नमस्ते सर्वसाक्षिणे ॥ ११४ ॥
हिरण्यबाहवे तुभ्यं हिरण्याभरणाय च । नमो हिरण्यरूपाय रूपातीताय ते नमः ॥ ११५ ॥
हिरण्यपतये तुभ्यमम्बिकापतये नमः । तदुमापतये तुभ्यं नमः पापप्रणाशक ॥ ११६ ॥

मीढुष्टमाय दुर्गाय कद्रुद्राय प्रचेतसे । तव्यसे बिल्वपूज्याय नमः कल्याणरूपिणे ॥ ११७ ॥

अपारकल्याणगुणार्णवाय श्रीनीलकण्ठाय निरञ्जनाय ।
कालान्तकायापि नमो नमस्ते दिक्कालरूपाय नमो नमस्ते ॥ ११८ ॥

वेदान्तवन्दिस्तुतसद्गुणाय गुणप्रवीणाय गुणाश्रयाय ।
श्रीविश्वनाथाय नमो नमस्ते काशीनिवासाय नमो नमस्ते ॥ ११९ ॥

अजातसौन्दर्यसुधानिधानसमृद्धिरूपाय शिवाधवाय ।
धाराधराकार नमो नमस्ते धारास्वरूपाय नमो नमस्ते ॥ १२० ॥

नीहारताराकरकाकराय प्रकारहारप्रतिहारवीर ।
वीरेश्वरापारदयानिधान पाहि प्रभो पाहि नमो नमस्ते ॥ १२१ ॥

व्यासः —

एवं स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः । कृताञ्जलिपुटस्तस्थौ पार्श्वे ढुण्डिविनायकः ॥
तमालोक्य सुतं प्राप्तं वेदवेदाङ्गपारगम् । स्नेहाश्रुधारासंवीतं प्राह ढुण्डिं सदाशिवः ॥ १२३ ॥

इति शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे गणेशकृतरुद्राध्यायस्तुतिः नाम दशमोऽध्यायः ॥

—:×—

## अथैकादशोऽध्यायः ।

---

व्यासः —

एवं स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः । कृताञ्जलिपुटस्तस्थौ पार्श्वे ढुण्ढिविनायकः ॥ १ ॥
तमालोक्य सुतं प्राज्ञं वेदवेदान्तपारगम् । स्नेहाश्रुधारासंवीतं प्राह ढुण्ढिं सदाशिवः ॥ २ ॥

सदाशिवः —

कुशलं खलु ते ढुण्ढे कुमारः कुत्र वर्तते । दृष्टोऽसि बहुकालेन तस्यापि कुशलं खलु ॥ ३ ॥
त्वया सह कुमारेण मया गिरिजया सह । एकत्र वासः सततं कर्तव्यः स्यात् ततः परम् ॥ ४ ॥
न कुमारवियोगोऽस्य वियोगस्तव वा मम । तथा गौरीवियोगो वा सर्वथा नैव रोचते ॥ ५ ॥
गौरीं विहाय भवता भवतापापहारिणीम् । न स्थातव्यं कुमारेण मयापीति विचारय ॥ ६ ॥

अधुना निर्गता गौरी सुन्दरात् गिरिमन्दिरात् । मन्दं मन्दं समायाति सा मन्दगमना खलु ॥
कैलासमन्दिरं दूरे वरं सुन्दरसुन्दरम् । तत्र तिष्ठति यद्वा सा मध्ये तिष्ठति शांभवी ॥ ८ ॥
कस्तदागमने विघ्नः परिहारार्ह एव सः । जननीदर्शनोत्कण्ठा तव किं वा न जायते ॥ ९ ॥
इत्युक्तं तद्वचः श्रुत्वा प्रणिपत्य पुनः पुनः । जगाद वचनं चारु स वेदार्थविजृम्भितम् ॥ १० ॥

गणेशः —

स्वामिन् आयाति सा गौरी दूरमेतद्धि मन्दिरं । दूरागमनवेलायां किं विलम्बो न जायते ॥
किं च सा पथि विश्रम्य मन्दमायाति शांभवी । मन्दं मन्दं मन्दवाते वाति वीतापि तेन सा ॥
न कदाप्यनुभूतोऽस्ति मार्गायासस्तया शिव । गौरीशरीरं लोकेऽस्मिन् कोमलादपि कोमलम् ॥
किंच नाट्यसमारंभसाधनानि त्वया खलु । प्रेषितानि विचित्राणि प्रायस्तल्लालसा शिवा ॥
गाननाट्यसमारंभोऽप्यपूर्वः कल्पितस्त्वया । तदालोकनसन्तुष्टा कथमायातु सत्वरम् ॥ १५ ॥
तदालोकनविघ्नोऽपि मया कार्योऽधुना प्रभो । स विघ्नस्तावदेव स्यात् भवत्येवोपकारकः ॥ १६ ॥
अम्बा पश्यति नाट्यं चेत् तत्तन्नाट्यावलोकने । मयानुकूलाचरणं कर्तव्यमिति मन्महे ॥ १७ ॥
अम्बामहोत्सवे विघ्नं किं कर्तुं यतते मनः । कृतेऽपि यत्ने तद्विघ्ने यत्न विघ्नो भविष्यति ॥ १८ ॥
अन्येष्टविघ्नाचरणे सामर्थ्यं मम यद्यपि । तद्विघ्नाचरणे यत्नः कृतोऽपि विफलो भवेत् ॥ १९ ॥
बलाबलविचारेण यः कार्यकरणोद्यतः । तेन कार्यं भवत्येव नान्येनेत्यवधारितम् ॥ २० ॥
तवापि यदि सञ्जाता तदभ्यागमनत्वरा । तदा कथमितः सर्वं अपूर्वं प्रेषितं त्वया ॥ २१ ॥
ब्रह्माण्डमध्ये यत्तुल्यं वस्तु क्वापि न दृश्यते । तादृशं सृष्टमद्येश त्वया विश्वात्मना खलु ॥
अदृष्टपूर्वं दृष्ट्वाऽपि कस्य वा निरतं मनः । दृष्टपूर्वाभिमर्शेऽपि न रम्ये विरतं मनः ॥ २३ ॥
तद्विघ्नाचरणे गौरी कुपिता यदि पश्यति । तदा ममात्रागमनं पुनः शङ्कितमेव न ॥ २४ ॥
ब्रह्माण्डमण्डले को वा तद्विघ्नाय प्रवर्तते । जीवनाशापरित्यागे कदाचिद्यतते तथा ॥ २५ ॥

भवत्पदाम्भोजविलोकनाय पुनः पुनश्चित्तमिदं प्रवृत्तम् ।
नान्यत्र गन्तुं यतते महेश त्वमेव माता च पिता त्वमेव ॥ २६ ॥

यत्पादपद्मभ्रमरत्वमेतत् मनोऽभिवांछत्यतिलालसं च ।
किमुत्तमं वस्तु विहाय याति पवित्रवृत्तिः सुखवृद्धिकामः ॥ २७ ॥

यत्र श्रुतं वेदवचः प्रपन्नं विचारविस्तारपरैरपारैः ।

तदद्य दृष्ट्वाऽपि विहाय याति चित्तं तपोलब्धमिदं कथं वा ॥ २८ ॥

अतः परं ते मयि सत्कृपा चेत् नयामि कालं खलु कालकाल ।
त्वत्पादुकाराधनसेवनाभ्यां अन्यत्र तावन्न रुचिर्ममाद्य ॥ २९ ॥

अंबा समायास्यति चेदिदानीं त्वत्पादपद्मार्चनविघ्न एव ।
नूनं तदभ्यागमनं तदानीं अविघ्नितं त्वत्पदपूजनेन ॥ ३० ॥

योषा जारमिव [1]प्रियं प्रियतमं त्वत्पादपद्मं ममा-
प्यालिङ्ग्याद्य मम प्रयाति न कथं स्वाभीष्टसिद्धिं विना ।
त्यक्तुं वाञ्छति जारमप्यतिधनं तद्वन्मनो मे प्रभो
मच्चित्तभ्रमरो जहाति न भवत्पादाम्बुजं शङ्कर ॥ ३१ ॥

अनन्तजनिसञ्चितैरमितपुण्यपूर्णार्णवैः इदं शिवपदाम्बुजं नयनगोचरं जायते ।
जगज्जनक शङ्कर त्रिदशनायकाव प्रभो भवत्पदसरोरुहभ्रमर एव चित्तं मम ॥ ३२ ॥

भवन्तु बहवः सुराः त्रिपुरसूदनाराधकाः परन्तु न सुरैरिदं तव पदाम्बुजं दृश्यते ।
अपारगुणसागर प्रमथवीर गौरीपते चिरं मम मनः पदे तव विहारमन्विच्छति ॥ ३३ ॥

अलं विमलयोगिहृत्कमलमध्यवासैश्चिरं शिवांघ्रिकमलाधुना शरणदाऽग्रगण्यादरात् ।
वसस्व मम मानसे कुगतिभूरिभारालसे विचारगिरिगह्वरप्रकरभूतभूसाध्वसे ॥ ३४ ॥

अनाथशरणागतासुरसुरैकरक्षामणे त्रियम्बक सदाशिव त्रिपुरमर्दनाऽऽशाम्बर ।
कृपासुरससागर स्मरहरान्धकारे हर प्रसीद भगवन्प्रभो भव भवाब्धिसंशोषक ॥ ३५ ॥

यदि त्रिनयनाधुना तव पदाम्बुजं त्यज्यते मदीयमपि मानसभ्रमरमद्य संमूर्छितम् ।
क्षणेन हतमेव वा विगतजीवनं मन्महे न जीवनविवर्जितं क्वचन जीवजातं प्रभो ॥ ३६ ॥

शिवैकशरणस्य मे शरणमन्यदस्तीति किं भ्रमोऽपि भवति प्रभो शिवपदाम्बुजाराधनम् ।
निधानमिति मे मतिः तदितरं निधानं न मे तदेव निधनेऽपि मे धनमनन्यलभ्यं धनम् ॥

महेश्वर कदापि वा न च जिह्वास्यमास्यान्तरस्थितान्नमतिनिर्मलं शिवनिवेदितं सादरम् ।
अमूल्यसितशर्करामधुरमेवमीशाधुना भवत्पदसरोरुहं न मम मानसं त्यक्ष्यति ॥ ३८ ॥

क्षणार्धमपि वा मनः स्मरहरांघ्रिपङ्केरुह प्रभूतमकरन्दजप्रमुदधारया धीरया ।
सुधामपि विहाय तां विहर सादरं कादरः तवापि मम वा मनः शरणमिन्दुमौलिं व्रज ॥ ३९ ॥

1 प्रिया c.

व्रज व्रज निरन्तरं व्रज महेशपादांबुजं भजाभयदमन्वहं भज भजाधुना वा भज ।
कथं न भजने रतिः शिवपदांबुजस्यान्यथा ज्वलज्ज्वलनतेजसा ज्वलतु ते स्वरूपं मुहुः । ४० ॥

निधानमिदमेव मे सुकृतसिन्धुसङ्कार्जितं ममाद्य निधयो नव त्रिपुरवैरिपादांबुजम् ।
इदं खलु सुदुर्लभं न निधयस्तथा दुर्लभाः किमन्यदपि वांछितं मम शिवांघ्रिपद्मं विना ॥

प्रयाति मरणे धनं न निधयः प्रयान्त्येव किं प्रयान्ति पशवः प्रियाः प्रियतमाः प्रयान्त्येव ताः ।
तदन्यदपि याति तत् हितसुपुत्रमित्रादिकं न याति सुकृतं परं पशुपतिप्रसादार्जितम् ॥ ४२ ॥

न सातिशयमीदृशं पशुपतिप्रसादं विदुः स्मरारिचरणार्चनादधिकमस्ति किं वा फलम् ।
श्रुतिश्रुतमनेकधा शिवपदांबुजाराधनं प्रधानधनमित्यपि प्रथितमेव वेदेष्वपि ॥ ४३ ॥

निरन्तरमुमापतिस्मरणकारणं दुर्लभं तपःफलमिदं मतं शिवपदांबुजानुग्रहात् ।
किमन्यदधिकं फलं [1]शिव शपामि पादाम्बुजे किमस्ति भुवनत्रयेऽप्यधिकमेतदन्यत् तव ॥ ४४ ॥

यदङ्घ्रिकमलार्चनं जगति दुर्लभं देहिनां सुरासुरमुनीश्वरप्रवरवांछितं तत्परम् ।
तदेव पुनरीप्सितं मम पुनस्तदेवेप्सितं तदेव पुनरीप्सितं मम पुनस्तदेवेप्सितम् ॥ ४५ ॥

इदं शिवपदाम्बुजं यदि विहाय मोहान्मुहुः प्रयाति मदनान्तकस्मरणहीनमेतन्मनः ।
प्रणश्यतु न तेन मे गिरिश कृत्यमस्ति प्रभो न चाहितमिहेप्सितं भवति याति संग्राह्यताम् ॥

परात्परतरामरप्रवरशङ्कराधीरितां हराऽऽदरवशान्मम त्वमसि मे गतिः सर्वथा ।
अनन्यशरणं कथं हर विहातुमिच्छा तव प्रचोदय धियः प्रियाः सदय भर्ग नस्ते पदे ॥ ४७ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे श्रीशिवविघ्नेश्वरसंवादे
विघ्नेश्वरप्रार्थनं नाम एकादशोऽध्यायः ॥

—:×—

1 शिव शिवेति वाचादरात् C.

# अथ द्वादशोऽध्यायः ।

व्यासः —

इत्याकर्ण्य वचस्तस्य करुणारसवारिधिः । आलिंग्य ढुंढिराजानं आह विघ्नहरं हरः ॥ १ ॥
[1]स्तवनात् तेन सुप्रीतः तवादेयं किमस्ति मे । त्वं कुमारश्च गौरी च प्रियास्त्वन्यन्न मे प्रियम् ॥
अयं स्तवः श्रुतिमतः श्रुत्यर्थः प्रकटीकृतः । स्तवेनानेन सुप्रीतो वत्स जीव चिरं चिरम् ॥ ३ ॥
स्तुत्वा स्तोत्रेण मां नत्वा प्राप्नुयादीप्सितं फलम् । स्तवराजत्वमापन्नः स्तवः सोऽयं मम प्रियः ॥
अतः परं त्वया यावद्गिरिजासन्निधिं प्रति । गन्तव्यं त्वरया तत्र तदीयं पश्य संभ्रमम् ॥ ५ ॥
नात्याङ्गनालोकनेन सन्तुष्टा गिरिकन्यका । यद्वा मार्गपरिश्रान्ता तद्विचारस्तवोचितः ॥ ६ ॥
जननी जनकश्चेति पुत्रपोष्यद्वयं परम् । तत्रापि जननी श्रेष्ठा गर्भधारणपोषणैः ॥ ७ ॥
विरक्तेनापि जननी पोषणीया प्रयत्नतः । असाध्वी वा तु साध्वी वा साध्वी तु सुतरामपि ॥ ८ ॥
असाध्वी यदि भर्तारं विहायान्यत्र तिष्ठति । तदुपेक्षा न कर्तव्या पोष्या साऽन्नादिदानतः ॥ ९ ॥
यदि साध्वी पितुर्गेहे बन्धुगेहेऽपि वा वसेत् । तामाहूय स्वसदनं पुत्राः संपोषयन्ति च ॥ १० ॥
त्वयापि तत्र गत्वापि तदुद्वेगकरं परम् । कृत्यं न कार्यं सहसा कार्यं तदनुमोदनम् ॥ ११ ॥
यदि श्रान्ता गिरिसुता मार्गायासेन सा तदा । सुधादानादिना सम्यक् सेवनीया त्वया शिवा ॥
इतो नय सुधां दिव्यां निर्मितामधुना मया । पीता वरिष्ठा सा पीता निर्मिताऽपि सुधा मया ॥
सुधाविशेषाः सन्त्येव बहवस्तेषु सादराः । न भवानी भवत्यत्र सादरा सा भविष्यति ॥ १४ ॥
मद्भुक्तशेषं दृष्ट्वाऽपि प्रहृष्टा गिरिकन्यका । स्थापितो मह्यमीशेन शेषोऽयमिति सादरा ॥ १५ ॥
पतिव्रता गिरिसुता सततं पतिदेवता । तस्याः प्रीतिर्मयि प्रीतिर्मम तस्यां विशेषतः ॥ १६ ॥
साध्वी सुपुत्रा सुभगा लावण्यनिधिरम्बिका । ततस्तस्यां मम प्रीतिः धारारूपेण वर्तते ॥ १७ ॥
सा लावण्यसुधांभोधिः लावण्यांबुधिरेव सा । सौभाग्यानां निधानं सा सा गौरी सर्वमङ्गला ॥
न सर्वमङ्गलां त्यक्त्वा वसामि हृदयादहम् । हृदयान्निर्गता सा चेन्मङ्गलं दुर्लभं खलु ॥ १९ ॥
सर्वमङ्गलदानार्थं उद्यता सर्वमङ्गला । तद्वियोगे मङ्गलानि दुर्लभानि मनीषिणाम् ॥ २० ॥
तां सर्वमङ्गलां स्मृत्वा दुष्कराण्यपि वस्तुतः । कार्याणि कृत्वा क्षुद्रोऽपि तत्कार्यफलमश्नुते ॥ २१ ॥

---

1 स्तवेनानेन c. d. कोशयोः

त्वयाऽपि गमने गौरीचरणांबुरुहं मुहुः । स्मर्तव्यमतियत्नेन सर्वसिद्धिकरं परम् ॥ २२ ॥
पुरा तारकसंहारं कुमारः कर्तुमुद्यतः । तमवध्यं विदित्वाऽथ चिन्तयामास चेतसा ॥ २३ ॥
प्रेरितः शङ्करेणाद्य तारकासुरनाशने । तन्नाशविघ्नसङ्घानां नाशः केन भविष्यति ॥ २४ ॥
वराश्चतुर्मुखात् प्राप्ताः कोटिशस्तेन तारकः । अवध्यत्वेन निर्णीतो वधस्तस्य कथं भवेत् ॥ २५ ॥
उन्मत्तस्तैर्वरैः सोऽपि गणयत्येव नामरान् । तेनामराधिकाराश्च क्षणेनैव हृताः पुरा ॥ २६ ॥
विचेरुस्ते धरापृष्ठे निष्ठुरे शर्करावृते । नारायणादयः सर्वे तदा निरवलम्बनाः ॥ २७ ॥
तिष्ठत्येवमतिक्रूरः तारको भुवनत्रयम् । करोति सव्यथं तस्य संहारः केन वा भवेत् ॥ २८ ॥
इन्द्रः शचीकुटीरेऽस्मिन् जयन्तेनापि संवृतः । स्वर्गलोकात् परिभ्रष्टः कष्टमाप्नोति नष्टधीः ॥
तृणकल्पमभूद्वज्रं वज्रं दण्डायते खलु । या वृत्रहरणे शक्तिः तस्य या साऽपि निर्गता ॥ ३० ॥
सोऽयं नारायणः पूर्वं पद्मया सह सादरम् । वैकुण्ठे संस्थितस्तस्य शक्तिरप्यतिकुण्ठिता ॥ ३१ ॥
आविले कमले सोऽपि तया कमलया सह । निलीनो मीनसङ्घातनिहतो दुःखितोऽधुना ॥ ३२ ॥
यो वाणीरमणः सोऽपि ब्रह्मारण्यमुपाश्रितः । जीर्णपर्णकुटीवाटी निकटे रटति स्फुटम् ॥ ३३ ॥
न सूरकरसञ्चारः सूरो दूरात्तमाश्रितः । न चन्द्रवार्ता ताराणां दूरे वार्ता विशेषतः ॥ ३४ ॥
वातो वाति शनैरेव तारकासुरमन्दिरे । दूरीकुर्वन् रजःपुञ्जं शङ्कितोऽतीव दुःखितः ॥ ३५ ॥
पाककर्मरतो नित्यं पावकस्तन्महानसे । अनपायेन दुःखेन कालं नयति दुष्करम् ॥ ३६ ॥
धूमोऽपीन्धनयोगेन दुःसहश्चेन्महानसे । तदा दुःखमिति ज्ञात्वा न चेन्धनमपेक्षते ॥ ३७ ॥
वरुणस्तरुणीं त्यक्त्वा सदा स्वरमणीं गृहे । तस्यैव सेचनं कुर्वन् अधितिष्ठति दुःखितः ॥ ३८ ॥
सागरोऽपि स्वरत्नानि तस्मै दत्वा मुहुर्मुहुः । रिक्त एव पुनर्भीतो रत्नाभावविनिश्चयात् ॥ ३९ ॥
यद्यानेयानि रत्नानि बहूनीति स तारकः । दूतान् प्रेरयति व्यग्रः तदा किं कार्यमित्यपि ॥ ४० ॥
नीयन्ते प्रत्यहं रत्नान्यनन्तानि पुनः पुनः । किमुत्पन्नानि रत्नानि किं देयानीति दुःखितः ॥ ४१ ॥
[1] तद्वदन्येऽपि सर्वेऽपि सुरास्तारकपीडिताः । गिरिकन्दरमाश्रित्य निलीनाः सन्ति दुःखिताः ॥
मुनयोऽपि वनं त्यक्त्वा फलमूलजलावृतम् । साग्निहोत्राश्चरन्त्येव नीरसे गिरिकन्दरे ॥ ४३ ॥
ऊषराऽपि धरा धीरा तारकासुरविह्वला । सदा सफलसस्याढ्या पीड्यमानाऽपि दानवैः ॥ ४४ ॥
तारकासुरगम्भीरशरीरामिततेजसा । अहोरात्रविवेकोऽपि नान्धकारो न सर्वथा ॥ ४५ ॥
न तत्प्रतिभटो लोके लोकालोकाचलावधि । क्रीडां कृत्वा सुवैकुण्ठे स्वदारैः सह तिष्ठति ॥

---

1 अयं श्लोकः d कोशे नोपलभ्यते

तदग्रे विरजां नाम नदीं दृष्ट्वा स तारकः । भीतस्तदग्रे नायाति शूलज्वालासमावृताम् ॥ ४७ ॥
अतो नायाति कैलासं कालकालभयादपि । अन्यथा तस्य गमनं तत्रापि स्यादकुण्ठितम् ॥ ४८ ॥
एवं संवसतस्तस्य तारकस्य दुरात्मनः । अशक्य एव संहारः सर्वथाऽपीति मन्महे ॥ ४९ ॥
दुःखितास्ते सुराः सर्वे विचार्यान्योऽन्यमेकदा । नारायणस्य निलयं जग्मुस्ते कमलापतेः ॥ ५० ॥
खद्योतवद्विलीनं तं कमलासहितं हरिम् । ऊचुर्विस्मयमापन्नाः शरणं किमिहेति नः ॥ ५१ ॥

देवाः —

नारायणाऽधुना कं वा शरण्यं शरणार्थिनाम् । प्रपन्नाः स्म प्रपन्नानां आपन्नार्तिविनाशकम् ॥५२॥
क्व ते धैर्यं क्व ते शौर्यं क्व ते बाहुपराक्रमः । खद्योतरूपतामेत्य पद्मया सह तिष्ठसि ॥ ५३ ॥
मधुकैटभवैरित्वं कुत्र वा गतमद्य ते । लज्जावहं न तन्नाम किमिदं मधुसूदन ॥ ५४ ॥
अतः परं कथं सौख्यं ईदृशी ते गतिर्यदि । कमलापतिता वा ते कथं वा स्थिरतामियात् ॥
विलीनं त्वां न जानाति नूनं कमलया सह । विमला कमला तेन दृष्टा ते त्यज्यते कथम् ॥
अत्याविलेऽस्मिन् कमले लीनोऽसीति न दृश्यसे । अन्यथा तेन नीता स्यात् बलिना कमला खलु ॥
तव चेत् कुण्ठिता शक्तिः अस्माकमपि कुण्ठिता । शक्तिरत्र त्वया तावदधैर्यं क्रियते कथम् ॥
धैर्यमावह यत्नेन नारायण सुरैः सह । युद्धे कृते तारकोऽपि हन्तव्य इति सत्वरम् ॥ ५९ ॥
मरणादधिकः किं नः कमले कमलान्वयः । आविले विमलस्यापि गतिस्तव किमीदृशी ॥ ६० ॥
इत्युक्तं तद्वचः श्रुत्वा मन्दमाह हरिः सुरान् । तारकः श्रोष्यतीत्येव भीतः स्ववचनं मुहुः ॥६१॥

नारायणः —

तारकासुरहन्तृत्वशङ्काऽप्यस्मासु नामराः । बहुवारं वयं तेन क्रूरेणैव निराकृताः ॥ ६२ ॥
तारकासुरहुंकारोऽप्यस्माकमशनिः खलु । न कोऽप्यशनिपातेन जीवनाशां करिष्यति ॥ ६३ ॥
तन्नेत्रतेजसा दग्धमस्त्रमण्डलमस्य मे । नारायणास्त्रभस्मेदं चक्रे भस्मावशेषितम् ॥ ६४ ॥
इदमस्त्रद्वयं मुख्यं भस्मसादभवत् सुराः । युद्धसाधनमस्माकं अन्यन्नष्टं न संशयः ॥ ६५ ॥
शार्ङ्गं नष्टं गदा नष्टा शङ्खो नष्टस्तदीक्षणात् । नष्टं बाहुबलं सर्वं शरीरबलमन्ततः ॥ ६६ ॥
अतस्तेन सहास्माकं युद्धवार्ताऽपि दूरतः । तत्तेजसाऽतिदूरेऽपि स्थातुमेव न शक्यते ॥ ६७ ॥
तन्नेत्रतेजःपातेन देहो मेचकसन्निभः । तेन कृष्ण इति ख्यातिर्लोके जाता ममाधुना ॥ ६८ ॥
युद्धप्रत्याशया यूयमधुना समुपागताः । सा तावदतिदूरेऽस्तु वासोऽपि कठिनोऽत्र मे ॥ ६९ ॥
बहूनां वचनैरत्र यदि कोलाहलस्तदा । स समागत्य सहसा हत्वा यास्यति तारकः ॥ ७० ॥

यदुक्तं मधुवैरित्वं मयि [1]स्वन्न ममामराः। स महामायया तावत् कैटभोऽपि हतः पुरा॥
[2]सा गौरी लोकजननी महामायेति [3]गीयते। सा संहाररता शक्ता मोहयत्यखिलं जगत्॥
महामायामोहितोऽहं भवन्तोऽप्यमरास्तथा। मोहिता मुनयोऽप्यन्ये मोहसेष्यन्ति सर्वदा॥
सा चेन्मोहप्रवृत्ता स्यात् जगतो मोहितं जगत्। विनाशाय प्रवृत्ता चेत् विनश्यति न संशयः॥
मधुकैटभनाशाय विधिना संस्तुता शिवा। तया तयोर्विनाशोऽपि कृत एव तया खलु॥ ७५॥
चिच्छक्तिः परमा माया सर्जने पालनेऽपि सा। संहारेऽपि समर्था सा महेशस्यापरा तनुः॥
तया यस्य विनाशाय कृतो यत्नः कियानपि। तस्य नाशो भवत्येव तस्मिन्नेव क्षणे सुराः॥
सुराणामसुराणां च सृष्टिपालननाशनैः। सा क्रीडति महागौरी भवानी सर्वमङ्गला॥ ७८॥
शर्वाणी पार्वती दुर्गा मृडानी विश्ववाहुका। कामाक्षी सा विशालाक्षी शिवा त्रिपुरभैरवी॥
सिद्धेश्वरी च विकटा सैव कात्यायनी स्मृता। वागीश्वरी महाकाली महिषासुरमर्दिनी॥ ८०॥
चण्डमुण्डप्रमथिनी धूम्रलोचनमर्दिनी। निशुम्भमथिनी देवी शुम्भासुरविनाशिनी॥ ८१॥
सैव शाकम्भरी लोके कौशिकीति च गीयते। दुर्गासुरविनाशेन दुर्गा देवीति गीयते॥ ८२॥
गौरी संहारकालेऽपि करुणारससागरः। रिपूनपि पुनात्येव शस्त्रप्रहरणादिभिः॥ ८३॥
महामाया समुत्पन्ना माया काचन शोभना। संहारकारिणी चापि मायान्तरविजृम्भिता॥ ८४॥
तत्तन्मायास्वरूपाणि निर्माय स्वयमेव सा। उत्पत्तिस्थितिसंहारान् करोति भववल्लभा॥ ८५॥
वृत्रासुरादयः सर्वे महामायाहताः सुराः। कैलासनगरद्वारस्वर्गलोकमुपागताः॥ ८६॥
तेऽपि धन्याः सुराः सत्यं यया ते चासुरा हताः। न तादृशं वा भाग्यं नः पुण्यैरगणितैर्विना॥
अस्माकमपि नष्टानि दुरदृष्टानि सा शिवा। दुरदृष्टविनाशाय प्रसङ्गेनापि संस्मृता॥ ८८॥
अतः परं तारकाद्या भीतिर्जाता दुरत्यया। सा नाशं प्राप्नुयादेव गौरीस्मरणकारणात्॥ ८९॥
या सर्वमङ्गलानाम्ना तन्नामस्मरणे सति। शांभवानां मङ्गलानि निर्मलानां पदे पदे॥ ९०॥
नूनं जागरणे तेषां मङ्गलानि प्रयच्छति। स्वप्नेऽपि सा मङ्गलानि मङ्गला सर्वमङ्गला॥ ९१॥
यन्नामाङ्गमिति ख्याता वेदे सा सर्वमङ्गला। मङ्गलानि तनोत्येव प्रतिक्षणमनाकुला॥ ९२॥
को वा न मङ्गलं प्राप मङ्गलापतिपूजया। स सर्वमङ्गलाभर्ता मङ्गलानि प्रयच्छति॥ ९३॥
सर्वमङ्गलया युक्तः तारकासुरनाशकम्। जनयामास विश्वात्मा तारकं संहरिष्यति॥ ९४॥
अतः परं कियान् कालो नेयोऽस्माभिः ततः परम्। तारकासुरसंहारं सुकुमारः करिष्यति॥ ९५॥

---

1 मयि सन्न C.  2 या गौरी C.  3 विश्रुता C.

स महेश्वरवीर्येण कुमारः समभूत् सुराः । स वीराग्रेसरः क्रूरो महागौरीकुमारकः ॥ ९६ ॥
स शौर्यनवनीतेन पोषितः शौर्यसागरः । तारकासुरसंहारं क्षणेनैव करिष्यति ॥ ९७ ॥
कुमारशरसन्धानदहनज्वालया परम् । तारकासुरसंहारो भविष्यति न संशयः ॥ ९८ ॥
इति तद्वचनं श्रुत्वा नत्वा नारायणं सुराः । प्रहर्षेण परं प्राहुः [1] कृतार्थोऽस्मीति सादरम् ॥ ९९ ॥
तारकासुरसंत्रासदावानलसमावृताः । शिवनामसुधासारैः शीतलाः स्मः किलाधुना ॥ १०० ॥
कथं स्मृतो महादेवः संसाराग्निविनाशकः । अकस्मादधुना दीनान् अस्मान् पालयितुं परम् ॥
स कृपालुर्नीलकण्ठः सर्वकण्टकनाशकः । करोति मङ्गलं नित्यं क्षणार्धेनापि वा स्मृतः ॥ १०२ ॥
प्रतिक्षणं महादेवचरणस्मरणादराः । हाराः परमुदारास्ते न संसारभयातुराः ॥ १०३ ॥
त एव धन्या मान्याश्च धरणीमण्डले मुहुः । ये स्मरन्ति महादेवं उमाऽऽलिङ्गितविग्रहम् ॥
अहो महदिदं भाग्यं सौभाग्यनिधिरेव नः । गौरीधवोऽधुना साधु धारारूपेण संस्मृतः ॥ १०५ ॥
महादेवपदाम्भोजभृङ्गमङ्गं सुमङ्गलम् । तनूत्तमाङ्गमुत्तुङ्गं मुहुः तत्प्रणतं मुदा ॥ १०६ ॥
हरं परात्परतरं तं महानन्दसागरम् । स्मृत्वा नत्वाऽपि दृष्ट्वा वा परमानन्दतां ययुः ॥ १०७ ॥
ये ये कृतार्थास्ते सर्वे सर्वदा सर्वसिद्धिदम् । शरण्यं शरणं प्राप्ताः प्राप्तैश्वर्यमहोत्सवाः ॥ १०८ ॥

यद्द्वारगाः तुङ्गतुरङ्गकोटयो यद्द्वारि मत्तेभसमूहकोटयः ।
तद्द्वारपालाय नमो नमो नमः स शाङ्करद्वारविचारसागरः ॥ १०९ ॥
न शाम्भवानामशुभं कदाचित् ते शोभनानां सदनं सुखानाम् ।
त एव धन्याः पृथिवीतलेऽस्मिन् मान्याः सुराणां च नरेश्वराणाम् ॥ ११० ॥

अस्माकं कृतपुण्यसंघविभवैः अद्याधुना शङ्करे
भक्तिः काचन सापि मेरुसदृशं सूते धनं निर्धनाः ।
स्मृत्वा तं सकृदप्यपारधनभूसौभाग्यवन्तस्ततः
सन्तः केऽपि किलान्तकान्तकलसत्पादाम्बुजाराधकाः ॥ १११ ॥

सम्पूर्णकामं परमं प्रकामं निर्दग्धकामं गिरिजार्धवामम् ।
धृतार्धसोमं समवामसोमं देवोत्तमं दैवतसार्वभौमम् ॥ ११२ ॥

कृतं किमपि यत्पुरा शिवपदाम्बुजाराधनं तदेतदधुना सुखं किमपि साधु सूते मुहुः ।
इदं न सुरधेनुभिः न मणिनाऽपि कल्पद्रुमैः सुधानिधिनिमज्जनैः अपि तु केवलं ते नमः ॥ ११३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे तारकासुरवैभववर्णनं नाम द्वादशोऽध्यायः ॥

---

1 "कृतार्था इति सादरम्" – इति सुवचम् । Ed.

## अथ त्रयोदशोऽध्यायः ।

शिवः —

एवं ढुंढे कुमारोऽपि विचार्यादरपूर्वकम् । नत्वा मामाह विनयात् कृताञ्जलिपुटः शनैः ॥ १ ॥

कुमारः —

शङ्करापारकरुणारससागर शं कुरु । मदन्यो दयनीयस्ते ढुंढेर्वा नैव दृश्यते ॥ २ ॥
तारकासुरसंहारविहारचतुरो हरः । स महावीर यद्यस्ति श्रुतिस्मृतिशिरोमणिः ॥ ३ ॥
सृष्टिपालनसंहारान् करोति श्रीमहेश्वरः । न तदन्यः क्वचित् कोऽपीत्यपि श्रुतिरपि श्रुता ॥ ४ ॥
अतस्तारकसंहारः कथं कार्यो मया प्रभो । तादृशं नास्य सामर्थ्यं अन्यस्यापि न सर्वथा ॥ ५ ॥
यत्कार्यकरणे शक्तो यस्तेनैव परं खलु । तत्कार्यमिति नान्येन न तत्त्वं तादृशं खलु ॥ ६ ॥
यत्तेजसा सुराः सर्वे पराभूताः प्रतिक्षणम् । तद्वीर्यदावदहनमसह्यमिति मेनिरे ॥ ७ ॥
शलभानिव तत्तेजः सुरसंहारमिच्छति । स महाप्रलयाग्नीनां समूह इव तिष्ठति ॥ ८ ॥
स दुर्धर्षः सुराणां चेत्सहायोऽपि सुरैर्मम[1] । कथं विधेयो विधिना सह नारायणो गतः ॥ ९ ॥
अधुना तस्य वार्तापि न श्रुता तात का मतिः[2] । तस्य नारायणस्यापि विधेर्वा भक्तवत्सल ॥
किमेवमुत्कटा सृष्टिः तस्य संपादिता प्रभो । तत्संहाराय यत्नोऽपि कथमेतादृशोऽधुना ॥ ११ ॥
स कालकूटकूटानां कूटवत्किल भात्यतः । अतस्तस्य न संहारे प्रवृत्तिरपि जायते ॥ १२ ॥
न वटाङ्कुरवत्तस्य संमतं परिपालनम् । संवृद्धः किं नखच्छेद्यः शाखामण्डलमण्डितः ॥ १३ ॥
कथं विषतरुः सृष्टः सुराणामपि नाशकः । कालकूटादपि भयं न सुराणामभूत् तदा ॥ १४ ॥
तन्नेत्रतेजसां लेशाः कालकूटवदन्वहम् । स्वर्गिवर्गविनाशाय चरन्ति सुरमन्दिरे ॥ १५ ॥
तन्नेत्रतेजोऽवयवोऽप्यसह्यः स कथं मम । सह्यः स साक्षादग्नीनां समूहः प्रलयोन्मुखः ॥
तत्संहारप्रयत्नोऽपि प्रायः स्याद्विफलो मम । अतस्तदर्थमधुना यत्नो न क्रियते मया ॥ १७ ॥
यत्ने कृते यदि फलं न भविष्यति सत्वरम् । तदा चेतसि वैकल्यं अकीर्तिरपि दुस्तरा ॥ १८ ॥
तस्मादगमनेनैव कालो नेयः कियानपि । असह्य एव सर्वेषां स सह्यः किं मयाऽधुना ॥ १९ ॥
ततः पराजयो लोकेप्युपहासोपि जायते । किं तेनाप्युपहासेन शूराणामपि जीवनम् ॥ २० ॥
यदि तस्मिन्महायुद्धे सन्नद्धे बुद्धिनाशके । विपर्ययो भवेद्बुद्धेः यशोवृद्धिस्तदा कथम् ॥ २१ ॥

---

1 सुरैरपि सुरा मम d.　　2 'गतिः' इति c, d कोशयोः ।

उत्पत्तिरेव यशसः प्रथमं दुर्लभा ततः । कथं तद्वृद्धिवार्तापि कृतान्तान्तक शङ्कर ॥ २२ ॥
सर्वेषामन्तकत्वेन कृतान्तः प्रथितः कथम् । न प्रेष्यते तद्वधाय तद्वधं न करोति किम् ॥ २३ ॥
कथमस्मदवध्यस्य तस्य तद्वध्यतेति चेत् । तर्हि सह्या तवापीश मम त्रिदशदुर्दशा ॥ २४ ॥
तदायुःपरिमाणं च न कर्तुं यतते मनः । अतस्तद्युद्धवार्ताभिः कालकालालमित्यलम् ॥ २५ ॥
इत्युक्ते तद्वचः श्रुत्वा मयैव समुदीरितम् । तदादरेण शृणु मे गणेशवचनं पुनः ॥ २६ ॥
सत्यमुक्तं कुमाराद्य तारकासुरसन्निभः । नाधुना वर्तते वीरो न भूतो न भविष्यति ॥ २७ ॥
तथाऽपि ते विचारः कः कालीं कात्यायनीं स्मर । कालि कालीति कालीति स्मरन् युद्धे जयं लभेत् ॥
उमा गौरी महाकाली महागौरी शिवा सती । शर्वाणी चण्डिका दुर्गा रुद्राणी गिरिकन्यका ॥
मृडानी पार्वती माया महामाया महेश्वरी । अपर्णा शांभवी भद्रा शुभा त्रिपुरभैरवी ॥ ३० ॥
श्रीः सर्वमङ्गला लक्ष्मीः भवानी दक्षकन्यका । आर्या हैमवती चेति स्मृत्वा जयमवाप्नुयात् ॥
एकैकमपि यन्नाम गौर्यास्तद्दुःखनाशकम् । [1]जयदं धनदं चैतत् आयुर्वृद्धिकरं परम् ॥ ३२ ॥
ततः कुमार तां गौरीं स्मृत्वा युद्धाय याहि ते । जयो भवत्यसन्दिग्धं तन्नाम जयदं यतः ॥

स्मृत्वापि गौरीं गिरिराजकन्यां धन्यां च मान्यां च कलङ्कशून्याम् ।
दुर्गामनन्यामपि भावयन्तः सद्यो भवन्त्येव हि भाग्यवन्तः ॥ ३४ ॥
स्मृत्वापि यां पातकसागरेभ्यो निर्गत्य सङ्गत्य च सौख्यसंघैः ।
स्वर्गं समेत्याप्यपवर्गमेत्य तिष्ठन्ति भाग्येन नराः शिवाग्रे ॥ ३५ ॥
यद्दृष्टिपातेन जगत्समस्तं उत्पन्नमेतत् परिपालितं च ।
कल्पावसाने प्रलयं प्रयाति सा देवता मङ्गलदेवता या ॥ ३६ ॥
यत्पादपद्मस्मरणं मुनीनां तपस्यया केवलमम्बिका सा ।
स्मृता सदा सर्वसुखप्रदात्री सैषा विधात्री सुखसागराणाम् ॥ ३७ ॥
यामन्नपूर्णां प्रवदन्ति देवाः स्तुवन्ति गन्धर्वगणा मुनीन्द्राः ।
मर्त्याश्च तत्पादरजःप्रसादात् [2]रमादिभिः सा खलु पूजनीया ॥ ३८ ॥
यस्याः कटाक्षप्रसरेण धन्यो दीनो दरिद्रः कृपणोपि धन्यः ।
मान्यः सुराणां धनसागराणां अधीश्वरः स्यादिति तां भजाम्बाम् ॥ ३९ ॥
यत्पादपद्मांबुजरेणुलेशं दधार शौरिर्धृतकूर्मरूपः ।
शेषः सहस्रेण दधार मूर्ध्ना सैषा भवानी शुभराजधानी ॥ ४० ॥

1 जयप्रदमिदं चैतत् c.  2 रमादयः c. d.

कुलाचलैः मेरुसमानधैर्यैः अतिप्रयत्नेन विशुभ्रकायैः ।
यत्पादपद्माम्बुजरेणुशैलो धृतो मुदा सा गिरिजा सदाऽम्बा ॥ ४१ ॥
दिग्दन्तिभिर्यत्पदपद्मरेणुः धृतः स्वकुम्भस्थलपङ्किलोऽपि ।
मदाम्बुधारापरिवीतगात्रैः तद्धारणायासगतैः स्वतन्त्रैः ॥ ४२ ॥
यत्पादपद्माम्बुरुहार्चनाय रत्नाकरो नूतन[1]रत्नजालम् ।
संपादयत्यन्वहमादरेण सा किं न गौरी तव पूजनीया ॥ ४३ ॥
इयं स्तुतिर्मन्मुखपङ्कजोत्था मरन्दधारेव मुदा भवान्याः ।
मुदे प्रवृत्ताऽस्तु शुभाय नित्यं जयाय सौभाग्यसमृद्धिहेतुः ॥ ४४ ॥
अतः परं सत्वरमेव ढुंढे गौरीपदाम्भोरुहवीक्षणाय ।
कुरु प्रयत्नं कुरु मा विलम्बं लम्बोदरालम्बनसंभ्रमाणाम् ॥ ४५ ॥
एकाकिनश्चेत् तव तत्र गन्तुं मनः प्रवृत्तं न तदा तवापि ।
कुमारमभ्येत्य सहायभूतं स तावदम्बानवलोकनार्तः ॥ ४६ ॥
तेनापि शीघ्रं तव कार्यमद्य कर्तव्यमेवेति विनिश्चयो मे ।
तस्यास्त्यशक्यं न किमप्यतस्त्वे (?) विचारणीयं गमने गणेश ॥ ४७ ॥
एकेन तेनैव मदिष्टकार्यं सिध्यत्यवश्यं स तथा विलम्बम् ।
न कर्तुमिच्छत्यतिसूक्ष्मबुद्धिः सुहृद्गतं वेद स किं न वेद ॥ ४८ ॥
स मन्नियोगोद्यतचित्तवृत्तिः निवृत्तिरप्यस्त्यपराधभीतेः ।
तच्चित्तवृत्तेरनुवृत्तिरस्मिन् स शौर्यमूर्तिः श्रुतगीतकीर्तिः ॥ ४९ ॥
तस्याधुनैवागमने विलंबः त्वया न कार्यः सहसा विलंबः ।
न तस्य सह्यः स हि सिंहसिंहः सिंहासनं द्रष्टुमपि प्रवृत्तः ॥ ५० ॥
यद्वीर्यवार्ताश्रवणेऽपि तारः स तारकः सर्वसुरान्तकोऽपि ।
त्रस्तः समस्तासुरभूनिरस्तः स वस्तुतस्तावदतिप्रशस्तः ॥ ५१ ॥
एकः कुमारो जगतीतले मे कुमारनाम्ना प्रथितः कुमारः ।
कुमार एवेति कुमारबुद्धिः कुमारमात्रे मम डिम्भ ढुंढे ॥ ५२ ॥
तेनाकुमारं न कुमारताऽपि प्रदर्शिता कार्यविशेषसिद्ध्या ।
स सिद्धसाध्यार्थितसिद्धबुद्धिः न बुद्धिमानत्र तथाविधोऽन्यः ॥ ५३ ॥

---

1 रत्नमालां c.

गौरी कुमारेण कुमारसूः स्यात् सूते कुमारं न तथा तदन्या ।
न तादृशः कोऽपि कुमारवर्गे कुमारवृत्तिर्न तथा कुमारः ॥ ५४ ॥

मदुक्तकार्ये न विलम्बशङ्का लम्बोदराऽम्बाचरणांबुजस्य ।
आलोकने तस्य खलु त्वरा स्यात् सा तं विलोक्य प्रमुदा भवित्री ॥ ५५ ॥

दृष्टे कुमारे गिरिराजकन्या विन्यस्य कार्यान्तरमाशु तेन ।
आलिङ्गिता क्षीरसहस्रधारा धाराधरात्युच्चकुचा[1] भवित्री ॥ ५६ ॥

दृष्टे कुमारे गिरिराजकन्या स्नेहः परं क्षीररसत्वमेत्य ।
गौरीकुचद्वारवरेण तावत् विनिर्गतः स्याद्बहिरद्य नूनम् ॥ ५७ ॥

कुमारमार्गागमने प्रवृत्तिं श्रुत्वाऽपि गौरी विगतान्यवार्ता ।
कुचौ पयःप्रस्रवणप्रवृत्तौ दृष्ट्वा मुहुः स्मेरमुखी भवित्री ॥ ५८ ॥

सुस्मेरद्विगुणीकृतातिरुचिरक्षीरप्रसारं मुहुः
पश्यन्ती कुचकाञ्चनाचलशिरःसम्माननाभ्युद्यता ।
स्कन्दालिङ्गनलालसाऽपि चषकैः क्षीरं गृहीत्वा मुहुः
किं नायास्यति सत्वरं सुत इति प्रेमाम्बुधारा शिवा ॥ ५९ ॥

सा गौरी सुखराशिरेव सुकृतश्रेणीसुधासागरः
सौन्दर्यद्रववाहिनी च सततं सा वाहिनी संपदाम् ।
आपद्राशिविनाशिनी खलु महापापाशनैः सा शनैः
एतन्मे शयनं समेत्य शमुमा मह्यं प्रदास्यत्यपि ॥ ६० ॥

गौरी शारदपूर्णचन्द्रवदना दृष्टाऽप्यदृष्टैर्मुहुः
कष्टं [2]दुष्टमपाकरिष्यति मुहुः स्पृष्टा मुखाम्भोनिधिम् ।
सृष्ट्वा सृष्टिविचक्षणा खलु मुहुर्दृष्टिप्रवृष्टिं परां
स्रष्टुर्दृष्टिविशेष [3]योषिततनुं कुर्याददृष्टान्वितम् ॥ ६१ ॥

भाग्यैर्भूरितपःप्रभावभवनैः संभावनीयान् मुहुः
भक्ताभीष्टफलप्रदाननिपुणा साऽतिप्रवीणा क्षणम् ।
ध्याताऽपि क्षणदा प्रतिक्षणमतिश्लक्ष्णं भवानी कदा
द्रष्टव्या नयनश्रमापहरणं कर्तव्यमत्यादरैः ॥ ६२ ॥

---

1 कुचा c, d. 2 दुःखं c. 3 पोषित c.

धन्यानां भवनेषु सा गिरिसुता विन्यस्य पादांबुजं
　स्थित्वा सा क्षणमात्रमादरयुता तद्द्वारपालाङ्गणे ।
इच्छन्ती कमलाविलासमसकृत् तद्द्वारपालाङ्गणे-
　ष्यालस्येन विना रमाविहरणं सा कर्तुमन्विच्छति ॥ ६३ ॥

देवानामपि वन्द्य एव सततं यत्पादुकाराधकः
　तत्पादाम्बुरुहं स्मरन्ति सुकृतैः कान्तैरनन्तैरपि ।
तन्मात्रस्मरणेन सुन्दरतरे सापीन्दिरामन्दिरे
　तत्सेवानिरता कदापि विरता श्रान्ता न सञ्जायते ॥ ६४ ॥

जातश्चेज्जननीमनोज्ञजठरे गौरीपदाम्भोरुहं
　स्मृत्वा भूपतितामुपेत्य बहुधा भुक्त्वाऽपि भोगान् बहून् ।
कुर्वन् शांभवपालनं बहुधनैः कुर्वन् शिवाराधनं
　काशीं प्राप्य विमुच्यते मुनिवराराध्यामसाध्यामपि ॥ ६५ ॥

दृष्टा चेद्गिरिराजराजतनया नेत्रोत्सवो जायते
　सर्वाङ्गं पुलकाञ्चितं च न मनः किं तत् प्रसन्नं मम ।
नित्यानन्दसुधाप्रसारलहरीकल्लोलमालाकुलः
　कालं किं न नयामि कालकलना सा कालकालस्य मे ॥ ६६ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिवमहेश्वरसंवादे
पार्वतीमहिमस्तववर्णनं नाम त्रयोदशोऽध्यायः ॥

—:×:—

# अथ चतुर्दशोऽध्यायः ।

व्यासः —

पुनस्तं गन्तुमुद्युक्तं कर्तुमेव महेश्वरः । प्राह मन्दं मधुरया गिरा गीर्वाणनायकः ॥ १ ॥
कुमारागमने वृत्ते लम्बोदर विलम्बधीः । निर्वृत्ते वाऽस्तु सहसा स विलंबसहोऽपि न ॥ २ ॥
तस्य तद्दर्शनोत्कण्ठा नीलकण्ठाधिरोहणे । मुहुर्मुहुः प्रवृद्धा स्यात् तन्निरोधोऽद्रिदुःसहः ॥ ३ ॥
भवद्गमनमात्रेण त्वरया गिरिकन्यका । समायास्यति मां द्रष्टुं प्रहृष्टवदना सती ॥ ४ ॥
दृष्ट्वा गौरीशरद्राकासुधाकर[1] वरासनाः । मल्लोचनचकोरास्ते पुष्टास्तुष्टा भवन्त्यपि ॥ ५ ॥
एतस्मिन्नन्तरे वीरः कुमारः समुपागतः । प्रणतः प्रस्तुतानन्दधारासारसमावृतः ॥ ६ ॥
ततः परं स तुष्टाव भगवन्तमुमापतिम् । अनन्तैरपि वेदान्तैः यो न ज्ञातस्तमव्ययम् ॥ ७ ॥

षडाननः —

योऽयं देवः सच्चिदानन्दरूपी रूपातीतो वेदवेदान्तवार्तैः ।
यस्मादस्मान्निर्गता एव सत्यं तत्त्वं देवं तत्वतः कोऽपि वेद ॥ ८ ॥
यस्मादेतज्जायते विश्वमादौ येनैवेदं लक्षितं रक्षणार्हम् ।
अन्ते तावन्नाशमेति प्रभूतं तत्त्वं वन्दे देवतासार्वभौमम् ॥ ९ ॥
यत्पादाब्जं मृग्यमासीन्मुनीनां तत्त्वज्ञानापारसाराकराणाम् ।
तत्पादाब्जं दुर्लभं दुर्लभं मे देवाशास्यं सर्वथा दुर्लभं च ॥ १० ॥
यत्पादाब्जं कामकामाः सुराद्याः सर्वे तावत् द्रष्टुमिच्छन्ति भक्त्या ।
तत्पादाब्जं दुर्लभं वेदगीतं तन्मच्चित्तं सन्ततं सावधानम् ॥ ११ ॥
यागैर्योगैः साधनैर्यन्न दृष्टं पादाम्भोजं विश्वनाथस्य तन्मे ।
नित्यं तावद् दुर्लभं दुर्लभानां मध्ये तावत् दुर्लभं तत्पदाब्जम् ॥ १२ ॥
त्वत्पादाब्जं द्रष्टुमद्यापि धन्याः योगाभ्यासं कर्तुमप्युद्यतास्ते ।
कृत्वा कृत्वा तं पुनः श्रान्तचित्ताः तत्पादाब्जं द्रष्टुमर्धेन्दुमौले ॥ १३ ॥
घोराकारापारसंसारसिन्धुः यत्पादाब्जालोकनेन प्रवृद्धः ।
तं त्वां सोमं देवतासार्वभौमं [2]वन्दे देवं सुन्दरानन्दकन्दम् ॥ १४ ॥

---

1 'कराशनाः' c, d. कोशयोः । 2 वन्दे वन्दे c, d.

नित्यानन्दानन्दसन्दोहबीजं यत्पादाब्जं सर्वविज्ञानबीजम् ।
पादाम्भोजं तं नमामि [1]प्रणामः त्वत्पादाब्जे दुर्लभः सर्वदा मे ॥ १५ ॥

सुरापारकोटीरकोटिप्रभाभिः भवत्पादुकाकान्तिकान्ताभिरीश ।
प्रशान्तो विधुर्भानुमानिन्दुमौले कला षोडशी वा न तस्यास्तु तासाम् ॥ १६ ॥

[2]भवत्पादपद्मप्रभामण्डलेन प्रभूतोऽपि मार्ताण्ड इत्येव मन्ये ।
जगन्मण्डलं भासयत्यम्बिकेश प्रकाशस्तवायं प्रकाशाय कस्य ॥ १७ ॥

तवायं प्रभावः प्रभूतः प्रभाति प्रभामण्डलस्यास्य कार्यं न विद्मः ।
स्फुलिङ्गेन नष्टेऽपि गाढान्धकारे क्व सूर्याधपेक्षाऽपि लोकेषु दृष्टा ॥ १८ ॥

तडित्कोटिसङ्घातजातप्रकाशं तिरस्कृत्य तेजस्तवेदं प्रवृत्तम् ।
स्फुरत्पादपद्मस्य तस्य स्फुलिङ्गा रविर्वह्निरिन्दुः ग्रहास्तारकाश्च ॥ १९ ॥

अचिन्त्यप्रभावो मनोगोचरो वा न वेदान्तवाग्गोचरो वा निवृत्ताः ।
[3]यतो वाच एवेति मन्ये निवृत्ताः प्रवृत्तिः कथं तत्र मानान्तरस्य ॥ २० ॥

अनन्तानि पापानि नाशं प्रयान्ति स्वतस्तत्पदाम्भोरुहानुग्रहेण ।
किमुग्रास्त्यशक्यं तवानुग्रहस्याप्ययं ते ममानुग्रहोयं महेश ॥ २१ ॥

महेशाद्य याचे भवत्पादपद्मे दृढां भक्तिमेकां त्वदन्यं न याचे ।
त्वमेवासि माता पिताऽसि त्वमेव त्वमेव प्रभुर्मे त्वमेवासि बन्धुः ॥ २२ ॥

अनाथैकनाथ प्रभो विश्वनाथ प्रभो मामनाथं सनाथं कुरु त्वम् ।
अनन्यावनं ते कथं वा न धर्मः त्वमेवासि धर्मस्वरूपः स्मरारे ॥ २३ ॥

स्मरामि स्मरामि स्मरारे भवन्तं विपद्ध्वान्तसंहारहेतुं प्रशान्तम् ।
जगद्धेतुमेकं भवन्तं स्मरामि स्मरारे शरण्यो न कोऽप्यस्ति लोके ॥ २४ ॥

क्व वा ते पदाब्जं क्व वा वा मनो मे मनोवृत्तिरस्मिन् कथं त्वत्पदाब्जे ।
स्थिरा जायतामिन्दुमौले दयालो दयापात्रमस्मि त्रिनेत्राहमेकः ॥ २५ ॥

अहं सर्वदा त्वत्पदाम्भोजभृङ्गः भवाम्येव शंभो भवत्पादपद्मम् ।
मनःसद्म तन्मे मनः पद्मयाऽपि प्रभो मोहकालेऽपि न क्रीडतीति ॥ २६ ॥

---

1 प्रपन्नः तत्पादाब्जे सर्वथा दुर्लभं मे c.  २ अयं श्लोकः c कोशे नोपलभ्यते ।

३ स्वतो वाच एवेति मन्ये सचित्ता c. स्वतो वाच एवेति मन्ये सचित्ताः d.

भवत्पादपद्मश्रिया साकमेतत् मनः क्रीडतीति प्रमोदो ममासौ ।
ततस्तावता हानिरीशान का ते तवाहं तवाहं तवाहं तवाहम् ॥ २७ ॥

न लोके ममान्यत् किमाशास्यमस्तीत्यवश्यं त्वया शङ्कनीयं महेश ।
इतो नाधिकं क्वापि लोकेषु शंभो न चात्यल्पमाशास्यमस्तीति विद्मः ॥ २८ ॥

इति स्तुत्वा महादेवं कुमारो नतकन्धरः । प्रणम्य शिवपादाब्जं तदालिङ्ग्य स्थितो मुदा ॥
ततः परं तं कुमारं करुणासागरो हरः । आलिंग्य ढुण्ढिना साकं उवाच वचनं मुदा ॥ ३० ॥

सदाशिवः —

ढुण्ढे कुमारेण सहाधुना त्वं विमानमारुह्य मनोज्ञमद्य ।
प्रयाहि गौरीचरणारविन्दमरन्दधारादरदर्शनाय ॥ ३१ ॥

इदं तु तावत् सुदिनं गणेश त्वयाऽद्य नेत्रश्रमवारणाय ।
आनन्दधारापरिपालनाय गन्तव्यमम्बापदसन्निधानम् ॥ ३२ ॥

त्वया जगन्मङ्गलमङ्गलायाः किं मङ्गलं मङ्गलदेवतायाः ।
सेव्यं स्वरूपं नयनारविन्दसन्दोहसेव्यं खलु सेव्यमद्य ॥ ३३ ॥

धन्यं दिनं तावदिदं गणेश गौरीपदाम्भोरुहदर्शनेन ।
नूनं कुमारस्य तवापि भाग्यं सौभाग्यसंपत्तिनिदानभूतम् ॥ ३४ ॥

अभूतपूर्वं खलु मङ्गलं ते भविष्यति प्रायश इत्यवैमि ।
यतः कुमारोऽपि समागतोऽयं अंबापदाम्भोजविलोकनाय ॥ ३५ ॥

रमादिकापारसुराङ्गनानां तुङ्गोत्तमाङ्गानतपादुकायाः ।
मम प्रियायाः परमम्बिकायाः पादारविन्दं मुनिबृन्दवन्द्यम् ॥ ३६ ॥

बृन्दारबृन्दारकवन्दितायाः शैलाधिराजप्रियकन्यकायाः ।
पादारविन्दं मुदमातनोतु श्रियं तनोतु [1] त्वरया सहाद्य ॥ ३७ ॥

इतीरितं तद्वचनं कुमारः श्रुत्वा प्रहृष्टः स गणेशयुक्तः ।
ययौ विमानोत्तमरत्नपीठे [2] सिंहासनाधिष्ठित एव तुष्टः ॥ ३८ ॥

ततः परं दुन्दुभयो विनेदुः ववुश्च वाताः सुखहेतवस्ते ।
मन्दारकुन्दादिमरन्दमन्दाः सुपुष्पवृष्टयाद्भुतपुष्टरूपाः ॥ ३९ ॥

---

1 स्वत एव दृष्टं C. 2 सिंह सिंहासना C.

ततो विमानाग्रपताकभागान् तन्मन्दवातप्रसरात् सकम्पान् ।
ददर्श तत्राभयदानिवांग्रानाट्याङ्गनामण्डलमम्बरान्ते ॥ ४० ॥

आचूतमूलामलरत्नराजिविराजिते यानवरे कुमारम् ।
गणेश्वरं चाचलराजकन्या निन्ये सुतं लोचनगोचरं तम् ॥ ४१ ॥

अयं कुमारो मम षण्मुखोऽसौ गजाननोऽयं गणनायकोऽयम् ।
इति प्रहृष्टा गिरिराजकन्या [1]वचोविदं वाचमुदीरयन्ती ॥ ४२ ॥

ददर्श दूरेण गजाननोऽसौ कुमारमालोक्य मुहुः प्रहृष्टः ।
इयं भवानीति वदन् कुमारः [2]प्रियं सखायं परिषस्वजे तम् ॥ ४३ ॥

पश्यादरेणाद्य कुमार गौरी महेश्वरश्रीचरणारविन्दम् ।
द्रष्टुं प्रवृत्ताऽपि न सा निवृत्ता विश्वानि देवी भुवनानि [3]चष्टा ॥ ४४ ॥

सेयं गौरी नाट्यनारीगणानां कृत्वाऽवज्ञां संज्ञया सादरं माम् ।
दृष्ट्वा हृष्टा त्वन्मुखांभोजमादौ देवं देवं राधसे चोदयन्ती ॥ ४५ ॥

सेयं माता सच्चिदानन्दभूता गीता सेयं वेदवेदान्तबृन्दैः ।
मन्दं मन्दं सा चरन्ती च वाचामेषा नेत्री राधसः सूनृतानाम् ॥ ४६ ॥

इत्युक्त्वा तौ तद्विमानान्मनोज्ञादत्युत्तुङ्गादागतौ तौ भवानीम् ।
नत्वा दूरात् तत्पदाम्भोजयुग्मं भूयो नत्वाप्यम्बिकालिङ्गितौ च ॥ ४७ ॥

ततः कुचप्रस्तुततत्पयोभिः स्नेहस्वरूपैरभिषिच्यमानौ ।
मुदं परां प्रापतुरम्बिकायाः तौ तत्पदाम्भोजविलोकनेन ॥ ४८ ॥

[4]गणाश्च सर्वे ननृतुर्गणेशः समागतः षण्मुखसंयुतोऽयम् ।
अतः परं शङ्करदर्शनाय गौरी गमिष्यत्यविलम्बहेतोः ॥ ४९ ॥

अस्माकमप्यद्य शिवाधवस्य पादारविन्दं सुरबृन्दवन्द्यम् ।
वन्द्यं मुकुन्दाक्षिसरोजपूज्यं भाग्यैरनन्तैर्विविधैरपारैः ॥ ५० ॥

जातास्तावद्ब्रह्मकल्पाश्च सान्ताः तेषामन्तस्तावदद्याप्रहृष्टः [5] ।
नाद्यानन्देनैव कालो भवान्या नीतस्तावान् चित्रमत्रापि किं वा ॥ ५१ ॥

---

1 वचो मिथो d. २ प्रियं कुमारं दृढमालिलिङ्ग c. ३ चष्टे c.

4 अयं श्लोकः c कोशे नोपलभ्यते । 5 भवाप्यदृष्टः c.

गौरीनेत्रोन्मीलने मीलने वा कल्पास्तावत्कोटिशः संभवन्ति ।
जातास्तावन्नाशमन्ते प्रयान्ति प्रायः सेयं शङ्करस्यैव लीला ॥ ५२ ॥

अस्माकं वा नापराधो भवानी लीलानाट्यालोकनाय प्रवृत्ता ।
तस्याश्चित्तं किं पराधीनमम्बा नित्यानन्दा सर्वतन्त्रस्वतन्त्रा ॥ ५३ ॥

अत्रास्माकं विश्वनाथानुगानां वृत्त्या तावन्नापराधाभिमानः ।
वृत्तिर्येयं शङ्करस्यैव सेवा गौरीसेवाप्यत्र कुत्रापराधः ॥ ५४ ॥

अस्मद्भाग्यादागतोऽयं कुमारः तेनैवेयं नाट्यवार्ता गतैव ।
अंबा तावत् तत्कुमारस्य वार्ता श्रुत्वा तावद्यास्यति श्रीमहेशम् ॥ ५५ ॥

एवं तेऽपि परस्परं शिवकथावार्ता वदन्तः परं
प्राप्यानन्दमनन्तमिन्दुशकलालङ्कारवार्तारसैः ।
स्कन्दालोकनवन्दनादि विविधाचारोन्मुखास्ते सुखं
नन्दीशप्रमुखाः परस्परमुखाविर्भूतवागुन्मुखाः ॥ ५६ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे स्कन्दकृतशिवस्तुतिः, स्कन्दगणेशयोः पार्वतीं प्रत्यागमनस्य वर्णनं च नाम चतुर्दशोऽध्यायः ॥

— ❀ —

## अथ पञ्चदशोऽध्यायः ।

व्यासः —

ततः परमुमाकान्तं स्मृत्वा सा गिरिकन्यका । आनन्दामलधाराभिः आक्रान्ता प्राह तं सुतम् ॥
कुमार शङ्करः क्वास्ति शङ्करः कुशली खलु । अद्य दृष्टः किमीशानः [1]सर्वशोकभयङ्करः ॥ २ ॥
अद्यैव प्रेषितस्तेन महेशेन भवानपि । यद्वा पूर्वदिने यद्वा प्रेषितोऽसि दिनान्तरे ॥ ३ ॥
शङ्करायोपहारोऽपि केन वा परिकल्प्यते । केनानुलेपनादीनि दीयन्ते मोदहेतवः ॥ ४ ॥
केन कालापनयनं कालकालस्य तस्य वा । विलासनिलयाः के वा के वा तन्निलयालयाः ॥ ५ ॥
कुतः किं मद्विचारोऽपि क्वास्ति किं वा करोति सा । इति मद्विषया चिन्ता किं महेशस्य वर्तते ॥
इति गौरीवचः श्रुत्वा कुमारश्चतुरः परम् । धीरो गम्भीरवचनमुवाच विनयान्वितः ॥ ७ ॥

---

1 सर्वेशो लोकशङ्करः C.

कुमारः —

[1]चमत्कारकरं गौरि वचस्तव किमीदृशम् । वचनं वदनाम्भोजान्मरन्द इव निःसृतम् ॥ ८ ॥

शङ्करः शङ्करो नित्यं परमानन्दसागरः । महेशानन्दलेशेन सानन्दाः सामरा वयम् ॥ ९ ॥

सच्चिदानन्दरूपस्य महादेवस्य शांभवि । त्वया विज्ञायते रूपं ततः प्रश्नः कथं कृतः ॥ १० ॥

कल्पान्ते सकलामरप्रमथनं कृत्वा पुनः सादरं
सृष्ट्वाऽन्यानमरानपारमहिमा तान् पालयत्यम्बिके ।
कालस्यापि स काल एव स खलु ब्रह्मादिकान् संहरन्
अन्ते सन्ततमन्तरायरहितः शान्तः कृतान्तान्तकः ॥ ११ ॥

तस्यैश्वर्यमनन्तमप्रतिहतं तस्यैव तद्भूतयो
भूतानां निवहाः स मृत्युरहितो मृत्युञ्जयः सन्ततम् ।
अश्रान्तश्रुतिगीतकीर्तिरसकृत् विज्ञानमूर्तिः स्वतः
तद्वृत्तिः खलु शांभवोत्तममनःफुल्लारविन्दान्तरे ॥ १२ ॥

लोके पामरवृत्तयः कति सुराः संहारकाले हताः
तेनेशेन विहार एव स जगन्नाशो महेशस्य तु ।
ये नारायणपद्मजप्रभृतयः पारे परार्धं मुहुः
तस्याम्बाकुशलं कुतः कुशलिनामग्रेसरः शङ्करः ॥ १३ ॥

यत्पादाब्जरजःप्रसादविभवः स्वर्गः सुराराधितः
वैकुण्ठोऽपि तदन्यलोककलनायामः प्रयासोऽपि न ।
तस्यापारगुणार्णवस्य करुणासिन्धोः सुधार्घ्यर्पणं
दत्तंद्रतया परं कृतमिति ज्ञेयं भवानि त्वया ॥ १४ ॥

अन्यस्यास्ति न कृत्यमत्र गिरिजे जातु प्रजानां पतिः
जातस्तत्पदपद्मरेणुभिरयं जातोऽपि नारायणः ।
जाता सा कमला विधेश्च रमणी वाणी तथान्ये शिवे
जातस्तस्य महेश्वरस्य महिमा वेदैश्च न ज्ञायते ॥ १५ ॥

---

1 अत्र 'शङ्करः' 'सच्चिदानन्द' 'चमत्कारकरं' इति श्लोकक्रमविपर्यासः c कोशे ।

अज्ञानां परमिन्दुशेखरकृपाशून्यात्मनां जायते
तत्रान्यामरतुल्यतामतिरतिभ्रान्ता तदन्ताय सा ।
अन्तेनापि विना कृतान्त इव सा [1] तां वै दुरन्ता सता
सा तावन्न भवत्यनन्तमहिमा सोमावतंसः खलु ॥ १६ ॥

यं देवोत्तममामनन्ति बहुधा वेदाः परं यं परं
मायातीतमुमापतिं प्रभुममुं विश्वस्य विश्वस्य च ।
विश्वस्य त्रिपुरान्तकं त्रिनयनं वेदैर्मुनीन्द्रादयो
गन्धर्वा अपि किन्नरा अपि समे तातोऽस्य मातः शिवे ॥ १७ ॥

ये लिङ्गार्चनतत्पराः सकृदपि स्वाराज्यराजेश्वरं
धिक्कृत्यामरलोकनायकमपि श्रीकान्तमप्यन्ततः ।
स्वान्ते सन्ततमर्चयन्ति सुकृतैः पूताः कृतान्तान्तकं
तत्पादस्मरणेन तावदधुना धन्या वयं शैलजे ॥ १८ ॥

जायन्ते बहवः सुरा अपि नराः तेषां वरिष्ठं परं
मन्ये शांकरमेव शंकरपदन्यस्तप्रसूनं नरम् ।
तस्मादप्यधिको न कोऽपि गिरिजे राजाधिराजार्चितः
सोऽयं शाङ्कर इत्यवैमि मनसा सत्यं त्रिसत्यं पुनः ॥ १९ ॥

उत्पत्तिस्थितिनाशसाधनतया ख्यातो महेशस्ततः
तं त्यक्त्वा कमुपास्महे गिरिसुते दुग्धं सितासंयुतम् ।
प्राज्याज्येन समन्वितं मुखगतं त्यक्त्वा पुरीषोदकं
कः पातुं यतते सतां मतिरियं सा नासतां जायते ॥ २० ॥

[2] मन्ये दैवतदैवतं पशुपतिं मन्ये कृतान्तान्तकं
मन्ये देवशिखामणिं विधुलसत्खण्डावतंसं शिवम् ।
मन्ये दैवतसार्वभौममसकृन्मन्ये तदन्यं शिवे
कं मन्ये मनसाऽप्यनन्यमनसा मान्योऽपि मान्योऽस्ति कः ॥ २१ ॥

जायन्ते च पुनः पुनः पुनरमी नारायणेन्द्रादयः
ते तावद्गिरिजार्चनादरगृहद्वारोरुदण्डाहतिम् ।

---

1 तावद्दुरन्ता सतां c.   2 अयं श्लोकः c कोशे नास्ति ।

सोढ्वा मुण्डितमुण्डवत् जडधियो धिग्धिग्धिगित्यन्वहं
[1]जन्मेति प्रलपन्ति वेत्रनिहताः धावन्ति धावन्ति च ॥ २२ ॥

बन्दी सोऽहं शाङ्करे मन्दिरे मां वन्दित्वेन ख्या(पयन्तीह?) वेदाः।
तावन्नित्यं संवदन्तो वसन्ति स्वान्ते शान्ते शङ्करं पूजयामि ॥ २३ ॥

ब्रह्माण्डमण्डलविलोडनदण्डघातश्रान्ताश्चरन्ति कति ते शिवचिन्तकाः किम्।
तच्चिन्तने सति कृतान्तकृता न भीतिः श्रान्तिः कुतः क्व जनिदुर्दशयाऽभिभीति ॥ २४ ॥

प्राप्यापि जन्म मनुजत्वमुपेत्य मन्त्रब्राह्मण्यमेत्य समधीत्य च वेदविद्याम्।
मीमांसया सह ततः परमिन्दुमौलेः ध्यानं विहाय वसतः क्व गतिर्भवानि ॥ २५ ॥

किं रासभोऽपि मणिभारपरीतदेहः तद्भूषितो भवति तद्वदशांभवोऽपि।
विद्यामधीत्य यदि शाङ्करतां न याति तज्जन्म रासभसमानमिति स्मरामि ॥ २६ ॥

संसारे गिरिजामनोहरहरश्रीपादपद्मार्चनं
तल्लिङ्गार्चनमेव वा स्मरहरध्यानं क्षणं वा यदि।
दैवात् स्याद्गिरिजे तदेव सफलं जन्मेति मन्ये मुहुः
नो चेत् पातकपावकाकुलमहाज्वालाकुलो जायते ॥ २७ ॥

जायन्ते जननी[2]वयःपरशवः किं तैरनन्तैः फलं
यद्यश्रान्तमुमासहायचरणाम्भोजार्चनानादरः।
तर्हि स्यात्खलु नारकी नर इति स्वर्गापवर्गप्रदं
भर्गं कोऽपि भजत्यनन्यमनसा धन्यः स धन्याग्रणीः ॥ २८ ॥

तत्पादाम्बुजवन्दनेन सफलं जन्मेति मन्ये शिवे
यच्चित्तं क्षणमेव वा शिवरतं तद्ध्यानधारा यदि।
चित्ते तत्पदरेणुभिर्जगदिदं पूतं परं पावनं
सत्यं तस्य खलून्नतं कुलमतस्तत्सेवकान्नाधिकः ॥ २९ ॥

लोके शांभवपुङ्गवाः खलु खलध्वान्ताद्भुताहस्कराः
तत्पादाम्बुजरेणुमात्रममराः सर्वेऽपि वाञ्छन्त्यहो।

---

1 ये निन्दन्ति शिवं महेशममलं देवैस्तु संसेवितं सर्वज्ञं करुणालयं पशुपतिं वाचामसेव्यं विभुं इत्यर्धमधिकं c वन्दी सोऽहं इत्याद्यर्धं च नास्ति c 2 पयोरसरताः c।

तच्चेन्मूर्ध्नि तदा सदाशिवकृपा स्यादित्यवश्यं मुदा
कीटत्वं समुपेत्य शाङ्करगृहद्वारे [1]परं मोदते ॥ ३० ॥

धन्या तज्जननी पिताऽपि स महान् वंशोऽपि धन्यः परं
तद्भृत्योऽपि तदाश्रितोऽपि स महान् तच्चेटिका वाटिका ।
यच्चित्तं क्षणमात्रमप्यघहरे लिङ्गेऽपि वैश्वेश्वरे
संसारातुलतूलशैलविलयाङ्गारे स हारश्चिरम् ॥ ३१ ॥

यो नित्यं शिव एव दैवतमिति ज्ञात्वा तदर्चारतः
तं ध्यात्वापि विमुच्यते खलु जनिस्तद्दासदासान्वये ।
दैवाज्जन्म भवत्यदुर्लभमिदं नेत्याहुरत्यास्तिकाः
श्रुत्यर्थोऽपि तथाविधश्रुतिरिति व्यर्था न तत्प्रार्थना ॥ ३२ ॥

मन्ये दैवतदैवतं शिवमुमे वेदान्तवाक्यैरतः
तत्पूजानिरतं नमामि मनसा तद्दुर्लभं मेनिरे ।
गीर्वाणाः परमम्बिकापतिपदांभोजार्चनं दुर्लभं
तल्लिङ्गार्चनमप्यनन्तफलदं तद्दुर्लभं मेनिरे ॥ ३३ ॥

मानातीत इति श्रुतोऽपि महिमा माहेश्वरस्तं कथं
वेदो वेद न ते नयश्च विदितः ते शांभवो वेद तम् ।
ते वेदाः प्रणमन्ति वेदसहिताः तत्पूजया पूजितः
साक्षात्सांब इति श्रुतिश्रुतिशिरोरत्नं श्रुतं तन्मया ॥ ३४ ॥

पुण्यं जन्मनि जन्मनि प्रतिदिनं कल्पावसानावधि
प्राचीनामितयागदाननिचयाभ्यासानुबन्धं यदि ।
तस्मिन् सत्यपि शांभवोत्तमपदाम्भोजाश्रयो जायते
भक्तिर्भर्गपदाम्बुजे गिरिसुते सा दुर्लभा सर्वथा ॥ ३५ ॥

एकं सार्थकमित्यवैमि गिरिजे लोकेषु वेदेष्वपि
प्रख्यातं शिवलिङ्गपूजनमिदं सर्वात्मना दुर्लभम् ।
ज्ञात्वा दुर्लभमित्यपि प्रतिदिनं तत्पूजनायोद्यतो
धन्योऽतः शिवपूजकादपि परो धन्यः क्व वा भूतले ॥ ३६ ॥

---

1 चरम्त्र्यंबिके इति c d कोशयोः ।

लीलामानुषविग्रहः शिवरतः शैवः शिवः केवलं
तन्मन्ये शिवमेव तत्पदरजो मान्यं सुराणामपि ।
तद्देहः शिवमन्दिरं शिवरतः तस्मिन् सदा क्रीडति
व्यापारान्तरमन्तरा गिरिसुते त्यक्त्वाऽपि तन्मन्दिरम् ॥ ३७ ॥

ब्रह्मत्वादिकमानुषङ्गिकफलं मन्ये शिवाराधने
मुख्यं तस्य फलं किमप्यनुमितं श्रुत्यापि तत्सर्वथा ।
दुर्ज्ञेयं शिवरूपताफलमिति ज्ञेयं कथं वा मया
तस्यानुस्मरणेन तद्यदि तदा किं तत् फलं शैलजे ॥ ३८ ॥

एवं मे मतिरिन्दुशेखरपदांभोजार्चनादद्य मे
जाताऽपि स्थिरतामुपेत्य पुनरप्यभ्यासमार्गं गता ।
त्वत्पादाब्जविलोकनेन गिरिजे त्वं शङ्कराधाङ्गमि-
त्यम्बाहं तनयस्तवेत्यपि वरो देयो दृढाप्यस्त्विति ॥ ३९ ॥

अंबाहं गणनायकोऽपि गिरिशेनाद्याधुना प्रेषितः
सन्तुष्टस्त्वयि शंकरः शिवधनं त्वं तावदम्बाधुना ।
त्वय्येवास्ति मनः शिवस्य न शिवे चिन्तान्तरं जायते
मूर्तिस्ते शिवचेतसि स्फुरति सा दृष्टेयमत्युत्सवः ॥ ४० ॥

ध्यानारूढमहेशचेतसि शिवे त्वं नृत्यसि त्वां परं
मन्ये दैवतदैवतं किमितरत् ध्येयं महेशस्य वा ।
किं कृत्यान्तरमीश्वरस्य जगतां जन्मस्थितिध्वंसनं
त्वत्पादांगुलिचारणादिति शिवे कृत्यांतरं किं भवेत् ॥ ४१ ॥

प्रीतिर्या त्वयि शङ्करस्य गिरिजे सा तत्समानाऽपि वा
न क्वाऽपीति मतिर्ममास्ति शिववाग्व्यापारसारैर्मिता ।
सा तावन्न गणेश्वरेऽपि न मयि स्वस्मिन्नपि स्नेहभूः
त्वन्मूर्तिः परमित्यवैमि सकलानन्दप्रदानोन्मुखे ॥ ४२ ॥

इत्युक्तं गिरिराजराजतनया तद्वाक्यमाकर्ण्य सा
पीयूषप्रतिरूपमप्रतिममप्यास्वाद्य हृद्यं मुहुः ।

आलिङ्ग्यात्मजमादरादतिदृढा स्नेहाम्बुधारावृतं
चक्रे सा गणपं कुमारमसकृत् स्पृष्ट्वा कराभ्यां द्विजाः ॥ ४३ ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे कुमारगौरीसंवादे
शिवप्रेमरसवर्णनं नाम पञ्चदशोऽध्यायः ॥

—o—

## अथ षोडशोऽध्यायः ।

व्यासः —

ततः परं कुमारेण प्रणता गिरिकन्यका । गणेशेनापि विनता प्राह मन्दं विचक्षणा ॥ १ ॥
महेश्वरोदीरितया वाचा मद्विषये सुत । कथंभूता तत्स्वरूपं स्मृत्वा स्मृत्वा पुनर्वद ॥ २ ॥

श्रीकुमारः —

वन्दे सुन्दरमन्दारसुरजःपुञ्जपिञ्जरम् । सुरनारीशिरश्चारि गौरीचरणजं रजः ॥ ३ ॥
इत्युक्त्वा तत्पदाम्भोजं नत्वा मूर्ध्ना मुहुर्मुहुः । मधुराक्षरसंपूर्णां मधुरां गिरमाह च ॥ ४ ॥
गिरिजे शङ्करः प्राह मामाहूय दयानिधिः । गिरिजाचरणं द्रष्टुं प्रयाहीत्यब्रवीन्मुदा ॥ ५ ॥
तच्चित्तवृत्तिर्गिरिजे शरीरे रुचिरे चिरम् । अतिसुन्दरमित्यम्ब विलम्बं सहते स किम् ॥ ६ ॥
कुमार गिरिजा परं चिरमुदारहारादर सहारहरहारयोः किमपि नान्तरं पश्यति ।
विहाय विरहादहो हरहरामराधीश्वर स्मर स्मर हरेति मामिति करोति चिन्तां न किम् ॥ ७ ॥
एतस्मिन्नन्तरे काले जयां च विजयामपि । प्रेषयामास गिरिशस्तामपूर्वां शिवां प्रति ॥ ८ ॥
ताभ्यामागत्य सहसा नत्वा तच्चरणाम्बुजम् । कुमारमपि नत्वा तं स्थितं पार्श्वे मनोहरे ॥ ९ ॥
ततस्ताभ्यां समानीतान्यपाराभरणानि सः । दुकूलानि विचित्राणि फलान्यपि ददर्श सः ॥ १० ॥
ततः साभरणा देवी गौरी सत्वरमस्त्विति । निर्जगाम बहिर्द्वारं कुमारो गणपान्वितः ॥ ११ ॥
ततः परं नन्दिकेशप्रमुखाः शिवकिङ्कराः । नत्वा कृताञ्जलिपुटाः तुष्टुवुर्हृष्टमानसाः ॥ १२ ॥
स्तुत्वा ततः परं भक्त्या प्रणतान् पुनरादरात् । उवाच वचनं चारु कुमारः प्रीतमानसः ॥ १३ ॥
शङ्करालोकनोद्योगः कर्तव्यस्त्वरया त्वया । अतः परं विलम्बोऽपि न संभावित एव हि ॥ १४ ॥
सन्नद्धानि विमानानि भवन्त्यद्यामितान्यपि । मुक्तामालादिसङ्कीर्णान्यपाराण्यपि सत्वरम् ॥१५॥

अंबाविमानमानेयं परिष्कारः कृतो न वा । कामगस्य विमानस्य तस्य मुक्ताफलैरलम् ॥ १६ ॥
सुदुकूलपताकाश्च छत्राण्यपि सहस्रशः । विमानशिखरे सन्तु सन्त्वन्येष्वपि कोटिशः ॥ १७ ॥
सुमन्दारमरन्दानां धाराः सन्तु सहस्रशः । मन्दारमालानिकरैः आमूलाग्रविजृम्भितैः ॥ १८ ॥
सुकल्पतरुगुच्छानां छायया छन्नमस्तु तत् । तन्मण्डितं भवत्वाशु चन्द्रमण्डलमण्डितैः ॥ १९ ॥
तारातारामालिकाश्च सान्द्राः सन्तु सहस्रशः । विद्युद्दामार्बुदैरस्तु परिवीतं तदुन्नतम् ॥ २० ॥
इन्द्रनीलमणिच्छाया मध्ये मध्येऽनुवर्तताम् । रत्नसिंहासनैर्दिव्यैः अपारैर्वीतमस्तु तत् ॥ २१ ॥
तन्मध्ये मणिशोभाभिः घनीभूताभिरुन्नता । वेदिका [1]रचनीया सा परितस्तारकावृता ॥ २२ ॥
मध्ये सुधाकरकरप्रकरक्षालिता पुनः । वेदिका रत्नमालाभिः चित्रैरस्त्वावृता पुनः ॥ २३ ॥
तत्र सिंहासनं दिव्यं सुमेरुसदृशं श्रिया । रचनीयं मृदुतरं रत्नच्छायाभिरादरात् ॥ २४ ॥
विराजितं भवत्वेतदपारैश्चामरैरपि । रत्नसोपानमार्गाश्च तत्र सन्त्वाशु कोटिशः ॥ २५ ॥
उत्फुल्लकुसुमच्छन्नाः ते मार्गाः समरन्दपाः । भवन्तु सत्वरं तत्र मन्दवातः प्रवर्तताम् ॥ २६ ॥
सुमेरुतुङ्गशिखरप्रभाकूटजयोद्यतैः । तद्रत्नकलशैर्वीतमपारैरस्तु सत्वरम् ॥ २७ ॥
हरमन्दिरमार्गोऽपि स दुर्गो मास्तु भर्गतः । भीतिरस्तु स मार्गोऽतः छादितस्तु सुधाकरैः ॥
सुधाकरकरच्छाया छादितः पथि शङ्करः । [2]ते वनेन समायाति कदाचित् तं न विद्महे ॥ २९ ॥
मृदुलो गर्भमार्गश्चेत् स्वर्गस्यापि तिरस्क्रिया । भवत्यतः प्रवृत्तिश्च सुलभा सा सुखावहा ॥ ३० ॥
प्रपाश्च कोटिशः सन्तु सुधाधाराभिरध्वनि । रत्नमालापरिक्रान्ताः ते मार्गाः सन्तु कोटिशः ॥
मुक्ताजालपरिच्छन्नाः पुष्पासारसमावृताः । फुल्लैरप्यतुलैः पूर्णाः सन्तु मार्गाः सहस्रशः ॥ ३२ ॥
तरवो दूरतः सन्तु दिगन्तं यान्तु ते परम् । अत्युन्नताश्च कर्तव्याः कुसुमासारमण्टपाः ॥ ३३ ॥
तत्र नाट्याङ्गनाः सन्तु कोटिशोऽपि पदे पदे । सौन्दर्यधारासंक्रान्ताः ताः सर्वा नवयौवनाः ॥
पुष्पप्रासादरचनाविधेयाः सादरं पथि । प्रासादाः कोटिशः सन्तु सुपुष्पा मार्गपार्श्वयोः ॥ ३५ ॥
सुधाफलानि विमलान्यनन्तान्यपि तेष्वपि । सन्तु तेषु सुधाधाराः तटित्कुलसमावृताः ॥ ३६ ॥
रत्नमालाभूषिताश्च चन्द्रचारुकरावृताः । सर्वे नवत्वमापन्नाः सन्तु तावत्प्रतिक्षणम् ॥ ३७ ॥
तन्मार्गे रुद्रवीणानां रम्याणां सन्तु कोटयः । नखाघातं विना सर्वे मधुरस्वनसंवृताः ॥ ३८ ॥
शुकानां च पिकानां च कोटयः सन्तु सत्वरम् । मरालराजराजीनां राजीनामपि कोटयः ॥ ३९ ॥
सरांसि कोटयः सन्तु फुल्लराजीवराजिभिः । विराजितानि रजसा पिञ्जराण्यप्यनुक्षणम् ॥ ४० ॥

---

1 रत्नमालाभिश्चित्रैरस्त्वावृता पुनः c.    2 तद्वने न समायान्ति c.

विद्रुमाणां लताः सन्तु कोमलाः कोटिशः पथि । नाट्याङ्गनानुकरणं कृत्वा कृत्वा प्रतिक्षणम् ॥
तन्मार्गे पुष्पवेदीनां कोटयः सन्तु कोटयः । उत्फुल्लपुष्परूपाणां मन्दिराणामसंकुलाः ॥ ४२ ॥
एवं नियोगमासाद्य सुयशापतिरादरात् । प्रेषयामास स गणान् तत्तत्कार्यक्षमान् बहून् ॥ ४३ ॥
एतस्मिन्नन्तरे काले भृङ्गी शङ्करमन्दिरात् । समागतो विमानेन कम्पमानेन वायुना ॥ ४४ ॥
दूराद्विमानमालोक्य कुमारः कम्पमावहन् । नन्दिकेशमुवाचेदं वचनं तं विचक्षणः ॥ ४५ ॥

कुमारः —

नन्दिकेश शमस्माकं शतांशेनापि दुर्लभम् । ममाप्यागमने कालो भूयानेवाभवत् खलु ॥ ४६ ॥
तद्विमानं समायाति त्वरया कस्य तद्भवेत् । शङ्कराज्ञां त्वरां प्राप्य प्रायः कोऽपि समेति माम् ॥
इतस्त्वया विमानेन गन्तव्यमतिसत्वरम् । विचारोऽपि त्वया कार्यः तेनापि सह सादरम् ॥४८॥
न तेन सह वक्तव्यं निष्ठुरं चतुरं वचः । [1]न कर्मारुतानायोतो (?) मधुरं वद सादरम् ॥४९॥
मधुराक्षरवाणीनां पात्रं शङ्करकिङ्कराः । [2]तेन निष्ठुरमुक्त्वान्ते नरकं याति सत्वरम् ॥ ५० ॥
पुरा हिमगिरिप्रान्ते शङ्कराराधनोत्सुकः । शुकनामा मुनिर्जातः जन्मकोटितपःफलैः ॥ ५१ ॥
तत्र तुङ्गानि लिङ्गानि कोटिशः सन्ति तान्ययं । पूजयित्वा स्थितस्तत्र स्वकरार्जितसाधनैः ॥
नीहारधारालिङ्गेषु तेन तेषु प्रकल्पिता । मन्दारकुसुमासारैः पूजितानि प्रतिक्षणम् ॥ ५३ ॥
अर्कसंपर्कभीत्याऽपि सपुष्पपटमण्टपैः । लिङ्गमण्डलमाक्रान्तं चकार च मनोहरम् ॥ ५४ ॥
शङ्कराचारनिरतैः अपारैः शाङ्करैः वृतः । स पूजयति लिङ्गानि यामे यामे विशेषतः ॥ ५५ ॥
पूजयामास लिङ्गानि बिल्वकोमलपल्लवैः । विमलैरतुलैः काले काले जललवाकुलैः ॥ ५६ ॥
तारकाकर्षणं कृत्वा तारमालासमाकुलम् । शिवलिङ्गालयं चक्रे परितः परिशोभितम् ॥ ५७ ॥
अमन्दकुन्दमन्दाररजःपुञ्जैः [3]समुज्ज्वलम् । लिङ्गमूलं चकारासावनुवेलं स्वलीलया ॥ ५८ ॥
दिव्यान्नपर्वतैरेव नैवेद्यमतिसादरम् । संकल्पयति शुद्धात्मा तपसा परिकल्पितैः ॥ ५९ ॥
परमान्नप्रवाहाश्च शर्करागिरिसंयुताः । आज्यप्रवाहसंबन्धाः तेनेशाय प्रकल्पिताः ॥ ६०॥
वटकोदुम्बरादीनि पक्वान्नान्यपि कोटिशः । [4]शर्कराज्यसमेताश्च कल्पयामास सादरम् ॥ ६१ ॥
मधुक्षीरप्रवाहाश्च कल्पितास्तेन कोटिशः । सुधाप्रवाहास्तेनैव पानार्थमपि कल्पिताः ॥ ६२ ॥
एलालवङ्गकर्पूरखादिरादि समन्वितान् । ताम्बूलशैलविमलान् कल्पयामास कोटिशः ॥ ६३ ॥

---

1 न कर्णारुन्तुदं याहि c. 2 तेषु c, n. 3 समाकुलं c. समञ्जुलम् d.
4 शर्कराज्येत्यारभ्य कल्पयामास कोटिशः इत्यन्तं d. कोशे नास्ति ।

चन्दनानि सकर्पूरकस्तूरीसंयुतान्यपि । कल्पयामास तपसा इन्दुकल्पानि शम्भवे ॥ ६४ ॥
अपारपुष्पमालाभिः अतुलाभिरनेकधा । पूजयामास नियमात् तपसाऽप्रीणयत् शिवम् ॥ ६५ ॥
रत्नच्छत्रैश्चामरैश्च कोटिशः परिकल्पितैः । रत्ननीराजनैर्दिव्यैः चकार शिवपूजनम् ॥ ६६ ॥
तस्य तावत्कलत्राणामयुतं यौवनान्वितम् । तेनैव कल्पयामास नाट्यं कैलासमन्दिरे ॥ ६७ ॥
गानं च कारयामास रुद्रस्त्रीणाभिरादरात् । दुन्दुभिध्वनयस्तेन निर्मिताः स्वतपोबलात् ॥ ६८ ॥
तथा शिवरतस्तत्र रुद्राध्ययनतत्परः । हारशिष्यसमाक्रान्तः हारान् संपोषयंस्थितः ॥ ६९ ॥
हारनैवेद्यशेषेण हाराणामेव भोजनम् । कल्पयामास नियमात् स रसेन विशेषतः ॥ ७० ॥
विचित्राणि दुकूलानि शङ्करायार्पितान्यपि । हारेभ्यः प्रददौ भक्त्या [1] दिव्यान्याभरणान्यपि ॥
तानि दत्वा शांभवेभ्यो ददावन्यानि शंभवे । छत्राणि चामरादीनि नूतनानि दिने दिने ॥ ७२ ॥
कल्पयामास तपसा तत्फलं तदिहास्त्विति । विना न तपसा तावत् सामग्री तावती ततः ॥ ७३ ॥
तेनैव कल्पयामास शिवपूजनसाधनम् [2] । तेनार्चयित्वा देवेशं कृतकृत्यो भवेन्नरः ॥ ७४ ॥
तत्तपः फलितं तेन येन साधनमुत्तमम् । संपादितं महादेवपूजनाय प्रतिक्षणम् ॥ ७५ ॥
तपश्चेत् शिवपूजायां उपयुक्तं न तर्हि तत् । तपः किन्तु महारण्यशिलावृक्षादिरोदनम् ॥ ७६ ॥
तपसा प्राप्य भाग्यानि भाग्यवन्तः परात्परम् । शङ्करं पूजयन्त्यन्ये दुर्भगा एव केवलम् ॥७७॥
तपस्तावद्विधेयं स्यात् यावच्छङ्करपूजनम् । साधनं प्राप्तमेतेन न तत् स्यात्तदनन्तरम् ॥ ७८ ॥
शङ्करार्चनसामग्रीप्राप्तिस्तु तपसः फलम् । [3] फले प्राप्ते पुनस्तेन साधनेनालमित्यलम् ॥ ७९ ॥
न येन तपसा प्राप्तं शिवपूजनसाधनम् । न तत् तपः किन्तु तत्तु तन्तुवायविचेष्टितम् ॥ ८० ॥
तपसा प्राप्य सामग्रीं शङ्कराराधनस्य यः । स शङ्कराराधनेन मुक्तो भवति नान्यथा ॥ ८१ ॥
तद्भाग्यमन्यभाग्यं स्यात् येन नाराधितः शिवः । कृते शिवाराधने तु भाग्यं भाग्यत्वमाप्नुयात् ॥
भाग्यानामपि संवादः पुरा कोऽपि श्रुतो मया । स संवादः श्रुतः सद्यः परमानन्दसाधनम् ॥८३॥
भाग्याधिदेवताः सर्वाः सर्वाभिभाग्यसंयुताः । रत्नमण्टपमध्यस्थसिंहासनसमाश्रिताः ॥ ८४ ॥

---

1 अत्र — यदा यानि प्रदत्तानि दुकूलाभरणान्यपि । इत्यधिकः पाठः c.

2 इतः परं—
तेनार्चयित्वा देवेशं कृतकृत्यो भवेन्नर । तत्तपः फलितं तेन येन साधनमुत्तमम् ।
संपादितं महादेव पूजनाय प्रतिक्षणम् ॥
इति श्लोकोऽधिकः d. कोशे 3 इदमर्धं d. कोशे नास्ति ।

तत्रैका देवता प्राह सुन्दरं वचनं तदा । भवतामुपयोगोऽद्य कुत्र वा जायते फलम् ॥ ८५ ॥
किं ते महेशपूजायां उपयोगोऽधुना वद । वद त्वं च वद त्वं च वद त्वं च वदाशु मे ॥ ८६ ॥
अनृतं नैव वक्तव्यमिदं शङ्करमन्दिरम् । अत्रानृतप्रवादेन विनाशो भवति ध्रुवम् ॥ ८७ ॥
सत्यस्वरूपो भगवानुमाकान्तस्तथा सति । तत्सन्निधाने वक्तव्यं सत्यमेवातिसादरम् ॥ ८८ ॥
अन्यत्र यत्र कुत्रापि भवत्यनृतभाषणम् । फाललोचनदेशेषु सा वार्ता न शुभावहा ॥ ८९ ॥
असत्यरूपनिकटे भवत्वनृतभाषणम् । सत्यभूतमहेशानमन्दिरे तत्कथं भवेत् ॥ ९० ॥
शङ्करे सत्यभूतत्वसूतं सत्यमिति श्रुतिः । वदत्येव न चान्यस्य सत्यत्वं श्रुतिचोदितम् । ९१ ॥
सत्ये रमन्ते मुनयः सत्यं शङ्कर एव सः । तत्सन्निधाने त्वनृतं महापातकसन्निभम् ॥ ९२ ॥
शिवसन्निधिमाश्रित्य कृतं पुण्यं च पातकम् । अनन्तमिति निर्णीतमतः सत्यं वदाधुना ॥ ९३ ॥
इति तद्वचनं श्रुत्वा कापि भाग्याधिदेवता । सत्यमेवाह निपुणा कृत्वा शपथमीश्वरे ॥ ९४ ॥
यन्मन्दिरे निवासो मे स तावदतिशाम्भवः । तद्द्वारे मत्तमातङ्गकोटयः सन्ति सर्वदा ॥ ९५ ॥
तत्र तुङ्गतुरङ्गाणां कोटयः सन्ति सर्वदा । गोयूथकोटयः सन्ति महिषाणां च कोटयः ॥ ९६ ॥
विचित्ररत्नभाराणां कोटयस्तस्य मन्दिरे । सुमेरुतुल्यास्तद्गेहे तप्तकाञ्चनपर्वताः ॥ ९७ ॥
दिव्याम्बराशयः सन्ति कोटिशः कमलाननाः । नाट्याङ्गनाः कोटिशस्ताः सर्वाभरणभूषिताः ॥
सौन्दर्यधारा धीराऽपि नारीणां याऽनुवर्तते । तासां तद्वर्णनं तावत् कर्तुमेव न शक्यते ॥ ९९ ॥
एतावद्भाग्यमेतस्य पुत्राः सन्ति सहस्रशः । प्रवीणाः शिवविद्यायां शांभवा एव केवलम् ॥ १०० ॥
भृत्याश्च कोटिशः सन्ति ते तावदतिशांभवाः । दास्यश्च कोटिशः सन्ति ताः सर्वाः शिवतत्पराः ॥
प्रायः सुराङ्गना एव तद्दासीत्वमुपागताः । सदा कुर्वन्ति तत्सेवां शाङ्करामेसरस्य ताः ॥ १०२ ॥
भृत्यास्तेऽप्यमरा एव तद्भृत्यत्वमुपागताः । तत्सेवया महादेवः सन्तुष्टो भवतीत्यपि ॥ १०३ ॥
ऐरावतोऽपि रूपाणि धृत्वा तावत् स कोटिशः । तद्द्वारगजरूपेण तिष्ठतीत्यवगम्यते ॥ १०४ ॥
देवाश्चाप्यश्वरूपाणि धृत्वा तद्द्वारि कोटिशः । तत्तुरङ्गस्वरूपेण तिष्ठतीत्यवगम्यते ॥ १०५ ॥
तत्कलत्राणि रम्याणि तेनैव शिवमन्दिरे । नियोजितानि नाट्याय पूजान्ते प्रतिवासरम् ॥ १०६ ॥
नृत्यन्ति शिवलिङ्गाग्रे गानतानपुरस्सरम् । तत्कलत्राणि सोत्साहं नाट्यमभ्यस्य सत्वरम् ॥
पञ्चामृताभिषेकेण गव्यस्य विनियोजनम् । तद्गेहे रत्नलिङ्गानि बहूनि विविधान्यपि ॥ १०८ ॥
तत्पूजार्थं कोटिमात्रधनस्य स्याद्व्ययस्ततः । पूजान्ते तद्धनं तेन हरेभ्यो दीयते मुदा ॥ १०९ ॥
पर्वताकारपक्वान्नैः नानारसविजृम्भितैः । परमान्नैश्च नैवेद्यं तेनेशाय प्रदीयते ॥ ११० ॥

तत्सर्वं शिवभक्तेभ्यो दत्वा शिष्टं सुतैः सह । भुक्त्वावशिष्टं भार्याभ्यो दत्वा नृत्यति शाम्भवः ॥
रुद्राक्षमालाभरणो रुद्राक्षकवचान्वितः । रत्नलिङ्गार्चको नित्यं भूतिभूषितविग्रहः ॥ ११२ ॥
भूतिरुद्राक्षसहितो न तस्य नगरे नरः । अन्ततः पशवोऽप्यस्य भूतिरुद्राक्षभूषणाः ॥ ११३ ॥
एतादृशस्य सदने सर्वदा स्थीयते मया । न तद्गृहपरित्यागः सर्वथा रोचते मम ॥ ११४ ॥
[1]इति तद्वचनं श्रुत्वा तदन्या देवतास्ततः । लज्जानताननाः सर्वाः चुक्रुशुस्ताः परस्परम् ॥ ११५ ॥
अहो न तादृशं भाग्यं अस्माकमिति चिन्तया । अशैवभोगाय धनं जायते सर्वमित्यपि ॥ ११६ ॥
इयं भाग्यवती धन्या सभाग्या भाग्यदेवता । वसतिः शांभवागारे यस्मादस्याः सुखावहा ॥
अतः परं किलास्माभिः अशांभवगृहे स्थितिः । न कर्तव्या न कर्तव्या सर्वथाऽपीति निश्चितम् ॥
ततः परं तद्गृहाणां वार्तां त्यक्त्वा विशेषतः । ताः सर्वाः शाङ्करागारे वसतिं चक्रुरादरात् ॥
तथा हि सति भाग्यस्य भाग्यत्वमपि सर्वथा । शिवपूजानुकूलत्वं अन्यथा तत्कथं भवेत् ॥
अतस्तपःफलं भाग्यं तद्भाग्यस्यापि भाग्यता । शिवार्चनोपयुक्तत्वात् तद्भाग्यस्यापि तत्फलम् ॥
शिवपूजोपयुक्तत्वात् तरूणामपि वस्तुतः । मुक्तिरन्यस्य का वार्ता साक्षात् तदुपयोगिनाम् ॥
तादृशस्य शुकस्यापि शाङ्करस्य कदाचन । उक्तं निष्ठुरमेकेन स तावन्निरयं गतः ॥ १२३ ॥

एवं शङ्करपूजनस्य महिमा मानान्तरागोचरः
सोऽयं लोचनगोचरः कथमतो वाग्गोचरो वा कथम् ।
तस्मान्निष्ठुरभाषणैरलमलं श्रीकालकालार्चके
सत्यं यन्मधुराक्षरं तदधुना वक्तव्यमत्यादरात् ॥ १२४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे नन्दिकेश्वरकुमारसंवादे
शुकयोगीतिहासवर्णनं नाम षोडशोऽध्यायः ॥

—❀—

[1] 'इति तद्वचनं' इत्यारभ्य 'इति चिन्तया' इत्यन्तं d. कोशे नास्ति ।

# अथ सप्तदशोऽध्यायः ।

व्यासः —

इति तद्वचनं श्रुत्वा कुमारो नन्दिकेश्वरः । कृताञ्जलिपुटः प्राह विनयानतकन्धरः ॥ १ ॥

नन्दिकेश्वरः —

कुमार भगवन् केन तस्मै निष्ठुरभाषणम् । कृतं तन्निष्ठुरस्यापि स्वरूपं वद सादरम् ॥ २ ॥
तन्निष्ठुरोक्त्या तस्यापि जाता सा यातना कथम् । तत्सर्वमादरेणाद्य वक्तुमर्हसि षण्मुख ॥ ३ ॥
शिवतत्वज्ञवर्योऽसि शिवानुग्रहभाजनम् । ततस्त्वमधुना तावत् ततसर्वं वद सादरम् ॥ ४ ॥
इति तद्वचनं श्रुत्वा प्रहृष्टः षण्मुखस्ततः । प्रक्रान्तं पूर्ववृत्तान्तं वक्तुं सस्मार शङ्करम् ॥ ५ ॥

कुमारः —

शिवार्चकं शुकं दृष्ट्वा मुनिः कश्चित् तपोनिधिः । अम्बरीषकुलोत्पन्नो निष्ठुरं प्राह सत्वरम् ॥
भाग्यसंपादनेनास्य व्ययः स्यात् तपसः खलु । शिवार्चनेन किं कृत्यं तपश्चेनष्ट[1] मुत्तमम् ॥ ७ ॥
इत्युक्तं तद्वचः श्रुत्वा तमसंभाष्यमित्यपि । मत्वा शिवार्चनोद्योगं चकार पुनरादरात् ॥ ८ ॥
ततः स मुनिशार्दूलः फलमूलजलाशनः । मृतः सर्पेण सन्दष्टः कष्टेन व्याकुलोऽप्यभूत् ॥ ९ ॥
ततः परं कालदूताः कालेन समुपागताः । कुम्भीपाके पातनीयस्त्वरयेति विचक्षणाः ॥ १० ॥
तदा यमश्चित्रगुप्तं धर्माधर्मविचारकम् । प्राहानेन कृतं पापं किं किमित्यादरेण सः ॥ ११ ॥
इति तद्वचनं श्रुत्वा चित्रगुप्तो विचक्षणः । यमं प्राह विनीतः सन् कृताञ्जलिपुटो मुहुः ॥ १२ ॥

चित्रगुप्तः —

यमानेन कृतं पापं कल्पान्तेऽपि न नश्यति । महापातककोटीनां जनकं तत्पुनः पुनः ॥ १३ ॥
कया यातनया तस्य पापस्य स्याद्विनाशनम् । पुनः पुनर्वृद्धिमेव तत्प्रयाति प्रतिक्षणम् ॥ १४ ॥
ईदृशं पातकं लोके न भूतं न भविष्यति । न वर्ततेऽपि कुत्रापि नूनं ब्रह्माण्डमण्डले ॥ १५ ॥
तत्पापस्यानुवादोऽपि कर्तुमेव न शक्यते । यतस्तदनुवादेन प्रत्यवायः प्रजायते ॥ १६ ॥
विना तदनुवादेनाप्याकल्पान्तमयं यम । अघोरनरकावासं करोतु त्वरयाधुना ॥ १७ ॥
एतद्दर्शनमात्रेण यत्पापं समुपार्जितम् । तन्नाशाय प्रयत्नोऽपि कर्तव्यः खलु सत्वरम् ॥ १८ ॥

---

1 अद्भुतम् C.

नयन्तु दूताः सहसा शूलघातपुरस्परम् । तं पापिष्ठवरश्रेष्ठं मास्तु तस्य विलोकनम् ॥ १९ ॥

येन ज्ञात्वा प्रतिदिनं कृताः पातककोटयः । कल्पावसानपर्यन्तं सोऽपि मुक्तो भविष्यति ॥ २० ॥

महापातकराशीनां कल्पान्ते विलयो भवेत् । एतद्दर्शनजं पापं न लयं यास्यति ध्रुवम् ॥ २१ ॥

एतद्विलयनोपायः चिन्तनीयस्त्वया मम । इति तत्वं विचार्यादौ मर्यादां सुकृतस्य च ॥ २२ ॥

इत्युक्तं तद्वचः श्रुत्वा कालो व्याकुलमानसः । चिन्तयामास बहुधा खिन्नः खिन्नः प्रतिक्षणम् ॥

अतः परं किमस्माकं साधनं पापनाशने । किमर्थमागतं मोहात् दुरदृष्टस्य किं फलम् ॥ २४ ॥

प्रातःकाले मुखं दृष्ट्वा कस्य दुष्टस्य दुष्कृतम् । किमुपस्थितमस्माकं दुःखरूपफलोन्मुखम् ॥ २५ ॥

दुरदृष्टस्य महिमा [1]दुर्ज्ञेयः खलु वस्तुतः । अतः परं किमस्माभिः कर्तव्यमधुनाऽपि वा ॥ २६ ॥

विचार्य नागतं तस्मात् वृत्तो न शकुनोऽपि न । अस्मदागमने प्रायो नास्माभिः शङ्करः स्मृतः ॥

स्मृत्वा शङ्करमाराध्यममरप्रवरं वरम् । यो याति तस्य विजयः सुखान्यपि पदे पदे ॥ २८ ॥

शङ्कराराधनं कार्यं गमने समुपस्थिते । तद्दूरगमने तावत् अदूरगमनेऽपि वा ॥ २९ ॥

नानासाधनयुक्तोऽपि शङ्कराराधनं विना । तैः साधनैः फलं तावत् न प्राप्नोत्येव सर्वथा ॥३०॥

अलं बहुविधैर्यत्नैः अलमायासकोटिभिः । अलमन्यैरुपायैर्वा कालकालार्चनं विना ॥ ३१ ॥

साधनानां साधनत्वं संपादयति सत्वरम् । महेशाराधनं तेन विना तत्स्यादसाधनम् ॥ ३२ ॥

शङ्कराराधनं मुख्यं सर्वसाधनसाधनम् । तदेव सफलं मन्ये तदन्यद्विफलं खलु ॥ ३३ ॥

न जानन्त्येव मूढास्ते मुख्यं तु फलसाधनम् । शङ्करार्चनमेवेति वेदबाह्याः स्वभावतः ॥ ३४ ॥

कस्यचिद्भूरिपुण्यस्य शिवाराधनमेव मे । फलसाधनमित्येषा प्रमा भवति भाग्यतः ॥ ३५ ॥

शाङ्करा एव तत्वज्ञाः तेषामभ्युदयः सदा । शिवाराधनमात्रेण नान्यापेक्षा प्रजायते ॥ ३६ ॥

शक्तिः कल्पतरूणां या शक्तिः सुरगवामपि । ततोऽप्यनन्तगुणिता सा शिवाराधनस्य हि ॥

शङ्करार्चनसामर्थ्यं न कस्यापि जगत्त्रये । येन ब्रह्मत्वमाप्नोति विष्णुत्वं मुक्तिमन्ततः ॥

शिवार्चनरसः कोऽपि भूरिपुण्यस्य जायते । स रसो दुर्लभो लोके सुधारससमः स तु ॥ ३९ ॥

शङ्करानुग्रहादेव शिवाराधनधीर्भवेत् । सैव सूते फलं तावत् विमलं तदपेक्षितम् ॥ ४० ॥

शिवाराधनमेवैकं अभीष्टफलसाधनम् । तदन्यत् साधनाभासं तेन किं जायते फलम् ॥ ४१ ॥

पिपासोपशमो लोके कथं वा मृगतृष्णया । सा चेत् [2]तदा तदार्तस्य जलपानादिकक्रिया ॥

शुक्तिका रजतत्वेन ज्ञाता किं केनचित् क्वचित् । साधयत्यतियत्नेन कामिनीकरकङ्कणम् ॥ ४३ ॥

---

1 दुर्जयः c. 2 तदा न स्यात् d.

तस्माद्भ्रमास्पदं यावत् तावन्न फलसाधनम् । साधनत्वेन विज्ञातं फलं साधयति ध्रुवम् ॥ ४४ ॥
प्रमितं साधनत्वेन केवलं शिवपूजनम् । तेनैव सिद्धिरन्येन न सिद्धिरुपजायते ॥ ४५ ॥
तथा सति प्रसङ्गेनाप्यनायासेन साधितम् । शिवार्चनं फलं सूते नित्यं यद्यदपेक्षितम् ॥ ४६ ॥
अतः परं प्रयत्नोऽपि कर्तव्यः शिवपूजने । तेन तद्दर्शनोत्पन्नपापनाशो भविष्यति ॥ ४७ ॥
महाघगिरिसंघातवज्रमीशानपूजनम् । तेन तत्पापविलये भयशङ्का न जायते ॥ ४८ ॥
तावत्तापभयं भक्त्या यावन्नाराध्यते शिवः । तदाराधनमात्रेण दग्धाः पातककोटयः ॥ ४९ ॥
महापापशरीरस्य विपं शङ्करपूजनम् । तस्य तावत्तस्य नाशः सत्वरं खलु जायते ॥ ५० ॥
एतस्मिन्नन्तरे तत्र कश्चिदार्तस्वरः श्रुतः । ततः परं म्लानचित्तः त्वरया स ययौ यमः ॥ ५१ ॥
ततः परं तं विलोक्य भस्मोद्धूलितविग्रहम् । शिवलिङ्गार्चकं शुद्धं ददर्श मुनिपुङ्गवम् ॥ ५२ ॥
ततः प्रणम्य तं भक्त्या स कालोऽपि कृतांजलिः । तमुवाचातिविनयात् चित्रगुप्तेन संयुतः ॥
वनवासस्य सवने सवने सवने वने । वनेनापि महेशानं पूजयन्त्यत्र साधवः ॥ ५४ ॥
शिवलिङ्गं प्रयत्नेन वनेन वनजैरपि । वने संपूजयन् मर्त्यः स वने सुखमाप्नुयात् ॥ ५५ ॥
एवं चार्तस्वरः कोयं तव किं तत्र कारणम् । इदं वद विशेषेण मह्यमित्याह तं यमः ॥ ५६ ॥
ततः परमुवाचेदं वचनं तं यमं प्रति । मया पापरतो दृष्टः तेनार्तिरतुला मम ॥ ५७ ॥
शिवनिन्दा कृता तेन दुर्मुखं तन्मुखं खलु । तद्दर्शनेन पापानि मयि जातानि कोटिशः ॥ ५८ ॥
तदालोकनपापानि वृद्धिं यान्ति क्षणे क्षणे । अतः कथं विनाशः स्यात् तेषामिति विचिन्त्यते ॥
दैवात् त्वयाऽप्ययत्नेन स दृष्टः पापकृत्तमः । मया स एव दृष्टोऽतः तेन दुःखं प्रवर्धते ॥ ६० ॥
एतद्विनाशको धर्मो धर्मरूपेण किं त्वया । यद् ज्ञातं तद्वद प्रीत्या विचार्यादरपूर्वकम् ॥ ६१ ॥
इति तद्वचनं श्रुत्वा यमोऽपि विनयान्वितः । शुकाश्रमं ययौ तेन मुनिना सह सत्वरम् ॥ ६२ ॥
तं शुकं मुनिशार्दूलं कालकालार्चने रतम् । प्रणम्य दण्डवद्भूमावुवाच वचनं यमः ॥ ६३ ॥

यमः —

दृष्टः कश्चिन्महादुष्टो दुरदृष्टेन दूरतः । स शैवनिन्दकस्तेन पातकं तावदर्पितम् ॥ ६४ ॥
तद्दुष्टालोकनादेव मयाप्यघमुपार्जितम् । को वा तन्नाशकोपायः तन्मे वद शिवार्चक ॥ ६५ ॥
ततः सोऽपि शुकः प्राह दृष्टो यस्तु मया यम । त्वया दृष्टः स दुष्टोऽपि यतः स शिवनिन्दकः ॥
कृतं यद्यपि तेनात्र तपो घोरतरं परम् । तथाप्यशाङ्करो जातः तददृष्टं तथाविधम् ॥ ६७ ॥
किं घोरतपसा कृत्यं किमन्यैर्धर्मसञ्चयैः । शिवलिङ्गार्चने नित्यं विश्वासो यदि नादृतः ॥

अपारपुण्यनिधयो येन पुण्यैः समार्जिताः । तस्यैव तावद्विश्वासः शिवलिङ्गार्चने यतः ॥ ६९ ॥
कल्पावसानपर्यन्तं धर्मैश्चेत् दिनयापनम् । तदा कथञ्चिद्विश्वासो जायते शङ्करार्चने ॥ ७० ॥
सुलभं पुण्यपुञ्जानां श्रीमृत्युञ्जयपूजनम् । अन्येषां दुर्लभं तावत् तदेव शिवपूजनम् ॥ ७१ ॥
सुमेरुशिखरस्थानां चन्द्रेण सह संस्थितिः । पातालवासिनां सा तु दुर्लभा स्यात् तथा खलु ॥
अतः शिवाराधनेऽपि विघ्नाः संभावितास्ततः । तत्कार्यमप्रमादेन प्रमादे कुगतिर्भवेत् ॥ ७३ ॥
अशाङ्करागारनारीनरनीरावलोकने । निमील्य लोचने पश्चात् कुर्यात् सूर्यविलोकनम् ॥ ७४ ॥
अशाङ्करशरीराणि दृष्ट्वा नारकिणामिति । दृष्ट्वा भानुं विशिष्टश्चेत् दूरं भात्यपि धावति ॥ ७५ ॥
शिवनेत्रत्वबुद्ध्यैव कर्तव्यं भानुदर्शनम् । अन्यथा धीर्यदि तदा पुनर्नरकमश्नुते ॥ ७६ ॥
ततः परं भस्मनाङ्गं सम्यगुद्धूल्य सादरम् । हरलिङ्गार्चनं कार्यं कृत्वा मुक्तो भवेदघैः ॥ ७७ ॥
उद्धूलितं भस्मनाङ्गं नवमेवोपजायते । भस्म पापशरीराणां भस्मीकरणसाधनम् ॥ ७८ ॥
तत्पुण्यपरिपाकेन भस्माङ्गं उपयास्यति । तस्मादुद्धूलनेनान्यत् नवाङ्गमुपजायते ॥ ७९ ॥
प्रविष्टा रोमकूपेषु शरीरस्थेषु कोटिशः । लिङ्गानि जनयत्येव तदन्ते भूतिमुत्तमाम् ॥ ८० ॥
मन्ये लिङ्गमयं कायं विभूत्युद्धूलनान्मम । तदङ्गं चरलिङ्गं स्यादुत्तुङ्गं चेतनाश्रयम् ॥ ८१ ॥
अचेतनानि लिङ्गानि काश्मीरादीनि कोटिशः । सन्ति तत्पूजने तावत् न तावत् फलमश्नुते ॥
प्रत्यक्षेण विरूपाक्षशाम्भवाकारमाश्रितः । गृह्णाति फलमन्नं वा नीरं वा पुष्पमेव वा ॥ ८३ ॥
लिङ्गार्चकस्य महिमा तस्य लिङ्गार्चनस्य वा । वेदः कथञ्चिज्जानाति न विजानाति वा यमः ॥
शाङ्करात्रेसरस्याङ्गं विभूतिपरिवेष्टितम् । दृष्ट्वा भूतपतिस्तावत् नृत्यत्यम्बिकया सह ॥ ८५ ॥
अभूतपूर्वमेवेदं चरलिङ्गमिति श्रुतम् । शैवाङ्गमुत्तमाङ्गं तु तस्य लिङ्गमनुत्तमम् ॥ ८६ ॥
बाहुद्वयप्रसारेण लिङ्गाकारतया परम् । उत्तमाङ्गं दृश्यमानं तस्य लिङ्गमिति स्मृतम् ॥ ८७ ॥
अर्पितं चरलिङ्गेषु साक्षाद्भुक्तं महेश्वरः । ततः स्थावरलिङ्गेषु न तथा शिवसन्निधिः ॥ ८८ ॥
रत्नलिङ्गं श्रुतिप्रोक्तं रत्नं शाम्भवपुङ्गवः । अतस्तदात्मकं लिङ्गं लिङ्गोत्तममिति स्मृतम् ॥ ८९ ॥
यस्य शांभवलिङ्गेषु न भक्तिरुपजायते । तेन स्थावरलिङ्गेषु पूजा कार्या प्रयत्नतः ॥ ९० ॥
स्थावरस्यापि लिङ्गस्य पूजां कृत्वा ततः परम् । तदर्पितोपहारेण कर्तव्यं हारतोषणम् ॥ ९१ ॥
भुङ्क्ते हारसुखं प्राप्य सदारो हर इत्यपि । श्रुतिः श्रुता ततो हारं हारा हारोदरं विदुः ॥ ९२ ॥
हारमाहारमास्वाद्य हारोऽपि हरतामियात् । ततो हारो हरः साक्षात् तदा हारोदरं च सः ॥
येषां न हाररूपेण लिङ्गेषु न दृढा मतिः । तेनार्चनीयं तल्लिङ्गं स्थावरं गिरिगह्वरे ॥ ९४ ॥

हारान्तःकरणाकारगुहामाश्रित्य शङ्करः । तिष्ठतीत्यवगन्तव्यं सा गुहा वेदबोधिता ॥ ९५ ॥
तस्यां गुहायां संविष्टं अविकारमणं प्रभुम् । स्मृत्वा हर्षाश्रुधाराभिः धीरो हारोऽमृतो भवेत् ॥
यथाधिकारं लिङ्गार्चा कृत्वा पापैर्विमुच्यते । यथाविभवमेतस्य पूजा कार्या विशेषतः ॥ ९७ ॥
शिव एव यदा दृष्टः चिदानन्दघनस्तदा । तदर्चनपरो भूयात् न लिङ्गार्चनतत्परः ॥ ९८ ॥
शिवसन्निधिरित्येव लिङ्गपूजा विधीयते । स चेत् सन्निहितः साक्षात् कार्यं तस्यैव पूजनम् ॥
अतः प्रकृतपापस्य नाशायापि प्रयत्नतः । शिवलिङ्गार्चनं कार्यं तन्नाशस्तेन जायते ॥ १०० ॥
पापदावानलस्यायं शिवलिङ्गार्चनाम्बुदः । विनाशको भवत्येव सभाग्यानां भवेत्खलु ॥ १०१ ॥
अतः परं कालकालपूजया कालयापनम् । कर्तव्यं कालनिलयं कालकालं स्मरन् व्रज ॥ १०२ ॥
इत्युक्तं तद्वचः श्रुत्वा तत्कृतं लिङ्गपूजनम् । तत्साधनानि दृष्ट्वापि यमः प्राह शुकं प्रति ॥

यमः —

धन्योऽसि भाग्यवानेकः भवान् लोके शुकाधुना । सर्वलोकोपकाराय शिवपूजा तवेदृशी ॥
शिवपूजासाधनानां साधनं तपसां फलम् । एतावतैव तपसा सर्वेषां कृतकृत्यता ॥ १०५ ॥
त्वया जन्मार्जितानन्ततपोरूपेण केवलम् । लिङ्गार्चनं कृतमिदं सर्वसाधनसिद्धिदम् ॥ १०६ ॥
लोचनानां फलमिदं शिवलिङ्गविलोकनम् । अर्चितस्यास्य लिङ्गस्य दर्शनं तु विशेषतः ॥ १०७ ॥
शिवाराधनसामग्री दृष्टा सेयं मुहुर्मुहुः । तनोति परमानन्दं सेयमत्यद्भुता खलु ॥ १०८ ॥
न शिवार्चनसामग्रीप्रभावस्यापि वर्णनम् । अपाररसनाभिर्वा शक्यते कर्तुमेकदा ॥ १०९ ॥
कल्पिता रचना सेयं त्वया शङ्करमन्दिरे । अपारतपसामेव रचना फलमश्नुते ॥ ११० ॥
जन्म ते सफलं माता धन्या धन्यः पिता तव । शांभवस्य त्वया सङ्गात् धन्यं मामपि मन्महे ॥
भुवनेषु न कुत्रापि दृष्टः शांभवपुङ्गवः । एतादृशः शिवरतो दुर्लभः खलु सर्वदा ॥ ११२ ॥
धन्यं नेत्रयुगं धन्यं धन्यं मम करद्वयम् । शिवपूजनसामग्रीकरणालोकनादरात् ॥ ११३ ॥
एतादृशमहादेवपूजया परयाऽनया । फलं शङ्करपादाब्ज मकरन्दतया मतम् ॥ ११४ ॥
इत्युक्त्वा शङ्करं नत्वा स पुनः पुनरादरात् । शुकं नत्वा ययौ कालः चित्रगुप्तसमन्वितः ॥
यमः स्वनिलयं गत्वा दूतानाहूय तांस्ततः । शैवनिष्ठुरवक्तारं ताडयन्त्विति चाब्रवीत् ॥ ११६ ॥
तस्य न क्षणमात्रं वा नरकान्मास्तु निर्गमः । घोरेषु नरकेष्वेव स नित्यमपि तिष्ठतु ॥ ११७ ॥
स पापिष्ठः पाचनीयो भर्जनीयो निरन्तरम् । तर्जनीयः कशाघातैः अग्निकल्पैर्मुहुर्मुहुः ॥ ११८ ॥
इत्याज्ञाप्य यमः स्वस्थश्चित्रगुप्तेन संयुतः । लिङ्गार्चनोत्सवं स्मृत्वा शुकस्यातीव विस्मितः ॥

भुवि खलु शिवलिङ्गाराधका एव धन्याः निजहितधनधान्यैः शङ्करं पूजयन्तः ।
शिवजनपरिवीताः शर्ववार्ताप्रवृत्तिप्रकटितनिजपुण्याः पुण्यपूर्णार्णवास्ते ॥ १२० ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शुकयमसंवादे शिवनिन्दाप्रायश्चित्त
शैवजनमहिमानुकीर्तनं नाम सप्तदशोऽध्यायः ॥

— ❀ —

## अथाष्टादशोऽध्यायः ॥

व्यासः—

अतः शङ्करभक्तेषु न युक्तं निष्ठुरं वचः । सदा स्नेहेन वक्तव्यं विना तेन शनैः शनैः ॥ १ ॥
अतस्त्वयापि गत्वाऽग्रे नन्दिकेश्वर सादरम् । वक्तव्यं तेन सहसा मधुरा वागनुत्तमा ॥ २ ॥
इत्युक्तः प्रेषितस्तेन ययौ सत्वरमादरात् । रत्नपुष्पकमारुह्य गणकोटिसमावृतः ॥ ३ ॥
ततो दूरान्नन्दिकेशं भृङ्गी दृष्ट्वा प्रहृष्टधीः । प्रणम्य शिरसा भक्त्या पप्रच्छ कुशलं ततः ॥ ४ ॥

भृङ्गी —

अनन्तब्रह्मकल्पान्ताः [1]प्रथिताः सुयशापते । तथापि त्वरया तावत् नाभूद्गमनमादरात् ॥ ५ ॥
शङ्कराज्ञानुसारेण वर्तनं खलु दुर्लभम् । न शङ्कराज्ञा भवतो विलम्बकरणाय सा ॥ ६ ॥
नारायणाः समुत्पन्नाः कोटिशः पद्मजादयः । तथापि भवतां तावत् तत्कालकलनापि न ॥ ७ ॥
कालकालकृपा तावत् अधुनाप्यनुवर्तते । भवत्वेवं कृता पूजा भवद्भिः शङ्करस्य तु ॥ ८ ॥
आराधितः सावधानं गिरिराजसुताधवः । अतो न कालकालस्य कोपलेशो भवत्स्वपि ॥ ९ ॥
प्रभुकार्यार्थमुद्युक्तो विलम्बं किं करिष्यति । उग्रोऽप्यनुग्रो भगवान् भक्तेष्वेवमनुग्रहात् ॥ १० ॥
अनुग्रहेऽपि विज्ञातेऽप्येवं कार्यविलम्बनम् । नोचितं भृत्यकृत्यानि न विलम्बसहान्यपि ॥ ११ ॥
मृत्युञ्जयत्वात् तत्कार्यविलंबेपि न नः क्षतिः । मृत्युञ्जयस्य कृत्यं च न मृत्युमुपयास्यति ॥ १२ ॥
इति तद्वचनं श्रुत्वा नन्दिकेशः प्रहृष्टधीः । त्वया साधूक्तमित्युक्त्वा ददावालिङ्गनं पुनः ॥ १३ ॥
ततः परं स तरसा कुमारनिकटं ययौ । कुमारेण प्रेषितोऽहं इत्युदीर्य शिवं स्मरन् ॥ १४ ॥
विमानादवतीर्याथ नन्दी भृङ्गिसमन्वितः । ननाम दण्डवद्भक्त्या तमुवाच च षण्मुखः ॥ १५ ॥

1 प्रवृत्ताः c. प्रश्रिताः d.

षण्मुखः —

देवतासार्वभौमस्य महादेवस्य सेवकाः । यूयं कृतार्थाः पुण्यानां सागरा एव केवलम् ॥ १६ ॥

किं करोति महादेवः तस्मिन् [1]सिंहासनेन वै । [2]प्रवृद्धिमानेव सति किं वा रत्नप्रभालये ॥ १७ ॥

किमेकरत्नभवने योजनार्बुदमुन्नते । किं नीलरत्नसदने योजनायुतमुन्नते ॥ १८ ॥

हीरागारेऽतिरुचिरे लक्षयोजनमुन्नते । स मुक्ताफलसौधे वा गिरिराजसुताधवः ॥ १९ ॥

किं पद्मरागभवने नानारत्नविचित्रिते । यद्वा गोमेधकागारे शंखयोजनमुन्नते ॥ २० ॥

पुष्परागस्य सदने यद्वा मारकते गृहे । शंखलक्षोन्नते यद्वा शिवोऽन्यत्राधितिष्ठति ॥ २१ ॥

मरन्दकुल्यानिकरे यानि लिङ्गानि कोटिशः । पूजितानि विचित्राणि तेषु क्रीडति किं मृडः ॥

यद्वा क्रीडति विश्वात्मा चन्द्रमण्डलमण्डपे । विद्युद्दामसमाकीर्णे ताराराजिविराजिते ॥ २३ ॥

मन्दारकुसुमासारमण्डपेषु चरत्युत । तुङ्गभृङ्गाङ्गनानाद्यं पश्यन् गौरीमनुस्मरन् ॥ २४ ॥

यद्वा कुसुमसौधेषु तत्प्रासादेषु वा शिवः । यद्वा साधु सुधाकुल्यातीरे चरति शङ्करः ॥ २५ ॥

इति तद्वचनं श्रुत्वा भृङ्गी विनयसंयुतः । उवाच मधुरां वाणीं वाणीवाणीशदुर्लभाम् ॥ २६ ॥

मन्दारपुष्पशयनैः अनन्तैरपि संवृते । अत्युच्चकुसुमासारप्रासादेषु हरः स्थितः ॥ २७ ॥

तत्र स्थित्वा समाहूय मामादरपुरःसरम् । प्रेषयामास भगवान् कुमार तव सन्निधिम् ॥ २८ ॥

धन्योऽस्मि त्वत्पदाम्भोजं दृष्टमद्य यतोऽधुना । अतः परं प्रयाणाय कुरु यत्नं विशेषतः ॥ २९ ॥

महादेवपदाम्भोजविलोकनमहोत्सवः । सत्वरं भवतु स्वामिन् तद्विलम्बे शुभं कथम् ॥ ३० ॥

इति संभाषणैर्भृङ्गी कुमारमभिनन्दयन् । कुमारोक्तां शिवकथां शृण्वन्नादरतः स्थितः ॥ ३१ ॥

अम्बा विजयया साकं जयया सेविता मुदा । प्राह स्मेरमुखाम्भोजरुचिरा चिरमादरात् ॥ ३२ ॥

गौरी —

हरः स्मरारिः स्मरतीति चित्रं स्वतः सुखासारसमावृतोऽपि ।
अपारमानन्दमपि प्रयच्छन् आन्दोलयन्मन्द[3]मिवासनौ (?) मे ॥ ३३ ॥

गौरी हारविहारोरुविलासालसतां कदा । प्रयास्यतीति विजया हराकारं जगौ मुहुः ॥ ३४ ॥

भृङ्गी —

अम्ब त्वामेव सततं चिन्तयित्वा पुनः पुनः । त्वन्मूर्तिमात्रध्यानेन कालं नयति शङ्करः ॥ ३५ ॥

---

1 सिंहासने नवे c. 2 प्रवृद्धमाने वसति c, d. 3 मिदं मनो मे c.

सुन्दराण्यरविन्दानि सौवर्णानि विलोकयन्। करोति निन्दामेतेषु सौन्दर्यं धिक् धिगित्यपि॥
दृष्टं गौरीमुखाम्भोजसौन्दर्यमतिशोभनम्। तत्कोट्यंशोऽपि नात्रेति सृष्टिर्व्यर्थेति मन्यते॥ ३७॥
स संपूर्णशरद्राकासुधाकरविलोकनम्। न चकार कलङ्कीति मत्वा स्मृत्वा त्वदाननम्॥ ३८॥
न ददर्श महादेवः शफरीपरिवर्तनम्। त्वन्नेत्र[1] संभ्रमं स्मृत्वा नीलिमानं विलोकयन्॥ ३९॥
कोमला विद्रुमलता पद्मरागप्रभान्विता। [2]नन्दिता तेन ते गौरि सुन्दराधरचिन्तनात्॥ ४०॥
फुल्लं तिलप्रसूनं वा तेन नालोकितं शिवे। नासापुटतटं स्मृत्वा शिवेनादरपूर्वकम्॥ ४१॥
खण्डनीलालिमालापि तेन नालोकिता शिवे। रुचिरान् चिकुरान् स्मृत्वा धम्मिल्लमपि शोभनम्॥
सुमेरुगिरिकूटाश्च गिरयस्तेन नेक्षिताः। त्वत्कुचस्मरणेनैव तत्सौन्दर्यविनिन्दया॥ ४३॥
मरन्दावर्तवार्तापि न कृता तेन शैलजे। गम्भीरनाभिस्मरणात् कदापि गिरिकन्यका॥ ४४॥
न हेमरम्भास्तम्भानां सौन्दर्यमपि वीक्षितम्। त्वदूरुभागसौन्दर्यस्मरणेन प्रतिक्षणम्॥ ४५॥
न कोकनदसौन्दर्यं दृष्टं तेन शिवप्रिये। पादारविन्दस्मरणे महादेवेन ते मुहुः॥ ४६॥
न कृतं तेन गिरिजे तारहारावलोकनम्। त्वदुरोजातरुचिरहारानुस्मरणे सति॥ ४७॥
मरन्दयानां दूरेण स्थितिमिच्छति शङ्करः। पिकालापांश्च हुङ्कारान् न शृणोति विनिन्दति॥ ४८॥
अम्लानपुष्पशय्यानां न करोति विलोकनम्। नास्वादितो रसस्तेन सुधायाः सर्वदाम्बिके॥
उन्मत्तराजहंसानां गमनं स विनिन्दति। वरटानां सगर्भाणां स्मृत्वा त्वत्पदचालनम्॥ ५०॥
मध्यं स्मृत्वा तवाम्बाद्य सिंहमध्यं विनिन्दति। अणूनां परिमाणस्य निन्दामपि चकार सः॥
सुमेरुसानुसौन्दर्यनिन्दकोऽपि स धूर्जटिः। स्मृत्वा कटितटं तिष्ठत्यम्ब तेन विडम्बना॥ ५२॥

नीहारतल्पमधितिष्ठति चन्द्रमौलिः मारज्वरानलविदाहविनाशनाय।
तत्सङ्गमेन गिरिजे तदभूदसह्यत् दावानलप्रतिममप्रतिमं भवानि॥ ५३॥

कुन्दोच्चयेषु शयनं न चकार गौरि मन्दारमाल्यनिवहेष्वपि कालकालः।
दूरीकरोति विधुमण्डलचारुशय्याः चण्डांशुमण्डलधिया गिरिजे धवस्ते॥ ५४॥

उत्कण्ठयापि मदकुण्ठितनीलकण्ठनाट्यावलोकनमशेषविशेषचिन्ताम्।
कुर्वन् गिरीन्द्रतनये न चकार धीरो मारारिरद्य तु विशेषत एव नूनम्॥ ५५॥

कर्पूरगौरमभवद्गिरिजे शरीरं किं शङ्करस्य रुचिरं न सुमेरुचारु।
कार्श्यं च तावदधुना तनुरेति शम्भो सा किं तनुर्न भवतीति न मा वदाद्य॥

---

1 त्वन्नेत्रसंभवं इति C. 2 नादृता तेनेति युक्तः पाठः। निन्दिता C.

ये कल्पिताः परिमिता अपि लीलयाद्य लीलाविहारनिलयाः कमलालयास्ते ।
दूरीकृताश्च तरसा विलयं प्रपन्नाः किं शैलराजतनये वदति त्रिनेत्रः ॥ ५७ ॥

मन्दारसुन्दरविनोदमरन्दसौधभृङ्गाङ्गनाङ्गमपि शङ्कविलोकनार्हम् ।
अङ्गारकल्पमभवद्गिरिराजकन्ये धन्ये तवैव विरहेण महेश्वरस्य ॥ ५८ ॥

नारीविशेषरचनाचतुरैश्चिरं ते स्मृत्वा शरीरमगराजसुते महेशः ।
दूरीकरोति तरसा रचनां चकोरः कांजीमिव प्रतिदिनं स्मृतचारुचन्द्रः ॥ ५९ ॥

पूर्वं विधाय विधुमण्डलमण्डपानि गौरीविनोदमदवर्धनसाधनानि ।
तानीति ते न गिरिजाविरहे वृथेति दूरीकृतानि गिरिशेन गिरीन्द्रकन्ये ॥ ६० ॥

यद्यन्मनोहरवरं गिरिशेन सृष्टं तत्सर्वमद्य गिरिजागमनं विना मे ।
कृत्यं न दृष्टमपि दुष्टतमत्वशङ्कां कृत्वाधितिष्ठति स निष्ठुरकष्टबुद्ध्या ॥ ६१ ॥

अद्यापि शङ्करविहारविचारलेशः किं ते गिरीशतनये कमनीयमूर्तिः ।
किं न स्मृतः श्रवणमङ्गलपुण्यकीर्तिः भाग्यप्रदानविनिवारितपातकार्तिः ॥ ६२ ॥

यत्पादुकास्मरणमात्रममङ्गलानि दूरीकरोति शतधापि सहस्रधापि ।
पश्चात्तनोति विविधान्यपि मङ्गलानि तत्पादुकास्मरणमाशु शुभावहं ते ॥ ६३ ॥

धन्याऽसि देवि गिरिजे गिरिशप्रसादसौन्दर्यपात्रमपि चित्रमिदं तवेदम् ।
गात्रं पवित्रमिदमत्र कथं त्रिनेत्रसेवाख्यमन्त्रवरदीक्षितमस्तु शस्तम् ॥ ६४ ॥

कल्याणरूपसुगुणार्णवमिन्दुमौलिं तूर्णं विलोकय परात्परमन्नपूर्णे ।
अभ्यर्णमेत्य वरवर्णिनि वर्णनीयं सम्पूर्णकाममपराजितमेहि भद्रे ॥ ६५ ॥

अङ्गश्रिया कनकचम्पककान्तिधारा दूरीकृता तव तया फलमस्ति किं ते ।
यद्यद्य शङ्करविहारवरानुकूला न स्यात् तदा गिरिसुते विफला न किं सा ॥ ६६ ॥

राधासुधाकरमनोहरबिम्बमम्ब तन्नन्दनं वदनमद्य करोति ते वै ।
किं तेन वा फलमनुक्षणमिन्दुमौलिलीलाविनोदमधुरस्मितवर्जितं चेत् ॥ ६७ ॥

नीलोत्पलामलविशालदलश्रियाऽपि [1]दूरीकृतं तव विलोचनधाम धारा ।
दृष्टेत्यदृष्टपरिपाकविचिन्तनेन तद्गौरि शङ्करविनोदमुदे कदा स्यात् ॥ ६८ ॥

नीलाचलालिकुलकान्तिविशेषपूरं दूरीकरोति चिकुरप्रचुरप्रभा ते ।
एषा त्रिलोचनविलोचनगोचरा चेत् गौरि प्रमोदजननी जननि स्वतः स्यात् ॥ ६९ ॥

---

1 दूरे गतं ६.

धीरे सुमेरुशिखरातिमनोहरश्रीः दूरं प्रयाति विपुलं कुचमण्डले ते ।
दृष्ट्वा तदेतदधुनाप्यगजे गिरीशाद्दृष्टं प्रकृष्टमतिपुष्टिमुपैति हृष्टम् ॥ ७० ॥

रोमावलित्रिवलिसंवलिता तनोति कामध्वजश्रियमियं गिरिजे पिधेहि ।
एषा स्मृताऽपि मदनज्वरभूरिधारां संपादयिष्यति हराय चिराय मायाम् ॥ ७१ ॥

त्वत्पादपद्ममतिसुन्दरविद्रुमाद्रिमुद्राद्रवश्रियमिदं न तिरस्करोति ।
तुच्छस्य तस्य न तिरस्क्रियया फलं स्यात् इत्येव शम्बरहरारि मनोहरं ते ॥ ७२ ॥

संपूर्णदोहदमदान्धमरालकान्ता मत्तेभदारगमनानि तिरस्करोति ।
त्वत्पादपद्मचलनं नवचन्द्रमौलिलीलारसास्पदमिदं न मुदं तनोति ॥ ७३ ॥

अम्बाऽधुना घनमिदं जघनं तवेदं नूनं नदीसुपुलिनं मलिनं करोति ।
उत्तप्तकाञ्चनविशेषितकाञ्चिकाङ्कं किं जातमस्य किमियं तु न रक्षणाय ॥ ७४ ॥

आवर्तवृत्तिरपि या सरितां सदा सा त्वन्नाभिदेशसुषमाश्रयणेन लज्जा ।
किं नाम्बुमज्जनविलीनबलाकुलानां हानिप्रवृद्धसुकलानवलोकनेन ॥ ७५ ॥

किं गौरी विषमेक्षणं क्षणमपि ज्ञात्वैव नायाति मां
यद्वा साऽतिविशालफालविपुलज्वालानलव्याकुलम् ।
यद्वा सन्निहितं त्रिशूलमथवा मां कालकूटाशनं
गौरं मामुरुदर्पसर्पवलयं पञ्चास्यसंहारकम् ॥ ७६ ॥

समा दृष्टिस्तस्याः कुटिलचटुलालोलनलवात् भवित्री फालाग्निं विषमपि सशूलं हरति किम् ।
न सव्यालां बाला मदनशरमालातिविमला विशालां नीलाम्बा किमिति न मुदा पश्यति मुहुः ॥

अम्बा शम्बरवैरिवैरिरुचिरं व्याहारसारादरा धीराप्यस्त्रविकारसारसरमा सारापहारैररम् ।
सा रेजे विकलङ्कसुन्दरशरद्राकानिशानायकालोकालोकनशोकनाशनकरं सस्मार हारं चिरम् । ७८॥

लीलाकल्पितकल्पभूरुहवरापारान्तरालस्फुरद्रत्नाकारसुमैरधीररुचिराकारागकाराकरे ।
धीरे मारशरातिसुन्दरसरस्तीरे विहारं चिरं वारं वारमरं विहारमकरं गौरि स्मरारेः परम् ॥

सौन्दर्यामरवाहिनीतरलिमा भूमा भवानीति यः
प्रेमा सोमकलावतंसमहिमा स्थेमा स संवर्धताम् ।
तस्यैव प्रथिमा तथैव लघिमा तस्यास्त्वयं द्राघिमा
तस्यायं महिमा तथा मधुरिमा सीमान्वितं तेजमः ॥ ८० ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे गौरीविजयासंवादो नामाष्टादशोऽध्यायः ॥

# अथ एकोनविंशोऽध्यायः ।

व्यासः —

इति तां विजया वाणीं साक्षाद्वीणामिव स्थिताम् । शुश्राव श्रवणानन्दधारामिव मनोहराम् ॥
ततः परं दुकूलानि सृष्टानि गिरिशेन सा । प्रकृष्टानि विलोक्याम्बा चन्द्रबिंबानना बभौ ॥ २ ॥
परिधाय ततो धीरा वसनानि सवासनम् । शनैर्विलोक्य वसनं कमनीयतरं शिवा ॥ ३ ॥
धम्मिल्लस्य परिष्कारं सीमन्तस्यापि सा नखैः । चकार गौरी त्वरया रत्नाभरणभूषिता ॥ ४ ॥
ततः परं विचित्रेषु रत्नपात्रेषु कोटिशः । पक्वान्नानि विधायाम्बा बुभुजे ससुता सती ॥ ५ ॥
ततस्ताम्बूलमादाय जयया च विजयया । दत्तं भवानी रुरुचे चिरमानन्दवाहिनी ॥ ६ ॥
हारोपहारशेषान्नं प्रेषयामास शैलजा । गणेभ्यस्ते गणाधीशाः पुष्टास्तुष्टाः ततः परम् ॥ ७ ॥
देवदुन्दुभयो नेदुः तूर्यध्वनिविजृम्भिताः । शङ्खदुन्दुभिनिर्घोषैः व्याप्तं शङ्करमन्दिरम् ॥ ८ ॥
अपूर्वं दुन्दुभिध्यानं ध्यानारूढोऽपि शङ्करः । दिव्याभरणसङ्कीर्णस्फुरत्कर्णपुटैः पपौ ॥ ९ ॥
ततः कोऽयमपूर्वोऽत्र दुन्दुभिध्वनिरित्यपि । मृडस्तुण्डिं समाहूय बाढमूचे वचस्तदा ॥ १० ॥
कोऽयं डिण्डीरवस्तुण्डे मण्डनं कर्णमण्डले । गौरी प्रायः समायाति न वा तत्त्वं विचारय ॥
इत्युक्तो दण्डवद्भूमौ तुण्डी नत्वा मृडं ततः । विमानरत्नमारुह्य स ययौ त्वरया द्विजाः ॥
तद्विमानं तदा गौरी दूराल्लोचनगोचरम् । चकार तरसा धीरा किमेतदिति विस्मिता ॥ १३ ॥
अत्यद्भुतं विलोक्याम्बा तद्विमानं मनोहरम् । सादरं हारमित्येव हृष्टा पुष्टा प्रहृष्टधीः ॥ १४ ॥
ततः कुमारमाहूय कस्येदं पुष्पकं शिशो । इदं हारमुदारं किं तरसा तद्विचारय ॥ १५ ॥
ततः कुमारस्तं दृष्ट्वा हारं ध्वजविवर्जितम् । न हारं हरसम्बन्धीत्युवाच वचनं च सः ॥ १६ ॥
ततो बहिर्गतः स्कन्दः तद्विचाराय सादरम् । ततः सत्वरमेवात्र स तुण्डी समुपागतः ॥ १७ ॥
स नत्वा दण्डवद्भक्त्या कुमारं नतकन्धरः । विलम्बो नाम्बिकाकान्तहितायेत्यब्रवीद्वचः ॥ १८ ॥
ततः कुमारस्त्वरया गौरीचरणपङ्कजम् । नत्वा चलाचलसुते त्वरयेत्यब्रवीन्मुदा ॥ १९ ॥
अयं तुण्डी प्रचण्डोऽस्मावुद्दण्डगणपाश्रयः । तद्दोर्दण्डबलेनैव भ्रान्तं भूमण्डलं पुरा ॥ २० ॥
त्वरया प्रेषितः सोऽपि शङ्करेण समागतः । अतः परमवस्थानमत्राप्यनुचितं शिवे ॥ २१ ॥
विमानं रत्नसन्नद्धं तव तद्धि मनोहरम् । तवारोहणमात्रेणाप्यानन्दो वृद्धिमेष्यति ॥ २२ ॥

इति तद्वचनं श्रुत्वा विमानरचनां शिवा । दृष्ट्वा प्रहृष्टा सजया तया विजयया [1] सह ॥ २३ ॥
तदारुह्य ततो गौरी विमानमतिशोभनम् । नाट्याङ्गनार्बुदयुता गानं शुश्राव तत्कृतम् ॥ २४ ॥
ततः कुमारे चलति तेन तेन गणैः सह । दुन्दुभिध्वनिसंपूर्णं पुनः शङ्करमन्दिरम् ॥ २५ ॥
परार्धयोजनायामे याने स्थित्वा गिरीन्द्रजा । पुनर्विस्मयमापन्नाप्यापन्नार्तिविनाशिनी ॥ २६ ॥
विद्युल्लतासमानानि वेत्राण्यत्युत्तमानि च । अपाराणि ददर्शाम्बा गणहस्तस्थितानि सा ॥ २७ ॥
बभूव कुसुमासारो मन्दमारुतसंयुतः । सुगन्धपुष्परजसामासारोऽपि ततः परम् ॥ २८ ॥
सा पुष्पमण्टपच्छायाप्रच्छन्ने पुष्पके स्थिता । रराज गौरी राजीवराजिराजिविराजिते ॥ २९ ॥
पुष्पप्रासादशृङ्गाणि पश्यन्ती सा पुनः पुनः । नाट्याङ्गनानतपदा मन्दं मन्दं ययौ शिवा ॥
मन्दमारुतपोतेन केतकीसंयुतेन सा । सेविता सा सुतौ दृष्ट्वा सस्मेराऽपि पुनः पुनः ॥ ३१ ॥
उत्फुल्लकमलाक्रान्ता सरांसि विपुलानि सा । रत्नसोपानकल्लोलसंकुलानि ददर्श सा ॥ ३२ ॥
तत्रापूर्वमरालानां वरटानां च कोटयः । हृष्टाः प्रहृष्टाः पुष्टाङ्गाः शिपिविष्टप्रियाः परम् ॥ ३३ ॥
शुकान् पिकांश्चकोरांश्च भ्रमरानपि कोटिशः । सुस्वरान् पुष्पमालासु निबिडासु मनोहरान् ॥
रुद्रवीणासहस्राणि दृष्ट्वा सा प्रतिमण्टपम् । स्वतः स्वनयुतान्यम्बा विस्मयं परमं ययौ ॥ ३५ ॥
सुधाप्रपानविश्रान्ता पश्यन्ती पुष्पमन्दिरम् । पदे पदे प्रकृष्टानि फलान्यास्वाद्य सा ययौ ॥ ३६ ॥
[2] तत्तत्कूटकुटीराणि ददर्श गिरिजा ततः । प्रतिक्षणं पुष्पवृष्टिं दृष्ट्वा हृष्टा च नूतनाम् ॥ ३७ ॥
तां तद्विलोकनानन्दधारा मन्दगतिः शिवाम् । दृष्ट्वा तुष्टाव तुष्टात्मा तदा गणगणो मुदा ॥
जयाम्ब जय शर्वाणि जय गौरि शिवप्रिये । जयान्नपूर्णे विमले कालकालप्रियेऽनघे ॥ ३९ ॥
जय शैलसुते देवि कमलामललोचने । जयामराङ्गनाराध्ये जय कल्याणि शांभवि ॥ ४० ॥
जय मङ्गलसर्वाङ्गि मङ्गले सर्वमङ्गले । जय मृत्युञ्जयार्धाङ्गि तुङ्गसिंहासनाश्रये ॥ ४१ ॥
जय भक्तजनानन्दप्रदाननियतव्रते । जय दुर्गे विशालाक्षि जय त्रिपुरभैरवि ॥ ४२ ॥
जय वागीश्वरि प्राज्ञे मङ्गले गौरि चण्डिके । चित्रघण्टे जयानङ्गविजयध्वजमालिके ॥ ४३ ॥
जय [3] श्रीत्रिकटा गौरि सिद्धेश्वरि नमो नमः । नमस्ते सङ्कटागौरि शीतलागौरि ते नमः ॥४४॥
बन्दिदेवि नमस्तुभ्यं ललिते विश्वबाहुके । चन्दलाम्ब नमस्तुभ्यं नमस्ते भ्रमराम्बिके ॥ ४५ ॥

ज्ञानप्रसूनाम्ब नमो नमस्ते नमो नमस्ते शिवकामसुन्दरि ।
नमो नमस्तेऽस्त्वरुणाचलेश्वरि नमो महागौरि नमो नमस्ते ॥ ४६ ॥

---

1 इतः परमर्धत्रयं d. कोशे नास्ति । 2 तटित्कोटिकुटीराणि c. 3 श्रीविलसद्गौरि c.

नमो नमः कल्पलताप्रसूनमालासमाक्रान्तपदारविन्दे ।
वन्दे स्वभक्तेप्सितदानलोले विलासशैले गिरिजे नमस्ते ॥ ४७ ॥

नमो नमस्त्वच्चरणारविन्दमरन्दधाराप्रसरोऽस्तु मूर्ध्नि ।
अस्माकमीशानदया यथा स्यात् तथा विधेयं गमनोत्तरं वा ॥ ४८ ॥

न स्वापराधेन कृतो विलम्बः तमम्ब संवेदय शङ्कराय ।
कृतापराधानपि बालपुत्रान् अम्बा न सा कुप्यति सर्वथाम्ब ॥ ४९ ॥

अस्माकमन्यच्छरणं किमस्ति विहाय तावच्छरणं तवाम्ब ।
शिवस्य वा तावदुमे ततोऽस्मान् अवावनं भक्तजनस्य कार्यम् ॥ ५० ॥

अस्माकमप्यन्तकवैरिधीरद्वाराश्रयाणां न भयं कुतोऽपि ।
दया विधेया खलु तावदेव त्वत्पादपद्मार्चकतत्पराणाम् ॥ ५१ ॥

विहारकालेषु कदाचिदम्ब साम्बाय तावद्विनिवेदनीयाः ।
वयं यथा साधु सुखं प्रपन्नाः शिवप्रसादेन भवत्प्रसादात् ॥ ५२ ॥

सा त्वं शिवार्धाङ्गमुमे दया चेदस्मासु तावत् तव तावतापि ।
न दुःखलेशोऽपि ततः प्रसन्ने प्रसन्नचित्तान् कुरु सर्वदा नः ॥ ५३ ॥

विज्ञापनेयं हृदि सावधानमानन्ददानप्रवणे तवास्तु ।
एतावताऽस्माकमुमासहायसहायतामेति न संशयोऽत्र ॥ ५४ ॥

एवं सा गणनायकोक्तवचनान्युच्चैः समाकर्ण्य सा भूयस्तद्वचनानि शङ्करपदोपेतान्यनन्तान्यपि ।
श्रुत्वा हृष्टमतिप्रकृष्टहृदया नत्वा पुनः शङ्करध्यानानन्दरसप्रभूतविलसद्रोमाञ्चकान्ता शिवा ॥५५॥
तत्रादूरमहेश्वराजिरुचिरागारोरुसिंहासनानन्ताश्रान्तसुकान्तसन्ततिसमाक्रान्ता नितान्तं शिवा ।
रेजे राजतशैलतुङ्गशिखराकारोरुरत्नासनेष्वासीनाप्यनुवेलमिन्दुशकलालङ्कारकान्ता बभौ ॥ ५६ ॥

दूरादम्बरशेखरान्तरविमानारूढगौरीस्फुर-
द्वेरा (?) पारजटिल्लताभिसुषमापूरं विलोक्यादरात् ।
सा गौरी समुपागतेति स मुहुः पश्यन् पुनः शङ्करः
शङ्काशूकविवर्जितः स्मरहरः सस्मार पूर्वां [1]दिशम् ॥ ५७ ॥

अथायास्यति शैलजा क्षणरुचिः प्रातः प्रतापं मुहुः
दूरीकृत्य शनैरतः परमियं प्रेम्णा समालिङ्ग्य माम् ।

---

1 दश c. दशां d.

आर्तिं सा परिहृत्य कृत्यशतमप्याशास्यमाशास्यतां
प्राप्ता पूरयितुं समर्थहृदया सा या दयासागरः ॥ ५८ ॥

गौरीचारुविहारसागरलसत्कल्लोलमालाकुलो लीलाकल्पितदिव्यविग्रहयुतः पुष्पोच्चयेष्वप्यहम् ।
प्रासादेष्वपि पुष्पपुञ्जरचिताकारेषु पुष्पोल्लसच्छायाकोटिसमावृतेषु सुदशाक्रान्तेषु नेयं दिनम् ॥

वातो वाति मनोहरप्रसवजो मन्दं सुधाशीकरो
व्यापारप्रचुरश्चिरेण रुचिरस्वैरं विहाराकरः ।
उत्फुल्लानि सरांसि सारसकुलालोलाम्बुवीचिप्रभा-
संबद्धानि शनैः शनैः सुकुसुमाशय्यां स्पृशन् सन्ततम् ॥ ६० ॥

गौरीचारुशरीरतः किमिति वा नायाति वातोऽधुना कस्तूरीघनसारगन्धरुचिरव्यापारभारानपि ।
दूरीकृत्य निरन्तरश्रमकृतस्वेदाम्बुधारामपि प्रासादप्रभवं प्रसादविभवं संपादयन् सर्वतः ॥ ६१ ॥

तद्धम्मिल्लविलोकनेन विलयः स्यादप्यलीनामहो तन्नीलाचलकान्तिसारमसकृत् दूरीकरोतीत्यपि ।
चन्द्रस्तावदितः प्रयास्यति शिवावक्त्रेन्दुसन्दर्शनाद्यास्यन्त्येव विलोलसुन्दरदलाक्रान्तारविन्दान्यपि ॥

अत्युन्मत्तचकोरराजिरधुना दूरं प्रयास्यत्ययं क्रीडारत्नगिरिं प्रयास्यति शिवावक्षोजसंवीक्षणात् ।
भीताः सन्तु जलेषु सन्ततममी तन्नेत्रमीनप्रभाप्रादुर्भावविलोकनेन सकृदप्यत्युद्गता सा शिवा ॥

यद्यत् यास्यति तत्प्रयातु न च मे तैरस्ति कार्यं यदा
गौरी लोचनगोचरा मम तदा साकं तया क्रीडने ।
ब्रह्माण्डप्रलया भवन्तु बहवः कल्पोऽपि तत्सङ्गमे
स्यादेव क्षणकल्प इत्यनुदिनं तत्सन्निधानं धनम् ॥ ६४ ॥

सृष्टिः केयमभूत्पूर्वविभवा गौरीस्वरूपा पुरा तत्तुल्यं न मया मितं वसुमणिश्रेष्ठं भवानी परम् ।
नारीरत्नमिति श्रुतं नयनयोरानन्ददानाय सा ज्ञानानन्दघना सुधाघनघना ज्ञाता भवानी मया ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे गौरीसद्गुणगणवर्णनं नाम
एकोनविंशोऽध्यायः ॥

—❀—

## अथ विंशोऽध्यायः ।

व्यासः —

इत्युदीर्य महादेवे सानन्दे सति सत्वरम् । विमानरत्नछायाभिः समाक्रान्तो महेश्वरः ॥ १ ॥
जयध्वनिः श्रुतस्तेन तूर्यध्वनिरनन्तरम् । दुन्दुभिध्वनयः पश्चात् श्रुतास्तेन मनोहराः ॥ २ ॥
गौरीशरीरकान्तिश्च तटित्कूटनिभा तदा । दृष्टा तेन महेशेन पुष्टस्तेनाभवत् द्विजाः । ३ ॥
जयध्वनीनामभवत् यस्तु कोलाहलस्तदा । स सुधासन्निभो जातः तदा श्रवणमङ्गलम् ॥ ४ ॥
ततः परं शिवा दृष्टा सौन्दर्यनिधिरादरात् । महादेवेन तेनायं परमानन्दमाप्तवान् ॥ ५ ॥
यच्चिन्तितं फलं पूर्वं तत्प्राप्तमधुना मया । अतः परं न मे किञ्चित् दुर्लभं वस्तु दृश्यते ॥ ६ ॥
नवनीतमिव प्राप्य बालकः स तदा हरः । तुष्टः पुष्टः प्रहृष्टश्च दृष्ट्वा तां गिरिकन्यकाम् ॥ ७ ॥
अनन्नः परमान्नानि यथा स्वं प्राप्य तुष्यति । तथा तुष्टो महादेवो दृष्ट्वा देवीं मनोहराम् ॥
अपुत्रः पुत्रमासाद्य यथा तुष्टो भवेत् तदा । तुष्टो गौरीं विलोक्याशु कृशोऽपि न स तां विना ॥
माकन्दकन्दं संप्राप्य पिकस्तुष्टो यथा तथा । गौरीं दृष्ट्वा महादेवः तुष्ट एव प्रतिक्षणम् ॥ १० ॥
प्राप्तं राज्यं समासाद्य धनहीनो यथा नरः । तुष्टस्तथा महादेवो दृष्ट्वा तुष्टो गिरीन्द्रजाम् ॥ ११ ॥

ततः परं प्राप गिरीन्द्रकन्या धन्या पुरारातिपुरप्रकारम् ।
ततः परं हर्षमनोज्ञदृष्टिः सपुष्पवृष्ट्या सहसा बभूव ॥ १२ ॥
अपारतूर्यध्वनयः प्रवृत्ताः सुदुन्दुभिध्वाननिधानयुक्ताः ।
सशङ्खनादाश्च सगाननादाः जयध्वनीनामपि वृष्टिरासीत् ॥ १३ ॥
तदा नवं सृष्टमभूतपूर्वं समन्दिरं तन्नगरं शिवेन ।
जयप्रदं शोभनदं मनोज्ञं सर्वत्र सर्वोत्सवसागराढ्यम् ॥ १४ ॥
अनन्तनानाविधरत्नमाला सुतोरणागारवरव्रतानि ।
स्थलानि सर्वाणि चकार शंभुर्लीलाविनोदेन दयानिधानः ॥ १५ ॥
रत्नद्वारविशेषकोटिशिखरद्वाराणि तीर्त्वा शनैः
गौरी रत्नविमानरत्ननिलया सन्तोषवर्षावृता ।
सा नीराजनकोटिकूटघटिता नाट्यानि दृष्ट्वा मुहुः
तस्मादप्यवतीर्य शङ्करगृहद्वारस्थिता सा क्षणम् ॥ १६ ॥

सा तस्मिन् समये शिवं हृदि मुहुः स्मृत्वा पुनः संस्थिता
धृत्वा सा विजयाकरं सुरुचिरा गौरी शिवालोकने ।
लज्जानम्रमुखी विहारसदनं मन्दं मुदा प्राप सा
सानन्दा शिववीक्षिता मुहुरुमा धन्येति मान्येति च ॥ १७ ॥

सानन्दं मुहुरिन्दुमौलिवदनं स्मेराङ्कितं सस्मिता
दृष्ट्वा सन्निधिमेत्य शैलतनया तृप्ता न सा सर्वथा ।
तां दृष्ट्वा विजया ययौ च सजया गेहान्तरं सा ततो
गौरीशङ्करसुन्दराङ्कमगमत् विद्युल्लतेवाम्बुदम् ॥ १८ ॥

गाढालिङ्गनचुम्बनाधररसास्वादानुमोदाद्भुतानन्दाम्भोधितरङ्गसङ्गललिता स्वस्वाङ्गरङ्गस्थले ।
लीला काऽप्यभवद्धया न पुनरप्यङ्गे भवेदूनता तद्द्वारा सुधया प्रतिक्षणमभूत् आनन्दवृद्धिस्तयोः॥

कुन्दामन्दमरन्दमन्दिररसालिन्दालिमालाकुला शय्या शङ्करचित्तवृत्तिरचिता ताराकुलव्यावृता ।
शुद्धा शुद्धसुधांशुमण्डलकुलव्याप्ता शिवासङ्गमे शङ्कायाति मुदं ततान परमानन्दाय सा लीलया ॥

कार्याकार्यविचारदूरविजया मृत्युञ्जयस्य प्रिया
शङ्कालिङ्गनतत्परा मुहुरिहानङ्गव्यथा मास्त्विति ।
ग्रीष्मार्तस्तृषितो जहाति सलिलं प्राप्यामलं कोमलं
कस्तद्वन्न जहाति सापि गिरिजा शङ्काङ्गसङ्गं पुनः ॥ २१ ॥

लोके यन्मधुरं ततोऽपि मधुरं हारं विहारं परं
मेने सा गिरिराजराजतनया सौभाग्यसङ्कालया ।
दुःखानि प्रलयं प्रयान्तु विलयं कार्श्यं प्रयात्वप्रियं
दूरं यातु विपत्कुलान्यपि मुहुः शङ्काङ्गसङ्गादिति ॥ २२ ॥

शङ्कालिङ्गनतत्परा गिरिसुता जाता यदा सा तदा
हारास्तु त्रुटितास्तथाङ्गदयुगं भग्नं च काञ्ची तथा ।
भग्ना कङ्कणमण्डलं च कणशो भग्नं तदालिङ्गनात्
पुष्टा तत्तनुरष्टमूर्तिमहिला लीलाविलासैरलम् ॥ २३ ॥

क्रीडामण्डितगण्डमण्डललसत्कस्तूरिकामण्डनं कर्पूरागरुकेसरादिरुचिरश्रीखण्डखण्डं द्रवैः ।
सार्कं निर्गतमेव सत्वरमतिस्वेदाम्बुधारान्वितैः तन्नाभीसरसि प्रविश्य रुचिरं तद्गन्धबन्धान्वितैः ॥

चिरहारविहारसारभारप्रचुरानङ्गविलासलालसायाः ।
विधिकल्पसहस्रमप्यनल्पं क्षणकल्पं समभूद्गिरीन्द्रजायाः ॥ २५ ॥

अमृतामृतमिन्दुमौलिलीलानिलयं कायमनामयं [1]मयेन ।
अनुमेयमहोदयं स्वमायाविलयोपायतया शिवाऽपि मेने ॥ २६ ॥

बहुकल्पवियोगजा तनोः तनुता सा तनुतामवामरूपम् ।
अनुरूपमवाप तेन रेजे गिरिजा श्रीगिरिनायकाङ्क[2]शङ्का ॥ २७ ॥

अमन्दपरमानन्दकल्लोलकलितौ शिवौ । स्वशिवाकारमालोक्य तुष्टौ पुष्टौ पुनः पुनः ॥ २८ ॥
मन्दस्मेरानुसन्धाननिधानमधुना परम् । प्रलब्धमिति तौ तावदन्योन्यानन्दसंवृतौ ॥ २९ ॥
ततः परं वरतरे विहाररसमागरे । गौरीहरौ परां क्रीडां अक्रीडौ चक्रतुर्भृशम् ॥ ३० ॥
एवं क्रीडाविनोदेन नीताः कल्पाः सहस्रशः । ततः परं शङ्करोऽपि मस्मारानन्दमण्टपम् ॥ ३१ ॥
रत्नैकैन रचितं शंखयोजनमुन्नतम् । तदनन्तं महाभोगं तावद्योजनमायतम् ॥ ३२ ॥
तदनन्तसुधारश्मिमण्डलैः परिवेष्टितम् । विद्युत्कूटगणाक्रान्तं तारामण्डलमण्डितम् ॥ ३३ ॥
कुन्दमन्दारराजीवराजिसोपानरञ्जितम् । तत् सुधाकल्पकल्लोलमालिकाललितं कृतम् ॥ ३४ ॥
चन्द्रमण्डलपर्यङ्कशिरःपल्यङ्कसंवृतम् । मन्दारकुसुमासारमरन्दरजसाऽऽवृतम् ॥ ३५ ॥
केतकीवातपोतेन वीतं पूतं विभूतिभिः । अनुभूतमहानन्दमन्दे हसमलंकृतम् ॥ ३६ ॥
तत्कालकालसंल्लापलीलालोलसुधामयम् । अनामयविहाराणामालयत्वेन संश्रुतम् ॥ ३७ ॥
तस्मिन्नुमासहायत्वं उमया मय्यनामये । संपादनीयमित्येव ययौ मृत्युञ्जयः स्वयम् ॥ ३८ ॥
तत्र सिंहासनं द्रष्टुं कोटियोजनमुन्नतम् । तावदायतमुत्तुङ्गरत्नश्रृङ्गविराजितम् ॥ ३९ ॥
तत् घनीभूतमन्दारमकरन्दविराजितम् । तदनन्तमणिच्छाया छाया छादितमुत्तमम् ॥ ४० ॥
रुद्रवीणाकोटिगानध्वनिशोभनसाधनम् । तत् फुल्लकुन्दमन्दारशिरीषकुसुमच्छदैः ॥ ४१ ॥
आच्छादितं विनोदानां आस्पदं सदनं प्रभोः । शंभोर्मनोहरं दृष्ट्वा हृष्टा प्राह शिवा शिवम् ॥
केयं सृष्टिर्महादेव न दृष्टा नापि संश्रुता । केन तुल्यमिदं लोके किमितोऽप्यधिकं भवेत् ॥
ईदृशी रचना शंभो न कैलासेऽप्यभूत् प्रभो । अचिन्तनीयो महिमा तवायममरप्रभो ॥ ४४ ॥
नखरप्रसराभावे शिवनामानुगायनम् । अनन्तरुद्रवीणासु श्रूयते ताररञ्जितम् ॥ ४५ ॥
मनोहरघनीभूतरत्नच्छायाविराजितः । प्रासादः कोऽयमेतस्मिन् मनोवैभवभावितः ॥ ४६ ॥

---

1 ममेदं c. नयेन d. 2 शय्या c.

इन्दुमण्डलमध्यस्थ निर्माणप्रतिशोभनम् । तदिन्दुकमनीयेन शयनीयेन रञ्जितम् ॥ ४७ ॥
नेत्रपात्रमिदं चित्रं त्रिनेत्रात्रास्तु मे स्थितिः । कल्पमात्रमितस्तावत् इतो गमनमेव न ॥ ४८ ॥
इत्युक्त्वा तत्तदानन्दसन्दोहदममन्दया । मकरन्दश्रिया युक्तं प्रापाम्बा सा शिवा शिवम् । ४९॥
तं दृष्ट्वा तत्र विश्रान्ता शान्ति विस्मृत्य शैलजा । आनन्दरसधाराभिरप्सरोभिर्वभौ द्विजाः ॥
आनन्दरसमग्ना सा विज्ञानघनसागरम् । गौरी शङ्करमालिङ्ग्य न सस्मार स्ववर्तनम् ॥ ५१ ॥
क्वचिच्चेलं क्वचिच्चोली धम्मिल्लं च क्वचित् क्वचित् । रससागरमग्नायाः क्वचिद्बाहुलतादिकम् ॥
एवं क्रीडारसेनैव शिवाभ्यां कल्पकोटयः । नीताः क्षणार्धं कल्पास्ते सर्वेऽपि शिवयोः परम् ॥
ततः परं ततोऽप्युच्चैः तल्पे कल्पितमण्डने । विहारनिरता गौरी शङ्करेण सहादरात् ॥ ५४ ॥
एवं तल्पेष्वनन्तेषु दिव्यमण्डनमण्डिता । विहारनिरता गौरी विरता न कदाचन ॥ ५५ ॥
प्रतिक्षणं विचित्राणि सा रत्नाभरणान्यपि । स्वतः समागतान्यम्बा सा जहौ शिवलीलया ॥५६॥
तुङ्गशङ्गाङ्गसङ्गेन मदङ्गमपि मङ्गलम् । तनोतीति न हारेषु चकार रतिमम्बिका ॥ ५७ ॥
शर्वसर्वाङ्गसङ्गस्याप्यन्तरायो भवेदयम् । हारो मनोहरोऽपीति हारं दूरीचकार सा ॥ ५८ ॥
सा गौरी कुचमण्डलाय शिखरोत्तुङ्गाय हारान् ददौ शृङ्गारद्रवपूरिताय रुचिराकाराय धीराय च ।
हारापारजयाय चूचुकलसन्मुद्राय रुद्रप्रियाहारद्रावणवारणाय वलिकानिःश्रेणिकायादरात् ॥ ५९ ॥
सा पश्चात् दृढगण्डमण्डलतले कस्तूरिकामण्डनं नासायां नवमौक्तिकं तदधरे ताम्बूलरागं मुहुः ।
ताटङ्कं श्रवणाय फालफलके मुक्तामयं मण्डनं सीमन्तेऽपि नखप्रचाररुचिरे सा रत्नमालां ददौ ॥

ताराकारस्थूलमुक्ताफलं श्रीगौरीनासावासमासाद्य सद्यः ।
अद्य प्राप्तं पद्मरागप्रभात्वं केनेत्याहेत्यादरेणाधरेण ॥ ६१ ॥

सा रत्नाङ्गदमङ्गदोचितमुमा दृष्ट्वा ददौ कङ्कणे
नानारत्नविराजिते करमुखे रत्नाङ्गुलीयान्यपि ।
[1] सा काञ्चीमतिसूक्ष्ममध्यविलसद्भाग्योचिता कुञ्चिता
काञ्ची नेत्यपि भारभीरुहृदया सा तद्यां कुर्वती ॥ ६२ ॥

मध्ये रत्नमणिप्रभाभिरभितो बन्धं चकाराम्बिका तच्छङ्कापनयापसापि जघने तावद्दुकूलं ददौ ।
पादे विद्रुमपद्मरागरुचिरे लाक्षारसासेचनं सा गौरी न चकार सारुणकरव्यापारभङ्गोद्यते ॥ ६३ ॥

---

1 सा दातुं विरता नखप्रतिभयाच्छन्नासु तास्वङ्गुलीषु
आनीलाभरणानि कान्यपि तथा योग्यानि रत्नान्यपि । इति c d. कोशयोः अधिकः पाठः ।

धम्मिल्ले कृतमेव बन्धनमिदं किं विश्लथं निर्गतं जन्येऽनङ्गमदापहारनिरते थुक्तं किमस्येति वा ।
पश्चाच्चन्दनकर्दमेन सहितं कस्तूरिकाकर्दमं दत्वाङ्गेषु विलेपनौषधधिया जन्यक्षताक्षेपकम् ॥ ६४ ॥
चोलीं सा कुचयोः सुमेरुविजया प्रारब्धयोस्तज्जयप्रारम्भे विजयः पुनः पुनरिदं भूयादितीयं शिवा ॥
गौरी शङ्करचारुधीरकरजव्यापारचिह्नाङ्किता शङ्गालिङ्गनमङ्गलैरभिनवैः सम्पूर्णकामोदया ।
सा सर्वाभरणान्विते विरुरुचे दिव्याङ्गरागाङ्कितं शङ्गाङ्गं समुपेत्य मङ्गलसमं भृङ्गारधाराकरम् ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे पार्वत्यागम गौरीशङ्करक्रीडानुवर्णनं नाम विंशोऽध्यायः ॥

—०—

## अथ एकविंशोऽध्यायः ।

व्यासः —

तदा स्मरहरापारशृङ्गाररससंयुता । गौरी कुमारं सस्मार शङ्करो लोकशङ्करम् ॥ १ ॥
ततः समागतः स्कन्दः सानन्दं सुन्दराननम् । त्रिलोचनं च संवीक्ष्य प्रणतो दण्डवद्भुवि ॥ २ ॥
ततः कृताञ्जलिर्भूत्वा शिवौ तुष्टाव षण्मुखः । गणेशेन सहानन्दसागरावतिसादरम् ॥ ३ ॥

षण्मुखः —

नमो नमस्ते गिरिशाय तुभ्यं नमो नमस्ते गिरिकन्यकायै ।
नमो नमस्ते वृषभध्वजाय सिंहध्वजायै च नमो नमस्ते ॥ ४ ॥

नमो नमो भूतिविभूषणाय नमो नमश्चन्दनरूपितायै ।
नमो नमः फालविलोचनाय नमो नमः पद्मविलोचनायै ॥ ५ ॥

त्रिशूलहस्ताय नमो नमस्ते नमो नमः पद्मलसत्करायै ।
नमो नमो दिग्वसनाय तुभ्यं चित्राम्बरायै च नमो नमस्ते ॥ ६ ॥

चन्द्रावतंसाय नमो नमस्ते नमोऽस्तु चन्द्राभरणाश्रितायै ।
नमः सुवर्णाङ्कितकुण्डलाय नमोऽस्तु रत्नोज्वलकुण्डलायै ॥ ७ ॥

नमोऽस्तुताराग्रहमालिकाय नमोऽस्तु हारान्वितकन्धरायै ।
सुवर्णवर्णाय नमो नमस्ते नमः सुवर्णाधिकसुन्दरायै ॥ ८ ॥

नमो नमस्ते त्रिपुरान्तकाय नमो नमस्ते मधुनाशनायै ।
नमो नमस्त्वन्धकसूदनाय नमो नमः कैटभसूदनायै ॥ ९ ॥

नमो नमो ज्ञानमयाय नित्यं नमश्चिदानन्दघनप्रदायै ।
नमो जटाजूटविराजिताय नमोऽस्तु वेणीफणिमण्डितायै ॥ १० ॥

नमोऽस्तु कर्पूररसाकराय नमो लसत्कुंकुममण्डितायै ।
नमोऽस्तु बिल्वाम्रफलार्चिताय नमोऽस्तु कुन्दप्रसवार्चितायै ॥ ११ ॥

नमो जगन्मण्डलमण्डनाय नमो मणिभ्राजितमण्डनायै ।
नमोऽस्तु वेदान्तगणस्तुताय नमोऽस्तु विश्वेश्वरसंस्तुतायै ॥ १२ ॥

नमोऽस्तु सर्वामरपूजिताय नमोऽस्तु पद्मार्चितपादुकायै ।
नमः शिवाऽऽलिङ्गितविग्रहाय नमः शिवालिङ्गितविग्रहायै ॥ १३ ॥

नमो नमस्ते जनकाय नित्यं नमो नमस्ते गिरिजे जनन्यै ।
नमो नमोऽनङ्गहाराय नित्यं नमो नमोऽनङ्गविवर्धनायै ॥ १४ ॥

नमो नमस्तेऽस्तु विषाशनाय नमो नमस्तेऽस्तु सुधाशनायै ।
नमो नमस्तेऽस्तु महेश्वराय श्रीचन्दने देवि नमो नमस्ते ॥ १५ ॥

इति स्तुत्वा महादेवमम्बामानन्दकन्दलाम् । लम्बोदरः कुमारोऽपि ताभ्यामालिङ्गितो मुहुः ॥

वरं वृणु कुमाराद्य लम्बोदर तवेप्सितम् । इत्युक्तं तद्वचः श्रुत्वा ययाचे स वरं परम् ॥ १७ ॥

त्वत्पादाम्बुरुहार्चने मतिरुमाकान्तस्तु मे सर्वदा त्वन्नामश्रवणेऽपि मे शिव शिवे पञ्चाक्षरावर्तने ।
लिङ्गे मङ्गलदायकेऽपि भसिते रुद्राक्षमालास्वपि स्वामिन् शङ्करसेवनेऽपि सततं हारोपहारेष्वपि ॥

साङ्गैरध्ययनादिभिः हरतपःसङ्घैर्न यागैस्तथा योगैर्वा न तुलादिदाननिकरैर्भूमण्डलावर्तनैः ।
अन्यैरप्यलमेव धर्मनिचयैर्[1]रक्षाचला केवला भो फालानन कालकाल कलये त्वां तेऽनुवेलं पदम् ॥

भोगाङ्गानि विनश्वराणि भगवन् प्राज्यानि राज्यान्यपि
श्रीमृत्युञ्जय सर्वथापि निधयः सापायशङ्काश्रयाः ।
शङ्कातङ्कनिवारकं निरधिकं कालान्तकं केवलम्
त्वां मन्ये तत एव सा त्वयि सदा भक्तिर्ममास्तु स्थिरा ॥ २० ॥

1 आयाससंपादकैः c.

गोक्षीरे मधुशर्करादिमधुरद्रव्येषु जिह्वा यथा
लोला तद्वदुमापते शिवमहादेवेति नामामृते ।
लीला सन्ततमस्तु चित्तमपि मे त्वत्पादपद्मे मुदा
भृङ्गत्वं समुपेत्य तिष्ठतु वरः सोऽयं वराणां वरः ॥ २१ ॥

प्राप्य प्रोषितभर्तृकेव रमणं भानुं यथा पद्मिनी
शीतांशुं कुमुदं सुधामिव नरो राज्यानि राजाधमः ।
सुश्रोत्रं बधिरोऽन्धकः सुनयनं पंगुः पदक्षेपणं
वाणीं मूक इवान्तकान्तक पदं पुष्टं प्रहृष्टं पुनः ॥ २२ ॥

प्राप्येवोषरभूतले जलमतिश्रान्तो वसन्तं पिको
वन्ध्या पुत्रमघक्षयं मुनिजनश्चन्द्रं चकोराङ्गना ।
मेघं चातकबालकः शिवपुरीं विश्वेश्वराराधकः
प्राप्यानन्दममन्दमिन्दुमुकुटं मन्मानसं लालसम् ॥ २३ ॥

मच्चित्तं मकरन्दपाननिरतो भृङ्गो मरन्दं यथा
कामी सुन्दरकामिनीमिव धनं निःस्वो यथा बालकः ।
स्तन्यं मेघमिवाङ्कुरः शिव तथा त्वन्नामसङ्कीर्तनं
लब्ध्वा तुष्यतु पुष्टमस्तु सततं याचे न चान्यान् वरान् ॥ २४ ॥

शंभो त्वच्चरणारविन्दमधुना दृष्टं पुनर्मे कदा
देयं दर्शनमिन्दुशेखर दयासिन्धो यदा नेक्षितम् ।
त्वत्पादाम्बुजमादरेण न तदा ग्राह्यं जलं वा कथं
मामाज्ञापय दर्शनाय भगवन् सायं प्रगे वा प्रभो ॥ २५ ॥

एतस्मादधिको वरद मे नापेक्षितः सर्वथा
शर्वोऽयं शपथः शिवाचरणयोः त्वत्पादपद्मेऽपि मे ।
अन्यत् किं मदपेक्षितं शिवपदाम्भोजे भजे सन्ततं
तन्मात्रं मदपेक्षितं हृदयमप्यत्रान्वहं सादरम् ॥ २६ ॥

इत्याकर्ण्य वचस्तस्य तमालिङ्ग्य मुहुर्मुहुः । प्रीतिर्यथा तथैवास्तु त्वदन्यः कः प्रियो मम ॥ २७॥
गणेश्वरकुमाराभ्यां शिवयाऽपि सहाचलम् । योगोऽस्त्विति रुचिस्तावत् अन्यत्र प्रीतिरेव न ॥
इत्युक्त्वा पुनरालिङ्ग्य कुमारगणपौ शिवः । वसनानि विचित्राणि ददावाभरणान्यपि ॥ २९ ॥

ततः परमुवाचेदं वचनं गिरिजापतिः । वस्त्राद्यैर्नन्दिकेशादीन् तोषयस्वेति सादरम् ॥ ३० ॥
ततः प्रणम्य तं साम्बं निर्गतो गणान्वितः । रत्नद्वाराण्यपाराणि तीर्त्वा विस्मयसंयुतः ॥ ३१ ॥
ततः परं मणिश्रेष्ठरञ्जिते सिञ्जिताश्रिते । मन्दिरे सुन्दरे धीरः कुमारः सुकरस्थितः ॥ ३२ ॥
ततः समागताः सर्वे नन्दिकेशमुखा गणाः । प्रणताः प्रस्तुवन्तस्तं स्तुतितत्परमादरात् ॥ ३३ ॥
ततः सस्मार तरसा दिव्याभरणपर्वतान् । दुकूलपर्वतानन्यान् तदा दिव्यान्नपर्वतान् ॥ ३४ ॥
तदपेक्षानुसारेण ददौ तेभ्यो यथाक्रमम् । तान् कोटिशः प्रहृष्टास्ते तुष्टुवुर्गणनायकाः ॥ ३५ ॥
ततः परं गणाः सर्वे शर्वध्यानपरायणाः । स्वस्वमन्दिरमासाद्य सद्यः सन्तुष्टमानसाः ॥ ३६ ॥
ततः परं कुमारोऽपि संयुतो देवसेनया । विहारचतुरो धीरो रम्यं हर्म्यमुपाश्रितः ॥ ३७ ॥
गणेश्वरोऽपि स्वरया (?) तथा सरसया सह । दिव्यं प्रासादमासाद्य हृद्याचाररतो मुदा ॥ ३८ ॥
ततः परं जयासम्ब्या विजयामपि सादरम् । आहूयाभरणादीनि ददौ ताभ्यां तु कोटिशः ॥ ३९ ॥
पश्चान्नाट्याङ्गनाः सर्वाः समाहूय शिवा तदा । ताभ्योऽप्याभरणादीनि ददौ दिव्यानि सादरम् ॥
ततः परं महादेवः पुष्पप्रासादमुत्तमम् । सहाससाद शिवया परया हृद्यमुत्तमम् ॥ ४१ ॥
तत्र लीलाकल्पितानि दिव्यान्नानि सहाम्बया । भुक्त्वा यथेष्टमासाद्य फलानि मुदितः शिवः ॥
ततः परं केतकीनां गन्धमाघ्राय शङ्करः । वातानीतं शिवामाह ग्राह्यो गन्धस्त्वयेत्यरम् ॥ ४३ ॥
ततः परमुवाचाम्बा गन्धान् नानाविधानपि । त्वदुपाघ्रातशेषान् मे प्रयच्छेति मुहुर्मुहुः ॥ ४४ ॥
ततः परं रुद्रवीणामादाय भववल्लभा । गानविद्यास्वरूपा सा जाता गानरता शिवा ॥ ४५ ॥

शिव शिव हर शंभो भर्ग भीम स्मरारे त्रिपुर हर यमारे कालकूटान्धकारे ।
परशिव परमात्मन् रुद्रवीणा प्रवीणा वदति नखमुखाग्राघातभीतिं हरेति ॥ ४३ ॥

सृष्टिरेषा महादेव भूतपूर्वा न सर्वथा । बीजमत्र किमस्तीति बभाषे वचनं शिवा ॥ ४७ ॥

शिवः —

पुरा गन्धर्वनगरे शिवलिङ्गमनोहरे । गन्धर्वराजनारीणां विहारनिकराकरे ॥ ४८ ॥
हूहू नाम्ना प्रसिद्धोऽभूत् गन्धर्वगणनायकः । स सर्वभाग्यसम्पन्नो वदान्यश्च विशेषतः ॥ ४९ ॥
स पुष्पकं समारुह्य चचार भुवनत्रये । कुत्र को वा विशेषोऽस्ति किं प्रियं कस्य वा भुवि ॥ ५० ॥
किं वा मनोहरं लोके हराराधनसाधनम् । एवं विचार्य तरसा जगाम गिरिकन्दरम् ॥ ५१ ॥
तत्र कोऽपि महावीरः शाङ्करः करुणाकरः । शङ्कराराधनोद्युक्तः तं दृष्ट्वा प्रणतोऽपि सः ॥ ५२ ॥
ततस्तं विनयेनैव हूहूर्गन्धर्वसत्तमः । किमत्र शांभवश्रेष्ठ स्थीयते गिरिगह्वरे ॥ ५३ ॥

सौन्दर्यवीर्यसंपन्नः सौभाग्यनिलयोऽधुना । किं कर्तुमुद्यतः किंते दुर्लभं भुवनत्रये ॥ ५४ ॥
इति तद्वचनं श्रुत्वा सोऽपि तं प्राह सस्मितः । अत्याश्चर्यकरां वाणीं शृणु कर्णविभूषणाम् । ५५ ॥
अत्रास्ति लिङ्गमुत्कृष्टं इदं सर्वेष्टदायकम् । एतदाराधनेनैव सिद्धाः सिद्धिं गताः पुरा ॥ ५६ ॥
सिद्धलिङ्गमिति ख्यातं सिद्धिदत्वेन निश्चितम् । अत्र पूर्वमभूद्विप्रो दरिद्रो व्याधिपीडितः ॥ ५७ ॥
कुष्ठी व्रणपरिक्रान्तः कुनखी श्यावदन्तकः । कुब्जो विकर्णः काणश्च सच्छिद्रमलिनाम्बरः । ५८ ॥
तेन काणेन भुक्तानि दुःखानि विविधान्यपि । स दैवयोगादेतस्य लिङ्गस्य निकटे स्थितः । ५९ ॥
एतल्लिङ्गार्चनं कृत्वा कोऽपि किन्नरपुङ्गवः । ददौ नैवेद्यमुत्कृष्टं परमान्नं मनोहरम् ॥ ६० ॥
विशालकदलीपर्णे शिवनैवेद्यमादरात् । निधाय शर्करायुक्तं घृतधारासमन्वितम् ॥ ६१ ॥
दत्वा शिवाय नैवेद्यं पूजान्ते शङ्करं स्मरन् । निःशेषं बुभुजेऽनेन पात्रं त्यक्तं तदन्तिके ॥ ६२ ॥
ततस्तेन तदाघ्राय सुगन्धसहितं मृदु । भक्षितं तूर्णमेवैतत् पर्णं तु क्षुधया तया ॥ ६३ ॥
तत्र तद्भक्षणादेव पापरूपमनुत्तमम् । हित्वा वृद्धो युवा जातः तदानीमतिसुन्दरः । ६४ ॥
ततः स विस्मयाविष्टो हृष्टः पुष्टो मुहुर्मुहुः । कस्यायं महिमा किं वा मम पुण्यं पुरातनम् ॥ ६५ ॥
एवमुक्त्वा स्थिते तस्मिन् पुनर्नैवेद्यमादरात् । तेनानीतं महेशाय येनानीतं पुराऽऽदरात् ॥ ६६ ॥
ततो निवेद्य नैवेद्यं सिद्धेशाय विशेषतः । भुक्त्वा तथैव तत्पर्णं तत्र तेन निपातितम् ॥ ६७ ॥
ततः परं गते तस्मिन् तत्पर्णं तूर्णमेव सः । आदाय परमानन्दमवाप धनिको यथा ॥ ६८ ॥
ततः परं तदाघ्राय वारं वारं स सादरम् । महिमा कोऽयमस्येति विचारनिरतस्तदा ॥ ६९ ॥
तदानीमागतः शैवः कश्चिन्नामानि संवदन् । शिव शङ्कर शर्वेति मुहुर्मुहुरुदारधीः ॥ ७० ॥
आगत्य बिल्वपत्राद्यैः शिवलिङ्गसमर्चनम् । कृत्वा फलेन दिव्येन पूजयामास शङ्करम् ॥ ७१ ॥
ततस्तत्फलमादाय स नैवेद्यधिया मुदा । भक्षयित्वा परं रेजे जितसर्वमनोरथः ॥ ७२ ॥
तं प्रणम्य ततो विप्रः सादरं भक्तिपूर्वकम् । अतिविस्मयमापन्नः प्राह शैवः कृताञ्जलिः ॥ ७३ ॥

विप्रः —

शैवेन्द्र पूर्वरूपं ते यदभूत् तन्मनोहरम् । ततः सहस्रगुणितं रूपमासीदिहाधुना ॥ ७४ ॥
किमस्य कारणं विद्वन् तत्त्वज्ञ वद सादरम् । कस्यायं महिमा किञ्च सामर्थ्यं कस्य किं वद ॥
इति तद्वचनं श्रुत्वा शङ्करस्तमुवाच सः । साधु पृष्टं त्वया विप्र शृणु तत्तावदुच्यते ॥ ७६ ॥
शिवनैवेद्यशेषस्य भुक्तस्य परया मुदा । सामर्थ्यमेतदन्यच्च सामर्थ्यं श्रुतिषु श्रुतम् ॥ ७७ ॥
यो भुङ्क्ते शिवनैवेद्यं स तावदतिभाग्यवान् । सुन्दरोऽपि भवत्येव सर्वलक्षणसंयुतः ॥ ७८ ॥

शिवनैवेद्यकोट्यंशकोट्यंशमपि भाग्यवान् । प्राप्नोत्यन्यस्य कस्यापि स तावदतिदुर्लभः ॥ ७९ ॥
इन्दिरा प्राप सौन्दर्यं भाग्यमप्यतुलं द्विजाः । शिवनैवेद्यपात्रस्य सङ्गमेनापि केवलम् ॥ ८० ॥
पद्मा भिल्लसती पूर्वमरण्यनिलया सदा । सा भर्त्रा सह काष्ठानि क्रयायानयती स्वयम् ॥ ८१ ॥
तदेव जीवनं तस्याः तद्भर्तुरपि सर्वदा । सा कृशा जरया नित्यं पलितापि प्रतिक्षणम् ॥ ८२ ॥
सा कदाचिद्वने स्थित्वा काष्ठान्यपि तृणान्यपि । बद्ध्वा वोढुमशक्ताऽपि मूर्ध्न्याधाय पपात च॥
तत्र कश्चिन्महादेवं बिल्वपत्रादिभिः शिवम् । संपूज्य पान्थः कृत्वाऽन्नं ददौ शर्वाय सादरम् ॥
तन्नैवेद्यं स्वयं भुक्त्वा निश्शेषमतिसादरम् । उच्छिष्टपात्रमन्यत्र त्यक्तं तेन महात्मना ॥ ८५ ॥
तदेव पात्रं वातेन नीतं भिल्लाङ्गनाकरे । पपात सा ततः पश्चात् चक्रे देहविसर्जनम् ॥ ८६ ॥
ततः परं भटैर्नीता दुर्दुरूढैः यमस्य सा । पातितां कालनिकटे तैर्दूतैरतिनिष्ठुरैः ॥ ८७ ॥
ततः परं यमः प्राह चित्रगुप्तमियं क वा । स्थिता किं वा कृतं पापमनया पुण्यमुत्तमम् ॥ ८८ ॥
इत्युक्तस्तमुवाचेयं भिल्लनारी यमाधुना । वने मृता कृशा दीना तृषार्ता क्षुधिता भृशम् ॥ ८९ ॥
अनया न कृतं पुण्यं अरण्यात् पूर्वमादरात् । हिंसापरा प्रयत्नेन परपीडनतत्परा ॥ ९० ॥
जालेन पक्षिजालानि समादाय यथेच्छया । छित्वा शस्त्रेण बहुधा तत्पाकं च करोति सा ॥
तन्मांसमशनं तस्याः सुरापानरताऽपि सा । सेयं पुण्यविहीनैव वने चरति सर्वदा ॥ ९२ ॥
न दृष्टमनया कापि शिवलिङ्गमनुत्तमम् । दीपमालापि विमला न दृष्टा शिवमन्दिरे ॥ ९३ ॥
नानया शांभवो दृष्टो लीलामानुषविग्रहः । संमार्जनं च न कृतं तया शङ्करमन्दिरे ॥ ९४ ॥
शिवाङ्गणरजःपुञ्जो नापि दूरीकृतस्तया । न दृष्टा शिवपूजाऽपि सर्वकष्टविनाशिनी ॥ ९५ ॥
न ज्ञातः शिवमार्गोऽपि भोगस्वर्गापवर्गदः । न बिल्वतरुपूजाऽपि कृता भक्तिपुरस्सरम् ॥ ९६ ॥
न भस्मना ललाटं वा पूतमस्याः कदाचन । रुद्राक्षवार्ताऽपि तया न ज्ञाता सर्वथा मम ॥९७॥
शिवाभिषेकपानीयं न पीतं च तया मम । शिवनैवेद्यगन्धोऽपि नाघ्रातो दुष्टयाऽनया ॥ ९८ ॥
न महादेवनामापि श्रुतं सर्वाघनाशनम् । शिवतीर्थाटनोद्योगः तया न कृत एव हि ॥ ९९ ॥
शिवार्चनं न जानाति न श्रुतं च शिवार्चनम् । शिवोत्सवो न दृष्टोऽपि न श्रुतोऽपि कदाचन ॥
तया शिवपुरावासो न कृतोऽपि कदाचन । शिवकुण्डानि दृष्टानि नानया भक्तिपूर्वकम् ॥ १०१ ॥
शरीरत्यागसमये शैवोच्छिष्टच्छदान्वयः । जातस्तत्पुण्यमेतस्याः सर्वाभीष्टप्रदायकम् ॥ १०२ ॥
इत्युक्तं तद्वचः श्रुत्वा प्रहृष्टस्त्वरया यमः । स्पृष्ट्वा तदङ्गं प्रणतः कृत्वा तस्याः प्रदक्षिणम् ॥
ततः परं परं रूपं प्राप सा तत्करान्वयात् । दिव्यमाल्याम्बरधरा दिव्यभूषणभूषिता ॥ १०४ ॥

ततस्तां स्थापयामास रत्नसिंहासने यमः । पूजयामास पुष्पाद्यैः ततः स्वर्गं जगाम सा ॥ १०५ ॥

किं वर्णनीयमधुना शिवपूजकानां सामर्थ्यमर्थिजनदुःखविनाशकानाम् ।
यद्भुक्तपात्रमपि गात्रविशेषयोगे स्वर्गं तनोति सुखसन्ततिमातनोति ॥ १०६ ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिवनैवेद्यशिवोच्छिष्टपात्रमहिमावर्णनं नाम एकविंशोऽध्यायः ॥

—o—

## अथ द्वाविंशोऽध्यायः ।

[1] व्यासः —

इति शैववचः श्रुत्वा स विप्रो हृष्टमानसः । पुनर्भिल्लाङ्गनावार्तां पप्रच्छ किमभूदिति ॥

शैवः —

स्वर्गलोकमनुप्राप्य भुक्त्वा भोगाननेकधा । ब्रह्मलोकमवापाथ ब्रह्मणा साऽपि पूजिता ॥ २ ॥

ततः परं ब्रह्मलोके सा सिंहासनसंस्थिता । ब्रह्मणा पूजिता नित्यं सनकाद्यैश्च सादरम् ॥ ३ ॥

ततः कदाचिद्यत्नेन ब्रह्मलोकनिवासिभिः । पृष्टा केयमिति प्रीत्या सादरं स चतुर्मुखः ॥ ४ ॥

ब्रह्मा —

किं वक्तव्यमहो धन्याः शांभवानां महात्मनाम् । स्वरूपं वेदसंवेद्यं कथंचिदपि सम्मतं ॥ ५ ॥

वेदैरपि न विज्ञातं यद्रूपं तत्कथं मया । वक्तव्यं तत्र मे बुद्धिः सर्वथाऽप्यतिकुण्ठिता ॥ ६ ॥

वैकुण्ठेनापि न ज्ञातं शांभवानां स्वभावतः । स्वरूपममलं तत्तु जानाति स महेश्वरः ॥ ७ ॥

यद्गात्रमात्रसङ्गेन पवित्रं गात्रमुच्यते । तेषां स्वरूपं शैवानां न ज्ञातुमपि शक्यते ॥ ८ ॥

शैवाश्चरन्ति भूलोके ते सर्वे शिवविग्रहाः । शिवप्रभावः केनापि ज्ञायते किं जगत्त्रये ॥ ९ ॥

यदङ्गसङ्गः संसारसागरस्यापि शोषकः । स मोचकोऽपि पापेभ्यो वर्णनीयः कथं मया ॥ १० ॥

अलौकिकमिदं चित्रं चरित्रं शङ्करस्य तु । तत् त्रिनेत्रचरित्रत्वात् वेदान्तविषयोऽपि न ॥ ११ ॥

शैवस्वरूपकोट्यंशकोट्यंशांशोऽपि केवलम् । न वेदैरपि वेदान्तैः सर्वैरपि न निश्चितः ॥ १२ ॥

धन्याः कृतार्थाः सर्वज्ञाः शाङ्करा एव केवलम् । तत्पादरजसो लेशः पुनाति भुवनत्रयम् ॥ १३ ॥

---

1 श्रीशिव उवाचेति c, d.

सहस्रजिह्वः शेषोऽपि शैवमाहात्म्यवैभवम् । नैव वर्णयितुं शक्तः तथैवाहं हरिस्तथा ॥ १४ ॥
शांभवाङ्गानुषङ्गेण महापापविहङ्गमाः । प्रयान्ति नलिकायातघोषादिव विशेषतः ॥ १५ ॥
पुरा कश्चिदभूद्राजा प्रजापीडनतत्परः । पापानामाश्रयस्तस्य पापानां गणनापि न ॥ १६ ॥
परद्रव्यरतो नित्यं परद्रोहरतस्तथा । परनिन्दापरो नित्यं परदाररतस्तथा ॥ १७ ॥
गोहिंसानिरतो नित्यमश्वहिंसारतस्तथा । द्विजहिंसारतो नित्यं तन्नारीदुःखदायकः ॥ १८ ॥
तद्राष्ट्रे जलपानार्थं मृगा अपि चरन्ति न । अन्येषां तत्र का वार्ता पापिष्ठजनमण्डले ॥ १९ ॥
तद्देशे विपिने कोऽपि पान्थः शैवोत्तमो गतः । तत्र बिल्वतरुस्तेन दृष्टो दोषनिवारकः ॥ २० ॥
नवबिल्वदलाक्रान्तमालवालजलाकुलम् । वेष्टितं परितः सम्यक् उशीरैरतिशीतलैः ॥ २१ ॥
तत्रास्ति कुण्डममलं जलकल्लोलमण्डितम् । परितः प्रोक्षितं शुद्धं छायाछन्नमनुत्तमम् ॥ २२ ॥
तद्देशराजो विपिने स चरन् मृगघातुकः । तद्बिल्वमूले छायार्थमधितिष्ठति शीतले ॥ २३ ॥
ग्रीष्मकाले रविकरैः प्रतप्तः पर्यटन् वने । तद्बिल्वमूलमाश्रित्य ततो याति पुरं प्रति ॥ २४ ॥
तद्बिल्वतरुमालोक्य तुष्टो भवति भूपतिः । तद्रक्षणार्थं बहवः स्थापिताश्च वनेचराः ॥ २५ ॥
वातेनापि न लूनैव शाखा बिल्वतरोरतः । अन्येन केन वा तस्य शाखा लूना भविष्यति ॥
बिल्वशाखाप्रवृद्ध्यर्थं जलं चातीव निर्मलम् । स दापयति भूपालः तन्मूलं पूर्णमम्बुना ॥ २७ ॥
तादृशं बिल्वमूलं तु समाश्रित्य क्षणं स्थितः । स शांभवस्तदा राजा सोऽपि तत्र समागतः ॥
ततः श्रान्तं शैववर्यं बिल्वमूलस्थितं नृपः । दृष्ट्वा शान्तिरसाक्रान्तः तुरङ्गादवतीर्य सः ॥ २९ ॥
एकाकी स ययौ मन्दं बिल्मूलं क्षुधातुरः । श्रान्तो भानुकरैस्तप्तः कोऽयमित्याह तं शनैः ॥
ततो वातः प्रचलितः शैवाङ्गात् भूतिसंयुतात् । तेन वातेन संप्रीतो भूपतिः सात्त्विकान्वितः ॥
तमाह शैवं श्रान्तोऽपि कुतो वा समुपागतम् । विपिने तव सञ्चारः कथं शार्दूलसंयुते ॥ ३२ ॥
निष्ठुरं हि मनः पूर्वं ममेदानीं न तादृशम् । त्वद्दर्शनादेव मेऽद्य सामर्थ्यं किं तवेदृशम् ॥ ३३ ॥
मया तु निहताः पूर्वं ब्राह्मणा एव केवलम् । तेषां तु गणना नूनमद्य साधो न जायते ॥ ३४ ॥
अहो ममापि विपिने कोऽयं कालविपर्ययः । प्रायो वश्यकरो मन्त्रस्तव तिष्ठति कश्चन ॥ ३५ ॥
शार्दूलैरपि सन्दृष्टो भवान् नात्र वने घने । अतस्तं वद मे मन्त्रं तव भृत्यत्वमागतः ॥ ३६ ॥
मया यद्यत्कृतं पापं तत्संख्याऽपि न दृश्यते । तन्निष्कृतिः कथं वा स्यात् तत्सर्वं वद सादरम् ॥
अद्यप्रभृति भृत्योऽहं तव नास्त्यत्र संशयः । कृपां कुरु विधेयोऽस्मि सर्वथा तव शांभव ॥
त्वदङ्गसङ्गिवातेन पूतः सात्त्विकतां गतः । भूतिं प्रयच्छ मे शैव मन्त्रपूतामनुत्तमाम् ॥ ३९ ॥

पापिष्ठेष्वपि कुर्वन्ति करुणामलिमाधवः । किंचित् त्वत्सन्निधानेन पापेभ्योऽपि न मे भयम् ॥
त्वं तावत्पापशार्दूलपञ्चानन इति स्मृतः । अतः परं क्व पापेभ्यो भयमद्य भविष्यति ॥ ४१ ॥
त्वत्सन्निधानजनकं न पुण्यमपि दृश्यते । एतज्जन्मकृतं पुण्यं पूर्वजन्मकृतं च न ॥ ४२ ॥
अकालवृष्टिरिव मे दृष्टिस्तव विशेषतः । तानि तानि विनष्टानि दुरदृष्टानि कोटिशः ॥ ४३ ॥
त्वद्दर्शनं पापराशेरशनिः स्पर्शनं तव । सर्वपुण्यनिधानानां मूलमित्यवधार्यते ॥ ४४ ॥
इत्युक्त्वा प्रणतो राजा शैवपुङ्गवमादरात् । ततस्तद्भालभूत्यंशैः संयुतो भूपतिस्तदा ॥ ४५ ॥
तद्देहान्निर्गतं पापं गजरूपमुपाश्रितम् । दग्धपुच्छं दग्धतुण्डं ददर्श स गजं नृपः ॥ ४६ ॥
ततः परं प्रणम्याशु स राजा शैवपुङ्गवम् । किमयं भगवन् ब्रूहि धूमाकारो गजोऽधुना ॥ ४७ ॥
निर्गच्छन्ति किलाङ्गाराः तदुत्तमाङ्गादनन्तरम् । ज्वलत्ययं सधूमोऽपि महापर्वतसन्निभः ॥ ४८ ॥
तस्मादपि प्रजायन्ते दग्धाः पातकपर्वताः । इदमत्यद्भुतं दृष्टं सर्वकष्टनिवारकम् ॥ ४९ ॥
सन्निधानं शांभवस्य भाग्यं वा किमतोऽधिकम् । सर्वसौभाग्यमूलत्वं ज्ञातं त्वत्सन्निधेर्मया ॥५०॥
अहो महदिदं भाग्यं भोगस्वर्गापवर्गदम् । इति तद्वचनं श्रुत्वा प्राह शाम्भवपुङ्गवः ॥ ५१ ॥
राजन्नाश्चर्यमेवैतत् ममाप्यत्र न संशयः । त्वत्तः कोऽप्यधिको लोके पुण्यवान् नेति मन्महे ॥
कृतं विल्वतरोरस्य पालनं जलदानतः । तदम्बुलवमानेन पापनाशस्तवाऽधुना ॥ ५३ ॥
विल्वमूले त्वया दत्ताः शीतला जलविन्दवः । तत्संख्यया प्रणष्टानि पातकानि बहूनि ते ॥५४॥
एकस्मिन् दिवसे सिक्तो विल्वः सलिलविन्दुभिः । तैरनन्तानि पापानि विनष्टानि न संशयः ॥
प्रत्यहं दीयते मूले बिल्वस्यास्य नृपोत्तम । जलं तेन महद्भाग्यं मुक्तिश्चाग्रे भविष्यति ॥ ५६ ॥
एतानि विल्वपत्राणि पवित्राणि नृपोत्तम । नूनं त्रिणेत्ररूपाणि पोषितानि जलार्पणैः ॥ ५७ ॥
त्वं तावदधुना वन्द्यो बृन्दारकगणैरपि । तव भाग्यस्य नेयत्ता मम मान्योऽसि सर्वथा ॥ ५८ ॥
महादेवस्वरूपोऽयं बिल्वो वेदैरपि स्तुतः । यथाकथञ्चिदेतस्य महिमा ज्ञायते कथम् ॥ ५९ ॥
वनमेतत् पावनं च बिल्वेनानेन केवलम् । एतद्वातानुषङ्गेन लिङ्गमङ्गं प्रजायते ॥ ६० ॥
पुण्यतीर्थानि यावन्ति लोकेषु प्रथितान्यपि । तानि सर्वाणि तीर्थानि बिल्वमूले वसन्ति हि ॥६१॥
बिल्वमूलजलैर्यस्तु मूर्धानमभिषिञ्चति । स सर्वतीर्थस्नातः स्यात् स एव भुवि पावनः ॥ ६२ ॥
बिल्वमूले महादेवं लिङ्गरूपिणमव्ययम् । यः पूजयति पुण्यात्मा स शिवं प्राप्नुयात् ध्रुवम् ॥
बिल्वमूले प्रजप्तास्तु मन्त्राः सिद्धिमुपागताः । तन्मन्त्रमहिमा तावत् ज्ञायते शंकरेण हि ॥
शक्तिहीनोऽपि यो मन्त्रो बिल्वमूलेषु जप्यते । स सिद्धः सकलं दद्यात् यदि माहेश्वरप्रियः ॥

बिल्वरूपं समासाद्य शिव एव स्वयं प्रभुः । लोकानामुपकाराय वनेऽस्मिन्नधितिष्ठति ॥ ६६ ॥
एतस्य बिल्वमूलस्याप्यालवालमनुत्तमम् । जलाकुलं महादेवो दृष्ट्वा तुष्टो भविष्यति । ६७ ॥
गन्धपुष्पादिभिः सर्वैरुपचारैः प्रयत्नतः । यो बिल्वं पूजयेद्भक्त्या सन्ततिस्तस्य वर्धते ॥ ६८ ॥
दीपमालां बिल्वमूले यः कल्पयति सादरम् । स तत्त्वज्ञानसम्पन्नो महेशान्तर्गतो भवेत् ॥ ६९ ॥
प्रदक्षिणनमस्कारान् बिल्वमूले प्रयत्नतः । ते पापपर्वतानां च नाशकाः स्युर्न संशयः ॥ ७० ॥
नमस्कार्यत्वबुद्ध्या यः प्रणतो दण्डवद्भुवि । तस्मात् पतन्ति पापानि नोत्तिष्ठन्ति कदाचन ॥
बिल्वशाखां समादाय हस्तेन नवपल्लवम् । गृहीत्वा पूजयेद्बिल्वं तेन पापैः प्रमुच्यते ॥ ७२ ॥
बिल्वमूले शिवरतं भोजयेद्यस्तु भक्तितः । एकं वा कोटिगुणितं तस्य पुण्यं प्रजायते ॥ ७३ ॥
बिल्वमूले क्षीरयुक्तमन्नमाज्येन संयुतम् । यो दद्याच्छिवभक्ताय स दरिद्रो न जायते ॥ ७४ ॥
पुरा कश्चिदभूद्विप्रो विन्ध्यदेशमुपाश्रितः । स दरिद्रः कुटुम्बी च पुत्रपौत्रादिसंयुतः ॥ ७५ ॥
प्रतिद्वारमटत्येव कणार्थं पुत्रसंयुतः । कणान् कथञ्चित्संप्राप्य तैः स जीवति भूपते ॥ ७६ ॥
ततः परं मुनिवरं मार्कण्डेयं ददर्श सः । कणार्थं स गृहद्वाराण्यटत्येव स पुत्रकः ॥ ७७ ॥
ततस्तं मुनिशार्दूलं प्रणतो दण्डवद्भुवि । प्राह दुःखसमाक्रान्तः पाहि पाहीति संवदन् ॥ ७८ ॥

विप्र उवाच —

वृद्धोऽहं पुत्रपौत्राद्यैः वृतः पत्न्यापि वृद्धया । न भक्ष्यं प्राप्यते विद्वन् शरीराणि कृशान्यपि ॥
धनपूर्णेषु देशेषु धान्यपूर्णेषु सर्वदा । क्षीयते तैर्न दीयन्ते द्वित्रा अपि कणाः परम् ॥ ८० ॥
दातुमभ्युद्यताः पूर्वं विरतास्ते भवन्त्यपि । अन्येभ्यो दीयते धान्यं मह्यमेतैर्न दीयते ॥ ८१ ॥
कदाचित् प्राप्तमप्यन्नं कर्दमेषु पतत्यधः । कदाचिन्नीयते चोरैः पश्यत्येव मयि स्फुटम् ॥ ८२ ॥
आहारेण विना सर्वे रुदन्त्येतेऽपि बालकाः । अतः परं मया विद्वन् किं कर्तव्यं वदाधुना ॥
युगपद्यदि सर्वेषामेतेषां मरणं भवेत् । तथाऽपि सुखमेवेति मन्ये मुनिगणोत्तम ॥ ८४ ॥
इति तद्वचनं श्रुत्वा मुनिर्विस्मयमानसः । विचिन्त्य हृदि तद्बीजं ततः परमुवाच तम् ॥ ८५ ॥

मार्कण्डेय उवाच —

जन्मान्तरे त्वया विप्र शैवाय प्रीतिपूर्वकम् । न दत्तमन्नं बिल्वस्य मूले दारिद्र्यनाशके ॥ ८६ ॥
शांभवं रूपमासाद्य साक्षादन्नपतिः स्वयम् । बिल्वमूलेषु भुक्त्वान्नं करोत्यन्नपतिं नरम् ॥ ८७ ॥
न दत्तं बिल्वमूलेषु शांभवायान्नमादरात् । अतस्तवेदृशं दुःखं अन्नाभावेन जायते ॥ ८८ ॥
अधुना वा बिल्वमूले शांभवाय प्रयत्नतः । प्रयच्छान्नमिदं भक्त्या तेनान्नं लभ्यते त्वया ॥ ८९ ॥

तदन्नस्य प्रदानेन सर्वदाऽप्यन्नराशिभिः । तूर्णं पूर्णं भवत्येव मन्दिरं तव सर्वदा ॥ ९० ॥
विश्वस्य वचनं विप्र त्वरया बिल्वमुत्तमम् । पश्य प्रयाहि तन्मूले पूजयस्व सदाशिवम् ॥ ९१ ॥
तत्रैव शांभवायान्नं देहि भक्तिपुरःसरम् । अतः परं न दारिद्र्यं न दुःखमभिजायते ॥ ९२ ॥
इति तद्वचनं श्रुत्वा नत्वा तं मुनिपुङ्गवम् । तदेव धान्यमादाय ययौ बिल्ववनं प्रति ॥ ९३ ॥
तत्र बिल्वतरोर्मूले दृष्टः शांभवपुङ्गवः । शिवलिङ्गार्चनरतो भस्मोद्धूलितविग्रहः ॥ ९४ ॥
उपवासैः कृशतनुः वायुमात्राशनः सदा । तं दृष्ट्वा प्रणतो विप्रः कृतार्थोऽहमिति स्मरन् ॥ ९५ ॥
ततः सोपार्जितं धान्यं तुषनिर्मुक्तमादरात् । कृत्वा पाकोद्यतो जातः स्नात्वा कुण्डे हरान्तिके ॥
बिल्वच्छायासमाक्रान्ते बिल्वपत्रसमावृते । तत्र सिद्धं चकारान्नं मृदुलं नवमुत्तमम् ॥ ९७ ॥
तदन्नं समुपादाय बिल्वमूले शिवान्तिकम् । नीत्वा शिवाय नैवेद्यं ददौ भक्तिपुरःसरम् ॥ ९८ ॥
तदन्नं समभूद्वृद्धं दृष्ट्वा तद्गिरिसन्निभम् । दृष्ट्वा सन्तोषमापन्नः पुत्रपौत्रसमन्वितः ॥ ९९ ॥
ततः परं स शैवोऽपि तदन्नं गिरिसन्निभम् । विलोक्य हर्षसंपूर्णः क्षुधितस्तमुवाच ह ॥ १०० ॥

शैव उवाच —

अहो ब्राह्मण धन्योऽसि शिवायान्नमिदं शुभम् । दत्तमल्पं प्रवृद्धं हि भुक्तशेषं शिवेन तु ॥१०१॥
तव भाग्यस्य नान्तोऽस्ति दारिद्र्यं नष्टमेव ते । अतः परं शांभवेभ्यो देयमन्नं इदं शुभम् ॥१०२॥
अस्मिन् वने बिल्ववृक्षाः कोटिशः सन्ति शांभवाः । तन्मूलेषु शिवासक्ताः शिवलिङ्गार्चनप्रियाः ॥
तान् प्रणम्य मुहुर्भक्त्या तेभ्योऽन्नमिदमुत्तमम् । प्रयच्छ तेन सन्तुष्टो भवेदन्नपतिः स्वयम् ॥
येनान्नपतिभक्ताय दत्तमन्नं प्रयत्नतः । तेनान्नं प्राप्यते दिव्यं नानाविधमनुक्षणम् ॥ १०५ ॥
इत्येतद्वचनं श्रुत्वा नत्वा शांभवपुङ्गवान् । चकार प्रार्थनं भक्त्या तदन्नग्रहणाय सः ॥ १०६ ॥
ततस्ते शिवनैवेद्यं इदमत्युत्तमं नवम् । इति भुक्त्वा प्रहृष्टास्ते तेन तुष्टः शिवः सदा ॥ १०७ ॥
ततः स भुक्त्वा विप्रोऽपि स पुत्रो भार्यया सह । पौत्रैश्च परमानन्दं प्रापाकण्ठान्नसङ्गमात् ॥
ततो ययौ गृहं सोऽपि स्वकीयं धान्यसंयुतम् । दृष्ट्वा प्रहृष्टो महिमा कोऽप्यमद्भुत इत्यपि ॥
ततः परं विशालानि चकार सदनानि सः । अन्नराशिसमाक्रान्तान्युत्तमानि प्रतिक्षणम् ॥ ११० ॥
तेन तद्बिल्वमूलेषु भोजयामास शांभवान् । दिव्येनान्नेन विप्रोऽसौ कोटिशो नृपसत्तम ॥ १११ ॥
अतः पूजय भूपाल बिल्वमूले महेश्वरम् । प्रयच्छान्नं शांभवेभ्यः प्रत्यहं प्रीतिपूर्वकम् ॥ ११२ ॥
अतः परं न हिंसाऽपि विधेया पक्षिणामपि । कारयस्वात्र यत्नेन सुन्दरं शिवमन्दिरम् ॥ ११३ ॥
एतस्मिन्नन्तरे रम्ये बाणलिङ्गमनुत्तमम् । सोमेश्वरात्समानीय स्थापनीयं प्रयत्नतः ॥ ११४ ॥

विल्वमूले बाणलिङ्गं स्थापयित्वा समर्चय । विभूतिधारणं कृत्वा कुरु रुद्राक्षधारणम् ॥ ११५ ॥
अतः परं तु विरतः संसारादघसागरात् । महेश्वररतो भूत्वा लिङ्गपूजारतो भव ॥ ११६ ॥
सदोषाः सर्वेषां विषविषमपाका विषयिणां विषप्रायाः प्रायः प्रियतममहिष्यादिविषयाः ।
अतो हित्वा मोहं भज भज महादेवमवहं महादेवं हित्वा नहि नहि महोत्साहदमहो ॥ ११७ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे विल्ववृक्षमहिमावर्णने
दरिद्रोपाख्यानं नाम द्वाविंशोऽध्यायः ॥

—o—

## अथ त्रयोविंशोऽध्यायः ।

ब्रह्मोवाच—

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । प्रणम्य दण्डवद्भूमौ तमुवाच शिवार्चकम् ॥ १ ॥
शिवदीक्षां प्रयच्छाद्य तया पूतो भवाम्यहम् । अनन्यशरणं विद्धि मां पापविरतं नृपम् ॥ २ ॥
शिवदीक्षाप्रभावो वा महिमा शङ्करस्य वा । कीदृशस्तं वदाद्याशु येन पापं विनश्यति ॥ ३ ॥
इत्याकर्ण्य वचस्तस्य शांभवः प्राह तं नृपम् । विभूतिधारणां कृत्वा शपथं च महेश्वरे ॥ ४ ॥

शांभव उवाच —

शिवदीक्षाप्रभावस्तु शिवेन ज्ञायते परः । यद्यप्यथापि तद्रूपं शृणु सादरमस्ति कः ॥ ५ ॥
शिवमन्त्रे दीक्षितस्य तनुं दृष्ट्वाऽपि दूरतः । प्रयान्ति यमदूतास्तु तथा पातकपर्वताः ॥ ६ ॥
अधुनैव त्वया दृष्टः पापाकारो गजो महान् । महापर्वतसङ्काशो ज्वलत्यद्यापि पश्य तम् ॥ ७ ॥
पापानि गजरूपेण निर्गतानि तवाधुना । मत्कालभूतिसङ्गेन मदङ्गालोकनादपि ॥ ८ ॥
दीक्षितः शैवविद्यायां बाल्ये भाग्यवशादहम् । श्रीकालकालकरुणा संपूर्णा मयि तिष्ठति ॥ ९ ॥
ये ये शांभवविद्यायां दीक्षितास्ते तपोधनाः । तत्पादरजसा तावत् पावनं भुवनत्रयम् ॥ १० ॥
यस्य शांभवविद्यायां भक्तिर्भवति भाग्यतः । तं नमन्ति सुराः सर्वे शर्वानुग्रहकांक्षया ॥ ११ ॥
अक्षयं धनमस्माकं सा विद्या शांभवी खलु । अन्यत् धनं क्षयं याति न तद्याति क्षयं नृप ॥१२॥
बहुपुण्याब्धयः शैवाः तां दीक्षां प्राप्य सादरम् । दृष्ट्वा भवन्ति ते तावत् द्विजा एव कलौ खलु ॥
न यस्य पातकाद्भीतिः न यमादपि जायते । तस्य पुण्यस्वरूपस्य विद्या भवति शांभवी ॥ १४ ॥

कैलासमपि संप्राप्ताः शैवाः शांभवविद्यया । सोपानरूपा विद्येयं कैलासारोहणोद्यमा ॥ १५ ॥
नान्यैरुपायैस्तल्लाभः कैलासो दुर्लभोऽप्ययम् । सुलभत्वेन विज्ञेयस्तया शांभवविद्यया ॥ १६ ॥
न यस्य शांभवी विद्या तस्य जन्म निरर्थकम् । वन्ध्या तज्जननी राजन् तेन पुत्रेण किं फलम् ॥
मानुषं जन्म संप्राप्य द्विजत्वं च विशेषतः । संप्राप्य शांभवीं विद्यां राजते द्विजराजवत् ॥१८॥
तृप्ता भवन्ति पितरः तया शांभवविद्यया । तद्विद्यामहितं विप्रं प्रणमन्ति मुनीश्वराः ॥ १९ ॥
ब्राह्मणः शांभवीं विद्यां यावन्नाप्नोति पुण्यदाम् । तावन्न स प्रणामार्हो न दानार्होऽपि भूपते ॥
अभ्यस्य शांभवीं विद्यां शिवार्चनरतो यदि । तदैव स्यात् प्रणामार्हो दानार्होऽपीति मन्महे ॥
परमा शांभवी विद्या दुर्लभा परमार्थतः । अतस्तत्राधिकारोऽपि दुर्लभत्वेन निश्चितः ॥ २२ ॥
संप्राप्य शांभवीं विद्यां शंभुपूजां करोति चेत् । तदा शिवेन सा पूजा गृह्यते प्रीतिपूर्वकम् ॥
तयैव विद्यया दत्तं शिवलिङ्गे जलादिकं । सुधात्वं याति तेनैव मुक्तास्तत्पितरोऽपि हि ॥ २४ ॥
स्वपुत्रं पितरो दृष्ट्वा तया शङ्करपूजकं । पीत्वा तज्जलमानन्दप्राप्त्या नेच्छन्ति च स्वधाम् ॥
इत्याकर्ण्य वचस्तस्य भूपतिः प्रणतः पुनः । अधुना शांभवीं विद्यां देहि देहीति सादरम् ॥ २६ ॥
ततस्तद्विनयं दृष्ट्वा वीरः शांकरपुङ्गवः । तथाऽस्त्विति तमप्याह सोऽपि तुष्टस्ततो नृपः ॥ २७ ॥
ततः समागता तस्य सेना सा वाहिनी विभोः । संख्यामार्गमतिक्रान्ता गजवाजिविराजिता ॥
तस्य प्रधानपुरुषाः क्व राजा गत इत्यपि । विचारव्याकुलाः सर्वे बिल्वमूलमुपागताः ॥ २९ ॥
तत्र राजानमासीनं विनयानतकन्धरम् । विलोक्य विस्मयापन्नाः किमभूदिति भो बुधाः ॥ ३० ॥
क्रूरोऽयं पापनिरतः पुराऽद्य प्रान्तरं ततः । अधुना सत्त्वमापन्नः किमित्याश्चर्यसंयुताः ॥ ३१ ॥
ततस्ते सत्त्वसंपन्नाः सन्निधानेन भूपतेः । नतास्ते भूपतिं प्राहुः गन्तव्यमिति सत्वरम् ॥ ३२ ॥
ततस्तानाह भूपालो विस्मयं जनयन् मुदा । शृण्वन्तु सावधानेन कर्तव्यमधुनोच्यते ॥ ३३ ॥
शांभवाग्रेसरस्यास्य सन्निधाने सदा मया । स्थातव्यमत्र नगरं रचनीयं विशेषतः ॥ ३४ ॥
रत्नमन्दिरमत्रैकं कर्तव्यमतिसुन्दरम् । अत्रैव बाणलिङ्गानि स्थापनीयान्यनन्तधा ॥ ३५ ॥
एतस्य बिल्ववृक्षस्य छाया मध्यन्दिने रवौ । यावत् तावत् नार्मदानि सन्तु लिङ्गानि कोटिशः ॥
यावती रचना तत्र ततः शतगुणा यदि । अत्र स्यात् तर्हि सन्तोषः तत्र तावन्न गम्यते ॥ ३७ ॥
विश्वकर्मा समायातु रचनां नगरस्य सः । करोतु सत्वरं रत्नैः नानामण्डपमण्डितम् ॥ ३८ ॥
अधुना शिवदीक्षार्थं यद्यत् द्रव्यमपेक्षितम् । तदानयध्वं यत्नेन त्वरयेत्याह तान् नृपः ॥ ३९ ॥
ततस्तद्वचनं श्रुत्वा राज्ञः क्रूरस्य मन्त्रिणः । तदुक्तं सर्वमप्याशु कर्तव्यमिति चोचिरे ॥ ४० ॥

ततो निर्मितमेवाशु नगरं स्वर्गसन्निभम् । मन्दिरं च महेशस्य नानारत्नविराजितम् ॥ ४१ ॥
ततः स्नात्वा प्रयत्नेन भस्मनोद्धूल्य तां तनुम् । रुद्राक्षमालाभरणः तमुवाच मुनीश्वरम् ॥ ४२ ॥
स्वामिन् मध्याह्नगो भानुः पुण्यकालोऽयमुत्तमः । दीक्षासाधनसंपत्तिः जातेत्याह नृपोत्तमः ॥
स्थापयित्वा ततो भक्त्या मूले बिल्वतरोः शुभे । लिङ्गानि तानि संपूज्य बिल्वपत्रादिसाधनैः ॥
होमं कृत्वा प्रयत्नेन तया शांभवविद्यया । राज्ञे स शांभवीं विद्यां ददौ प्रीतिपुरःसरम् ॥ ४५ ॥
रराज राजा संप्राप्य तां विद्यां शांभवीं तदा । नीरन्ध्रमेघनिर्मुक्तभानुमण्डलवद्बुधाः ॥ ४६ ॥
राहुग्रस्तार्कवद्राजा स पूर्वं विद्यया विना । तं प्राप्य राहुनिर्मुक्तभानुवत् भूपतिर्बभौ ॥ ४७ ॥
मन्त्रिणस्तं नृपं दृष्ट्वा तेऽपि शांभवविद्यया । संपन्नास्तस्य भार्याश्च तद्भृत्या अपि कोटिशः ॥
ततस्तन्नगरं सर्वं शाङ्करैः परिवारितम् । तत्राशाङ्करवार्ताऽपि श्रूयतेऽपि न कैरपि ॥ ४९ ॥
शिवमन्दिरसंक्रान्तं नगरं सर्वतः सदा । मन्दिरं तादृशं तत्र न यत्र शिवमन्दिरम् ॥ ५० ॥
दुष्टेऽपि नगरे तस्मिन् अतिक्रूरोऽपि शाङ्करः । शिवलिङ्गार्चनपरो भवत्येवं न संशयः ॥ ५१ ॥
दृष्ट्वा तन्नगरं दूरात् प्रपलाय्य प्रयान्त्यपि । भयग्रस्ताः कृतान्तस्य दूताः सर्वे मदोद्धताः ॥५२॥
एतादृशोऽयं महिमा शांभवानामनामयः । अतस्तद्वर्णनं कर्तुं कः समर्थो भवेद्भुवि ॥ ५३ ॥
तेन राज्ञा धनं यावत् अर्जितं पूर्वमादरात् । तत् सर्वं प्रददौ भक्त्या शांभवेभ्यस्तदाज्ञया ॥ ५४ ॥
शांभवाः प्रत्यहं तेन बिल्वमूलेषु कोटिशः । भोजनाद्यैः तोषिताश्च प्रत्यहं प्रीतिपूर्वकम् ॥ ५५ ॥
तस्य बिल्वतरोरेकः प्राकारस्तेन कारितः । परितो योजनायामो मणिमण्डलमण्डितः ॥ ५६ ॥
तन्मध्ये रत्नभवनं योजनार्धायमं कृतम् । तत्र लिङ्गानि रम्याणि स्थापितानि बहून्यपि ॥ ५७ ॥
रत्नमालापरिक्रान्तं तदेव शिवमन्दिरम् । रत्नदीपपरिक्रान्तं रत्नभूषणभूषितम् ॥ ५८ ॥
उदारास्तस्य ये दाराः कोटिशस्ते मनोहराः । सायं प्रगेऽपि नाट्यानि चक्रुस्तद्गिरिशालये ॥ ५९ ॥
तद्दर्शनार्थमस्माभिः गम्यते भक्तिपूर्वकम् । तेनादरः कृतोऽस्माकं एते शैवा इति श्रिया ॥ ६० ॥
एतादृशेन तेनैव राज्ञा भूमण्डले जनाः । शैवाः कृतास्तदा कोऽपि नाशैवो भुवि दृश्यते ॥ ६१ ॥
तदा यमालये कोऽपि नास्ति न श्रूयतेऽपि च । कोट्यश्च स्वर्गमायान्ति सर्वे तद्देशवासिनः ॥
मृगादीनां च का वार्ता तस्मिन् शैवे सति श्रिया । रराज भूतलं सर्वं शैवमण्डलमण्डितम् ॥ ६३ ॥
तेनोषितमहाकल्पं सशरीरं समागतम् । स राजा दारसहितो मन्त्रिभिः सह सादरम् ॥ ६४ ॥
स तेनैव शरीरेण वैकुण्ठेऽपि स्थितो मुदा । कल्पमात्रं ततो राजा स्वराज्यमगमन्मुदा ॥ ६५ ॥
एतादृशास्तु बहवः स्थिताः पूर्वं नृपोत्तमाः । शांकरानुग्रहादेव सर्वभाग्यसमन्विताः ॥ ६६ ॥

[1]इयं भिल्लसती देवाः दुर्भगा व्याधिपीडिता । जीवनं तावदेतस्याः काष्ठविक्रयणादिना ॥ ६७ ॥
एतन्मरणकाले तु शैवोच्छिष्टपलाशभाक् । करोऽस्यास्तेन पुण्येन यमेनाभ्यर्चिता मुदा ॥ ६८ ॥
इन्द्रेणाभ्यर्चिता भक्त्या स्वर्गलोकमुपागता । अत्रेयमागता धन्या पूजिताऽपि मया मुहुः ॥ ६९ ॥
अतः परं विष्णुलोकं प्रयास्यति विमानतः । बहुकालमुषित्वा सा तत्र तुष्टा भविष्यति ॥ ७० ॥
ततः परमियं नारी क्षीरसागरकन्यका । भवित्री रूपलावण्यसंयुता भाग्यसंयुता ॥ ७१ ॥
स सागरस्तु तां दृष्ट्वा सन्तुष्टोऽपि भविष्यति । लक्ष्मीनाम्ना नामकर्म स करिष्यति सागरः ॥
उमाप्रसादलब्धेयं कन्यकेयं मयेति सः । लक्ष्मीनामाङ्कितां चक्रे तेन सातितरां बभौ ॥ ७३ ॥
ततः स कस्मै देयेयं कन्यका कमलानना । इयमाजानदेवानां गणनामपि या खलु ॥ ७४ ॥
अतः परं कर्मदेवास्तिष्ठन्ति बहवः खलु । तेषु कस्मै प्रदातव्या को वा प्रीतो भविष्यति ॥ ७५ ॥
श्रेष्ठो नारायणस्तेषु कर्मदेवेष्वतो मया । तस्मै देयेयमित्येव तस्मै दास्यत्यसंशयम् ॥ ७६ ॥
सा तेन परिणीताऽपि कियत्कालं यथेच्छया । उषित्वा तातसदने पुनर्विष्णुसमन्विता ॥ ७७ ॥
नारायणस्य रमणी सा लक्ष्मीर्लक्षणान्विता । तन्नामानि भविष्यन्ति बहूनि विविधान्यपि ॥ ७८ ॥
इन्दिरा कमला पद्मा श्रीरित्यादीनि भो बुधाः । ईदृशं भाग्यमनया प्राप्तं तत्पत्रसङ्गमात् ॥ ७९ ॥
शिवनैवेद्यफलभुक्भोजनेन मनोहरः ॥ ८० ॥

शांकरः —

इति ब्रह्मवचः श्रुत्वा तत्सभानिलयाः सुराः । अतिविस्मयमापन्नाः शिवध्यानरतास्तदा ॥ ८१ ॥
तथा च शिवनैवेद्यफलभोजनपुण्यतः । रूपं प्रवर्धते भाग्यं तत्प्रसादः स तादृशः ॥ ८२ ॥
अतः परं किमेतस्य वर्णनीयं फलं मया । शिवार्पितस्य नीरस्य फलस्यापि विशेषतः ॥ ८३ ॥
भोजनेन विनष्टानि नैवेद्यस्य महेश्वरे । अर्पितस्यापि पापानि धर्माश्च समुपागताः ॥ ८४ ॥
अनेकजन्मतपसा शिवनैवेद्यभोजनम् । प्राप्यते दुर्लभं पुंसां देवानां च विशेषतः ॥ ८५ ॥
शिवनैवेद्यपात्रस्य महिमा वर्णितो मया । अनन्तो नतु संपूर्णः पूर्णो वा विषयोऽपि वा ॥ ८६ ॥
इति तद्वचनं श्रुत्वा स विप्रोऽपि प्रणम्य तम् । सिद्धलिङ्गार्चनं कर्तुं चकार मतिमादरात् ॥
इदमेतादृशं लिङ्गं सर्वमङ्गलदायकम् । पूजनीयं प्रयत्नेन देवानामपि दुर्लभम् ॥ ८८ ॥
अस्मिन् लिङ्गे फलं नीरं अन्नं वा यत् समर्पितम् । तद्भोजनेन भाग्यानि भविष्यन्त्येव कोटिशः ॥

शिवः —

---

[1] इयं भिल्लसतीत्यादि सार्धश्लोकद्वयं ढ. कोशे नास्ति ।

इति तद्वचनं श्रुत्वा गन्धर्वनगराधिपः । तल्लिङ्गपूजनोद्युक्तः सर्वसाधनसंयुतः ॥ ९० ॥

रत्नादिभिः समभ्यर्च्य सायङ्काले मुहुर्मुहुः । रत्नदीपप्रभाकूटैः पूजयामास सादरम् ॥ ९१ ॥

ततः स्वदारानाहूय नाटयार्थं लिङ्गमन्दिरे । योजयामास ते सर्वे नाट्यविद्याविशारदाः ॥ ९२ ॥

तैरेव गानमारब्धं नाटयं कृत्वा पुनः पुनः । रुद्रवीणां समादाय प्रत्येकं लिङ्गमन्दिरे ॥ ९३ ॥

रुद्रवीणाध्वनिं श्रुत्वा पवनाघातजं मुहुः । सन्तुष्टास्ते दुर्लभोऽयं ध्वनिरित्याहुरादरात् ॥ ९४ ॥

प्रार्थनास्तैः कृतास्तत्र नाट्यान्ते मुहुरादरात् । अस्मासु रुद्रवीणात्वं भवत्वित्यतिभक्तितः ॥

ततः परं स सिद्धेशस्वरूपेण मया शिवे । तथाऽस्त्विति वरो दत्तः तेन जातास्तथैव ते ॥ ९६ ॥

ते सर्वे रुद्रवीणात्वं प्राप्यात्र मम मन्दिरे । तिष्ठन्ति गिरिजे तत्र शृणु तद्ध्वनिमादरात् ॥ ९७ ॥

इति तद्वचनं श्रुत्वा गौरी सन्तुष्टमानसा । विहारनिरता जाता तद्ध्वनिश्रवणोत्सवैः ॥ ९८ ॥

वसन्तोत्सवसंपन्ना कस्तूरीकर्दमादिभिः । समाक्रान्ता महेशोऽपि तयाक्रान्तो मुहुर्मुहुः ॥ ९९ ॥

सरःपारं समासाद्य फुल्लराजीवराजितम् । मणिसोपानसंबद्धं जलक्रीडां चकार सः ॥ १०० ॥

स जलक्रीडया श्रान्तः तत्रैव मणिमण्डपे । रत्नसिंहासनाक्रान्ते स्थितो गिरिजया सह ॥ १०१ ॥

ततो दिव्यदुकूलानि परिधाय महेश्वरः । अम्बया सह दिव्यैश्च भूषणैश्च विभूषितः । १०२ ॥

अङ्गरागं चकाराशु घनसारद्रवादिभिः । रराज गौरी तेनैव मङ्गलापतिसंयुता ॥ १०३ ॥

ततः प्रासादमत्युच्चकुन्दमन्दाररञ्जितम् । तैरेव रचितं प्राप योजनार्बुदमुन्नतम् ॥ १०४ ॥

तत्र स्थित्वा महादेवस्तया गिरिजया सह । रेमे स परमानन्दविग्रहो मुहुरादरात् ॥ १०५ ॥

पापारण्यदवानलो जनिजरासंसारहालाहलो
रोगोद्वेगपतङ्गसंघनलिकासङ्घातकोलाहलः ।
दुष्टारिष्टसदर्पसर्पकुहरापाराचलानन्दुलः
कालः कोपि किलापदामपि कथा या कालकालस्य सा ॥ १०६ ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे भिल्लवनितावृत्तान्ते शिवनैवेद्यमहिमावर्णनं नाम त्रयोविंशोऽध्यायः ॥

—:×:—

# अथ चतुर्विंशोऽध्यायः ।

व्यासः —

तत्र सिंहासनासीनं महेशानमुमा मुहुः । आलिङ्ग्यालिङ्गनैस्तुष्टमष्टमूर्तिमुवाच सा ॥ १ ॥

श्रीपार्वती —

भगवन् सत्यलोकोऽपि त्वया सृष्टो महाप्रभो । तस्य लोकस्य महिमा महानेवानुवर्तते ॥ २ ॥

तन्निवासस्य हेतुः कः तस्य लोकस्य कस्त्वया । पालनाय नियुक्तोऽस्ति तेन पुण्यं च किं कृतम् ॥

इदं सर्वं विशेषेण श्रोतव्यं फाललोचन । कियत्कालमवस्थानं तस्य तत्र भविष्यति ॥ ४ ॥

इति तद्वचनं श्रुत्वा मधुरं च मनोहरम् । शङ्करोऽपि सुधारूपां गिरमाह शिवां प्रति ॥ ५ ॥

शिवः —

सत्यलोकोऽपि दुष्प्रापः सर्वेषामपि सर्वथा । सुमेरुमध्यभागस्थः मद्विलासाश्रयः परम् ॥ ६ ॥

तस्मिन् लोके मनोज्ञानि वनानि सवनान्यपि । जलकल्लोललोलानि विमलानि सरांस्यपि ॥ ७ ॥

उत्फुल्लानि सरोजानि सर्वदा तेषु सन्त्युमे । मन्दारतरवस्तत्र कोटिशः कमलानने ॥ ८ ॥

तत्रापि सन्ति गिरिजे रत्नमन्दिरकोटयः । तेषु तिष्ठन्ति लिङ्गानि मनोज्ञानि मनोरमे ॥ ९ ॥

तदालोकनमात्रेण शुभवृद्धिः प्रजायते । तत्पूजया मङ्गलानि भवन्त्येव प्रतिक्षणम् ॥ १० ॥

तत्र न क्षुधया पीडा तृषया वा वरानने । तत्र स्थितं पुरा गौरी विहाराय मया तदा ॥ ११ ॥

आगतं नन्दिकेशेन कैलासात् त्वरया शिवे । कुत्र क्रीडति देवेशः शिव इत्याकुलस्तदा ॥ १२ ॥

तत्र सिंहासनारूढं वेदवन्दीगणस्तुतम् । मनोज्ञवेषं गीर्वाणवाणीसंस्तुतमादरात् ॥ १३ ॥

आगत्य दण्डवन्नन्दी प्रणतो भक्तिपूर्वकम् । विनयावनतः प्राह कृताञ्जलिपुटः शिवे ॥ १४ ॥

नन्दिकेशः —

भगवन् सर्वलोकेश देवदेव महेश्वर । कोऽयं विलासो भगवन् अवस्थानमिदं कथम् ॥ १५ ॥

यादृशी रचना शंभो कैलासस्थानमन्दिरे । न तत्कोटयंशकोटयंशकोटयंशोऽपि च शङ्कर ॥

कैलासोपवने शोभा या शोभा भुवनेषु च । तत्र मन्दारतरवो जायमानाः फलान्विताः ॥ १७ ॥

मन्दारांकुरसञ्जातफलानां गणनापि न । प्रसूनैः सह जायन्ते मन्दारांकुरकोटयः ॥ १८ ॥

तदंकुरफलस्यापि यो रसः स सुधारसं । तिरस्करोति सहसा तन्माधुर्यं क्व वर्तते ॥ १९ ॥

तदंकुरप्रसूनानां गन्धलेशोऽपि वस्तुतः । कस्तूरी गन्धसंन्देह तिरस्कारकरः खलु ॥ २० ॥
कुन्दादीनि प्रसूनानि भवन्त्येव प्रतिक्षणम् । तदुत्पत्तिः कदापीश प्रतिबद्धा न सर्वथा ॥ २१ ॥
अन्येषामपि पुष्पाणां धारारूपा जनिः खलु । अखण्डबिल्वपत्राणि जायन्तेऽपि तदङ्कुराः ॥२२॥
बिल्वाङ्कुरैः समागत्य शिवलिङ्गस्य पूजनम् । क्रियते बिल्वपत्राद्यैस्तदतीव मनोहरम् ॥ २३ ॥
मरन्दधारासिक्तानि शिवलिङ्गानि कोटिशः । बिल्वादिभिः पूजितानि प्रसन्नानि महेश्वर ॥ २४ ॥
तल्लिङ्गदर्शनं त्यक्त्वा मनोऽन्यत्र न यात्यपि । तदालोकननेयानि दिनानीति मतिर्मम ॥ २५ ॥
तस्मिन्नुपवने शोभा या सा वाग्विषया कथम् । वनशोभा महादेव श्रुताऽपि शुभदायिनी ।२६॥
भृङ्गैः पिकैः शुकैः हंसैः चकोरैरपि सारसैः । रत्नाकारैरपारैस्तैः व्याहृतं वनमीश्वर ॥ २७ ॥
सुवर्णवर्णपर्णानां कदलीनां फलैरपि । अपारैर्व्यावृतं शम्भोः तद्गन्धव्यावृतं वनम् ॥ २८ ॥
तत्रेक्षुदण्डा जायन्ते सुधाफलसमन्विताः । तद्रसादधिकः कोऽपि रसस्तु मधुनोऽपि न ॥ २९ ॥
सहकारांकुरैरेव सहकारफलान्यपि । परिपक्कानि जायन्ते प्रसूनं च न दृश्यते ॥ ३० ॥
मुक्ताविद्रुमवल्लीनामतस्तत्र न सर्वथा । पुष्पासाराः सर्वदापि सदा पुष्पोच्चयाः शिव ॥ ३१ ॥
नीलाचलानां धिक्कारः कृतः स्यादलिमण्डलैः । तेऽपि गायन्ति नामानि मधुराणि तव प्रभो ॥
इदमेतावदीशान कैलासनगराद्बहिः । नगरान्तरशोभा तु न मनोगोचरा प्रभो ॥ ३३ ॥
[1]तत्तादृशं स्थलं त्यक्तं किमत्र स्थीयते प्रभो । इदं हारविहारार्हं कथं वा स्थलमीश्वरम् ॥ ३४ ॥
ममाप्यत्र रुचिर्नेश तव किं वा रुचिः शिव । लोके रुचिकरं वस्तु तादृशं नैव दृश्यते ॥ ३५ ॥
यादृशं शङ्करावासे कैलासे सुखमीश्वर । तज्जातीयसुखस्यापि नात्र संभावना खलु ॥ ३६ ॥
यदसंभावितं लोके तत्सर्वं तत्र शङ्कर । अतः कथं वा तत्त्यागे मतिः परमसुन्दरे ॥ ३७ ॥
तत्र यद्रत्नसदनं कैलासद्वारि दृश्यते । तद्ब्रह्माण्डे न कुत्रापि तत्कोटयंशोपि कुत्र वा ॥ ३८ ॥
तत्र स्थितिर्महादेव तव योग्येति मे मतिः । अयोग्या स्थितिरत्रेति त्वयापि ज्ञायते प्रभो ॥३९॥
नाहं विज्ञापनां कर्तुमधिकारी तथापि किम् । विज्ञापनेयं हृदये ज्ञापनायाधितिष्ठतु ॥ ४० ॥
किं चानुग्रहपात्राणि भुवनानि चतुर्दश । तव तानि विचित्राणि रम्याणीत्यपि मन्महे ॥ ४१ ॥
तेषु सर्वेषु भव्येषु भुवनेषु शुभावहम् । कैलासभुवनं मन्ये भवानीरमण प्रभो ॥ ४२ ॥

व्यासः —

---

1 इदमर्धं D कोशे नास्ति

इत्याकर्ण्य वचस्तस्य प्राह गौरीमनोहरः । सन्तोषं जनयन्नेव घनगंभीरया गिरा ।। ४३ ।।
सत्यमुक्तं त्वया नन्दिन् अत्रार्थे विस्मयोऽपि न । कैलासादधिकः को वा देशो देशेषु विश्रुतः ।।
स नैव तपसा प्राप्यो घोरेणाप्यमितेन वा । नान्यैरपीति लोकेषु कैलासः परमो मतः ।। ४५ ।।
न देवेषु यथा देवो मदन्योऽप्यधिकस्तथा । तथा सर्वेषु देशेषु कैलासस्त्वाधकाधिकः ।। ४६ ।।
यथा गोक्षीरमधिकं क्षीरेषु विविधेष्वपि । तथा ... अधिकः ।। ४७ ।।
मधुरेषु यथा श्रेष्ठा मधुरा सिकशर्करा । तथा .. अधिकः ।। ४८ ।।
यथा घृतेषु सर्वेषु गोघृतं सुमनोहरम् । तथा ... ।। ४९ ।।
परमान्नं यथान्नेषु सर्वेष्वप्यधिकं श्रुतम् । तथा ... ।। ५० ।।
यथा तरुषु सर्वेषु श्रेष्ठो बिल्वतरुः श्रुतः । तथा ... ।। ५१ ।।
यथा फलेषु सर्वेषु श्रीफलस्य फलं वरम् । तथा .... ।। ५२ ।।
यथा सर्वेषु वस्त्रेषु दुकूलं चित्रितं वरम् । तथा ... ।। ५३ ।।
भूषणेषु यथा श्रेष्ठं भव्यं रुद्राक्षभूषणम् । तथा .. ।। ५४ ।।
अङ्गरागेषु सर्वेषु श्रेष्ठा भूतिः श्रुतिस्तथा । तथा ... ।। ५५ ।।
यथा नरेषु सर्वेषु शाङ्करः पुरुषोत्तमः । तथा ... ।। ५६ ।।
यथा नारीषु सर्वासु नारीरत्नं गिरीन्द्रजा । तथा ... ।। ५७ ।।
यथा तीर्थेषु सर्वेषु [1] शिवलिङ्गपरम्परा । तथा ... ।। ५८ ।।
सरोवरेषु सर्वेषु यथा रुद्रसरोवरम् । तथा ... ।। ५९ ।।
यथा पुरेषु सर्वेषु पुरं काशीपुरं परम् । तथा .... ।। ६० ।।
यथा वापीषु सर्वासु ज्ञानवापी मनोहरा । तथा ... ।। ६१ ।।
मुक्तिमण्टपमुत्कृष्टं मण्टपेषु यथा मतम् । तथा .... ।। ६२ ।।
यथा वैश्वेश्वरं लिङ्गं लिङ्गेषु श्रेष्ठमुच्यते । तथा ... ।। ६३ ।।
यथा मूर्तिषु सर्वासु दक्षिणामूर्तिरुत्तमा । तथा ... ।। ६४ ।।
यथा गिरिषु सर्वेषु श्रेष्ठो हिमगिरिः स्मृतः । तथा .... ।। ६५ ।।
यथा नदीषु सर्वासु नर्मदा शर्मदा सदा । तथा ... ।। ६६ ।।

---

1 शिवगङ्गा परं वरा c.

यथा मुनिषु सर्वेषु श्रेष्ठः कलशसंभवः । तथा ... ॥ ६७ ॥

यथा सर्वेषु मन्त्रेषु शिवपञ्चाक्षरः परः । तथा ... ॥ ६८ ॥

शिवपूजासाधनेषु बिल्वपत्रं यथा परम् । तथा ... ॥ ६९ ॥

यथा वेदेषु सर्वेषु रुद्राध्यायः परः स्मृतः । तथा ... ॥ ७० ॥

यथा सर्पेषु सर्वेषु सहस्रफणिरुत्तमः । तथा .... ॥ ७१ ॥

यथा चतुष्पदां मध्ये प्रसिद्धो वृषभो वरः । तथा ... ॥ ७२ ॥

यथा विद्यासु सर्वासु शिवविद्या वरा स्मृता । तथा ... ॥ ७३ ॥

यथा भोज्येषु सर्वेषु शिवनैवेद्यमुत्तमम् । तथा ... ॥ ७४ ॥

यथा गृहेषु सर्वेषु श्रेष्ठमन्तर्गृहं मतम् । तथा ... ॥ ७५ ॥

मन्दिरेषु यथा श्रेष्ठं रम्यं शाङ्करमन्दिरम् । तथा .... ॥ ७६ ॥

उत्तमाङ्गं यथाङ्गेषु शिवानतिकिणाङ्कितम् । तथा ... ॥ ७७ ॥

कुमारेषु यथा श्रेष्ठः षण्मुखः श्रुतिषु श्रुतः । तथा .... ॥ ७८ ॥

लोहमध्ये यथा श्रेष्ठं काञ्चनं शैलजाप्रियम् । तथा ... ॥ ७९ ॥

ब्राह्मणेषु यथा श्रेष्ठः शांभवो ब्राह्मणोत्तमः । तथा ... ॥ ८० ॥

यथा रत्नेषु सर्वेषु श्रेष्ठश्चिन्तामणिः स्मृतः । तथा ... ॥ ८१ ॥

यथा सर्वेषु देशेषु श्रेष्ठः सोऽयं सुधाकरः । तथा .... ॥ ८२ ॥

पावनेषु यथा भस्म श्रुत्युक्तं पावनोत्तमम् । तथा .... ॥ ८३ ॥

कैलासतुल्यः कुत्रापि वेदेष्वपि न दृश्यते ॥ ८४ ॥

तथाप्यधिकमस्तीति वक्ता पापकुलाकुलः । सन्निधिः सर्वदा यत्र मम तस्मात् किमुत्तमः ॥ ८५ ॥

कैलाससन्निधिर्नित्यं तेनासावधिकः स्मृतः । विचित्रा रचनास्तत्र वेदान्तागोचरा अपि ॥ ८६ ॥

ततस्तत्र सुखं तावत् तावदन्यत्र कुत्र वा । सर्वोत्तमः स कैलासः तत्र मे रमते मनः ॥ ८७ ॥

तत्रानन्तानि रम्याणि वस्तूनि विविधान्यपि । रहस्यमन्यद्वक्ष्यामि यत्र मे रमते मनः ॥ ८८ ॥

तदेव विद्धि नन्दीश कैलास इति सादरम् । गौरीशरीरे रमते मम चित्तमनुत्तमम् ॥ ८९ ॥

काश्यां शांभवचित्तेऽपि तदन्यत्र न सर्वथा । त्रिष्वप्यत्युत्तमं मन्ये केवलं शांभवं मनः ॥ ९० ॥

तत्रानन्दो यथा तद्वदानन्दो यत्र कुत्र वा । कल्पते बहुधा पूजा शांभवेन प्रतिक्षणम् ॥ ९१ ॥

प्रतिक्षणं विशिष्टेष्टक्षणदा सा मनोरमा । स तन्मनो विभुतया ज्ञातं तत्र शिवालयः ॥ ९२ ॥

परार्धयोजनायामः कल्पितो रत्नमण्डितः । रत्नप्राकारसंवीतो रत्नमन्दिरमण्डितः ॥ ९३ ॥

रत्नद्वारार्बुदाकीर्णमेकैकं तत्र मन्दिरम् । तत्रापि कल्पतरवः प्रसूनसमलंकृताः ॥ ९४ ॥

अर्पिताः कोटिशस्तेन कल्पिताः शिवमन्दिरे । तत्कल्पतरुमध्यस्थरत्नसिंहासनं वरम् ॥ ९५ ॥

कोटियोजनविस्तीर्णं कल्पितं तावदायतम् । तदग्रे कल्पिता तेन पुष्पशय्या मनोहरा ॥ ९६ ॥

तत्र स्थितमुमाकान्तं मां चिन्तयति सादरम् । नव्यचित्रदुकूलानां पुञ्जैरावेष्टितं मुहुः ॥ ९७ ॥

नानापरिमलद्रव्यरसरागानुरञ्जितम् । दिव्याभरणसङ्कीर्ण भित्तिकाश्चिविराजितम् ॥ ९८ ॥

रत्नकर्पूरनिकरकान्तिराजिविराजितम् । रत्नाङ्गदार्बुदाकीर्णं तत्कान्तिनिकराश्रितम् ॥ ९९ ॥

रत्नोत्तमपरिक्रान्तकटिसूत्रविराजितम् । दिव्यरत्नांगुलीयानां सहस्रेण समन्वितम् ॥ १०० ॥

अपारतारहाराणां विहारैश्च विराजितम् । मणिश्रेष्ठसमाकीर्णं कर्णाभरणभूषितम् ॥ १०१ ॥

रत्नरत्नसमाकीर्ण कोटीरगणराजितम् । नूपुरैरप्यपारैश्च सदारपरिवेष्टितम् ॥ १०२ ॥

धूपैर्विचित्रैरगरुप्रभवैरपि धूपितम् । रत्ननीराजनव्राजविराजितमुमापतिम् ॥ १०३ ॥

दिव्यपक्वान्नगिरिभिः शर्करापर्वतान्वितैः । दिव्याज्यवाहिनीयुक्तैः सन्तोषयति मां मुहुः ॥ १०४ ॥

सूपशाकगिरिव्रातसमेतोदनपर्वतैः । मध्वाज्यवाहिनीयुक्तैः तोषयत्यनुवासरम् ॥ १०५ ॥

सुधाफलैरपारैश्च विविधैर्मधुरोत्तमैः । सन्तोषं जनयन्त्येव सुधाधाराभिरादरात् ॥ १०६ ॥

तांबूलपर्वतानेव पूगपर्वतसंकुलान् । मुक्ताचूर्णान्वितान् दिव्यान् प्रयच्छति यथेच्छया ॥ १०७ ॥

एलालवङ्गगिरयः खदिरा गिरयोऽपि मे । एवं प्रतिक्षणं तेन मानसं मम पूजनम् ॥ १०८ ॥

करोति प्रत्यहं भक्त्या नृत्यत्यग्रे यथेच्छया । पञ्चामृतप्रवाहैर्मां अभिषिच्य मनोहरैः ॥ १०९ ॥

एवं पूजाविधानेन कल्पिते शांभवेन मे । तच्चित्ते यादृशं सौख्यं तन्न क्वापि मनोहरम् ॥ ११० ॥

मन्दिरं शाङ्कराकारं दृश्यते नन्दिकेश्वर । समृद्धं सदनं त्यक्त्वा धनधान्यादिभिर्नरः ॥ १११ ॥

अन्यत्र याति किं लोके तथा तत् त्यज्यते कथम् । गौर्या सह विहारार्थं पुष्पप्रासादकल्पना ॥

क्रियते तेन सततं तत्त्यागे मतिरेव न । शरीरे यादृशी प्रीतिः मदीये मम सर्वथा ॥ ११३ ॥

ततोऽप्यत्राधिका प्रीतिः शांभवे विग्रहे सदा । तेन छत्राण्यपाराणि मण्डितानि मनोहरैः ॥

कल्प्यन्ते मणिभिर्दिव्यैः मुक्ताजालोचितान्यपि । सुधाकरकराकारैः अपारैरपि चामरैः ॥ ११५ ॥

चारुचामीकराकारदण्डमण्डलमण्डितैः । निरतः शाङ्करो नित्यं मम सेवां करोत्यतः ॥ ११६ ॥

रम्यं शाङ्करमेवात्र शरीरं मम मन्दिरम् । किं कैलासेन काश्या वा किं गौर्या मन्दरेण वा ॥
शरीरं शाङ्करं मन्ये रत्नमण्डितमन्दरम् । प्रतिक्षणं तेन पूजा तथा विविधसाधनैः ॥ ११८ ॥
क्रियते तादृशी कुत्र पूजोपकरणानि ते । मरन्दरससङ्कीर्णकुसुमासारकल्पना ॥ ११९ ॥
क्रियते तेन साऽन्येन कल्पनीया कथं मम । तादृशः शाङ्करो वीरः कलौ कश्चिद्भविष्यति ॥
द्वित्राः सन्त्यधुना नन्दिन् ते ते पूज्या न संशयः । एतावत्कालपर्यन्तं त्वया पूजा कृता मम ॥
परन्तु न तथा पूजा कृता ज्ञाताऽपि मे ध्रुवम् । अधुना गम्यते नन्दिन् रेवातीरं मनोहरम् ॥
तत्रास्ति शांभवः कश्चित्तेन ध्यानं कृतं मम । आसायं तत्र विश्रम्य गौर्या सह विशेषतः ॥
प्रतिक्षणमपाराभिः पूजाभिः परिवेष्टितः । वसामि परमानन्दसागरः करुणाकरः ॥ १२४ ॥
सायंकालेऽपि पूजां मे स करिष्यति सादरम् । महानिशि महापूजां स करिष्यति सादरम् ॥
ततः परं पुष्पशय्यां कल्पयिष्यति मे पराम् । रत्नप्रासादमध्यस्थमन्दिरे रत्नसुन्दरे ॥ १२६ ॥
विहारसाधनं सर्वं कल्पयिष्यति भक्तितः । रत्नदीपाः सुधाधाराः फलसारा मनोहराः ॥ १२७ ॥
पुष्पसाराः कल्पनीयाः मन्दवाता मनोहराः । ततः परं स विरतो विहारनिरते मयि ॥ १२८ ॥
निद्रामुद्रान्वितः सोऽपि भविष्यति कथञ्चन । इदानीं तु त्वया नन्दिन् कैलासं प्रति सत्वरम् ॥
[1] गतसंरक्षणं कार्यं कैलासद्वारमन्दिरे ।

पुनरप्यमृता मृतामृता मृतनामामृतपानलोलुपा ।
रसना शिवकीर्तनोत्सुका शिवगङ्गेव पुनाति मानसम् ॥ १३० ॥
शिवसज्जनसाधुवादगोष्ठी भुवनान्तान्यपि तारयन्ति सत्यम् ॥ १३१ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे भक्तमानसपूजावर्णनं नाम
चतुर्विंशोऽध्यायः ॥

—:×:—

1 गन्तव्यं रक्षणं कार्यं कैलासद्वारमन्दिरे । रत्नप्रासादमध्यस्थमन्दिरे रत्नसुन्दरे इति D कोशे उपलभ्यते ॥

# अथ पञ्चविंशोऽध्यायः ।

व्यासः —

इत्युक्त्वा श्रीमहादेवो देवदेवः शिवायुतः । प्राप शैवमनोरूपमन्दिरं सर्वसुन्दरम् ॥ १ ॥
तेन ध्यातो महादेवः सर्वदेवशिरोमणिः । अनन्तवेदवेदान्तवन्दिवृन्दनिषेवितः ॥ २ ॥
सेवितः परया भक्त्या गणैरगणितैरपि । बृन्दारवृन्दसन्दोहैरमन्दैरभिवन्दितः ॥ ३ ॥
तुषारगिरिसंकाशवृषभारूढविग्रहः । रत्नछत्रार्बुदछायासमाच्छादितवाहनः ॥ ४ ॥
अपारचामरोद्धूत वातपोतनिषेवितः । गौरीरम्याङ्गसङ्गेन सर्वमङ्गलसंयुतः ॥ ५ ॥
स्वमनोमन्दिरापार प्राकारमणिमण्टपे । पुष्पोच्चयसमाकीर्णे स्थितमीशमचिन्तयत् ॥ ६ ॥
तत्रोपहारैरुत्कृष्टैः सन्तुष्टं पुष्पपूजया । दिव्यनाटयाङ्गनानाटयविलोकनरतं मुहुः ॥ ७ ॥
अपाररत्नद्वाराणि तीर्त्वा तीर्त्वोन्नतान्यपि । आयान्तं वृषभारूढं चिन्तयामास शङ्करम् ॥ ८ ॥
प्रतिद्वारि महेशाय कल्पितं तेन सादरम् । पूजोपकरणं तावन् यावता तुष्टधीर्भवः ॥ ९ ॥
अवतीर्य वृषाधीशरत्नसोपानमार्गतः । रत्नसिंहासनासीनं चकार मणिमन्दिरे ॥ १० ॥
मधुपर्कादिकं सर्वं तेनाशु परिकल्पितम् । गोक्षीरवाहिनी तेन स्नानार्थमुपकल्पिता ॥ ११ ॥
घृताम्भोधिः कल्पितोऽपि दधिसाराम्बुधिस्तथा । शर्करागिरयस्तेन स्नानार्थमुपकल्पिताः ॥ १२ ॥
तदा फलरसाम्भोधिः तदर्थं कल्पितस्तदा । गङ्गाप्रवाहाः शतधा कल्पितास्तेन मूर्धनि ॥ १३ ॥
अपाररत्नकलशैः कवोष्णजलपूरितैः । स्नानं प्रकल्पयामास साम्बाय स तु शांभवैः ॥ १४ ॥
ततः परं दुकूलानि कल्पितान्यमितान्यपि । ततोऽनन्तमणिश्रेष्ठसिंहासनवरं परम् ॥ १५ ॥
कुन्दादि पुष्पसङ्कीर्णं कल्पयामास सादरम् । त्रिपुण्ड्रं कल्पयामास चन्दनैरनुलेपनम् ॥ १६ ॥
अपाररत्नाभरणैः भूषयामास शङ्करम् । धूपयामास धूपैश्च दीपयामास दीपकैः ॥ १७ ॥
दीपमालाः कल्पिताश्च परितः शतयोजनम् । सूपौदनाद्रिराज्यस्य वाहिन्यः परिवेष्टिताः ॥ १८ ॥
शाकपर्वतसङ्कीर्णाः कल्पितास्तेन सादरम् । ततः पक्वान्नगिरयः कल्पितास्तेन कोटिशः ॥ १९ ॥
शर्करागिरिसंयुक्ताः परमान्नस्य वाहिनीः । कल्पिता तेन महती मधुरा घृतवाहिनी ॥ २० ॥
सुधामधुप्रवाहाश्च कल्पितास्तेन कोटिशः । नारिकेलाम्बुवाहिन्यः तेन सङ्कल्पितास्तदा ॥ २१ ॥
ततश्च सितताम्बूलदलपर्वतपङ्क्तयः । क्रमुकादिसमाकीर्णाः चूर्णपर्वतसङ्कुलाः ॥ २२ ॥
एलालवङ्गकर्पूरकस्तूरीखदिराचलाः । कल्पितास्तेन छत्राणि विचित्राण्यमितान्यपि ॥ २३ ॥

कल्पितानि प्रयत्नेन चारुचामरकोटयः । सुगन्धवातास्तेनाशु कोटयः परिकल्पिताः ॥ २४ ॥

दर्पणान्यपि तेनैव रम्याणि विविधान्यपि । चन्द्रमण्डलतुल्यानि शङ्करायार्पितान्यपि ॥ २५ ॥

शङ्करार्थं स नाट्याय तूर्णमप्सरसां गणान् । कल्पयामास निपुणः कोटिशोऽपि मनोहराः ॥

रत्नदण्डाङ्कितानन्तरत्नछत्राणि शांभवः । अपारचामरोपेतान्युपकल्प्य स हृष्टधीः ॥ २७ ॥

प्रतिक्षणं पुष्पवृष्टिं मन्दारकुसुमोद्भवाम् । कल्पयामास साम्बाय शाङ्करः सादरं द्विजाः ॥२८॥

एवं तत्कृतया साम्बपूजया परया तदा । सन्तुष्टः प्राह तं सायं वचनैर्मधुरैर्हरः ॥ २९ ॥

शिवः —

कृतं मत्पूजनमिदं मह्यं शांभवपुङ्गव । तेन तुष्टोऽस्मि सहसा वरं वृणु यथेच्छया ॥ ३० ॥

[1] इत्युक्तस्तद्वचोवीचिसुधाधारापरिप्लुतः । समुद्यतः स्तुतिं कर्तुं प्रहृष्टः शाङ्करो द्विजः ॥ ३१ ॥

शाङ्करः —

नमो नमस्तेऽस्तु नमो नमस्ते नमो नमस्ते गिरिजासहाय ।
मृत्युञ्जयानामय मामवाव गतिस्त्वमेवासि ममेन्दुमौले ॥ ३२ ॥

त्वं कालकूटादिविषोद्भवानि दुःखानि सर्वाणि सुरासुराणाम् ।
दूरीकरोषि त्रिजगज्जनित्री गौरी तवार्धाङ्गमनङ्ग शत्रो ॥ ३३ ॥

यो मङ्गलामङ्गलसत्रसङ्गः स शङ्ग भङ्गाय कदापि नासीत् ।
स तावदाशु स्मृत एव शम्भो शुभानि सूते सुतरां ततानि ॥ ३४ ॥

सन्तानसंघातसमूहवृद्धिः समृद्धिरीशान पदे स्मृते मे ।
संभाविता तात विमुक्तिरन्ते निरन्तरायासुरवृन्दवन्द्य ॥ ३५ ॥

यत्ते महादेवपदारविन्दमानन्दधाराम्बुदसुन्दरं मे ।
आनन्दमत्यद्भुतमातनोति सन्दर्शनादेव पिनाकपाणिः ॥ ३६ ॥

कल्याणराशिः समुदेति वृद्धिं नष्टो महापातकपर्वतोऽपि ।
आनन्दगङ्गावितरङ्गभङ्गसङ्गेन सिक्तं कुरुते मनो मे ॥ ३७ ॥

अपारपुण्यानि फलोन्मुखानि तपांसि दानान्यमितानि तानि ।
आनन्दगङ्गा ववृधे समृद्धा मतेः प्रवृद्धा मम चन्द्रमौले ॥ ३८॥

---

1 अयं श्लोकः C कोशे नास्ति । 1 शान्तिभङ्गाय कदापि न स्यात् C

त्वत्पादपद्मस्मरणेन्दुधाराप्यानन्दधारा तनुते विचित्रा ।
त्रिनेत्र तत्पात्रमहं पवित्रं त्वन्नेत्रसंसर्गविभूततन्त्रम् ॥ ३९ ॥

यत्पादसेवानिरताः कृतार्थाः सुरेन्द्रलोकादिपदार्थमात्रे ।
वाञ्छां न कुर्वन्ति सुमेरुहस्ताः हस्तेन किं वा यवसं त्रिधत्ते ॥ ४० ॥

त्वत्सेवया केवलमिन्दुमौले लक्ष्मीः पुरो धावति वन्दिरूपा ।
वाणी च वाणीरमणं विहाय उमासहाय स्मरणानुरागा ॥ ४१ ॥

यागैर्न योगैरपि सागरान्तमहीप्रदानैरपि गोप्रदानैः ।
सुखान्यपाराणि न चन्द्रमौले त्वत्पादुकाराधनहेतुकाभिः ॥ ४२ ॥

अपारसंसारमहाम्बुराशिविशोषणाय स्मरणं तवैव ।
महाग्निकल्पान्यतिपातकानि धाराधरत्येतदुमासहाय ॥ ४३ ॥

मम त्वदीयश्चरणः प्रभूतमैश्वर्यमाकल्पमनन्यलभ्यम् ।
संपादयत्येव विमुक्तिमन्ते किमन्यदत्रापि वराय योग्यम् ॥ ४४ ॥

यस्मादिहामुत्र सुखप्रवाहाः त्वत्पादपद्मानुविलोकनेन ।
अतः किमन्यद्वरणीयमद्य यद्यस्ति तन्मे वद सावधानम् ॥ ४५ ॥

स्वर्गापवर्गप्रदमित्यवैमि निधानदानक्षममित्यवैमि ।
त्वत्पादुकाध्यानमतो महेश किं देयमप्यस्ति जगत्त्रयेऽपि ॥ ४६ ॥

अतः परं केवलमिन्दुमौले त्वत्पादपद्मस्मरणानुरक्तिः ।
विरक्तिरप्यब्जजलोकवासेऽप्यस्तु स्मरारे स्मर मामनाथम् ॥ ४७ ॥

अनाथनाथस्त्वमुमासहाय मामप्यनाथं शरणं गतं भो ।
प्रपन्नमन्दार हरामरेश त्वया सनाथं कुरु मामनाथम् ॥ ४८ ॥

यत्ते पदाम्भोरुहमब्जजादिमनःसरोजासनसन्निविष्टम् ।
तत्कष्टनाशाय समर्थमेव स्मृतं कदाचिन्मरणक्षणे वा ॥ ४९ ॥

अर्धेन्दुमौले मरणक्षणे मे विभूतिरुद्राक्षविभूषणस्य ।
त्वत्पादपद्मस्मरणानुरागो भवत्वयं तात तव प्रसादः ॥ ५० ॥

तातस्त्वमेवासि ममेन्दुमौले माता भवानी युवयोः प्रसादात् ।
महेश्वराराधकसन्ततिर्मे सदा प्रवृद्धाऽस्तु वरोऽयमेकः ॥ ५१ ॥

मत्सन्ततिः शङ्करपूजनेन दिने दिने वृद्धिमुपेत्य नित्यम् ।
करोतु गौरीरमणांघ्रिपूजां प्रजाधनप्राणनहेतुभूताम् ॥ ५२ ॥

लोके महेशार्चकपादुकार्चा धनार्जनासक्तधियो महान्तः ।
सुखानि भुक्त्वा सुकृतैरुदारैः दारैः कुमारैरपि भाग्यवन्तः ॥ ५३ ॥

अनन्तकल्याणपरम्पराणां निदानमीशस्मरणं वरेण्यम् ।
तदेव तावन्मम सर्वदाऽस्तु मत्प्रार्थनीयं च तदेव शम्भो ॥ ५४ ॥

शम्भो भवानीरमण प्रभो मां त्वद्दासदासादिपरम्परायाम् ।
विलोक्य वा पाहि कृपानिधान गतिस्त्वमेवासि ममेन्दुमौले ॥ ५५ ॥

त्वमेव माताऽसि जगज्जनित्री प्रिये महेशस्य पिता त्वमेव ।
महेश तस्मादव दीनबन्धो दयारसार्द्राक्षितटप्रसादैः ॥ ५६ ॥

अपारपापप्रलयानलस्त्वं त्वत्पादपद्मस्मरणं क्षणं वा ।
अक्षीणपुण्याभरणेन लभ्यः त्वमीश ते पादमनुस्मरामि ॥ ५७ ॥

श्रीकालकालहृदये कलयामि नित्यं त्वां कालकालमहिले कलयेऽनुवेलम् ।
मच्चित्तमस्तु युवयोश्चरणारविन्दे वन्दे मुहुर्मुहुरहं विजहामि शोकम् ॥ ५८ ॥

हे भूतनाथ भगवन् गिरिजासहाय हे गौरि देवि गिरिजे शिववल्लभे माम् ।
पाहि स्मरान्तक यमान्तक चन्द्रमौले पाहि स्मृताऽपि मधुकैटभहन्त्रि धात्रि ॥ ५९ ॥

पाहि प्रभो भवभयापह मोहशत्रो पाहि त्रिलोचन सुरासुरसार्वभौम ।
पाहि प्रबोधजननि प्रलयावसान श्रीफाललोचन विहारविनोदलीले ॥ ६० ॥

[1] पाहि प्रपन्नसुरलोकविलोकनेन कृत्वा सुरारिविलयं करुणानिधाने ।
पाहि स्मरारिकरचारुविचारिताङ्घ्रि श्रीमङ्गले सकलमङ्गलदानलोले ॥ ६१ ॥

पाहि प्रसीद शिवभक्तमनन्यधन्य मान्यं मदन्यमपि धन्यमनन्यचित्तम् ।
पाहि प्रसादसुमुखैः करुणाकटाक्षैः दाक्षायणि प्रणतपापविनाशदक्षे ॥ ६२ ॥

पाहि त्वमेव गतिरित्यनुवारमीश त्वत्पादपद्मभजने करवाणि वाणीः ।
सैषा मम स्फुरतु पाहि शिवे भवानि त्वत्पादपद्मभजने रतिरस्तु नित्यम् ॥ ६३ ॥

पाहि स्मरामि हर ते चरणारविन्दं मन्दारकुन्दनवबिल्वदलादिपूज्यम् ।

---

1 अयं श्लोकः D कोशे नोपलभ्यते ।

पाहि स्मरामि गिरिराजसुते त्वदीयं पादाम्बुजं त्रिदशचित्तकलत्रपात्रम् ॥ ६४ ॥

वन्दे सर्वसुरासुरप्रभुमुमाकान्तं प्रशान्तं मुहुः सन्तानद्रुमपुण्यमण्टपमहासिंहासनाधिष्ठितम् ।
आनम्रामरबृन्दमौलिविलसत्कोटीरदिव्यप्रभापुञ्जव्यञ्जितपादुके तव भजे मृत्युञ्जयावाव माम् ॥

त्वामाराध्यतमं वदन्ति मुनयः सोमावतंसं प्रभुं वेदान्ता अपि संस्तुवन्ति भगवंस्त्वत्पादपद्मं मुहुः ।
त्वद्रूपं विदितं न योगिनिकरैः यागैश्च दानैस्तथा दीनानामवनैश्च निश्चितमिदं सर्वात्मना शङ्कर ॥

शर्वाणीकुचहेमकुम्भविलसत्काश्मीररेणुप्रभापूरापूरितदिव्यकान्तिरुचिरत्वत्पादपद्मं मुदा ।
वन्दे सुन्दरमद्रिजाकरतलालङ्कारसाराकरं वारं वारमनुस्मरामि सकलाभीष्टप्रदानाकरम् ॥ ६७ ॥

कारुण्यामृतसागरामरवरापारानतिव्यत्यय-
व्यत्यस्तोन्नतपादकामितमणिश्रीरञ्जितं मां कुरु ।
त्वामेवाहमुपागतः शरणमित्यर्धेन्दुमौले स्मर
स्मर्तव्येष्वहमेक एव भगवन् किं नावशिष्टः प्रभो ॥ ६८ ॥

कल्याणानि तनोति मे तव पदाम्भोजं विपत्सन्ततिं
दूरीकृत्य महाघसागरमहाकल्लोलमाला अपि ।
लीला ते खलु कालकाल जगतां सृष्टिस्थितिध्वंसना-
न्यायासोऽपि न तत्र तैलततमप्येतत् तव क्रीडनम् ॥ ६९ ॥

मामा मुञ्च महेश मामकधिया मद्भागधेयं प्रियं
शंभो त्वच्चरणारविन्दभजनं तन्मे निधिः तद्धनम् ।
तन्मे सौख्यमहाम्बुधिश्च तरणोपायोप्यपायाम्बुधेः
आनन्दाम्बुधिवीचिकादिरचना चातुर्यमर्यादभूः ॥ ७० ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिवमानसपूजायां
शांभवप्रार्थनं नाम पञ्चविंशोऽध्यायः ॥

—o—

# अथ षड्विंशोऽध्यायः ।

व्यासः —

इति तद्गिरमाकर्ण्य स कारुण्यार्णवः क्षणम् । सापर्णस्तं विलोक्याह वचनं च सुधामयम् ॥ १ ॥
येयं भवत्कृता पूजा तया तुष्टोऽस्म्यसंशयम् । स्तोत्रेणानेन सुतरां तुष्टः पुष्टोऽस्मि शांभवाः ॥
वरो यः प्रार्थितो भक्त्या सोऽपि दत्तः किलादरात् । किमदेयं ममाप्यस्ति मद्भक्तेभ्यो विशेषतः ॥
भवद्भिर्यत् कृतं स्तोत्रं तत्पठेद्यः स बुद्धिमान् । तत्सन्ततिः प्रवृद्धा स्यात् तदैश्वर्यं प्रवर्धताम् ॥४॥
इत्युक्त्वा तत्कृतां पूजां गृहीत्वा सादरं हरः । तत्रैवान्तर्दधे विप्राः कोटिशो गणसेवितः ॥ ५ ॥

ऋषयः —

कथा पापहरा सेयं सुधारूपा श्रुताऽधुना । पुनः कुत्र स्थितं देव्या सह देवेन शंभुना ॥ ६ ॥

व्यासः —

ततः कैलासमगमत् गिरिजावल्लभः प्रभुः । तत्रोपवनमासाद्य विहारनिरतोऽभवत् ॥ ७ ॥
रम्योपवनमध्यस्थे रत्नमण्टपमध्यगे । रत्नसिंहासने स्थित्वा गौरीमाह हरो गिरम् ॥ ८ ॥
पश्य बिल्वतरून् गौरि बिल्वांकुरसमावृतान् । शिवलिङ्गार्चनरतान् गत्वा गत्वा पुनः पुनः ॥ ९ ॥
पश्य प्रसूनवल्लीनां कुलं याति प्रदक्षिणम् । शिवलिङ्गार्चनायाशु प्रसूनफलसंकुलम् ॥ १० ॥
पश्य पश्यारविन्दानि सुन्दराण्यतिसुन्दरि । मन्दमारुतसंवीतमन्दारकुसुमान्यपि ॥ ११ ॥
पश्यांकुरेषु पक्वानि फलानि विमलान्यपि । विपुलानि विचित्राणि रसधाराश्रितान्यपि ॥ १२ ॥
पश्य पश्येक्षुदण्डाग्रफलमण्डलमम्बिके । तद्रसं च सुधाधारारसधिकारणक्षमम् ॥ १३ ॥
अभूतपूर्वमेतास्मिन् वने सर्वमिहाम्बिके । पश्य पश्य विनोदेन परमानन्दसाधनम् ॥ १४ ॥
शोभामभिनवामेनां पुनः पुनरुदीक्ष्य च । दृष्ट्वा गौरी महादेवं प्राह विस्मयसंयुता ॥ १५ ॥
शङ्करापारकरुणारसासागरसागर । सादरं वद वृत्तान्तं वनस्यास्य विशेषतः ॥ १६ ॥
अमी किं तरवो लोके साङ्कुरा विचरन्त्यमी । शिवार्चनाय पुष्पाद्यैः स्वत एवातियत्नतः ॥ १७ ॥

सदाशिवः —

पुरा हिमगिरेरेव कन्दरेषु मुनीश्वराः । तप्त्वा घोरेण तपसा श्रान्ताः शान्ता निरन्तरे ॥ १८ ॥
कल्पावसानपर्यन्तस्थितास्ते स्वतपोबलात् । ततः परं प्रसन्नोऽस्मि तेभ्य एव शुभानने ॥ १९ ॥
ततः स्तुत्वा प्रार्थितोऽपि वरस्तैरेव शैलजे । अन्यैरप्रार्थितः पूर्वं अपूर्वः स वरः प्रिये ॥ २० ॥

यः स्तवस्तैः कृतो गौरि तं त्वं पापहरं शृणु । वरस्वरूपं वक्ष्यामि तत्प्रार्थितमनाकुलम् ॥ २१ ॥

ऋषयः —

वन्दे सुराराधितमिन्दुमौलिं वन्दे भवानीरमणं महेशम् ।
वन्दे महामेरुशरासनोरुकोटिप्रभाकूटविघट्टिताङ्गम् ॥ २२ ॥

वन्दे महानन्दपदप्रदानं विहारलोलं खलकालकालम् ।
वन्दे पुरश्रीपरिहारहेतुं वन्दे स्मरारातिमुमासहायम् ॥ २३ ॥

वन्दे तमर्धेन्दुकलावतंसं ताराविहाराकरसंवृतांसम् ।
वन्दे मनोमानसराजहंसं वन्दे भवानीस्मितमन्दहासम् ॥ २४ ॥

वन्दे मुकुन्दाद्यमरासुराणां वन्द्यं च वेदान्तगणैः स्तुतं च ।
वन्दे प्रपन्नार्तिहरं परं तं वन्दे मुहुः शङ्करमेव वन्दे ॥ २५ ॥

वन्दे जगत्सर्गविधानहेतुं वन्दे जगत्पालनहेतुमीड्यम् ।
वन्दे जगत्संहरणक्षमं त्वां वन्दे भवानीमुखपद्मभानुम् ॥ २६ ॥

वन्दे मुहुः संहृतकालकूटं वन्दे स्मरारिं मदनान्तकं तम् ।
वन्दे विभूतिस्फुरदुन्नताङ्गं रुद्राक्षमालाकुलभूषणं तम् ॥ २७ ॥

[1]वन्दे तमेवान्धकदुर्मदान्ध महान्धकारप्रलयानलं तम् ।
वन्दे मुदा तं गिरिराजकन्याकुचाङ्ककाश्मीररजःकणाङ्कम् ॥ २८ ॥

वन्दे मुहुः फालविलोचनं तं वन्दे त्रिशूलस्फुरदग्रहस्तम् ।
वन्दे पुनस्त्वां मृगशावहस्तं वन्दे शिवालङ्कृतवामभागम् ॥ २९ ॥

वन्दे चतुर्वर्गफलप्रदं तं वन्दे वृषाधीश्वर केतनं तम् ।
वन्दे जटाजूटतटाभिघातविस्रस्तनक्षत्रगणावृतं तम् ॥ ३० ॥

व्यासः —

इति स्तुत्वा महादेवं ते सर्वे मुनयस्तदा । वरं देहि महादेव वरदोत्तम शङ्कर ॥ ३१ ॥
प्रसीद नः प्रभो शम्भो प्रपन्नार्तिहराऽधुना । देहि नस्तरुरूपाणि कैलासे गिरिजापते ॥ ३२ ॥
कैलासे खलु लिङ्गानि सन्ति दिव्यानि कोटिशः । तत्पूजनोपयुक्ताः स्मः स्वतः स्वप्रसवैः सदा ॥

1 'वन्दे तमेवान्धक' इत्यारभ्य स्फुरदग्रहस्तं इत्यन्तं D कोशे नास्ति ।

नाराधितानि लिङ्गानि प्रसवैरनुवासरम् । अतो गतं वृथा जन्म तपसा केवलेन नः ॥ ३४ ॥
किं केवलेन तपसा देहशोषकरेण वा । व्यर्थं गतमिदं जन्म न कृतं लिङ्गपूजनम् ॥ ३५ ॥
स जीवन्मृत एवेति निश्चितो निगमैरपि । येन नाराधितं लिङ्गं शाङ्कं मङ्गलसाधनम् ॥ ३६ ॥
बिल्वपत्रैः प्रसूनैर्वा फलैर्वा विमलैर्जलैः । शिवार्चनं चेन्न कृतं तज्जन्म विफलं खलु ॥ ३७ ॥
[1]तदा तरुत्वमस्मभ्यमपूर्वं तत्र दीयताम् । विलक्षणतरुत्वेन स्थितिरस्माकमीप्सितम् ॥ ३८ ॥
लिङ्गे प्रसूनमेकं वा नवबिल्वदलं मुदा । येन दत्तं स भाग्यानां निलयः स्यादसंशयम् ॥ ३९ ॥
अनुग्रहः परं शम्भो कृतोऽस्मासु त्वयाऽधुना । अनेनानुग्रहेणापि तत्रास्तु तरुरूपता ॥ ४० ॥
शिवपूजोपयुक्तानां तरूणां मरणे सति । अपर्णारमणावाप्तिर्भवतीति श्रुतिः श्रुता ॥ ४१ ॥
अतोऽस्माकं वरानेतान् ईप्सितान् देहि शङ्कर । कृपा विधेया यदि ते दीनेषु करुणानिधे ॥
तदा तरुत्वमस्मभ्यं अपूर्वं तत्र दीयताम् । विलक्षणतरुत्वेन स्थितिरस्माकमीप्सिता ॥ ४३ ॥
इति तद्वचनं श्रुत्वा तथाऽस्त्विति महेश्वरः । तत्रैवान्तर्दधे विप्राः तत्प्रीतिमभिवर्धयन् ॥ ४४ ॥

ऋषयः —

तपो दानं च योगाश्च पूजा च नियमा अपि । शिवप्रसादपर्यन्तं तत्प्रसादफलं यतः ॥ ४५ ॥
प्रसन्ने सति गौरीशे पुनरन्यत् फलं तु न । फलानां फलमुत्कृष्टं प्रसादः शाङ्करो यतः ॥ ४६ ॥

व्यासः —

न ज्ञायते प्रभावोऽयं महादेवस्य शूलिनः । वेदान्तैरप्यतस्तस्य महिमा केन वर्ण्यते ॥ ४७ ॥
नीतं जन्म मुदा येन महेशपरिचर्यया । स एव धन्यः पुण्यात्मा स देवैरपि पूज्यते ॥ ४८ ॥
येनार्चनं महेशस्य शिवलिङ्गे प्रयत्नतः । न कृतं तादृशं जन्म न वरं सत्यमुच्यते ॥ ४९ ॥
पत्रैः फलैः प्रसूनैर्वा नवैर्दूर्वाङ्कुरैरपि । संपूज्य श्रीमहादेवं देवपूज्यः प्रजायते ॥ ५० ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । श्रवणेनापि भक्तिः स्यादितिहासस्य केवलम् ॥ ५१ ॥
पुरा श्रीगिरिदेशेषु कश्चिदासीन्नराधमः । स दरिद्रोऽतिकृपणः कुष्ठव्रणसमाश्रयः ॥ ५२ ॥
स्थित्वा ब्राह्मणवेषेण परहिंसापरः सदा ॥ ५३ ॥
ततः स भिल्लवेषेण मृगयानिरतः सदा । अरण्यपक्षिजातानां मृगाणां च विशेषतः ॥ ५४ ॥
मरणाय प्रवृत्तोऽपि न तद्धिंसां चकार सः । अशक्तः स कथं तेषां हिंसा तेन भविष्यति ॥ ५५ ॥
तस्मादासायमासीनो विपिने दुर्दशाश्रयः । स्वतो मृतो भवेत्पक्षी यदि कश्चित् तदा स तम् ॥

1 अयं श्लोको नोपलभ्यते C कोशे ।

आदाय याति सदनं तेन तस्यापि जीवनम् । कलत्रस्य सुतानां च कल्पितं तेन जीवनम् ॥ ५७ ॥
क्षुधातुरः सदा सोऽत्र तत्पोष्यास्ते क्षुधातुराः । बृहतीफलजालानि समादाय कदाचन ॥ ५८ ॥
स भक्षणार्थमुद्युक्तः पाकं कृत्वा क्षुधातुरः । तदानीं बृहतीपुष्पमेकमादाय तत्सुतः ॥ ५९ ॥
बालकः प्राक्षिपद्भूमौ तल्लिङ्गे पतितं ततः । ततः स दैवात् क्षुधया तत्र पञ्चत्वमागतः ॥ ६० ॥
तदानीमागताः क्रूराः कोटिशो यमकिङ्कराः । ततो नीतो यमभटैः पातितोऽपि यमान्तिके ॥
ततो दूराद्विलोक्यापि तं कालः कम्पमागतः । तदा कालश्चित्रगुप्तं प्राह कम्पसमन्वितः ॥ ६२ ॥
अहो किमिदमाश्चर्यं पश्य पश्येति सत्वरम् । अद्याद्भुतमिदं दृष्टं दुश्चिन्हमपि जायते ॥ ६३ ॥
भयं च हृदयारूढं किं कर्तव्यमतः परम् । त्रिशूलपाणेरेतस्य दर्शनेन भयं भवेत ॥ ६४ ॥
कम्पोऽपि भवति स्पष्टं तथा शिवगणादपि । अधुना तादृशं किञ्चित् न दृष्टमिह सर्वथा ॥ ६५ ॥
एवं सत्यपि कम्पोऽयं कुतो वा मे प्रजायते । अधैर्यं च समुत्पन्नं कोऽयमानीय पातितः ॥ ६६ ॥
दूतैरज्ञैर्मदीयैस्तैरधुना तद्विचार्यताम् । प्रायशः सोऽयमुत्कृष्टोऽप्यानीतः तैर्दुरात्मभिः ॥ ६७ ॥
अतः परं मया तेषां शिक्षा कार्या प्रयत्नतः । इति तद्वचनं श्रुत्वा चित्रगुप्तोऽपि विस्मितः ॥ ६८ ॥
यममाहातिधीरं तं दूतान् वीक्ष्यापि तं ततः ।

चित्रगुप्तः —

अहो किमिदमारब्धं महादेवेन तन्मनः । कथं भावि कदा किं वा करोतीति न विद्महे ॥ ६९ ॥
महेश्वरः स्वतन्त्रोऽसौ करुणारससागरः । विभवास्तस्य बहवः तेषां संख्या न दृश्यते ॥ ७० ॥
तस्याधमाधमेऽप्यस्ति कृपा यदि तदा परम् । स सर्वभाग्यसंपन्नः कैलासमपि यास्यति ॥ ७१ ॥
अनेन यत्कृतं पुण्यं अतः तच्छृणु सादरम् । श्रुत्वापि यस्य माहात्म्यं मुक्तो भवति मानवः ॥
एतस्य तु पिता दुष्टो नष्टो धर्मविवर्जितः । नानापातकसंक्रान्तो दरिद्रो व्याधिपीडितः ॥ ७३ ॥
भ्रातरोऽप्यस्य दुष्टास्ते माता दुष्टा स्वभावतः । कुलं च दुष्टमेतस्य दरिद्रजनसङ्कुलम् ॥ ७४ ॥
एतत्कुलसमुत्पन्नैः अन्नमन्नमिति व्यथा । कृतैव स्थीयते नान्नं लभ्यते केन कैरपि ॥ ७५ ॥
मरणावसरे प्राप्ते बृहतीकुसुमं परम् । विच्छिन्नं मलिनं क्षिप्तं तल्लिङ्गे पतितं यम ॥ ७६ ॥
तावता गिरिजाकान्तः सन्तुष्टः कुष्ठनाशकः । स्वदूतानाह तं शीघ्रं आनयन्त्विवति पुष्पके ॥ ७७ ॥
अतः परं समागत्य किं करिष्यन्ति ते गणाः । तन्न जाने यमातोऽयमकाण्डप्रलयः खलु ॥
दूतानामत्र का वार्ता कृतान्तमरणे तव । अतः परं क्व गन्तव्यमस्माकं स्थलमेव न ॥ ७९ ॥
यत्रापि गम्यते तत्र समागत्य गणास्ततः । समागत्य नयिष्यन्ति बद्ध्वा पाशैर्दृढं यम ॥ ८० ॥

दूतानां च त्वया शिक्षा न कृता पूर्वमादरात् । अत एवापदो यान्ति केन स्यात् तन्निवारणम् ॥
अविचार्य कृतं कर्म दूतैरेतैर्दुरात्मभिः । अतो दुःखसहस्राणि तव संभावितान्यपि ॥ ८२ ॥
प्रमादो दुःखहेतुर्हि तेन दुःखमवाप्यते । किंच न ज्ञातमस्माभिः शिवत्वं तथा मति ॥ ८३ ॥
अशिक्षिताश्च दूतास्ते ततस्तैस्तैरनुक्षणम् । संभावितानि दुःखानि महापापफलान्यपि ॥ ८४ ॥
अतः परं वा यत्नेन तमानय विशेषतः । पूजयस्व यथाकामं प्रमादो मास्तु सर्वथा ॥ ८५ ॥

व्यासः —

एतस्मिन्नन्तरे काले शिवदूताः समागताः । महेशप्रेषिताः सर्वे विमानवरमाश्रिताः ॥ ८६ ॥
ते समागत्य तरसा पाशैर्बद्ध्वा यमं मुहुः । सन्ताड्य नेतुमुद्युक्ताः तदा ब्रह्मा समागतः ॥ ८७ ॥
विष्णुः समागतः पश्चादिन्द्रेण सह सत्वरम् । ततस्ते प्रणताः सर्वे गणपादाम्बुजे पृथक् ॥ ८८ ॥
ततः पूजां च कृत्वा ते गणेभ्यो भक्तिपूर्वकम् । तानूचुर्विस्मयाविष्टाः कृताञ्जलिपुटाः सुराः ॥

देवाः —

नमो नमः शांभवेभ्यो गणेभ्यो वो नमो नमः । [1]नमो गणपतिभ्यश्च गृत्सेभ्यो वै नमो नमः ॥
नमो गृत्सपतिभ्यश्च व्रातेभ्यो वो नमो नमः । नमो व्रातपतिभ्यश्च विरूपेभ्यो नमो नमः ॥
नमोऽस्तु विश्वरूपेभ्यो महद्भ्यो वो नमो नमः । रथिभ्यो वो नमस्तुभ्यं रथेभ्यश्च नमो नमः ॥
सेनाभ्यश्च नमो नित्यं सेनानिभ्यश्च वो नमः । क्षत्तृभ्यो वो नमो नित्यं संग्रहीतृभ्य एव च ॥
इति स्तुत्वा पुनर्नत्वा गणान् पुष्पकसंश्रितान् । कृताञ्जलिपुटाः सर्वे मूर्ध्नि कम्पमुपागताः ॥
क्षमध्वमपराधान् नः सर्वथा प्रणतान् सुरान् । पश्यध्वं करुणादृष्ट्या पालनीया यतो वयम् ॥
अयमज्ञो यमो नास्मास्वपराधस्तथा मति । क्षमा विधेया यूयं हि दयाम्बुनिधयः सदा ॥ ९६ ॥
दूतास्तावदसंख्याताः तेषां शिक्षापि दुर्लभा । मितानामेव शिक्षा स्यादमितानां तु सा कथम् ॥
यमस्यैकस्य गमनं कथं प्रति गृहं गणाः । अपारगृहसङ्कीर्णमिदं भूमण्डलं खलु ॥ ९८ ॥
यदि जानात्ययं न त्वं तदा पापोऽद्य नः कथम् । अधुना तस्य शिक्षापि नानीतस्य कृता खलु ॥
यमोऽपि चित्रगुप्तेन सह सर्वं विचार्य तु । करोति शिक्षां तद्योग्यां सा पूज्यस्य न सर्वथा ॥
पूज्यापूज्यविचारोऽपि कृतस्तेन भविष्यति । इदानीं तु भवद्भिश्च त्वरया समुपागतम् ॥ १०१ ॥
यमस्य बद्ध्वा नयनं यद्याघातपुरस्सरम् । तदा क्व वा दयाऽस्मासु दुःखितेषु गणेश्वराः ॥ १०२ ॥
शिवाज्ञाकारिणामत्र न यद्यप्यस्ति दुर्लभम् । तथाऽप्यस्तु विचारोऽत्र किं करोतीत्ययं यमः ॥

---

1 इदमर्धं D कोशे नास्ति ।

भवदाज्ञां समुल्लङ्घ्य को वा जीवितुमिच्छति । स्वर्गेऽपि सत्यलोकेऽपि वैकुण्ठेऽपि विशेषतः ॥
अस्माकमपराधास्तु भविष्यन्ति क्षणे क्षणे । क्षन्तव्यास्ते विशेषेण नमो वो गणनायकाः ॥१०५॥
कालकालाज्ञया सर्वं भवद्भिः क्रियते यदि । तदा विचारकः को वा सत्यं ब्रह्माण्डमण्डले॥१०६॥
किञ्च भृत्यान्वितान्नस्तु सापराधान् विशेषतः । पालयध्वं प्रयत्नेन भवत्प्रतिभटाश्च के ॥ १०७ ॥
अद्भुतं महदैश्वर्यं महादेवस्य तस्य तु । दूता यूयं माननीयाः पूज्याश्चात्र सुरासुरैः ॥ १०८ ॥
एकेनापि क्षणेनैव शाङ्करेण जगल्लयः । क्षणेन क्रियते तत्र बहुना कृत्यमस्ति किम् ॥ १०९ ॥
शिवाज्ञया तु परया भवद्भिः समुपागतम् । श्रमो वृथा हि भवतां लक्ष्यः कोपस्य किं यमः ॥
कैलासभुवनद्वारि स्थित्वाऽपि मरणं यदि । शिक्षार्थे क्रियते तर्हि शिक्षितः किं न वै यमः ॥
यमस्य तस्य का वार्ता वयं सर्वे गणाः सुराः । भवदाज्ञापाशबद्धाः तत्र कः संशयो भवेत् ॥
किं चाद्य भाग्यमस्माकं यूयं शङ्करकिङ्कराः । नेत्रप्रसादपात्रत्वं प्राप्ताः तद्भाग्यमेव नः ॥ ११३ ॥
अद्य श्रीमद्गिरीशानपादुकादर्शनं कृतम् । भवद्दर्शनमात्रेण कृतार्थाश्च वयं गणाः ॥ ११४ ॥
अस्माकमपि यद्भाग्यं तदद्यैव फलोन्मुखम् । यतोऽद्य भवतां दृष्टाः पुण्याश्चरणरेणवः ॥ ११५ ॥
ब्रह्माण्डमण्डलस्यास्य पावनत्वं प्रकल्पितम् । अधुना पावनानां नो दुःखवार्ताऽपि दूरतः ॥ ११६ ॥
आशास्यमिदमस्माकं भवत्पादावलोकनम् । तज्जातमधुना तावत् सुखं संभावितं खलु ॥ ११७ ॥

एवं तेषु वदत्सु शङ्करगणाः सर्वेषु बद्ध्वा यमं
देवानप्यनुकूलतामुपगतान् कालस्य सर्वानपि ।
बद्ध्वा तानपराधलेशरहितान् नेतुं तदैवोद्यताः
श्रीमृत्युञ्जयशासनेन शमनं सन्ताडयन्तो मुहुः ॥ ११८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे बृहतीपुष्पार्चनमहिमा
यमबन्धनताडनवर्णनं नाम षड्विंशोऽध्यायः ॥

——०——

## अथ सप्तविंशोऽध्यायः ।

व्यासः —

यमादिवन्धनोद्योगकोलाहलमुमापतिः । श्रुत्वा नन्दिनमाहूय प्राह युक्तं वचस्तदा ॥ १ ॥

सदाशिवः —

त्वया गन्तव्यमधुना सत्वरं नन्दिकेश्वर । रत्नपुष्पकमारुह्य विलम्बस्त्वत्र नोचितः ॥ २ ॥
यमानुकूलतां प्राप्ताः सेन्द्रोपेन्द्रमरुद्गणाः । ताननीय प्रयत्नेन शूलज्वालासु पातय ॥ ३ ॥
यावन्तः प्रतिकूलास्ते ते सर्वे शूलघातनैः । तप्तश्रृंखलबन्धैश्च पीडनीयाः प्रयत्नतः ॥ ४ ॥
मदाज्ञोल्लङ्घनं कृत्वा प्रवृत्ता ये दुरासदाः । ते पश्चाद्बाहुबन्धेन पीडनीयाः प्रयत्नतः ॥ ५ ॥
किं च तस्य यमस्यापि तप्तक्रकचघातनैः । यथा पीडा तथा कार्यं तत्र गत्वा प्रयत्नतः ॥ ६ ॥
तेषामानयनेनात्र न कृत्यमपि दृश्यते । शिक्षा तत्रैव कर्तव्या तप्तमुद्गरघातनैः ॥ ७ ॥
[1] यथा पीडा तथा कार्यं तत्र गत्वा प्रयत्नतः । कुम्भीपाके पातनीयाः प्रयत्नेन सुरा अपि ॥
यमानुकूलतां प्राप्ताः ते सर्वे दुष्टबुद्धयः । किञ्च तेषां यातनायां तेषां चेन्मरणं तदा ॥ ९ ॥
सृष्टिरन्यैव कर्तव्या सर्वथापि तदाज्ञया । तव प्रतिभटो लोके न कोऽपीत्यवधारितम् ॥ १० ॥
अतस्तत्र यथाकामं सत्वरं याहि सात्विक । तत्र तावद्विचारोऽपि न कार्यस्तैः सहाऽधुना ॥
प्रतिकूलत्वमापन्नाः हन्तव्या एव सर्वथा । यदि ते सामवादार्थं आयास्यन्ति सुरास्तदा ॥ १२ ॥
तीक्ष्णतप्तकशाघातैरविचार्यैव तान् हन । इति तद्गिरमाकर्ण्य प्रणम्यापि महेश्वरम् ॥ १३ ॥
कृताञ्जलिपुटो नन्दी प्राह वाक्यं विचक्षणः ।

नन्दिकेश्वरः —

महेश्वराज्ञा शिरसा धृता नास्त्यत्र संशयः । त्वदाज्ञाभञ्जको यः स्यात्स हन्तव्यो न संशयः ॥
ब्रह्माण्डमण्डले को वा त्वदाज्ञाप्रतिकूलभाक् । सकम्पा एव तिष्ठन्ति सदा सर्वे सुरासुराः ॥
अपराधः कदा को वा भविष्यति न विद्महे । इति सर्वेऽपि तिष्ठन्ति सुराः शासनभीरवः ॥ १६ ॥
किं वाऽधुना सुराः सर्वे संहर्तव्याः त्वदाज्ञया । तावता न भवेत् तेषां न हानिरपि सर्वथा ॥
अन्यामराणां स्वर्गे तु भीतिस्तेषां कथं भवेत् । नूतनापेक्षया जीर्णाः स्वतः शङ्काकलङ्किताः ॥
एतेषामेव कर्तव्या शिक्षा तावद्यथोचितम् । अनुतप्तास्ततस्तेऽपि स्थास्यन्त्याज्ञावशास्तदा ॥ १९ ॥

1 इदमर्धं C कोशे नास्ति ।

शिक्षायां क्रियमाणायामपराधान् पुनर्यदि । करिष्यन्ति सदा सर्वे हन्तव्या एव ते सुराः ॥ २० ॥
इति मे भाति भगवन् त्वयि विज्ञापना मया । अशक्या कर्तुमेवेति निश्चितं तु मुहुर्मुहुः ॥ २१ ॥

व्यासः —

इति तद्वचनं श्रुत्वा विचार्य हृदि शङ्करः । सम्यगुक्तं त्वया नन्दिन् उचितं कुरु सत्वरम् ॥ २२ ॥
इत्याज्ञप्तः प्रहृष्टोऽपि त्वरया नन्दिकेश्वरः । जगाम पुष्पकारूढो यत्र देवा यमादयः ॥ २३ ॥
नन्दिकेशं समालोक्य दूरात् ते शिवकिङ्कराः । सकम्पास्ताडयामासुः कशाद्यैरमरान्मुहुः ॥ २४ ॥
केचित् तप्तकशाघातैः मूर्छिता एव ते सुराः । मुद्गरैर्भिण्डिपालैश्च ताडिताः श्वासवर्जिताः ॥ २५ ॥
तप्तक्रकचसङ्घातनिहताः पतिताः सुराः । चुक्रुशुश्च तदा सर्वाः सकम्पाश्चामराङ्गनाः ॥ २६ ॥
तत्कोलाहलमाकर्ण्य गन्धर्वा अपि चुक्रुशुः । तथैव मुनयः सिद्धाः गन्धर्वाः पन्नगा अपि ॥२७॥
ततः परस्परं प्रोचुः ते सर्वे भयविह्वलाः । दुरात्मना यमेनेदमविचार्य कृतं खलु ॥ २८ ॥
शिवाज्ञा विस्मृता तेन प्रमत्तेन दुरात्मना । तत्कृतेनापराधेन सुराः सर्वेऽपि दुःखिताः ॥२९॥
अकालप्रलयारम्भः कोऽयमत्यद्भुतोऽधुना । पाशैर्बद्धाः सुराः सर्वे पातिताः शस्त्रमण्डले ॥३०॥
महाग्निज्वालया दण्डैः कशाघातैश्च पीडिताः । अयं निरन्तराक्रोशः कदा शान्तो भविष्यति ॥
कदा वा नाशमभ्येति सेयं त्रिदशदुर्दशा । एतावत्कृतमेतैस्तु गणैर्नन्दी समेष्यति ॥ ३२ ॥
स किं वा कर्तुमुद्युक्तः तत् तावत् ज्ञायतेऽपि न । गणश्रेष्ठस्य तस्यात्र किमशक्यं स शौर्यवान् ॥
किं च सम्प्रतसमायातु महापद्धा विशेषतः । भोक्तव्यमागतं सर्वैः अस्वतन्त्रैः सुरैरपि ॥ ३४ ॥
एवं वदत्सु सर्वेषु तत्तल्लोकनिवासिषु । तत्र नन्दिनमालोक्य प्रणताः शिवकिङ्कराः ॥ ३५ ॥
प्रणम्य नन्दिकेशं तं गणाः प्रोचुर्नताननाः । अस्माभिः कृत्यमेतावत् कृतं पश्य विशेषतः ॥
यमानुकूलवचनैः एते बद्धाः सुराः परम् । तप्तशृङ्खलया बद्धैः निहताश्चाग्निसङ्कुलैः ॥ ३७ ॥
यमस्तु पूर्वमेवात्र प्रबद्धः प्रहतोऽपि च । एते तु मूर्छिताः सर्वे कशाघातप्रपीडिताः ॥ ३८ ॥
अतः परं किमस्माभिः कर्तव्यं तद्वदाधुना । त्वदाज्ञाकारिणः सर्वे वयं तावदसंशयम् ॥ ३९ ॥
ततः सुरास्तु तं दृष्ट्वा नन्दिकेशं गणोत्तमम् । ततः [1]समुत्थिताः सर्वे नन्दिकेशावलोकनात् ॥
तत्कटाक्षामृतासिक्ताः ते सर्वे विगतज्वराः । विच्छिन्नबन्धाः सर्वेऽपि प्रणतास्तत्पदाम्बुजे ॥ ४१ ॥
पाहि पाहि कृपासिन्धो सापराधानपि क्षणम् । कटाक्षकरुणासारैरभिषिच्य मुहुर्मुहुः ॥ ४२ ॥
शिवाज्ञोल्लङ्घनं तावत् अस्माभिर्न कृतं प्रभो । तथापि दुरवस्थेयं त्रिदशानामपीदृशी ॥ ४३ ॥

1 समुदिताः C

शिवपूजापरित्यागो न कृतः सर्वथा सुरैः । तथापि ... ॥ ४४ ॥

शिवार्चकाराधनं च न त्यक्तं सर्वथा सुरैः । तथापि .... ॥ ४५ ॥

शिवध्यानपरित्यागो न कृतः सर्वथा सुरैः । तथापि ... ॥ ४६ ॥

उद्धूलनपरित्यागो न कृतः सर्वथा सुरैः । तथापि .... ॥ ४७ ॥

रुद्राक्षधारणत्यागो न कृतः सर्वथा सुरैः । तथापि .... ॥ ४८ ॥

शिवपूजाद्रव्यनाशो न कृतः सर्वथा सुरैः । तथापि ... ॥ ४९ ॥

उपेक्षितं च नास्माभिरधुना शिवमन्दिरम् । तथापि ... ॥ ५० ॥

शिवदूषणवार्तापि न कृता क्वापि सर्वथा । तथापि ... ॥ ५१ ॥

शिवावज्ञा कृता क्वापि सर्वथा न सुरैरिह । तथापि .... ॥ ५२ ॥

न शाङ्करगणावज्ञा सर्वथापि कृता सुरैः । तथापि .... ॥ ५३ ॥

शिवाभिषेकपानीयमपीत्वा न स्थितं सुरैः । तथापि ... ॥ ५४ ॥

न त्यक्तं शिवनैवेद्यभोजनं च सुरैरिह । तथापि ... ॥ ५५ ॥

न त्यक्तमधुना देवैः शिवनिर्माल्यधारणम् । तथापि ... ॥ ५६ ॥

शिवतीर्थाटनत्यागो न कृतः सर्वथा सुरैः । तथापि ... ॥ ५७ ॥

शिवनिन्दकपापिष्ठपोषणं न कृतं सुरैः । तथापि ... ॥ ५८ ॥

शिवमार्गामार्जनं च न कृतं सर्वथा सुरैः । तथापि ... ॥ ५९ ॥

शिवमार्गे कण्टकानां नाकृतं च निवारणम् । तथापि .... ॥ ६० ॥

शिवालयापरिष्कारो न कृतः सर्वथा सुरैः । तथापि ... ॥ ६१ ॥

शिवदीपापरिष्कारो न कृतः सर्वथा सुरैः । तथापि ... ॥ ६२ ॥

शिवनीराजनादानं न कृतं सर्वथा सुरैः । तथापि ... ॥ ६३ ॥

शिवधूपानर्पणं च न कृतं सर्वथा सुरैः । तथापि .... ॥ ६४ ॥

शिवानिवेदितान्नानि न भुक्तानि सुरैः सदा । तथापि ... ॥ ६५ ॥

शिवानिवेदितं नीरं न पीतं सर्वथा सुरैः । तथापि ... ॥ ६६ ॥

शिवानिवेदितं वस्त्रं नोपभोगाय कल्पितम् । तथापि .... ॥ ६७ ॥

शिवानिवेदितं सौख्यं नोपभोगाय कल्पितम् । तथापि ... ॥ ६८ ॥

रम्भासंभोगकालेऽपि शिवविस्मरणं न नः । तथापि ... ॥ ६९ ॥

यथापराधमस्माकं विधेयमपि शासनम् । महेशानं न जानीमो महेशानस्त्वमद्य नः ॥ ७० ॥
आर्तार्तिध्वान्तहरणे करुणातरणिः क्षणम् । तरुणो वास्त्वतरुणो दक्षो दक्षहरप्रियः ॥ ७१ ॥
इति देववचः श्रुत्वा नन्दिकेशः कृपानिधिः । तद्दुर्दशापहरणं चकार तदनन्तरम् ॥ ७२ ॥
ततः सिंहासनारूढो विमानादवतीर्य सः । सुरैराराधितो नन्दी तानुवाच यथोचितम् ॥ ७३ ॥

नन्दिकेशः—

अपराधो यमेनाद्य कः कृतस्तेन जीवनम् । असंभावितमेवेति विज्ञेयमधुना सुराः ॥ ७४ ॥
न कालमात्रप्रलयो भवतामपि तद्वशात् । संभावितोऽद्य प्रलयः स दैवादेव नाभवत् ॥ ७५ ॥
उग्रोऽप्यनुग्र एवासीत् प्रार्थनावचनैर्मम । अन्यथा सुरवर्गस्य जातः स्याद्विलयः खलु ॥ ७६ ॥
भवद्भिः सह या मैत्री मम या सा परं सुराः । भवतां रक्षणायासीदन्यथा तत्कथं भवेत् ॥ ७७ ॥
यमस्याप्यपराधोऽत्र वस्तुतो नास्ति यद्यपि । तथापि दूतदौरात्म्यं यमनाशाय कल्पते ॥ ७८ ॥
न शिक्षयति कालोऽयं काले काले स्वकान् मुहुः । दूतानतः शिक्षयति स वक्तुमिव शिक्षितः ॥
इत्युक्तवन्तं तं देवाः कालेनापि समन्विताः । प्रणताः पुनरूचुस्ते विनयानतकन्धराः ॥ ८० ॥

देवाः—

आनीतस्तावदधुना स तावन्नैव शिक्षितः । न हतः पीडितो वापि विचारः क्रियतेऽधुना ॥ ८१ ॥
अविचार्य कथं कर्म कर्तव्यमधुना सुरैः । असर्वज्ञाः स्वभावेन सर्वज्ञः केवलं शिवः ॥ ८२ ॥
विना विचारं यद्यस्य पूजनं क्रियते तदा । जातः स्यादपराधोऽपि न स्याद्वा तन्न विद्महे ॥ ८३ ॥
किमस्य पुण्यं पापं वा प्रवृद्धं तद्विचार्य तु । पश्चात् कार्यं यथायोग्यं कर्तव्यमिति निश्चयः ॥
गणाभ्यागमनेनायं ज्ञायते पुण्यवानिति । तत्पूर्वं तत्कथं ज्ञेयं ज्ञायते नाधुनापि तत् ॥ ८५ ॥
किमनेन कृतं पुण्यं भवदागमनक्षमम् । न दानैरपि यागैर्वा भवदागमनं भवेत् ॥ ८६ ॥
तुलादानानि दानानां कृतानि बहुभिर्मुहुः । तेऽप्यागत्यात्र तिष्ठन्ति विचारः क्रियते ततः ॥
यागा अप्यश्वमेधान्ताः कृता यैस्तेऽपि सन्ततम् । आगत्यात्र तु तिष्ठन्ति पश्चात् स्यात् तद्विचारणा ॥
अनेकयुगपर्यन्तं यैः कृतं तपसा कृशम् । शरीरं ते समागत्य तिष्ठन्त्येतान् विलोकय ॥ ८९ ॥
एतैर्गोकोटिदानानि कृतानि बहुधा पुरा । तिष्ठन्त्यत्रैव ते सर्वे तानेतान् पश्य सत्वरम् ॥ ९० ॥
यैर्भूप्रदक्षिणं पूर्वं कृतं तैरप्यनाकुलैः । स्थीयते पश्य पश्यैतान् कोटिशो नन्दिकेश्वर ॥ ९१ ॥
आयास्यन्त्यधुना धन्या धनवृष्टिपरायणाः । द्रष्टव्यास्ते त्वयाऽस्माभिः एतानप्यवलोकय ॥
अनेन प्रत्यहं लक्षं रत्नानामेव दीयते । ब्राह्मणेभ्यः प्रयत्नेन तिष्ठन्त्यत्रावलोकय ॥ ९३ ॥

अनेन सस्यसम्पूर्णा मही दत्ता मुहुर्मुहुः । एतस्यागमने कालो भूयानेव गतः खलु ॥ ९४ ॥
वनान्यनेन बहुधा सवनानि कृतान्यपि । एतादृशाः कोटिशोऽपि तिष्ठन्त्यत्र यमालये ॥ ९५ ॥
तडागाः कारितास्तेन कोटिशः सागरोपमाः । एतादृशाः कोटिशोऽपि तिष्ठन्त्यत्र यमालये ॥
अनेन प्रत्यहं लक्षं गवां दत्तं महात्मना । अयं च स्थापितोऽस्त्यत्र तद्विचारो भविष्यति ॥ ९७ ॥
अत्यूषरे महारण्ये प्रपास्तैः कारिता मुहुः । महाग्रीष्मेऽपि तिष्ठन्ति पश्यैतान् यममन्दिरे ॥ ९८ ॥
अनेन मेरुतुल्यानि दत्तानि वसनान्यपि । दरिद्रेभ्यो विशेषेण पश्य तं यममन्दिरे ॥ ९९ ॥
गोक्षीरकुम्भाः शतशो दत्तास्तेन प्रयत्नतः । प्रत्यहं विप्रवर्गेभ्यः पश्य पश्य यमालये ॥ १०० ॥
अन्नप्रदानैरेतेन कोटिशस्तोपिता द्विजाः । एतादृशान् मुहुः पश्य कोटिशो यममन्दिरे ॥ १०१ ॥
कन्यादानैः विनीतस्तैः कालः कनकसंयुतैः । एतादृशाः कोटिशोऽपि सन्ति पश्य यमालये ॥
आवृत्तानि मुहुस्तैस्तु महादानानि कोटिशः । न तेषां गणनाप्यस्ति सर्वथा यममन्दिरे ॥ १०३ ॥
गोकोटिपानयोग्यानि कुल्यान्यपि कृतानि तैः । पश्य तान् नन्दिकेशाद्य यममन्दिरसंस्थितान् ॥
रत्नप्रासाददानानि कृतान्येतैश्च कोटिशः । तेषां न गणनाद्यापि पश्य पश्य यमालये ॥ १०५ ॥
कृतानि तैः कोटिशोऽपि सरांसि विपुलान्यपि । वाप्यः कृताश्च संपूर्णाः जलैः पश्य यमान्तिके ॥
पर्यङ्कशय्यादानानि कोटिशस्तैः कृतान्यपि । पश्य तान् पतितान् दूरे छत्रदानपरानपि ॥ १०७ ॥
धनैर्धान्यैश्च गोवृन्दैः गृहोपकरणैः सह । गृहास्तु कोटिशो दत्ताः तैस्तानत्र विलोकय ॥ १०८ ॥
सुगन्धपुष्पमालाभिः दिव्यचन्दनकर्दमैः । कोटिशस्तोपिता विप्राः तैस्तानत्र विलोकय ॥ १०९ ॥
पान्थच्छायानुकूलाश्च वृक्षास्तैः कोटिशः कृताः । पान्थेभ्यो जलमन्नं च दत्तं तैस्तान् विलोकय ॥
अतः परं कदा तेषां विचारोऽपि भविष्यति । तेषां विनिर्गमो वा स्यात् तेषां तु गणनाऽपि न ॥
परार्धादपि तिष्ठन्ति तेषां किं गणनाऽधुना । तावतां गणना तावत् कल्पान्ते भावि वा न वा ॥
एकैकस्य विचारेण पुण्यपापानुयोगतः । कालापनयनं तावत् कालस्यास्य प्रजायते ॥ ११३ ॥
जलपानार्थमप्यस्य नावकाशः प्रजायते । कालं नयति कालोऽयं धर्माधर्मविचारणैः ॥ ११४ ॥
एतादृशस्य कालस्य शासनार्थं किमुद्यमः । युक्तो भवति येनास्य ताडनं कृतमीदृशम् ॥ ११५ ॥
शिवलिङ्गार्चनं त्यक्तं किमनेनाधुनाप्ययम् । शासनार्हः कथं यूयं शाङ्कराग्रेसराः खलु ॥ ११६ ॥
पश्य त्रिपुण्ड्रं तत्काले कण्ठे रुद्राक्षमालिकाम् । एतस्य ताडने भीतिः शाङ्करात् भवतां न किम् ॥
शिवलिङ्गार्चकानस्मान् भूतिरुद्राक्षभूषणान् । पश्य व्रणानि चास्माकं अङ्गेष्वाघातजानपि ॥
अस्मासु दुरदृष्टानि किमद्यापि गणेश्वराः । भूतिरुद्राक्षदेहानां दुःखमेतत् कथं मतम् ॥ ११९ ॥

इत्युक्त्वा विरता देवाः प्रणिपत्य पुनः पुनः । व्रणपीडितसर्वाङ्गाः तदाघातभयातुराः ॥ १२० ॥

यस्यैश्वर्यमपारमक्षतमघानाक्रान्तमन्तं विना तिष्ठत्यप्रतिमं तमेव शरणं मन्ये कृपासागरम् ।
गौरीचारुपयोधराधरवलीहारावलीकेलिकालीलालोलमिहानुवेलमकलं श्रीकालकालं भजे ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे यमनन्दिकेशसंवादे यमालयस्य पुण्यापुण्यकृत् प्राणिवर्णनं नाम सप्तविंशोऽध्यायः ॥

—:×—

## अथ अष्टाविंशोऽध्यायः ।

व्यासः—

इति देववचः श्रुत्वा नन्दिकेशः शिवं स्मरन् । शिवप्रभावं सस्मार विलक्षणमनामयम् ॥ १ ॥

नन्दिकेशः—

शृणु विष्णो शृणु ब्रह्मन् शृणु काल शचीपते । शृण्वन्त्वन्ये सुरगणाः प्रभावं शांभवं मुहुः ॥ २ ॥

महेश्वरः सर्वसुरोत्तमोऽयं अनामयोऽयं जगदीश्वरोऽयम् ।
मृत्युञ्जयोऽयं मदनान्तकोऽयं कालान्तकोऽयं मम भागधेयम् ॥ ३ ॥

अस्माकमाराध्यतमं प्रकृष्टं विश्वेश्वरश्रीचरणारविन्दम् ।
आनन्दकन्दं तदिदं प्रमोदं ददातु मन्दं स्मृतमप्यमन्दम् ॥ ४ ॥

वन्दे मुहुर्दैवतसार्वभौमं सोमावतंसं गरलावतंसम् ।
तमेव वेदान्तगणाः स्तुवन्ति तमेव देवं शरणं प्रपद्ये ॥ ५ ॥

यदा कदाचित् हृदयारविन्दे महेश्वरश्रीचरणारविन्दे ।
क्षणं चरन्तो यदि चिन्तयन्ति तदा कृतान्तस्य पदं न यान्ति ॥ ६ ॥

यः कालकालः श्रुतिषु प्रसिद्धः तं कालकालं प्रणमन्ति सन्तः ।
ते तावदन्ते न कृतान्तभीतिं प्रयान्ति यान्त्येव शिवं प्रसन्नम् ॥ ७ ॥

न चायमन्यामरतुल्यरूपो यतो विरूपाक्ष इति प्रसिद्धः ।
को वा विरूपाक्षसमक्षमेति विना विरूपाक्षकटाक्षलेशम् ॥ ८ ॥

धर्मैरपारैरलमेव यागैः दानैरपारैरलमेव योगैः ।
तपोभिरुग्रैरलमेव किं तैः तं कालकालं कलयानुवेलम् ॥ ९ ॥

एकं नवं बिल्वदलं शिवाय समर्प्य तत्तुलनां प्रयाति ।
धर्मोऽपि को वा तदुमासहायस्वरूपदानेऽपि समर्थमेव ॥ १० ॥

खण्डानि पत्राण्यपि चन्द्रमौलिः छिन्नानि पुष्पाण्यपि लीलया वा ।
क्षिप्तानि गृह्णाति शुभं ददाति मुक्तिं ददाति प्रतिभूः स धर्मे ॥ ११ ॥

किमश्वमेधादिकयागवृन्दैः न ते शिवाराधनपुण्यराशेः ।
लेशोऽस्ति यः सूक्ष्मतरो नितान्तं तेनापि तुल्या न भवन्ति ते तु ॥ १२ ॥

किमुत्तमाश्वार्बुददानसङ्घैः न ते शिवाराधनपुण्यराशेः ।
लेशोऽस्ति यः सूक्ष्मतरो नितान्तं तेनापि तुल्या न भवन्ति ते तु ॥ १३ ॥

किं कांचनाभ्यर्चितकन्यकानां दानैरपारैरनुग्रामरं वा ।
ते लिङ्गपूजाफललेशलेशलेशेन वा किं तुलनां प्रयान्ति ॥ १४ ॥

सस्यादिसम्पूर्णमहीप्रदानैः किं तैरनन्तैरपि तानि तानि ।
ते लिङ्गपूजाफललेशलेशलेशेन वा किं तुलनां प्रयान्ति ॥ १५ ॥

वनानि सान्द्राणि विनिर्मितानि किं तान्यनन्तान्यपि सन्ततानि ।
ते लिङ्गपूजा ... प्रयान्ति ॥ १६ ॥

किमन्नदानैरमितैर्विचित्रैः घृतादिसद्द्रव्यसमन्वितैर्वा ।
ते लिङ्ग ... प्रयान्ति ॥ १७ ॥

गोक्षीरपूर्णामितकुम्भदानैः धनप्रदानैश्च फलप्रदानैः ।
ते लिङ्ग ... प्रयान्ति ॥ १८ ॥

विचित्रवस्त्राभरणार्बुदानां दानैरपारोदककुम्भदानैः ।
ते लिङ्ग ... प्रयान्ति ॥ १९ ॥

सुगन्धपुष्पामलमालिकानां दानैरपारैरपि किं फलं स्यात् ।
ते लिङ्ग ... प्रयान्ति ॥ २० ॥

लिङ्गे प्रदत्तं कुसुमं फलं वा दलं जलं वा तदुमासहायः ।
गृह्णाति तेनैव ददाति भाग्यं अनन्तमन्ते स ददाति मुक्तिम् ॥ २१ ॥

दूर्वाङ्कुरैर्वा शिवलिङ्गरूपं संपूज्य भक्त्या प्रणमन्ति ये ते ।
तीर्त्वैव संसारमहाम्बुधिं तं प्रयान्ति सन्तः खलु कालकालम् ॥ २२ ॥

इत्युक्त्वा विरता देवाः प्रणिपत्य पुनः पुनः । व्रणपीडितसर्वाङ्गाः तदाघातभयातुराः ॥ १२० ॥

यस्यैश्वर्यमपारमक्षतमघानाक्रान्तमन्तं विना तिष्ठत्यप्रतिमं तमेव शरणं मन्ये कृपासागरम् ।
गौरीचारुपयोधराधरवलीहारावलीकेलिकालीलालोलमिहानुवेलमकलं श्रीकालकालं भजे ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे यमनन्दिकेशसंवादे यमालयस्थ पुण्यापुण्यकृत्
प्राणिवर्णनं नाम सप्तविंशोऽध्यायः ॥

—:×:—

## अथ अष्टाविंशोऽध्यायः ।

व्यासः—

इति देववचः श्रुत्वा नन्दिकेशः शिवं स्मरन् । शिवप्रभावं सस्मार विलक्षणमनामयम् ॥ १ ॥

नन्दिकेशः—

शृणु विष्णो शृणु ब्रह्मन् शृणु काल शचीपते । शृण्वन्त्वन्ये सुरगणाः प्रभावं शांभवं मुहुः ॥ २ ॥

महेश्वरः सर्वसुरोत्तमोऽयं अनामयोऽयं जगदीश्वरोऽयम् ।
मृत्युञ्जयोऽयं मदनान्तकोऽयं कालान्तकोऽयं मम भागधेयम् ॥ ३ ॥

अस्माकमाराध्यतमं प्रकृष्टं विश्वेश्वरश्रीचरणारविन्दम् ।
आनन्दकन्दं तदिदं प्रमोदं ददातु मन्दं स्मृतमप्यमन्दम् ॥ ४ ॥

वन्दे मुहुर्दैवतसार्वभौमं सोमावतंसं गरलावतंसम् ।
तमेव वेदान्तगणाः स्तुवन्ति तमेव देवं शरणं प्रपद्ये ॥ ५ ॥

यदा कदाचित् हृदयारविन्दे महेश्वरश्रीचरणारविन्दे ।
क्षणं चरन्तो यदि चिन्तयन्ति तदा कृतान्तस्य पदं न यान्ति ॥ ६ ॥

यः कालकालः श्रुतिषु प्रसिद्धः तं कालकालं प्रणमन्ति सन्तः ।
ते तावदन्ते न कृतान्तभीतिं प्रयान्ति यान्त्येव शिवं प्रसन्नम् ॥ ७ ॥

न चायमन्यामरतुल्यरूपो यतो विरूपाक्ष इति प्रसिद्धः ।
को वा विरूपाक्षसमक्षमेति विना विरूपाक्षकटाक्षलेशम् ॥ ८ ॥

धर्मैरपारैरलमेव यागैः दानैरपारैरलमेव योगैः ।
तपोभिरुग्रैरलमेव किं तैः तं कालकालं कलयानुवेलम् ॥ ९ ॥

एकं नवं बिल्वदलं शिवाय समर्प्य तत्तुलनां प्रयाति ।
धर्मोऽपि को वा तदुमासहायस्वरूपदानेऽपि समर्थमेव ॥ १० ॥

खण्डानि पत्राण्यपि चन्द्रमौलिः छिन्नानि पुष्पाण्यपि लीलया वा ।
क्षिप्तानि गृह्णाति शुभं ददाति मुक्तिं ददाति प्रतिभूः स धर्मे ॥ ११ ॥

किमश्वमेधादिकयागवृन्दैः न ते शिवाराधनपुण्यराशेः ।
लेशोऽस्ति यः सूक्ष्मतरो नितान्तं तेनापि तुल्या न भवन्ति ते तु ॥ १२ ॥

किमुत्तमाश्वार्बुददानसङ्घैः न ते शिवाराधनपुण्यराशेः ।
लेशोऽस्ति यः सूक्ष्मतरो नितान्तं तेनापि तुल्या न भवन्ति ते तु ॥ १३ ॥

किं कांचनाभ्यर्चितकन्यकानां दानैरपारैरनुग्रामरं वा ।
ते लिङ्गपूजाफललेशलेशलेशेन वा किं तुलनां प्रयान्ति ॥ १४ ॥

सस्यादिसम्पूर्णमहीप्रदानैः किं तैरनन्तैरपि तानि तानि ।
ते लिङ्गपूजाफललेशलेशलेशेन वा किं तुलनां प्रयान्ति ॥ १५ ॥

वनानि सान्द्राणि विनिर्मितानि किं तान्यनन्तान्यपि सन्ततानि ।
ते लिङ्गपूजा ... प्रयान्ति ॥ १६ ॥

किमन्नदानैरमितैर्विचित्रैः घृतादिसद्द्रव्यसमन्वितैर्वा ।
ते लिङ्ग ... प्रयान्ति ॥ १७ ॥

गोक्षीरपूर्णामितकुम्भदानैः धनप्रदानैश्च फलप्रदानैः ।
ते लिङ्ग ... प्रयान्ति ॥ १८ ॥

विचित्रवस्त्राभरणार्बुदानां दानैरपारैरुदककुम्भदानैः ।
ते लिङ्ग ... प्रयान्ति ॥ १९ ॥

सुगन्धपुष्पामलमालिकानां दानैरपारैरपि किं फलं स्यात् ।
ते लिङ्ग ... प्रयान्ति ॥ २० ॥

लिङ्गे प्रदत्तं कुसुमं फलं वा दलं जलं वा तदुमासहायः ।
गृह्णाति तेनैव ददाति भाग्यं अनन्तमन्ते स ददाति मुक्तिम् ॥ २१ ॥

दूर्वाङ्कुरैर्वा शिवलिङ्गरूपं संपूज्य भक्त्या प्रणमन्ति ये ते ।
तीर्त्वैव संसारमहाम्बुधिं तं प्रयान्ति सन्तः खलु कालकालम् ॥ २२ ॥

लिङ्गे यदल्पं फलमम्बु वान्यत् दत्तं तदेवामितपुण्यहेतुः ।
न तेन तुल्यं जगतीतलेऽस्मिन् शुभावहं पापविनाशहेतुः ॥ २३ ॥

शिवाय यः प्रत्यहमादरेण दत्वा जलं विल्वदलानि दद्यात् ।
तत्पुण्यतुल्यं तु न पुण्यमस्ति दृष्टं श्रुतं वा श्रुतिषु प्रसिद्धम् ॥ २४ ॥

शिवाय दद्याद्यदि मुष्टिमात्रं भक्त्या यदन्नं घृतलेशयुक्तम् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ २५ ॥

दीपं महेशाय घृताभिषिक्तं सद्वर्तिकायुक्तमपि प्रदद्यात् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ २६ ॥

धूपं महेशाय घृतेन सिक्तं ददाति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं .... प्रसिद्धम् ॥ २७ ॥

क्षीरप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं .... प्रसिद्धम् ॥ २८ ॥

दधिप्रदानं गिरिशाय भक्ताः कुर्वन्ति ये प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ २९ ॥

घृतप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ३० ॥

सिताप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ३१ ॥

फलप्रदानानि मृडाय भक्ताः कुर्वन्ति ये प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ३२ ॥

मधुप्रदानानि भवाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ३३ ॥

तांबूलदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं .... प्रसिद्धम् ॥ ३४ ॥

एलालवङ्गादिकमादरेण ददाति यः प्रत्यहमीश्वराय ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ३५ ॥

ददाति यो दर्पणमीश्वराय मनोहरं प्रत्यहमादरेण ।
तत्पुण्य .... प्रसिद्धम्　　　　॥ ३६ ॥

करोति यश्चामरवीजनेन वातप्रसारं गिरिशाय नित्यम् ।
तत्पुण्य .... प्रसिद्धम्　　　　॥ ३७ ॥

छत्रप्रदानं नियमेन नित्यं करोति यः सर्वसुरोत्तमाय ।
तत्पुण्यतुल्यं ... प्रसिद्धम्　　　　॥ ३८ ॥

ध्वजप्रदानं गिरिशाय नित्यं करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम्　　　　॥ ३९ ॥

नाट्यप्रदानं गिरिशाय नित्यं करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम्　　　　॥ ४० ॥

तूर्यप्रदानं गिरिशाय नित्यं करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम्　　　　॥ ४१ ॥

संमार्जनं शङ्करमन्दिरस्य करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम्　　　　॥ ४२ ॥

दीपावलीं शङ्करमन्दिरेषु करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम्　　　　॥ ४३ ॥

दुकूलदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम्　　　　॥ ४४ ॥

करोति यः पुष्पवितानदानं भक्त्या महेशाय विशेषकाले ।
तत्पुण्य ... प्रसिद्धम्　　　　॥ ४५ ॥

वसन्तकाले नवचन्दनेन करोति लिङ्गेष्वनुलेपनानि ।
तत्पुण्य ... प्रसिद्धम्　　　　॥ ४६ ॥

दध्यन्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम् ।
तत्पुण्य .... प्रसिद्धम्　　　　॥ ४७ ॥

क्षीरान्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम् ।
तत्पुण्यतुल्यं ... प्रसिद्धम्　　　　॥ ४८ ॥

लिङ्गे यदल्पं फलमम्बु वान्यत् दत्तं तदेवामितपुण्यहेतुः ।
न तेन तुल्यं जगतीतलेऽस्मिन् शुभावहं पापविनाशहेतुः ॥ २३ ॥

शिवाय यः प्रत्यहमादरेण दत्वा जलं विल्वदलानि दद्यात् ।
तत्पुण्यतुल्यं तु न पुण्यमस्ति दृष्टं श्रुतं वा श्रुतिषु प्रसिद्धम् ॥ २४ ॥

शिवाय दद्याद्यदि मुष्टिमात्रं भक्त्या यदन्नं घृतलेशयुक्तम् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ २५ ॥

दीपं महेशाय घृताभिषिक्तं सद्वर्तिकायुक्तमपि प्रदद्यात् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ २६ ॥

धूपं महेशाय घृतेन सिक्तं ददाति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं .... प्रसिद्धम् ॥ २७ ॥

क्षीरप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं .... प्रसिद्धम् ॥ २८ ॥

दधिप्रदानं गिरिशाय भक्ताः कुर्वन्ति ये प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ २९ ॥

घृतप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ३० ॥

सिताप्रदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ३१ ॥

फलप्रदानानि मृडाय भक्ताः कुर्वन्ति ये प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ३२ ॥

मधुप्रदानानि भवाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ३३ ॥

तांबूलदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं .... प्रसिद्धम् ॥ ३४ ॥

एलालवङ्गादिकमादरेण ददाति यः प्रत्यहमीश्वराय ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ३५ ॥

दद्राति यो दर्पणमीश्वराय मनोहरं प्रत्यहमादरेण ।
तत्पुण्य .... प्रसिद्धम् ॥ ३६ ॥

करोति यश्चामरवीजनेन वातप्रसारं गिरिशाय नित्यम् ।
तत्पुण्य .... प्रसिद्धम् ॥ ३७ ॥

छत्रप्रदानं नियमेन नित्यं करोति यः सर्वसुरोत्तमाय ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ३८ ॥

ध्वजप्रदानं गिरिशाय नित्यं करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ३९ ॥

नाट्यप्रदानं गिरिशाय नित्यं करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ४० ॥

तूर्यप्रदानं गिरिशाय नित्यं करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ४१ ॥

संमार्जनं शङ्करमन्दिरस्य करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ४२ ॥

दीपावलीं शङ्करमन्दिरेषु करोति यः प्रत्यहमादरेण ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ४३ ॥

दुकूलदानं गिरिशाय भक्त्या करोति यः प्रत्यहमादरेण ।
तत्पुण्य ... प्रसिद्धम् ॥ ४४ ॥

करोति यः पुष्पवितानदानं भक्त्या महेशाय विशेषकाले ।
तत्पुण्य ... प्रसिद्धम् ॥ ४५ ॥

वसन्तकाले नवचन्दनेन करोति लिङ्गेष्वनुलेपनानि ।
तत्पुण्य ... प्रसिद्धम् ॥ ४६ ॥

दध्यन्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम् ।
तत्पुण्य .... प्रसिद्धम् ॥ ४७ ॥

क्षीरान्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ४८ ॥

घृतान्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ४९ ॥
मध्वन्नदानेन करोति पूजां नित्यं महेशाय तु सोपदंशम् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ५० ॥
महेशनैवेद्यविशेषदानैः यः शङ्करं तोषयति प्रयत्नात् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ५१ ॥
महेशदत्तैर्वसनैर्धनैर्वा यः शंकरं तोषयति प्रयत्नात् ।
तत्पुण्यतुल्यं ... प्रसिद्धम् ॥ ५२ ॥
किं लिङ्गार्चनपुण्यतुल्यमनघं पुण्यं श्रुतं तद्यतः
पुण्यानामपि पुण्यमुत्तमतमं तत्सर्वपुण्यालयम् ।
तन्मृत्युञ्जयतोषकारणमिति ज्ञातं तदेवोत्तमं
तद्वेदान्तशिरोमणिश्रुतिमतं किं तेन तुल्यं सुराः ॥ ५३ ॥
रे रे सुराः शिवपदाम्बुजपूजनेन तुल्यं न पुण्यमतुलं तदपारपुण्यैः ।
साध्यं तदेव सुकरं करवीरपुष्पैः दूर्वाङ्कुरैरपि कृतं वितनोति मुक्तिम् ॥ ५४ ॥
विश्रामः शिवपूजनेऽप्यगणितैः पुण्यैः परं जायते
जातस्याप्यनुवर्तनं बहुतरैः पुण्याब्धिभिर्जायते ।
तत्पूजाकरणेन पुण्यनिधयः प्राप्ताः समस्ताः सदा
कल्याणाम्बुधयोऽप्यपारविभवाः प्राप्ताः परार्धाधिकाः ॥ ५५ ॥
कामं कायविशोषणाय मुनिभिः तप्तं तपः किं ततो
लिङ्गाराधनमन्तरेण मरणे भोगस्य मुक्तेरपि ।
वार्ता नेत्यवधारणं श्रुतिगणैः लिङ्गार्चनं कामदं
सर्वेषामपि निश्चितं तदितरत् सर्वं तुषान्वेषणम् ॥ ५६ ॥
एकं बिल्वदलं नवं शिथिलमप्यम्लानमप्यल्पम-
प्यत्यल्पं शिवलिङ्गभागनिहितं हन्त्रापदम्भोनिधीन् ।
कल्याणांबुधिपङ्क्तिमप्यनुदिनं तावत्करोत्यन्वहं
मोदाम्भोधिविवर्धनं च बहुधा मुक्तिं तनोत्यन्ततः ॥ ५७ ॥
सत्यं सत्यमिहोच्यते सुरगणाः सत्यं पुनः सर्वथा-
प्युद्धृत्याशु भुजद्वयं शपथमप्यम्बापदाम्भोरुहे ।

कृत्वा शङ्करचारुचारुचरणाम्भोजेऽपि लिङ्गार्चनं
सर्वाभीष्टदमेव तेन सदृशं पुण्यं न लोकत्रये ॥ ५८ ॥
एतल्लिङ्गसमर्चनं मुनिजनाशास्यं रहस्यं परं
वक्तव्यं शिवपूजनोत्सवरसाविर्भावतुष्टाय तु।
इष्टायामितपुण्यकीर्तिविभवाकाराय हाराय त-
न्नान्यस्मै शिवनिन्दकाय शपथः शम्भोः प्रभोः पादयोः ॥ ५९ ॥

व्यासः —

नन्दीश्वरवचोवीचीपानपीनात्मविग्रहाः। शिवानुग्रहमासाद्य प्रापुरानन्दमद्भुतम् ॥ ६० ॥
ततः परमनेनापि दूतानीतेन किं पुरा। पुण्यं कृतं वदास्माभिः न ज्ञातमिति चोचिरे ॥ ६१ ॥

नन्दिकेश्वरः —

किं वक्तव्यं मया देवाः त्रिणेत्रस्याद्भुतं खलु। चरित्रं तत्पवित्रं हि पवित्राणां विशेषतः ॥ ६२ ॥
हरस्यामरवीरस्य रक्षेत्यप्यविशङ्कया। अनुग्रहस्तदोग्राणां परमानन्दसाधनम् ॥ ६३ ॥
स्वतन्त्रः स महादेवो यं पश्यति दयार्णवः। तेन तीर्णः स संसारपापनक्राकरः खलु ॥ ६४ ॥
प्रभुचित्तानुसारेण किङ्कराणां तु वर्तनम्। अन्यथा विपरीतं स्यात् इति निश्चितमेव हि ॥ ६५ ॥
तदुक्तिरेव वेदार्थो वेदवक्ता स एव हि। प्रामाण्यमपि वेदानां न स्वतः परमार्थतः ॥ ६६ ॥
परन्तु शिववाक्यत्वस्वरूपेणेति निश्चितम्। वेदास्तु शिववाक्यानि प्रामाण्यं तेषु सर्वथा ॥ ६७ ॥
धर्मतत्त्वं महेशेन ज्ञायते नामरैरपि। किन्नरैर्वा न गन्धर्वैः नराणां तत्र का कथा ॥ ६८ ॥
नित्यं सर्वज्ञमूर्तित्वादष्टमूर्तिः परं स्वतः। जानाति तत्त्वधर्माणां सर्वेषामपि वस्तुतः ॥ ६९ ॥
अयमेतादृशो धर्मः फलमस्येदमित्यपि। जानाति भगवान् शंभुः सांबः संसारमोचकः ॥ ७० ॥
तन्मायया परं विश्वं मोहितं तच्चराचरम्। संसारे पातयत्येव पुनः पुनरनेकधा ॥ ७१ ॥
अहो महेश्वरैश्वर्यमपारमतुलं खलु। तत्केन ज्ञायते लोके वेदैर्न ज्ञायते यतः ॥ ७२ ॥
तदुक्तरवैर्वेदैः तद्रूपावगमः कथम्। अस्मदुक्तेन वाक्येन नास्मद्ज्ञानं यथा तथा ॥ ७३ ॥
वेदान्तगोचरं रूपं सच्चिदानन्दलक्षणम्। तदस्माभिः कथं ज्ञेयं दुर्ज्ञेयत्वावधारणात् ॥ ७४ ॥
ये लीलाविग्रहाः शंभोः तेऽप्यनन्तास्तथाविधाः। तद्ज्ञानमप्यशक्यं हि सर्वथैव स्वभावतः ॥ ७५ ॥
एकैको विग्रहस्तस्य नास्मन्नयनगोचरः। तेजःपुञ्जसमाक्रान्ताः तेजःपुञ्जाः स्वभावतः ॥ ७६ ॥
द्विबाहवो विग्रहास्तु कोटिशः परमात्मनः। तस्यैव कोटिशस्तावत् ते चतुर्बाहवः पराः ॥ ७७ ॥

केचिदष्टभुजास्तस्य केचिच्च दशबाहवः । सहस्रबाहवः केचित्[1] केचिदर्बुदबाहवः ॥ ७८ ॥
परार्धबाहवः केचित् महादेवस्य विग्रहाः । दिव्याभरणसंपन्नाः ते सर्वे मेरुसन्निभाः ॥ ७९ ॥
दुकूलसंवृताः सर्वे दिव्यचन्दनचर्चिताः । उमार्धविग्रहाः सर्वे त्रिशूलवरबाहवः ॥ ८० ॥
ते सर्वे चन्द्ररेखाङ्काः नीलकण्ठाः कपर्दिनः । कैलासभुवनागारं व्याप्य सर्वे व्यवस्थिताः ॥ ८१ ॥
परमानन्दसंपूर्णाः ते सर्वेऽपि कृपार्णवाः । तत्प्रभावार्णवान्तस्तु न वेदैरपि शस्यते ॥ ८२ ॥
तद्ज्ञानमस्मदादीनां सुतरामपि दुर्लभम् । एतेषां विग्रहाणां तु सर्वेषां मूलविग्रहः ॥ ८३ ॥
चिद्घनः शिव एवेति तद्ज्ञानमतिदुर्लभम् । तत्र द्विबाहुरीशानविग्रहो दृश्यते मया । ८४ ॥
कथञ्चिद्घोरतपसा कृपयाऽपि शिवस्य मे । शिवया स यदा युक्तः तदा तद्दर्शनं परम् ॥ ८५ ॥
कुमारस्य गणेशस्य तदन्येषां तु दुर्लभम् । स विहारार्थमायाति यदा बहिरुमां विना ॥ ८६ ॥
तदा सकरुणापूरो हरो लोचनगोचरः । तस्यैव लीलया सृष्टिः स्थितिः संहार इत्यपि ॥ ८७ ॥
स कथञ्चिद्वेदवाक्यैः विरूपाक्षो निरूपितः । तदाज्ञावशगं सर्वमिदं ब्रह्माण्डमण्डलम् ॥ ८८ ॥
वाति वातस्ततो भीतः शङ्करादुग्रशासनात् । उग्रोग्रशासनादेव भीतः सूर्योऽप्युदेत्ययम् ॥ ८९ ॥
भीषास्मादग्निरिन्द्रश्च मृत्युर्धावति पञ्चमः । एतादृशं महादेवं सर्वश्रुत्यन्तसंस्तुतम् ॥ ९० ॥
स्मृत्वाऽपि मुच्यते घोरैः अपारैरघसागरैः । अर्चनं स्मरणं ध्यानं वन्दनं कीर्तनं तथा ॥ ९१ ॥
जपोऽपि शिवलिङ्गाग्रे शिवस्यानन्तमुच्यते ॥ ९२ ॥

शिवचरणसरोजाभ्यर्चनध्यानदानस्मरणभजनगानाराधनालापनाद्यैः ।
अनुपदमनुधावन्त्यादरादिन्दिराद्याः कनकरुचिरदण्डाखण्डचण्डातपत्रैः ॥ ९३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे देवान् प्रति शिवधर्मे शिवमूर्तिभेदवर्णनं नाम
अष्टाविंशोऽध्यायः ॥

—o—

1 'इतःपरं 'केचित्ते लक्षबाहवः । ते कोटिबाहवः केचित्' इत्यधिकः पाठः C कोशे ।

# अथ एकोनत्रिंशोऽध्यायः ।

व्यासः —

ततः परं सुराः सर्वे प्रणताः प्रीतिपूर्वकम् । शिवधर्माकर्णनार्थं उद्यताः प्रीतिपूर्वकम् ॥ १ ॥

ततः कृताञ्जलिपुटाः सुरास्ते नतकन्धराः । शिवधर्मान् वदस्वेति तं मुहुर्मुहुरानताः ॥ २ ॥

सुराणां गिरमाकर्ण्य स धीरो नन्दिकेश्वरः । शिवधर्ममणिश्रेणिभूषणः प्राह तान् सुरान् ॥ ३ ॥

नन्दिकेश्वरः —

नानाधर्मफलापारसारः शङ्करपूजनम् । न तस्मादधिकं पुण्यं श्रुतं स्वर्गापवर्गदम् ॥ ४ ॥

शिवपूजनमेवैतत् बहुधा श्रुतिकीर्तितम् । तत्कीर्तनेन वेदाश्च पावना इति कीर्तिताः ॥ ५ ॥

शिवध्यानपरा पूजा शङ्करस्य महात्मनः । तेन ध्यानेन मुच्यन्ते संसारादघसागरात् ॥ ६ ॥

हिरण्यकोटिरित्यादि श्रुतिकोटिप्रतिश्रुतम् । स्वरूपं शङ्करस्येदं ध्येयं मोहं विना मुहुः ॥ ७ ॥

मुहुर्मुहुरुमाकान्तं नितान्तं शान्तविग्रहम् । ध्यात्वा ध्यानप्रभावेण मुच्यते भवबन्धनात् ॥ ८ ॥

बहुजन्मार्जितैः पुण्यैः भवे भक्तिः प्रजायते । तया भक्त्या महादेवं ध्यात्वा मुक्तो भवेन्नरः ॥९॥

सा भक्तिर्दुर्लभा लोके तपसाऽप्यमरास्ततः । शङ्करानुग्रहादेव सा भक्तिर्भवति ध्रुवम् ॥ १० ॥

श्रुत्युक्तेन प्रकारेण ध्यात्वा लिङ्गे सदाशिवम् । पूजा कार्या प्रयत्नेन प्रत्यहं प्रीतिपूर्वकम् ॥ ११ ॥

बिल्वैः प्रसूनैर्दर्भैर्वा नवदूर्वाङ्कुरैरपि । नीरैर्वा पूजयेल्लिङ्गं सर्वमङ्गलदायकम् ॥ १२ ॥

भस्मनोद्धूल्य सर्वाङ्गं कृत्वा रुद्राक्षधारणम् । शिवलिङ्गमुपस्पृश्य चरं वाऽचरमेव वा ॥ १३ ॥

सद्योजातादिभिर्मन्त्रैः आवाह्य गिरिजापतिम् । रुद्राध्यायेन सूक्तैश्च रौद्रैरीशाभिषेचनम् ॥

गोक्षीरदधिमध्वाज्यैः शर्कराफलसंयुतैः । जलैश्च शीतलैर्धारामविच्छिन्नां प्रकल्पयेत् ॥ १५ ॥

ततो विभूतिं दत्वा तु दद्यात् चन्दनमादरात् । ततो बिल्वदलं दद्यात् अक्षतानपि सादरम् ॥१६॥

ततो धूपं च दीपं च नैवेद्यं च मनोहरम् । पानीयं चाथ ताम्बूलं एलाकर्पूरसंयुतम् ॥ १७ ॥

लवङ्गादियुतं दद्यात् दुकूलं च ततः परम् । पश्चादाभरणं दद्यात् दीपनीराजनं ततः ॥ १८ ॥

दर्पणं चामरं छत्रं व्यजनं च ततः परम् । दत्वा प्रणम्य बहुधा नाट्यमीशाय कल्पयेत् ॥ १९ ॥

पुनर्जलं गन्धयुतं शीतलं च मनोहरम् । दत्वा धूपं च दीपं च कर्पूरेण मनोहरम् ॥ २० ॥

पश्चाद्गुरूपदिष्टेन मार्गेणातिस्थिरासनः । पञ्चाक्षरजपं कृत्वा शाङ्करान् भोजयेत् ततः ॥ २१ ॥

स्वयं च शिवनैवेद्यं भुक्त्वा मौनपुरःसरम् । ततः शिवकथां पुण्यां वाचयित्वा पुनः शिवाम् ॥

पुनराराधनं कुर्यादुक्तमार्गेण सादरम् । एवं कृत्वा पुनः पूजां मध्यरात्रे पुनः पुनः ॥ २३ ॥
ततः शयनसामग्रीं सङ्कल्प्य शिवयोः स्वयम् । कृत्वा शयानमीशानं स्मृत्वोत्थायार्चयेत् पुनः ॥
एवमाभरणं कुर्यात् सदीपनयनोत्तरम् । इदं नित्यं ब्राह्मणानां राज्ञां वैश्यस्य चामराः ॥ २५ ॥
सुराणां च विशेषेण मुनीनामप्यनुक्षणम् । शिवार्चनं परो धर्मः किन्नराणां विशेषतः ॥ २६ ॥
गन्धर्वाणां च सर्पाणां सिद्धानां च विशेषतः । नारीणां च परो धर्मः शिवपूजनमास्तिकम् ॥
शूद्राणामितरेषां च लौकिकं शिवपूजनम् । शिवार्चनं विना भुक्त्वा दरिद्रो भवति ध्रुवम् । २८ ॥
अन्ते नरकमाप्नोति शिवार्चनविवर्जितः । संसारबन्धनान्मुक्तो न भवत्येव सर्वथा ॥ २९ ॥
संसारसागरे मग्नः शिवपूजनलक्षणम् । आधारं दुर्लभं प्राप्य समुत्तिष्ठति मानवः ॥ ३० ॥
संसारबन्धविच्छेदः शिवार्चनमहासिभिः । तद्विच्छेदकमन्यत्तु दृश्यते न जगत्त्रये ॥ ३१ ॥
जायन्ते बहवस्तावत् म्रियन्ते च पुनः पुनः । शिवार्चनाविहीनास्ते जन्मकोटिषु दुःखिताः ॥
ते गर्भनरकावासाः ये शर्वानर्चका नराः । सूकराणां च तेषां च विशेषस्तु न सर्वथा ॥ ३३ ॥
मलाशनं यतस्तेषां तेषामप्यविशेषतः । तेऽपि सूकरगर्भेषु जायन्ते च पुनः पुनः ॥ ३४ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । अपारवेदराशिस्थं वेदवेदान्तपारगाः ॥ ३५ ॥
पुरा कश्चिदभूद्विप्रो धनधान्यसमन्वितः । पूर्वार्जितेन पुण्येन पुत्रपौत्रादिसंयुतः ॥ ३६ ॥
स भुङ्क्ते विपुलान् भोगान् शिवानर्चनतत्परैः । असंख्यातैः महात्यन्तं नाट्यगानादरः सदा
ददाति तेभ्यो वित्तानि बहूनि विविधान्यपि । रत्नानि तेन दत्तानि दुकूलान्यपि कोटिशः ॥
अशाङ्करैः सह प्रीतिः तेभ्यो दत्तं मुहुर्मुहुः । गावः सहस्रशो दत्ताः तेभ्य एव दुरात्मना ॥३९॥
महिषीणां सहस्राणि तेभ्यो दत्तानि कोटिशः । अश्वाश्च दत्तास्तेनैव बलीवर्दाश्च कोटिशः ॥ ४० ॥
अन्नानां राशयो दत्ताः तेभ्य एव प्रयत्नतः । अशांभवैः सह वासः संलापो भोजनाशनः ॥ ४१ ॥
अशांभवं मन्दिरं च तस्य भाति श्मशानवत् । न तस्य मन्दिरे शैवः शिवलिङ्गं मनोहरम् ॥
तच्चण्डालश्मशानेन तुल्यमित्यवगम्यताम् । यत्र शाङ्करसङ्कीर्णं यल्लिङ्गेन विवर्जितम् ॥ ४३ ॥
शिवलिङ्गविहीनस्य मन्दिरे यदि मोहतः । निवसेत् सोऽपि चण्डालः प्रतिजन्मनि जायते । ४४ ॥
अशांभवोदकं पीत्वा मूत्रप्रायं प्रयत्नतः । मूत्रकुण्डे पतत्येव जन्मकोटिषु मानवः ॥ ४५ ॥
अशांभवान्नं मोहेन यो भुङ्क्ते मोहतोऽपि वा । सन्तप्तमलकुण्डेषु पतत्येव न संशयः ॥ ४६ ॥
अशांभवैः सह प्रीतिं भोजनाद्यैः करोति यः । स चण्डालत्वमासाद्य विष्ठायां जायते कृमिः ॥
महापातकसंसर्गो वरं स्वर्गविनाशकः । अशाङ्करैः सहावासो न वरं दुःखसाधनम् ॥ ४८ ॥

चण्डालैरपि संवासो यद्यापदि तदा परम् । स तावत्स्वर्गमार्गस्य सर्वथा न निवारकः ॥ ४९ ॥
भोगस्वर्गापवर्गाणां अशांभवकुलान्वये । दूरे कथा प्रत्युतात्र परत्रापि महद्भयम् ॥ ५० ॥
स तादृशो मृतो दैवात् सकलत्रोऽग्निमाप सः । तेन भुक्तानि घोराणि नरकाणि पुनः पुनः ॥
यैर्यैस्तस्य धनं प्राप्तं तस्य मित्राणि यानि च । तैः सहात्यन्तघोरेषु नरकेषु स्थितः स तु ॥ ५२ ॥
स सारमेयजन्मानि भुक्त्वा भुक्त्वा सहस्रशः । पिशाचरूपतां प्राप्तो वने जलविवर्जिते ॥ ५३ ॥
तत्रार्तः क्षुधया सोऽपि क्षुधितोऽप्यनुवासरम् । दुःखेन कालनयनं कृतं तेन दुरात्मना ॥ ५४ ॥
एतादृशीः कोटिशस्तु विपिनं समुपाश्रिताः । तृषार्ताश्च क्षुधार्ताश्च दग्धाश्च जठराग्निना ॥ ५५ ॥
तदाक्रोशैः वनं व्याप्तं मृगैर्भीतैः सहस्रधा । तैः शब्दैः कर्णशस्त्रार्थैः वनं त्यक्तमनन्तधा ॥
तस्मिन् वने मनोज्ञानि फलानि विपुलान्यपि । तैर्न दृष्टानि रम्याणि जलान्यपि विशेषतः ॥
तैर्न दीपः शङ्कराय दत्तः शङ्करमन्दिरे । तेन पापेन ते सर्वेऽप्यन्धाः सर्वात्मना सुराः ॥ ५८ ॥
यैर्न दीपो महेशाय प्रदत्तो भक्तिपूर्वकम् । ते तु सर्वेऽपि जात्यन्धाः भवन्त्येव न संशयः ॥
यैर्न दत्तं महेशाय शीतलं जलमुत्तमम् । ते तृषार्ता न पश्यन्ति जलं च निकटे स्थितम् ॥ ६० ॥
यैर्न दत्तं महेशाय चन्दनं च मनोहरम् । ते दुर्गन्धसमाक्रान्ततनवोऽपि भवन्ति हि ॥ ६१ ॥
यैर्न दत्तं महेशाय वसनं प्रीतिपूर्वकम् । ते तु न प्राप्नुवन्त्यन्नं[1] न पश्यन्त्यविदूरतः ॥ ६२ ॥
यैर्मन्दिरं महेशाय न कृतं भक्तिपूर्वकम् । ते तु न प्राप्नुवन्त्येव सदनं सर्वथा सुराः ॥ ६३ ॥
रुचिराणि मनोज्ञानि विचित्राणि फलानि वा । जलानि वा महेशाय दत्वा कामानवाप्नुयात् ॥
जलं चुलकपूर्णं वा यो दद्यात् गिरिशाय सः । ऊषरेऽपि जलं प्राप्नोत्यतिग्रीष्मेऽप्यसंशयम् ॥
अन्नं दत्वा महेशाय तद्दत्वा शांभवाय च । अन्नपर्वतमासाद्य मोदन्ते मनुजाः सुराः ॥ ६६ ॥
जलं दत्वा महेशाय तद् दत्वा शांभवाय च । सुधासागरमासाद्य मोदन्ते मनुजाः सुराः ॥
दुग्धं दत्वा महेशाय तद् दत्वा शांभवाय च । क्षीरसागरमासाद्य मोदन्ते मनुजाः सुराः ॥ ६८ ॥
दधि दत्वा महेशाय तद् दत्वा शांभवाय च । दधिसागरमासाद्य मोदन्ते मनुजाः सुराः ॥
घृतं दत्वा महेशाय तद् दत्वा शांभवाय च । घृतसागरमासाद्य मोदन्ते मनुजाः सुराः ॥ ७० ॥
शिवाय शर्करां दत्वा तद् दत्वा शाङ्कराय च । शर्करागिरिमासाद्य मोदन्ते मनुजाः सुराः ॥
फलं दत्वा महेशाय तद् दत्वा शांभवाय च । फलपर्वतमासाद्य मोदन्ते मनुजाः सुराः ॥ ७२ ॥
शिवाय चन्दनं दत्वा तद् दत्वा शांभवाय च । चन्दनह्रदमासाद्य मोदन्ते मनुजाः सुराः ॥

---

1 वसनानि विशेषतः इत्यपि श्लोकान्तरतया C. कोशे पाठः ।

शिवाय कुसुमं दत्वा तद्दत्वा शांभवाय च । कुसुमाचलमासाद्य मोदन्ते मनुजाः सुराः ॥ ७४ ॥
शिवाय वसनं दत्वा तद्दत्वा शांभवाय च । वसनाचलमासाद्य मोदन्ते मनुजाः सुराः ॥ ७५ ॥
शिवायाभरणं दत्वा तद्दत्वा शांभवाय च । भूषणाचलमासाद्य मोदन्ते मनुजाः सुराः ॥ ७६ ॥
दत्वा सुवर्णमीशाय तद्दत्वा शांभवाय च । सुवर्णाचलमासाद्य मोदन्ते मनुजाः सुराः ॥७७॥
दत्वा छत्रं महेशाय तद्दत्वा शांभवाय च रत्नछत्रसमाकीर्णः प्रयाति शिवमन्दिरम् ॥ ७८ ॥
शिवाय चामरं दत्वा तद्दत्वा शांभवाय च । रत्नचामरसङ्कीर्णः प्रयाति शिवमन्दिरम् ॥ ७९ ॥
शिवाय वाहनं दत्वा तद्दत्वा शांभवाय च । रत्नपुष्पकमासाद्य प्रयाति शिवमन्दिरम् ॥ ८० ॥
यद्यद्द्रव्यं महेशाय तद्दत्वा शांभवाय च । सर्वसौभाग्यसंपन्नः शिवलोकमवाप्नुयात् ॥८१॥
अशांभवाय दत्तानि मेरुतुल्यधनान्यपि । व्यर्थानि तानि दत्तानि चोरनीतसमानि हि ॥ ८२ ॥
अशांभवाश्च चोराश्च पुल्कसाश्च समाः सुराः । ततो न ते दानपात्रं [1]अपात्रतमतां श्रिताः ॥ ८३ ॥
अतस्तेन धनं प्राप्याप्यभाग्येन दुरात्मना । अशांभवेभ्यस्तद्दत्तं तेन दुःखमवाप सः ॥ ८४ ॥
तत्तुल्यास्ते वने तस्मिन् मिलिताश्च परस्परम् । मुहुराक्रोशनं कृत्वा स्वनिन्दावचनैः स्थिताः ॥
आक्रोशत्सु वने तेषु सा बभूवाशरीरिवाक् । अशैवानां गतिरियं किमत्राक्रोशनैः फलम् ॥ ८६ ॥
अहो गतं धनं व्यर्थं अशैवेभ्योऽतिमोहतः । दत्तं पात्रत्वबुद्ध्यापि नापात्रत्वं विनिश्चितम् ॥८७॥
ऊषरे गदरे गर्ते पुरीषेष्वपि पातितम् । यथा वृथा तथा जातमशैवेष्वर्पितं धनम् ॥ ८८ ॥
आक्रोशमपि कुर्वन्ति सर्वास्ता वनदेवताः । अशैवाधीनतां प्राप्ताः तेन कष्टं गता इति ॥ ८९ ॥
अधर्मप्रवणं जातं अशैवजनसङ्गमात् । धनं सर्वं गतं व्यर्थं तेभ्यो दत्तमसंशयम् ॥ ९० ॥
जन्ममध्ये कदाचिद्वा जलं वा शांभवाय किम् । न दत्तं तेन पापेन पिशाचत्वमुपागताः ॥ ९१ ॥
न दत्तं शांभवायान्नं न शुष्कं मोहतोऽपि वा । अतो वने पिशाचत्वं भवद्भिः प्राप्तमीदृशम् ॥
न दत्तं वसनं वा किं शांभवाय महात्मने । तेन पापेन सम्प्राप्तं पिशाचत्वं भयादृशैः ॥ ९३ ॥
अशाम्भवकथासक्तैः न श्रुता शांभवी कथा । तेन पापेन संप्राप्तं पिशाचत्वं महावने ॥ ९४ ॥
न दत्ता दीपमालाऽपि महादेवस्य मन्दिरे । तेन पापेन .... महावने ॥ ९५ ॥
अन्यदत्ताऽपि दीपानां माला नैवावलोकिता । तेन पापेन ... महावने ॥ ९६ ॥
पूजनं न कृतं भक्त्या शम्भोः शैवस्य वा मुदा । तेन पापेन ... महावने ॥ ९७ ॥
न कृतं मन्दिरं शम्भोः धने सत्यपि मोहतः । तेन पापेन .... महावने ॥ ९८ ॥

---

1 अपात्रतमतोच्छ्रिताः इति C कोशपाठः ।

शिवक्षेत्राटनोद्योगो न कृतः पापयोगतः । तेन पापेन संप्राप्तं पिशाचत्वं महावने ॥ ९९ ॥
न दत्तं शिवलिङ्गेषु पत्रं वा पुष्पमेव वा । तेन पापेन ··· महावने ॥ १०० ॥
ग्रीष्मकाले नीरधारा लिङ्गेषु न कृता मुदा । तेन पापेन ··· महावने ॥ १०१ ॥
लिङ्गे परिमलद्रव्यं चन्दनं चार्पितं नहि । तेन पापेन ··· महावने ॥ १०२ ॥
वाणी न मधुराऽप्युक्ता शांभवाय मनोहरा । तेन पापेन ···· महावने ॥ १०३ ॥
इति वाणीं मुहुः श्रुत्वा शिरस्ताडनपूर्वकम् । परस्परं महीपृष्ठे पतिताश्चुक्रुशुर्भृशम् ॥ १०४ ॥
तदानीमागतः कोऽपि शाङ्करस्तद्वनं प्रति । विल्वपत्रार्थमुद्युक्तः तां शुश्राव गिरं तदा ॥ १०५ ॥
ततो विल्वान्युपादाय सत्वरं मन्दिरं ययौ । तामुवाच गिरं तेभ्यः स्वकीयेभ्योऽपि विस्मितः ॥
तद्ग्रामवासिनः सर्वे श्रुत्वा विस्मयमागताः । तदाप्रभृति सर्वेऽपि शाङ्करत्वमुपागताः ॥ १०७ ॥
ततः कश्चिन्मृतस्तत्र ग्रामे भस्मविभूषणः । तदानीमागताः शम्भोः दूतास्तं नेतुमादरात् ॥ १०८ ॥
स तस्मिन्नेव दिवसे भक्त्या भस्मविभूषणः । श्रुत्वा वार्तां तदुक्तां तां अशैवत्वं जहौ तदा ॥
तदुक्तवार्ताश्रवणात् अनुतप्तः प्रतिक्षणम् । वृद्धेनातः परं कार्यं किमित्यत्यन्तदुःखितः ॥ ११० ॥
मरणावसरे सेयं श्रुता वार्ता शुभावहा । अतः परं पूजने वा लिङ्गे शक्तिः कथं भवेत् ॥ १११ ॥
श्रुता शिवकथा कापि न पुरा पापनाशिनी । अतः परन्तु वृद्धेन किं कर्तव्यं शिवार्चनम् ॥ ११२ ॥
शैवो न कोऽप्यागतोऽपि भोजितोऽपि न भक्तितः । पापग्रामनिवासेन पापमेवार्जितं मया ॥
धिग् धिग् धिग् धिगयं ग्रामः शिवलिङ्गविवर्जितः । अशांभवजनाक्रान्तः शिवभस्मविवर्जितः ॥
धिग्धिग्धिग्धिगिदं वेश्म शिवभक्तिविवर्जितम् । धनं धान्यं गवां वृन्दं दुकूलानां कुलं तथा ॥
अशैवभुक्तमेतावत् अशैवपरिवेष्टितम् । इदानीमपि दानार्थं शांभवो नात्र सर्वथा ॥ ११६ ॥
परमान्नेन साज्येन पक्वान्नैर्विविधैरपि । शांकरो भोजितो नात्र धिग् धिग् धिग्धिग् गृहं गृहम् ॥
इति प्रलप्य बहुधा भो शम्भो पाहि मामिति । उद्धूल्य भस्मनाङ्गानि लौकिकेन मृतस्ततः ॥
नीत्वा दग्धो मृतश्चायं तत्पुत्रैरपि तादृशैः । ततः समागतं सर्वैः स्वगृहं प्रति विस्मितैः ॥ ११९ ॥
ततः तद्दहनोद्भूतधूमः तद्वनसंगतः । आक्रान्तास्तेन धूमेन पिशाचास्तद्वनाश्रिताः ॥ १२० ॥
ततस्तद्धूमसङ्गेन ते सर्वे गतकल्मषाः । शिवलोकमनुप्राप्ताः पुष्पकेषु स्थिताः सुराः ॥ १२१ ॥
सह तेनापि वृद्धेन शिववार्तासमुत्सुकाः । प्रशंसां शङ्करस्यैव शृण्वन्तः पुनरादरात् ॥ १२२ ॥
अतो महेशमहिमा महानेव महात्मनाम् । महानन्दकरो नित्यं महापातकनाशनः ॥ १२३ ॥
यस्यानुतापमात्रेण मुक्तिरासीन्मरुद्गणाः । तद्धूमसङ्गान्मुक्तास्ते पिशाचास्तेऽपि पापिनः ॥

एतावताऽपि भगवान् महादेवः कृपानिधिः । ददाति स्थानमुत्कृष्टं योगिनामपि दुर्लभम् ॥
अघोरनरकावासं कृत्वा कल्पशतेष्वपि । पिशाचत्वमनुप्राप्य मुक्तास्तद्धूमसङ्गमात् ॥ १२६ ॥
सोऽपि किं शांभवः किन्तु पतिताग्रेसरो यतः । कदापि न कृतं तेन महादेवस्य पूजनम् ॥
पूजितं शिवलिङ्गं च न दृष्टं तेन सर्वथा । न दृष्टः शांभवस्तेन तत्सङ्गस्तस्य दूरतः ॥ १२८ ॥
मरणाभिमुखो वृद्धः सोऽनुतापेन केवलम् । मृतो भस्मकणाक्रान्तः तस्य सा गतिरुत्तमा ॥

यं ध्यात्वा मुनयः कदाप्यविरताः स्तुत्वा च वेदाः परं
नत्वा देवगणाः कलत्रसहिताः पुत्रैः स्वभित्रैर्युताः ।
तं देवोत्तममाकलय्य मनसा स्मृत्वा क्षणं वा क्षणैः
[1] संपूर्णा क्षणदा धियोऽर्धकलया कामं मुदं प्राप्नुयुः ॥ १३० ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिवधर्मकथनं नाम एकोनत्रिंशोऽध्यायः ॥

—:×:—

## अथ त्रिंशोऽध्यायः ।

देवाः —

आज्ञापयास्मान् भगवन् अस्माकमपि शङ्करः । आराध्यस्तत्पदाम्भोजस्मरणं क्रियते सदा ॥ १ ॥
तस्यैवानुचराः सर्वे तदाज्ञाकारिणः सदा । तं विना गतिरस्माकं अन्या नास्तीति निश्चितम् ॥ २ ॥
तत्पादस्मरणेनैव नीयन्ते दिवसाः खलु । जीवनं तावदस्माकं स्मृतं तच्चरणाम्बुजम् ॥ ३ ॥
भवदुक्तकथाधारासुधापानेन मन्मनः । पीनं दिने दिने वृद्धिं प्रयास्यति न संशयः ॥ ४ ॥
स्वामिन्नगणितं द्रव्यं एतैर्दत्तं दुरात्मभिः । अशांभवेभ्यः का तेषां भवित्री कुगतिर्वद ॥ ५ ॥
किंच तद्दानपात्रत्वं ये गतास्तेऽप्यशांभवाः । तेषां का वा गतिः सा तु दुर्ज्ञेया खलु मादृशैः ॥
सहस्रयोजनायामे सङ्कीर्णं यममन्दिरम् । अशैवैरेव ते तावत् उदारधनदानतः ॥ ७ ॥
धनवृद्धिः कृता तैस्तु ब्राह्मणेभ्यः परं तु ते । अशांभवास्तावताऽपि तद्दत्तं तद्वृथागतम् ॥ ८ ॥
यागादिकानन्तधर्मनिरतास्ते तथापि ते । अशांभवास्ततस्तेषां गतिः का भगवन् वद ॥ ९ ॥
शिवालयविहीनेषु देशेषु स्थितमादरात् । अशैवधर्ममाश्रित्य धर्मान्तरपरायणाः ॥ १० ॥

---

1 संपूर्णाः क्षणदाधिपार्धकलया D

एतादृशानां सर्वेषां विचारार्थमयं यमः । प्रवृत्तस्तेन कालोऽस्य भूयानेव गमिष्यति ॥ ११ ॥
एतादृशविचारेण क्षीणमायुर्दिने दिने । एतस्य शिवपूजाऽपि त्वरया संप्रजायते ॥ १२ ॥
तेन तेन विचारेण दुःखितः सर्वदा यमः । तद्दुःखशमनोपायं नन्दिकेश वदाधुना ॥ १३ ॥

नन्दिकेशः —

तुषखण्डनकल्पस्य विचारस्यास्य किं फलम् । अशांभवाः पातनीयाः कुम्भीपाकेषु यत्नतः ॥१४॥
अशांभवकृतान् धर्मान् अधर्मा इति संस्मर । चण्डालैः किं कृतो यागः स्वर्गाय स्वर्गसाधनः ॥
यदि पुल्कसनारीभिः वेदस्याध्ययनं कृतम् । तेनाध्ययनजं पुण्यं तासु संभावितं च न ॥ १६ ॥
अतः सर्वे पातनीयाः कुम्भीपाकेषु ते यम । आकल्पं तेषु ते स्थित्वा प्रयास्यन्ति पिशाचताम् ॥
अतः परं पूजनीयान् वदामि बहुधा परम् । शृणुध्वं सावधानेन शिवभक्तान् विशेषतः ॥ १८ ॥

हे विश्वनाथ मदनान्तक कालकाल गौरीपते गिरिश चन्द्रकलावतंस ।
शैलेन्द्रजाहृदयपङ्कजराजहंस पाहीति यो वदति तं शिवभक्तमाहुः ॥ १९ ॥

काशीपते भयहरामरसार्वभौम भीम स्मरान्धकरिपो गिरिश त्रिनेत्र ।
भो भूतिगात्र वृषभाधिप गोत्रपत्र पाहीति ... माहुः ॥ २० ॥

वीरेश्वर त्रिदशनायक चन्द्रमौले लीलातिलोल विकटाघटितार्धदेह ।
सिद्धेश्वरीरमण चन्द्रपते मुहुर्मां पाहीति यो ... माहुः ॥ २१ ॥

भो [1] सङ्कटारमण शूलधर स्मरारे श्रीशीतलारमण भो कलशेश शम्भो ।
ज्योतिःस्वरूप भगवन् मणिकर्णिकेश पाहीति यो ... माहुः ॥ २२ ॥

पुण्याविमुक्तपरमेश्वरनन्दिकेश श्रीमन्महेश्वर सुवर्णपिनाकपाणे ।
श्रीकालकूटविषनीलतरार्धकण्ठ पाहीति यो ... माहुः ॥ २३ ॥

उद्धूलनादिरुचिराङ्गलसत्त्रिपुण्ड्ररेखाललाट फलकान्धकमर्दकेश ।
आमर्दकेश्वर महाघविनाशकेश पाहीति यो ... माहुः ॥ २४ ॥

श्रीवृद्धकाल वृषभध्वज कृत्तिवासः श्रीलिङ्गलिङ्गनिलयाव्यय मृत्युमृत्यो ।
श्रीवक्रतुण्ड गणनायक ढुंढिराज पाहीति यो ... माहुः ॥ २५ ॥
केदारनायक सदाशिव सोमनाथ ज्ञानेश दक्षहरनायक दक्षनाथ ।
सिद्धेशधर्मगणनायक चण्डिकेश पाहीति यो .... माहुः ॥ २६ ॥

---

1 अयं श्लोकः D कोशे नास्ति ।

[1]एतादृशाः सन्ततमर्चनीयाः सुरैरपारैरपि किन्नराद्यैः ।
तत्पूजया पूजित एव नूनं गौरीसहायः समयो ममायम् ॥ २७ ॥

लिङ्गं विलोक्य सहसा प्रगतः फलं वा पर्णं च नीरमसकृत् प्रयतः प्रदद्यात् ।
रुद्राक्षभस्मकणभूषितपुण्यदेहो देहावसानमधिगत्य शिवं प्रयाति ॥ २८ ॥

एतादृशानतिनिगूढशिवार्चनादिद्रव्यानपारगुणसागरसागरांस्तु ।
दूराद्विलोक्य मुहुरादरतोऽपि नत्वा तुष्टा भवन्ति मुनयोऽपि गणाश्च सिद्धाः ॥ २९ ॥

येनार्चितं सकृदुमापतिलिङ्गमेकं तेनाशु शोकजलधिः खलु तीर्ण एव ।
तूर्णं प्रयाति गिरिजारमणं स तावत् वन्द्यः सतामनुदिनं सुकृतार्णवत्वात् ॥ ३० ॥

आकर्णिता शिवकथा क्षणदा क्षणं वा प्रक्षीणपातकमहाम्बुधिरेव सोऽपि ।
तत्पूजनेन गिरिजारमणोऽपि तुष्टः कष्टानि नाशयति सत्यमिदं मयोक्तम् ॥ ३१ ॥

यः पश्यति स्मरहरप्रियलिङ्गपूजां भक्त्या प्रमोदमुपयाति विलोकनेन ।
रोमाञ्चचिन्हितवपुः स्मृतचन्द्रमौलिः तं शांभवं विदुरघाम्बुधिनाशहेतुम् ॥ ३२ ॥

तत्पुण्यकृत्तमवरेण्यमिति स्मरामि यः कालकालचरणाम्बुजभक्तियुक्तः ।
युक्तः स योगनियमादिभिरित्यवैमि तस्मान्न कोऽपि भुवनेष्वधिको [2]नरेषु ॥ ३३ ॥

यः प्रातरिन्दुशकलाभरणार्चनेन प्रीतः स्मरन् स्मरहरं फलपुष्पदानैः ।
तं पूजयन्ति मुनयोऽपि मुहुः स धन्यो मान्योऽस्मदादिभिरिति प्रणमन्ति धीराः ॥ ३४ ॥

ये शङ्करार्चनपराः शिव कालकाल मन्नाथ मज्जनक मे परमात्मबन्धो ।
मत्प्राणरक्षक महेश्वर मामवाव न त्वां विना गतिरिति प्रवदन्ति [3]धीराः ॥ ३५ ॥

दारास्तवैव तनयास्तव चन्द्रमौले धान्यं तवैव धनमश्वगवादयोऽपि ।
सर्वं त्वमेव तव सर्वमिति स्मरन्तः संसारभीतिमपहाय शिवं प्रयान्ति ॥ ३६ ॥

धन्यं मनः शिवपदस्मरणानुरक्तं धन्यं विशालनयनाम्बुजजीवनं च ।
तल्लिङ्गपूजनविलोकनलोलमेव तस्मात् किमन्यदधिकं भुवि [4]धन्यमस्ति ॥ ३७ ॥

[5]धन्यौ तदीयचरणौ शिवतीर्थयात्रापूतौ करौ च शिवपूजनसाधनत्वात् ।
धन्यं शिरः शिवनतिप्रवणं क्षणं वा तस्मात् किमन्यदधिकं भुवि धन्यमस्ति ॥ ३८ ॥

---

1 अत्रायं श्लोको E कोशे नास्ति उत्तरत्र ३३ श्लोकात्परमस्ति ।

2 इतः परं 'एतादृशाः .... यमायं' इति पूर्वपठितः श्लोकः (27) पुनरपि पठ्यते C कोशे ।

3 शैवाः D 4 चान्यदस्ति C 5 अयं श्लोकः C कोशे न दृश्यते ।

धन्या हि तस्य जननी जनकोऽपि धन्यः धन्यं कुलं च रमणी तनयाश्च भृत्याः ।
दासश्च यस्य शिवलिङ्गसमर्चनेन सद्यः प्रसन्नमपि मानसमित्यवैमि ॥ ३९ ॥

उन्मत्तवद्वदति शङ्करनाम दृष्ट्वा लिङ्गार्चनं कुसुमचन्दनधूपदीपैः ।
पक्वान्नराशिभिरमन्दमुदा य एव तत्पादुकास्मरणमप्यघनाशकं हि ॥ ४० ॥

यः कश्चिदेव भुवनेष्वमितप्रभावो भावो न भावसदृशो भुवनत्रयेऽपि ।
भावस्य भावभयलेशविहीनवृत्तेः भूयो भवो न भवतीति भवोऽपि मेने ॥ ४१ ॥

संसारभारपरिहारविहारहारहारोपहारपरमादरमादरेण ।
दूरादनादरमपास्य नमन्ति दारैः धीराश्च किं नरवराः सह ते कुमारैः ॥ ४२ ॥

किं वर्णयामि शिवभक्तजनप्रभावं गौरीपतिप्रियतमः शिवभक्त एव ।
तं पुण्यपुञ्जमजपूज्यतमं विदित्वा तत्पूजनाय नियतो भव नित्यमेव ॥ ४३ ॥

ये शङ्करस्मरणमात्रपवित्रगात्राः तांस्त्वं त्रिणेत्रनिलयान् यम पश्य पश्य ।
तन्मन्दिरेषु गमनं तव नाऽपि युक्तं तत्पूजनार्थमपि तत्त्वमिदं वदामि ॥ ४४ ॥

रुद्राक्षभूषणविभूषितपुण्यदेहान् तांस्त्वं ... वदामि ॥ ४५ ॥

श्रीबिल्वपत्रशिवलिङ्गसमर्चनार्थान् तांस्त्वं .... वदामि ॥ ४६ ॥

श्रीशैलनायकसमर्चनपूतचित्तान् तांस्त्वं ... वदामि ॥ ४७ ॥

श्रुत्युक्तसिद्धसितभस्मपवित्रगात्रान् तांस्त्वं .... वदामि ॥ ४८ ॥

श्रीकालहस्तिपतिपूजनसक्तचित्तान् तांस्त्वं .... वदामि ॥ ४९ ॥

एकाम्रनायकविलोकनपूतचित्तान् तांस्त्वं ... वदामि ॥ ५० ॥

पुण्यारुणाचलविलोकनलोलचित्तान् तांस्त्वं ··· वदामि ॥ ५१ ॥

श्रीमच्चिदम्बरविलोकनसक्तचित्तान् तांस्त्वं .... वदामि ॥ ५२ ॥

मध्यार्जुनेश्वरविलोकनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ५३ ॥

श्रीकुम्भघोणपतिपूजनसक्तचित्तान् तांस्त्वं ·· वदामि ॥ ५४ ॥

श्रीनन्दिमण्डलविलोकनलोलचित्तान् तांस्त्वं ... वदामि ॥ ५५ ॥

[1]मूर्तिं विचिन्त्य सततं भ्रमराम्बिकायाः तुष्टा भवन्ति सुकृतैरमितैर्यमातः ।
तन्मन्दिरेषु ... वदामि ॥ ५६ ॥

---

1 भूति विचिन्त्य C E

श्रीचन्द्रलाचरणपूजनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ५७ ॥

तीर्थेशलिङ्गनियमार्चनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ५८ ॥

काशीप्रदेशवरमानसपुण्यदेहान् तांस्त्वं .... वदामि ॥ ५९ ॥

विश्वेश्वरार्चनविलोकनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ६० ॥

शुद्धाविमुक्तपतिपूजनसक्तचित्तान् तांस्त्वं .. वदामि ॥ ६१ ॥

आनन्दभैरवविलोकनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ६२ ॥

श्रीमुक्तिमण्टपविलोकनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ६३ ॥

भक्त्या कथञ्चिदनुवासरमन्नपूर्णापादारविन्दभजनप्रवणाः शिवास्ते ।
तन्मन्दिरेषु ... वदामि ॥ ६४ ॥

श्रीढुण्ढिराजचरणार्चनसक्तचित्तान् तांस्त्वं .... वदामि ॥ ६५ ॥

[1]वीरेश्वरार्चनविलोकनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ६६ ॥

[2]श्रीकालभैरवविलोकनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ६७ ॥

ओंकारनायकविलोकनसक्तचित्तान् तांस्त्वं ... वदामि ॥ ६८ ॥

दूतास्तवातिकठिनाः खलु शिक्षणीयाः ते धर्मबुद्धिरहिताः दुरितप्रवृत्ताः ।
तद्योगतस्तव विशेषत एव धर्मो नाशं प्रयास्यति स तेन शिवापराधः ॥ ६९ ॥

दूताश्चरन्ति यदि ते शिवमन्दिरेषु शैवेषु तत्सदनमार्गमहार्हदेशे ।
तर्हि प्रकुप्यति शिवोऽपि यमात एव ते तावदादरत एव निवारणीयाः ॥ ७० ॥

ये शङ्करस्मरणमात्रविधूतपापाः ते शाम्भवास्तव यमान्वहमर्चनीयाः ।
तेषां गृहेषु न कदापि भटाः प्रयान्तु तद्गेहमार्गमपि ते न विशन्तु मोहात् ॥ ७१ ॥

ये लिङ्गपूजनरताः सततं प्रहृष्टाः ते शाम्भवास्तव यमान्वहमर्चनीयाः ।
तेषां गृहेषु .... मोहात् ॥ ७२ ॥

उद्धूलनप्रभवपुण्यसमृद्धचित्ताः ते शांभवाः ... मोहात् ॥ ७३ ॥

ये वै त्रिपुण्ड्ररुचिरामलफालभागाः ते शांभवाः .... मोहात् ॥ ७४ ॥

रुद्राक्षभूषणविराजितकर्णदेशाः ते शांभवाः .... मोहात् ॥ ७५ ॥

ये बिल्वपत्रलवनाहटकण्टकाग्राः ते शांभवाः ... मोहात् ॥ ७६ ॥

---

1 विश्वेश्वरार्चन C  2 अयं श्लोकः C कोशे नास्ति ।

ये विल्वपल्लवकृतोन्नतलिङ्गपूजाः ते शांभवाः .... मोहात् ॥ ७७ ॥

ये विल्वमूलशिवलिङ्गकृतप्रणामाः ते शांभवाः ... मोहात् ॥ ७८ ॥

ये शङ्करस्मरणविस्मृतकायचेष्टाः ते शांभवाः ... मोहात् ॥ ७९ ॥

ये शम्भुलिङ्गनिहितेक्षणरश्मिजालाः ते शांभवाः ... मोहात् ॥ ८० ॥

ये लिङ्गपूजनमहोत्सवलोलचित्ताः ते शाम्भवाः ... मोहात् ॥ ८१ ॥

ये शाम्भवार्चनसमर्पितवित्तभाराः ते शाम्भवाः ... मोहात् ॥ ८२ ॥

ये चन्द्रचूडकलनामृतपानलोलाः ते शाम्भवाः ... मोहात् ॥ ८३ ॥

धन्या शङ्करनामधेयसुधया धाराधरासारभूः
जिह्वा जिह्मगराजराजविनुता धन्येति मान्येति च ।
सा जिह्वा बहुजन्मसञ्चितचिराभ्यस्तातिपुण्यार्जिता
सेयं पुण्यसुधानिधिः खलु सुसंलभ्यः शिवानुग्रहात् ॥ ८४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे यमं प्रति शिवभक्तवर्णनं
नन्दिकेश्वराज्ञापनं च नाम त्रिंशोऽध्यायः ॥

—o—

## अथ एकत्रिंशोऽध्यायः ।

व्यासः —

इत्युक्तं तद्वचः श्रुत्वा प्रहृष्टास्ते सुरास्तदा । विश्वस्य तं पुनर्नत्वा कृताञ्जलिपुटा जगुः ॥ १ ॥

देवाः —

श्रीनन्दिकेश्वर स्वामिन् शिवविज्ञानसागर । अनेन किं कृतं पुण्यं तद्गोप्यमपि संवद ॥ २ ॥

नन्दिकेशः —

तत्पुण्यश्रवणादेव भवतां विस्मयो भवेत् । तत्त्वज्ञानविहीनानां सर्वमाश्चर्यसाधनम् ॥ ३ ॥

शिवपूजाप्रभावाब्धिबिन्दुज्ञानविवर्जिताः । भवन्तस्तपसा सिद्धा गन्धर्वाः किन्नरा अपि ॥ ४ ॥

शिवप्रभावरूपाणां रत्नानां सागरः शिवः । अतः शिवो विजानाति तत्तत्त्वं नेतरो जनः ॥ ५ ॥

अस्माभिरपि तत्तत्त्वं लेशतस्तत्प्रसादतः । ज्ञातं कथञ्चिदन्येन कथं ज्ञेयं सुरादिभिः ॥ ६ ॥

अपूर्वमणयो येन सञ्चिताः स्वगृहे स्वतः । स तत्तत्त्वविदन्यस्तु तत्तत्त्वं वेद किं सुराः ॥ ७ ॥

यस्य रत्नस्य यन्मौल्यं तत्तेन ज्ञायते परम् । रत्नतत्त्वं विजानाति स तु रत्नपरीक्षकः ॥ ८ ॥
न च रत्नपरीक्षायां सर्वे दक्षाः स्वभावतः । दाक्षायणीवल्लभस्तु नित्यः सर्वज्ञ एव हि ॥ ९ ॥
स तावन्नित्यसर्वज्ञशिरोमणिरिति श्रुतः । शूलपाणिस्ततः सोऽयं तत्तत्त्वं वेद वस्तुतः ॥ १० ॥
रत्नेषु च विचित्रेषु तेषु द्वित्राणि कानिचित् । रत्नानि तान्यमूल्यानि तानि देयानि नामराः ॥
शिवधर्मात्मकं रत्नं गोपनीयं विशेषतः । अतिभक्ताय दातव्यं नाभक्ताय कदाचन ॥ १२ ॥
अत्यल्पस्य रसस्यापि स्पर्शादेव कथञ्चन । लोहाचलः सुवर्णत्वं प्राप्नोतीत्यवधारितम् ॥ १३ ॥
अग्निलेशेन तूलाद्रिर्भस्मसात् जायते क्षणात् । अत्यल्पेनौषधेनापि महाव्याधिक्षयो भवेत् ॥
सूक्ष्मासिरप्यङ्गमध्ये प्रविष्टोऽङ्गविनाशकः । विषमप्यल्पमेवाङ्गे युक्तं देहविनाशकम् ॥ १५ ॥
तथैव शिवधर्मोऽपि सूक्ष्मः पापाद्रिनाशकः । पुण्यसंपत्समृद्धिं च स करोति न संशयः ॥ १६ ॥
धर्माणामुत्तमो धर्मः शिवधर्मः सनातनः । सर्वोत्तमोत्तमत्वेन यथा गीतः सदाशिवः ॥ १७ ॥
यथा साम्बो महादेवः सर्वदेवशिखामणिः । तथाऽयं शिवधर्मोऽपि सर्वधर्मशिरोमणिः ॥ १८ ॥
शिवधर्मात्परो धर्मो नास्ति न श्रूयतेऽपि च । सत्यमेतत् पुनः सत्यमुद्धृत्य भुजमुच्यते ॥ १९ ॥
शिवधर्मान्यधर्मेषु धर्माभासत्वनिश्चयात् । तद्धर्माचरणात् किं वा फलं संभावितं सुराः ॥ २० ॥
शिवधर्मानविज्ञाय धर्माभासरता नराः । कुर्वन्तु तान् विमोहेन न तेभ्यः फलमश्नुते ॥ २१ ॥
रत्नभ्रमेण स्फुटितं काचं गृह्णाति यो नरः । स तेन रत्नाभरणधारणोत्पन्नधर्मवान् ॥ २२ ॥
अतिस्वच्छस्य रत्नस्य क्रयः स्यात् धनकोटिभिः । ततस्तद्रत्नमुत्कृष्टं तद्रत्नापेक्षया खलु ॥ २३ ॥
किं च देवादिदेवस्य यत्प्रियं तद्वरं स्मृतम् । तदन्यत् सर्वमवरं असदाचारदूषितम् ॥ २४ ॥
अयं तु भिल्लतनयः तत्पिता पापभाजनम् । तन्माता भ्रातरश्चास्य तत्कुलं च न संशयः ॥२५ ॥
अयं छिन्नं कण्टकारिप्रसूनं लिङ्गमस्तके । मरणावसरे प्राप्ते पातयित्वा मृतः सुराः ॥ २६ ॥
लिङ्गपूजनमेतेन कुसुमेन कृतं यम । अपवर्गदमित्येवं ज्ञात्वा तेन न पातितम् ॥ २७ ॥
ज्ञात्वा धर्मस्य करणे [1]शिवपूजात्मकः स तु । फलं [2]यद्भावि तत्तावत् वेदैरपि न निश्चितम् ॥
अज्ञात्वाऽपि कृतो धर्मः शिवपूजात्मकः स्मृतः । सर्वाभीष्टप्रदो नूनं इति वेदैर्विनिश्चितम् ॥ २९ ॥
अनेनैव हि धर्मेण गणत्वं प्राप्य बालकः । शिवप्रियतमो भूत्वा स्थास्यत्येव न संशयः ॥ ३० ॥
पुरा पापरतः कश्चित् विन्ध्यदेशेषु संस्थितः । तेन पापेन नीतानि दिनानि प्रतिवत्सरम् ॥ ३१ ॥
तेन यावत्कृतं पापं तत्पापगणनापि न । पुनः पुनः स पापेषु निरतो विरतोऽपि न ॥ ३२ ॥

---

1 शिवपूजात्मकस्य तु C  2 भावितं तत्तु C

स जारजस्वभावेन जारिणीनिरतोऽपि सः । तदुच्छिष्टाशनो नित्यं कर्मान्तरविवर्जितः ॥ ३३ ॥
तेनैवोत्पादिता कापि जारिण्यां कन्यका तथा । रेमे स पापनिरतो यौवनाक्रान्तया मुहुः ॥
तस्यामुत्पादयामास कन्यकां साऽपि सुन्दरी । यौवनेन समाक्रान्ता तया रेमे स पापधीः ॥३५॥
[1] तस्यां स जनयामास कन्यकां सोऽपि पापधीः । तयापि रेमे सा प्राह तं कदाचिन्मनोहरा ॥

कन्यका —

शयने कुसुमापेक्षा जायते मम तानि मे । आनयाद्यान्यथा क्रीडा तव नात्र भविष्यति ॥ ३७॥
इत्युक्तं तद्वचः श्रुत्वा शिवारामं ययौ निशि । स शिवार्चनयोग्यानि दृष्ट्वा पुष्पाणि विस्मितः ॥
अतः परं प्रयत्नेन सर्वं पुष्पवनं मया । समूलं भवनं नेयं वनं स्यान्मम मन्दिरे ॥ ३९ ॥
एतादृशानि पुष्पाणि नान्यत्र भुवनत्रये । अतः सर्वाणि नेयानि मूलैः पुष्पवनानि तु ॥ ४० ॥
तत्रैकं पुष्पमादाय सुगन्धमतिसुन्दरम् । वनाद्विनिर्गतः पापी धावनेन ययौ गृहम् ॥ ४१ ॥
तत्पुष्पगन्धसम्बद्धवातपोतजिघृक्षया । दन्दशूको महाकायः स्वबिलान्निर्गतः सुराः ॥ ४२ ॥
आघ्रायाघ्राय तं गन्धं सर्पस्तन्मन्दिरं गतः । तं पुष्पकरमालोक्य तत्काये समुपाविशत् ॥ ४३ ॥
ततः सर्पसमाक्रान्तः स भीतो बहिरागतः । सर्पेण दष्टस्तत्पुष्पं पतितं लिङ्गमस्तके ॥ ४४ ॥
तत्र दैवात् समानीतं नार्मदं लिङ्गमुत्तमम् । केनचित्पूजनं कर्तुं तत्रैव स्थापितं स्थितम् ॥ ४५ ॥
स सर्पो लिङ्गमावेष्ट्य तत्पुष्पाघ्राणनप्रियः । लिङ्गे सम्पादयामास शीतलत्वं स्ववेष्टनैः ॥ ४६ ॥
ततः स सर्पसन्दष्टो मृतस्तद्विषसंश्रयात् । तदा महेशस्तं दृष्ट्वा बभाषे गिरिजां प्रति ॥ ४७ ॥

सदाशिवः —

गौरि कौतुकमस्त्येकं तद्वक्ष्ये शृणु सादरम् । यत्कथाश्रवणात् सद्यो भक्तिर्मत्पूजने भवेत् ॥ ४८॥
अस्ति पुष्पवनं रम्यं विन्ध्यदेशे मनोहरम् । तत्र पुष्पाण्यनन्तानि तद्गन्धोऽप्यतिसुन्दरः ॥ ४९ ॥
तत्र वा तत्प्रसारोऽपि न भविष्यति सर्वथा । मद्भक्तेन कृतं रम्यं तद्वनं गौरि सुन्दरम् ॥ ५० ॥
भूमण्डले न कुत्रापि तादृशं वनमम्बिके । सगन्धा एव तद्गन्धैः वृतिकण्टकभूरुहाः ॥ ५१ ॥
ते चन्दनतरुस्पर्धां कुर्वन्ति प्रत्यहं शिवे । स्वगन्धसदृशो गन्धो न भवत्विति शैलजे ॥ ५२ ॥
सुचन्दनतरुत्वेन तरवस्ते मिता जनैः । तत्पुष्पेष्वपि यो गन्धः सोऽपि तावन्मनोहरः ॥ ५३ ॥
मन्दारप्रसवोत्पन्नगन्धस्पर्धां करोति सः । गन्धोऽपि कण्टकतरुप्रसवाधिष्ठितः सदा ॥ ५४ ॥
तत्र न भ्रमराणां वा प्रवेशः शैलकन्यके । तत्पुष्पद्रुममूलेषु कुल्याः सन्ति मनोहराः ॥ ५५ ॥

1 इदमर्धं D कोशे नास्ति ।

सुगन्धजलकल्लोलमालाकुलक्ष्माकुलाः । प्रत्येकमालवालं च द्रुमाणां विस्मयावहम् ॥ ५६ ॥
इत्युक्तं तद्वचः श्रुत्वा गौरी सन्तुष्टमानसा । शिवेन सह संप्राप तद्वनं पुष्पकाश्रिता ॥ ५७ ॥
तस्मिन् वने दीर्घिकाऽपि रत्नसोपानसंकुला । तत्तीरे रत्नसंबद्धं शिवमन्दिरमुत्तमम् ॥ ५८ ॥
रत्नप्रासादशोभाभिः अलङ्कृतमिवादरात् । तन्मन्दिरे बभौ देवः साम्बस्तत्र समागतः ॥ ५९ ॥
ततस्तल्लिङ्गमालोक्य शङ्करो गिरिजान्वितः । आलिङ्ग्य भक्त्या तल्लिङ्गं स्थितं तत्र क्षणं स्थितः ॥
तानि पुष्पाणि संवीक्ष्य शंकरो लिङ्गमस्तके । रत्नोच्चयेन तुल्यानि सन्तुष्टः शिवया सह ॥ ६१ ॥
अपारदीपमालाश्च दृष्टास्तत्र शिवालये । रत्नस्तम्भेषु चित्राणि ददर्श गिरिजापतिः ॥ ६२ ॥
ततो बहिर्विनिष्क्रम्य तरुमूलेषु संस्थितः । तदा तत्तरुजापारकुसुमासारसंवृतः ॥ ६३ ॥
तत्कुल्याजलमास्वाद्य फलानि विविधान्यपि । तत्र गन्धफलीगन्धं समाघ्राय पुनः पुनः ॥ ६४ ॥
स्वर्णगन्धफलीपुण्यसंकुलं तद्वनं सुराः । रेजे मनोहरं व्याप्तं स्थूलैर्गन्धफलीफलैः ॥ ६५ ॥
तान्याघ्राय महादेवः पीत्वा तद्रसमादरात् । सुधाऽवधीरणां चक्रे धिग् धिग् रससुधेति च ॥
ततः परं स दूरेण नार्मदं लिङ्गमुत्तमम् । सर्पावेष्टितमालोक्य तत्र गन्तुं मनो दधे ॥ ६७ ॥
बाणलिङ्गमिदं रम्यं यद्भक्तानीतमादरात् । तत्र क्षणं वसाम्यद्य तद्यतो मम मन्दिरम् ॥ ६८ ॥
न रत्नमन्दिरे प्रीतिः मणिलिङ्गेषु वा मम । रेवालिङ्गे परा प्रीतिः तल्लिङ्गं मङ्गलावहम् ॥ ६९ ॥
तल्लिङ्गालोकनादेव ममानन्दः प्रवर्धते । तल्लिङ्गसदृशं लिङ्गं नास्ति ब्रह्माण्डमण्डले ॥ ७० ॥
इति कृत्वा मतिं देवाः शिवया संयुतः शिवः । ययौ तन्नार्मदं लिङ्गं तत्रापि क्षणमास्थितः ॥
तत्पुष्पं तु समाघ्राय नित्यगन्धं मनोहरम् । [1]सन्तोषं परमं प्राप तया गिरिजया सह ॥ ७२ ॥
येन पुण्यवता दत्तं पुष्पमेतन्मनोहरम् । रेवालिङ्गे स्वयंभूते तस्य मुक्तिर्भविष्यति ॥ ७३ ॥
पुनः पुनः परं गन्धं समाघ्राय महेश्वरः । सर्पसंवेष्टिते लिङ्गे निवासं च चकार सः ॥ ७४ ॥
एतद्गन्धं समाघ्राय कोऽपि काकोदरो महान् । चकार शीतलं लिङ्गं स्वकायपरिवेष्टितैः ॥ ७५ ॥
एतद्वेष्टनहेतुत्वमपरं मुक्तिसाधनम् । भोगिभूषणता तेन ततः किल ममाधुना ॥ ७६ ॥
इत्युक्त्वा कुणपं दूरात् शिवकिङ्करवेष्टितम् । ददर्श तं विमानस्थं मृतं चक्रुर्गणेश्वराः ॥ ७७ ॥
ततः परं ययौ साम्बः तमुत्सवमनेकधा । दृष्ट्वा प्रहृष्टस्तद्रम्यं आरामं प्रति सत्वरम् ॥ ७८ ॥
तस्माल्लिङ्गार्चनं श्रेष्ठं यस्य कस्यापि मुक्तिदम् । लिङ्गार्चनसमं पुण्यं न भूतं न भविष्यति ॥
शिवार्चनजपुण्येन पुण्यवानयमित्यतः । एतस्यागमनं तावत् न युक्तं मम मन्दिरे ॥ ८० ॥

1 इदमर्धं C कोशे नास्ति ।

[1]अत्रेतिहासं वक्ष्यन्ति ये पुराणविदो जनाः । पुरा कश्चित् दरिद्रोऽभूत् तत्र श्रीशैलमण्डले ॥ ८१ ॥
तेन पापान्यघाराणि द्विजेनापि कृतानि हि । भिल्लागारेषु विचरन् करोति कणयाचनम् ॥ ८२ ॥
तैः कणैर्जीवनं तस्य [2]कण्टकादिफलैरपि । फलानि तानि यत्नेन समानीय दिने दिने ॥ ८३ ॥
राशिं करोति भाग्येन नर्मदालिङ्गमस्तके । तान्यानीय स पक्वानि छित्त्वा पक्त्वा प्रयत्नतः ॥८४॥
नर्मदालिङ्गनिकटे स भक्षयति सादरम् । एवं संवसतस्तस्य प्रदोषे समुपस्थिते ॥ ८५ ॥
तत्र स्नात्वा नदीतीरे खेदापनयनाय सः । ततः परं यथापूर्वं कण्टकारिफलैर्जलैः ॥ ८६ ॥
प्रोक्षितैः पूर्ववत् तत्र राशिं तावच्चकार सः । पश्चात् दूर्वाङ्कुरैस्तानि छादयामास सत्वरम् ॥८७॥
विलम्बेनाद्य तत्पाको मास्त्वित्यत्येव विनिश्चयात् । ततः कृत्वा कणैरन्नं नर्मदालिङ्गसन्निधौ ॥
श्रान्तश्चकार शयनं काष्ठैः प्रज्वाल्य पावकम् । सोमत्रयोदशी दैवादार्द्रानक्षत्रसंयुता ॥ ८९ ॥
तस्याः प्रदोषसमये तदासीत् शिवपूजनम् । नाम्लानि च भवन्त्वद्य फलानीति जलान्वयः ॥
कृतो दूर्वान्वयोऽपीति नाऽऽस्था तस्य शिवार्चने । परं तु नार्मदे लिङ्गे तत्सर्वं तेन कल्पितम् ॥
पूजात्वेनैव निष्पन्नं अन्नं नैवेद्यतां गतम् । दीपत्वेनैव निष्पन्ना काष्ठज्वाला मनोहरा ॥ ९२ ॥
प्रणामत्वेन निष्पन्नं शयनं तस्य तत्तदा । तस्य भाग्यवशादेवं संपन्नं शिवपूजनम् ॥ ९३ ॥
तेन तुष्टो महादेवः करुणासागरः प्रभुः । ततः परं ददर्शायं स्वप्नं सर्वार्थकामदम् ॥ ९४ ॥
स्वप्ने दूर्वार्चितं लिङ्गं नार्मदं तद्ददर्श सः । [3]फलैरप्यर्चितं लिङ्गं नैवेद्येन समन्वितम् ॥ ९५ ॥
दीपज्वाला दीपिता च स पश्चादुदितः सुराः । परितो रत्नसदनं रत्नप्राकारसंवृतम् ॥ ९६ ॥
दिव्यभोगसमाकीर्णं रत्नज्वालासमन्वितम् । दिव्यनारीसमाकीर्णं अन्नराशिविराजितम् ॥ ९७ ॥
गजकोटिसमाकीर्णं सर्वभृत्यसमन्वितम् । दासीकोटिसमाकीर्णं रत्नाभरणमण्डितम् ॥ ९८ ॥
इदमत्यद्भुतं दृष्ट्वा प्रहृष्टो विस्मयं गतः । दिव्यनारीमुखं दृष्ट्वा बभाषे वचनं मुदा ॥ ९९ ॥
कासि त्वं चञ्चलापाङ्गि कमलामललोचने । कस्याङ्गनासि सदनं कस्येदं मणिमण्डितम् ॥
अश्वाः कस्य गजाः कस्य दासाः कस्य वरानने । एतादृशं महद्भाग्यं कस्य पुण्याश्रयस्य च ॥
त्वया किमागतं भद्रे मत्पार्श्वमतिसुन्दरि । दिव्यचामरवातेन मां तोषयसि सादरम् ॥ १०२ ॥
प्रतिक्षणं शरीरं मे नवमेव प्रजायते । सौन्दर्यवृद्धिरप्यस्य नवमेव प्रतिक्षणम् ॥ १०३ ॥
इति तद्वचनं श्रुत्वा सा तमाह मनोरमा । संपादयन्ती तच्चित्ते परमानन्दसागरम् ॥ १०४ ॥
भाग्याधिदेवता साहं प्रेषिता शङ्करेण हि । त्वत्सेवार्थं नियुक्ताऽस्मि मत्तुल्याः सन्ति कोटिशः ॥

1 इदमर्धं D कोशे नास्ति । 2 कण्टकारि D 3 अयं श्लोकः D कोशे न दृश्यते ।

त्वयाद्य नार्मदे लिङ्गे प्रदोषसमये शिवः । जले समर्चितः शुद्धैः कण्टकारिफलैरपि ॥ १०६ ॥
दूर्वाङ्कुरैश्च दीपैश्च नैवेद्येनापि पूजितः । प्रणामेनापि समयः सोऽयं पुण्यतमः स्मृतः ॥ १०७ ॥
एतादृशो महायोगो दुर्लभो देहिनामतः । अस्मिन् योगे पूजितोऽत्र तुष्टो भवति शङ्करः ॥
शिवदेयेषु भाग्येषु भाग्यमल्पमिदं त्वया । प्राप्तं प्राप्तव्यमग्रे तु भाग्यं संख्याविवर्जितम् ॥
अगणितमहिमाऽयं देवदेवो महेशो गिरिवरतनयाङ्गालिङ्गितो मङ्गलानि ।
वितरति बहुकालानन्दयोग्यानि नित्यं शिवविभवमहाब्धित्रातसंख्यानि नूनम् ॥ ११० ॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे सोमप्रदोषपूजाफलनिरूपणं नाम एकत्रिंशोऽध्यायः ॥

—o—

## अथ द्वात्रिंशोऽध्यायः ।

नन्दिकेश्वरः —

इत्याकर्ण्य वचस्तस्याः तां प्रणम्यातिभक्तितः । आनन्दधारासंक्रान्तो बभाषे वचनं मुदा ॥ १ ॥
कियत्कालमिदं भाग्यं देवि मद्वरमेष्यति । शङ्करस्य प्रसादोऽयं मयि जातः कथं वद ॥ २ ॥
इत्युक्तं तद्वचः श्रुत्वा बभाषे सा मनोरमा । रमारमणनेत्राब्जपूज्याङ्घ्रिस्मरणोत्सुका ॥ ३ ॥
संवादयन्ती बहुधा विस्मयं सुस्मितानना । शिवलिङ्गार्चनध्यानस्पर्शनस्मरणोत्सुका ॥ ४ ॥
त्वया यद्यपि पूजायाः स्वरूपं विदितं न तु । तथापि कृपया शम्भोः कृतार्थोऽसि न संशयः ॥
कण्टकारिफलानां तु रक्षणाय फलं तृणैः । आच्छादनं कृतं सायं तज्जातं शिवपूजनम् ॥ ६ ॥
तदिदं लिङ्गमुत्पन्नं क्षेत्रमप्युत्तमोत्तमम् । कालोऽपि सोयमुत्कृष्टः शिवपूजनसाधनम् ॥ ७ ॥
महादेवः स भगवान् दीनवत्सल इत्यतः । निमित्तं किञ्चिदालोक्य ददौ भाग्यमनुत्तमम् ॥ ८ ॥
एतस्मिन् समये भक्त्याः ज्ञात्वा लिङ्गार्चनव्रतम् । करोति पूजां यो मर्त्यः स साक्षादीश्वरो भवेत् ॥
एतादृशः पुण्यकालो दुर्लभः खलु देहिनाम् । दुर्लभं च भवेदेव महादेवार्चनं परम् ॥ १० ॥
अज्ञात्वा विविधं यस्तु करोति शिवपूजनम् । तत्कामदं भवेदेव ज्ञातं चेत् किं वदाधुना ॥ ११ ॥
अतः परं प्रमादेन विना शङ्करपूजनम् । कुरु भाग्यमिदं तेन स्थिरं तव भविष्यति ॥ १२ ॥
यस्मिन् दिने प्रमादस्ते भविष्यति शिवार्चने । तस्मिन्नेव दिने भाग्यमेतदन्यत्र यास्यति ॥ १३ ॥
भाग्याङ्गनास्तु सततं शिवपूजनतत्परान् । विचार्य सञ्चरन्तीति प्रमादो माऽस्तु सर्वथा ॥ १४ ॥

यादृशस्तादृशो वास्तु शिवाराधनतत्परः । तं तावदनुसृत्यैव भाग्यं तिष्ठति केवलम् ॥ १५ ॥
भाग्याङ्गनाविहारस्य स्थलं शङ्करमन्दिरम् । तद्विहाय न कुत्रापि यान्ति भाग्याधिदेवताः ॥ १६ ॥
यथा धनिकमालोक्य यान्ति वाराङ्गनास्तथा । हारं विलोक्य भाग्यानि सविहाराणि यान्ति तम् ॥
भाग्याङ्गनामन्दिरन्तु मन्ये शाङ्करमन्दिरम् । ततः शाङ्करतां प्राप्य कुरु शङ्करपूजनम् ॥ १८ ॥
अकुलीनः कुलीनो वा ज्ञानी वा ज्ञानवर्जितः । शिवाराधनमात्रेण भवेद्भाग्याङ्गनापतिः ॥ १९ ॥
अत्राप्युदाहरन्तीममितिहासं पुरातनम् । शिवपूजारतत्त्व ज्ञानराशिविजृम्भितम् ॥ २० ॥
पुरा कश्चिदभूद्राजा सर्वभाग्यसमन्वितः । धनधान्यादिसंपूर्णं मन्दिरं तस्य सर्वदा ॥ २१ ॥
गजाश्वकुलसङ्कीर्णं सङ्कीर्णं महिषीगणैः । दासीनां च मनोज्ञानां समूहेन समावृतम् ॥ २२ ॥
एवं स भाग्यसंपन्नो विस्मृत्य शिवपूजनम् । निद्राक्रीडादिनिरतो युवतीजनसंवृतः ॥ २३ ॥
तादृशस्य महद्भाग्यं क्षणेन विलयं ययौ । शिवपूजापरित्यागः तन्महाभाग्यनाशकः ॥ २४ ॥
तद्रत्ननिर्मितागाराः सप्राकारा लयं गताः । गजानां च कुलं नष्टं अश्वानामपि सत्वरम् ॥ २५ ॥
दासीनां च कुलं नष्टं भृत्यानामपि सत्वरम् । दारास्तस्य महोदाराः सहाराश्च लयं गताः ॥ २६ ॥
तदन्नराशयो नष्टाः तथैव धनराशयः । विनष्टं गोकुलं तस्य महिषीकुलसंकुलम् ॥ २७ ॥
अकस्माज्जातमेवं किं सर्वं नष्टमिदं कथम् । अनर्थहेतुरत्रास्ति को वा सोऽपि न दृश्यते ॥ २८ ॥
इन्द्रेणापि खलु स्पर्धा कृता पूर्वं मया धनैः । धनस्य तस्य नाशोऽभूत् कथमद्य क्षणान्तरे ॥
इति दुःखेन संविष्टो वनमाप दुरासदम् । क्षुधार्तः तृषितः श्रान्तः चिन्ताशोकसमाकुलः ॥ ३० ॥
ददर्श शांभवं तत्र बिल्वमूले महावने । शिवलिङ्गार्चनरतं भस्मोद्धूलितविग्रहम् ॥ ३१ ॥
भस्मत्रिपुण्ड्ररेखाङ्कं रुद्राक्षाभरणाश्रयम् । निमीलिताक्षं ध्यायन्तं महादेवमनामयम् ॥ ३२ ॥
तं दृष्ट्वा स तु भूपालः शांभवोत्तममादरात् । प्रणम्य दण्डवद्भूमौ उवाच स कृताञ्जलिः ॥

राजा —

भगवन् शांभवश्रेष्ठ नीलकण्ठः स निष्ठुरः । तेनाद्य संहृतं भाग्यं सभाग्यस्य दुरात्मनः ॥ ३४ ॥
यदस्ति सहमानत्वं महादेवे श्रुतिश्रुतम् । तस्मिंस्तिष्ठति नित्येऽपि स कथं मयि निष्ठुरः ॥ ३५ ॥
अन्यस्य सहमानत्वं न श्रुतं नापि वस्तुतः । किञ्चान्यस्तादृशः को वा यन्नैष्ठुर्येण दुर्भगः ॥ ३६ ॥
इति तद्वचनं श्रुत्वा हृष्टो रुष्टोऽपि शाङ्करः । तमुवाच महाधीरो राजानं दीनवत्सलः ॥ ३७ ॥

शांभवः —

यदुक्तं सहमानत्वं महादेवे सनातनम् । तद्वेदोक्तमतस्तस्य निष्ठुरत्वमसङ्गतम् ॥ ३८ ॥

कृता शिक्षा महेशेन दुर्वृत्तस्य तवाधुना । शङ्करस्मरणं त्यक्तं तथा शङ्करपूजनम् ॥ ३९ ॥
उदारदारसंभोगे भोगदानविचक्षणः । विरूपाक्षो न स्मृतो हि त्वया भोगाकुलेन तु ॥ ४० ॥
यत्तत् परिमलद्रव्यं कस्तूरीरसरूषितम् । तदनर्पितमीशाय स्वोपभोगाय कल्पितम् ॥ ४१ ॥
दुकूलान्यपि रम्याणि शङ्करानर्पितान्यपि । सहसाऽस्योपभोगाय [1] कल्पितानि नवान्यपि ॥ ४२ ॥
भूषणानि विचित्राणि शङ्करानर्पितान्यपि । कल्पितानि प्रमत्तेन स्वोपभोगाय केवलम् ॥ ४३ ॥
यदन्नं क्षीरसंयुक्तं शङ्करायानिवेदितम् । तद्भुक्तमद्य तुष्टेन तेन जातोऽसि दुर्भगः ॥ ४४ ॥
यदन्नपतये दत्तं तदन्नममृतं खलु । तद्भिन्नं विषमेवेति विषभोगे कुतः सुखम् ॥ ४५ ॥
भाग्यनाशेन नष्टाश्च प्राणाः सर्वेऽप्यसंशयम् । अतः प्राणविहीनस्तु, मृत इत्यवधारितः ॥ ४६ ॥
दरिद्रस्य मृतस्यापि नान्तरं खलु दृश्यते । दरिद्रो मृत एवेति तस्य सौख्यं कुतो भवेत ॥ ४७ ॥
असौख्यनिधिरेवायं अशांभव इति स्मृतः । अतस्त्यजाधुना तावदाशां सौख्यावगाहिनीम् ॥
येन दत्तं महद्भाग्यं तद्विस्मरणमेव ते । अशनित्वेन निष्पन्नं अतस्तत् केन नश्यति ॥ ४९ ॥
भाग्यं प्राप्य खलून्मत्ताः भाग्यदं विस्मरन्त्यतः । अभाग्या एव ते तावत् भविष्यन्ति न संशयः ॥
कृते दारा महोदारा सहाराहारतालये । हारत्वे मति तत्सर्वं भविष्यति न संशयः ॥ ५१ ॥
आयुष्मन्तो भाग्यवन्तो रूपवन्तो विशेषतः । शाम्भवा एव तत्सर्वं शाम्भवाननुधावति । ५२ ॥
एतावद्भाग्यसमये कथं नाराधितः शिवः । कदाऽपि न कृतं राजन् त्वदा शङ्करपूजनम् ॥ ५३ ॥
न कारितं मन्दिरं वा रत्नमण्डलमण्डितम् । महेश्वरविहाराय रत्नाभरणभूषितम् ॥ ५४ ॥
दीपमालाश्च न कृताः कोटिशः शिवमन्दिरे । न चान्नराशिभिर्दत्तं नैवेद्यं शङ्कराय तु ॥ ५५ ॥
न कृता घृतकुल्यापि शिवनैवेद्यकल्पने । मधुकुल्याऽपि न कृता क्षीरकुल्या विशेषतः ॥ ५६ ॥
श्रीमहादेवनैवेद्यं न कृतं भक्तिपूर्वकम् । न शाम्भवसमूहेभ्यो दत्तमन्नं विशेषतः ॥ ५७ ॥
न च रत्नानि दत्तानि दिव्यान्याभरणानि च । दुकूलानि न दत्तानि शिवप्रीत्यर्थमादरात् ॥ ५८ ॥
यो [2] महद्भाग्यसमये नाराधयति शङ्करम् । स दुर्भगो भवत्येव शीघ्रं भाग्यविवर्जितः ॥ ५९ ॥
अभाग्याम्बुधिमग्नानां भक्तिः शम्भौ न जायते । केवलं भाग्यसंपन्नाः ते कुर्वन्ति शिवार्चनम् ॥
शिवनामोच्चारणेन नयन्ति समयं मुहुः । ते तावदतिधन्यास्ते पूजनीयाः प्रयत्नतः । ६१ ॥
अतः परं गते भाग्ये शिवपूजार्चने मतिः । न भविष्यति दुःखेन दुःखाम्बुधिनिमज्जनैः । ६२ ॥
यदि दुःखेऽपि संप्राप्ते करोति शिवपूजनम् । तदाऽपि दुःखहानिः स्यात् भक्तिश्चेत् गिरिशे त्वदा ॥

1 स्वोपभोगाय केवलं C सहसा स्वोपभोगाय कल्पितानि D 2 यो महाभाग्येति सुवचः पाठः ।

अधुना वा महादेवं स्मरापस्मारनाशकम् । स्मर स्मराविलम्बेन साम्बं संसारमोचकम् ॥ ६४ ॥
संसारदृढमूलानां विच्छेदः शङ्करार्चनात् । महापरशुरूपः स्यादन्यथा न कथं भवेत् ॥ ६५ ॥
शिवनामाग्निसन्दग्धाः संसारतरवः पुनः । न प्ररोहन्ति महिमा निर्मूलास्ते यतस्ततः ॥ ६६ ॥
विषमप्यमृतं नाम शाङ्करं कार्यभेदतः । पापमूर्तेर्विषं मन्ये पुण्यमूर्तेः सुधा परम् ॥ ६७ ॥
दृढसंसारपाशानां छेदनाय शिवार्चनम् । दृढसंनिधानानां संबन्धाय च जायते ॥ ६८ ॥
तथा च पापनाशार्थं तत्संपत्सङ्गमाय च । कर्तव्यमिति यत्नेन लिङ्गे शङ्करपूजनम् ॥ ६९ ॥
लिङ्गानि बहुधा सन्ति भुक्तिमुक्तिप्रदान्यपि । तेषु सर्वेषु लिङ्गेषु नार्मदं लिङ्गमुत्तमम् ॥ ७० ॥
यद् दत्तं नार्मदे लिङ्गे जलं कुसुममेव वा । फलं बिल्वदलं वापि तदानन्दाम्बुधिप्रदम् ॥ ७१ ॥
दुर्लभं नार्मदं लिङ्गं दुर्लभा बिल्वमञ्जरी । दुर्लभा शांभवी विद्या दुर्लभः शाङ्करः कलौ ॥ ७२ ॥
शाङ्करत्वं समासाद्य रेवालिङ्गे मनोहरे । बिल्वाद्यैरर्चनं कृत्वा मुक्तो भवति मानवः ॥ ७३ ॥
अत्रापि सन्ति लिङ्गानि श्रीशैले शङ्करालये । पर्वताराधितं लिङ्गं त्रिपुरान्तकसंज्ञितम् ॥ ७४ ॥
तल्लिङ्गपूजनादेव मुक्तः स्यादघसागरात् । तस्य दर्शनमात्रेण मुक्तः स्यादघसागरात् ॥ ७५ ॥
त्रिपुरासुरसंहारं कृत्वा फालविलोचनः । लिङ्गाकारं समासाद्य स्थितः श्रीपर्वते खलु ॥ ७६ ॥
भूमण्डलेषु तीर्थानि यानि तानि विशेषतः । श्रीशैले मूर्तिमासाद्य तिष्ठत्येव न संशयः ॥ ७७ ॥
तल्लिङ्गार्चनजं पुण्यं संपन्मुक्तिकरं परम् । तत्र येनार्पितं द्रव्यं तदनन्तफलप्रदम् ॥ ७८ ॥
दूर्वाङ्कुरैर्बिल्वपत्रैः नीरैर्वा त्रिपुरान्तकम् । यः पूजयति पुष्पेण स मुक्तो भवति ध्रुवम् ॥ ७९ ॥
तत्र गोक्षीरकलशं यो दद्याद्भक्तिपूर्वकम् । शांभवाय स पुण्यात्मा सुधासागरराड् भवेत् ॥ ८० ॥
श्रीपर्वते शांभवाय यो दद्यादन्नमादरात् । स तावदन्नराशीनां अधिपो भवति ध्रुवम् ॥ ८१ ॥
तत्र रत्नानि यो दद्यात् भक्त्या शिवपरायणः । स रत्नकोशाधिपतिः भवत्येव न संशयः ॥ ८२ ॥
त्रिपुरान्तकमुद्दिश्य यः सुवर्णं प्रयच्छति । स सुवर्णपतिर्भूत्वा मुक्तो भवति मानवः ॥ ८३ ॥
[1] शिवचिन्तनशीलं चेदमृतं चित्तमंततः । वित्तेशो याति पत्तित्वं पतिपत्तेरपि स्वतः (?)॥ ८४ ॥
शिवचिन्तनशीलानां यो दद्याद्वित्तमन्ततः । सोऽपि वित्तेशतां याति ऋषिवर्यैरपि स्तुतः ॥ ८५ ॥
घण्टाकर्णेश्वरं नाम लिङ्गमस्त्येकमुत्तमम् । तत्पूजनेन पापानि विनश्यन्ति न संशयः ॥ ८६ ॥
तत्रापि कुण्डमस्त्येकं सुधाकुण्डमिति श्रुतम् । तत्र स्नात्वा नरः सद्यः शुद्धो भवति सर्वथा ॥

1 अयं श्लोकः A कोशे अस्पष्टं लिखितः । अस्य श्लोकस्य स्थाने "शिवचिन्तनशीलानां" इति श्लोकः C कोशे दृश्यते । D कोशे न दृश्यते । "अभक्तं चित्तमन्ततः" D

तत्कुण्डजलमध्यस्थो घण्टाकर्णेश्वरं स्मरन् । सर्वपापविनाशानां हेतुरेव प्रजायते ॥ ८८ ॥
घण्टाकर्णेश्वरं नत्वा संपूज्य कुसुमादिभिः । तत्पुष्पसंख्यया तत्र सम्पत् (?) प्राप्नोति मानवः ॥
[1]सारङ्गेश्वरमालोक्य तत्र स्नात्वाऽतिपावने । तत्सरोजलपानेन मुक्तो भवति मानवः ॥ ९० ॥
पुण्यकोटिसमाक्रान्तः शिखरेश्वरपूजनम् । करोति पुण्यकालेषु बिल्वदूर्वादिभिर्मुदा ॥ ९१ ॥
विभूतिकुण्डमस्त्येकं तत्तु पापविनाशनम् । तस्मिन् कुण्डे प्रविष्टानि तीर्थानि विमलान्यपि ॥ ९२ ॥
तत्कुण्डजलयोगेन तीर्थानां तीर्थता मता । ततः सर्वाणि तीर्थानि तत्र यान्ति दिने दिने ॥ ९३ ॥
श्रीशैलो दुर्लभो लोके भस्मकुण्डं च दुर्लभम् । त्रिपुरान्तकलिङ्गं च दुर्लभं जगतीतले ॥ ९४ ॥
शिखरेश्वरमालोक्य विमुक्तः पापपञ्जरात् । पश्चान्मुक्तो भवत्येव यत्र कुत्रापि वा मृतः ॥ ९५ ॥
तत्रास्ति हाटकेशाख्यं लिङ्गं हाटकनिर्मितम् । तत्रास्ति हाटकं कुण्डं तज्जलं पापनाशनम् ॥ ९६ ॥
तत्र स्नात्वा प्रयत्नेन तल्लिङ्गं भक्तिपूर्वकम् । बिल्वपत्रैः समभ्यर्च्य मुक्तो भवति मानवः ॥ ९७॥
श्रीशैलभ्रमराम्बायाः कृत्वा दर्शनमादरात् । सर्वपापविनिर्मुक्तः सम्पन्नाथो भविष्यति ॥ ९८ ॥
भ्रमराम्बापदाम्भोजं कोमलैर्बिल्वपत्रकैः । समभ्यर्च्य प्रयत्नेन सर्वराष्ट्राधिपो भवेत् ॥ ९९ ॥
भ्रमराम्बां समभ्यर्च्य यस्तु रात्रौ प्रदक्षिणम् । करोति तत्करस्था स्यात् सर्वसम्पद्वराङ्गना ॥ १००॥
तस्य स्यान्महदैश्वर्यं सन्ततिस्तस्य वर्धते । यच्चित्तं भ्रमराम्बायाश्चरणाम्बुरुहार्चने ॥ १०१ ॥
तस्य तावद्विपत्तिः स्यात् यावन्नाराधिता शिवा । आराधितायां तस्यां तु सम्पद्वृद्धिर्दिने दिने ॥
तत्र सम्पत्प्रदानाय दीक्षिता भ्रमराम्बिका । तत्पादाम्बुरुहोत्पन्नाः सर्वदा सर्वसंपदः ॥ १०३ ॥
संपत्खनिरिति ख्याता श्रीशैले भ्रमराम्बिका । तस्याः प्रभावो वेदैर्वा न ज्ञातः सर्वथा खलु ॥
अलमलमभिलापैरिन्दुमौलेः प्रसादात सकलभुवननाथो जायते मानवोऽपि ।
इति मनसि विचिन्त्यानुग्रमुग्रं विदित्वा भज भज भगवन्तं पार्वतीकान्तमेकम् ॥ १०५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे श्रीशैलमहिमावर्णनं नाम द्वात्रिंशोऽध्यायः ॥

—:x:—

1 सागरेश्वर C.

# अथ त्रयस्त्रिंशोऽध्यायः ।

—o—

राजा —

प्रमत्तेन मया पूर्वं त्यक्तं शङ्करपूजनम् । तत्त्यागेन गतं भाग्यं न पूजासाधनान्यपि ॥ १ ॥
न पञ्चामृतसामग्री न वा नैवेद्यसाधनम् । न दीपदानसामग्री न वा श्रीचन्दनादिकम् ॥ २ ॥
एवं सति कथं पूजा कर्तव्या प्रीतिपूर्वकम् । भावना कथमंशानामपेक्षां न करोति किम् ॥ ३ ॥
स्मरणं कथमंशेन विना किं करणे भवेत् । कथमंशविमुक्तेन करणेन कुतः फलम् ॥ ४ ॥
फलं संभावितं किंवा शुद्धगोदोहनादिना । किं प्रयोगाप्रविष्टेन तेन गोदोहनेन वा ॥ ५ ॥
किं सान्नाय्येन वा दध्ना केवलाज्येन किं फलम् । पत्न्यवेक्षितमेवाज्यं प्रयोगाङ्गं न केवलम् ॥
[1]जाघनीवत् किमेतस्याप्याज्यस्याङ्गत्वमीप्सितम् । तत्तावत्कथमंशोऽपि करणापेक्षितः खलु ॥
एवं च करणेनापि श्रीमहादेवपूजया । निष्पत्तिः फलजातस्य कथमंशैर्विना तु न ॥ ८ ॥
इति तद्वचनं श्रुत्वा तमाह प्रीतिपूर्वकम् ॥ ९ ॥

शाङ्करः —

सम्पत्काले कथं त्यक्तं त्वया शङ्करपूजनम् । सम्पद्विलयकालेनाप्यनुतापस्तवाधुना ॥ १० ॥
कथञ्चित् पुण्यसामग्रीं सम्पादयितुमर्हसि । कथमन्नानि दिव्यानि कथं वा रत्नपर्वताः ॥ ११ ॥
स्थितास्तैरीशपूजायां न जाता भक्तिरुद्धता । पुनर्भाग्येऽपि सम्प्राप्ते सोन्मादेन त्वया कथम् ॥
महादेवार्चनं कार्यं विपत्कुलविनाशनम् । आपत्काले यथा भक्तिः सम्पत्काले भवेत् तथा ॥
स तरत्येव [2]संसारात् दिव्यसाधनपूजया । ते रत्नपर्वता नष्टाः त्वया ये समुपार्जिताः ॥ १४ ॥
ततः कथं त्वया कार्यं रत्नैर्लिङ्गस्य पूजनम् । रत्नेनैकेन यः कुर्यात् श्रीमहादेवपूजनम् ॥ १५ ॥
स संपद्राशिसंपन्नः कल्पान्तेऽपि भविष्यति । तानि रत्नानि दग्धानि शङ्करानर्पितान्यतः ॥१६॥
तेष्यन्नराशयो दग्धाः शङ्करायानिवेदिताः । गोक्षीरघृतकुल्याश्च शङ्करानर्पिताः स्वयम् ॥ १७ ॥
शुष्का एव जलानां च कुल्याः शल्याकुला इव । दग्धं पुष्पवनं सर्वं यैः पुष्पैरीशपूजनम् ॥ १८ ॥
भक्त्या न कृतमेवेति दग्धश्च फलसञ्चयः । स भाग्यविभवो दग्धः भवानर्चनतस्तव ॥ १९ ॥
अतः किमनुतापेन फलमद्य भविष्यति । महाविभवसम्पत्त्या श्रीमहादेवपूजनम् ॥ २० ॥

---

1 जघानीवत् किमेतस्याप्यजस्याङ्गत्वं G 2 संसारं C

कर्तुं कथं महोत्साहो न कृतो दुर्भगाधम । धिग् धिग् जन्म तवेदं ते जीवनं धिग् धिगेव तत् ॥
शिवानर्चकजन्मानि निरयायैव केवलम् । अतः परं वा यत्नेन नवदूर्वाङ्कुरादिभिः ॥ २२ ॥
त्रिपुरान्तकपूजायां निरतो भव सत्वरम् ।

नन्दी —

इत्युक्तस्तं मुनिं नत्वा स्नात्वा सरसि पावने ॥ २३ ॥
दूर्वाङ्कुरैः सरसिजैः पूजयामास शङ्करम् । एवं संवसतस्तस्य श्रीमहादेवपूजया ॥ २४ ॥
भूयानेव गतः कालः कालकालकृपां विना । उन्मत्ताय महद्भाग्यं न दातव्यमितीच्छया ॥
न दत्तं भाग्यमीशेन कृतेऽपि शिवपूजने । अतिप्रमत्तभाग्यानि हतान्येव हि लीलया ॥ २६ ॥
स्वतन्त्रेण महेशेन प्रभुत्वं प्रकटीकृतम् । अन्नाभावात् निराहारः स चिरं शिवपूजया ॥ २७ ॥
कालं नीत्वा स्थितस्तत्र त्रिपुरान्तकमन्दिरे । ततः परं स राजा तु प्रदोषे सोमवासरे ॥ २८ ॥
आर्द्रानक्षत्रसंयुक्ते पूजयामास शङ्करम् । दूर्वाङ्कुरैरपारैश्च कमलैरमलैर्जलैः ॥ २९ ॥
प्रणामैरपि नृत्यैश्च तोषयामास शङ्करम् । ततः परं महादेवः प्रसन्नः करुणानिधिः ॥ ३० ॥
ददौ भाग्यान्यनन्तानि तस्मै राज्ञे विशेषतः । ततः स राज्यं सम्प्राप्य भाग्यानि विविधान्यपि ॥
प्रहृष्टः शङ्करं स्मृत्वा चकार शिवमन्दिरम् । रत्नप्राकारसंयुक्तमनन्तविभवं मुदा ॥ ३२ ॥
स भक्त्या कारयामास दिव्यपुष्पवनान्यपि । कोटिशो दीपमालाश्च रत्नपात्रेषु भक्तितः ॥ ३३ ॥
चकार धूपगिरयः कल्पितास्तेन चाग्निषु । अपाररत्नगिरयः शङ्कराय समर्पिताः ॥ ३४ ॥
सुगन्धकुसुमासारैः पूजयामास शङ्करम् । नैवेद्यपर्वतैरीशं तोषयामास भूपतिः ॥ ३५ ॥
नाट्यगानैश्च विविधैः दुकूलाभरणादिभिः । प्रदक्षिणैर्नमस्कारैः ललाटकिणकारणैः ॥ ३६ ॥
स्वेदधारापरिश्रान्तः चकार शिवतोषणम् । भोजिताः प्रत्यहं तेन कोटिशः शैवपुङ्गवाः ॥ ३७ ॥
दुकूलगिरयो दत्ताः तेभ्य एव प्रयत्नतः । सुवर्णरत्नगिरयो दत्तास्तेभ्यश्च भक्तितः ॥ ३८ ॥
तद्देशवासिनः सर्वे कृतास्तेनैव शाङ्कराः । शिवार्चनानुरागेण तेनाहारोऽपि विस्मृतः ॥ ३९ ॥
न दारोदारहाराणां क्षणं वा तस्य सङ्गतः । निश्वरमिदं भाग्यं अनेन यदि शङ्करः ॥ ४० ॥
पूजितः स्यात् तदा भाग्यं प्रवृद्धं च भविष्यति । शिवपूजापरित्यागात् दुःखं भुक्तमनेकधा ॥
अतः परं वा यत्नेन कर्तव्यं शिवपूजनम् । येनान्नमपि न प्राप्तं मया तेनाधुना महत् ॥ ४२ ॥
भाग्यं प्राप्तमिदं भाग्यं शङ्कराय समर्पितम् । शिवनैवेद्यमात्रेण कथञ्चिज्जीवने सति ॥ ४३ ॥
अन्यद्भाग्यं महेशाय देयं दत्तं च तेन मे । अतः परं कृपासिन्धुः कुपितो न यथा तथा ॥

कर्तव्यमन्यथा दुःखं भविष्यत्येव पूर्ववत् । यावज्जीवमयं धर्मो मम शङ्करपूजनम् ॥ ४५ ॥
अनेन कालनयने कालादपि न मे भयम् । अस्यानुन्मादकालोऽयं शिवानुग्रहसाधनः ॥ ४६ ॥
भाग्यं चाप्रतिमं तेन कर्तव्यं शिवपूजनम् । इति निश्चित्य बहुधा स चकार शिवार्चनम् ॥ ४७ ॥
तेन पुण्यप्रभावेण सम्पद्वांछाऽप्यभूत् सदा । तस्य पुत्राः शतं तेऽपि वीराः शाङ्करपुङ्गवाः ॥४८॥
तैश्च पूजा कृता नित्यं रत्नादिभिरुमापतेः । रत्नैरेव महेशाय मन्दिराणि कृतान्यपि ॥ ४९ ॥
शिवपूजाप्रयत्नार्थं वनान्यपि कृतानि तैः । विरता एव सहसा संसारे [1]दुःखसागरे ॥ ५० ॥
[2]भाग्यानि विरताः सर्वे शाङ्कराराधनोत्सुकाः । पुष्पाणि स्वयमानीय बिल्वपत्राणि कोटिशः ॥
अर्पितानि महादेवे नीतः कालश्च तैस्तथा । शांभवा एव ते सर्वे शिवपूजापरायणाः ॥ ५२ ॥
नारायणादिवृन्दारवृन्दवन्दितपादुकाः । कृत्वा शिवार्चनं नित्यं विहारार्थं चरन्ति ते ॥ ५३ ॥
स्वर्गलोके ब्रह्मलोके विष्णुलोके यदृच्छया । उत्तमाश्वान् समारुह्य ते यान्ति स्वर्गमन्दिरम् ॥
गजानपि समारुह्य कदाचिदतिशाम्भवाः । शिवपूजाप्रभावेण तेऽपि सर्वेऽपि शांभवाः ॥ ५५ ॥
अविघ्नगमना एव ब्रह्मलोकेऽपि सन्ततम् । कदाचिदागतान् दृष्ट्वा शांभवांस्तांश्चतुर्मुखः ॥ ५६ ॥
अभ्युत्थानादिभिः सम्यक् पूजयामास सादरम् । ततः स पृष्टस्तत्रैव तत्स्वरूपं किमित्यपि ॥५७॥
ततस्तान् विस्मयेनाह तत्पितामहवर्तनम् । एतत्पितामहः पूर्वं कीकटेषु स्थितः पुरा ॥ ५८ ॥
स भिल्लस्तेन तद्देशे शिवमन्दिरपालकः । तद्दारैश्च तदाहारो नीयते तत्र नित्यशः ॥ ५९ ॥
स तत्र क्षुद्रजन्तूनां करोत्येव निवारणम् । यथा न क्षुद्रजन्तूनां प्रवेशः शिवमन्दिरे ॥ ६० ॥
तथा करोति यत्नेन नियुक्तः केनचिन्मुहुः । तदा तन्मन्दिरद्वारि बलिदानान्नमादरात् ॥ ६१ ॥
गृहीत्वा बुभुजे भिल्लः स्वदारैः सह भक्तितः । तदन्नपरिपाकेन स पुष्टो रतितत्परः ॥ ६२ ॥
ततो दधार तत्पत्नी गर्भं सा भाग्यसंयुतम् । ततस्तस्याभवत् पुत्रो रूपलावण्यसंयुतः ॥ ६३ ॥
ततस्तद्देशराजाऽपि तं ददर्श कदाचन । ततः परं विचार्यायं राजा पुत्रविवर्जितः ॥ ६४ ॥
तस्मै राज्यं ददौ पश्चात् स मृतो भूपतिर्बुधाः । तत्तेन शिवनैवेद्यबलिभोजनपुण्यतः ॥ ६५ ॥
तदन्नपरिपाकेन तद्गर्भो ज्ञानसंयुतः । भुक्तं महेशनैवेद्यं जनकाभ्यां समादरात् ॥ ६६ ॥
तदन्नपरिपुष्टा च गर्भं तनुरियं मम । तदन्नपरिपुष्टाभ्यां गर्भः संपादितोऽप्ययम् ॥ ६७ ॥

---

1 दुरिताकरे D.

2 'पुष्पाणि स्वयं' 'अर्पितानि महादेव' 'भाग्यानि विरताः' 'शांभवा एव ते' इति C कोशे पाठक्रमः ।

मम भाग्यस्य नान्तोऽस्ति शिवनैवेद्यभोजनात् । पित्रोस्तद्रसपुष्टाभ्यां (?) गर्भसंपादनं कृतम् ॥
तदन्नरसधारायाः संबन्धेन ममाधुना । शरीरं पावनं धन्यं जीवनं च [1]ममाधुना ॥ ६९ ॥
राज्याधिपत्यं संप्राप्य कर्तव्यं शिवपूजनम् । शिवनैवेद्यसम्बन्धात् भूपतिर्जायते पुमान् ॥ ७० ॥
दुर्लभं शिवनैवेद्यं सुराणामपि तद्यतः । दुर्लभं प्राप्यते तावत् तदीशानुग्रहात् परम् ॥ ७१ ॥
इति सञ्चिन्त्य सञ्चिन्त्य सोऽपि गर्भाद्विनिर्गतः । ततः स राज्यं सम्प्राप्य यौवनं प्राप्य दुर्मदः ॥
न शिवाराधनोद्योगं चकार कुमतिर्बुधाः । उदारदारधीराङ्गसङ्गात् शङ्कोऽपि विस्मृतः ॥ ७३ ॥
रत्नप्रासादमारुह्य क्रीडायां निरतो मुहुः । तादृशोन्मादसमये विस्मृते शिवपूजने ॥ ७४ ॥
तस्य राज्यं गतं सर्वं सौभाग्यं च गतं वृथा । ततः श्रीशैलनाथस्य सेवया राज्यमाप सः ॥
ततः परं महादेवं पूजयामास सादरम् । तत्पूजनेन सम्प्राप्तं भाग्यं पूर्वाधिकं बुधाः ॥ ७६ ॥
तस्य भाग्यस्य नान्तोऽस्ति तेन भाग्येन शङ्करम् । पूजयामास विविधैरुपचारैरनकधा ॥ ७७ ॥
तस्य पुत्राः किलैतेऽपि सर्वदा शङ्करार्चकाः । एतैश्च रत्ननिलयाः शङ्कराय कृतास्तथा ॥ ७८ ॥
यथा तुष्टो महादेवो रत्नसुन्दरमन्दिरैः । वनानि कारितान्येतैः तेषु पुष्पाणि सन्ततम् ॥ ७९ ॥
तैः पुष्पैः पूजयन्त्येते महादेवं प्रयत्नतः । महादेवप्रसादेन राज्यवृद्धिः प्रजायते ॥ ८० ॥
तद्राज्यधनमादाय शिवपूजां करोति सः । शिवपूजनसामर्थ्यमनन्तैश्वर्यदं बुधाः ॥ ८१ ॥
तदैश्वर्यस्य नान्तोस्ति तद्भक्तानां च वस्तुतः । शिवचिन्तनशीलं चेदमृतं चित्तमन्ततः ॥ ८२ ॥
[2]वित्तेशो याति पत्तित्वं पतिपत्तेरपि स्वतः । निवासो मत्तमातङ्गकोटीनां शांभवालयः ॥ ८३ ॥
उच्चैः श्रवणभाग्येन शिवनाम्नः फलं हि तत् । तुरङ्गाणां च तुङ्गानां कोटयः शांभवालये ॥८४॥
तदुच्चैः शिवपूजायाः फलमित्यवधारितम् । गोधूमानां च निलयः शाम्भवस्यालयः खलु ॥
गिरिजाराधनस्यैव फलं तदिति निश्चितम् । यद्यद्भाग्यं स भाग्यानां तत्सर्वं शिवपूजया ॥ ८६ ॥
सभाग्यत्वं च निर्णीतं केवलं शिवपूजया ॥ ८७ ॥

किञ्चानुषङ्गिकमिदं फलमित्यवैमि भाग्यं समूलधनधान्यसमृद्धिरूपम् ।
सत्यादिलोकवचनस्य शिवार्चनस्य मन्ये फलं किमपि तच्छिव एव वेद ॥ ८८ ॥

मुख्ये सत्यपि किं फले तदितरत् किञ्चित्फलं जायते
यानारोहणलक्षणं च न फलं यामाङ्गसङ्गात्मके ।

---

1 मयाऽधुना C .

2 इदमर्धं C कोशे नास्ति । अयं श्लोकः द्वात्रिंशाध्यायस्य ८४ श्लोकतया पूर्वं पठितश्च ॥

मुख्ये सत्यपि तत्फले खलु तथा मल्लोकवासः फलं
कैलासान्वयमिच्छतामपि तथा तत्तत्फलं कल्प्यते ॥ ८९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिवबलिप्रदानान्नभोजन
महिमावर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥

—o—

## अथ चतुस्त्रिंशोऽध्यायः ।

नन्दिकेशः —

इति भाग्यवचः श्रुत्वा नत्वा भाग्याधिदेवताम् । सन्निधानं तवात्रास्तु [1]सेवया त्वयैव मे ॥
महेश्वराज्ञया प्राप्ता त्वया मत्सन्निधिः खलु । एतावता सभाग्योऽहं इतः किमधिकं फलम् ॥
आराधनं च भवति करोति भगवानपि । सन्तुष्टो येन भगवान् सौभाग्यं स्थिरतामियात् ॥ ३ ॥
इत्युक्त्वा सोऽपि सन्तुष्टो भोगारम्भसमावृतः । शिवार्चनपरो नित्यं शिवनामरतोऽभवत् ॥ ४ ॥
तेनाप्युन्नतमुत्कृष्टं कारितं रत्नमन्दिरम् । तस्य नार्मदलिङ्गस्य सर्वाभरणभूषितम् ॥ ५ ॥
मणिमालासमाक्रान्तं रत्नप्राकारसंयुतम् । स पञ्चामृतकुल्याभिः चक्रे लिङ्गाभिषेचनम् ॥ ६ ॥
दिव्यनीरप्रवाहैश्च शीतलैर्गन्धसंयुतैः । कस्तूरीघनसारादिनानाद्रव्यसमन्वितैः ॥ ७ ॥
चन्दनं च घनीभूतं दिव्यगन्धसमन्वितम् । दत्तमीशाय तेनैव रत्नैरभ्यर्चितः शिवः ॥ ८ ॥
गोघृतेनैव दिव्येन दीपमालाः कृताः खलु । ताभिः प्रभान्वितं जातं सर्वं ब्रह्माण्डमण्डलम् ॥
विल्वमन्दारकुसुमैः कमलैरमलैरपि । अन्यैश्च विविधैः पुष्पैः गन्धासारसमन्वितैः ॥ १० ॥
सुवर्णपुष्पमालाभिः नानारत्नसमन्वितैः । मुक्ताहारैरविरलैः नीलमालाभिरादरात् ॥ ११ ॥
बिल्वपल्लवमालाभिरमलाभिर्विशेषतः । अतुलाभिरमूल्याभिः पूजयामास शङ्करम् ॥ १२ ॥
नानाविधैर्धूपदीपैः धूपयित्वा सदाशिवम् नैवेद्यं कल्पयामास स चान्नैर्विविधैरपि ॥ १३ ॥
परमान्नप्रवाहैश्च शर्कराज्यसमन्वितैः । वटकाद्यैर्भक्ष्यसङ्घैः अपारैर्मधुरैरपि ॥ १४ ॥
नारिकेलजलानां च प्रवाहैः शीतलैर्जलैः । एलालवङ्गसंयुक्तैः तांबूलैरमलैरपि ॥ १५ ॥
रत्नछत्रैश्चामरैश्च दुकूलैर्दर्पणैरपि । प्रणामैरपि नाट्यैश्च तोषयामास शङ्करम् ॥ १६ ॥
दिव्यान्नैः शिवनैवेद्यैः तोषयामास कोटिशः । शाम्भवाग्रेसरानेव ददौ तेभ्यो धनान्यपि ॥ १७ ॥

---

1 सेवया त्वत्त एव मे C

गोसहस्राणि दत्तानि शैवेभ्यस्तेन सादरम् । विविधान्यपि धान्यानि तेभ्यो दत्तानि तेन तु ॥
प्रत्यहं दृढया भक्त्या पूजामेवं विधाय सः । आसायमुपवासेन निशि भुङ्क्ते शिवार्चकः ॥
एवं संवसतस्तस्य द्रष्टुं सर्वं शिवोत्सवम् । सनकाद्यैः सहानन्दैर्मुनिभिर्नारदो ययौ ॥ २० ॥
स [1]दूरेणैव तान् दृष्ट्वा भस्मोद्धूलितविग्रहान् । रुद्राक्षमालाभरणान् हृष्टः सादरमास्तिकः ॥
तानागतान् प्रयत्नेन नत्वा भक्तिपुरस्सरम् । पूजां विधाय विहितां रत्नसिंहासनस्थितान् ॥ २२ ॥
स्वयं च भस्मनोद्धूल्य सर्वाङ्गान्यपि भक्तितः । रुद्राक्षमालाभरणः पप्रच्छ शिववैभवम् ॥ २३ ॥
महेश्वराराधनस्य प्रकारः कः परः श्रुतः । किं तत्फलं चाधिकारी के वा तन्मे वदन्तु वा ॥२४
इति तद्वचनं श्रुत्वा नारदो भक्तिपूर्वकम् । नत्वा महेश्वरं प्राह शिवधर्मान् विशेषतः ॥ २५ ॥

नारदः —

सन्ति धर्माः श्रुतिप्रोक्ताः कोटिशस्तैरलं खलु । आयासमात्रफलकैः अत्यल्पफलकैरपि ॥ २६ ॥
धर्मैरपारैः विविधैः यत्फलं लभ्यते जनैः । तदीशार्चनसम्प्राप्यं लीलयैव न संशयः ॥ २७ ॥
न बहुद्रव्यविलयो न ह्यायासः शिवार्चने । प्राप्यन्ते विपुलान्येव विमलानि फलान्यपि ॥ २८ ॥
बिल्वपल्लवमात्रस्य प्रदाने लिङ्गमस्तके । यत्फलं प्राप्यते तत्तु न धर्मान्तरकोटिभिः ॥ २९ ॥
लिङ्गसृष्टिः कृता पूर्वं करुणासागरेण हि । त्रिशूलपाणिना सेयमुत्कृष्टा सृष्टिरद्भुता ॥ ३० ॥
पुरा कैलासशिखरे सुखासीनं महेश्वरम् । हिरण्यबाहुमीशानं स्वर्णसुन्दरविग्रहम् ॥ ३१
शरद्राकेश्वराकारदुकूलपरिवेष्टितम् । उदारतारहाराणां विहारनिकरं परम् ॥ ३२ ॥
जटाजूटतडित्कोटिनिकटेन्दुकलाधरम् । रत्नाभरणशोभाभिः अभितः परिवेष्टितम् ॥ ३३ ॥
त्रिलोचनं नीलकण्ठं सोत्कण्ठं गिरिजानने । अप्रमेयमनाद्यन्तं सच्चिदानन्दलक्षणम् ॥ ३४ ॥
परमानन्ददं शान्तं मङ्गलानां च मङ्गलम् । पवित्राणां पवित्रं च दैवतानां च दैवतम् ॥ ३५ ॥
अप्रधृष्यं भवं भीमं जरामरणवर्जितम् । महामृत्युञ्जयं शर्वं महारुद्रं पिनाकिनम् ॥ ३६ ॥
भक्तानन्दप्रदं भव्यं दिव्यं विषविभूषितम् । स्मरणेनापि भक्तानां सर्वाभीष्टप्रदायकम् ॥ ३७ ॥
गौरीविहारनिरतं प्रसन्नवदनं प्रभुम् । शम्भुं विलोक्य गिरिजा प्राह तद्वामभागगा ॥ ३८ ॥

श्रीगौरी —

भगवन् भव देवेश त्वं सर्वज्ञशिरोमणिः । प्रष्टव्यमेकमधुना दयया तद्वदाधुना ॥ ३९ ॥

---

1 द्वारेणैव C

केन सिद्धिर्भवेन्नृणां मुक्तिश्च परमेश्वर । इष्टलाभेऽपि सततं तद्वदादरपूर्वकम् ॥ ४० ॥
न चावगणना कार्या नावहेलनखेलना । नान्यत्र चित्तविश्रामः कर्तव्यः श्रमवर्जितः । ४१ ॥
इति तद्वचनं श्रुत्वा प्राह गौरीं मनोरमाम् । वचनं श्रुतितत्त्वज्ञः तदादरपुरःसरम् । ४२ ॥

सदाशिवः —

इष्टसाधनमस्त्येकं गोपनीयं प्रयत्नतः । तदेव तावदधुना वक्तव्यं श्रुतिचोदितम् ॥ ४३ ॥
निधनेत्यादिभिर्मन्त्रैः लिङ्गमुक्तं ममाम्बिके । नमःपदान्तैर्मन्त्रैस्तैः पूजाप्युक्ता विशेषतः ॥
ममैव पूजा विहिता नैरादौ तदनन्तरम् । लिङ्गपूजापि विहिता सा पूजा सुलभा यतः ॥ ४५ ॥
मत्स्वरूपपरिज्ञानं अशक्यमिति निश्चयात् । तल्लिङ्गपूजनं तावदुक्तं लोकोपकारकम् ४६ ॥
मल्लिङ्गपूजनं तावत् यावज्जीवं विशेषतः । कर्तव्यमतियत्नेन शुचिभूतेन भस्मना ४७ ॥
यावज्जीवश्रुतिः सेयमग्निहोत्रादिकर्मणाम् । शिवलिङ्गार्चनस्यापि समाना न विशेषतः ॥ ४८ ॥
सायं प्रातः श्रुतिस्तत्र भिन्नकालनियामिका । अनुपादेयमन्त्राङ्गं कालोऽपीत्यवधारितः ॥ ४९ ॥
तथा च विधिशक्तिश्च कालमादाय केवलम् । तत्र पर्यवसन्नैव सायंप्रातरिति श्रुतिः ॥ ५० ॥
प्रकृते लिङ्गपूजायां श्रुतिः कालनियामिका । नास्तीति सर्वदा कार्या सा णमुलप्रत्ययात्मिका ॥
न णमुल्प्रत्ययस्यास्य सङ्कोचाय श्रुतिस्तथा । असंकुचित एवायं प्रत्ययः स्वार्थबाधकः ॥ ५२ ॥
विहिता प्रत्ययेनैवं शिवपूजनभावना । तया भावनया तावत् करणं पूजनं मतम् ॥ ५३ ॥
तत्राधिकरणं किं वा का तद्बोधकसप्तमी । अधिकारी च कस्तस्मिन् कथमंशोऽपि चिन्तितः ॥
शिवलिङ्गे विल्वपत्रैः पवित्रैः स्वार्जितैरपि । श्रुतिप्रसा भावनापि [1]पूर्णांशा ममभूत शिवे ॥
श्रुतिर्यथास्ति सर्वेभ्यः कामेभ्य इति तत्र सा । दर्शादौ तद्वदत्रापि कामश्रुतिरविच्युता । ५६ ॥
फलसाधनभूतत्वात् करणं शिवपूजनम् । शिवार्चनेन लभ्यन्ते सर्वे कामा इति श्रुतेः ॥ ५७ ॥
इयं शिवार्चनेनेति तृतीयाकरणं परम् । शिवपूजनमेवेति शक्त्या बोधयति स्वयम् ॥ ५८ ॥
तस्याः शक्तिस्तु नान्यत्र ओमित्यस्यैव निश्चिता । करणे शक्ति[2]रेवंचेत् तदेव करणं स्मृतम् ॥
यज्जुहोति तदित्यादि श्रुतिरायतने यथा । शक्त्या तथैव प्रकृते लिङ्गे कुर्यादिति श्रुतिः ॥ ६० ॥
तथा च सप्तमी सेयं लिङ्गमायतनं परम् । ज्ञेयं शिवार्चनस्यापि तत्र शक्ता वदत्यपि ॥ ६१ ॥
फलकामोऽधिकारीति ज्योतिष्टोमविनिश्चयात् । प्रकृतेऽप्यधिकारीति फलकाम इति श्रुतः । ६२॥

---

1 पूर्णांशा D. 2 रेवं च C D कोशयोः ।

गुणोत्तरान्वेषणाय प्रवृत्ता सापि भावना । बिल्वपत्रैरिति श्रुत्या तानि जग्राह सादरम् ॥ ६३ ॥
पत्न्यवेक्षितमित्यत्र संस्कारः पत्न्यवेक्षणम् । स्वानीतत्वं च संस्कारो बिल्वपत्रेषु निश्चितः ॥६४॥
[1] प्रयोगे प्रथमे तावत् संस्कारोऽयमिति श्रुतः । आज्यवन्न द्वितीया हि प्रयोगे नियमस्तु न ॥
आधानभावनानाञ्च कर्तृरूपावगाहिनी । अनन्धकर्तृसापेक्षा प्रयोगे प्रथमा मता ॥ ६६ ॥
द्वितीयादिप्रयोगेषु दैवादन्धत्वसंभवे । आज्यावेक्षणसंस्कारलोपं गृह्णाति भावना ॥ ६७ ॥
एवं शिवार्चनेऽप्याद्ये स्वानीतत्वावगाहिनी । प्रयोगे भावना तत्त्वं द्वितीया नावगाहते ॥ ६८ ॥
यदि कर्ता स्वयं दक्षः तत्पत्रानयने सदा । तद्गृह्णातीति नियमो न द्वितीयादिषु ध्रुवम् ॥ ६९ ॥
न पङ्गुरप्यधिकृतः प्रयोगे प्रथमे यतः । प्रदक्षिणक्रमणवत् गृह्णात्यत्रापि भावना ॥ ७० ॥
एवं चाद्यप्रयोगेऽपि विशेषवचनैः परम् । पंग्वादीनपि गृह्णाति शिवपूजनभावना ॥ ७१ ॥
सोमाभावे तु पूतीकान् विशेषवचनेन सा । गृह्णाति भावना तद्वत् अन्यद्गृह्णाति भावना ।७२॥
आद्यप्रयोगे गृह्णाति बिल्वपत्राणि भावना । तदभावे तु तत्तुल्यं पत्रं गृह्णाति भावना ॥ ७३ ॥
अत्राङ्गानि बहून्येव श्रुतानि विविधान्यपि । नित्यं चमसवत् किञ्चित् अङ्गमस्ति शिवार्चने ॥
गोदोहनादितुल्यानि काम्याङ्गान्यपि कानिचित् । तानि नित्याङ्गलोपाय प्रवृत्तानि कथञ्चन ॥
गोदोहनप्रयोगे किं चमसस्याङ्गता मता । एवं नित्याङ्गलोपेऽपि प्रयोगस्याविशेषतः ॥ ७६ ॥
भस्मत्रिपुण्ड्रकरणं सन्निपत्योपकारकम् । शिवलिङ्गं च रुद्राक्षधारणं च श्रुतिश्रुतम् ॥ ७७ ॥
नवनीताभ्यञ्जनादितुल्यं भस्मादिधारणम् । तस्य प्रतिनिधिर्नेति तत्प्रयोगेऽप्यपेक्षते ॥ ७८ ॥
कर्माङ्गत्वेन विज्ञातं भस्मधारणमित्यतः । तत्त्यागे नाधिकारी स्यात् स्मार्ते वा वैदिकेऽपि वा ॥
शिवमन्त्रजपे योग्यो भस्मधारी भवेन्नरः । धृते भस्मनि गायत्री गुरुणाप्युपदिश्यते ॥ ८० ॥
अग्निकार्येण सम्पन्ने पूर्वं भस्मन्यतः परम् । धृते भस्मनि गायत्री जपयोग्योपजायते ॥ ८१ ॥
गायत्री शिवमन्त्रत्वात् भस्मधारणभावना । [2]सा गृह्णात्विति पश्यन्ति तद्गृहीताऽपि तिष्ठति ॥
रुद्राक्षधारणं तद्वत् तां शिवार्चनभावनाम् । स्वानुग्रहार्थं पश्यन्ती भावनां प्रचलिष्यति॥ ८३ ॥
पूर्वाङ्गान्युत्तराङ्गानि तानि तावत्परस्परम् । महापूर्वोपयुक्तानि स्वापूर्वद्वारसंभवात् ॥ ८४ ॥
तदपूर्वफलं यावत् तावदेवोपतिष्ठति । फले जाते न तस्यापि कृत्यमित्यवधारितम् ॥ ८५ ॥

---

1 स्वानीतान्येव तानीति संस्कारापेक्षयाऽपि सा स्वानीतत्वाद्यसंस्कारं सा गृह्णात्येव सादरम् ॥
इत्यधिकः श्लोकोऽत्र C कोशे उपलभ्यते D कोशे च ।

2 सा गृह्णाति विपश्यन्ति C मां गृह्णात्विति D

सर्वेभ्य एव कामेभ्यः शिवपूजनमित्यपि । प्रयोगभेदमाश्रित्य तद्भावेन तत्समम् ॥ ८६ ॥
न ह्येकेन प्रयोगेन फलानि विविधान्यपि । अतोऽर्थवाद एवायं नानाविधफलश्रुतिः ॥ ८७ ॥
आवृत्तिश्च प्रयोगानां बहूनि विविधान्यपि । फलानि विविधान्येव भविष्यन्तीति निश्चयः ॥
जाधिनीवद् बिल्वपत्रमन्यच्चार्चनसाधनम् । भवत्यतो लौकिकं च तदङ्गमिति निश्चितम् ॥
तत्सर्वाङ्गोपसंहारं सर्वथा फलभावना । स्वापेक्षितं गृहीत्वैव संपूर्णा फलमिच्छति ॥ ९० ॥
शुचितत्कालजीवित्वनिद्रालस्यादिवर्जनम् । गृह्णाति भावना तावत् तदङ्गमिति निश्चयात् ॥ ९१ ॥
विश्वासोऽप्यङ्गमेवात्र शिवपूजनबोधके । वाक्ये तदर्थवादोऽपि प्ररोचक इति स्मृतेः ॥ ९२ ॥
शिवार्चनेऽपि [1] वेदस्यावेदस्य नियमात् तयोः । तदङ्गत्वमिति ज्ञातं भावनानुगृहीतयोः ॥
शिवपूजोपकरणं भस्मसंस्कृतमेव तत् । गृहीतः सोऽपि संस्कारः तया भावनया हि तत् ॥ ९४ ॥
अखण्डभावना सेयं प्रयोगस्य विशेषतः । भावनान्तरसम्पन्ना तत्तदङ्गावगाहनात् ॥ ९५ ॥
तत्प्रयोगबहिर्भूतान्यङ्गानि विविधान्यपि । गृह्णाति भावना सैव बृहस्पतिसवं यथा ॥ ९६ ॥
तथा च शिवपूजायां लिङ्गमाहवनीयवत् । जलादिवत् शांभवोऽपि पूजाधिकरणं क्वचित् ॥ ९७ ॥
लिङ्गान्यपि विचित्राणि नार्मदादीनि कानिचित् । तेषु पूजा विशेषेण तत्फलायोपकल्पते ॥
रेवाजलेन रेवायां रेवातीरसमुद्भवैः । दूर्वाङ्कुरैर्वा संपूज्य मुक्तो भवति मानवः ॥ ९९ ॥
रेवातीरसमुत्पन्नाः तरवोऽपि महावने । लिङ्गरूपाः ततस्तेषु पूजनं भुक्तिमुक्तिदम् ॥ १०० ॥
लिङ्गानि सन्ति यावन्ति त्रैलोक्ये वरवर्णिनि । तानि सर्वाणि लिङ्गानि मम प्रियकराणि हि ॥
मद्भक्तो यत्र सद्भक्त्या मम ध्यानं करिष्यति । तदेव लिङ्गं मद्रूपं अन्यरूपं न सर्वथा ॥१०२॥
मन्त्रैरधिष्ठिते द्रव्यैः पूजा तावद्विधीयते । अधिष्ठानं देवतायाः पवित्रं मन्त्रसाधिते ॥ १०३ ॥
तथा च सिद्धलिङ्गानि नार्मदादीनि केवलम् । तत्र प्रतिष्ठाविधयः प्रसरन्ति न सर्वथा ॥ १०४ ॥
सिद्धक्षेत्राणि यावन्ति तत्र लिङ्गानि यानि च । तेषु प्रतिष्ठाविधयः प्रसरन्ति न सर्वथा ॥
सिद्धक्षेत्रोत्तमा काशी तत्र लिङ्गानि यानि तु । तानि लिङ्गानि सर्वाणि सिद्धानीत्यवगम्यते ॥
रेवायां यानि लिङ्गानि तानि लिङ्गानि शैलजे । सिद्धलिङ्गानि सर्वाणि तानि पूज्यानि सर्वथा ॥
त्रियंबकाख्यं यल्लिङ्गं गोदामूले मनोहरम् । तत् सिद्धलिङ्गं तत्पूजा भुक्तिमुक्तिप्रदायिनी ॥
[2] महाबलाभिधं लिङ्गं सिद्धलिङ्गमिति श्रुतम् । कोटिशङ्करलिङ्गं च [3] सिद्धलिङ्गमिति श्रुतम् ॥१०९॥
तीर्थेशलिङ्गमप्येवं सिद्धलिङ्गमिति श्रुतम् । सङ्गमेश्वरलिङ्गं च सिद्धलिङ्गमिति स्मृतम् ॥ ११० ॥

1 वेदः स्याद्वेदश्च D  2 अद्रीबलाभिधं C  3 संज्ञं च C, D

श्रीशैले यानि लिङ्गानि तानि लिङ्गानि शैलजे । सिद्धलिङ्गानि सर्वाणि तत्पूजा सर्वसिद्धिदा ॥

अशीतियोजनायामः श्रीशैलः कमलानने । स तु लिङ्गमयः सर्वः सर्वतीर्थमयोऽपि सः ॥

शिलादेन तपस्तप्तं शिवगङ्गातटे शिवे । तदुग्रतपसा सर्वं सकम्पमवनीतलम् ॥ ११३ ॥

देवाः सर्वे सकम्पाश्च मुनयश्चारणा अपि । तादृशेनोग्रतपसा दृष्टोऽस्मि कमलानने ॥

ततः प्रत्यक्षतां प्राप्तः प्रीतस्तत्तपसा शिवे । मयि प्रसन्ने देवेशे ययाचे स वरं वरम् ॥

शिलादः —

नमो नमस्ते गिरिजासहाय नमो नमस्ते सुकृतस्वरूप ।
नमो नमस्तेऽन्नपते महेश नमो नमस्तेऽस्तु नमो नमस्ते ॥ ११६ ॥

त्वत्पादाम्बुजभक्तिर्मे निश्चला भवतु प्रभो । त्वमेव शरणं शम्भो गतिस्त्वं जगतां प्रभो ॥ ११७ ॥

कर्माण्यस्य फलोन्मुखानि भगवंस्त्वत्पादपद्मं यतो
दृष्टं दोषविवर्जितं सुखयुतं यावत्करोति स्वतः ।
तत्तावन्मुनिवृन्दमानसमनःपद्मप्रविष्टं प्रभो
तन्मे मानसपङ्कजे क्षणमपि स्वामिन् [1]प्रभो जायताम् ॥ ११८ ॥

वाजश्च मेऽस्तु प्रसवश्च मेऽस्तु त्वत्पूजया सा प्रयतिश्च मेऽस्तु ।
महेश्वरानुप्रसितिश्च मेऽस्तु धीतिश्च मेऽस्तु क्रतुरस्तु शम्भो ॥ ११९ ॥

स्वरश्च मेऽस्तु स्वरदेश शम्भो श्लोकश्च मेऽस्तु श्रुतिगीतकीर्ते ।
श्रावश्च मेऽस्तु श्रुतिरस्तु शम्भो शिवाभिधानश्रवणाय नित्यम् ॥ १२० ॥

ज्योतिश्च मेऽस्तु ज्वलनस्वरूप सुवश्च मेऽस्तु त्रिपुरासुरारे ।
प्राणश्च मे तावदपानयुक्तो व्यानश्च मेऽसुश्च तथैव चित्तम् ॥ १२१ ॥

आधीतं च तथा वाक्च मनश्चक्षुश्च मे प्रभो । श्रोत्रं दक्षो बलश्चौजः सहश्चायुश्च मे प्रभो ॥ १२२ ॥

जरा चात्मा च मे शंभो तनूः शर्म च वर्म च । अङ्गान्यस्थीनि भगवन् परूंषि च भवन्तु मे ॥

शरीराणि भवन्त्वीश तानि रम्याणि मे प्रभो । ज्यैष्ठ्यं च मेऽधिपत्यं च मन्युर्भामश्च मे प्रभो ॥

अमश्चांभश्च जेमा च महिमा वरिमा च मे । प्रथिमा चास्तु गौरीश वर्ष्मा च द्राघुया च मे ॥

वृद्धं वृद्धिश्च सत्यं च श्रद्धा चास्तु जगत्त्रये । धनं वशाऽस्त्विवपिश्चास्तु क्रीडा मोदश्च मे प्रभो ॥

जातं जनिष्यमाणं च सूक्तं मे सुकृतं च मे । वित्तं वेद्यं च भूतं च भविष्यच्च सुगं च मे ॥

सुपथं ऋद्धमृद्धिश्च क्लृप्तं क्लृप्तिश्च मे मतिः । सुमतिः शं मयश्चास्तु प्रियं चास्तु शिवं शुभे ॥

---

1 प्रभुदे D.

अनुकामश्च कामश्च शंभो सौमनसं च मे । भद्रं श्रेयश्च वस्यं च यशो मेऽस्तु जगत्त्रये ॥१२९॥
द्रविणं चास्तु यन्ता च धर्ता क्षेमश्च मे धृतिः । विश्वं महश्च संविच्च ज्ञात्रं सूश्च प्रसूश्च मे ॥
सीरं लय ऋतं चास्तु भगवन्नमृतं च मे । अयक्ष्मं चानामयं च जीवातुश्चापि मे सदा ॥
दीर्घायुत्वानमित्रे च सर्वदाऽप्यभयं च मे । सुगं च शयनं सूषा सुदिनं चास्तु मे सदा ॥१३२॥
ऊर्क्च मे सूनृता चास्तु पयश्चास्तु रसश्च मे । घृतं मधु च सग्धिश्च सपीतिश्च कृपिश्च मे ॥१३३॥
वृष्टिश्च जैत्रमौद्भिद्यं रयिश्चास्तु सदापि मे । रायः पुष्टं च पुष्टिश्च विभु च प्रभु च प्रभो ॥
बहु भूयश्च पूर्णं च तथा पूर्णतरं च मे । अक्षितिश्चास्तु भगवन् कूयवाश्च भवन्तु मे ॥ १३५ ॥
अन्नमन्नपते मेऽस्तु तेनास्त्वक्षुच्च मे प्रभो । व्रीहयश्च यवा माषाः तिला मुद्गाश्च मे शिव ॥
खल्वाश्च सन्तु गोधूमाः मसुराश्च प्रियङ्गवः । अणवः सन्तु मे नित्यं श्यामाकाः सन्तु मे प्रभो ॥
नीवाराद्याश्च मे सन्तु गृहे सर्वान्नकल्पकाः । अश्मा च मृत्तिका चास्तु गिरयः पर्वताश्च मे ॥
सिकताः सन्तु भगवन् मे वनस्पतयश्च मे । हिरण्यमस्त्वयश्चास्तु तथा सीसं त्रपुश्च मे ॥ १३९ ॥
श्यामं लोहं च मेऽग्निश्च गृहे तिष्ठन्तु सर्वदा । आपश्च वीरुधः सन्तु तथैवौषधयोऽपि मे ॥१४०॥
कृष्टपच्यं च बहुधा मम तिष्ठतु वेश्मनि । तथैवाकृष्टपच्यं च वनसंभवमस्तु मे ॥ १४१ ॥
गोमहिष्यादयो ग्राम्याः पशवः सन्तु मे गृहे । सदा यज्ञेन कल्पन्तां आरण्याः पशवश्च मे ॥
वित्तं वित्तिश्च भूतं च भूतिश्च वसतिर्वसु । शिवपूजादिकं कर्म शक्तिश्च शिवपूजने ॥ १४३ ॥
एसश्चास्तु ममेतिश्च गतिश्चास्तु शिवार्चने । अग्निरिन्द्रश्च सोमश्च सविता च सरस्वती ॥ १४४ ॥
पूषा बृहस्पतिर्मित्रः त्वष्टा च वरुणश्च मे । धाता च विष्णुरप्यस्तु गृहकर्मकरस्तु मे ॥ १४५ ॥
अश्विनौ च ममेशान तिष्ठतां सर्वदा गृहे । मरुतश्च प्रसर्पन्तु विश्वेदेवाश्च मे गृहे ॥ १४६ ॥
त्वदाज्ञावशगानेतान् अग्नीन्द्रादिसुरान् शिव । मद्वशान् कुरु विश्वेश दक्षान् मद्गृहकर्मणि ॥
अन्तरिक्षं च पृथिवी द्यौरप्यस्तु दिशश्च मे । मूर्धा प्रजापतिश्चास्तु मे भवत्कृपया भव ॥१४८॥
अंशुश्च रश्मिरप्यस्तु मे दाभ्योऽधिपतिश्च मे । उपांशुरन्तर्यामश्च मम स्यादैन्द्रवायवः ॥ १४९ ॥
मे मैत्रावरुणश्चास्तु तथैवास्तु ममाश्विनः । प्रतिप्रस्थानशुक्रौ च मन्थी चाग्रयणश्च मे ॥ १५० ॥
वैश्वदेवो ध्रुवश्चापि तथा वैश्वानरश्च मे । ऋतुग्रहाश्च मे सन्तु सातिग्राह्याश्च शङ्कर ॥ १५१ ॥
ऐन्द्राग्ना वैश्वदेवश्च ग्रहाः सोमोपयोगिनः । तथा मरुत्वतीयाश्च ग्रहाः सन्तु सदाऽपि मे ॥
माहेन्द्रश्च तथाऽऽदित्यः सावित्रश्चास्तु मे ग्रहः । सारस्वतश्च पौष्णश्च तथा पात्नीवतश्च मे ॥
सहारीयोजनश्चास्तु ममेध्मश्चास्तु सर्वथा । बर्हिर्वेदिर्धिष्णियाश्च स्रुवश्च चमसाश्च मे ॥ १५४ ॥

ग्रावाणः स्वरवः सन्तु तथैवोपरवाश्च मे । ते मे धिषवणे सन्तु ते द्रोणकलशश्च मे ॥ १५५ ॥
वायव्यानि च मे सन्तु पूतभृच्चास्तु मे प्रभो । तथैवाधवनीयश्च तद्वाग्नीध्रं च मे प्रभो ॥ १५६ ॥
[1] हविर्धानं च मे स्वामिन् गृहाश्चैव सदश्च मे । पुरोडाशाश्च मे स्वामिन् पचताश्च भवन्तु मे ॥
तथैवावभृथः सन्तु स्वगाकारश्च मे प्रभो । अग्निर्घर्मश्च मेऽर्कश्च सूर्यः प्राणश्च मे प्रभो ॥ १५८ ॥
अश्वमेधश्च पृथिवी द्यौरप्यदितिरस्तु मे । मे शक्वरीरंगुलयो दिशश्च विदिशश्च मे ॥ १५९ ॥
तथा यज्ञेन कल्पन्तां ऋक् च साम च मे प्रभो । सोमो यजुश्च दीक्षा च तपश्चास्तु ऋतुश्च मे ॥
तथाऽहोरात्रयोर्वृष्ट्या व्रतं च नियमात्मकम् । बृहद्रथन्तरे यज्ञे कल्पेतां फाललोचन ॥ १६१ ॥
गर्भा वत्साश्च भगवन् त्र्यविश्चास्तु महेश्वर । त्र्यवी च मे दित्यवाट् च दित्यौही च सदाशिव ॥
पञ्चाविश्च महादेव पञ्चावी च त्रिलोचन । त्रिवत्सश्च त्रिवत्सा च तुर्यवाडस्तु मे प्रभो ॥ १६३ ॥
तुर्यौही पष्टवाट् चास्तु पष्ठौही च महेश्वर । उक्षा वशा च ऋषभो वेहोऽनड्वांस्तथास्तु मे ॥
धेनुरप्यस्तु भगवन् क्षीरायातिमनोहरा । यज्ञेन कल्पतामायुः प्राणो यज्ञेन कल्पताम् ॥ १६५ ॥
अपानोऽपि स यज्ञेन व्यानेन सह कल्पताम् । चक्षुः श्रोत्रं च यज्ञेन मनसा सह कल्पताम् ॥
वागात्मापि तथा यज्ञोऽप्येवं यज्ञेन कल्पताम् । त्वदधीनमिदं सर्वं तवेति प्रार्थितं मया ॥

सर्वस्वतन्त्रोऽसि महेश यस्मात् त्वमेव दाताऽसि तवापि देयाः ।
उक्ताश्च तावच्चमकेन देहि तानस्वतन्त्रान् शिवपूजकाय ॥ १६८ ॥

तेषां प्रदेयत्वविनिश्चयेन तान् देहि मह्यं शिवपूजकाय ।
ते तावदस्मद्गृहकर्मयोग्याः योग्येन योग्यस्य किलान्वयोऽपि ॥ १६९ ॥

एते पदार्थाः प्रथितास्त्वदीयाः ते शर्व देयास्तव दानयोग्याः ।
अहं शिवाराधनसक्तचित्तः को वा मदन्योऽस्ति स दानयोग्यः ॥ १७० ॥

दातापि देयं सति दानयोग्ये विहाय कस्मै प्रददाति भक्त्या ।
विद्वानतो देहि महेश तान् मे लोके मदन्यस्तु न कोऽपि पात्रम् ॥ १७१ ॥

त्वद्दत्तमेतादृशभाग्यमेत्य त्वत्पादपूजानिरतो भवामि ।
प्रमादलेशोऽपि तदा न भावी भवे भवे त्वत्पदपूजकस्य ॥ १७२ ॥

मन्ये शङ्कर देवदेव [2] भवतो दातृत्वमव्याहतं
तेनाग्निप्रमुखान् सुरानपि सदा तानस्वतन्त्रान् स्वतः ।

---

1 इतः परमर्धत्रयं D कोशे नोपलभ्यते । त्रुटितमिव । 2 तव ते C

मह्यं देहि मदिच्छया परममी कुर्वन्तु कृत्यानि मे
शक्तिर्यस्य यथा तथाऽस्ति भगवन् सर्वस्वतन्त्र प्रभो ॥ १७३ ॥

[1] महाप्रभुः शंभुरुमासहायो दयामयो भूतिमयोऽपि दाता ।
माता पिता मे सहितप्रदाता धाता विधाता [2] न संदृक् (?) ॥ १७४ ॥

देयत्वेन विनिश्चितास्तव सुराः सर्वेऽपि वेदैरमी
दाता त्वं तव भाग्यमप्यविलयं भूयः समुज्जृंभते ।
अस्माकं तु महाप्रभुः भव भवानेवेति चित्तं मुहुः
स्वानन्दाम्बुधिवीचिकाऽतिचपला लीलाविलासास्पदम् ॥ १७५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शिलादकृततपोवर्णनं शिलादकृत चमकविधानवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥

—— o ——

## अथ पञ्चत्रिंशोऽध्यायः [3] ।

[4] नन्दिकेशः —

इति तत्प्रार्थितान् सर्वान् चमकप्रतिपादितान् । वरान् ददौ महादाता स वदान्यशिरोमणिः ॥

ततः परं तु तत्रैव कुम्भयोनिं तपोनिधिम् । शिवध्यानसुधाधारापरिवीतं ददर्श सः ॥ २ ॥

सोऽपि दृष्ट्वा महादेवं साम्बं सर्वसुरोत्तमम् । अतिसन्तुष्टहृदयः तुष्टाव परमेश्वरम् ॥ ३ ॥

अगस्त्यः —

भर्गो देवस्य सवितुर्वरेण्यमिह धीमहि । स भर्गो भगवान् शम्भुः धियो यो नः प्रचोदयात् ॥

गणगणपतये नमो नमः सुरगणपतये नमो नमः ।
अगपतिपतये नमो नमः पशुपतिपतये नमो नमः ॥ ५ ॥

नमस्तेऽस्तु गणेशाय महादेवसुताय ते । विघ्नान्धकारसूर्याय ब्रह्मणां ब्रह्मणस्पते ॥ ६ ॥

नमामि ढुण्ढिं मदरिक्तगण्डं कृपाघषण्डं विधृतार्धमुण्डम् ।
स्वभक्तविघ्नार्तिहरप्रचण्डं परात्परं यन्महतो महान्तम् ॥ ७ ॥

गणाधिपं गण्डतलालिकोटिकिरीटकोटिध्वजनिर्जिताम्बुधेः ।
संसेविताङ्घ्रिं प्रणमामि सर्वदा कविं कवीनामुपमश्रवस्तमम् ॥ ८ ॥

---

1 अयं श्लोकः C कोशे नोपलभ्यते । 2 परमोऽत्र सन्दृक् E

3 अयमध्यायः वेदपादस्तवगर्भितः 4 राजोवाच C

सिद्धिं दातुं बुद्धिं वृद्धिं शक्तं नित्यं गौरीपुत्रम् । स्कन्दं वन्दे वन्द्यं वेदैः सुब्रह्मण्यों सुब्रह्मण्योम् ॥
तारकासुरसंहारं विहारचतुरं परम् । वन्दे वन्दारुमन्दारं कुमारं पुष्करस्रजम् ॥ १० ॥
अकस्मादस्मदीयेन भाग्येन सुखदेव मे । स्मरारातिस्मृतिस्तावदभ्रात् वृष्टिरिवाजनि ॥ ११ ॥

ये वैदिकस्मार्तविधिप्रयुक्तक्रियाजलक्षालनपूतचित्ताः ।
विभूतिरुद्राक्षविभूषणास्ते शमेन शान्ताः शिवमाचरन्ति ॥ १२ ॥

सुरापारशिरोरत्नप्रभानीराजिताय ते । महादेवाय शर्वाय सदसस्पतये नमः ॥ १३ ॥
भूतजातसमुत्पत्तिहेतुभूताय सर्वदा । सर्वदेवाभिवन्द्याय भूतानां पतये नमः ॥ १४ ॥
सर्वामराधिदेवाय वेदाराध्यपदाय ते । देवोत्तमोत्तमायाशु पशूनां पतये नमः ॥ १५ ॥
कालान्तकाय शर्वाय महामृत्युञ्जयाय च । भूतस्वर्गापवर्गाय जगतां पतये नमः ॥ १६ ॥
[1] नमस्त्रिलोकनाथाय नमः परतराय ते । नमः शान्ताय भगवन् अन्नानां पतये नमः ॥ १७ ॥
आर्यचित्तप्रविष्टाय प्रहृष्टाय सुरेष्वपि । प्रकृष्टायातिपुष्टाय पुष्टानां पतये नमः ॥ १८ ॥
महाभूताधिपतये भूतभीतिप्रदाय च । भूतिप्रदप्रभूताय दिशां च पतये नमः ॥ १९ ॥
विश्वमायाविदूराय विश्वविश्वप्रियाय च । विश्वेश्वराय सोमाय विश्वरूपाय वै नमः ॥ २० ॥
घोर तत्पुरुषेशान वामदेव सदाशिव । अविद्याध्वान्तसूर्याय सद्योजाताय वै नमः ॥ २१ ॥
नमो भर्गाय भीमाय भगनेत्रहराय ते । देवतासार्वभौमाय नमो रुद्राय मीढुषे ॥ २२ ॥
सहस्रशिरसे तुभ्यं सहस्रचरणाय च । नमः सहस्रहस्ताय सहस्राक्षाय मीढुषे ॥ २३ ॥
[2] फालभासुरनेत्राग्निसन्दग्धत्रिपुराय ते । नमः सुन्दररूपाय सुमृडीकाय मीढुषे ॥ २४ ॥
संसारघोररोगार्तिनिवारणकराय ते । नमस्तुभ्यमसपाढाय सहमानाय मीढुषे ॥ २५ ॥
समस्तवेदवेदान्तवन्दिवन्दितमव्ययम् । भव्यस्वरूपं तं वन्दे सदसस्पतिमद्भुतम् ॥ २६ ॥
सुरासुरगणाराध्यं दुराराध्यं दुरात्मनाम् । परमानन्ददं वन्दे सुगन्धिं पुष्टिवर्धनम् ॥ २७ ॥

तमेव भक्त्या हृदि भावयामो भवं भवानीरमणं भजामः ।
भवादिनामानि मुदा वदामो यतः प्रसूता जगतः प्रसूती ॥ २८ ॥
गौरीविहारप्रवरप्रजातस्वेदोदकामोदविजृम्भितेन ।
उमासहायः समयः स भूयः तोयेन जीवान् व्यचसर्ज भूम्याम् ॥ २९ ॥

---

1 मुनीन्द्रसुन्दरापारमनःपद्माश्रयाय च । त्रिणेत्राय नमस्तुभ्यं क्षेत्राणां पतये नमः इत्ययं श्लोको॰ ऽधिकः C D E कोशेषु । 2 अयं श्लोकः D. E कोशयोः नास्ति ।

य एव तावद्गिरिराजकन्याविन्यस्तहस्तस्तनमस्तहस्तः ।
स एव तावद्व्यचसर्ज तस्यां यदोषधीभिः पुरुषान् पशूंश्च ॥ ३० ॥
प्रदोषकालीनशिवार्चनेन यः सर्वदोषापहरो हरो मे ।
गौरीविहारादरतः ससर्ज यदेष भूतानि चराचराणि ॥ ३१ ॥
फालाक्षं दक्षयज्ञादिशिक्षादक्षाभिलक्षितम् । वन्दे देवं विरूपाक्षं अक्षरं परमं पदम् ॥ ३२ ॥
शिवप्रभावश्रवणोत्सुकाय शिवार्चनानन्दविजृंभिताय ।
शिवस्तवाख्यानविवर्धनाय शिव प्रजायै शिवमस्तु मह्यम् ॥ ३३ ॥
महाप्रभुः शम्भुरुमासहायो दयामयो भूतिमयो मयोऽपि ।
माता पिता मे स हितप्रदाता धाता विधाता परमोत संदृक् ॥ ३४ ॥
मङ्गलालङ्कृतार्धाङ्गं अर्धेन्दुललितालकम् । अर्धनारीश्वरं वन्दे पुरुषं कृष्णपिङ्गलम् ॥ ३५ ॥
जगन्निर्माणचातुर्यमर्यादासेतुसेवितम् । वन्दे शान्तमुमाकान्तं जगतस्तस्थुषस्पतिम् ॥ ३६ ॥
पुरादिकामरारातिसंहारचतुरं परम् । परात् परतरं वन्दे जेतारमपराजितम् ॥ ३७ ॥
तं वन्दे सच्चिदानन्दमद्वैतमतिसुन्दरम् । लीलया विदधे योयं इमानि त्रीणि विष्टपा ॥ ३८ ॥
तं वन्दे नित्यसर्वज्ञं नित्यविज्ञानसागरम् । यतो यजूंपि जातानि ऋचः सामानि जज्ञिरे ॥
भवन्तमेव सततं भगवन्तमुमापतिम् । स्मृत्वा तरति संसारं यो विश्वाऽभिविपश्यति ॥ ४० ॥
सर्वामरनियन्तारं शङ्करं लोकशङ्करम् । भज यस्य प्रसादेन व्याप्य नारायणः स्थितः ॥ ४१ ॥
तमेव वन्दे देवेशं महेशं शरणं गतः । यदाज्ञया जगद् धाता यथापूर्वमकल्पयत् ॥ ४२ ॥
स्मरारिं तमहं वन्दे यल्लिङ्गं मङ्गलप्रदम् । पूजयन्ति प्रपन्नार्थैरिन्द्रज्येष्ठा मरुद्गणाः ॥ ४३ ॥
नमामि तमुमार्धाङ्गं शङ्गं मङ्गलदायकम् । यमाराध्य सुखं प्रापुः देवासः पूषरातयः ॥ ४४ ॥
नमामि तं महारुद्रं शाम्भवाश्विद्धनं परम् । सततं वेदवेदान्तैः सुज्ञानाना उपासते ॥ ४५ ॥
नमामि तां परां गौरीं कुचकुङ्कुमरूषिताम् । स्मृत्याप्यानन्ददामाशु या ते रुद्र शिवा तनूः ॥
नमस्ते करुणापारसागराय स्मराय च । नमः शान्तिरसायापि नमस्ते रुद्रमन्यवे ॥ ४७ ॥
महाप्रलयकालाग्निनिभशूलाय ते नमः । नमः परशवे तावत् उतोत इषवे नमः ॥ ४८ ॥
फणिराजमहाकायज्याज्योत्स्नामण्डिताय च । महामेरुस्वरूपाय नमस्ते अस्तु धन्वने ॥ ४९ ॥
रक्तकङ्कणभाभारभासुराभ्यां भव प्रभो । भक्ताभीष्टप्रदाभ्यां च बाहुभ्यामुत ते नमः ॥ ५० ॥
सुरासुरादिकापारसंहारकरणान्यपि । घोराण्यपाररूपाणि तस्मात्तेभ्योऽकरं नमः ॥ ५१ ॥

मां मामकधिया दीनं तावकं करुणाकर । कुरु शङ्कर संपन्नं दरिद्रं नीललोहित ॥ ५२ ॥
शङ्कराग्रेसराराध्यं शिवाराधनसाधनम् । रक्ष रक्ष विरूपाक्ष नान्यं विन्दामि राधसे ॥ ५३ ॥
दाराणां मम पुत्राणां पौत्रादीनां विशेषतः । त्वत्पादुकाराधकानां अस्माकमविता भव ॥ ५४ ॥
अतः परमुमाकान्त दुर्दशां न सहामहे । तां दुर्दशां हरास्माकं भूरिदां भूरि देहि नः ॥ ५५ ॥
शिवपूजनसक्तेभ्यः शाम्भवेभ्यः प्रतिक्षणम् । पवित्रं गात्रमस्मभ्यं वसु स्पार्हं तदाभर ॥ ५६ ॥
भावेभ्यो भवभीरुभ्यो भस्माङ्गेभ्यः प्रयत्नतः । भवानीरमण स्वामिन् इपंस्तोतृभ्य आभर ॥ ५७ ॥
सर्वमोहविनाशाय सर्वाभीष्टद शङ्कर । प्रयच्छ शाङ्करीं विद्यां राया विश्वपुषा सह ॥ ५८ ॥
शिवपूजासाधनानां बिल्वानामार्जनाय च । तथा शिवगणामार्थं बलं धेहि तनूषु नः ॥ ५९ ॥
शिवपूजनसामग्रीविरहादेव दुःखिनः । हृद्रोगं मम सूर्येश हरिमाणं च नाशय ॥ ६० ॥
शिवद्रोहरता एव शिवभक्तपराङ्मुखाः । तान् शिवाचाररहितान् विबाधस्व महाम्भसि ॥ ६१ ॥
अनन्यशरणानस्मान् त्र्यक्ष दाक्षायणीप्रिय । कटाक्षेण विरूपाक्ष रक्ष णो ब्रह्मणस्पते ॥ ६२ ॥
गौरीपते पिता माता दाता त्राता विशेषतः । त्वमस्माकं धनं भाग्यं उत भ्रातोऽत नः सखा ॥
स्तन्यपानादिसमये न कृतं शिवपूजनम् । अन्यच्च तत् क्षमस्वेश यन्मया दुष्कृतं कृतम् ॥ ६४ ॥
कर्पूरपूरनीहार गिरिसुन्दर विग्रहम् । गिरिजानुग्रहानुग्रं गाये त्वां मनसा गिरा ॥ ६५ ॥
सोऽयं देवो वरोऽस्मभ्यं वयं लिङ्गं समर्चितम् । बिल्वादिसाधनैर्दिव्यैः पश्येम शरदः शतम् ॥
शिवलिङ्गार्चनोद्योगमहोत्सवसमन्विताः । सर्वसौभाग्यसंपन्ना जीवेम शरदः शतम् ॥ ६७ ॥
गौरीविहारश्रीपुञ्जमञ्जुशिञ्जितमञ्जुलम् । श्रीकालकालमालोक्य नन्दाम शरदः शतम् ॥ ६८ ॥
उमासहायं सदयं प्रसन्नहृदयं हृदि । आनन्दं मुहुरालोक्य मोदाम शरदः शतम् ॥ ६९ ॥
प्रसीद भगवन् शंभो भवत्करुणया वयम् । निर्भयाः शांभवा एव भवाम शरदः शतम् ॥ ७० ॥
हारापारकथामेव संसाराब्धिभयक्षयम् । कर्तुमत्युद्यताः शृणवाम शरदः शतम् ॥ ७१ ॥
शिव शङ्कर गौरीश महादेवान्तकान्तक । शूलिन् इत्यादिनामानि प्रब्रवाम शरदः शतम् ॥७२॥
अपमृत्युमहामृत्युमहारोगकुलैरपि । आधिभिर्व्याधिभिः नित्यं अजीताः स्याम शरदः शतम् ॥
गौरीकुचगिरिस्फारकाश्मीररसरूपितम् । सदा चाङ्गेषु पश्यामि युवानं विश्पतिं कविम् ॥ ७४ ॥
गौरीमनोहरस्मेरविलोकनविशारदम् । दृष्ट्वा हृष्टोऽस्मि तं साम्बं सुभासं शुक्रशोचिषम् ॥ ७५ ॥
अपारासारसंसारसंभवभवविनाशकः । स्मृतः स्मरहरः शूरो नीलग्रीवो विलोहितः ॥ ७६ ॥
स्मृतः स्तुतः श्रुतो ध्यातः पूजितो वा सकृन्मुदा । मुक्तिप्रदो महादेवः तुविग्रीवो अनामयः ॥

रुद्रवीणागानलोललीलया सामकल्पकः । सामगानप्रियः सोऽयं उपास्मै गायता नरः ॥ ७८ ॥
रुद्रसूक्तप्रियो देवो रुद्राध्यायप्रियः शिवः । अतस्तैरखिलैर्नूनं एष विप्रैरभिष्टुतः ॥ ७९ ॥
शिवार्चनादयो धर्माः चित्त शङ्करकल्पिताः । अतो भज विरूपाक्षं अध्यक्षं धर्मणामिमम् ॥ ८० ॥
प्रणमन्ति सुराः सर्वे प्रणतं शिवसन्निधौ । अतः कुर्मो नमस्कारान् रुद्राय स्थिरधन्वने ॥ ८१ ॥
रुद्राध्यायादिभिर्या या नमस्या प्रतिपादिता । सा पिनाकिनमायाति नमस्याकल्मलीकिनम् ॥८२॥
नेत्राम्भोरुह ते कृत्यं हितमद्याधुनोच्यते । पश्य मामक पश्येशं भ्राजमानं हिरण्मयम् ॥ ८३ ॥
शिवनामसुधाधारां घोरसंसारहारिणीम् । अन्तःकरणपात्रेण पातं गौराविवेरिणी ॥ ८४ ॥
शिवनिर्माल्यमाल्यानि सम्यगाघ्राय नासिके । शाम्भवेभ्योऽधुना नित्यं अस्मभ्यं शर्म यच्छतम् ॥
रसने मधुरापाररसास्वादनतत्परे । शिवनामरसं ब्रूहि जयतामिव दुन्दुभिः ॥ ८६ ॥
रे रे चित्तचकोर त्वं जहि दुःखमतः परम् । शिवनामसुधाधारां गौरो न तृषितः पिब ॥ ८७ ॥
रे रे मनश्चञ्चरीक शिवपादाम्बुजं मुहुः । गाढमालिङ्ग [1]मच्चित्त योषा जारमिव प्रियम् ॥

महार्हरत्नाकरचारुमेरुभूरिप्रभाभासुरभूषणाय ।
महेश्वरायातिमनोहराय महो महीं सुष्टुतिमीरयामि ॥ ८९ ॥

महेश्वरातिदुःसहामितातिगर्भवेदना समाकुलानपारपापसङ्घसङ्कुलानिमान् ।
अवाव मामवाव मामुमासहाय कालहन् अदृषणोव सोम हे मृशस्व शूर राधसे ॥ ९० ॥

भजेम कामदं मुदा हृदि प्रविष्टमष्टधा निरन्तरायमन्तरायनाशहेतुसाधकम् ।
अनर्गलप्रवाहसृष्टिकारणं सभापतिः स नो ददातु तं रयिं रयिं पिशङ्गसन्दृशम् ॥ ९१ ॥

नमोऽन्धकासुरादिसर्वशत्रुनाशहेतवे सुराधिकाय चित्तमेतदिन्दुखण्डमौलये ।
भयापहाय देयमेव बिल्वपल्लवामलं न यस्य दृश्यते सखा न हीयते कदाचन ॥ ९२ ॥

अहो महादेव महानुभाव शुभस्वभावानुपमप्रभाव ।
भवोद्भवानुद्भव भव्यभाव भवे भवे नातिभवे भवस्व माम् ॥ ९३ ॥

महाघकोटिकूटकोटिदावपावकानलान् अपारकामवञ्चितानुदारकामलोलुपान् ।
अनाथनाथ विश्वनाथ तानवाव तावकान् अदृषणोऽव सोमहन् मृशस्व शूर राधसे ॥

मन्दारकुन्दादिमरन्दधारामत्तालिमालाकुलमालिकाभिः ।
समर्चयामि स्तुतिभिर्गिरीशं अषाढमुग्रं सहमानमाभिः ॥ ९५ ॥

---

1 निःसङ्गो CDE कोशेषु ।

नमो नमस्ते गिरिराजराजकुमारिकासुन्दरकामुकाय ।
नमो नमस्तेऽस्तु पुनर्नमस्ते नमो जघन्याय च बुध्नियाय ॥ ९६ ॥

तस्मै नमः सर्वगुणार्णवाय सर्वामराराधितपादुकाय ।
गौरीसमेताय बहुप्रजेयं यतः प्रसूता जगतः प्रसूती ॥ ९७ ॥

तस्मै नमो मङ्गलमङ्गलाय श्रीमङ्गलालङ्कृतविग्रहाय ।
वेदान्तसंघातसमाश्रयाय यस्मात् परं नापरमस्ति किञ्चित् ॥ ९८ ॥

सुधाकरापारकरप्रसारविहारताराकरहारभार ।
नमो नमस्तेऽस्तु नमो नमस्ते यस्मिन्निदं सञ्च विचैति सर्वम् ॥ ९९ ॥

हिरण्यरूपं च हिरण्यबाहुं हिरण्यनाथं च हिरण्यवर्णम् ।
नमामि फालस्फुरदग्निजालं हिरण्यदं तं शुचिवर्णमारात् ॥ १०० ॥

सूक्ष्मातिसूक्ष्माद्भुतविग्रहाय महोन्नतात्युन्नतमन्नुताय ।
नमो नमस्ते श्रुतिमन्नुत त्वं अणोरणीयान् महतो महीयान् ॥ १०१ ॥

न केवलं पर्वतमस्तकेषु न केवलं पर्वतमध्यभागे ।
न केवलं तद्गिरिमूलभागे अधःस्विदासीत् उपरिस्विदासीत् ॥ १०२ ॥

न केवलं पूर्वदिगाश्रयोऽयं न केवलं तिष्ठति दक्षिणायाम् ।
न पश्चिमायामयमुत्तरस्यां व्याप्तः स सर्वाः प्रदिशो दिशश्च ॥ १०३ ॥

संसाररोगादिकरोगजालं श्रीकालकालाखिललोकपाल ।
दूरीकुरु त्वं त्वरया दयाब्धे भिषक्तमं त्वां भिषजां शृणोमि ॥ १०४ ॥

पश्याधुना पश्य भवत्पदाब्जपूजारतं भस्मविभूषिताङ्गम् ।
रुद्राक्षमालाभरणं महेश पश्चात् पुरस्तादधरादुदक्तात् ॥ १०५ ॥

दयासुधासागरधीरधारातरङ्गसङ्गत्वदपाङ्गसङ्गात् ।
वयं महापापकुलस्वरूपाः त्वत्पादनावा दुरितं तरेम ॥ १०६ ॥

दैन्याम्बुधाराधरधीरधार पुरापकाराकरमादरेण ।
मां पालयाभीष्टविशिष्टमिष्टं ओजिष्ठया दक्षिण एव रातिम् । १०७ ॥

महेश्वराराधनसाधनानां आसादनेनैव नयामि कालम् ।
न कालभीर्देहि ममामितायुः यदि क्षितायुः यदि वा परेतः ॥ १०८ ॥

कदा मुदा सुन्दरमन्दहासपुरःसरं मां स्मरवैरिराराात् ।
भस्माङ्गमालिङ्गति सोत्तमाङ्गैः स्थिरेभिरङ्गैः पुरुरूप उग्रः ॥ ११० ॥

कदा त्रिपुण्ड्राङ्कितफालभागं रुद्राक्षमालाभरणप्रियं च ।
लिङ्गार्चकं द्रक्ष्यति रक्षणाय हिरण्यरूपः स हिरण्यसन्दृक् ॥ १११ ॥

बिल्वादिसंपूजितलिङ्गमध्यात् विनिर्गतं बिल्वदलाङ्किताङ्गम् ।
शङ्गं प्रपश्यामि मुहुर्मुदाऽहं आदित्यवर्णं तमसः परस्तात् ॥ ११२ ॥

तमेव देवोत्तममिन्दुमौलिं भजामि भक्त्या भगवन्तमेकम् ।
भवं भवानीपतिमामनन्ति वेदान्तविज्ञानसुनिश्चितार्थाः ॥ ११३ ॥

तमेव सांबं सततं भजामि यल्लिङ्गपूजासमवाप्तभाग्यः ।
हिरण्यगर्भः समवर्तताग्रे भूतस्य जातः पतिरेक आसीत् ॥ ११४ ॥

तमेव विश्वेश्वरमाश्रयामि यो देवदेवो जगदेकनाथः ।
यद्दृष्टिमात्रं श्रियमातनोति श्रीणामुदारो धरुणो रयीणाम् ॥ ११५ ॥

सुपुत्रपौत्रादिसमृद्धिकामाः कामारिमेकं शरणं प्रपन्नाः ।
यतः समस्तेप्सितदानलोलः हिरण्यगर्भः समवर्तताग्रे ॥ ११६ ॥

महेश्वरादेव समस्तमेतत् कल्पावसाने पुनरेव जातम् ।
आदावुमालिङ्गितसुन्दराङ्गात् दिवा च नक्तं परितो युवाऽजनि ॥ ११७ ॥

भो लोचनोरुभ्रमरप्रकृष्टमन्दारकुन्दादिमरन्दधाराम् ।
विहाय गौरीपतिमाश्रिताय स्वादुः किलायं मधुमां उतायम् ॥ ११८ ॥

क्षीरं घृतं शर्करया समेतं गृहाण जिह्वे मधुरप्रिये त्वम् ।
फलानि रम्याणि पुनर्गृहाण स्तुहि श्रुतं गर्तसदं युवानम् ॥ ११९ ॥

अतः परं कालभयं न मे स्यात् न गर्भवासादिभयानि नूनम् ।
यतो जलैः बिल्वदलैः प्रगेषु यक्ष्वामहे सौमनसाय रुद्रम् ॥ १२० ॥

श्रीमन्महादेव दयासमुद्र श्रीमन्महारुद्र ममापराधान् ।
दूरीकुरु त्वं कृपया त्वमीश पितेव पुत्रान् प्रति नो जुषस्व ॥ १२१ ॥

मामव्यक्तव्यक्तसर्वापराधागाधाम्भोधिक्रूरनक्रादिदष्टम् ।
दृष्ट्वाऽरिष्टानिष्टनाशाय भूयो देवस्त्राता त्रायतामप्रयुच्छन् ॥ १२२ ॥

यत्पादाब्जं योगिभिर्नैव दृष्टं ब्रह्माद्यैर्वा सिद्धसङ्घैरनेकैः ।
यस्य ध्यानात् सर्वदा सर्वसिद्धिः तत्त्वायामि ब्रह्मणा वन्दमानः ॥ १२३ ॥

नमामि दुण्ढिं मदसिक्तगण्डं हताघषण्डं विधृतोर्ध्वशुण्डम् ।
स्वभक्तविघ्नार्तिहरप्रचण्डं परात्परं यन्महतो महान्तम् ॥ १२४ ॥

गणाधिपं गण्डतलालिकोटिभिः किरीटकोटिध्वजनिर्जिताम्बुदैः ।
संसेवितांघ्रिं प्रणमामि सर्वदा कविं कवीनामुपमश्रवस्तमम् ॥ १२५ ॥

नमो भवान्यै भवतापभीरुस्वभक्तसंरक्षणतत्परायै ।
आनन्ददा हारविहारदा या चतुष्कपर्दा युवतिः सुपेशाः ॥ १२६ ॥

ताराभिरामामरहारहीरप्रसारधारानिकरोपकाराम् ।
चिराय धीरां भज चित्त गौरीं वचोविदं वाचमुदीरयन्तीम् ॥ १२७ ॥

नमामि तामेव जगज्जनित्रीं करोति काश्मीररसप्रसारैः ।
आरक्तवर्णौ गिरिजा कुचौ या प्रियं सखायं परिषस्वजाना ॥ १२८ ॥

तामेव वन्दे गिरिराजकन्यां यत्पादुकाराधनतः सुखानि ।
महेश्वराङ्कस्थलसन्निविष्टा विश्वानि देवी भुवनानि चष्टचा ॥ १२९ ॥

मन्दारादिस्रग्विशेषालिवृन्दामन्दध्वानाकर्णनासक्तचित्ताम् ।
वन्दे मन्दं भक्तसंरक्षणार्थं वन्दे देवं राधसे चोदयन्तीम् ॥ १३० ॥

वन्दे भूयो मन्दहासोपहासव्यासक्तास्यानन्दसिन्धुं महेशम् ।
क्रीडालोलं कर्तुमभ्युद्यतां तामेषा नेत्री राधसः सूनृतानाम् ॥ १३१ ॥

भवानि मातस्त्रिजगज्जनित्रि त्वमम्ब बिम्बाधररागभागैः ।
श्रियं प्रदेहि त्वरया प्रियान्नो ययाऽति विश्वा दुरिता तरेम ॥ १३२ ॥

कस्ते स्तुतिं कर्तुमिहास्ति शक्तः यामिन्दिरा सुन्दरचन्दनाद्यैः ।
समर्चयामास सरस्वती च सरस्वती वा सुभगा ददिर्वसु ॥ १३३ ॥

इति स्तुतो महादेवो वरान् दत्वा तदीप्सितान् । पुनर्वरान्तरं दातुमुवाच वचनं मुदा ॥ १३४ ॥

त्वया कृतं स्तोत्रशिखामणिं यः कण्ठे लुठन्तं कुरुतेऽतिभक्त्या ।
तमाशु सम्पज्जलराशयस्ताः परिष्वजन्ते जनयो यथा पतिम् ॥ १३५ ॥

इमं स्तवं यः पठति प्रभाते मध्याह्नकालेऽपि महाप्रदोषे ।
तस्य प्रयान्ति प्रहता इवाशु भियं दधाना हृदयेषु शत्रवः ॥ १३६ ॥

लभन्ते जपन्तः श्रियं कीर्तिकामाः लभन्ते धनं धान्यमश्वादिकं च ।
लभन्ते तथाऽऽयुः प्रवृद्धं प्रवृद्धाः लभन्ते ह पुत्रान् लभन्ते ह पुत्रान् ॥ १३७ ॥

इति दत्वा वरांस्तस्मै तत्रैव गिरिजापतिः । अन्तर्दधे गणेशाद्यैः सह लिङ्गे शिवात्मके ॥ १३८ ॥

श्रीशैलेश्वरलिङ्गतुल्यममलं लिङ्गं न भूमण्डले
ब्रह्माण्डप्रलयेऽपि तस्य विलयो नास्तीति वेदोक्तयः ।
तस्मात् तद्भजनेन मुक्तिरखिलैः प्राप्या न सा दुर्लभा
तत्पूजानिरतस्य दुर्लभतमं किं वा जगन्मण्डले ॥ १३९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे अगस्त्यकृतवेदपादस्तववर्णनं नाम पञ्चत्रिंशोऽध्यायः ॥

—o—

## अथ षट्त्रिंशोऽध्यायः ।

श्रीसदाशिवः —

तीर्थेश्वराभिधं लिङ्गं मङ्गलाकारमव्ययम् । तत् सर्वं मङ्गलं दिव्यं सर्वमङ्गलदायकम् ॥ १ ॥
तस्य लिङ्गस्य महिमा मया विज्ञायतेऽम्बिके । तस्य स्मरणमात्रेण संपदायाति सादरम् ॥ २ ॥
स्मरणं तस्य लिङ्गस्य कोटिजन्मार्जितैः परम् । पुण्यैः प्रजायते गौरि तल्लिङ्गं गौरवप्रदम् ॥ ३ ॥
तल्लिङ्गस्मरणादेव मुक्तिकान्ता कराश्रिता । संपद्भिः सह संपन्ना विपन्नैवोपजायते ॥ ४ ॥
न तस्य विपदार्तिः स्यात् दौर्मनस्यं भयानि च । यस्य तीर्थेशलिङ्गस्य स्मरणं हृदि वर्तते ॥ ५ ॥
एतदाराधनं पूर्वं कृत्वा बिल्वदलादिभिः । प्राप्तमैश्वर्यमतुलं स्वर्गप्राप्तिः ततः परम् ॥ ६ ॥
पुरा मुनीश्वराः सर्वे कोटिशङ्करपूजकाः । भस्मोद्धूलितसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः ॥ ७ ॥
रुद्राक्षमालाभरणाः शिवध्यानपरायणाः । जटामण्डलवीताङ्गाः सर्वे लिङ्गार्चनप्रियाः ॥ ८ ॥
ते सर्वे गौतमं दृष्ट्वा शिवयात्रापरायणाः । शिष्यकोटिसमाकीर्णं शिवभक्तवरं परम् ॥ ९ ॥
दृष्ट्वा भक्त्या नताः सर्वे कृताञ्जलिपुटाः शिवे । मोक्षधर्मांश्च पप्रच्छुः विनयानतकन्धराः ॥

ऋषयः —

भगवन् धर्मतत्वज्ञ शिवपूजैकजीवन । मोक्षोपायः कस्त्वयाऽद्य स वक्तव्यः समाधिना ॥ ११ ॥
संसारसागरे मग्नाः कोटिशो गृहमेधिनः । कोटिशङ्करसेवायां निरताः सर्वदा मुने ॥ १२ ॥
तत्सेवयाऽपि सहसाऽपारः संसारलक्षणः । न विच्छिन्नः कथं तस्य विच्छेदोऽपि भविष्यति ॥१३॥

न कोऽपि शिवतत्वज्ञो यदा मूर्तिस्वभावतः । भवतुल्यो न दृष्टोऽभूत् अस्माभिर्भवभीरुभिः ॥
इदं त्वच्चरणाम्भोजं दृष्टं हन्त्यघसञ्चयम् । अद्य पुण्यैरिदं दृष्टं संपत्संप्रापकं च नः ॥ १५ ॥
इति तद्वाक्यमाकर्ण्य विलोक्य स मुनीनपि । पूजयित्वा महादेवं प्राह भक्तिपुरस्सरम् ॥ १६ ॥

गौतमः —

शिवलिङ्गार्चनध्यानशस्त्रेणातिशितेन तु । संसारपाशविच्छेदो भवतीत्यवगम्यताम् ॥ १७ ॥
संसारसागरे तावत् भयं भवति सर्वथा । यावन्नाराधितो देवो महादेवो भवः प्रभुः ॥ १८ ॥
यस्तु देवो महादेवः सर्वदेवशिखामणिः । तन्नामस्मरणोद्योगेऽप्यघराशिलयो भवेत ॥ १९ ॥
श्रीमहादेवनामानि स्मर्तव्यानीति यस्य धीः । तस्य पापाचलाद्भीतिः कदापि न भविष्यति ॥
महादेवार्चने बुद्धिः तावन्नैवोपजायते । यावन्नाघकुलध्वान्तविलयः शङ्करः स्मृतः ॥ २१ ॥
शङ्करस्मरणाकारप्रभाकरकराहते । चित्तपापान्धकारस्य विलयो न भवेत ध्रुवम् ॥ २२ ॥
श्रीमहादेवभक्तानां भवबन्धभयं कुतः । भवस्मरणमात्रेण भवराशिर्विनश्यति ॥ २३ ॥
भवगाढान्धकारोऽपि महामोहप्रदः सदा । तद्भक्तिभानुमालोक्य स्वयं एव विनश्यति ॥ २४ ॥
दिवाभीतनिभं यत्तु भयं संसारलक्षणम् । तन्महेशार्चनाकारस्मरे दृष्टे विनश्यति ॥ २५
महादेवप्रसादस्तु सहसा जायतेऽपि न । तज्ज्ञाने सति संसारभयमेव न जायते ॥ २६ ॥
महादेवं सकृद्वाऽपि यः स्मरेत् भस्मभूषणः । तत्पाददर्शनेनापि न संसारमहाभयम् ॥ २७ ॥
महादेवार्चने भक्तिः सहसा नोपजायते । सा चेज्जाता ततो दुःखं कालादपि न जायते ॥ २८ ॥
महादेवाभिधानानि सुधाधारानिभानि यः । शृणोति तत्कुलस्यापि न संसारभयं भवेत् ॥ २९ ॥
महादेवाभिधानेन श्रुतेनापि स्मृतेन वा । संसारसागरापारतरिणा पि तरन्ति ते ॥ ३० ॥
महादेवं सकृत् ध्यात्वा स्मृत्वा तन्नाम सादरम् । संसारसागरं तीर्त्वा प्रयान्ति शिवमन्दिरम् ॥
भाग्यवन्तो महादेवनामरूपां सुधां मुहुः । स्मृत्वा कर्णपुटैः पीत्वा स्तन्यानि न पिबन्ति हि ॥
भक्त्या कर्णसुवर्णपात्रगमहादेवाभिधानामृतं पीत्वा तिष्ठ गरिष्ठनिष्ठुरवचोवीचीप्रपञ्चैरलम् ।
तेनैवाशु वरिष्ठतां व्रज पुनः संसारघोरार्णवं व्याकीर्णामिव कर्णधारवरतां प्राप्य त्वया सत्वरम् ॥
महादेवाभिधानेन निधानेन परं धनी । तद्धनं सावधानेन साधुभिर्ध्यायते हृदि ॥ ३४ ॥
महादेवाभिधानस्य ध्वनिमध्वनि साधवः । सुधाधुनीमिव प्राप्य सानन्दं प्राप्नुवन्ति हि ॥ ३५ ॥
महादेवाभिधानेन महानन्दसमृद्धयः । वृद्धिं प्रयान्ति तासां तु परमानन्दसन्निभाः ॥ ३६ ॥
महादेवं मुहुर्ध्यात्वा सकृद्वा पुण्यकोटिभिः । पुण्यराशिमनुप्राप्य पुण्यवानेव जायते ॥ ३७ ॥

पापघोराब्धिमग्नानां क्षणात् तरणकारणम् । महादेवाभिधानं हि महापत्तारकं परम् ॥ ३८ ॥
महादेवाभिधारूपं अमृतं शिवनिर्मितम् । संसारोरगघोरापारविषराशिविनाशकम् ॥ ३९ ॥
संसारसागरे घोरे मग्नो भग्नमनोरथः । अनाथनाथं न कथं विश्वनाथमहं भजे ॥ ४० ॥
इदं दृष्टं शिवस्थानं पापनाशाय जायते । [1]पापघोराब्धिमग्नानां क्षणात् तरणकारणम् ॥ ४१ ॥
इतोऽप्यत्युत्तमं लिङ्गं लिङ्गं तीर्थेश्वराभिधम् । इतोऽप्यत्युत्तमं लिङ्गं मण्डलेऽस्मिन् न दृश्यते ॥
तत्राद्य गत्वा तीर्थेशः पूजनीयः प्रयत्नतः । सोमत्रयोदशी सेयं पातार्द्रासंयुता तथा ॥ ४३ ॥
भूत्या संयुता श्रेष्ठं शिवपूजनसाधनम् । इत्युक्तं तद्वचः श्रुत्वा गौतमेन महादरात् ॥ ४४ ॥
ततस्तीर्थेश्वरं प्रापुः मुनयो गौतमान्विताः । ततस्ते मुनयः स्नात्वा पापनाशनवारिभिः ॥ ४५ ॥
उद्धूल्य भस्मनाङ्गानि रुद्राक्षालङ्कृताश्च ते । ततः परं बिल्वपत्राण्यमलानि जलान्यपि ॥ ४६ ॥
गृहीत्वा तीर्थनाथस्य पूजां चक्रुर्मुनीश्वराः । ततः प्रदक्षिणीकृत्य दण्डवत्प्रणिपत्य ते ॥ ४७ ॥
शिवध्यानरताः सर्वे स्थितास्तन्मुक्तिमण्टपे । ततः परं मुनिवराः तीर्थेशनिकटस्थिताः ॥ ४८ ॥
बिल्वपत्रकराः सर्वे गौतमं द्रष्टुमागताः । ततः परं बिल्वपत्रैः तीर्थनाथार्चनं मुदा ॥ ४९ ॥

कृत्वा नत्वा गौतमं च प्रणताः प्रीतिपूर्वकम् ।

[तानागतान् समालोक्य गौतमः शांभवोत्तमान् । तदुक्तवचनं रम्यं शुश्राव प्रीतिपूर्वकम् ] ॥

मुनयः

तीर्थेशक्षेत्रमहिमा महता ज्ञायते त्वया । स वक्तव्योऽधुना येन निष्पापाः स्मो वयं मुने ॥
इति तद्वचनं श्रुत्वा गौतमः प्रीतमानसः । नत्वा तीर्थेश्वरं भक्त्या तानाह प्रीतिपूर्वकम् ॥ ५२ ॥

गौतमः —

साधु पृष्टमिदं क्षेत्रं तीर्थोत्तममिति स्मृतम् । अयं तीर्थेश्वरो देवो लिङ्गं तीर्थेश्वराभिधम् ॥ ५३ ॥
अस्य तीर्थस्य महिमा वेदैर्विज्ञायते परम् । मयाऽपि तत्प्रसादेन कथञ्चिन् ज्ञायते खलु ॥ ५४ ॥
अत्र पूर्वं मुनिवराः शङ्कराराधनोत्सुकाः । बहवस्तीर्थनाथस्य पूजाध्यानरताः सदा ॥ ५५ ॥
ते लब्ध्वा कामनिचयं भुक्त्वा भोगान् यथेच्छया । अन्तर्हिताः प्रयत्नेन लिङ्गे तीर्थेश्वराभिधे ॥
इदं तु कामदं लिङ्गं भुक्तिदं च मुनीश्वराः । एतन्निर्माल्यपूजापि मुक्तिसाधनमुच्यते ॥ ५७ ॥
पुरा त्रिजयया सृष्टं जययापि पुरं परम् । धीरे क्षीरनदीतीरे गौरीतीर्थेश्वराज्ञया ॥ ५८ ॥

1 इदमर्धं C कोशे नास्ति ।

2 कोष्ठान्तर्गतः श्लोकः C कोशेऽधिकः, अपेक्षित इव । D कोशे नोपलभ्यते ।

रत्नप्राकारसंकीर्णं रत्नगोपुरसंकुलम् । ततस्ताभ्यां महादेवस्तीर्थेशः प्रार्थितः स्तवैः ॥ ५९ ॥
त्वया त्वदाज्ञया सृष्टे नगरे रत्नमन्दिरे । वसतिः सततं कार्या दयया परयेत्यपि ॥ ६० ॥
तयोस्तद्वचनं श्रुत्वा तथास्त्वित्याह शङ्करः । ततः परं गतं ताभ्यां सन्तोषेण शिवाज्ञया ॥ ६१ ॥
स्वभक्तानुग्रहं कर्तुं स्वनिर्माल्येऽपि शङ्करः । स्थितः समर्चितो भक्त्या सर्वाभीष्टप्रदो भवेत् ॥
ततः स्वभक्तप्रीतेऽपि स्थितो निर्माल्यचन्दने । शिवस्तन्नगरं प्राप तदभीष्टप्रदो बुधाः ॥ ६३ ॥
तत्राभीष्टप्रदो जातः स्वभक्तेभ्यः सदाशिवः । करिष्यन्त्यत्र बहवः तत्पूजां भाग्यलिप्सवः ॥
ये नित्यं तीर्थनाथस्य निर्माल्यस्यापि पूजनम् । करिष्यन्ति प्रयत्नेन ते पूज्याः स्युः सुरैरपि ॥

यदा यदा यत्र स तीर्थनाथो ध्यातः स्वभक्तैरपि पूजितः स्यात् ।
तत्र स्थितस्तत्कृतपूजयैव दास्यत्यवश्यं तदभीप्सितानि ॥ ६६ ॥

एतन्निर्माल्यमादाय दिव्यचन्दनलक्षणम् । विजया पट्टणं प्राप्य कश्चिल्लिङ्गं करिष्यति ॥ ६७ ॥
तल्लिङ्गपूजया तावत् ज्ञानं भाग्यं च भासुरम् । प्राप्तव्यमस्य यत्नेन शिवभक्तेन तेन हि ॥ ६८ ॥
तत्सन्ततिप्रवृद्धिश्च भविष्यति दिने दिने । तल्लिङ्गचन्दनेनैव प्रवृत्तिं स करिष्यति ॥ ६९ ॥
तस्य पुत्राश्च पौत्राश्च तल्लिङ्गार्चनतत्पराः । सर्वे सौभाग्यसंपन्नाः वृद्धिं यास्यन्ति सर्वथा ॥ ७० ॥
तल्लिङ्गदर्शनं कर्तुं शाङ्करः कश्चिदुत्तमः । आगत्य तस्य लिङ्गस्य पूजनं स करिष्यति ॥ ७१ ॥
तद्भावलिङ्गमालोक्य प्रत्यहं तस्य पूजनम् । कृत्वा स्थास्यति तद्गेहे तदन्नैरेव पोषितः ॥ ७२ ॥
सोऽपि शांभवमालोक्य तेन स्नेहं करिष्यति । शृण्वन् शिवकथास्तस्मात् तुष्टः स्थास्यति सर्वथा ॥
काले काले प्रयत्नेन तस्य लिङ्गस्य सेवया । तच्चित्तं निर्मलं तेन स तत्सेवां करिष्यति ॥ ७४ ॥
सन्निधानं महेशस्य तीर्थेशस्यास्य सर्वदा । सिद्धिप्रदायकस्यास्य भावलिङ्गे भविष्यति ॥ ७५ ॥
भावलिङ्गालयस्यास्य बहुभाग्यप्रदस्य च । स्मरणादेव सिद्ध्यन्ति फलानि विविधान्यपि ॥ ७६ ॥
सिद्धलिङ्गेष्विदं लिङ्गं प्रसिद्धं सर्वकामदम् । एतदभ्यर्चनेनैव मुक्तिः करतलाश्रया ॥ ७७ ॥
तस्यैव भावलिङ्गस्य स्तुतिं स तु करिष्यति । तां भाविनीं स्तुतिं वक्ष्ये शृण्वन्तु मुनयो मुहुः ॥
तेन संपूजितो भक्त्या प्रसन्नः तीर्थनायकः । भावलिङ्गे मुदा स्तोत्रमेतदेव करिष्यति ॥ ७९ ॥

[1] गौतमः —

शिवं देहि मे भावलिङ्गालयाशु प्रसीद प्रसीद प्रसीदादरेण ।
त्वदाराधनायत्तचित्ताय नित्यं विकारान्तरायापकाराय भूयः ॥ ८० ॥

---

1 शाङ्करः C

नमो भावलिङ्गाय भावालयाय स्मरापारगर्वापहारोद्यताय ।
नमः पुण्यकल्याणपूर्णार्गवाय प्रमाणाग्रगण्याग्रगण्याय तुभ्यम् ॥ ८१ ॥

इदं भावलिङ्गं गतानङ्गसङ्गं यदङ्गोपसङ्गं प्रसङ्गेन शङ्गम् ।
विलीनाभिषङ्गं महारोगभङ्गं करोतीति मन्ये ततस्ते नमोऽस्तु ॥ ८२ ॥

यदर्धाङ्गमर्धेन्दुखण्डं प्रचण्डं प्रभामण्डलाखण्डलाराध्यमीड्यम् ।
तदाराध्यमाराध्यकाराध्यकाढ्यं मुहुर्भावलिङ्गं विपद्रोगभङ्गम् ॥ ८३ ॥

यदाराधनेनामराराध्यता स्यात् नरस्याधमस्यापि सिद्धिप्रसिद्धिः ।
तदाराध्यमस्माकमस्मत्कुलस्याप्यपास्यान्यदेवं सदा भावलिङ्गम् ॥ ८४ ॥

प्रभूतेषु पुण्येष्वगण्येषु भक्तिः भवेद्भावलिङ्गे भवेद्भावनापि ।
भवे भावलिङ्गप्रभावप्रबोधे प्रमोदेन मोदाय सम्पादनीयः ॥ ८५ ॥

सरत्याशु संसारघोरान्धकारः स्फुरद्भावलिङ्गाङ्गसूर्यप्रकाशे ।
विशिष्टा विशिष्टाऽद्य खद्योतवार्ता कृतान्तान्तवार्ताऽपि तस्मिन् कुतः स्यात् ॥८६॥

अविद्यामहावर्तगर्तानुवृत्तिः कुतो भावलिङ्गार्ककोटिप्रकाशे ।
तदाराधनामोदमानन्दसिन्धो शिवज्ञानचन्द्रोपि कोऽपि प्रजातः ॥ ८७ ॥

अहो भाग्यमस्माकमस्मत्कुलस्याप्यभूद्भावलिङ्गं परं दैवतं नः ।
वयं धन्यधन्याग्रगण्याग्रगण्याः सदा भावलिङ्गार्चनासक्तचित्ताः ॥ ८८ ॥

यदा भावलिङ्गार्चनाभक्तिलेशः तदा तावदापत्समूहप्रणाशः ।
तदाराधनासक्तलेशप्रकाशे महानन्दराशिप्रवेशोऽनुवेलम् ॥ ८९ ॥

नमन्तः स्मरन्तः सकृत् पूजयन्तः भवं भावलिङ्गं मुदा भावयन्तः ।
लभन्ते गणेशत्वमप्राप्यमन्यैः इह प्राप्य दुष्प्रापमोदाम्बुराशिम् ॥ ९० ॥

न चात्राभिलाषाऽऽस्पदालाभशङ्का नचान्यत्र वा भावलिङ्गार्चकानाम् ।
इहामुत्र सौख्याभिवृद्धिर्भवित्री भुजं सम्यगुद्धृत्य सत्यं मयोक्तम् ॥ ९१ ॥

न चन्द्रत्ववांछा न चेन्द्रत्ववांछा न चोपेन्द्रताब्जासनत्वादिवांछा ।
यतस्तान्यपायान्वितानीति मन्ये परं त्वीप्सितं भावलिङ्गार्चनं मे ॥ ९२ ॥

इदं भावलिङ्गार्चनं कामधेनुः समस्तामराशास्यकल्पद्रुमो वा ।
इदं मर्त्यदुष्प्रापचिन्तामणिर्वा फलानि प्रसूते विचित्राणि नित्यम् ॥ ९३ ॥

यतोऽनन्यलभ्यानि सूते फलानि प्रकृष्टानि वांछास्पदान्यानि तानि ।
अतः कामधेनुर्न कल्पो मणिर्वा परं त्वन्यदेवाद्भुतं भावलिङ्गम् ॥ ९४ ॥

क्षणार्धार्धकोटयंशकोट्यंशमात्रं वयं भावलिङ्गं स्मरामो यतोऽतः ।
प्रकृष्ट प्रकृष्ट प्रकृष्ट प्रकृष्ट प्रकृष्ट प्रकृष्ट प्रकृष्ट प्रकृष्टाः ॥ ९५ ॥

महाभूत जाताप्रजातातिभीतिः महामृत्युदूत प्रभूतातिभीतिः ।
महारोगसंघातजाताऽपि भीतिः कुतो भावलिङ्गस्य सङ्गेऽङ्गभागे ॥ ९६ ॥

सकृज्जन्ममध्ये मुदा भावलिङ्गं स्मरन्तं स्मरन्तं कृतान्तस्य दूतः ।
प्रमत्तोऽपि तन्मार्गसंसर्गभीतः प्रभूतप्रतापोऽपि दूरं प्रयाति ॥ ९७ ॥

नमो भावलिङ्गार्चकाराधकेभ्यः तदाराधकेभ्यस्तदाराधकेभ्यः ।
तदाराधकेभ्यस्तदाराधकेभ्यः तदाराधकेभ्यस्तदाराधकेभ्यः ॥ ९८ ॥

यमः कम्पयन् पापतापोपभीतः स्वदूतान् समाहूय तत्कर्णदेशे ।
मुहुर्भावलिङ्गार्चकागारमार्गे न गन्तव्यमित्येव जल्पत्यनुच्चैः ॥ ९९ ॥

कृते भावलिङ्गार्चनोद्योगमात्रे त्रिनेत्रोऽपि किं देयमस्मै मयेति ।
विचारैरपारैर्नयत्येव कालं ततः कालवार्ताप्रवृत्तिः कुतोऽत्र ॥ १०० ॥

प्रभावं भवो भावलिङ्गार्चकानां परं वेद वेदोऽपि तन्नैव वेद ।
अतस्तद्विचारे विरिञ्चिः कुलञ्चः कथं चञ्चुरास्तद्विचारे तदन्ये ॥ १०१ ॥

वरं भावलिङ्गाङ्गदौवारिकोरुस्फुरद्वेत्रपात्रत्वमित्यादरेण ।
तदिच्छामुपेन्द्रेन्द्रचन्द्रादिदेवाः प्रकुर्वन्ति धर्मं विहाय स्वकीयम् ॥ १०२ ॥

रमा भावलिङ्गाङ्ग तुङ्गोत्तमाङ्गे विचित्रातपत्रामितच्छायया सा ।
अविच्छिन्नमेवापरिच्छिन्नया चापरिच्छिन्नमेव प्रकामं करोति ॥ १०३ ॥

न संसारपङ्काङ्कितो निष्कलङ्को निरातङ्क एवातिरङ्कोऽप्यशङ्कः ।
शशाङ्काङ्कितं भावलिङ्गाधिवासं स्मरन् वासवत्वादिवांछां जहाति ॥ १०४ ॥

रमा भावलिङ्गार्चकार्चापरा सा नुतिं तस्य कर्तुं प्रदत्तैव वाणी ।
तदङ्घ्र्यर्हणां रोहिणी सा शची च अवश्यं सुराशास्यमाशास्यमस्य ॥ १०५ ॥

चिरं भावलिङ्गेशपादारविन्दं मनश्चञ्चरीकश्चकार स्थितिं मे ।
स धर्मार्थकामापवर्गस्वरूपैः मरन्दैरमन्दैर्विनोदं करोति ॥ १०६ ॥

अहं भावलिङ्गेशपादारविन्दं स्वचित्तेन मूर्ध्ना प्रबद्धं करोमि ।
मदीयं हृतं मानसं किं त्वयेति त्रिलोक्यां न कोऽप्यस्ति ते मोचकोऽपि ॥

नमः सुन्दरामन्दमन्दारकुन्दस्फुरन्नीरनीहारहाराकराय ।
निराकारताराचिरापारहीर [1]स्वरासागराकार ते शङ्कराय ॥ १०८ ॥

नलव्यालबालामलव्यालमालाकुलानीललोलालसत्कुन्तलाय ।
सलीलाचलानीलनीलोत्पलश्रीविलासाय ते कालकाल प्रणामः ॥ १०९ ॥

नमः स्फारकर्पूरपूराभ्रगौरज्वरापारसंसारभारापकार ।
पुराखर्वगर्वप्रसारापहार स्मरान्धान्धकारे स्मरारे हराय ॥ ११० ॥

नमश्चारुकाकोदरानद्धरुद्धप्रबुद्धाप्रबुद्धेन्दुखण्डार्धमौले ।
महाकालकालानलानीलफालप्रबालप्रवालाधराधीरलोल ॥ १११ ॥

नमश्चारुचामीकराकारवीर प्रभापूरसंपूर्ण संपूर्णकाम ।
न किं कामकामाय कामं प्रकामं करोषि प्रदोषे न रोषं कुरुष्व ॥ ११२ ॥

प्रदोषेषु तोषेण नाट्यं करोषि प्रदोषेषु रोषो न तेऽतः प्रदोषे ।
प्रदोषेषु रोषो न मय्यप्यतो मां प्रदोषेषु वा [2]भावयन्नास्त्रदोषम् ॥ ११३ ॥

नरं सर्वदोषाकरं राजसं मां सदा तामसं घोरसंसारलीनम् ।
हराराधनानन्दसन्दोहहीनं सहीनं वराहीनहीनं प्रपश्य ॥ ११४ ॥

न [3]साद्यस्वसंस्कारपारं गतोऽहं न सारस्वतेष्टिप्रचारादरोऽहम् ।
न चातातिरात्राद्य पूर्वाश्रयोऽहं दयापात्रमात्रं त्रिणेत्राव मां त्वम् ॥ ११५ ॥

मदीयापराधानगाधानबाधान् विधिव्याधसंबन्धबोधप्रबुद्धान् ।
अधीतानधीतप्रबुद्धाप्रबुद्धाश्रिया भ्रान्तमभ्रान्तमीशाशु पाहि ॥ ११६ ॥

मदीयानि पापान्यपाराम्बुराशिप्रपूरापकाराणि नाशं प्रयान्ति ।
तवानुग्रहादुष्टदुष्टग्रहाणां क्व वार्ताऽपि सा स्यात् कुतोऽन्यग्रहाणाम् ॥ ११७ ॥

मदीयं मनः पादपद्मे तवाद्य प्रविष्टं प्रकृष्टं निकृष्टं न जातम् ।
अतस्तन्न माऽऽयातु माया तु मामा प्रयातु प्रयातु प्रयातु प्रयातु ॥ ११८ ॥

---

1 स्वरः सागराकार G  2 भावय स्वास्त्र C D कोशयोः  3 न साद्यस्क संस्कार ।

भवत्पादपद्माश्रितं तन्मनो मे मदीयापराधान् क्षमस्वेति मन्दम् ।
कदाचिन्निवेद्यानिवेद्यानपीश प्रसादाय सिद्धिं करोतु प्रसन्नम् ॥ ११९ ॥

मनो जन्मजन्मान्तरानन्तपुण्यैः त्वदंघ्रयम्बुजाराधनाय प्रवृत्तम् ।
निवृत्तं न तन्मास्तु मास्तु स्वतन्त्रप्रवृत्तं निवृत्तं कथं वा महेश ॥ १२० ॥

शरण्यः शरण्येषु को वा त्वदन्यो मदन्योऽपि दीनः क्व वा भूतलेऽस्मिन् ।
अतस्तद्द्वयं वीक्ष्य फालाक्षलक्षं क्षणं वा क्षणार्धं प्रविश्यादरेण ॥ १२१ ॥

न मे शारदादिप्रसादाद्यपेक्षा न वेदादिबोधप्रसादाद्यपेक्षा ।
क्षणार्धं त्वदङ्घ्रयंबुजाराधने मे सदैवास्तु वांछा न चान्यत्र वांछा ॥ १२२ ॥

यदि त्वं मदीयं मनोबुद्धिगम्यं प्रसादं प्रदातुं प्रवृत्तस्तदा मे ।
भवन्नाममात्रानुरक्तं मदीयं मनः सर्वदाप्यस्तु शम्भो प्रसीद ॥ १२३ ॥

वदान्याग्रगण्याग्रगण्याग्रगण्यः वदान्यातिमान्यातिमान्यस्त्वमीश ।
अनन्याग्रगण्याग्रगण्याग्रगण्यः कलौ कालकालाहमेवेति मन्ये ॥ १२४ ॥

न ते देयमप्यस्ति भक्त्या विनान्यत् तदन्यन्न मे प्रार्थनीयं च लोके ।
न सा चञ्चलातिस्थिरा त्वत्पदाब्जे महाकल्पकोटिष्वनन्तेष्वपीश ॥ १२५ ॥

दृढा सैव जन्याप्यनन्ता प्ररूढा पुनर्वर्धमाना नवैवानुवेलम् ।
न जन्यत्वभावत्वशङ्कास्तु तस्यां प्रसादस्य ते दुर्लभं भावि किं वा ॥ १२६ ॥

न जन्यस्वभावस्य नित्यत्वमस्तीत्यवश्यं त्वया नैव वक्तव्यमीश ।
किमस्त्यप्यशक्यं तवापि त्रिलोक्यां शिवान्यायवार्ता न मे रोचतेऽपि ॥ १२७ ॥

न ते गौतमाकाशनित्यत्ववादो मतो वेदवेदान्ततत्त्वज्ञमूर्ते ।
न ते जैमिनेः शब्दनित्यत्ववादो न मिथ्यात्ववादोऽपि वेदान्तिनस्ते ॥ १२८ ॥

न बन्धोऽपि मोक्षोपि वेदान्तशास्त्रे तथा दृष्टिसृष्टिप्रवादोऽपि दृष्टः ।
अविद्याविलासो न कोऽपीह कल्प्यो विलासैर्यतस्ते जगज्जालमासीत् ॥ १२९ ॥

न चानन्तवेदान्तवार्ताविचारे हराराधकाराध्यभावाभिमानः ।
स चेन्नाधुना कर्ममार्गो विनष्टः शिवाराधनामार्गवार्ता कुतः स्यात् ॥ १३० ॥

शिवाराधनं चेत् कदाचित्प्रमादात् विहायैकदापि स्थिते यातना स्यात् ।
महापातकानां विनाशः कदाचित् शिवाराधनेनेह संभावितोऽपि ॥ १३१ ॥

वरं मद्यपाचारमार्गाभिमानो वरं चण्डचण्डालमार्गप्रवेशः ।
वरं नेश्वराराधनत्यागमार्गः स मार्गो महायातनामार्ग एव ॥ १३२ ॥

न नीरं हरानर्पितं पानयोग्यं सुराकल्पमल्पं हि तन्मूत्रकल्पम् ।
प्रमोदेन पीत्वापि तत् तावदन्ते सदा यातनां प्राप्नुवन्त्येव विप्राः ॥ १३३ ॥

शिवाराधने नास्ति यस्याभिमानः स चण्डालचण्डाल एवेति मन्ये ।
शिवाराधने यस्य भक्तिः प्रवृद्धा स वृद्धः सुराणामपीति प्रसिद्धः ॥ १३४ ॥

शिवानर्पितान्नानि भुक्त्वातिमोहात् मलाशी भवत्येव राशिस्त्वघानाम् ।
स पापस्वरूपः सदा यातनायां निमग्नोऽतिदुःखानि भुङ्क्ते सुरोऽपि ॥ १३५ ॥

कृतानन्तपापो विहायेश्वरार्चां शिवान्यासक्तचित्तोऽपि मत्तः ।
मृते यातनान्ते शुनीगर्भवासं समासाद्य तस्मान्निवृत्तो न नूनम् ॥ १३६ ॥

वधूभोगकालेऽपि यः कालकालस्वरूपानुसन्धानहीनः स हीनः ।
प्रतप्तायसाकारनारीशरीरं समालिङ्ग्य दुःखानि भुङ्क्ते कदाचित् ॥ १३७ ॥

यदेवापि रम्यं स्वभोगोपयुक्तं तदीशाय सर्वं निवेद्येशशेषः ।
अयं मह्यमित्यादरेणापि भुङ्क्ते महापुण्यराशिः स भुङ्क्ते सुखानि ॥ १३८ ॥

सुतं वा समालिङ्ग्य तज्जन्यसौख्यं निवेद्याम्बिकावल्लभायादरेण ।
अनन्तं सुखाम्भोधिमाप्नोति सत्यं प्रवृद्धापि तत्सन्ततिः सर्वदा स्यात् ॥ १३९ ॥

शिवाराधनाय प्रवृत्तस्य वंशो न नश्यत्यवश्यं प्रसिद्धिं प्रयाति ।
महानन्दकन्दत्वमाप्नोति सत्यं मुकुन्दादिबृन्दारबृन्दाभिवन्द्यः ॥ १४० ॥

वरं वन्ध्यभावो वरं गर्भनाशो वरं जन्मकालप्रणाशोऽपि सत्यम् ।
वरं नैव कस्याप्यशैवत्वमेतत् फलं पापराशेरभाग्यांबुराशेः ॥ १४१ ॥

अशैवत्वमाप्नोत्यभाग्यैरभङ्गैः वरं जारजत्वं वरं मद्यपत्वम् ।
वरं सर्वपापौघसञ्जातमूर्तिस्वरूपत्वमित्येव मन्ये महेश ॥ १४२ ॥

वरं पुल्कसस्यापि संप्राप्य जन्म स्थितस्यापि गोमांसमात्राशनस्य ।
वरं ब्रह्महत्यासहस्रादरस्याप्यशैवत्वमत्यन्तमेवापकृष्टम् ॥ १४३ ॥

अशैवत्वमासाद्य कृत्वा स्वनिन्दां ज्वलद्वह्निमध्ये प्रविष्टोऽनुतप्तः ।
मृतः सद्गतिं प्राप्य शैवत्वमेत्य प्रसादेन शम्भोः स मुक्तिं प्रयाति ॥ १४४ ॥

वरं दासदासानुदासानुदासीसुतत्वं यतस्तस्य शैवानुबन्धः ।
स शैवानुबन्धेन संसारबन्धात् विमुक्तोपि मुक्तो भवेत् पापसङ्घात् ॥ १४५ ॥

वरं शैवगेहाङ्गणे कीटभावः कदाचित् यतो भूतलेशानुयोगः ।
तदुच्छिष्टपात्राभिघातोऽप्यघघ्नः यतस्तस्य भाग्येन संभावितः स्यात् ॥ १४६ ॥

महादेवनैवेद्यशेषाशनानां पवित्राणि गात्राणि तद्गन्धवाहान् ।
सुरास्तावदिच्छन्ति पापापनुत्त्यै सदा गन्धवाहप्रवेशप्रवृद्धान् ॥ १४७ ॥

यदा यत्र शैवः प्रचारं करोति प्रभूतैरगण्यैः स्वपुण्याब्धिसङ्घैः ।
तदा तत्र नृत्यन्ति यत् तत्पितॄणां समूहाः स्वतः स्वर्गभोगं विहाय ॥ १४८ ॥

न च स्वर्गमार्गे तदानन्दयोगः ततस्तद्विहायामरैः साकमेते ।
प्रनृत्यन्ति शैवं चरन्तं वसन्तं हसन्तो नमन्तो मुदा पूजयन्तः ॥ १४९ ॥

शिवः शैवमालोक्य तत्रातिहृष्टो निवासं करोत्यम्बिकालोलदृष्टिः ।
इतः किं ममापि प्रकृष्टं प्रकृष्टं निवासस्थलं [1]सद्विलासानुकूलम् ॥ १५० ॥

स शैवप्रभावं प्रभुः शम्भुरेकः प्रजानाति जानाति गौरी गणेशः ।
कुमारोऽपि जानाति वेदोऽपि जानात्यतस्तं विधिर्वा हरिर्वा तदन्यः ॥ १५१ ॥

सती शैवमाता त्वशैवस्य माता परं जारिणी गार्दभी वा शुनी वा ।
वरं सूकरी वा वरं कर्कटी वा वरं कर्कशा वा वरं राक्षसी वा ॥ १५२ ॥

पितुः शैवपुत्रस्य तस्यैव भाग्यं सभाग्यस्तदन्यो न लोकेषु दृष्टः ।
अशैवस्य लोके पिता दुर्भगानां वरिष्ठः स विष्ठासु जातः कृमिः स्यात् ॥

शुभः शांभवानां प्रभावः स्वभावः कथं मादृशैर्वर्णनीयोऽपि मूढैः ।
कथं भावभावप्रभावप्रभावः श्रुतीनामगम्यो मया वर्णनीयः ॥ १५४ ॥

यया जिह्वया शांभवानां प्रभावः प्रभूतो महापुण्यसंयुक्तयाऽयम् ।
मया वर्णनीयोऽपि वाणी विचित्रा पवित्रा भवत्वित्यवश्यं न चित्रम् ॥ १५५ ॥

कृपा शङ्करस्यापि मय्यप्यपारा यतो हारचर्याविचारप्रवृत्तः ।
अहं तावदप्यस्मि धन्यो मदन्यो न भावप्रभावस्तवेषु प्रवृत्तः ॥ १५६ ॥

1 मद्विलासानुकूलम् C D कोशयोः ।

अहं धन्य एवास्मि मातापि धन्या पिता मे सखा बन्धुवर्गोऽपि धन्यः ।
यतो भावमार्गप्रवृत्तानुरक्तो विरक्तोऽपि संसारवार्तासु शम्भो ॥ १५७ ॥

अशैवानुकूलं मनो मास्तु मास्तु प्रमादेन वा स्वप्नकालेऽपि मास्तु ।
अयं तावदेको वरः प्रार्थनीयो ममेशान सर्वात्मनाम्मु प्रयच्छ ॥ १५८ ॥

इयं तावदिच्छा कथञ्चित्प्रजाता शिवानुग्रहेणैव मे पालनीयः ।
ययातिप्रवृद्धा प्रजाता तथा मे प्रसीद प्रसीद प्रभो चन्द्रमौले ॥ १५९ ॥

अशैवैः सहैतस्य वासः कदाचित् यदि स्यात् तदा तस्य विघ्नोऽस्तु शीघ्रम् ।
न तन्मित्रमित्रैः न तन्मित्रमित्रैः महेशान संलापवार्ताऽपि मास्तु ॥ १६० ॥

यथा चण्डचण्डालगेहाधिवासः तथा स्यादशैवैः सहैकत्र वासः ।
अतस्तत्सहावासविघ्नोदयः स्यात् दया चेदुमाकान्त ते मय्यवश्यम् ॥ १६१ ॥

यदि स्यादशैवानुरक्तं मनो मे तदा स्युः कृतान्तस्य दूताः प्रमत्ताः ।
प्रवृत्ताः प्रवृत्तं प्रकुर्वन्त एव प्रबद्ध्वा प्रणेयो ममायं ममेति ॥ १६२ ॥

अशैवैः सहैतस्य शैवस्य वासो महापत्समूहप्रवेशोपि मास्तु ।
स यस्मादगाधव्यथाहेतुभूतो न चापत्समूहस्तथा दुःखहेतुः ॥ १६३ ॥

अहं चेदपात्रं शिवानुग्रहस्य त्रिणेत्राशु मृत्युं परं प्रेरयस्व ।
न चाशैवसङ्गाय मां प्रेरयस्व प्रसादोऽयमेवेश ते मह्यमद्य ॥ १६४ ॥

[1]असन्ध्यादिकर्मानुरागानुरागो यथा शङ्कराराधने साधने मे ।
असाध्ये शिवानुग्रहे संग्रहे वा समग्रस्य पुण्याम्बुराशेर्महेश ॥ १६५ ॥

न नित्येन नैमित्तिकेनापि केनाप्यपूर्वा क्रियाहेतुभूतेन मुक्तिः ।
यतः शङ्करानुग्रहेणैव मुक्तिः स तावच्छिवाराधनेनैव लभ्यः ॥ १६६ ॥

जडाः केवलं कर्मणा मुक्तिमेके वदन्तः श्रुतापारवेदान्तमार्गाः ।
न तैरस्मदीयानि शास्त्राणि तावत् श्रुतानीति मन्ये बहूनि प्रमत्तैः ॥ १६७ ॥

किमेतादृशं कर्म मोक्षोपयुक्तं न मीमांसया तावदेतद्विवेकः ।
विधिः कुत्र वा द्वादशाध्यायमध्ये न कुत्रापि दृष्टो न वा वार्तिकेऽपि ॥

---

1 न सन्ध्यादि D

न च ब्रह्ममीमांसया तद्विवेको न चोपासनामार्गभिन्नोऽपि मार्गः ।
न तस्याः फलं मोक्षरूपं प्रकृष्टं प्रकृष्टं फलं तत्वविज्ञानसाध्यम् ॥ १६९ ॥

न चोपासना चित्तशुद्धिं विनान्यत् फलं कर्तुमेकं समर्था समर्था ।
कथं वा स साध्योऽपि मोक्षः स नित्यः वदाद्याशु वेदान्तमार्गप्रविष्टः ॥ १७० ॥

मितं भावनायाः स्वरूपं न केनाप्यतस्तत्परिज्ञानशून्येन केन ।
कथं तस्य मोक्षस्य साध्यत्ववादः स्वनिर्वाह्यमध्ये बलात् पातनीयः ॥ १७१ ॥

य एवाक्षपादस्य मोक्षः स साध्यः स तावत् [1]परं ध्वंस एवाविनाशी ।
स तत्वावबोधस्य साध्यः स तावत्स वेदान्तशास्त्राविरुद्धो विरुद्धः ॥ १७२ ॥

अलं शास्त्रवार्ताभिरस्माकमेकः शिवानुग्रहो मोक्षहेतुः स तावत् ।
शिवाराधनेनैव तत्राधिकारी परं शाम्भवः कोऽपि धन्योऽतिधन्यः ॥ १७३ ॥

शिवाद्वैतवार्ता परं रोचते मे शिवाराधनाग्रेसराग्रेसरस्य ।
शिवाराधनाबोधकं शास्त्रमेकं प्रमाणं प्रमाणेषु विश्वासबीजम् ॥ १७४ ॥

परं जन्मजन्मान्तराभ्यस्तमेकं शिवाराधनाबोधकं शास्त्रमेव ।
यतस्तद्विरुद्धेन मानाभिमानो ममेशान पादारविन्दे शपामि ॥ १७५ ॥

महापत्तरङ्गानुषङ्गेऽपि शङ्ग त्वदन्यं न पश्यामि नाराधयामि ।
न गृह्णामि नामापि [2]स्तौमि प्रकामं त्वदन्यस्य वार्ताश्च गर्ते पतन्तः ॥ १७६ ॥

महामृत्युरायातु मे यातु किं मे न तेनापि भीतिर्महामृत्युमृत्युः ।
यतो मन्मनःपद्मसद्मप्रविष्टः स दुष्टानि कष्टानि हर्तुं समर्थः ॥ १७७ ॥

स्वकालेऽपि कालो न यात्यन्तिकं मे स को वा वराकः स किं नातिरङ्कः ।
स चेटीचपेटीतटाघातभीतः कृतान्तान्तकाराधकाग्रेसरस्य ॥ १७८ ॥

इयं मे महाशैवसङ्गान्न जाता मतिः शङ्कराराधनासाधनेषु ।
परं त्वीशपादारविन्दप्रसादात् महाशैववार्तापि तावत् कलौ न ॥ १७९ ॥

कलिर्धर्मदावानलस्तत्र वार्ता महाशैवदेवद्रुमस्येति शम्भोः ।
अहं तावदेको भवत्पादपद्मप्रसादामृतेनैव जीवामि लोके ॥ १८० ॥

श्रीमन्निर्मलभावलिङ्गममराराध्यं प्रसन्नं सदा
पूज्यं मत्कुलसंभवैरनुदिनं त्यक्त्वाऽन्यदेवार्चनम् ।

---

1 परिध्वंसः C    2 सामि ।

एवं शङ्करशासनं च न समुल्लङ्घ्यं शिवासंयुतः
शम्भुर्नृत्यति लिङ्गमेतदमलं दृष्ट्वा सुराभीष्टदः ॥ १८१ ॥

एतद्दर्शनमात्रतोऽपि सकलाभीष्टांबुराशिः स्वयं
नित्यं स्वाङ्गणमेत्य भावललितं लिङ्गं प्रपश्यत्ययम् ।
स्वामिन् अस्य वशे वसामि तव चेदाज्ञा त्वदाराधकं
त्यक्त्वाऽन्यत्र न संवसामि शपथः शम्भो त्वदङ्घ्र्यंबुजे ॥ १८२ ॥

त्वत्पादाम्बुरुहं विहाय न कदाप्यन्यत्र गन्तुं मतिः
शम्भो निर्मलभावलिङ्गसदृशं लिङ्गं क वा भूतले ।
पातालेऽपि न मन्दरेऽपि सुतरां मेरौ महेशालये
सत्यं सत्यमिदं पुनः पुनरिदं सन्देहवार्ताऽपि न ॥ १८३ ॥

कल्याणानि पदे पदे सुखमपि स्वामिंस्त्वदाराधने
सिद्धानामपि सिद्धिदं बहुविधाभीष्टप्रदानोन्मुखम् ।
नित्यं शङ्करभावलिङ्गमधुना सिद्धिप्रदं जातम-
प्यग्रे सिद्धिकरं करोति सततं सिद्धिप्रसिद्धिं प्रभो ॥ १८४ ॥

शेषाशेषफणामणिस्फुरदुरु श्रीकण्ठकण्ठ प्रभो
गङ्गा तुङ्गतरङ्गति क्वचिदयं लिङ्गैकदेशे पुनः ।
आनीला यमुना तरङ्गति पुनः सा वाक् तरङ्गत्यहो
सा वाचां विषयो भवत्यपि कथं श्रीनीलकण्ठ प्रभो ॥ १८५ ॥

लिङ्गं मङ्गलदं मनोरथततिं तावत् तनोत्यादरात्
आदौ दृष्टमदृष्टभेदजनकं सृष्टं विसृष्टं फलम् ।
तद्भक्तप्रणतं प्रपश्यति मुहुः चिन्तासमालिङ्गितं
ध्यातं पूजितमप्यनन्यसदृशं देयं किमस्तीत्यपि ॥ १८६ ॥

अन्यालोकनदूनमस्य नयनांभोजं मदालोकन-
प्रेमाविष्करणप्रभाकरसमुत्फुल्लं किमस्मै मया ।
दातव्यं भुवनत्रयेऽपि न तथा भूतं फलं दृश्यते
धर्माद्यर्थचतुष्टयान्यदधिकं देयं न दृष्टं फलम् ॥ १८७ ॥

शाठ्येनाप्यथ माययापि सकृदप्यालोकितं दैवतं
सर्वाभीष्टफलप्रदत्वमभवत् यद्भावलिङ्गस्य मे ।
तस्यैतस्य किमस्ति देयमसकृत् सानन्दमालोकने
शैवायेत्यतिचिन्तया परमिदं कालं नयत्यन्वहम् ॥ १८८ ॥

यः पश्यत्यसकृन्मुदा परमिदं मे भावलिङ्गं प्रगे
भक्त्या तद्वशतामुपेत्य निवसाम्यन्यन्न कृत्यं च मे ।
तस्यास्मिन्नधमर्णतामुपगते मय्यप्यदेये स किं
कर्तुं पारयतीति पापविमुखश्चिन्ताब्धिमध्यं गतः ॥ १८९ ॥

धर्माद्यर्थचतुष्टयाधिकफलापेक्षा न भक्तस्य मे
यद्यप्यस्ति तथाप्यनन्यसदृशं किं न प्रदेयं फलम् ।
मत्पूजानिरताय तन्मम न चेत् किं देयमित्यन्वहं
चिन्तासिद्धिसमृद्धिरेव बहुधा मत्पूजनाभ्युच्चये ॥ १९० ॥

यत्किंचिज्जलमल्पमप्युपहृतं भक्त्या विनाप्यर्पितं
दास्यत्येव फलानि निर्मलजलैरासेचने किं फलम् ।
देयं कोमलबिल्वपल्लवनवाम्भोजादिभिः पूजने
किंवा देयमिति प्रशान्तिरहिता चिन्ता न जातापि किम् ॥ १९१ ॥

किंचिच्चेद् अपरिष्कृतान्नमपि मे दद्यात् तदा तत्फलं
स्वादस्वान्नपतित्वमुत्तममधुक्षीराज्यदध्यन्नदः ।
मह्यं किं फलमाप्नुयादिति न किं चिन्ताऽपि मे जायते
जाता वृद्धिपरम्परामुपगता सद्भावलिङ्गस्य मे ॥ १९२ ॥

दिव्यैः कुङ्कुमकेसरैर्मृगमदैः कर्पूरखण्डैर्नवैः
अन्यैरप्यतिगन्धसुन्दररसद्रव्यैः युतं चन्दनैः ।
दत्तं चेत् तुहिनान्वितं मयि तदा देयं मया किं फलं
शैवायेति विचारसागरमहाकल्लोलमालाकुलः ॥ १९३ ॥

यो नित्यं नवपट्टकूलवसनैः धूपैः प्रदीपैर्मुहुः
माणिक्याभरणार्पणेन विलसच्छत्रैस्तथा चामरैः ।

आदर्शैः ध्वजसंयुतैरपि महापूजां करोत्यादरात्
तस्मै किं मम देयमित्यनुदिनं चिन्ता निरन्ता न किम् ॥ १९४ ॥

यो भक्त्या प्रणतो निधाय धरणीपृष्ठे शिरः सादरं
तं देवाः प्रणमन्ति तावदसकृत् दण्डप्रणामोद्यताः ।
किं तावत्फलमाप्नुयादिति न किं चिन्ताऽपि मे जायते
गन्धाधिष्ठितभावलिङ्गनिलये वेदप्रमेये मयि ॥ १९५ ॥

यो भक्त्या नियतः प्रदोषसमये पञ्चामृतैर्निर्मलैः
नीरैरप्यभिषिच्य वस्त्रविमलश्रीचन्दनालेपनैः ।
पुष्पैश्चम्पकमालिकाभिरभितः श्रीभावलिङ्गार्चनं
कृत्वा नृत्यति तन्मनस्यनुदिनं वृत्तिर्हि मे चिन्तया ॥ १९६ ॥

रुद्राध्यायसहस्रनामपठनैः मत्सन्निधाने नयेत्
यः कालं स विभूतिपूतहृदयो मुक्तो महापातकैः ।
स्यादित्यत्र किमद्भुतं शिवमनुस्मृत्याऽपि तत्सन्निधिं
यास्यत्याप्ततमत्वमेष्यति न सन्देहोऽत्र चित्रं च किम् ॥ १९७ ॥

मां द्रष्टुं यदि जायते मतिरपि प्रातः प्रमोदान्वितो
मुक्तः पापगणैरपारसुकृतैः युक्तः स मां पश्यति ।
आधारः सुखसंपदामपि भवत्यायुः परं प्राप्नुयात्
आरोग्यं निगमागमादिविहितं श्रीभावलिङ्गार्चने ॥ १९८ ॥

यो मद्भक्तपदार्चकः सकृदपि प्राप्नोति शैवं पदं
मत्पूजानिरतो भवेद्यदि तदा वक्तव्यमत्रास्ति किम् ।
तस्मादन्वहमर्चनीयममलं श्रीभावलिङ्गं गणैः
आराध्यं तदनन्यसक्तमनसा सन्त्यज्य धर्मान्तरम् ॥ १९९ ॥

किं तैरध्वरकोटिभिर्बहुविधद्रव्यापहारोद्यतैः
दानैः सामपदक्रमादिसहितैः किं वेदपारायणैः ।
किं योगैस्तपसाऽपि किन्तु सकृदप्यश्रद्धयाऽप्यर्चितं
दास्यत्येव हि भावलिङ्गममराः प्राप्यातिभाग्यान्यपि ॥ २०० ॥

श्रीमृत्युञ्जय भावलिङ्गनिलयापायामयानां लयः
त्वन्नामस्मरणोद्यमे सति परं वृत्तः पुनस्तद्भयम् ।
न स्वप्ने प्रलयेऽपि नापि मरणेऽप्यस्यान्तकाद्वा भयं
तेनेत्थं दृढनिश्चये सति फलं किं नामसंकीर्तने ॥ २०१ ॥

भो शंभो भव भावलिङ्गनिलय त्वत्पूजनोद्योगिनं
लक्ष्मीस्तावदुपेत्य किं तव मतं वांछाऽस्ति ते कुत्र वा ।
अक्लेशाङ्गणरिङ्खणप्रणतिभिः स्थेयं मया त्वद्गृहे
स्वामिन्नित्यपधावतीति भगवन् किं किं फलं पूजने ॥ २०२ ॥

त्वत्पूजानिरतातिशांकरपुरद्वारेषु तावत् सुराः
सानन्दाञ्जलिमस्तकाः प्रतिदिनं तद्दर्शनाकांक्षया ।
तिष्ठन्त्यत्र किमद्भुतं त्वयि महादेवे प्रसन्ने फलं
किं किं नास्य भविष्यति प्रतिदिनं श्रीभावलिङ्गालये ॥ २०३ ॥

आशास्यं मम भावलिङ्ग सकलं सिद्धं त्वदन्याश्रयं
व्यावृत्तं यदि मानसं तदिति ते ध्यानेन किं पूजया ।
किं वा त्वत्परिचर्ययापि फलमित्यस्मिन् विचारे कृते
तावद्व्याकुलता न ते भवतु सा त्याज्येति संप्रार्थ्यते ॥ २०४ ॥

एतावद्वद भावलिङ्गनिलय स्वामिन् ममाद्यावधि
त्वत्पादाम्बुरुहान्यचिन्तनपरावृत्तं विकारैर्विना ।
चेतस्तत्पुरुषार्थभिन्नमपि ते देयं ममास्त्वित्यपि
प्रत्याशा शिवपूजनस्य फलमस्त्यन्यन्मम स्यादिति ॥ २०५ ॥

किं नम्रामरभूरुहैः निजगृहद्वाराश्रितैराश्रितैः
किं चिन्तामणिकामधेनुनिवहैः किं वा निधीनां गणैः ।
आकल्पं कमलापतिप्रभृतिभिः वृन्दारकैराश्रितैः
आनम्राञ्जलिमस्तकैरनुदिनं श्रीभावलिङ्गार्चने ॥ २०६ ॥

इति स्तुत्वा मुहुर्भक्त्या भावलिङ्गालयं प्रभुम् । कृताञ्जलिपुटो नित्यं तत्पूजानिरतो भवेत् ॥

पुनःपुनस्तद्गुणवर्णनेन कालं नयन् कालभयं विहाय ।
तं कालकालं विमलं सलीलं पश्यन् मुहुः स्थास्यति तत्समीपे ॥ २०८ ॥

त्यज त्यज तटिन्नटीविटवधूटिकाचेटिकाविकारकरमिन्दिरासुचिरभूविहारं परम् ।
भजाशु भज धूर्जटिं पटुकपीटयोनिस्फुरल्ललाटपटलप्रभासमभिभूतभानुप्रभम् ॥ २०९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे ऋषिगौतमसंवादे तीर्थोत्तर भावलिङ्गमहिमानुवर्णनं नाम षट्त्रिंशोऽध्यायः ॥

——o——

## अथ सप्तत्रिंशोऽध्यायः ।

नारदः —

इति तद्वचनं श्रुत्वा गौतमं मुनिपुङ्गवम् । पुनरूचुः प्रहृष्टास्ते भावलिङ्गमहोत्सवम् ॥ १ ॥

ऋषयः —

स्वामिन् तीर्थेशनिर्माल्यचन्दनाराधने मतिः । कथं तस्याभवत् तत्र लिङ्गबुद्धिरभून्मुने ॥ २ ॥

गौतमः —

विश्वासो यत्र भक्तस्य यत्र पूज्यत्वधीरपि । तदेव लिङ्गं तत्पूज्यं सर्वसिद्धिप्रदं भवेत् ॥ ३ ॥
यदेव लिङ्गसंबन्धघनचन्दनगोलकैः । तत्रार्पितं बिल्वपत्रं भुक्तिमुक्तिप्रदं न किम् ॥ ४ ॥
अनुलिप्तं चन्दनाद्यैः लिङ्गमभ्यर्चयेदिति । श्रुतिश्चन्दनसंबन्धं न दूरीकर्तुमिच्छति ॥ ५ ॥
समर्पितेषु पुष्पेषु पुनः पुष्पसमर्पणम् । पुष्पेषु क्रियते तेषु पुनः पुष्पसमर्पणम् ॥ ६ ॥
भावलिङ्गं तु भावेन शुद्धभावेन निर्मितम् । तत्रार्चनं कृतं तेन स्वसिद्ध्यै तद्भविष्यति ॥ ७ ॥
ततस्तद्भावलिङ्गस्य भावपूर्वार्चनेन तु । भवत्येव महद्भाग्यं स्वस्वभावानुरोधतः ॥ ८ ॥
तद्भावलिङ्गे दृष्टेऽपि तुष्टिर्वृष्टिर्भविष्यति । [1]पुष्टिर्वृष्टिश्च तेनैव शुभवृद्धिर्भविष्यति ॥ ९ ॥
अयं तीर्थेश्वरस्तत्र भावलिङ्गे मनोहरे । तत्कृतं पूजनं सर्वं स्वीकरिष्यति सादरम् ॥ १० ॥
तीर्थेशलिङ्गनिर्माल्यं चन्दनं च समर्पितम् । ददाति सिद्धिं तल्लिङ्गं तीर्थेशाधिष्ठितं यतः ॥ ११ ॥
तीर्थेश्वराभिमानस्तु स्वनिर्माल्येष्वविच्युतः । ततस्तदभिमानस्य निलयं लिङ्गमुत्तमम् ॥ १२ ॥
अस्य देवाधिदेवस्य तीर्थेशस्यावलोकनात् । स्मरणादपि सिद्ध्यन्ति फलानि विविधान्यपि ॥ १३ ॥
तीर्थेशनिकटे यत्तु तीर्थं पापविनाशनम् । तदीक्षणात् पापनाशः स्नानात् सिद्धिमवाप्नुयात् ॥

---

1 कोष्टान्तर्गतमर्धद्वयं C कोशे नास्ति E कोशे उपलभ्यते ।

तत्तीरे यस्तनुत्यागं तीर्थेशस्मरणोत्सुकः । करिष्यति स पुण्यात्मा याति तीर्थेशरूपताम् ॥ १५ ॥
इदं पाशुपतस्थानं महापाशुपताश्रितम् । तत्राधिकारः शैवानां वासो नान्यस्य सर्वथा ॥ १६ ॥
अत्र पाशुपते मुक्तिः प्राप्ता पूर्वं महात्मभिः । अग्रेऽपि मुक्तिः प्राप्तव्या महापाशुपतैरिह ॥ १७ ॥
इति तद्वचनं श्रुत्वा मुनयो हृष्टमानसाः । किं वा प्रात्ययिकं कर्म द्विजानामिति चोचिरे ॥ १८ ॥

गौतमः —

अरुणोदयवेलायामुत्थाय शिवचिन्तकैः । दूरे शौचादिकं कृत्वा स्नात्वा पापविनाशने ॥ १९ ॥
उद्धूल्य भस्मनाङ्गानि मन्त्रपूतेन भस्मना । त्रिपुण्ड्रधारणं कार्यं तथा रुद्राक्षधारणम् ॥ २० ॥
पश्चादाचमनं कुर्यात् श्रुतिमार्गेण सादरम् । श्रौतमार्गरतानां तु श्रौतमाचमनं स्मृतम् ॥ २१ ॥
भवादिभिस्त्रिराचामेत् परित्यज्य त्रिरम्बुना । उपस्पृश्य सकृन्नीरं शिरः सम्यक् स्वचक्षुषा ॥
नासिके च तथा श्रोत्रेष्वालभ्य हृदयं ततः । सव्यपाणिप्रोक्षणं च प्रोक्षणं पादयोरपि ॥ २३ ॥
पञ्चाक्षरेण वा कुर्यात् तत्तदङ्गाभिमर्शनम् । आपोहिष्ठादिभिः कुर्यात् शिवमन्त्रैस्तु मार्जनम् ॥
स्वाहान्तेन पिबेदम्बु तत् प्रधानमिति श्रुतम् । अर्घ्यप्रदानं कृत्वान्ते गायत्रीजपमाचरेत् ॥ २५ ॥
ततः परं बिल्वपत्रैः दिव्यतीर्थोदकैः शुभैः । गन्धपुष्पादिभिर्द्रव्यैः कुर्यात् तीर्थेश्वरार्चनम् ॥ २६ ॥
प्रदक्षिणनमस्कारान् कृत्वा भक्त्या पुनः पुनः । पञ्चाक्षरजपं कुर्यात् ध्यात्वा शङ्करमादरात् ॥
होमस्ततः परं कार्यो वैश्वदेवश्च सादरम् । वैश्वदेवेऽपि ये मन्त्राः स्वाहान्तास्ते भवादयः ॥ २८ ॥
भवाद्याः स्युश्च देवान्ताः ते त्वष्टौ मनवः स्मृताः । तथा भवस्य देवस्येत्याद्यास्त्वष्टौ श्रुतिश्रुताः॥
तैः कृत्वा बलिदानं च तदग्नावेव तैरपि । आवहन्तीति मन्त्रेण होमं कुर्यात् प्रयत्नतः ॥ ३० ॥
पश्चात् तत्राहुतिर्देया पितृभ्योऽपि स्वधाऽस्त्विति । एवं प्रत्याहिकं कर्म प्रातः कालीनमास्तिकैः ॥
मध्याह्नेऽपि पुनः स्नात्वा कर्तव्यं शिवपूजनम् । उक्तेनैव प्रकारेण सायं च शिवपूजनम् ॥ ३२ ॥
आसायमप्रमादेन प्रातरारभ्य सादरम् । नित्यं शिवार्चनं कार्यं बिल्वपत्रादिसाधनैः ॥ ३३ ॥
जलैः पत्रैः फलैरन्नैः पुष्पैर्दूर्वाङ्कुरैरपि । पूजयेद्गिरिजाकान्तमप्रमादेन नित्यशः ॥ ३४ ॥
एवं संपूज्य यत्नेन बिल्वपत्रादिभिः शिवम् । नयन्ति कालं विमलाः शिवपूजनतत्पराः ॥ ३५ ॥
यो नित्यव्रतकी तेन शिवो नाभ्यर्चितः परः । तदन्यैरर्चितो नित्यं ते सर्वेऽप्यधिकारिणः॥ ३६ ॥
इति तद्वचनं श्रुत्वा तमूचुर्मुनयस्तदा । नित्यव्रतकिनः के वा वद तान् मुनिपुङ्गव ॥ ३७ ॥

गौतमः —

त्रिपुण्ड्रधारणं त्यक्त्वा श्रौतं सर्वार्थसाधकम् । यैस्त एव दुराचाराः नित्यव्रतकिनः स्मृताः ॥ ३८ ॥

नित्यसूतकिनां गेहे जलं यः पातुमिच्छति । सोऽपि तत्समतां याति निन्द्य एव तथैव सः ॥
श्रौतकर्मणि नाशौचं अश्रौतेऽति क्वचित् भवेत् । श्रौतकर्मपरित्यागः सूतकेऽपि न सर्वथा ॥४०॥
श्रौते कर्मणि तत्काले स्नातः शुद्धिमवाप्नुयात् । कदापि न परित्याज्यं श्रौतं कर्म शिवार्चनम् ॥
यावज्जीवश्रुतिस्तेन प्रबला तेन सूतकम् । तिरस्कृतं भावनाऽपि तन्न गृह्णाति सूतकम् ॥ ४२ ॥
श्रौतहोमेषु सर्वेषु शिवार्चनसमो विधिः । न चाग्निहोत्रहोमस्य परित्यागोऽपि सूतके ॥ ४३ ॥
दर्शस्य पौर्णमासस्य शिवलिङ्गार्चनस्य च । प्रमादात् सूतके त्यागं कुर्वन् नरकमश्नुते ॥ ४४ ॥
प्राणप्रयाणकाले तु स्वस्य शक्तिर्नचेत् तदा । करणीयं प्रयत्नेन पुत्राद्यैः शिवपूजनम् ॥ ४५ ॥
एतस्मिन् श्रौतधर्मेऽपि शिवलिङ्गार्चने श्रुते । कलौ पापात्मनां बुद्धिर्न भविष्यति सर्वथा ॥ ४६ ॥
पुरा शप्ताः शिवाचारनिरतैः शांभवैः द्विजाः । तेन शापेन भक्तिस्तु न कलौ शङ्करार्चने ॥४७॥

ऋषयः —

द्विजाः कथं वा तैः शप्ताः शांभवाग्रेसरैर्मुने । अश्रद्धा कथमेतेषां जाता शङ्करपूजने ॥ ४८ ॥

गौतमः —

दक्षप्रजापतिः पूर्वं यागारम्भं चकार सः । तदानीमागताः सर्वे मुनयः शौनकादयः ॥ ४९ ॥
देवाः समागतास्तत्र गन्धर्वाश्चारणा अपि । सिद्धाः समागतास्तत्र तदन्ये कपिलादयः ॥ ५० ॥
दीक्षां गृहीत्वा दक्षोऽपि सर्वसौभाग्यसंयुतः । सुरैः सदःस्थैरिन्द्राद्यैः सह सन्तोषमाप सः ॥ ५१ ॥
तदानीं पार्वती प्राह कैलासनिलयं शिवम् । अतिप्रसन्नवदनं देवानामपि शासकम् ॥ ५२ ॥

पार्वती —

भगवन् दीक्षितो यागे दक्षो यक्षादिभिः सह । तद्यागदर्शनापेक्षा ममाभूदधुना प्रभो ॥ ५३ ॥
इति तद्वचनं श्रुत्वा कालकालो महेश्वरः । प्राह गम्भीरया वाचा कल्पान्तघनसन्निभः ॥ ५४ ॥
यागस्तेन समारब्धः स्वनाशाय दुरात्मना । का तदालोकने प्रीतिस्तां प्रीतिमुपसंहर ॥ ५५ ॥
अयाज्ययाजकाः सर्वे नाशमेष्यन्ति ते शिवे । तत्पदस्योपसंहारो भविष्यत्यद्य सर्वथा ॥ ५६ ॥
कल्पावसानकालोऽयं यस्मिन् काले [1] दुरात्मनाम् । नारायणादिदेवानां नाशः संभावितः शिवे ॥
किं जानास्यपि तन्नाशे कारणं किंचिदुच्यते । मयि द्वेषः समुत्पन्नो दक्षस्यापि दुरात्मनः ॥५८॥
तन्नाशालोकनायाद्य गन्तव्यमिति धीरपि । न कर्तव्या त्वया गौरि गणनीयः स किं शिवे ॥

---

1 इतः परं 'मयि द्वेषः समुत्पन्नो दक्षस्यापि दुरात्मनः' इत्यर्धमकं C कोशे तत् E कोशे नोपलभ्यते ।

एतादृशाः कति शिवे न सन्ति भुवि दीक्षिताः । किं ते तत्प्रेक्षणायापि गमनायोद्यमो भवेत् ॥
तन्नाशकौतुकं द्रष्टुं यद्यपेक्षा तवाम्बिके । तर्हि सृष्टिं कुरुष्वाद्य कामिन्याः काममादरात् ॥ ६१ ॥
इत्युक्ता सा महेशेन ससर्ज रमणीं तदा । रमणीयां स्वानुरूपां स्वचिह्नपरिवेष्टिताम् ॥ ६२ ॥
नानालक्षणसंपन्नां नानाभरणभूषिताम् । तामुवाच तदा गौरी दक्षयागं प्रति त्वया ॥ ६३ ॥
गन्तव्यं तत्र गत्वा तु कौतुकं पश्य सादरम् । इत्युक्ता सा तदा गौर्या ययौ कामस्वरूपिणी ॥
विमानवरमारुह्य दासीकोटिनिषेविता । गणकोटिसमाकीर्णा छत्रकोटिसमाश्रिता ॥ ६५ ॥
सा यदा चलिता तत्र महोत्पातानि कोटिशः । जातानि तानि दृष्ट्वा ते सर्वेऽपि भयसंवृताः॥६६॥
अग्निवृष्टिरभूत् तत्र परितो यागमण्टपे । सर्पवृष्टिरभूत् भूयः क्रोष्टारश्च ववाशिरे ॥ ६७ ॥
गृध्रछायासमाक्रान्ता यागभूः परितो द्विजाः । तदा लोहितवृष्टिश्च मांसान्त्रादिसमन्विता ॥ ६८॥
कण्टकानामभूद्वृष्टिः पुरीषक्रिमिसंयुता । रेतःसमन्विता साऽभून्मूत्रेणापि समन्विता ॥ ६९ ॥
एतादृशमहोत्पातसहस्राणि विलोक्य ते । अभूतपूर्वैरुत्पातैर्भयमाजग्मुरास्तिकाः ॥ ७० ॥
सकम्पाः स्वेदधाराभिः आवृताः शुष्कतालुकाः । अतः परं किमस्माभिः कर्तव्यमिति विह्वलाः ॥
तदानीमागता सापि नारी गौरीविनिर्मिता । तामालोक्य मुदं प्रापुः भवानी सेति विभ्रमात् ॥
तां दृष्ट्वा ते सुराः सर्वे प्रणम्य च मुहुर्मुहुः । दक्षमाहुः प्रयत्नेन पूजनीयेति सत्वरम् ॥ ७३ ॥
ततः स नम्रवदनो लज्जया परया युतः । अभ्युत्थानादिकं कर्म न चकार विशेषतः ॥ ७४ ॥
तदानीं मुनयः सर्वे तां प्रणम्य मुहुर्मुहुः । स्तुत्वा कृताञ्जलिपुटाः विनयेन नताननाः ॥ ७५ ॥
इयमेव हि कल्याणी भवानी भक्तवत्सला । इयमेव परा विद्या परमानन्ददायिनी ॥ ७६ ॥
सौभाग्यजननी सेयं सर्वसौभाग्यदायिनी । यत्प्रसादेन जीवाम नन्दाम शरदः शतम् ॥ ७७ ॥
सेयं भाग्यवशात् दृष्टा दुरदृष्टविनाशिनी । कष्टापहरणोद्युक्ता सन्तुष्टा वीक्षणादिभिः ॥ ७८ ॥
नारायणाद्याः सर्वेऽपि यत्पादाम्बुजरेणुभिः । सृष्टाः सेयं महागौरी शरणागतवत्सला ॥ ७९ ॥
नमो गौर्यै महागौर्यै भवान्यै प्रणता वयम् । प्रणता सा हि गिरिजे विज्वरान् कुरु सादरम् ॥
यत्कोपाम्बुधिलेशोऽयं ज्वरः सर्वापहारकः । तां नताः स्म वयं सर्वे दुर्गे दुर्गार्तिहारिणीम् ॥
अरुणप्राणसंहारकारणे कमलानने । भीमे देवि नमस्तुभ्यं भयानि हर सर्वथा ॥ ८२ ॥
वैप्रचित्तमहाघोरशरीरौघनिवर्हणे । श्रीरक्तदन्तिके गौरि नमस्तुभ्यं नमो नमः ॥ ८३ ॥
महामाये महादुर्गे मधुनाशनकारिणि । नमस्तुभ्यं नमस्तुभ्यं भयं संहर संहर ॥ ८४ ॥
कैटभप्राणहरणप्रवीणे शिववल्लभे । नमस्तुभ्यं नमस्तुभ्यं पीडां संहर संहर ॥ ८५ ॥

शाकम्भरि जगद्वन्द्ये शशांकललितालके । नमस्तुभ्यं नमस्तुभ्यं शङ्कातङ्कानि संहर ॥ ८६ ॥

उन्मत्तमहिषारातिगर्वसंहारकारणे [1] । नमस्तुभ्यं नमस्तुभ्यं आपन्नार्तिहरोद्यमे ॥ ८७ ॥

सेतुभूपालसंहारप्रवीणे [2] चण्डलाम्बिके । नमस्तुभ्यं शिवेशानि त्वयि भक्तिं प्रयच्छ नः ॥ ८८ ॥

नमस्ते जगदाधारे भवभारविनाशिनि । नमस्तुभ्यं नमस्तुभ्यं परमानन्दरूपिणि ॥ ८९ ॥

इति स्तुतिपरान् दृष्ट्वा मुनीन् दक्षो विचक्षणः । दुरदृष्टकृतामर्षात् उवाच वचनं द्विजाः ॥ ९० ॥

दक्षः —

अलं स्तुतिभिरेताभिरेतदुत्पातनाशकम् । चिन्तनीयं किमेतस्य कारणं वा वदन्तु वः ॥ ९१ ॥

ऋषयः —

शृणु दक्ष विरूपाक्षं दीक्षितानां सतां गतिम् । विरूपाक्षमनभ्यर्च्य धर्मं कुर्वन्ति के नराः ॥९२॥

नाराधितो महादेवस्त्वया भक्तेष्टदायकः । अत एव समुत्पन्ना महोत्पातपरम्परा ॥ ९३ ॥

महादेवमनभ्यर्च्य यः कर्मान्तरतत्परः । तस्य नाशो भवत्येव तत्कुलस्यापि सर्वथा ॥ ९४ ॥

दाता यागफलस्यापि शिव एव तथा सति । तमनभ्यर्च्य संप्राप्तं फलं केन महीतले ॥ ९५ ॥

दुर्भगानां महादेवपूजायां न गतिर्भवेत् । अत एव वृथा कर्म न फलाय प्रजायते ॥ ९६ ॥

स्मृत्वा वा सकृदाराध्यं गौरीरमणमव्ययम् । दुर्लभान्यपि सर्वाणि फलानि प्राप्नुवन्ति ते ॥९७॥

फलानि यानि यैर्धर्मैः प्राप्यन्ते स्वगुणैः सदा । तानि सर्वाणि लभ्यन्ते केवलं शङ्करार्चनात् ॥

शङ्करानर्चनेनापि फलं यः प्राप्तुमिच्छति । स वृष्ट्यापि विना धान्यमुत्पादयितुमिच्छति ॥

को वा शिवमनाराध्य शिवं संप्राप्तुमिच्छति । [3]अविवेकेन मत्तं त्वामृते मृतिभयातुरम् ॥

कः सर्वमङ्गलाकान्तं कृतान्तान्तकमादरात् । अनभ्यर्च्य शिवं प्राप्य मोदते दक्ष तद्वद ॥ १०१ ॥

कः सर्वमङ्गलाक्रान्तं नितान्तं शान्तमादरात् । सदारं धीरमाराध्यमाराध्य न शिवं व्रजेत् ॥

पुण्यानां परिपाकेन बहूनामेव केवलम् । भक्तिर्भवे भवत्येव बहुभाग्यवतां नृणाम् ॥ १०३ ॥

दुर्लभा भक्तिरीशाने सौभाग्यपरिपाकजा । सा तु भाग्यवतामेव केषाञ्चित् खलु जायते ॥१०४॥

अनन्तजन्मभिर्येन पुण्यराशिः समार्जितः । तस्यैव तावद्भक्तिः स्यात् भवे भवविमोचके ॥१०५॥

---

1 लक्षणे E

2 इतः परं 'नमस्तुभ्यं महादेवि सर्वरोगविनाशिनि । भ्रमराम्बे नमस्तुभ्यं शम्बरारिविनाशिनि' इत्यर्धद्वयमधिकं C कोशे ।

3 अविवेकिनमेकं त्वां D स्वविवेकिनं E.

देवान्तराराधनेन त्यक्तशङ्करपूजनैः । न लभ्यते फलं नूनं महद्वा स्वल्पमेव वा ॥ १०६ ॥
शक्तिरीशप्रसादेन सत्कर्मकरणक्षमा । शिवप्रसादविरहे सा शक्तिरतिदुर्लभा ॥ १०७ ॥
तवापि कुण्ठिता शक्तिः शिवानभ्यर्चनादिह । को वा समर्थो देवेषु प्राप्तापत्कुलवारणे ॥
आपत्परम्परा सेयं हरानर्चनतोऽधुना । न दृष्टा सेयमुन्मादात् अहङ्कारेण च त्वया ॥ १०९ ॥
दुष्टैर्दुरभिमानेन न शिवाराधने फलम् । कथं प्राप्या तृषां शान्तिः लोके किं मृगतृष्णया ॥
महादेवेऽप्यहंकारं कृत्वा जीवितुमिच्छति । यस्तं ज्वलनसन्दग्धं मृतमेव हि मन्महे ॥ १११ ॥
अहङ्कारः कृतः पूर्वं महारुद्रे दुरात्मभिः । ते सर्वे निरयं प्राप्ताः कुम्भीपाके वसन्ति हि ॥ ११२ ॥
यस्माद्वातोऽपि भीतः सन् वाति सूर्योऽपि चन्द्रमाः । उदेति तं महादेवं भजन्ति भवभीरवः ॥
शरीरं तस्य भाराय केवलं परिकल्पितम् । न यस्य शङ्करे भक्तिः क्षणार्धं क्षणमेव वा ॥ ११४ ॥
तस्यैव जीवितं धन्यं जन्म संप्राप्य तेन वा । पूजितो गिरिजाकान्तः कृतान्तान्तक एव सः ॥
अधुनाऽपि महेशाने तव भक्तिर्न जायते । अत एव हि दौर्भाग्यं तवाद्याप्यनुवर्तते ॥ ११६ ॥
भक्तिर्न सहसा तावदुमाकान्ते प्रजायते । दुरदृष्टविनष्टानां नराणां दुष्टकर्मणाम् ॥ ११७ ॥
बहवोऽपि भविष्यन्ति मृतकल्पाः कलावपि । किं तैर्वम्भरसङ्काशैः अधर्मनिलयैरपि ॥ ११८ ॥

तस्यैवामितपुण्यकोटिघटितं जन्मेति मन्यामहे
यस्यान्तःकरणं क्षणार्धमपि वा विश्वेश्वराराधने ।
व्यासक्तं विगतस्पृहं तदितरामर्त्याय जन्मापि वा
व्यर्थं व्यर्थमिति श्रुतं श्रुतिशतैरश्रान्तमेव ध्रुवम् ॥ ११९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे दक्षाध्वरप्रशंसायां दक्षर्षिसंवादे
शिवोत्कर्षवर्णनं नाम सप्तविंशोऽध्यायः ॥

---

## अथ अष्टाविंशोऽध्यायः ।

---

नारदः —

इत्युक्तमुनिवाक्यानि श्रुत्वा दक्षः पुनः पुनः । विनाशकरयोग्यानि वचनान्याह सत्वरम् ॥ १ ॥

दक्षः —

दक्षः प्रजापतिः सोऽहं मत्तः सर्वं प्रवर्तते । ममापि रुद्रः किं पूज्यः त्रिशूली सर्पसंवृतः ॥ २ ॥

इत्युक्तं तद्वचः श्रुत्वा मुनयः क्रोधसंकुलाः । धिक् धिक् धिक् तव जन्मेति तमूचुर्दक्षमुद्धतम् ॥

मुनयः —

अपूज्यत्वमतिर्यस्य शङ्करे लोकशङ्करे । स मद्यपजचण्डालरेतःपातसमुद्भवः ॥ ४ ॥
यस्य भक्तिर्महादेवे न क्षणं वा प्रजायते । तन्माता जारिणी ज्ञेया सा मद्यपकुलोद्भवा ॥ ५ ॥
यस्याऽभक्तिर्महादेवे स पुल्कसमुद्भवः । स तावच्चण्डचण्डालकुले नित्यं प्रजायते ॥ ६ ॥
अपूज्यत्वं महादेवे यो मोहादपि संवदेत् । भित्त्वा तद्रसनामाशु विष्ठया पूरयेन्मुखम् ॥ ७ ॥
यया रसनया निन्दा कृता देवस्य शूलिनः । तज्जिह्वा मूत्रधाराभिरनुलिप्ता न लालया ॥ ८ ॥
इति पूज्यतमत्वेन सोमे सोमार्धशेखरे । तस्यैव पूज्यताधीः स्यात् चण्डचण्डालजस्य तु ॥ ९ ॥

धिक् धिक् च तन्मुखं धिग्धिक् धिग्धिक् तज्जननीमुखम् ।
यस्यापूज्यत्वधीर्जाता देवे पूज्यतमे शिवे ॥ १० ॥

एतावत्कालपर्यन्तं न दृष्टः शिवनिन्दकः । दृष्टस्त्वमेको दुष्टात्मन् धिग्धिक् तव मुखं क्षणात् ॥
प्रातरद्य मुखं दृष्टं कस्य दुष्टस्य येन ते । मुखं दृष्टं पापबुद्धेः शिवनिन्दाकरस्य ते ॥ १२ ॥
शिवनिन्दाविषज्वालामहाप्रलयवह्निभिः । शिवनिन्दकवंश्यानां विनाशोऽपि भविष्यति ॥ १३ ॥
अद्य त्वय्यनुरक्ता ये शिवनिन्दाकरे सुराः । तद्विनाशोऽद्य बहुधा भविष्यति न संशयः ॥ १४ ॥
अद्य तावदभाग्यं ते दुर्भगस्य दुरात्मनः । मनः शङ्करनिन्दायां प्रवृत्तं पापकर्मणः ॥ १५ ॥
किं ते कुलेन शीलेन शिवनिन्दापरस्य ते । जन्मनापि तवैतेन धिक् धिक् ते जन्म पापजम् ॥
शुनां वा रासभानां वा रेतसा केवलं जनिः । यस्य तस्येशनिन्दायां मतिर्भवति दुर्भग ॥ १७ ॥
प्रायस्त्वज्जननीयोनिः सिक्ता रासभरेतसा । तेन जातस्त्वमीशाननिन्दां कर्तुं समुद्यतः ॥ १८ ॥
यद्वा मद्यपचण्डालरेतसा जन्म ते ततः । अपूज्यत्वमतिर्जाता शिवे पूज्योत्तमोत्तमे ॥ १९ ॥
अन्योऽपि पूज्यः किं लोके यतः पूज्यतमः शिवः । तस्मिन्नपूज्यताबुद्धिर्महापापफलं खलु ॥

विनाशकाले विपरीतबुद्धिः भवत्यवश्यं विपरीतकालः ।
समागतः सोऽयमसंशयोऽत्र दुश्चिन्हसन्दर्शनमात्रहेतुः ॥ २१ ॥

को वा तवाप्यस्ति सुखस्य हेतुः संरक्षकः कस्तव नाशकाले ।
नूनं विरूपाक्षललाटवह्निज्वालाकुले ते पतनं च भावि ॥ २२ ॥

यैर्यैः श्रुता साऽपि महेशनिन्दा दावानलाभा मुहुरादरेण ।
तेषां विनाशोऽद्य भविष्यतीति भविष्यदर्थोऽप्यवधारितोऽत्र ॥ २३ ॥

नारायणेनापि तवास्ति सख्यं चतुर्मुखेनापि तयोस्तवापि ।
नाशो भविष्यत्यधुना स नाशो नूनं भवेल्लोचनगोचरोऽपि ॥ २४ ॥

वेदाः प्रमाणं यदि तर्हि सद्यः संभावितस्ते शिवनिन्दकस्य ।
नाशोऽप्यघोरामितयातनासु पातोऽपि तावत् सह ते सुहृद्भिः ॥ २५ ॥

एको विषाशी मरणं प्रयाति तस्माद्विषाज्जातिभयं परं तु ।
महेशनिन्दाविषतो भयं स्यात् तत् तत्कुलस्यापि विनाशकत्वात् ॥ २६ ॥

महेशनिन्दामितकालकूटकटाहकूटाप्रकटावनेन ।
न जीवनं वांछति कोऽपि लोके तत्र प्रविष्टः खलु नाशमेति ॥ २७ ॥

अखर्वगर्वस्तव शर्वनिन्दामहानलेनाशु विनाशमेतु ।
अतः परं किं तव जीवनाऽऽशा महेशनिन्दाविषपानपीते ॥ २८ ॥

महेशनिन्दाविषदोषलेशः श्मशानवासाय नरं सुरं वा ।
तं किन्नरं वा नरकालयं तं चिराय तावत् प्रकरोति किंन ॥ २९ ॥

दुष्टः शठो निष्ठुरभाषणश्च श्रीनीलकण्ठे भसितावगुण्ठे ।
न जीवितुं वांछति तुच्छवृत्तिः तस्य प्रवृत्तिर्मरणाय नूनम् ॥ ३० ॥

यं सर्वदेवोत्तममामनन्ति सर्वामराराधितपादपद्मम् ।
तन्निन्दया दुःखमहाम्बुराशितरङ्गमालाकुलिता भवन्ति ॥ ३१ ॥

त्वया दुराचाररतेन निन्दा कृता महेशस्य तथा तवाद्य ।
सद्यः सवंशस्य निरन्वयः स्यात् नाशः स नाशो निरयावसानः ॥ ३२ ॥

एतेषु कस्तिष्ठति रक्षकस्ते सुरेषु तेषामपि नाश एव ।
त्वत्सङ्गमादद्य भविष्यतीति प्राणप्रयाणावसरो हि तेषाम् ॥ ३३ ॥

ये ये महादेवविनिन्दकास्ते कल्पावसानेऽपि यमालयेषु ।
स्थित्वा स्वकीयैः सह सर्वदाऽपि स्वाक्रोशनैरेव नयन्ति कालम् ॥ ३४ ॥

येषां मुनीनां शिवनिन्दकेन सङ्गो भवेत् तत्कुलजास्तदीयाः ।
अशाम्भवत्वं समुपेत्य नाशं यास्यन्ति सर्वेऽपि यमालयेषु ॥ ३५ ॥

यमोऽपि यत्नेन महाग्निमालामशैवनाशाय परं चकार ।
तस्यां शिवाचारविनिन्दकानां वासो भविष्यत्यनुवेलमेव ॥ ३६ ॥

अद्यप्रभृत्याशु महेशनिन्दामहानलाघातविनष्टभावाः ।
भवे भवे शङ्करनिन्दयैव यमान्तिकं यान्तु नयन्तु दूताः ॥ ३७ ॥

इमानि वाक्यान्यपि कुम्भजादिमुनीश्वरोक्तानि सुराश्च सर्वे ।
श्रुत्वा सकम्पाः किमिहाद्य जातं इति प्रलापोपहतान्तरङ्गाः ॥ ३८ ॥

इति तद्वचनं श्रुत्वा गिरिजाप्रेषिताऽपि सा । शिवनिन्दावचः श्रुत्वा चिन्तया व्याकुला द्विजाः ॥
शिवनिन्दावचः श्रुत्वा यस्तु न व्याकुलो भवेत् । स चण्डालत्वमासाद्य नरकेषु पतिष्यति ॥
शिवनिन्दकसङ्गेन क्षणं वा योऽधितिष्ठति । स जारज इति ज्ञेयो नरकाय स कल्पितः ॥ ४१ ॥
पुरा नरकलोकेषु शून्येषु यमकिङ्कराः । समागत्य यमं प्राहुः अधिकारविवर्जिताः ॥ ४२ ॥

यमदूताः —

श्रीकालकालध्यानेन नयन्ति दिवसान् नराः । तेषां न पापसम्बन्धो भूतले दृश्यते यम ॥
शिवलिङ्गार्चनपराः शिवनामजपोत्सुकाः । शिवाचाररता एव सर्वे भूमण्डले यम ॥ ४४ ॥
भस्मोद्धूलितपूजाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः । रुद्राक्षमालाभरणाः सर्वेऽपि यम भूतले ॥ ४५ ॥
शिवलिङ्गार्चनं त्यक्त्वा न कोऽपि भुवि तिष्ठति । शाङ्गाङ्गसङ्गतिं दृष्ट्वा न कोऽपि यम भूतले ॥
बिल्वमूलेषु लिङ्गानि स्थापयित्वा मुहुर्मुहुः । पूजयन्ति प्रस्तुवन्ति प्रणमन्ति प्रयत्नतः ॥ ४७ ॥
बालकैरपि लिङ्गानि प्रार्थितानि प्रयत्नतः । पूज्यन्ते जलदूर्वाद्यैः पुष्पैर्नानाविधैरपि ॥ ४८ ॥
न पीतं न जलं बालैः शिवलिङ्गार्चनं विना । अन्नवार्ता कुतस्तेषां निद्रावार्ताऽपि दूरतः ॥ ४९ ॥
शिवलिङ्गार्चनं तेषां बालानां खेलनं खलु । तत्क्रीडया परं कालं नयन्ति खलु बालकाः ॥५०॥
ते बिल्वतरुमूलेषु स्वाङ्गणस्थेषु सर्वदा । लिङ्गार्चनानि कुर्वन्ति कोमलैर्बिल्वपल्लवैः ॥ ५१ ॥
सोष्णमन्नं सोपदंशं निवेद्यात्यन्तभक्तितः । शिवनैवेद्यमाघ्राय भुक्त्वा तिष्ठन्ति बालकाः ॥ ५२ ॥
तद्बिल्वतरुमूलानि दीपमालाप्रभागणैः । समन्वितानि सततं धूपमालाकुलान्यपि ॥ ५३ ॥
भस्मावगुण्ठनोत्साहाः सोत्साहाः शिवपूजने । शिवनामानुसन्धाननिर्धूताखिलकल्मषाः ॥५४॥
तादृशान् बालकान् दृष्ट्वा तेषां ताताश्च शाङ्कराः । शिवविद्याभ्यासनं च कारयन्ति मुहुर्मुहुः ॥
तेषां कन्याश्च दाराश्च शिवपूजनतत्पराः । कुर्वन्ति सततं भक्त्या भस्मनैवानुलेपनम् ॥ ५६ ॥
भस्मानुलेपनं त्यक्त्वा न तिष्ठन्त्येव ते सदा । रुद्राक्षमालाभरणा दारा बालाश्च बालिकाः ॥५७॥
[1] पाककालस्वेदनीतं त्रिपुण्ड्रं पुनरादरात् । त्रिपुण्ड्रधारणं कृत्वा पाकयताः पुनः पुनः ॥ ५८ ॥

1 पाककाले स्वेदनीतत्रिपुण्ड्राः D कोशे ।

पाककालेऽपि नामानि स्मृत्वा शैवानि सादरम् । गायन्ति तानगानेन प्रीणयन्ति सदाशिवम् ॥
पक्वान्नगन्धसम्बन्धो न घ्राणेष्वस्त्विति क्षणम् । निवेद्य गन्धमीशाने पाकागारे वसन्ति च ॥
यावदन्नं कृतं गेहे फलशाकसमन्वितम् । तावन्निवेद्य शर्वाय भुक्त्वा कालं नयन्ति ते ॥ ६१ ॥
प्रतिग्रामं महेशान महादेवेति वादिनः । महादेवध्वनिधुनीध्वनयः प्रतिमन्दिरम् ॥ ६२ ॥
चन्दनं चोत्तमं वासः शिवाय विनिवेदितम् । भक्त्या गृह्णन्ति शिरसा प्रणमन्ति स्तुवन्ति च ॥
रात्रौ दारविहारेऽपि हरनामानुकीर्तनम् । कुर्वन्ति हारास्ते दाराः परं हाराः स्वभावतः ॥ ६४ ॥
हाराङ्गनालिङ्गनेऽपि शिवलिङ्गं न विस्मृतम् । तदालिङ्गनजं सौख्यं शङ्कराय निवेद्यते ॥ ६५ ॥
हर स्मरहरापारगुणसागर शङ्कर । पाहि पाहीति दारास्ते स्मरन्ति सुरते हरम् ॥ ६६ ॥
ते धीरहारदाराङ्गं भूतिभासुरमादरात् । दुकूलाङ्कमिवालोक्य शिवं स्मृत्वा हसन्ति ते ॥ ६७ ॥
विहारयोग्यं यत् द्रव्यं तन्निवेद्य महेश्वरे । प्रसादबुद्ध्या ते सर्वे ते स्वीकुर्वन्ति यत्नतः ॥ ६८ ॥
हारनामानुसन्धानात् तद्दारैः प्रसवेष्वपि । वेदना नैव संप्राप्ता सा तेषामन्यदा कुतः ॥ ६९ ॥
जाते कुमारे तन्नाम शिव शङ्कर इत्यपि । कृत्वा भस्मानुलिप्तं तं कुर्वन्त्यत्र कुलाङ्गनाः ॥ ७० ॥
जातस्यापि शिशोस्तस्य विग्रहं भस्मभूषितम् । रुद्राक्षभूषितं कृत्वा कारयन्ति शिवार्चनम् ॥ ७१ ॥
शिशुहस्ते बिल्वपत्रं दत्वा लिङ्गस्य मस्तके । प्रच्यावयन्ति यत्नेन धृत्वांगुलिकुलं बलात् ॥ ७२ ॥
पश्चाज्जाताय बालाय स्तन्यमीशनिवेदितम् । प्रयच्छन्ति प्रयत्नेन शिवगानपुरःसरम् ॥ ७३ ॥
औषधं च न गृह्णन्ति तद्दाराः प्रसवेष्वपि । कृत्वा शिवार्चनं भक्त्या शिवतीर्थं पिबन्ति ते ॥
शिवतीर्थामृते पीते क्व सा प्रसववेदना । शिवभस्माङ्गसङ्गेन तन्नैवेद्याशनेन च ॥ ७५ ॥
ते जलं कालकालाय निवेद्य प्रसवक्षणे । पिबन्ति तेन प्रसवः सुखेनैव प्रजायते ॥ ७६ ॥
बिल्वच्छायासमाक्रान्तसदनेष्वेव सर्वथा । तिष्ठन्ति तेषां गमनं शिवयात्रार्थमेव हि ॥ ७७ ॥
श्रीशैलादिशिवस्थानालोकनप्रीतमानसाः । पुनन्ति भुवनान्याशु स्वालोकनरतान्यपि । ७८ ॥
चन्द्रमौलिस्वरूपेण दृश्यन्ते ते महोन्नताः । अशक्या खलु शेषस्याप्यहो तद्गुणवर्णना ॥ ७९ ॥
संचार एव भूलोके त्यक्तोऽस्माभिरतः परम् । तत्रास्मत्कृत्यवार्तापि यम सर्वात्मनापि न ॥ ८० ॥
महेशाराधनं त्यक्त्वा क्षणं वा निवसन्ति ये । ते तेषां शत्रवः काल निर्मलानां महात्मनाम् ॥
इति तद्वचनं श्रुत्वा यमः सन्तुष्टमानसः । दूतानाहाविलम्बेन भावि कार्यमिति द्विजाः ॥ ८२ ॥

यमः —

दक्षप्रजापतिर्नाम प्रजापतिरतः परम् । अशैवसुरसङ्कीर्णो यागदीक्षां करिष्यति ॥ ८३ ॥

स दक्षः स्वविनाशाय शिवनिन्दां करिष्यति। तत्सहायाः सुराः सर्वे करिष्यन्त्यनुमोदनम् ॥
[1]ततस्तेषां विनाशोऽपि भविष्यति न संशयः। ते सर्वे नरकेष्वेव पतिष्यन्ति न संशयः ॥ ८५ ॥
तैः पूरितमिदं भावि सर्वं नरकमन्दिरम्। स्वल्पैर्दिनैश्च तद्भावि तेनाविच्छिन्नयातना ॥ ८६ ॥
तैः प्राप्य निर्गमस्तेषां नरकान्न भविष्यति। ततो नरकवासेन दुःखिता एव ते सदा ॥ ८७ ॥
भविष्यन्ति ततस्तेषां न कोऽप्यत्रास्ति मोचकः। हा महेश्वरनिन्दायाः फलमेवमभूदिति ॥ ८८ ॥
आक्रोशनानि कृत्वैव स्थास्यन्ति नरकालये। शिवनिन्दां भ्रमेणापि यः करिष्यति तं नरम् ॥
पातयध्वं प्रयत्नेन कुम्भीपाके विशेषतः। इन्द्रो वाऽस्तु महेन्द्रो वा विष्णुरस्तु प्रजापतिः ॥ ९० ॥
शिवनिन्दानुरक्तश्चेत् पातयध्वं सुरौरवे। रौरवान्निर्गमस्तेषां कदापि न भविष्यति ॥ ९१ ॥
शिवनिन्दा परं तेषां रौरवावाससाधनम्। रौरवान्निर्गमस्तेषां कल्पान्तेऽपि न सर्वथा ॥ ९२ ॥
महारौरवसृष्टिश्च कृता पातयितुं सदा। शिवनिन्दाविषज्वालासमाकीर्णाः सुरा अपि ॥ ९३ ॥
पतिष्यन्त्येव सहसा महारौरवमण्डले। तदा नृत्यं प्रकुर्वन्तो भवन्तस्तान् सुरानपि ॥ ९४ ॥
पातयध्वं प्रयत्नेन कुम्भीपाके विशेषतः। कुम्भीपाकेऽपि नादूरे तन्निन्दा तन्मृतिस्तथा ॥ ९५ ॥
तेषामागमनं चात्र सर्वथा न विलम्बितम्। लोके तदनुरक्तानां अन्येषामपि सर्वदा ॥
भविष्यत्येव नरके यातना दुःसहा परम् ॥ ९६ ॥

एतानि तावदसकृत् शिवनिन्दकानां वासाय दुःखनिलयानि विनिर्मितानि।
स्थानानि नूनमिति निश्चितमेव दूताः तावत् कथञ्चिदपि यः समयोऽपि नेयः ॥ ९७ ॥

अस्माकं गिरिराजराजतनयाकान्तांघ्रिपङ्केरुह-
ध्यानानन्दसमुद्रमुद्रितमनोव्यापारसारात्मनाम्।
कल्पान्तेऽपि न दुःखमित्यनुदिनं तोषाम्बुधिर्वर्धते
तस्मात् कोऽपि सुधाकरः शिवकथानन्दात्मको जायताम् ॥ ९८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे दक्षाध्वरप्रशंसायां ऋषिकृतदक्षनिन्दावर्णने यम यमदूतसंवादो नाम अष्टत्रिंशोऽध्यायः ॥

—— o ——

[1] अत्र 'मुनयोपि करिष्यन्ति तथा तदनुमोदनं' इत्यर्धमधिकं C कोशे।

# अथैकोनचत्वारिंशोऽध्यायः ।

गौतमः —

एवमुक्तं मुनिवचः श्रुत्वा गौरीविनिर्मिता । नारी कलशयोनिं तं प्राह धर्मार्थकोविदम् ॥ १ ॥
शिवनिन्दा कृता येन तस्योक्ता यातना त्वया । तथा तदनुरक्तानां उक्ता सा मुक्तिवर्जिता ॥
दैवादपि श्रुता येन सा निन्दा पुण्यनाशिनी । सा दुःखहेतुभूतेति प्रतीकारोऽत्र कः श्रुतः ॥ ३ ॥
अश्रुतेऽपि प्रतीकारे कल्पनीयः कथञ्चन । तत्पात्रतानुरोधेन न युक्ता तदकल्पना ॥ ४ ॥
तद्प्राप्तिसत्रन्यायेन फलं कल्प्यमसंशयम् । अन्यथा तत्र तस्यापि न स्यादेव हि कल्पना ॥ ५ ॥
श्रुता सा शिवनिन्दा मे लग्ना शश्वदात्मनि । अतो गोत्रपरित्यागः कल्पनीयः प्रयत्नतः ॥ ६ ॥
वरमेव सुरापानं वरं गोमांसभक्षणम् । न वरं शिवनिन्दायाः श्रवणं पापकारणम् ॥ ७ ॥
वरं मद्यपसंसर्गो स्वर्णस्तेयं परं वरम् । न वरं .... ॥ ८ ॥
गुरुदाराभिगमनं केवलं वरमुच्यते । न वरं .... ॥ ९ ॥
वरं ब्राह्मणसङ्घातशिरश्छेदः कुलक्षयः । न वरं ... ॥ १० ॥
वरं राजकुलोच्छेदो राजस्त्रीसेवनं वरम् । न वरं ... ॥ ११ ॥
वरं यवनसंसर्गो यवनस्त्री निषेवणम् । न वरं ... ॥ १२ ॥
वरमश्वकुलच्छेदो वरं गोकुलनाशनम् । न वरं ... ॥ १३ ॥
वरं ब्राह्मणवित्तानां हरणं मरणं वरम् । न वरं ... ॥ १४ ॥
वरं पुल्कसजन्मापि पुल्कसस्त्रीनिषेवणम् । न वरं ... ॥ १५ ॥
वरं चण्डालजन्मापि चण्डालस्त्रीनिषेवणम् । न वरं ... ॥ १६ ॥
वरं रासभजन्मापि रासभस्त्रीनिषेवणम् । न वरं ... ॥ १७ ॥
वरं सूकरजन्मापि सूकरस्त्रीनिषेवणम् । न वरं ... ॥ १८ ॥
वरं शुनकजन्मापि शुनकस्त्रीनिषेवणम् । न वरं ... ॥ १९ ॥
वरं मलजलावासो रेतःपानं परं वरम् । न वरं ... ॥ २० ॥
वरमात्मशिरश्छेदोऽप्यन्ततो दुःखसाधनम् । न वरं ... ॥ २१ ॥
इत्युक्त्वा सा जहौ देहं महादेवं मुहुर्मुहुः । स्मृत्वा नत्वा योगमाया महामायाविनिर्मिता ॥
ततस्तन्नाशमालोक्य महारुद्रोऽपि मन्युना । ससर्ज वीरभद्राख्यं महाबलसमन्वितम् ॥ २३ ॥

वीरभद्रः समुत्पन्नः कोटिसूर्यसमप्रभः । अनन्तबाहुचरणग्रीवानेत्रविराजितः ॥ २४ ॥
अनन्तनक्रशस्त्राग्निकरमण्डलमण्डितः । अनन्तयोजनायामतनुकान्तिविराजितः ॥ २५ ॥
तं तादृशं विलोक्याशु घनगम्भीरया गिरा । क्रोधेनाह महादेवो वीरभद्रं विचक्षणः ॥ २६ ॥
गच्छ गच्छ प्रयत्नेन दक्षं संहर संहर । नारायणादिकान् हत्वा पुनरायाहि सत्वरम् ॥ २७ ॥
इत्याकर्ण्य वचः शम्भोः प्रणिपत्य पुनः पुनः । तदाज्ञां शिरसा धृत्वा ययौ नत्वा शिवामपि ॥
तमायान्तं समालोक्य दूरात् दक्षादयः सुराः । सकम्पाः शुष्ककण्ठाश्च भयाशनिसमाहताः ॥
किमद्भुतमिदं जातं प्रलयानलमण्डलम् । अनेन जगतां नाशो भविष्यत्यद्य सर्वथा ॥ ३० ॥
एतादृशं पुरा क्वापि न दृष्टं न भविष्यति । तद्देहतेजसा यातं तेजोमण्डलमद्भुतम् ॥ ३१ ॥
अनेककालकूटाग्निकूटमण्डलसन्निभम् । तज्जटाघातमात्रेण नक्षत्राणि पतन्त्यपि ॥ ३२ ॥
सूर्यचन्द्रप्रभा लीना खद्योततनुसन्निभा । तत्पादघातात् धरणी विदीर्णा सागराप्लुता ॥ ३३ ॥
महाप्रलयकालोऽयमधुना समुपागतः । अतः परं जीवनाशा विनाशमभियास्यति ॥ ३४ ॥
ऋषीणामपि यः शापो वृत्तः शङ्करनिन्दया । स एवायं किमायाति वह्निरूपेण सत्वरम् ॥ ३५ ॥
रे रे दक्ष दुराचार किमिदं पातकं कृतम् । श्रीमहादेवनिन्दा या सा विनाशाय जायते ॥ ३६ ॥
श्रीमहादेवनिन्दायाः प्रयत्नः कुलनाशकः । आहत्य निन्दा सा तावत् महाशनिकुलं परम् ॥
न महाशनिपीडापि प्रविशेत् गिरिगह्वरे । शिवनिन्दाशनिः क्वापि नाशैवान् परिमुञ्चति ॥ ३८ ॥
यदि पाताललोकेऽपि प्रयाति शिवनिन्दकः । तत्रापि तस्य नाशः स्यात् तन्निन्दाविषमण्डलैः ॥
एवं तेष्वनुतापेन पीडितेषु सुरेष्वपि । पुनरुत्पातसङ्घातः समभूत् भयसूचकः ॥ ४० ॥
ततः समागतः क्रूरो वीरभद्रोऽग्निलोचनः । तन्नेत्रज्वालया दग्धा यागशाला मनोहरा ॥ ४१ ॥
तन्निःश्वासैः समुद्भूताः गणाः संख्याविवर्जिताः । गणैः सहाभवद्युद्धं सुराणामतिदारुणम् ॥ ४२ ॥
ब्रह्मास्त्रमण्डलोत्पन्नो ज्वालाराशिस्ततः परम् । गणशस्त्रानलेनैव शान्तः खद्योतसन्निभः ॥ ४३ ॥
नारायणास्त्रज्वालानां मण्डलेनापि केनचित् । ज्वालामाला समुत्पन्ना सा गणास्त्रैर्निवारिता ॥
ततो विष्णुः समादाय गदां कौमोदकीमपि । युद्धायाभ्यागतः सोऽपि गणशस्त्रैर्निवारितः ॥
पश्चाद्गरुडमारुह्य शार्ङ्गमादाय सत्वरम् । युद्धायाभ्यागतश्चक्री तं दृष्ट्वा विस्मयं गताः ॥ ४६ ॥
गरुडस्थः स वेगेन तत्पक्षोत्थानिलेन च । चकम्पे धरणी सर्वा किमेतदिति विह्वला ॥ ४७ ॥
तं दृष्ट्वा वीरभद्रोऽपि क्रुद्धः प्राहातिभीषणः । दुरात्मन् नहि दुःशील विनाशस्ते समागतः ॥
मय्यप्यत्रागते शौर्यं त्वया किं वा प्रदर्शितम् । कालकूटस्य निकटे वृश्चिकः किं करिष्यति ॥

कोटिशो निहताः पूर्वं मया नारायणादयः। निरयं ते गताः सर्वे श्रीमहादेवनिन्दया ॥ ५० ॥
धिगयं शलभाकारो गरुडोऽपि तवाधुना । शार्ङ्गं ज्वलतु ते शीघ्रं तृणकल्पेन तेन किम् ॥ ५१ ॥
इत्युक्तं तद्वचः श्रुत्वा सोऽपि नारायणस्ततः । गरुडेन सहागत्य युद्धं कर्तुं समारभत् ॥ ५२ ॥
ततः पाशेन तं बद्ध्वा पातयामास भूतले । छित्वा पाशं ततो विष्णुः नभोमण्डलमाश्रितः ॥५३॥
तत्र गत्वा शङ्खनादैः पूरयामास दिक्कुलम् । शार्ङ्गध्वनिसमाक्रान्तैः भीषयामास भूतले ॥ ५४ ॥
ततः क्रूरनखाग्रेण छित्वा गरुडवाहनम् । पातयामास भूपृष्ठे गरुडेन सह क्षणात् ॥ ५५ ॥
ततः परं स तद्रूपं परित्यज्यातिभीषणम् । वाराहं रूपमासाद्य क्षोभयामास तान् गणान् ॥ ५६ ॥
महापर्वतसङ्काशो वाराहवपुषा हरिः । निःश्वासान् मुमुचे तेऽपि प्रलयानिलसन्निभाः ॥ ५७ ॥
तैः सकम्पाः समभवन् गणाः संख्याविवर्जिताः । तुण्डेन पातयामास पर्वतान् गणमूर्धनि ॥
पुच्छाग्रेणातिदीर्घेण समुद्रान् सप्त लीलया । शोषयामास तन्नीरैः प्लावयामास भूतलम् ॥ ५९ ॥
पुनः स्वसन्निभानेव वाराहानेव कोटिशः । लोकालोकाचलनिभान् ससर्ज स तमोगुणः ॥ ६० ॥
नभोमण्डलमावृत्य स्थितं तैर्मुनिपुङ्गवाः । तैर्वराहैर्जगद्व्याप्तं तुण्डमण्डलमण्डितैः ॥ ६१ ॥
ततो दृष्ट्वा गणाः सर्वे तान् वराहान् दुरासदान् । सर्वे भूरिभयग्रस्ताः व्याकुलाश्चिन्तया तदा ॥
हा किमेतदभूदेतत् वराहव्याकुला मही । नीरन्ध्रा सा तु तैरेव शराणां प्रसरोऽपि न ॥ ६३ ॥
अशक्यं गमनं चासीत् गगनेऽपि न भूतले । अवकाशः क्षणं वात्र पादप्रक्षेपणाय च ॥ ६४ ॥
वराहरोमशस्त्राणि भित्वाऽपि घनमण्डलम् । प्रयान्ति कुत्र गन्तव्यं इति चिन्तासमाकुलाः ॥
ततो वराहरूपेण भीषणेनातिदारुणम् । वचो नारायणः प्राह रणकण्डूपरायणः ॥ ६६ ॥
आगतोऽस्मि महावीरो रावणो निहतो मया । युद्धे भूमण्डले को वा मम प्रतिभटो भवेत् ॥
गणानामवकाशोऽत्र न युद्धे स्थातुमप्यतः । गणनीयाश्च ते सर्वे मम नारायणस्य न ॥ ६८ ॥
चक्रेणानेन घोरेण क्षणेन रणमण्डलम् । मण्डितं गणसङ्घेन पातितेन भविष्यति ॥ ६९ ॥
यज्ञशालाप्रदाहेन गर्वः किमभवत् तव । यज्ञशालासहस्राणि कर्तव्यानि पुनर्मया ॥ ७० ॥
मया यस्य सहायार्थमुद्यतं तस्य केन वा । भयं भावि गणैरेतैः किं वा कार्यं भविष्यति ॥
किमेतैरपि मे युद्धं युक्तमुक्तिसहं च न । अवरुद्धाः क्षणार्धेन शक्तिस्ते गमनेऽपि न ॥ ७२ ॥
इति प्रलप्य बहुधा दूरीकृत्य गणानपि । स वीरभद्राभिमुखो ययौ नारायणः स्वयम् ॥ ७३ ॥
स गत्वा तत्र तं दृष्ट्वा वीरभद्रं भयानकम् । तत्रापि स्वबलं प्राह महामोहसमन्वितः ॥ ७४ ॥
स महावीरभद्रोऽपि दृष्ट्वा क्रूरं भयानकम् । वराहरूपं तं रोषात् नारायणमनामयम् ॥ ७५ ॥

रे रे दुष्ट दुराचार किमुन्मत्तोऽसि दुर्भग । प्रलयानलकूटेन किं कीटः समतामियात् ॥ ७६ ॥
मया सह न युद्धार्हो गर्वितो गर्वमुत्सृज । तव गर्वः किमेतस्मिन् वीरभद्रेऽनुवर्तते ॥ ७७ ॥
इत्युक्तं वीरभद्रं तं दृष्ट्वा क्रोधसमाकुलः । तत्क्रोधानलसन्दग्धतुण्डः प्राह पुनर्हरिः ॥ ७८ ॥
मम रूपाण्यपाराणि तत्संहारे बलं क्व ते । तैरेवाच्छादितं रूपं तव तावद्भविष्यति ॥ ७९ ॥
इति स्वविग्रहैः सर्वैरावृतः सत्वरं हरिः । युद्धायाभिमुखो जातो दग्धतुण्डोऽपि मोहतः ॥ ८० ॥
ततः स वीरभद्रस्य कोपलेशेन केवलम् । मूर्च्छितः स्वबलैः साकं अनेकैस्तैर्भयानकैः ॥ ८१ ॥
ततस्त्यक्त्वा स तद्रूपं नृसिंहवपुषा हरिः । जगर्ज भूतलं सर्वं आक्रम्य स्वस्वविग्रहैः ॥ ८२ ॥
तैर्विग्रहैर्जगद् व्याप्तं अट्टहासैश्च दुःसहैः । तैस्त्रस्ताः ते गणाः सर्वे तान् दृष्ट्वा भयविह्वलाः ॥
ततस्तान् पर्वताकारान् नृसिंहानतिभीषणान् । विलोक्य शरणं प्रापुः वीरभद्रं कृपानिधिम् ॥

गणाः —

स्वामिन् श्रीवीरभद्राद्य दृष्टमत्यद्भुतं पुनः । वराहकूटनाशेऽपि न स्वस्थमभवन्मनः ॥ ८५ ॥
नृसिंहनेत्रज्वालाभिर्जगद्व्याप्तं दवानलैः । यथा व्याप्तो गिरिस्तस्य नाधुनाऽस्ति निवारकम् ॥
अतः परं तु तेनैव नृसिंहेन दुरात्मना । अस्माकमपि सर्वेषां भयं तु समभूत् खलु ॥ ८७ ॥
एकैकस्यैव सिंहस्य नखा वज्रायुधोपमाः । तैस्तावदधुना भीतिः महती समुपस्थिता ॥ ८८ ॥
एवं तेषु स्थितेष्वेव वदत्स्वपि गणेष्वपि । आजगाम नृसिंहोऽपि नृसिंहगणसंवृतः ॥ ८९ ॥
आगत्य याहि युद्धाय मया सह महोन्नत । किं विलम्बेन ते कृत्यं वीरकृत्यमिदं तु न ॥ ९० ॥
ममापि शक्तिर्द्रष्टव्या युद्धायाभिमुखोऽस्म्यहम् । मम प्रतिभटो लोके कोऽपि कोपाश्रयोऽपि न ॥
अनारायणमस्त्वद्य सनारायणमेव वा । भूमण्डलमिति प्राह नृसिंहो भीमविक्रमः ॥ ९२ ॥
ततः स वीरभद्रोऽपि नृसिंहं प्राह भीषणम् । आद्योक्तिरद्य सत्याऽस्तु सत्यत्यागो न ते मतः ॥
इति श्रीवीरभद्रोक्त्या हतो नारायणस्तदा । नृसिंहविग्रहास्तस्य सर्वे तत्र लयं गताः ॥ ९४ ॥
जामदग्न्यस्वरूपेण पुनरप्यागतो हरिः । अत्युग्रपर्वताकारशरीरैरमितैर्युतः ॥ ९५ ॥
तैः शरीरैर्जगद्व्याप्तं तानि दृष्ट्वा गणास्तदा । भीताः कम्पमनुप्राप्य समुद्युक्ताः पलायने ॥ ९६ ॥
अपारतत्कुठारोरुधाराज्वालासमाकुला । इला समभवत् सापि विदीर्णा पादघातनैः ॥ ९७ ॥
ततः समभवद्युद्धं गणानां रोमहर्षणम् । रणेन तेन सहसा व्याकुला एव ते गणाः ॥ ९८ ॥
कुठारधाराज्वालाभिः व्याप्तं नक्षत्रमण्डलम् । तेन तावद्भूद्भीतिः महती सा दुरासदा ॥ ९९ ॥

ततस्तान् क्षुभितान् दृष्ट्वा गणान् गणपतिः स्वयम् । वीरभद्रोऽपि तं दृष्ट्वा प्राह गंभीरया गिरा ॥
तावद्बलं तव भवेद् यावद्भक्तिस्त्रियम्बके । तस्यां गतायां ते शक्तिः क्षणेनैव विनश्यति ॥ १०१ ॥
क्व ते त्रिपुण्ड्रं रुद्राक्षाः क्व ते शङ्करपूजनम् । क्व ते रुद्रगणैः साकं रणमप्यतिदारुणम् ॥ १०२ ॥
त्यज त्रिपुण्ड्रं यदि ते युद्धाकांक्षा मया सह । त्यज लिङ्गार्चनं शीघ्रं त्यज रुद्राक्षमालिकाम् ॥
लिङ्गार्चनबलेनैव जातं युद्धबलं तव । अन्यथा तव का शक्तिः युद्धायान्यत्र वा हरे ॥ १०४ ॥
शिवचिह्नमिदं नो चेत् तव नाशः क्षणेन किम् । तस्मात् तल्लिङ्गमालोक्य सामर्थ्यं मम कुण्ठितम् ॥
ब्रह्माण्डमण्डले को वा रणे मां जेतुमिच्छति । कति वा न हताः पूर्वं मया नारायणादयः ॥
शिवपूजाबलं त्यक्त्वा बलमन्यत् प्रदर्शय । यदि ते रणकण्डूतिः न स्वभावबलं च ते ॥ १०७ ॥
प्रबलश्रीमहारुद्रशिवलिङ्गार्चनं बलम् । तद्भिन्नं न बलं लोके दृष्टं वा श्रुतमेव वा ॥ १०८ ॥
लिङ्गार्चके दुर्लभोऽपि प्रबलः प्रबलस्ततः । तेन युद्धेन बुद्धिर्मे यतः सिद्धिर्न ते न मे ॥ १०९ ॥
यदि गर्वस्तव भवेत् कण्डूतिरपि ते रणे । तदा लिङ्गं विहायात्र युद्धायायाहि सादरम् ॥ ११० ॥
इति तद्वचनं श्रुत्वा गर्वपर्वतसंश्रयः । स्वाभाविकं मम बलं न मे लिङ्गेन तद्बलम् ॥ १११ ॥
इत्युक्त्वा लिङ्गमुत्सृज्य त्यक्त्वा रुद्राक्षमालिकाम् । त्रिपुण्ड्रधारणं त्यक्त्वा युद्धाय समुपस्थितः ॥
ततः श्रीवीरभद्रस्तं शिवलिङ्गविवर्जितम् । चकार भस्मसादाशु [1] जमदग्निं क्षणेन तु ॥ ११३ ॥
ततः समागतस्तत्र जमदग्निर्महामुनिः । आगत्य प्रणिपत्याह वीरभद्रं महागणम् ॥ ११४ ॥
यस्याभिमानो निर्याणं गणैः सह रणाय सः । नाशमेष्यति तस्यापि बलं संभावितं कथम् ॥
शिवलिङ्गं परित्यक्तं तेन तावत् दुरात्मना । तत्परित्यागतस्तस्य बलहानिरभूत् खलु ॥ ११६ ॥
रूपं बलं च भाग्यं च लभ्यते शिवपूजया । तत्त्यागे दुर्बलः सद्यो दुर्भगोऽपि भविष्यति ॥
लिङ्गार्चनबलेनैव सर्वां सिद्धिमवाप्नुयात् । तदभावे बलं कस्य लोके संभावितं भवेत् ॥ ११८ ॥
ये ये लिङ्गार्चनं त्यक्त्वा व्यर्थं गर्वं समाश्रिताः । ते सर्वे विलयं यान्तु वीरभद्रास्त्रधारया ॥
श्रीवीरभद्रप्रतिमः को वा लोके भविष्यति । कस्तेन सह युद्धं वा कर्तुमप्युद्यतो भवेत् ॥ १२० ॥
अशांभवाः सुराः सर्वे हन्तव्याः प्रीतिपूर्वकम् । तेषां संहरणे तावत् प्रयत्नोऽप्यनपेक्षितः ॥ १२१ ॥
शिवनिन्दाग्निना दग्धाः पूर्वमेव सुरास्ततः । निमित्तमात्रमेवात्र वीरभद्र भवान् परम् ॥ १२२ ॥
ततो वामनरूपेण स विष्णुः समुपागतः । ययाचे वीरभद्रं तं युद्धमेव प्रयत्नतः ॥ १२३ ॥

---

1 जामदग्न्यमिति C D कोशयोः पाठ उचितः ।

ततः स ववृधे विष्णुः व्याप्य नक्षत्रमण्डलम् । ततस्तस्य शिरः छिन्नं वीरभद्रेण लीलया ॥१२४॥
ततो रामस्वरूपेण नारायणमुपागतम् । दृष्ट्वा प्राह महावीरो वीरभद्रस्तमादरात् ॥ १२५ ॥
शूलं तृष्णासमाक्रान्तं तव रक्तेन केवलम् । तृप्तं भविष्यति प्रायः तस्य कृत्यं तदेव हि ॥ १२६ ॥
इत्युक्तं तद्वचः श्रुत्वा स बालिशवदाहतम् । अज्ञात्वा वीरभद्रस्य बळं प्रबलमुज्वलम् ॥ १२७ ॥
खरः क्षणेन निहतो दूषणोऽप्यतिभीषणः । ताटका निहता पूर्वं कूटकोटिनिभा क्षणात् ॥ १२८ ॥
हता शूर्पणखा दुष्टा मारीचो निहतो मया । सप्ततालवनं छिन्नं अच्छेद्यं वक्रमुन्नतम् ॥ १२९ ॥
अङ्गुष्टेन पुरा क्षिप्तो दुन्दुभिः पर्वताकृतिः । वाली विनिहतः पूर्वं सेतुर्बद्धो महाम्बुधौ ॥ १३०॥
मदीयेनैव केनापि लङ्का दग्धा दुरासदा । अक्षयो निहतस्तेन कुमारो रावणस्य सः ॥ १३१ ॥
इन्द्रजिन्निर्जितस्तेन लङ्कायास्तोरणं महत् । छिन्नं तेनैव वीरेण तत्तुल्याः कोटिशो मम । १३२॥
रावणो निहतः पूर्वं सर्वलोकैकरावणः । कुम्भकर्णादयः सर्वे निहता एव राक्षसाः ॥ १३३ ॥
रणकालेऽपि संप्राप्ते कालाग्निरहमेव हि । मद्बाहुबलमालोक्य प्रयान्ति रिपवः परम् ॥ १३४ ॥
मया सह वने युद्धे जयवार्ताऽपि दूरतः । विद्धि नारायणं त्वं मां वीरभद्र यथार्थतः ॥ १३५ ॥
युद्धकालेऽपि संप्राप्ते यमोऽपि स्यात् स विह्वलः । शक्तिश्च तव युद्धार्थं मां याहि त्वरयाऽधुना ॥
इति प्रलपमानं तं वीरभद्रोऽपि सस्मितः । ललाटवीतिहोत्राय कामं रामं ददौ द्विजाः ॥ १३७ ॥
ततो नेत्राग्निना रामो दग्धबाहुरिलातले । पपात दग्धमूर्धापि दग्धवक्षःस्थलः क्षणात् ॥ १३८॥
ततश्चतुर्मुखो दृष्ट्वा पतितं भूतले मृतम् । रामं नारायणाकारं रमाश्रुपरिवेष्टितम् ॥ १३९ ॥
प्राहाश्रुधारयाऽऽक्रान्तो [1]रामं स्पृष्ट्वा मृतं पुनः । नारायणस्वरूपस्तं [2]भयात् व्याकुलितो मुहुः ॥
हा मृतोऽसि क्षणार्धेन शौरे शौर्यं क्व ते गतम् । श्रुतायाः शिवनिन्दायाः फलमेतदभूत् खलु ॥
किञ्च गर्वोक्तयो यास्ते वीरभद्रेशसन्निधौ । तास्तदाग्निस्वरूपेण दाहाय समुपस्थिताः ॥ १४२ ॥
वीरभद्रेश्वरः सोऽयं महारुद्रगणः प्रियः । तेन साकं गर्ववार्ता कृता तत्फलमीदृशम् ॥ १४३ ॥
रे रे दक्ष दुराचार किमित्यध्वरदीक्षितः । भवत्सहायकरणात् मृतो नारायणोऽप्ययम् ॥ १४४ ॥
गर्वस्य परिपाकोऽपि नाशाय समभूत् तव । अयं क्षणेन निहतः त्वदध्वरसमागमात् ॥ १४५ ॥
दुराचारेण तरसा शिवनिन्दा कृता त्वया । तथा योगो विनष्टोऽयं तव नाशो भविष्यति ॥
गणना तव कुत्रास्ति मृते नारायणेऽधुना । सर्वेषामपि संप्राप्तं मरणं नात्र संशयः ॥ १४७ ॥

---

1 रामं दृष्ट्वा मृतं पुनः C 2 भयव्याकुलितो मुहुः C

अतो दुर्जनसंसर्गः परित्याज्यो मनीषिभिः । यस्मादनिष्टमेतावदधुना समुपस्थितम् ॥ १४८ ॥
अनिष्टांबुधिपाताय जातो दुर्जनसङ्गमः । अहो महदिदं कष्टमशाङ्करसमागमः ॥ १४९ ॥

अनिष्टदौर्भाग्यपरम्पराणां अभाग्यदुःखाब्धिपरम्पराणाम् ।
तत्कारणं स्याद्यदशाङ्करेण सहाभिलापासनभोजनादि ॥ १५० ॥

अशाङ्करेण प्रणयो यदि स्यात् तदा परं दुःखपरम्परा स्यात् ।
सा केन वा नाशमुपैति तस्याः प्रवृद्धिरेवेति वदन्ति वृद्धाः ॥ १५१ ॥

अशांभवसमागमे यदि सुखं क्षणं वा तदा विषेऽपि गिलिते सुखं किमिति जीवनाशाऽपि न ।
अशाङ्करपुरःसरादपि वदन्ति नीचं जनाः स वृश्चिकरतोद्भवः शुनकरासभोत्पादितः ॥ १५२ ॥

अशाङ्करमुखं ज्वलत्वनलराशिमध्ये पतत्वमेध्यकुहरे पतत्वनुदिनं न तद्वीक्षणम् ।
कदापि मम जायतामिति वदन्ति धन्याः परं त एव सुखराशयोऽप्यमितपुण्यपूर्णार्णवाः ॥

एतावदापत्कालोऽयमशाङ्करसमागमात् । मेरुवत् पतितः सोऽयं मृतो नारायणोऽधुना ॥१५४॥
मुरकंसादयो दैत्याः यच्छौर्यश्रवणादपि । पलाय्य यान्ति तरसा सोऽयं नारायणो मृतः ॥
यस्य शङ्खध्वनिं श्रुत्वा यान्ति दैत्या दिगन्तरम् । सोऽयं नारायणस्तेन वीरभद्रेण संहृतः ॥
गोवर्धनाचलो येन कराग्रेण धृतः पुरा । सोऽयं .... ॥ १५७ ॥
रावणस्ताडितो येन सर्वलोकैकरावणः । सोऽयं ... ॥ १५८ ॥
हिरण्याक्षो हतो येन हिरण्यकशिपुस्तथा । सोऽयं ... ॥ १५९ ॥
एव दुःखेन बहुधा प्रलपन्तं चतुर्मुखम् । बद्ध्वा पाशेन सहसा वीरेशः प्राह सस्मितः ॥ १६० ॥
दुष्टस्त्वष्टापि नष्टोऽपि भ्रष्टोऽपि स यतः पुरः । शिवनिन्दाविषं पीत्वा दक्षेण सह संयुतः ॥ १६१ ॥
रे रे दुर्भग दुष्टात्मन् शिपिविष्टोऽपि विस्मृतः । अष्टमूर्तिः स कष्टानां सर्वथा विनिवारकः ॥
तव शिक्षा तथा कार्या दक्षः कितववोचकः । सोऽपि को वा वराकस्ते मोचकत्वेन निश्चितः ॥
तवापि किं भ्रमो वृत्तो दक्षः शङ्करनिन्दकः । येन मित्रमभूत् शत्रुः मित्रकार्यकरः कथम् ॥
इत्युक्तस्तच्छिरश्छेदं चकार क्षणमात्रतः । ततो हाहाकृतं सर्वं सुरसैन्यं पराहतम् ॥ १६५ ॥
ततो दक्षोऽपि निहतः तदन्ये निहतास्ततः । अशाङ्कराश्च मुनयः शिवनिन्दाग्निसंहताः ॥ १६६ ॥
उत्पाताश्च ततः शान्ताः शान्ता दिग्जनितस्वनाः । प्रसन्नाश्च दिशः सर्वाः गन्धर्वा ललितं जगुः ॥
देवदुन्दुभयो नेदुः पुष्पवृष्टिरभूत् तदा । ततो ययौ महादेवं वीरभद्रो महाबलः ॥ १६८ ॥

ततः प्रणम्य शिरसा वृत्तान्तं च निवेद्य तम्। कृताञ्जलिपुटो भूत्वा कृतकार्यः पुरः स्थितः॥
ततः शिवायै तत्सर्वं विनिवेद्य सदाशिवः। तामालिङ्ग्य मुदं प्राप परमानन्दसागरः॥ १७०॥

लोके शङ्करनिन्दकस्य कुजनिः सा दारुणा यातना
दौर्भाग्यं सकलार्तिरोगनिवहः क्लेशापकीर्त्यादयः।
आपत्पापपरम्पराप्यनुदिनं संभाविता सा ततः
सन्तः सन्ति शिवार्चनैकनिरताः ते दुर्लभाः शांभवाः॥ १७१॥

रे रे शरीर हर सादर निर्विहार हारोपचारकरणप्रवणप्रणाम।
तुभ्यं न लभ्यमुभयोरपि सन्निधानं यन्मन्मनः स्मरहरस्मरणप्रवीणम्॥ १७२॥

इति श्री शिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे दक्षाध्वरप्रशंसायां वीरभद्रोत्पत्ति-
विष्ण्वादिसुरयुद्धवर्णनं नाम एकोनचत्वारिंशोऽध्यायः॥

—o—

## अथ चत्वारिंशोऽध्यायः।

नारदः —

इति नारायणादीनां लयं दक्षाध्वरस्य च। श्रुत्वा विस्मयमापन्नाः प्राहुर्गौतममास्तिकाः॥ १॥
सनत्कुमारः सनको वसिष्ठश्च सनन्दनः। वालखिल्यादिभिः साकं प्राहुर्गौतममास्तिकाः॥ २॥
नारायणादयः सर्वेऽप्यधिकारपरायणाः। तेषां न रक्षणं वृत्तं मरणावसरे सति॥ ३॥

वृत्तमेव मरणं च सुराणां शूलपाणिकरुणाविरहेण।
रक्षणं च तदधीनमतः स्यात् जन्म तानि सकलानि यतः स्युः॥ ४॥

शिवनिन्दानलेनैव तेषां नाशे पुनः कुतः। वीरभद्रः समुत्पन्नः तस्य कृत्यं च किं वद॥ ५॥
किंचाधिकारे पूर्वस्मिन् नियुक्तः कः पुनस्ततः। तत्सर्वं वद यत्नेन विचार्यैव पुनः पुनः॥ ६॥

गौतमः —

शिवनिन्दानलज्वालाकुलसंकुलिताः सुराः। ततः परं वीरभद्रो निमित्तमपि तल्लये। ७॥
उत्पत्तिस्थितिसंहारान् स करोति महेश्वरः। निमित्तमात्रं संपाद्य किञ्चित् किंचित् क्वचित् क्वचित्॥

[1] ब्रह्माण्डमण्डलाकाण्डप्रलये समुपस्थिते । शिवनिन्दादिकं किञ्चित् निमित्तमिति मन्महे ।। ९ ।।

उदुम्बरफलान्तरस्थगितजन्तुसन्तानवत् प्रयाति लयमिन्दिरासहित एव नारायणः ।
जरामरणजन्मनामनुदिनं प्रसङ्गो भवेत् अनङ्गहरनिन्दया परमिति प्रमा मे द्विजाः ।। १० ।।

उदुम्बरतनुर्यदा दवकुलैरभूद्व्याकुला फलैरपि सदा सकृत् फलकुलक्षये तद्गताः ।
प्रयान्ति मशकाः परे मरणमेव तद्वत् सुराः शिवापतिविनिन्दया खलु लयं प्रयान्त्यन्वहम् ।।

कः शङ्करद्वेषविषाणि पीत्वा पुनः पुनर्मृत्युवशं न याति ।
न जातु जानाति विवेकहीनो दीनो महादेवमहाप्रभावम् ।। १२ ।।

मत्वा किलान्यामरतुल्यमेव मारो महादेवमहाप्ररोहैः ।
पतङ्गवत् प्राप स चित्रभानुज्वालाकुलो व्याकुल एव नाशम् ।। १३ ।।

तस्मान्महेशनिन्दाग्नौ सर्वे नारायणादयः । पतितास्ते मृतास्तेषां शिवनिन्दा परं विषम् ।। १४ ।।
ततः परं सत्यलोके वैकुण्ठे स्वर्गमण्डले । स्वनिर्मिते रक्षणाय स्थापयामास तान् गणान् ।।
चिरकालं गणाः स्थित्वा तत्र तत्र यथाक्रमम् । विषादेनैकदा सर्वे मिलिताः शिवमन्दिरे ।।
तदा स्वस्व विषादानां कृत्वान्योन्यं प्रकाशनम् । जगुः कैलासनिलयं शिवध्यानपुरःसरम् ।। १७ ।।
ददृशुर्नन्दिकेशं ते कैलासद्वारमण्टपे । दृष्ट्वा ते विनयान्नत्वा कृताञ्जलिपुटाः स्थिताः ।। १८ ।।
तमुवाच स नन्दीशः किमागतमिहेत्यपि । यत्र यत्र स्थितं पूर्वं तत्त्यागो नोचितः खलु ।। १९ ।।
[1] महेश्वराज्ञया यत्र स्थितिस्तत्रैव सादरम् । उचिता तत्परित्यागः सर्वथाऽनुचितः खलु ।' २० ।।

गणाः —

तप्तं तपः पुरा घोरं तेन प्रीतः सदाशिवः । गाणपत्यं ददौ तस्य फलं शङ्करपूजनम् ।। २१ ।।

[[1] त्यक्त्वा शिवार्चनं पुण्यं स्थितिः कैलासमन्दिरे ।
कः स्थातुमिच्छति प्राज्ञः वैकुण्ठादिषु मूढवत् ] ।। २२ ।।

न तपस्तप्तमस्माभिः कर्तुं वैकुण्ठरक्षणम् । को वा क्षीरं परित्यज्य काञ्जिकामभिवांछति ।। २३ ।।

वैकुण्ठाधिपतित्वमेत्य बहुधा पूर्वं स्थितं सादरं
तत् त्यक्तं तदनन्तरं शिवपदं प्राप्तं तपस्तत्कृतम् ।

---

1 अयं श्लोकः C कोशे नोपलभ्यते । 2 अयं श्लोकः C कोशे नोपलभ्यते ।
3 अयं श्लोकः C D कोशयोरधिकः ।

तत्त्यक्त्वा पुनरेव तत्र न तथा वांछापि तुच्छे कथं
प्रीतिः स्वच्छमतुच्छमेत्य कुरुते वांछां क्व तुच्छे सुधीः ॥ २४ ॥

वैकुण्ठमार्गोऽपि स कुण्ठितोऽस्तु स स्वर्गमार्गोऽपि स सत्यलोकः ।
न चास्मदिच्छाविषयः परं तु कैलासवासस्तपसा स लभ्यः ॥ २५ ॥

सुवर्णचीर्णोत्तररत्नपीठे स्थित्वाऽपि वाञ्छां कुरुते विवेकी ।
स गोक्षुरेप्यूषरनिष्ठुरेऽपि देशेऽपि देशे निजदेशवासी ॥ २६ ॥

अलं किलालं खलु सत्यलोकविलोकनेनापि शशाङ्कमौलिः ।
आराधितः किं तपसा तदर्थं व्यर्थं तदा जीवनमेव किं न ॥ २७ ॥

दुग्धान्नाशनमेव यस्य सुखदं प्राप्तं च किं तत् सुधीः
त्यक्त्वा गोक्षुरभक्षणाय यतते तद्वत् किलास्मत्प्रियः ।
कैलासाचलवास एव सततं सर्वात्मना वांछितः
तद्विघ्नः किमुपागतोऽयमधुना वैकुण्ठवासात्मकः ॥ २८ ॥

अतिघोरतरं तपः कृतं खलु कैलासनिवाससाधनम् ।
तदिदं कथमन्तरायतो विपरीताय फलाय केवलम् ॥ २९ ॥

वैकुण्ठाधिपतित्वमात्रमधुना किं वांछितं तत्फलं
तद्यस्मात् प्रलये विनश्यति परं मध्येऽपि दोषान्वये ।
तस्मात् तत्खलु तुच्छमित्यवधृतं वान्तान्नवत् केवलं
त्याज्यं त्याज्यमतः परं पुनरपि त्याज्यं तदस्मादृशैः ॥ ३० ॥

इति तद्गिरमाकर्ण्य नन्दिकेशः प्रहृष्टधीः । तानुवाच मुदा युक्तान् कुर्वन्नेव मुहुर्मुहुः ॥ ३१ ॥

नन्दिकेशः —

भविष्यत्यल्पकालेन भवतामपि वांछितम् । अधुना तु यथास्थानं स्थातव्यं भक्तिपूर्वकम् ॥ ३२ ॥

उमा शिवाराधनसक्तचित्ता शिवोऽपि तत्पूजनमादरेण ।
गृह्णाति मध्याह्नगते स सूर्ये निवेदनस्यावसरोऽपि नायम् ॥ ३३ ॥

ममापि कर्तव्यमुमासहायपादारविन्दस्मरणं प्रसूनैः ।
लिङ्गं समभ्यर्च्य विशेषकालो मध्याह्नगे तिग्मकरे त्वयं हि ॥ ३४ ॥

भवद्भिरधुना कथं गिरिशपूजनं त्यज्यते शिवार्चनपरायणाः खलु शिवं प्रयान्त्यन्वहम् ।

कृतं सदनुवेलमप्यमलकालकालार्चनं करोति सुखसंपदां पदमनल्पकालात् परम् ॥ ३५ ॥

अहो चिरं जीवतु चन्द्रमौलिपदाम्बुजाराधनसक्तचित्तः ।
उपात्तवित्तः शिवपूजनार्थं शान्तः स योगी स किलाप्रमत्तः ॥ ३६ ॥

विलम्बेन साम्बापराधोऽपि भावे सहेरम्बतातो विलम्बासहिष्णुः ।
न सांबापि लम्बोदरालम्बनेनाप्यपाकर्तुमिच्छेत् करोत्येव किं तम् ॥ ३७ ॥

यथेष्टो विहारो न कार्यो न कार्यः स्वकार्यातुरैः कार्य एवाविलम्बः ।
प्रभुप्रीतिरेव प्रभूतिं करोति प्रभूतिः प्रभोरेव भूता प्रभूता ॥ ३८ ॥

इति तद्वचनं श्रुत्वा प्रणम्य च पुनः पुनः । स्वस्वस्थाने यथापूर्वं स्थिताः सर्वेपि ते गणाः ॥

ततः परं महादेवस्तीर्थेशाकारमाश्रितः । तपसा पूतहृदयान् ददर्श मुनिपुङ्गवान् ॥ ४० ॥

ततो महेशो भवनाशिनीं तां श्रुतिप्रसिद्धामितभूतिकोटिम् ।
आश्रित्य धीरांस्तपसापि धीरान् ददर्श विप्रान् शतशः सकामान् ॥ ४१ ॥

धर्ममूर्तिरिति ख्यातः तत्र कश्चित् द्विजोत्तमः । शिवाचाररतः शान्तो जटिलो भूतिभूषितः ॥

तेन तत्र तपस्तप्तं कल्पानामयुतं द्विजा । तथैव केचित् तत्तीरे शिवपूजापरायणाः ॥ ४३ ॥

भस्मोद्धूलितसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः । रुद्राक्षमालावीताङ्गाः शिवलिङ्गार्चनप्रियाः ॥ ४४ ॥

निराहारा जलाहारा वाताहाराश्च केचन । पर्णाहारास्तृणाहाराः कणाहाराश्च केचन ॥ ४५ ॥

केचित् ध्यात्वा महादेवं आनन्दाश्रुसमाश्रयाः । केचित् नृत्यन्ति नन्दन्ति प्रवदन्ति हसन्ति च ॥

वल्कलान्येव वासांसि वासः पर्णानि कस्यचित् । केचित् दिगम्बरास्तत्र केचित् तत्र कराम्बराः ॥

ऊरुमात्राम्बराः केचित् केचित्तरुवराम्बराः । भूमिमात्राम्बराः केचित् रुद्राक्षाभरणाम्बराः ॥ ४८ ॥

ते सर्वे लिङ्गपूजायां निरताः शिवतत्पराः । शिवनामजपोद्युक्ताः सदा शिवकथोत्सुकाः ॥ ४९ ॥

साम्बं हृत्कमले ध्यात्वा कृत्वा मानसपूजनम् । प्रनृत्यन्तोऽपि गायन्तः शिवनामानि सादरम् ॥

तान् दृष्ट्वा स महादेवो दूरादेव वृषध्वजः । नन्दिकेशमुवाचेदं वचनं प्रीतिपूर्वकम् ॥ ५१ ॥

श्रीसदाशिवः —

नन्दिकेश महाशैव पश्य पश्य शिवार्चकान् । शिवलिङ्गार्चने तेषां विश्वासः खलु वर्धते ॥

लिङ्गपूजनमेतेषां सर्वेषां व्रतमित्यतः । तपस्या सफला नूनं लिङ्गार्चनसमन्वयात् ॥ ५३ ॥

न केवलेन तपसा केवलैरध्वरैरपि । दानैर्वा केवलैः प्रीतिः मम लिङ्गार्चनं विना ॥ ५४ ॥

तुङ्गलिङ्गार्चने प्रीतिः यथा मम सदा तथा । प्रीतिस्तु न भवत्येव वेदपारायणैरपि ॥ ५५ ॥
तुलाकोटिप्रदानैर्वा प्रीतिर्मम न सर्वथा । लिङ्गार्चनाद्यथा प्रीतिः तथा प्रीतिर्न केनचित् ॥ ५६ ॥
भोगकामोऽपि यः पूजां शिवलिङ्गे करिष्यति । तस्मिन्नपि मम स्नेहः स्नेहपात्रं यतः स मे ॥

भोगस्तावदभूतपूर्वविभवः संभावितः सर्वदा
लिङ्गाराधनतः स लिङ्गमहिमा ज्ञातो न केनाप्यतः ।
लिङ्गाराधनतत्पराः सुरपदं संप्राप्य तिष्ठन्त्यमी
कश्चिद्विष्णुरिहास्तु कश्चन विधिः कश्चिन्महेन्द्रोऽधुना ॥ ५८ ॥

केचित् दिक्पतयो भवन्तु बहवो देवा भवन्त्वाश्रमी
तद्दाराः कमलादयोऽपि बहवः तावद्भवन्तु प्रियाः ।
नक्षत्राणि भवन्तु केचन तथा केचित् ग्रहा एव ते
तत्रत्यासुरसंस्तुतिप्रियतमास्तिष्ठन्तु केचित्तथा ॥ ५९ ॥

इत्युक्तः स महेशेन नन्दिकेशस्तथाऽस्त्विति । प्रेषितः स महेशेन मुनिमण्डलमागतः ॥ ६० ॥
विलोक्य नन्दिकेशं तं धर्मरूपं प्रणम्य ते । तुष्टुवुः पूजयित्वा तं सर्वेऽपि मुनिपुङ्गवाः ॥ ६१ ॥
तत्र धर्मरतो नाम कश्चिदासीत् द्विजोत्तमः । तमाह तुभ्यं विष्णुत्वं दत्तमित्यभिनन्दयन् ॥ ६२ ॥
एवं विधित्वमिन्द्रत्वं चन्द्रत्वादीन्यपि स्वतः । दत्वा तान् प्रेषयामास तं तं लोकं मनोहरम् ॥
वैकुण्ठादिषु लोकेषु नन्दिकेशप्रसादतः । अधिकारं समासाद्य स्थितास्ते मुनिपुङ्गवाः ॥ ६४ ॥
शिवलिङ्गार्चनफलं तथा तेषामभूत् द्विजाः । ईप्सितार्थान् ददात्येव [1] लिङ्गपूजा महेशितुः ॥

नारदः —

इति पुण्यकथां श्रुत्वा सर्वपापप्रणाशिनीम् । हृष्टान्तःकरणाः सर्वे प्राहुर्गौतममादरात् ॥ ६६ ॥
अग्निहोत्रादयः सर्वे मुनयः शांभवोत्तमाः । ब्राह्मणानां विशेषेण मुक्तिः स्यात् कथमित्यपि ॥

गौतमः —

शाङ्कराणां करतले मुक्तिरामलकोपमा । वेदान्तैश्चैव निर्णीता सा मुक्तिः सुलभा खलु ॥ ६८ ॥
यदि दैवान्महादेवे भक्तिरव्यभिचारिणी । तदा तया मुक्तिकान्ता सह तिष्ठति सर्वदा ॥ ६९ ॥
सा चेन्नूनं तदा मुक्तिस्तया सह न तिष्ठति । नीचेन सह संवासो महतां नोचितो यतः ॥ ७० ॥
साऽपि भक्तिर्महादेवे बहुजन्मार्जितैः परम् । पुण्यैर्भवति सा तावद्वस्तुतस्त्वतिदुर्लभा ॥ ७१ ॥

---

1 महेशो लिङ्गपूजया इति C कोशे पाठः ।

घोरेण तपसा दानैः अभ्यस्तैर्विविधैरपि । भविष्यति महादेवे भक्तिरव्यभिचारिणी ॥ ७२ ॥
अभ्यस्तोद्धूलनेनापि यावज्जीवं प्रयत्नतः । भविष्यति ... ॥ ७३ ॥
रुद्राक्षधारणाभ्यासाद्यावज्जीवं प्रयत्नतः । भविष्यति ... ॥ ७४ ॥
अन्नराशिप्रदानेन यावज्जीवं प्रयत्नतः । भविष्यति .... ॥ ७५ ॥
गोकोटीनां प्रदानेन शांभवेभ्यः प्रयत्नतः । भविष्यति ... ॥ ७६ ॥
नानारत्नप्रदानेन शांभवेभ्यः प्रयत्नतः । भविष्यति ... ॥ ७७ ॥
दिव्यप्रसाददानेन शांभवेभ्यः प्रयत्नतः । भविष्यति .... ॥ ७८ ॥
सस्यपूर्णमहीदानैः शांभवेभ्यः प्रयत्नतः । भविष्यति ... ॥ ७९ ॥
फलानामपि दानेन शांभवेभ्यः प्रयत्नतः । भविष्यति ... ॥ ८० ॥
स्वर्णभूषणदानेन शांभवेभ्यः प्रयत्नतः । भविष्यति ... ॥ ८१ ॥
कन्याकोटिप्रदानेन शांभवेभ्यः प्रयत्नतः । भविष्यति ... ॥ ८२ ॥
सर्वेष्वपि च कालेषु महाशांभवसेवया । भविष्यति .... ॥ ८३ ॥
बिल्ववृक्षवनानां च करणे शिवमन्दिरे । भविष्यति ... ॥ ८४ ॥
प्रसूनराशिदानेन शिवलिङ्गे शिवात्मके । भविष्यति .... ॥ ८५ ॥
सरोवराणां करणे श्रीमहादेवमन्दिरे । भविष्यति ... ॥ ८६ ॥
तटागवापीनिर्माणैः श्रीमहादेवमन्दिरे । भविष्यति ... ॥ ८७ ॥
दीपमालाप्रदानैश्च श्रीमहादेवमन्दिरे । भविष्यति ... ॥ ८८ ॥
रम्यहर्म्यादिनिर्माणैः श्रीमहादेवमन्दिरे । भविष्यति ... ॥ ८९ ॥
पुरा कुरूणामधिपो वसिष्ठं मुनिपुङ्गवम् । ददर्श विपिनश्रेष्ठे बिल्वमूलं समाश्रितम् ॥ ९० ॥
प्रणम्य दण्डवद्भूमौ कृत्वा भक्त्या प्रदक्षिणम् । पूजयामास बिल्वाद्यैः शिवभक्तवरं गुरुम् ॥
ततो बभाषे विनयात् कृताञ्जलिपुटो नृपः : मृगयार्थे महारण्ये प्रविष्टोऽस्म्यधुना गुरो ॥ ९२ ॥
भवद्दर्शनमात्रेण सापि बुद्धिर्लयं गता । इदं बिल्वतरुव्याप्तं वनं मुनिजनाश्रितम् ॥ ९३ ॥
विभूतिराशयो दृष्टाः श्रौतानलसमुद्भवाः । रुद्राक्षतरवो दृष्टाः सर्पकष्टनिवारकाः ॥ ९४ ॥
तत्तन्मूलेषु लिङ्गानि नार्मदान्येव कोटिशः । दृष्टानि बिल्वपत्राद्यैः पूजितानि विशेषतः ॥ ९५ ॥
तानि लिङ्गानि तद्बिल्वच्छायासंपादितान्यपि । एतेऽपि तरवो धन्याः शिवपूजोपयोगिनः ॥ ९६ ॥

मुनयो वीतरागाश्च भस्मोद्धूलितविग्रहाः । त्रिपुण्ड्रफालाः सर्वेऽपि सर्वे रुद्राक्षभूषणाः ॥ ९७ ॥
वाताशना जलाहारा निराहाराश्च कोटिशः । पूजयन्ति महादेवं शिवलिङ्गस्वरूपिणम् ॥ ९८ ॥
ध्यात्वा साम्बं महादेवं आनन्दाश्रुपरिप्लुताः । प्रणमन्ति प्रस्तुवन्ति प्रनृत्यन्ति हसन्ति च ॥
आस्फोटनानि कुर्वन्ति महोन्मादाश्रया इव । उच्चैः पठन्ति श्रीरुद्रं तत्तदर्थावबोधनात् ॥ १०० ॥
बिल्वपत्राणि रम्याणि क्षालितानि पुनः पुनः । प्रक्षिपन्ति प्रयत्नेन शिवलिङ्गेषु भूरिशः ॥ १०१ ॥
शिवलिङ्गेषु या दृष्टिः तेषां सुकृतकर्मणाम् । सा नान्यत्र प्रयात्येव धर्मधारानुवर्तिनी ॥ १०२ ॥
तेषां दृष्टिर्महालिङ्गे कामिनां कामिनीष्विव । दृष्टिर्नान्यत्र संयाति धारारूपा प्रवर्धते ॥ १०३ ॥
इदं भाग्यं मया दृष्टं दुरदृष्टविनाशकम् । ममाप्यागमने कालो भूयानेवाभवन्मुने ॥ १०४ ॥
ते दृश्यन्ते मया तैस्तु न दृष्टोऽहं महामुने । अतः परं तु विरतिः संसारादभवन्मम ॥ १०५ ॥
संसारपाशबद्धानां लोकानां मोक्षसाधनम् । किमसाधारणं दृष्टं तन्मह्यं विनिवेदय ॥ १०६ ॥

वसिष्ठः —

संसारपाशनाशाय पशुपाशविमोचकम् । कालकालं महारुद्रं नित्यं पशुपतिं भज ॥ १०७ ॥
संसारपाशनिर्मूलकरणं लिङ्गपूजनम् । तेन तत्पाशशान्तिः स्यात् तदन्येन न सर्वथा ॥ १०८ ॥
राज्यभोगं विहायात्र शिवलिङ्गार्चनं कुरु । अनित्यराज्यभोगेषु विरतो भव सर्वथा ॥ १०९ ॥
यदस्ति भाग्यमधुना तेन शङ्करमर्चय । शिवसात्कृतभाग्यानां भाग्यं मुक्तिश्च जायते ॥ ११० ॥
इदमेव हि भाग्यानां आर्जितानां फलं नृप । तत् सन्ततमुमाकान्तलिङ्गाभ्यर्चनमादरात् ॥
शिवलिङ्गार्चनेनैव सर्वथा कालयापने । न कालादपि भीतिः स्यादन्यथा सा बलीयसी ॥ ११२ ॥
अद्यप्रभृति वित्तानामार्जितानां शिवार्चने । उपयोगो यदि तदा सफलं स्यात् तदर्चनम् ॥ ११३ ॥
अन्यथा तद्धनं सर्वं प्रयासेन समार्जितम् । दुःखेन लयमासाद्य न सुखाय भविष्यति ॥ ११४ ॥
शङ्कराय महार्हाणि हर्म्याणि मणिकोटिभिः । कारयस्वातियत्नेन तत् तेषां फलमक्षतम् ॥ ११५ ॥
दिव्यरत्नरथैर्नित्यं महादेवोत्सवा[1] ... ... । अन्वये तव भाग्येन यदि स्यादन्वयो महान् ॥
अन्नराशिप्रदानेन शिवनैवेद्यकल्पनम् । कुरु यत्नेन सततं तेन तुष्टः शिवो भवेत् ॥ ११७ ॥
किमन्यदत्र वक्तव्यं यावदस्ति धनं तव । तावन्निवेदयेशाने तेन धन्यं च जीवनम् ॥ ११८ ॥
तस्यैव जन्म सफलं यदार्जितधनैः सदा । दिव्योपचारसंपन्नं यदि स्यादीश्वरार्चनम् ॥ ११९ ॥
गिरिशार्चनसामर्थ्यात् संसारभयनाशनम् । न कालभीतिवार्तापि नृप संसारिणामपि ॥ १२० ॥

---

1 "..... ..... दिषु ।" — इति स्यात् ।

सर्वप्रयत्नैः कर्तव्यं जीवता शिवपूजनम् । शिवार्चने कृते सर्वं धर्मजालं कृतं भवेत् ॥ १२१ ॥
शिवपूजा परो धर्मः सर्वधर्मोत्तमोत्तमः । धर्माभासतया ज्ञेयं तदन्यदिति मन्यताम् ॥ १२२ ॥
अयमेवोपदेशस्ते संसाराद्विरतो भव । संसारे निमिषाकारे लेशतोऽपि सुखं नृप ॥ १२३ ॥
[5]गात्रे कलत्रे मित्रे वा पुत्रे वा चित्रकर्मणि । अतिरात्रादिसत्रे वा विरतः सुखमश्नुते ॥ १२४ ॥
कदाचिदपि भाग्येन शिवार्चनरतो यदि । तदा स्यात् जीवनं धन्यं अन्यथा व्यर्थमेव तत् ॥
कलत्रवक्त्रे ताम्बूलरसनिष्ठीवनालये । विरतो भव वृद्धोऽसि तत्रास्थां त्यज सन्त्यज ॥ १२६ ॥
मांसग्रन्थिस्वरूपेषु वक्षोजेषु विशेषतः । विरतो भव तद्गात्रे मूत्रपात्रे त्रपां भज ॥ १२७ ॥
यौवनोन्मादकालेषु मदनज्वरपीडया । यद्यकृत्यसहस्राणि नाधुना तत्प्रयोजनम् ॥ १२८ ॥
कलत्रपात्रगात्रेषु मूत्रपात्रेषु सर्वथा । स्वनेत्रप्रसरो माभूत् वृद्धस्य तरुणी विषम् ॥ १२९ ॥
विषपानप्रवृत्तिस्ते संमता नाधुना नृप । अतः परं परित्याज्यमङ्गनाधरवीक्षणम् ॥ १३० ॥
अङ्गनालिङ्गनापेक्षां क्षीणां कुरु विलक्षणाम् । प्रतिक्षणं क्षणार्धं वा विरूपाक्षं भजादरात् ॥ १३१ ॥
दाराधरः परित्याज्यः सर्वथा दारुणामपि । यातनां कारयत्येव सा तावदधुना त्यज ॥ १३२ ॥
यज मृत्युञ्जयं नित्यं त्यज मृत्युभयं त्यज । अधुना तत्परित्यागे मृत्युभीतिः कुतोऽपि न ॥
कदाचिद्यौवने पीडा निबिडा दारसंग्रहे । अतः सर्वात्मना त्याज्यः संग्रहः स तु दुस्त्यजः ॥
असह्ययातनां को वा सोढुमिच्छति दुर्मतिः । अद्यापि विषयापेक्षा वृद्धस्याप्युचिता न हि ॥
तावत्तद्विषयापेक्षा यावद्यौवनपीडया । दुःखितः स्यान्नरस्तस्यां शान्तायां तद्विमोचनम् ॥ १३६ ॥
ज्ञानस्य परिपाकोऽयं यदि मृत्युञ्जयार्चने । प्रीतिः स्यात् तरुणस्यैव तरुणीष्वतिभाग्यतः ॥ १३७ ॥
अतः संसारवार्तायाः परित्यागं कुरु स्वतः । कुत्सितत्वमतिं तत्र कुरु संवीक्ष्य तत्वतः ॥ १३८ ॥
अनायासेन संसारशोकसागरनाशकम् । शङ्करं भज विश्वासं कुरु मद्वाचि सर्वदा ॥ १३९ ॥
एते तु तरुणा एव मुनयो यौवनक्षयम् । कृत्वैव श्रीविरूपाक्षं वृक्षमूले भजन्ति ते ॥ १४० ॥
अवशिष्टमिदं तावत् पुरुषत्वं नरेष्वतः । वैराग्यभाग्यसंपन्नाः तिष्ठन्ति मुनयो वने ॥ १४१ ॥
एतेषामपि सौन्दर्यं यौवनं च मनोहरम् । पश्य पश्य तथाप्येते संसाराद्विरताः परम् ॥ १४२ ॥
मूर्खाणां तु परं दारेष्वनुरागोऽपि रोगभूः । अनेनैवानुरागेण रोगोऽपि प्रबलो भवेत् ॥ १४३ ॥
किमङ्गनानुरागेण रोगकारणकारणम् । अङ्गनाङ्गमिति ख्यातमनङ्गसदनं तथा ॥ १४४ ॥

5 गोत्रे C

अङ्गनापाङ्गसङ्गेनाप्यनङ्गाङ्गतरङ्गिणी । तुङ्गाङ्गारतरङ्गाणां विहाराय प्रजायते ॥ १४५ ॥
अतः सर्वात्मना सङ्गोऽप्यङ्गनाङ्गेन सादरम् । न कर्तव्यः कदाचिच्चेदृतुकाले स जायताम् ॥
प्रजासंपत्तिरेवैका फलं भार्याङ्गसङ्गमे । ततः परं न तस्यापि फलमित्यवधारय ॥ १४७ ॥
गृहाण शांभवीं दीक्षां विरूपाक्षं समर्चय । मोक्षकान्ताविहारेण हरसंभावनां कुरु ॥ १४८ ॥
महादेवो महादाता महानन्दप्रदो मुदा । परमानन्दरूपोऽयं स्वार्चनाद् भुक्तिमुक्तिदः ॥ १४९ ॥
मुक्तिरप्यविरक्तानां दुर्लभा खलु देहिनाम् । विरक्तिरपि संसारे हरान्याराधने तु न ॥ १५० ॥
हरान्याराधनत्यागो वैराग्यमिति निश्चयः । शिवलिङ्गार्चनाभ्यासस्त्वनुराग इति स्मृतः ॥ १५१ ॥
अनुरागः शङ्गलिङ्गे मङ्गलाय प्रजायते । स सर्वमङ्गलाकान्तस्तस्मिन् गृह्णाति पूजनम् ॥ १५२ ॥
शिवलिङ्गार्चनरतोऽप्यङ्गनापाङ्गसङ्गतः । यदि दैवात् तदा तस्य नानुरागः प्रवर्धते ॥ १५३ ॥
शिवार्चनरसापारसुधासागरसङ्गतः । तत्सुधाधारया तृप्तिः क्षारनीरानपेक्षया ॥ १५४ ॥
यथा क्षीरेण सन्तृप्तः क्षारनीरं परित्यजेत् । तथा लिङ्गार्चनरतः तद्विरुद्धं परित्यजेत् ॥ १५५ ॥
यथा तृषार्तो ग्रीष्मेण विमलं शीतलं जलम् । गृह्णाति तद्वद्गृह्णाति शिवपूजामृतं सुधीः ॥१५६॥
शिवपूजाव्रतं त्यक्त्वा यस्तिष्ठति विमूढधीः । स संसारमहापाशबन्धमुक्तः कथं भवेत् ॥ १५७ ॥
शिवलिङ्गार्चनरतः कार्यान्तरविवर्जितः । मृत्युकालेऽपि संप्राप्ते न बिभेति यमादपि ॥ १५८ ॥
पुरा कीकटदेशेषु विचित्ररथनामकः । भूपतिर्भाग्यसंपन्नः पुत्रपौत्रादिसंयुतः ॥ १५९ ॥
तस्य राज्यं महत्तस्य तस्मिन् राज्ये शिवालयाः । कोटिशः संस्थितास्तेषु शिवलिङ्गानि कोटिशः ॥
तेषु सर्वेषु रत्नानां प्राकाराः कोटिशः स्मृताः । दीपस्तम्भाश्च तेष्वेव कोटिशो रत्ननिर्मिताः ॥
रत्नानामेव रम्याणि हर्म्याणि विविधान्यपि । तेषु रत्नमया एव नन्दिकेशाश्च कोटिशः ॥
रम्ये शिवालयप्रान्ते बिल्ववृक्षाश्च कोटिशः । तत्रैव नित्यपुष्पाणि नित्यपुष्पवनान्यपि ॥ १६३ ॥
दीपमालासहस्राणि तत्तदीश्वरमन्दिरे । नाट्याङ्गनासहस्राणि सुतूर्यध्वनिकोटयः ॥ १६४ ॥
तेषु सर्वेषु रम्येषु महादेवालयेषु सः । भूपालः पूजनं कृत्वा तुष्टो भवति सर्वदा ॥ १६५ ॥
पञ्चामृताभिषेकाद्यैः दिव्यचन्दनकर्दमैः । पुष्पैरपारैर्विविधैः दिव्याभरणकोटिभिः ॥ १६६ ॥
धूपराशिसमुत्पन्नधूमराजिभिरादरात् । दिव्यान्नपर्वतैर्दिव्यैः अपूपादिसमुच्चयैः ॥ १६७ ॥
कदलीसहकारादिफलराशिभिरुन्नतैः । नारिकेलाम्बुकुल्याभिः क्षीरकुल्यासहस्रकैः ॥ १६८ ॥
ताम्बूलगिरिभिर्दिव्यैः एलादिकसमुच्चयैः । नीराजनैर्दर्पणैश्च रत्नछत्रैश्च चामरैः ॥ १६९ ॥

विविधैरुपचारैश्च पूजयित्वा महेश्वरम् कृत्वा शिवार्चनं भुङ्क्ते निशि प्रत्यहमादरात् ॥ १७० ॥
तस्य पुत्रा महावीराः शाङ्कराश्च विशेषतः । तेऽपि सर्वे महादेवमहापूजापरायणाः ॥ १७१ ॥
तस्य कन्याभवत् कापि नाम्ना कमललोचना । तस्याः सौन्दर्यमुत्कृष्टं नास्ति नारीषु तत्समा ॥
गर्भे स्थित्वापि सा नारी शिवपूजनतत्परा । ततो ध्यात्वा महादेवं नित्यं मानसपूजया ॥
शिवनामानि गायन्ती तोषयामास शङ्करम् । ततः पूर्णेषु मासेषु योनिमार्गात् विनिर्गता ॥
ततो निमील्य नयने ध्यायन्ती साम्बमव्ययम् । स्तन्यपानं न सा चक्रे नयनोन्मीलनं च सा ॥
ततोऽन्तःपुरवासिन्यस्त्वरया बहिरागताः । सर्वं निवेदयामासुर्वृत्तान्तं भूपसन्निधौ ॥ १७६ ॥
भूपः श्रुत्वाऽथ वृत्तान्तं अतिव्याकुलमानसः । सस्मार सुरलोकस्थौ वैद्यावप्युत्तमौ तदा ॥
ततो निवेद्य वृत्तान्तं शचीनाथाय सादरम् । धन्वन्तरिश्चामृतश्च विचारव्याकुलौ तदा ॥ १७८ ॥
शचीनाथश्च तौ दृष्ट्वा प्राह किं वा विचार्यते । अधुना किमशक्यं ते तद्वदेति विशेषतः ॥

धन्वन्तरिः —

राजा चित्ररथो नाम भारते मगधाधिपः । स महाभाग्यसंपन्नः शिवपूजापरायणः ॥ १८० ॥
तस्याशक्यं न लोकेषु नास्ति सर्वात्मना खलु । तस्यैव भूपतेरासीदद्य कन्या मनोरमा ॥ १८१ ॥
सा गर्भेपि महादेवध्यानपूजनतत्परा । अधुना प्रसवस्तस्याः स्तन्यपानोत्सुका न सा ॥ १८२ ॥
तेनाहं संस्मृतस्तत्र गन्तव्यमिति रोचते । तत्र कृत्यं न मे नूनं औषधैर्न फलं यतः ॥ १८३ ॥
शिवाचाररता सा तु न गृह्णात्यौषधं खलु । अतः परं मया तत्र गन्तव्यं नेति चिन्त्यते ॥
इति तद्वचनं श्रुत्वा विस्मितः पाकशासनः । मयाप्यागम्यते तत्र द्रष्टुं तामेव कन्यकाम् ॥
इत्युक्त्वा तेन संयुक्तो ययौ चित्ररथालये । ततस्तेनार्चितो भक्त्या शचीपतिरुवाच तम् ॥

इन्द्रः —

भाग्यवानसि भूपाल पूज्यः सुरगणैरपि । भूतिरुद्राक्षभूताङ्ग शङ्गलिङ्गार्चनप्रिय ॥ १८७ ॥
महदैश्वर्यमासाद्य शिवपूजापरायणः । विहाय भोगसामग्रीं कः स्यादुग्रपरायणः १८८ ॥
त्वदीयालोकनेनापि शिवे भक्तिः प्रजायते । सभायां पुण्यरूपायां शांभवा एव ते मताः ॥
भूतिरुद्राक्षमालाङ्काः चन्द्ररेखाङ्किता इव । दृश्यन्ते शाङ्कराः सर्वे सभायां तव भूपते ॥ १९० ॥
रम्यशाङ्कररूपाणां प्रतिबिम्बानि भित्तिषु । विचित्ररचनानीव दृश्यन्ते शांभवानि हि ॥ १९१ ॥
अद्य भाग्यवशेनेदं जातं लोचनगोचरम् । हारं विहारसदनं इदमेव मनोहरम् ॥ १९२ ॥

भूमण्डलमिदं सर्वं पावनं खलु शांभवम् । बहुपुण्यप्रभावानां भावानां सङ्गमात् सुखम् ॥ १९३ ॥
मन्दिरे बिल्वतरवः परितो लिङ्गकोटयः । तन्मूलेषु विचित्रेषु रत्नबद्धेषु भूरिशः ॥ १९४ ॥
आनम्रबिल्वशाखाभिः लिङ्गान्यालिङ्गितान्यपि । कामिनीभिरिवापूर्व कामुकाङ्गानि लीलया ॥
अलमेतावता जन्म शिवलिङ्गावलोकनैः । सकलं सफलं लोके दुर्लभं लिङ्गदर्शनम् ॥ १९६ ॥
रत्नभूमिषु रम्याणि रत्नलिङ्गानि भूपते । बिल्वमूलेषु पुण्येन केन वा रचितान्यपि ॥ १९७ ॥
दूरादप्यद्य दृष्टानि शिवलिङ्गानि भूरिशः । रचयन्त्यविलम्बेन मङ्गलानां परम्पराम् ॥ १९८ ॥
तवैतद्भूपते भाग्यं दुर्लभं भुवनत्रये । तदिदं शम्भुपूजायाः केवलं फलमुत्तमम् ॥ १९९ ॥
कल्पकोटिसहस्रेषु यत् पुण्यं समुपार्जितम् । तत्पुण्यमेतदमलं लिङ्गं प्रत्यक्षलक्षणम् ॥ २०० ॥
अमङ्गलानां संहारो जात एवाद्य सत्वरम् । यतो विलोकितं लिङ्गं शाङ्गं मङ्गलदायकम् ॥ २०१ ॥
एवं वदति भूपालं वासवे वासुकिः स्वयम् । वृद्धरूपं समासाद्य भूपालं द्रष्टुमादरात् ॥ २०२ ॥
स समागत्य तं भूपं विलोक्य मुदितस्तदा । धन्यधन्य नृपाधीश धन्योऽसि शिवपूजक ॥
शिवपूजाप्रभावस्ते सर्वेषां शुभदायकः । शिवपूजाप्रभावोऽयं सूते शुभपरम्पराम् ॥ २०४ ॥
संभावितानि सर्वाणि मण्डलानि महीपते । लिङ्गार्चनेन लोकानां दुर्लभानि स्वभावतः ॥ २०५ ॥
दुर्लभं मानुषं जन्म संप्राप्य शिवतत्परः । शिवपूजां करोतीति शांभवो भुवि दुर्लभः ॥ २०६ ॥
शांभवः शोभनाकारो विकाररहितः परम् । शुभदानोद्यतो नित्यं [1]स्वावलोकनसंभवैः ॥ २०७॥
दिनं धन्यमिदं राजन् जीवनं धन्यमेव मे । शरीरमपि मे धन्यं शांभवस्यावलोकनात् ॥ २०८ ॥
दृष्टः शांभवरूपेण शंभुरेवाधुना मया । धर्माणां परिपाकोऽयं शांभवांघ्रिविलोकनम् ॥ २०९ ॥
शांभवाग्रेसराणां यत् चरणांबुजवीक्षणम् । तदेवाक्षयपुण्यानां करणं मङ्गलस्य च ॥ २१० ॥
भवश्रीचरणांभोजरेणवो भुवनत्रयम् । कुर्वन्ति पावनं नूनं यतः पावन पावनाः ॥ २११ ॥
पावनानि बहून्येव सन्ति किं तैरनुत्तमैः । यतः शांभवपादाब्जरेणुतुल्यानि तानि न ॥ २१२ ॥

लोके ते पशवो भवन्ति बहवः किं तैर्वृथा जीवनं
तेषां केवलमेव शांभवपदाम्भोजादराभावतः ।
भक्तिः शांभवपादपङ्कजरजःपुञ्जे तदासञ्जने
जाता जन्मसहस्रपातकमहोत्पातापहाराय सा ॥ २१३ ॥

---

1 स्वावलोकसंभवे C स्वावलोकनसंभ्रमैः D

धन्याः शङ्करपादपद्मभजनं सञ्जीवनं मेनिरे
हारः कोपि नरो हरत्यघकुलं लीलामलालोकनैः ।
आकल्पं यदुपार्जितं च सुकृतं तेनैव तद्दर्शनं
तत्कालस्य च तर्जनाय नितरां तद्भञ्जनायाप्यलम् ॥ २१४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे गणानां वैकुण्ठादिपददानं शैवतपोवर्णनं तेषां सत्यलोकाद्यधिपतित्वं कुरुराड्वसिष्ठसंवादे मगधभूपालवासविसंवादे शिवपूजमहिमवर्णनं नाम चत्वारिंशोऽध्यायः ॥

---

## अथैकचत्वारिंशोऽध्यायः ।

---

गौतमः —

ततः परं महीपालो देववैद्यादिभिः सह । विवेशान्तःपुरं रम्यं कुमारी यत्र तिष्ठति ॥ १ ॥
रत्नमन्दिरसंकीर्णं रत्नलिङ्गविराजितम् । रत्नतोरणसंकीर्णं दुन्दुभिध्वनिसंयुतम् ॥ २ ॥
फलपुष्पसमाकीर्णं पानीयकलशावृतम् । पक्वान्नगन्धसंवीतं गन्धवाहनिषेवितम् ॥ ३ ॥
रुद्रवीणाध्वनीनां च प्रतिध्वनिविराजितम् । शिवशङ्कर रुद्रेति नामध्वनिसमन्वितम् ॥ ४ ॥
क्वचिन्नाट्याङ्गनावीतं क्वचिल्लिङ्गार्चकावृतम् । क्वचिन्महेश्वरकथासुधाधारासमन्वितम् ॥ ५ ॥
ईदृशं मन्दिरं दृष्ट्वा सर्वसौभाग्यसंयुतम् । सन्तोषवृष्टिसहिताः तुष्टुवुस्तं नृपं सुराः ॥ ६ ॥
ततः परं मन्दसंज्ञां विनिमीलितलोचनाम् । तां कुमारीं विस्मयेन ददृशुर्मुनिपुङ्गवाः ॥ ७ ॥
ततः स राजा धैर्येण गृहीत्वा तां कुमारिकाम् । शिवाभिषेकपानीयैः आप्लुतां च चकार सः ॥
ततो भस्म समादाय तत्तदङ्गानुलेपनम् । कृत्वा रुद्राक्षमालाश्च कण्ठादौ स ददौ नृपः ॥ ९ ॥
ततः परं बिल्वपत्रैः शङ्कराय समर्पितैः । आच्छाद्य कन्यकां राजाऽप्यश्रुधाराप्लुतोऽभवत् ॥ १० ॥
ततः परं कुमारी साप्युन्मील्य नयने शनैः । शिवलिङ्गं विलोक्यैव प्रणता भक्तिपूर्वकम् ॥ ११ ॥
ततो लिङ्गमुपस्पृश्य बिल्वपत्रैर्मनोहरैः । संपूज्यालिङ्ग्य तल्लिङ्गं प्रहृष्टा द्विजपुङ्गवाः ॥ १२ ॥
तां विलोक्य सुराः सोऽपि नृपोऽपि नृपकन्यकाम् । सन्तोषं परमं जग्मुः पुष्पवृष्टिरभूत् तदा ॥
देवदुन्दुभयो नेदुरन्तःपुरनिवासिनाम् । हर्षः समभवत् तस्याः श्रुत्वा वार्तां मनोहराम् ॥ १४ ॥

ततः परं स राजा तां कन्यकां कमलाननाम्। आलिङ्गय परमानन्दमवापात्यन्तविस्मितः॥ १५॥

ततो जगाद सा कन्या शिव इत्यक्षरद्वयम्। ततः परं महादेव महादेवेति सादरम्॥ १६॥

श्रुत्वा तदुक्तां तां वाणीं निर्वाणपददायिनीम्। प्रहर्षमतुलं प्रापुः विनयाविष्टमानसाः॥ १७॥

एतस्मिन्नन्तरे तत्र चतुर्मुखमुखाः सुराः। सनकाद्याश्च मुनयः तां द्रष्टुं समुपागताः॥ १८॥

तान् विलोक्य सुरान् राजा शिवनामरतान् मुहुः। भस्मत्रिपुण्ड्ररुद्राक्षैः भूषितान् प्रणतो मुदा॥

ततस्ते मन्दिरं दृष्ट्वा तस्य भूपस्य शोभितम्। शिवलिङ्गसमाक्रान्तं रत्नदीपसमाकुलम्॥ २०॥

शिवनिर्माल्यमाल्यानां समूहैरङ्कितं नवैः। बिल्वपत्रैश्च संकीर्णं संकीर्णं शांभवैरपि॥ २१॥

शिवध्यानसमाक्रान्तनाट्यस्त्रीपरिवेष्टितम्। रुद्रवीणागानलोलशैवकन्यासमावृतम्॥ २२॥

प्रणमन्ति महादेवं लिङ्गरूपिणमव्ययम्। केचिद्बिल्वादिभिर्द्रव्यैः पूजयन्ति सदाशिवम्॥ २३॥

केचिन्नृत्यन्ति सोत्साहं केचित् ध्यानरता अपि। शिवनैवेद्यपक्वान्नराशिगन्धसमावृतम्॥ २४॥

धूपगन्धसमाक्रान्तं दीपमालाविराजितम्। तादृशं मन्दिरं दृष्ट्वा सुराः कैलाससन्निभम्॥ २५॥

शिवलिङ्गानि दृष्ट्वा ते प्रणताः प्रीतिपूर्वकम्। लिङ्गार्चनानि ते चक्रुः बिल्वपत्रादिसाधनैः॥

ततः परं स राजापि रत्नसिंहासनेषु तान्। उपवेश्यार्चयामास बिल्वपत्रादिसाधनैः॥ २७॥

राजा —

नारायणादयो देवाः शिवार्चनपरायणाः। क गम्यते क वा वासः कुतो लिङ्गार्चनाय वा॥

शिवार्चनरताः शिष्टाः तावद्यूयमतो मया। दृष्टाः पुण्यार्जनायाद्य श्रीमहादेवकिङ्कराः॥ २९॥

इति तद्वचनं श्रुत्वा सुराः शिवपरायणाः। सन्तोषं परमं प्रापुः शिवलिङ्गार्चनप्रियाः॥ ३०॥

ततस्ते ते सुराः प्राहुर्विनयानतकन्धराः। राजानं कृतकृत्योऽसि धन्योऽसीति मुहुर्मुहुः॥ ३१॥

ततस्तां कन्यकां दृष्ट्वा भूतिभूषितविग्रहाम्। रुद्राक्षमालाभरणां शिवध्यानरतां पराम्॥ ३२॥

शिवध्यानसुधापानपीनशोभनलोचनाम्। मुहुः शिवकथागानलोलकर्णां विचक्षणाम्॥ ३३॥

सौन्दर्यनिधिरूपां तां सर्वानन्दप्रदायिनीम्। स्मेरशीतांशुसङ्काशां दृष्ट्वा तां प्रणताः सुराः॥

विलोक्य प्रणतान् देवान् विस्मितः प्राह भूपतिः। केयं भाग्यवती कन्या वक्तव्यमिति सादरम्॥

देवाः —

इयं श्रीशैलनाथस्य मन्दिरे मणिसुन्दरे। स्थिता ब्राह्मणकन्येयं अस्यास्तातः शिवार्चकः॥ ३६॥

विप्रः श्रीशैलनाथस्य प्रातः सायं च पूजनम्। चकार विविधैर्द्रव्यैः मध्याह्नेऽपि विशेषतः॥

तत्पूजासमये सेयं भक्त्या सन्निहिता सती । चकार दीपमालानां परिष्कारं पुनः पुनः ॥३८॥
कपिलागोघृतं दत्वा शुद्धं शोधितमादरात् । धूपधूमैश्च विविधैः धूपयामास मन्दिरम् ॥ ३९ ॥
नैवेद्यान्नपरिष्कारं चकारातिमनोहरम् । नाट्यं चकार बालेयं श्रीशैलेश्वरसन्निधौ ॥ ४० ॥
ततः परं दैवयोगात् [1]धारातीरे मनोहरे । प्राणान् मुमोच कन्या सा भूतिभूषितविग्रहा ॥४१॥
तेन पुण्यप्रभावेन जाता तत्र कुमारिका । गर्भेऽपि संस्थिता सेयं शिवध्यानरता नृप ॥ ४२ ॥
अस्याः पुण्यस्य नान्तोऽस्ति मान्या सुरगणैरपि । अतः परमियं नित्यं शिवपूजापरा नृप ॥ ४३ ॥
आहारेऽप्यरुचिस्तावदस्याः सर्वात्मना नृप । न रत्नाभरणे प्रीतिः न वा बालाभिलापने ॥ ४४ ॥
हारोपहारपुष्टाङ्गा शङ्खलिङ्गार्चनप्रिया । शिवनामजपेनैव सन्तुष्टा नृपकन्यका ॥ ४५ ॥
सेयं यौवनसंपन्ना सर्वदा नवयौवना । न जरा नापि मरणं रोगोऽप्यस्यास्तु न ध्रुवम् ॥ ४६ ॥
शिवगानरता नित्यं शिवमन्त्रजपोत्सुका । शिवालयनिवासेन सन्तुष्टहृदया सदा ॥ ४७ ॥
एतस्यास्तु विवाहेऽपि न प्रीतिः पुरुषेऽपि वा । ब्रह्मचर्येण गौरीशपूजनासक्तमानसा ॥ ४८ ॥
एतत्सौन्दर्यवृद्धिश्च भविष्यति दिने दिने । अङ्गपुष्टिस्तथाप्येषा विकारविरता भवेत् ॥ ४९ ॥
यद्यत्किलाभिलषितं तत्तत् सिद्धं भविष्यति । तैः साधनैर्महादेवं पूजयिष्यति सादरम् ॥ ५० ॥
नाट्यं करिष्यति प्रीत्या प्रातः सायं विशेषतः । मध्याह्नेऽपि प्रयत्नेन शिवपूजनतत्परा ॥ ५१ ॥
शिवपूजनमेतस्याः केवलं जीवनं नृप । तदन्तरायः सहसा नास्यां सद्यः कदाचन ॥ ५२ ॥
रात्रावपि प्रयत्नेन निद्रां तु न करिष्यति । नित्यं जागरणेनैव कालयापनतत्परा ॥ ५३ ॥
शिवलिङ्गालयेष्वेषा संमार्जनरता सदा । व्यर्थालापान् परित्यज्य शिवकर्मरता सदा ॥ ५४ ॥
अनेनैव शरीरेण कैलासं प्रतियास्यति । रुद्रकन्यासमाक्रान्ता पार्वतीसेवनोत्सुका ॥ ५५ ॥
अस्याः कैलासयात्रायां देवदुन्दुभिनिःस्वनाः । भविष्यन्ति गणाः सर्वे समायास्यन्ति कोटिशः ॥
विमानरत्नमारुह्य कैलासं प्रतियास्यति । अस्यां प्रीतिर्महेशस्य सर्वदा शिवपूजया ॥ ५७ ॥
शिवलिङ्गार्चने प्रीतिर्यस्य तस्य च सर्वदा । तस्मिन्नेव हि विश्वेशः स्नेहं तावत्करिष्यति ॥ ५८ ॥
शिवार्चनरताः केचित् विरलास्ते कलावपि । दुर्लभा एव भूपाल लीलाकल्पितविग्रहाः ॥५९॥
तव भाग्येन तपसा महत्या शिवपूजया । इयमभ्यागता सेयं तवापि नृपमन्दिरे ॥ ६० ॥
एतस्याः पुण्यपूजायाः सेवया च विलोकनैः । कालो नेय इति प्रीतिः अस्माकमिति जायते ॥

1 नदीतीरे C.

अद्यैव यौवनाक्रान्ता भविष्यति नृपोत्तम । सायंकाले शिवार्चान्ते नाट्यमेषा करिष्यति ॥ ६२ ॥
नाट्यावलोकनं कर्तुमेतस्मिन् रत्नसण्टपे । गणैः सह महादेवः स्थास्यत्यम्बासमन्वितः ॥ ६३ ॥
अद्योत्सवो महान् कार्यः शिवागमन[1] संभ्रमे । भाग्योत्सवस्य समयः सोऽयमन्यो न दृश्यते ॥
पश्य पश्यैतदङ्गानि वर्धमानानि भूपते । आश्चर्यकरमेतावद्भूतपूर्वं न सर्वथा ॥ ६५ ॥
अभूतपूर्वं तद् दृष्ट्वा ते सर्वे विस्मयं गताः । ततः परं स राजापि दृष्ट्वा कन्यां प्रहर्षभूः ॥
स्वभाग्यविभवं दृष्ट्वा प्रहृष्टः शिवतत्परः । भृत्यानाज्ञापयामास शिवमन्दिरमण्डने ॥ ६७ ॥
वरुणः स्वयमागत्य क्षालयामास मण्टपम् । रङ्गवल्यादिरचनां चकार स धनाधिपः ॥ ६८ ॥
रत्नतोरणसंवीतं चकार शिवमन्दिरम् । पुष्पमालासमाक्रान्तं पुष्पोच्चयसमाकुलम् ॥ ६९ ॥
मरन्दधारासंकीर्णं भ्रमरालिविराजितम् । रत्नच्छत्रसमाकीर्णं रत्नध्वजविराजितम् ॥ ७० ॥
ततः प्रदोषसमये संप्राप्ते मुनयः सुराः । उद्धूल्य भस्मनाङ्गानि रुद्राक्षाभरणान्विताः ॥ ७१ ॥
शिवपूजापराः सर्वे शिवध्यानपरायणाः । पञ्चामृताभिषेकाद्यैरभिपूज्य सदाशिवम् ॥ ७२ ॥
प्रदक्षिणनमस्कारान् कृत्वा ध्यानपरायणाः । कृताञ्जलिपुटाः सर्वे स्तोत्रं चक्रुः शिवार्चकाः ॥
ततः सा कन्यका सायं नवयौवनविग्रहा । शिवतीर्थोदकैः स्नात्वा दुकूलं परिधाय सा ॥ ७४ ॥
कृत्वा च केशसंस्कारं वेणीबन्धनपूर्वकम् । उद्धूल्य भस्मनाङ्गानि रुद्राक्षाभरणप्रिया ॥ ७५ ॥
त्रिपुण्ड्रधारणं कृत्वा ललाटादिषु सादरम् । शिवार्चनरता जाता सायं बिल्वादिसाधनैः ॥ ७६ ॥
पञ्चामृतप्रवाहैः सा तोषयामास शङ्करम् । फलोदकप्रवाहैश्च तथा गन्धोदकैरपि ॥ ७७ ॥
नीहारनीरपूरैश्च सुगन्धैरभिषिच्य सा । दिव्यवस्त्रैरलंकृत्य चन्दनं च ददौ ततः ॥ ७८ ॥
बिल्वैः प्रसूनैर्विविधैः स चैत्ररथसंभवैः । पूजयामास गौरीशं धूपधूमैर्मनोहरैः ॥ ७९ ॥
दिव्यौदनैश्च पक्वान्नैः परमान्नैः फलैरपि । क्षीरसारादिभिर्द्रव्यैः पूजयामास शङ्करम् ॥ ८० ॥
कर्पूरराशिदीपैश्च मणिनीराजनैरपि । रत्नच्छत्रध्वजैरुच्चैर्दर्पणैश्च मनोहरैः ॥ ८१ ॥
प्रदक्षिणनमस्कारान् कृत्वा नाट्यं चकार सा । तन्नाटयकरणे देवैः कृतं नेत्रनिमीलनम् ॥
तदङ्गलाघवं दृष्ट्वा तन्नाटयं शङ्करार्पणम् । कृत्वा ध्यानरताः सर्वे विस्मयाविष्टमानसाः ॥ ८३ ॥
ततः परं निशामध्ये कृत्वा सा शिवपूजनम् । हारोपहारं देवेभ्यो ददौ सा प्रीतमानसा ॥ ८४ ॥
राजा विलोक्य तन्नाट्यं स्वदारैः सह विस्मितः । सन्तोषं परमं प्राप देवैः सह विशेषतः ॥८५॥

1 संभवे C

ततः सुरेभ्यः सर्वेभ्यो यथाक्रममुपायनम् । ददौ प्रीताः सुरास्तेऽपि तमूचुर्नृपसत्तमम् ॥ ८६ ॥

देवाः —

धन्योऽसि कृतकृत्योसि शिवार्चनपरायणः । अनया भूषितं नूनं कुलं तव नृपोत्तम ॥ ८७ ॥

इयं कुमारिका बुद्ध्याप्यादरेण निषेविता । शिवानुचरतामेत्य सुखं प्राप्स्यत्यसंशयम् । ८८ ॥

यस्य कस्यापि हारस्य सानुमोदावलोकनैः । प्रीतो ददाति सौभाग्यं सौभाग्यनिधिरीश्वरः ॥

हाराः कुमारा दाराश्च यस्य तावन्मनोहराः । कुमारिका हररता तस्य भाग्यं महत् खलु ॥ ९० ॥

कुटुम्बपोषणे प्राप्ते नित्यत्वेन विशेषतः । अनन्तपुण्यगुणितहारदारादिपोषणे ॥ ९१ ॥

पुण्येन हारदाराणां पोषणप्रणयादिभिः । सुप्रीतो भगवान् शंभुः भवत्येव न संशयः ॥ ९२ ॥

दाराश्च हाराः सुकृतैः कुमाराः हाराः परं पुण्यपरम्पराणाम् ।
फलं हि कल्याणपरंपराणां हारः स्वयं चेति तपःफलं हि ॥ ९३ ॥

उदारदारहाराणां कृत्वा दारुणभाषणम् । मोहेन नरकं याति ततस्तत् तत्र सन्त्यजेत् ॥ ९४ ॥

एतस्याः कन्यकायास्तु शिवाराधनसाधनम् । संपाद्य देयं यत्नेन यदा यावदपेक्षितम् । ९५ ॥

यस्य कस्यापि हारस्य हरपूजनसाधनम् । दृष्ट्वा सुखमवाप्नोति स्वकीयस्य विशेषतः ॥ ९६ ॥

हारानुगुण्यकरणे भाग्यं यस्य प्रवर्धते । ततोपि भाग्यवान् लोके न लोकेष्विति चिन्त्यताम् ॥

हाराय हररूपाय दत्तं गृह्णाति शङ्करः । इत्युक्त्वा प्रस्थिताः सर्वे सुरा भूपालपूजिताः ॥ ९८ ॥

तां कन्यकां प्रणम्यापि तदनुज्ञामवाप्य च । अतः पूजय भूपाल शिवलिङ्गानि भूरिशः । ९९ ॥

नित्यं हारोपचारेण कुरुष्व दिनयापनम् । विलम्बः शिवपूजायां नोचितस्तव वार्धके ॥ १०० ॥

आयुः प्रतिक्षणं क्षीणं आयुर्वृद्धिः कदाचन । तद्वृद्ध्यर्थमुपायोऽपि श्रीमहादेवपूजनम् ॥ १०१ ॥

दिनान्तरे मया कार्यं शिवपूजनमित्यपि । न कर्तव्यो विलम्बोपि प्रत्याशा तत्र का वद ॥१०२॥

शरीरं श्वः परश्वो वा स्थास्यतीति न निश्चयः । अतः शिवार्चनं कार्यं त्वरया सादरं मुहुः ॥

यद्दिने यन्मुहूर्ते वा जीवनं यस्य निश्चितम् । तदा यत्नेन कर्तव्यं शिवलिङ्गार्चनं नृप ॥ १०४ ॥

यदि प्रमादः पूजायां तदा व्यर्थं तु जीवनम् । अवैयर्थ्यं जीवनस्य केवलं शिवपूजया ॥ १०५ ॥

तदेव जीवनं धन्यं येन शङ्करपूजनम् । क्षणमात्रं क्षणार्धं वा किमन्यदधिकं वद ॥ १०६ ॥

धन्यानामनुवासरं खलु मुहुः स्वस्यायुषः संक्षयो लिङ्गाराधनसाधनार्जनमहादेवार्चनेन क्षणम् ।
यस्यानुक्षणमीशपूजनरतिः धन्येषु धन्योत्तमं मन्ये दुर्लभमेतदीशभजनं सर्वात्मना दुर्लभम् ॥

भाग्येनैव मुहुर्मुहुः शिवपदाम्भोजार्चने जायते बुद्धिस्तत्तपसः फलं क्षणमपि प्रीत्या स्मृते शङ्करे।
संसारान्न भयं यमादपि भयं नास्तीति वेदैर्मितं सौभाग्यप्रदमीशपूजनमिदं लोकत्रये दुर्लभम् ॥

आयुः क्षीणमनुक्षणं मरणमप्यभ्यर्णमित्यन्वहं भीतः कालभयेन भर्गभजनासक्तं मनो यस्य वा ।
तं तावत्प्रणमन्ति ते सुरगणाः श्रीकालकालार्चको लोके दुर्लभ इत्यवेक्ष्य मुहुरप्यानन्दधारावृताः ॥

ऐश्वर्याणि विनश्वराणि नितरां जीर्णं शरीरं धनं धान्यं वा निधनाय साधनमिदं सर्वात्मना नश्वरम् ।
तस्मात् पूजय शंकरं त्यज रतिं संसारवार्तास्वपि स्वापेक्षा यदि मोक्षलक्षणधने तन्नश्वरं नैव हि ॥

किं दारैरतिमादरैः सुरतधीसंवर्धनात्यादरैः किं वा तैस्तनयैर्धनाय हरणोद्युक्तैः प्रमादोद्धृतैः ।
उन्मादे नवयौवनेन च फलं तं कालकालं परं ध्यात्वा तच्चरणाम्बुजार्चनरतो भूत्वा नयायुर्मुहुः ॥

एतावत्फलमायुषोऽपि विदितं विश्वेश्वराराधनध्यानैः कालविपर्ययेऽपि मनसा क्षोभेऽपि दोषेऽपि वा ।
रोषे वा कलुषात्मनामपि मुहुः सङ्गं कुरङ्गेक्षणाव्यासङ्गं परिहाय कालनयनं श्रीकालकालप्रियम् ॥

भस्मोद्धूलितविग्रहो भव भवाम्भोधेर्भयं संत्यज
　　प्राणप्रायधनप्रियादिविषयप्रीतिं पुनः संत्यज ।
मृत्युं सन्निहितं विलोकय मुहुः नास्था शरीरेऽपि या
　　कालः कोऽपि खलः खलेष्वपि दयालेशोपि तन्नाश्रितः ॥ ११३ ॥

लोकः कालवशं प्रयाति सकलं कालेन नीतिं मुहुः
　　पश्यन्नेव मुहुर्मुहुर्धनमिदं धान्यं ममेत्यादरात् ।
संप्राप्ते मरणे क्षणेऽपि न जहात्यायुष्यवांछां खलः
　　कालं पश्यति कालकालभजनं त्यक्त्वाऽतिमूढः परम् ॥ ११४ ॥

श्वासस्यापि विकुण्ठने सति शठस्तन्नीलकण्ठार्चनव्यासक्तो न भवत्यघौघविलयोपायः स मृत्युञ्जयः ।
आरूढं हृदये शिवापरिवृढं कर्तुं न यत्नं करोत्युन्मादं न जहाति मृत्युवशगः शाङ्गानुषङ्गं विना ॥

भङ्गस्तस्य पदे पदे जनिजरारोगानुषङ्गो मुहुः मृत्युस्तस्य शिरस्यपारदुरितव्यापारनिर्धारकः ।
यस्यानङ्गमतङ्गभङ्गचरणाम्भोजार्चनानादरो हारापारकथासुधामधुरिमारम्भोऽपि संभावितः ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे मगधभूपालकन्यकाचरितवर्णने कुरुराजानं प्रति वसिष्ठोपदेशो नाम एकचत्वारिंशोऽध्यायः ॥

— ० —

# अथ द्विचत्वारिंशोऽध्यायः ।

नारदः —

इति तद्वचनं श्रुत्वा स राजा वीतमत्सरः । संसारेऽपि रतिं त्यक्त्वा शिवपूजारतस्ततः ॥ १ ॥
राज्याभिषिक्तं कृत्वैव ज्येष्ठपुत्रं शिवार्चकम् । धनं च शिवसात्कृत्वा शांभवैः सह सादरम् ॥
शङ्करार्चापरो भूत्वा राज्यभारपराङ्मुखः । उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैश्च समावृतः ॥ ३ ॥
गृहीत्वा शांभवीं दीक्षां वसिष्ठाश्रममाययौ । ततः पुत्रैरनुगतो दारैरपि मुहुर्मुहुः ॥ ४ ॥
निवार्य सङ्गतिं तेषां स चक्रे हारसङ्गतिम् । [[1] ततस्त्वमपि भाग्येन शिवपूजारतो भव ॥ ५ ॥
शिवार्चनेन कालस्य कुरु यापनमादरात् । शङ्गमङ्गेन सततं कुरु लिङ्गार्चने रतिम् ] ॥ ६ ॥
न कोपि महदैश्वर्यं प्राप्य बुद्धिमतां वर । हारपूजाविरहितो दृष्टपूर्वः श्रुतोऽपि वा ॥ ७ ॥
शंकरानुग्रहेणैव भाग्यं प्राप्य मुहुर्मुहुः । तत्पूजनपरित्यागं कः कर्तुमभिवांछति ॥ ८ ॥
स्वस्वरूपं मुहुः स्मृत्वा भाग्यं स्मृत्वा मुहुर्मुहुः । फालाक्षपूजनासक्तो भवभावसमन्वितः ॥ ९ ॥
भावसङ्गेन भाग्यानि प्राप्नुवन्ति भवे भवे । पुनर्भवार्चनं कृत्वा भाग्यवानेव जायते ॥ १० ॥
भावसङ्गपरित्यागे भाग्यमप्यतिदुर्लभम् । दुर्लभे सति भाग्ये तु भवपूजा कुतो भवेत् ॥ ११ ॥
भवपूजनसामग्री भाग्यमित्यवधारय । तदभावे कथं वा स्यात् पूजनं भाग्यसाधनम् ॥ १२ ॥
भक्तश्चेत् भवपूजायां भाग्येनैव शिवार्चनम् । तत्साधनं मुख्यमेव भाग्यमित्यवधार्यते ॥ १३ ॥
सौभाग्यसाधनं भाग्यं यद्भवार्चनसाधनम् । तद्भूयो भाग्यहेतुत्वात् भाग्यं भाग्यमिति स्मृतम् ॥
यद्भाग्यं भवपूजायामुपयुक्तं न सर्वथा । तदभाग्यमिति ज्ञेयं भाग्यवानपि दुर्भगः ॥ १५ ॥
यावदायुस्तावदेव भाग्येनैव शिवार्चनम् । तदायुः सफलं नो चेत् आयुरेव न तत्खलु ॥ १६ ॥
अस्मिन् काले शांभवानां कुरु संभावनां मुहुः । तत्संभावनया शम्भुः प्रसन्नः स्यादसंशयम् ॥
इत्युक्तं नारदवचः श्रुत्वा सन्तुष्टमानसः । संपूज्य तान् मुनिवरान् शिवार्चनरतोऽभूत् ॥ १८ ॥
इति नन्दीश्वरेणोक्तां कथां पापप्रणाशिनीम् । श्रुत्वा ब्रह्मादयो देवाः पुलकाङ्कितविग्रहाः ॥ १९ ॥
तं प्रणम्य पुनः प्राहुर्विनयानतकन्धराः । कर्तव्यं किमिहास्माकं रहस्यमिति ते पुनः ॥ २० ॥

---

[1] कोष्ठान्तर्गतः पाठः C कोशे नास्ति ।

नन्दिकेशः —

ये ये नराः परमशांभवपादपद्मसेवारताः कलियुगेऽपि विशुद्धचित्ताः।
ते तावदादरवरादिभिरन्वहं वः पूज्या भवन्ति तदिदं परमं रहस्यम् ॥ २१ ॥

श्रीनीलकण्ठ मदनान्तक चन्द्रमौले श्रीफाललोचन यमान्तक विश्वमूर्ते।
पाहीति ये सकृदपि प्रवदन्ति ते वः पूज्या भवन्ति तदिदं परमं रहस्यम् ॥ २२ ॥

उत्पत्तिपालनविनाशनहेतुभूत भूतेश भूतनिवहार्चितपादपद्म।
पाहीति ... रहस्यम् ॥ २३ ॥

कल्याण पुण्यगुणसागर मेरुधीर रत्नस्फुरद्वरशरासनकोटिहस्त।
पाहीति ... रहस्यम् ॥ २४ ॥

गौरीकुचोरुगिरिशेखरचारुहार काश्मीरसाररसरञ्जितपादपद्म।
पाहीति ... रहस्यम् ॥ २५ ॥

आपादुकप्रणतदेवकिरीटकोटिरत्नप्रभापरिवृतांघ्रिसरोजराज।
पाहीति .... रहस्यम् ॥ २६ ॥

संसारसागरनिवारक कालकाल लीलाविशेषपरिकल्पितकल्पजात।
पाहीति .... रहस्यम् ॥ २७ ॥

मन्नाथ सुन्दरतरातिमनोहराद्रिकन्यासनाथ विधृतोडुगणाधिनाथ।
पाहीति ... रहस्यम् ॥ २८ ॥

रत्नाङ्गदाङ्गमणिकङ्कणकिङ्किणीक गौरीमनोहर सुनूपुरभासुरांघ्रे।
पाहीति ... रहस्यम् ॥ २९ ॥

मन्दारकुन्दमकरन्दरसाभिषिक्तपादारविन्द परमादरहारवीर।
पाहीति ... रहस्यम् ॥ ३० ॥

कर्पूरगौर हर सुन्दरतारतार [1] तारामनोहरविहार विहारहार।
पाहीति ... रहस्यम् ॥ ३१ ॥

मामीश मामकधिया परिपालयाशु क्लेशापहारचतुर प्रवरगवीर।
पाहीति ... रहस्यम् ॥ ३२ ॥

---

1 शूर C

[1] सर्वामरेश्वरमखर्वसुरारिगर्वनिर्वापणप्रवण कारुणिकप्रवीण ।
पाहीति ... रहस्यम् ॥ ३३ ॥

श्रीमन्महेश करुणातरुणाम्बुराशे गौरीमुखांबुजसहस्रकराऽऽदरेण ।
पाहीति ... रहस्यम् ॥ ३४ ॥

मृत्युञ्जयाव्यय पिनाककरामरारिवीरान्धकासुरनिवारणकारणाशु ।
पाहीति .... रहस्यम् ॥ ३५ ॥

श्रीकालकूटविषदोषविदूषकाशापाशप्रणाशनविधानविनोदमोद ।
पाहीति ... रहस्यम् ॥ ३६ ॥

सौवर्णवर्ण सहिरण्य हिरण्यबाहो शम्भो हिरण्यद हिरण्यपते स्मरारे ।
पाहीति ... रहस्यम् ॥ ३७ ॥

अन्यस्त्वास्ति शिव शङ्कर पालनीयो मत्तोऽधिकः कलुषनाशकरातिधीर ।
पाहीति ... रहस्यम् ॥ ३८ ॥

घोरापराधनिधिशोषक कामशत्रो चित्रत्रिनेत्र करुणारसपात्रभूत ।
पाहीति .... रहस्यम् ॥ ३९ ॥

भस्मावगुण्ठनविनष्टमहाघकोटि रुद्राक्षकर्णपरवर्णमवर्ण्यवर्ण ।
पाहीति ... रहस्यम् ॥ ४० ॥

श्रीबिल्वमूलशिवलिङ्गसमर्चनेन निर्धूतपातककुलाचलमीशशीलम् ।
पाहीति ... रहस्यम् ॥ ४१ ॥

दाराविहारपरिहाररसादरं मां धीरं दुरोदरविचारविवर्जितं च ।
पाहीति ... रहस्यम् ॥ ४२ ॥

शंभो त्वदंघ्रिकमलं कलयामि काले कालेऽनुवेलमतिवेलमतोऽनुवेलम् ।
पाहीति ... रहस्यम् ॥ ४३ ॥

नित्यं महेशचरणस्मरणप्रवीणं प्रक्षीणपापकरणं करुणार्णवेश ।
पाहीति ... रहस्यम् ॥ ४४ ॥

---

1 सर्वामरेश्वरवरातिसुरारिगर्व C

यः कश्चिदन्तकरिपुस्मरणप्रवीणः प्राणप्रयाणसमयेऽपि स एव वन्द्यः ।
पूज्यः स एव सकलाघविनाशहेतुः तत्पादपद्मभजनं निधिरेव कोऽपि ॥ ४५ ॥

श्रीकालकाल करुणाकर दीनबन्धो भक्तप्रभूतकरुणारससारसिन्धो ।
मां दीनमप्यनुदिनं परिपालयेति ये संवदन्ति सकृदेव हि ते नमस्याः ॥ ४६ ॥

प्रक्षीणपातककुलं भसितत्रिपुण्ड्रं रुद्राक्षभूषणमदूषणमन्धकारे ।
पाहीति ये प्रतिदिनं प्रवदन्त्यमन्दं तं वन्दनीयमसकृत् प्रवदामि देवाः ॥ ४७ ॥

स्वामिन्नशांभवकथार्णवबाडवं मां शैवापकारतरुसारकुठारभूतम् ।
लिङ्गार्चनव्रतविदूषकशैलवज्रं पाहीति यो वदति तं प्रणमन्ति देवाः ॥ ४८ ॥

पापांबुराशिपरिहारकरप्रवीरं हारं हरार्चनपरं गतदुर्विकारम् ।
धीराः परं सततमादरतो नमन्ति सन्तः कृतान्तपरितापनिवारणाय ॥ ४९ ॥

ये शूलपाणिचरणस्मरणप्रवीणाः ते तावदन्तकभयप्रलयप्रवृत्ताः ।
पुण्यार्णवाः परमकारुणिकोत्तमाश्च तत्पादपद्मभजने क्व भयं भवाब्धेः ॥ ५० ॥

ये काशिकापुरपते त्रिपुरान्तकारे विश्वेश्वर त्रिदशवन्द्यपदारविन्द ।
मां रक्ष रक्ष विषमेक्षण वीक्षणेन प्रक्षीणपापमिति वेदविदो वदन्ति ॥ ५१ ॥

सानन्दमिन्दुशकलाभरण प्रणामश्रेणीं गृहाण करुणोरुतरङ्गिणी ते ।
मय्यन्वहं प्रसरतु प्रणतार्तिनाशं संपादयत्विति वदन्ति त एव मान्याः ॥ ५२ ॥

आनन्दकन्द मदनद्रुमवीतिहोत्र पाहि त्रिनेत्र सुचरित्र पवित्रगात्र ।
श्रीविश्वनाथ करुणारसपात्रमात्रमित्युत्तमोत्तमतमाः प्रवदन्ति शैवाः ॥ ५३ ॥

दुष्टाघकोटिघटितानपि कालकूटकूटोपमानपि महेश्वर पाहि दीनान् ।
दीनार्तिभञ्जनमहाव्रतदीक्षितास्मान् पाहीति वेदवचनानि वदन्ति मान्याः ॥ ५४ ॥

लिङ्गार्चनव्रतपरात् न परोऽस्ति कोपि लोके प्रभूतपरमाद्भुतपुण्यराशिः ।
लिङ्गार्चनव्रतपरो भवतीति वेदाः तावद्वदन्ति बहवो बहुधा बुधानाम् ॥ ५५ ॥

मान्योऽन्यो न शिवार्चकादिति मतिर्धन्यास्य संजायते
पुण्यानां परिपाकतः कथमपि प्रायः स धन्योत्तमः ।
लोके दुर्लभ एव शांभव इति प्रामाणिकानां वचो-
वीची सञ्चरति प्रभाकरकराकारा तमोनाशिका ॥ ५६ ॥

कोऽपि प्राणिषु कालकालभजनं कर्तुं प्रवृत्तो भवेत्
तं वन्दे पुनरेव तत्पदरजःपुञ्जैर्मनोरञ्जनम् ।
कर्तुं यो यतते कृतातिसुकृतैः तत्पादुके मस्तके
कृत्वा नृत्यति कोऽपि पुण्यविभवो भावः सभावप्रियः ॥ ५७ ॥

लोके दुर्लभ एव शांभव इति ज्ञात्वाऽतिपुण्यार्जितैः
लब्धश्चेत् भुवि शांभवः स्वविभवैरभ्यर्चनीयो मुहुः ।
मोहात् तद्भजनं त्यजेद्यदि तदा स्याद्दुर्भगो दुर्भगा
तन्माता जनकोपि दुर्भग इति ज्ञेयोऽपि तस्य ध्रुवम् ॥ ५८ ॥

शंभुः शांभवजिह्वया रसमयं गृह्णाति नैवेद्यमि-
त्यन्नं शांभवपुङ्गवाय विविधं देयं तदाराधनात् ।
स्यादाराधित एव तेन स महादेवोऽतितुष्टः सदा
तं पुष्णाति धनादिभिर्वितनुते तां मुक्तिकान्तामिति ॥ ५९ ॥

किं तद्वेदशिरोविचारनिरतस्वान्तेन तीर्थोदक-
स्नानेनापि तपस्यया शिवपुरावासेन यागैरपि ।
योगैर्वा नियमेन शांभवपदाम्भोजार्चनं चेन्न तैः
आवृत्तैरपि कोटिशोऽपि न फलं स्वर्गापवर्गप्रदम् ॥ ६० ॥

शम्भुर्मे प्रभुरित्यवैति बहुभिः पुण्याब्धिभिर्भूतले
कालोन्मूलककालकालकलनाव्यासक्तशीलः खलु ।
तं कालप्रलयेऽपि पूजय महामृत्युञ्जयस्तं प्रियं
ब्रह्मानन्दमयं विधाय विविधोपायैर्मुदा वर्धते ॥ ६१ ॥

भाग्यं तस्य तदित्यवैमि बहुधा येनार्चितः शांभवः
सन्तुष्टो निलयः शिवस्य सुतरामम्बासमेतस्य सः ।
तस्मादप्यधिको न कोऽपि भुवनेष्वित्यादरादन्वहं
तं दृष्ट्वा प्रणमन्ति पुण्यनिवहैः सिद्धा मुनीन्द्रा अपि ॥ ६२ ॥

योऽयं शांभवपुङ्गवः स मनुजः सिद्धो मुनिः किन्नरो
गन्धर्वो न सुरोऽपि कल्पतरुरप्याढ्यो न चिन्तामणिः ।

पीयूषं सुरधेनुरम्बुनिधिरप्यद्रीश्वरो वा परं
　　त्वन्यः कोऽपि महानुभाव इति मे भावोऽपि भावो भवः ॥ ६३ ॥

किश्चान्यत् यम भावलिङ्गनिलयं मृत्युञ्जयं योऽर्चयेत्
　　प्रस्तौति प्रणमत्यपारविभवं कृत्वा प्रदोषे प्रगे ।
हृष्टस्तन्निलयं न याहि न भटाः संप्रेषणीयास्त्वया
　　तन्मार्गेऽपि न याहि तत्कुलगृहत्यागं कुरुष्वादरात् ॥ ६४ ॥

मोहाद्वा भवभावलिङ्गभजनासक्तालयाध्वन्यपि
　　व्यासङ्गादपि वा गतिर्यदि तदा श्रीकालकालः स्वयम् ।
संहारं तव कर्तुमिच्छति ततः तन्मन्दिराध्वाध्वनां
　　सङ्गो मास्तु यमायमस्तु नियमस्ते जीवनेच्छा यदि ॥ ६५ ॥

श्रीशैलात् समुपेत्य शांभववरः तद्भावलिङ्गार्चनं
　　कृत्वा तस्य नुतिं करिष्यति नुतिः सा तावदभ्यस्यताम् ।
तं तावन्मुहुरादरेण विनयात् नत्वा कृतार्थो भव
　　त्वामापन्न समेति तेन न भयं ते कालकालादपि ॥ ६६ ॥

कालाद्यावधि कालकालकलनासक्तान् विभूतिप्रभा-
　　रुद्राक्षाभरणान् शिवार्चनरतान् शैवोत्तमानादरात् ।
दृष्ट्वा हृष्टमनाः प्रणम्य बहुधा दूरादरादादरा-
　　त्तत्तत्सुन्दरमन्दिराण्यपि मुहुर्नत्वा यथेष्टं वस ॥ ६७ ॥

हे विश्वेश्वर हे महेश्वर महादेवेति नामामृतं
　　पीत्वा पीनतनुस्तनोति मुहुरप्यावर्तनं तस्य यः ।
कर्तुं वांच्छति तत्पदाम्बुजरजःपुञ्जेन सञ्जीवनी-
　　कल्पेनास्तु शिरो विभूषितमितो भीतिर्न मृत्योरपि ॥ ६८ ॥

हे कैलासनिवास हे पशुपते पाहीति नामामृतं
　　पीत्वा पीनतनुस्तनोति मुहुरप्यावर्तनं तस्य यः ।
कर्तुं वांच्छति ... मृत्योरपि　　　　॥ ६९ ॥

हे गौरीकुचकुम्भिकुम्भविलसत्काश्मीरधारारस-
श्रीपुञ्जार्जितपादपद्म भगवन् पाहीति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७० ॥

हे गौरीरमणारुणाचलपते हे शङ्कराराधन-
व्यासक्तामरभूरुहोत्तमतम स्वामिन्निती शार्चनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७१ ॥

हे श्रीशैलपते मुहुः पशुपते हे शैलकन्यापते
हे कामान्तक हे पुरान्तक इति स्मृत्वैव यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७२ ॥

हे काशीपुरनायकाश्रितशिवाचारव्रतप्रापक-
व्यापारप्रियपालकाव भगवन्नित्येव यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७३ ॥

श्रीमन्मेरुशरासनोरुशिखरस्फारप्रभामण्डल-
व्यासक्तामलगण्डमण्डलतल त्राहीति यो नर्तनम् ।
कर्तुं वांच्छति .... मृत्योरपि ॥ ७४ ॥

हे मृत्युञ्जय हे सदाशिव शिवावामाङ्ग शङ्ग प्रभो
हे शंभो वृषभध्वजातिदयया पाहीति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७५ ॥

हे विश्वाधिक फाललोचन चिरासारोरुसंसारजा-
पारक्लेशनिशाविनाश दयया पाहीति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७६ ॥

शंभो मे जननी त्वमेव जनको भ्राता सखा मित्रमि-
त्यालस्येन विना वदत्यनुदिनं भक्त्याऽपि यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७७ ॥

भो भर्ग त्रिपुरान्तक त्रिनयन श्रीनीलकण्ठ प्रभो
शंभो मारहरामरप्रवर मां पाहीति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ७८ ॥

त्वत्पादाम्बुरुहार्चनेन विजयो भाग्यानि मे जीवनं
　जीवातुश्च तदेव मे शिव शिव त्राहीति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि　　　　॥ ७९ ॥

प्राणिप्राणनकारणप्रवण मां प्राणप्रयाणक्षणे
　प्रक्षीणं शिवनामधेयसुधया पाहीति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि　　　　॥ ८० ॥

स्वामिन्नन्नपते धनाधिपपते दुःखाब्धिमग्नं मुहुः
　लग्नं पापगणेन भग्नमनसं पाहीति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि　　　　॥ ८१ ॥

[1]मामेकं शरणागतं शरणदानन्दप्रदानोद्यत
　स्वाधीनं कुरु लिङ्गपूजनरतं पाहीति यो नर्तनम् ।
कर्तुं वांच्छति .... मृत्योरपि　　　　॥ ८२ ॥

[2]काश्यामेव सितत्रिपुण्ट्रनिटिलो रुद्राक्षकण्ठो मुहुः
　श्रीवीरेश्वरलिङ्गपूजनरतं पाहीति यो नर्तनम् ।
कर्तुं वांच्छति .... मृत्योरपि　　　　॥ ८३ ॥

रुद्राक्षामितभस्मरूषिततनुः विश्वेश्वराराधनं
　कृत्वा शङ्कर चन्द्रशेखर महादेवेति यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि　　　　॥ ८४ ॥

[1]कृत्वा सोदकबिल्वकोमलदलैः विश्वेश्वराराधनं
　जप्त्वा शङ्करनाम जीवनपरित्यागाय यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि　　　　॥ ८५ ॥

शंभोर्लिङ्गसमर्चनोत्तरमयं घोरान्तरायैर्विना
　देहो यातु लयं ममेति मनसा निश्चित्य यो नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि　　　　॥ ८६ ॥

---

1 अयं श्लोकः E कोशे नोपलभ्यते ।　　2 अयं श्लोकः C कोशे नोपलभ्यते ।

1 अयं श्लोके नोपलभ्यते D E कोशयोः ।

यो वृन्दारकवृन्दवन्दितलसत्पादारविन्दार्चकं
दीनं मामव शङ्कर स्मरहर व्याहारकृन्नर्तनम् ।
कर्तुं वांच्छति ... मृत्योरपि ॥ ८७ ॥

अलमलमनुवेलं कालकालं सलीलं कलय कलय काले व्यालमूलं सशूलम् ।
परिहर गुरुभारं क्रूरसंसारमारात् अनुसर गिरिकन्यास्मेरधारानुरागम् ॥ ८८ ॥

त्रिपुरहरपदाब्जामन्दमन्दारमालाललितपरिमलश्रीसंश्रयानां प्रभावः ।
कथमपि मम शक्यो वक्तुमित्येव मन्ये गिरिशचरणसेवापुण्यपुण्यार्णवानाम् ॥ ८९ ॥

अनुदिनमनुमोदैरिन्दुखण्डावतंसं सकृदपि सकलाशापाशनाशावकाशम् ।
निटिलतटतडिद्भूभूतभूतानुवेशं गिरिशमनिशमीशं संस्मरामि [1]स्मरामि ॥ ९० ॥

शिव हर भव शंभो भर्ग भीम स्मरारे त्रिपुरहर यमारे घोररूपान्धकारे ।
परिहर दुरितं मे पाहि पाहीति धन्यो जपति मुहुरपारानन्दसन्दोहकन्दम् ॥ ९१ ॥

कमलविमलबिल्वाराधितं शङ्गसङ्गं करतलकमलश्रीसंश्रितं भावलिङ्गम् ।
कलय कलय चेतश्चारुचामीकराङ्गं सकलभयविभङ्गं मङ्गलाङ्गानुषङ्गम् ॥ ९२ ॥

हिततरमिदमेकं चिन्तनीयं मनस्ते किमपि कितववार्तावर्तनं तद्विहाय ।
प्रतिपदमभिलापादोषवेषापहारं कुरु कुरु निगमानां भावलिङ्गं शुभाङ्गम् ॥ ९३ ॥

इदमिह हितवांछातीतमच्छं फलं ते वितरति नवबिल्वाराधितं भावलिङ्गम् ।
विमलकमललेशाराधितं वा प्रदोषे किमपि किमपि कार्यं चिन्तनीयं मनो मे ॥

मम हितमिदमेकं वांछितार्थप्रदानप्रवणकरणमेतत् भावलिङ्गं सशाङ्गम् ।
सकलहितकराङ्गं पापसंघातभङ्गं करकलितितुरङ्गासङ्गतुङ्गं सुखाङ्गम् ॥ ९५ ॥

इदमिह कमलानां मालया पूजितं चेत् कलयति कमलानां वाससंवादमोदम् ।
इदमिह वसतिर्मे तत्तदेतत् तवेदं तव तव तदिति श्रीसंश्रितं भावलिङ्गम् ॥ ९६ ॥

मम हितमिदमेतत् प्रायशः पूरयिष्यत्यहितममितदैन्यं वारयिष्यत्यमोघम् ।
सकृदपि हृदयाब्जारूढमेवास्ति गूढं दृढमिति दृढभक्तिर्भावलिङ्गे शुभाङ्गे ॥ ९७ ॥

---

1 स्मरारिम् C D E कोशेषु पाठः ।

संसाराब्धिविशोषणाय विविधाघौघान्धकाराचल-
प्रध्वंसाय विपत्कुलानलकुलापाराम्बुरूपाय ते ।
भो शङ्कामलभावलिङ्गनिलयामेयप्रभाव प्रभो
शंभो भर्ग भवाब्धिभावक कृतः कोऽपि प्रणामोऽधुना ॥ ९८ ॥

आशापारविनाशनाय विविधापारापदाधिव्यथा-
धाराध्वान्तनिवारणाय निगमश्रेणीप्रमोदाहृतम् ।
वन्दे सुन्दरभावलिङ्गनिलयं मृत्युञ्जयं चाव्ययं
नित्यानन्दमयं निरामयमहं मोहं विहायाधुना ॥ ९९ ॥

अश्रान्तश्रुतिकोटिकोटिविदितश्रीभावलिङ्गार्चनव्यापारप्रभवं प्रभुत्वमभयं चादृष्टमव्याकुलम् ।
तद्भिन्नं सकलं भयाकुलमिति ज्ञेयं ततः सर्वथा कर्तव्यं खलु भावलिङ्गभजनं सौभाग्यसंवर्धनम् ॥

अन्यत् किञ्चिदिहोच्यते मुहुरिदं संगोपनीयं सुरैः सर्वैरप्यनिशं शिवार्चनशिवध्याने निधाने परे ।
तेनैवाखिलसिद्धयः प्रतिदिनं संवादमोदैश्चिरं हारं सुन्दरमन्दिरं हरपदाधारं श्रिताः सादरम् ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे नन्दिकेश्वरब्रह्मादिसुरसंवादे
भावलिङ्गमहिमानुवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥

---

## अथ त्रिचत्वारिंशोऽध्यायः ।

---

[1] व्यासः —

श्रीनन्दिकेश्वरमहेश्वरवाग्विलासं हारप्रभावसमलंकृतमिष्टहेतुम् ।
श्रुत्वा प्रहृष्टहृदयाः पुनरष्टमूर्तिपूजाप्रभावविभवश्रवणोत्सुकास्ते ॥ १ ॥

श्रीनन्दिकेश शिवपूजनपुण्यपूर्णकर्णामृतं शिवकथाकथनं त्वयाऽद्य ।
संपादितं तदिदमस्मदपारदुःखसंसाररूपतरुमूलकुठाररूपम् ॥ २ ॥

अस्माभिरद्य शिवपूजकवर्णनेन चित्तं प्रमत्तमपि शान्ततरं कृतं हि ।
एतस्य तावदधुना पुनरिन्दुमौलिभूरिप्रभावसुधया परयाऽन्वयः स्यात् ॥ ३ ॥

---

1 गौतमः C

त्वत्पादपद्मरजसा शिरसोऽन्वयः स्यात् अस्माकमक्षयदयासुखवाहिनीभिः ।
क्लेशाटवीदहनराशिरपि प्रशान्तः श्रीविश्वनाथकथया कथयाशु शिक्षाम् ॥ ४ ॥

व्यासः —

इत्युदीरितमाकर्ण्य नन्दिकेशः प्रहृष्टधीः । पुनः शिवकथामेव वक्तुं समुपचक्रमे ॥ ५ ॥

नन्दिकेशः —

प्रभूतपुण्यः पुरुषः कोपि लोके शिवार्चकः । ततस्तच्चरणांभोजस्मरणेनापि मङ्गलम् ॥ ६ ॥
शिवपूजनपुण्येन यत्फलं समवाप्यते । तत्फलं नान्यधर्माणां राशिभिर्वा समाप्यते ॥ ७ ॥
जनको नाम यः कश्चिद्राजा धर्मपरायणः । स सर्वभाग्यसंपन्नः शौर्यमर्यादया श्रितः ॥ ८ ॥
तस्मिन् शासति भूलोके रिपवोऽपि लयं गताः । सर्वे धर्मपरा एव शिवपूजापरायणाः ॥ ९ ॥
मन्दिराणां च निर्माणं लिङ्गानां स्थापनाय ते । कुर्वन्त्यतिप्रयत्नेन रत्नैरेव मनोहरैः ॥ १० ॥
इदं तु श्रीमहेशस्य स्थानं लिङ्गमनुत्तमम् । स्थापनीयमिदं लिङ्गं एतस्मिन् रत्नमण्टपे ॥ ११ ॥
इदं बिल्ववनस्यैव स्थलं पल्वलमुत्तमम् । अत्र कुल्याश्च कर्तव्याः पयःपूरसमन्विताः ॥ १२ ॥
तटाकाश्चात्र कर्तव्याः पारावारमनोहराः । स्नानपानादियोग्यास्ते हाराणामेव सर्वदा ॥ १३ ॥
तडागेष्वपि लिङ्गानि स्थापनीयानि कोटिशः । आरामाश्चात्र कर्तव्याः पुष्पराशिविजृम्भिताः ॥
शिवमन्दिरनिर्माणं वनमध्येऽपि सुन्दरे । कर्तव्यं मन्त्रपुष्पाणां आसारैः पूजनं भवेत् ॥ १५ ॥
वसन्तपूजया शम्भुः वनमध्ये विशेषतः । प्रीतः सौभाग्यसंपन्नं करिष्यति न संशयः ॥ १६ ॥
सरसामत्र रम्याणां निर्माणात् करुणार्णवः । अपर्णारमणस्तूर्णं निर्वाणमपि दास्यति ॥ १७ ॥
कालो नेयो वने रम्ये हर्म्यच्छायासमाश्रिते । शङ्कराराधनैरेव कृत्यैरन्यैर्न नः फलम् ॥ १८ ॥
शिवभक्त्या शिवार्चायां कृतायां गिरिजापतिः । अदेयमपि यद्वस्तु तद्दास्यति न संशयः ॥ १९ ॥
गृहकृत्यैर्न नः कृत्यं अत्रैव गिरिशालये । उषित्वा शिवपूजायां यत्नः कार्यः प्रतिक्षणम् ॥ २० ॥
लक्षशो बिल्वपत्राणां पूजया गिरिजापतिः । सन्तुष्टो मोक्षलक्ष्मीं च दास्यत्येव न संशयः ॥
यद्यदिष्टं भवेन्नित्यं तत्तद्दास्यति शंकरः । [1]रङ्केभ्योऽप्यत्र बिल्वेन जलेनापि समर्चितः ॥ २२ ॥
न पश्यति महादेवः साधनानि विशेषतः । भक्तिमात्रं स्वभक्तस्य स्वार्चनाय प्रपश्यति ॥ २३ ॥
दृढा भक्तिसुधाधारा शिवलिङ्गे शिवात्मके । यदि तर्हि जितं तेन सकलं खलु भूतलम् ॥ २४ ॥

1 भक्तेभ्योप्यत्र C रङ्केभ्योऽन्यत्र E

शिवभक्तिर्दृढा यस्य तं दृष्ट्वा दूरतः सुराः । नमन्ति मुनयः सिद्धाः शुद्धान्तःकरणाः सदा ॥
दृढा भक्तिर्महादेवे यदि दैवात् प्रजायते । तदा [1]मारी न संयाति तद्दृष्टिनिलयालये ॥ २६ ॥
भूतिभूषितसर्वाङ्गं दृष्ट्वैव यमकिङ्कराः । प्रयान्त्याशु ग्रहाश्चान्ये ग्रहपीडाश्च दारुणाः ॥ २७ ॥
यस्य फाले विभूतिः स्यात् अत्यल्पापि श्रुतिश्रुता । तं न स्पृशन्ति वेतालाः कालेन प्रेषिता अपि॥
यस्याङ्गे भसितं शुद्धं शिवमन्त्राभिमन्त्रितम् । तं दृष्ट्वैव विनश्यन्ति पिशाचा अपि दारुणाः ॥
यदा पिशाचसञ्चारो यस्य वेश्मनि दैवतः । तदा तन्नाशकं भस्म शिवमन्त्राभिमन्त्रितम् ॥ ३० ॥
विभूतिकणरूपाणां कुठाराणां विलोकनात् । पिशाचतरवः सर्वे सकम्पाः प्रपतन्ति च ॥ ३१ ॥
महारोगाभिभूतानां भस्मोद्धूलनमौषधम् । कुष्ठादयोऽपि नश्यन्ति भस्मधारणमात्रतः ॥ ३२ ॥
शिवमन्त्रजपो यत्र तत्र नायान्ति ते ग्रहाः । ब्रह्मराक्षसवेतालाः पिशाचाश्च विशेषतः ॥ ३३ ॥
उद्धूल्य भस्मनाङ्गानि रुद्राध्यायं पठन्ति ये । तद्देशं प्रति नायान्ति शाकिनीडाकिनीबलाः ॥
मृडस्मरणमात्रेण डाकिनी तु विनश्यति । शाकिनी नाशमायाति नाशं यास्यन्ति मातृकाः ॥
गृहीत्वा भस्म यो मन्त्रं शैवं जपति सादरम् । तस्य स्मरणमात्रेण ग्रहपीडा विनश्यति ॥ ३६ ॥
अस्मिन् वने पिशाचानां संचारो न भविष्यति । विभूतिपूतदेहानां अस्माकं वसतिर्यदि ॥ ३७ ॥
यत्र लिङ्गानि रम्याणि नार्मदानि विशेषतः । तत्र तावत्पिशाचानां वार्तापि न भविष्यति ॥
वयं धन्यतमा एव शिवलिङ्गार्चनप्रियाः । प्रीतिः शिवार्चने लोके दुर्लभा खलु वस्तुतः ॥ ३९ ॥
न दारेषु कुमारेषु न धनेषु निधिष्वपि । अस्माकं प्रीतिरधुना किन्तु सा शिवपूजने ॥ ४० ॥
अयं पुण्यतमः कालो धन्यधन्या वयं परम् । यतः प्रीतिरभूत् तेऽद्य महादेवसमर्चने ॥ ४१ ॥
ईदृशी बुद्धिरस्माकं न पूर्वमभवत् खलु । अधुना तावदुत्पन्ना सा नः सर्वार्थसाधनम् ॥ ४२ ॥
येन केनाप्युपायेन महामृत्युञ्जयार्चने । कृते तावदिहेदानीं मृत्योरपि न नो भयम् ॥ ४३ ॥
जलानि विमलान्यत्र नवबिल्वदलान्यपि । तैरर्चितो महादेवः सन्तुष्टोऽद्य भविष्यति ॥ ४४ ॥
भक्तिसृष्टिः कृताऽनेन महाकारुणिकेन हि । शङ्करेण तथाऽस्माकं सिद्धिरेव पदे पदे ॥ ४५ ॥
सर्वाराध्यतमः शर्वः सर्वदेति प्रमा परम् । भक्तिरेषा प्रवृद्धाऽस्ति शङ्करानुग्रहात् खलु ॥ ४६ ॥
शङ्करानुग्रहान्नास्ति लोके किमपि दुर्लभम् । अतः सा दुर्लभा भक्तिरस्माकमभिवर्धते ॥ ४७ ॥
शिवभक्तिसुधाधारा मुक्तिधारापरंपरा । सा तावद्भूरिपुण्यानां हाराणामेव जायते ॥ ४८ ॥

1 माहेश्वरं याति C

हारोपहारपुष्टाङ्गाः शाङ्गाः शङ्गानुषङ्गिणः । शङ्गलिङ्गार्चनरताः शङ्गभक्तिपरायणाः ।। ४९ ।।

शिवभक्तिसुधापानपीनानां चरणाम्बुजम् । स्मृत्वापि मुक्तः पापेभ्यो भविष्यत्येव मानवः ।।

सहसा न भवत्येव शिवभक्तिः सुधामयी । सुधा मर्त्यैः कथं प्राप्या विना यत्नेन केन वा ।।

न यत्नैर्वापि तपसा शिवभक्तिः परन्तु सा । शिवानुग्रहमात्रेण भविष्यति न संशयः ।। ५२ ।।

रचिता शङ्करेणैव शिवभक्तिः सुधाप्रपा । सा महादेवभक्तानां सुलभा खलु केवलम् ।। ५३ ।।

शिवभक्तिसुधापानं न कृतं येन तज्जनिः । व्यर्था तज्जननी तावदतिवन्ध्येति मे मतिः ।। ५४ ।।

किं तेन जातमात्रेण पुत्रेण विफलं परम् । असंप्राप्य महादेवभक्ति भारेण केवलम् ।। ५५ ।।

यस्य भक्तिर्महादेवे न भविष्यति सर्वथा । धराभारकराकारं तं धरा सहते कथम् ।। ५६ ।।

गिरयोऽपि न भाराय धरायाः किन्तु यस्य सा । न भक्तिः स तु भाराय सा तन्मरणमिच्छति ।।

शिवभक्तिविहीनानां धराभाराय जीवनम् । ततः सा न कथं तेषां धरा मरणमिच्छति ।। ५८ ।।

धरणी मरणं तस्य त्वरया याचते मुहुः । न यस्य शङ्करे भक्तिः दृढमूला प्रजायते ।। ५९ ।।

रे रे शङ्करभक्तिभारसुधया किं नाभिषिक्तोऽधुना
धिक् धिक् धिक् तव जीवनं मरणमप्यद्यास्तु ते सत्वरम् ।
भारो मे गिरिभिर्न किन्तु भवता तद्भक्तिहीनेन मे
भारो भूरितरो भवत्यनुदिनं हारेतरैः दुर्धरैः ।। ६० ।।

भक्तिर्भाग्यवतो भवे भवति सा भावे भवे दुर्लभा
भावस्यामितपुण्यपूर्णकरुणापूर्णार्णवस्यान्वयात् ।
कल्याणान्यपि हारभक्तिसुसुधासिक्तेन मे जीवनं
भूभाराय परं भवन्ति बहवो हारेतराः पामराः ।। ६१ ।।

रे हारेतर रे कुशील कुमते रे शंकराराधन-
ध्यानाधानविरुद्ध दुर्धन दुराचारप्रवीराधुना ।
मूर्धा ते भिदुरैरधः पततु मे भाराय ते जीवनं
धिक् धिक् धिक् तव जीवितं चिरमिदं भूयोऽपि भाराय मे ।।

हारैरेव ममापि जीवनमिदं तत्पादरेणुप्रभा तावद्भाति विभूषणाय भसितं तत्पादुकासङ्गतम् ।
तद्देहप्रभवप्रभञ्जनमहासञ्जीविनीसङ्गमात् तावज्जीवनमित्यवैमि मुहुरप्यत्यद्भुतः शङ्करः ।।

को वा शाङ्करपुङ्गवेन सदृशो भूमण्डले दृश्यते तत्तुल्यो न सुरो न वा मुनिवरो गन्धर्ववर्योऽपि वा ।
शेषो वा गुरुरेव वा विधिरयं नारायणो वा यतो नित्यं शङ्करपादुकार्चनरतं वेदान्तगीतं विदुः ॥

येनापारजनिष्वपारविभवैः भावानुरागादरात् नीरैरप्यमलैः प्रफुल्लकमलैः बिल्वीदलैः कोमलैः ।
मूलैर्बिल्वफलैः फलैश्च विविधैर्लिङ्गं समभ्यर्चितं शाङ्गं मङ्गलदं स एव हि हरप्रेमास्पदः शांकरः ॥

सशिवं हृदि साधु शीलयन्तः शिवपञ्चाक्षरमक्षरं जपन्तः ।
गिरिशाय हितार्थमर्पयन्तः शिवमेव प्रयताः प्रयान्ति सन्तः ॥ ६६ ॥

गिरिशाहितमर्थमर्दयन्तः शिवपूजार्थमिहार्थमर्थयन्तः ।
शिवमार्गरतान् प्रचारयन्तः शिवमेव ... सन्तः ॥ ६७ ॥

शिवशास्त्ररतान् परीक्षयन्तः शिवपूजानिरतान् प्रमोदयन्तः ।
शिवमेव सुरोत्तमं वदन्तः शिवमेव ... सन्तः ॥ ६८ ॥

शिवपूजनपुण्यमाचरन्तः शिवपूजानियमान् प्रतीक्षयन्तः ।
शिवभक्तिविरोधमाक्षिपन्तः शिवमेव ... सन्तः ॥ ६९ ॥

शिवभक्तिनिधानमार्जयन्तः शिवभक्त्यंबुनिधीन् प्रवर्धयन्तः ।
शिवभक्तिरसं प्रबोधयन्तः शिवमेव .... सन्तः ॥ ७० ॥

श्रुतिबोधितभूतिमुद्वहन्तः श्रुतरुद्राक्षविभूषणं वहन्तः ।
शिवलिङ्गमसङ्गमर्चयन्तः शिवमेव ... सन्तः ॥ ७१ ॥

स्मरशासकमेव संस्मरन्तो भगवन्तं भवमेव भावयन्तः ।
भवभूतभयानि संहरन्तः शिवमेव ... सन्तः ॥ ७२ ॥

शिवनामसुधानिधिं पिबन्तः शिवमूर्तिं हृदि सन्ततं भजन्तः ।
शिवसुन्दरमन्दिरे वसन्तः शिवमेव ... सन्तः ॥ ७३ ॥

त्रिपुरारिपुरेषु सञ्चरन्तः त्रिपुरारातिकथां विचारयन्तः ।
त्रिदशेशविधेयमाचरन्तः शिवमेव ... सन्तः ॥ ७४ ॥

नवरत्नुतिं मुहुः पठन्तो नवचन्द्राभरणं विलोकयन्तः ।
नवखण्डमहीं प्रशासयन्तः शिवमेव .... सन्तः ॥ ७५ ॥

इत्थं वदन्तस्ते सर्वे मिथिलादेशसंश्रयाः । शिवार्चनपरा एव रुद्राध्यायजपादराः ॥ ७६ ॥

याज्ञवल्क्यः कुलगुरुः तेषां शांभवसत्तमः । स कदाचिदनाहूतोऽप्यागतो जनकालयम् ॥ ७७ ॥

तं मुनिं जनको दृष्ट्वा भस्मोद्धूलितविग्रहम् । त्रिपुण्ड्ररेखाविलसत्फालभागं तुतोष सः ॥ ७८ ॥

रुद्राक्षमालाभरणं शिवमन्त्रजपोत्सुकम् । शिवध्यानसुधाधारापानपीनसुमानसम् ॥ ७९ ॥

शिवध्यानपरानन्दसन्दोहहृदयाम्बुजम् । आनन्दाश्रुसुधाधाराधाराधरपरं वरम् ॥ ८० ॥

रुद्राध्यायार्थकथनप्रवीणं प्रवणं क्षणम् । विलोक्य मुदितो नत्वा बभाषे विनयान्वितः ॥ ८१ ॥

जनकः —

कृतकृत्योऽस्मि धन्योऽस्मि भवदागमनादिह । कुतः समागतं स्वामिन् श्रान्तं वर्ष्मानघं खलु ॥

महाभ्युदयकालोऽयं पापानां प्रलयोऽप्यभूत् । शांभवागमनं भाग्यैः भवत्येव पदे पदे ॥ ८३ ॥

किमसंभावितं पुंसां शांभवागमने सति । शांभवैः सह सौभाग्यं समायातीति निश्चितम् ॥ ८४ ॥

अतः परं मङ्गलानां [1] निलयोप्यायायौ मम । मङ्गलापतिभक्तस्य यस्मादागमनं गृहे ॥ ८५ ॥

धाराधरेणापि विनाऽतिवृष्टिः वृष्ट्या विना सस्यसमूहवृद्धिः ।
यथा तथा शांभवपादपद्मरजःप्रसारोऽपि मुदे गृहे मे । ॥ ८६ ॥

सस्यैर्विना धान्यसमूहराशिः गर्भैर्विना पुत्रसमूहजन्म ।
यथा तथा ··· गृहे मे ॥ ८७ ॥

गुरूपसत्त्यापि विना समस्तविद्याविलासोऽप्यनुवेलमेव ।
यथा तथा ... गृहे मे ॥ ८८ ॥

यमादियोगव्यसनैर्विनापि सद्यो महासिद्धिसमृद्धयोऽपि ।
यथा तथा ··· गृहे मे ॥ ८९ ॥

मार्गश्रमैरप्यमितैर्विनापि विश्वेशलिङ्गार्चविलोकनं च ।
यथा तथा ··· गृहे मे ॥ ९० ॥

पाकादिकानेकमहाप्रयत्नैः विनाऽन्नपानादिविशेषसिद्धिः ।
यथा तथा ··· गृहे मे ॥ ९१ ॥

धर्मैरपारैर्विविधैर्विनापि मोक्षाङ्गनापाङ्गविलोकनं च ।
यथा तथा ... गृहे मे ॥ ९२ ॥

---

1 निलयोऽप्यालयो C निलयोऽप्यायायौ E

महान्धकारप्रलयोनुभानुर्भान्वग्निचन्द्रप्रभया विनापि ।
यथा तथा ... गृहे मे ॥ ९३ ॥

प्रदोहनादिव्यसनैर्विनापि गोक्षीरवृष्टिर्मणिकादिकेषु ।
यथा तथा ... गृहे मे ॥ ९४ ॥

पुष्टिः प्रकृष्टा दधिदुग्धसारघृतान्नपाकान्नगणैर्विनापि ।
यथा तथा ... गृहे मे ॥ ९५ ॥

दलैरबालैर्नवकुड्मलैर्वा पुष्पैर्विनाऽनल्पफलप्रसूतिः ।
यथा तथा ... गृहे मे ॥ ९६ ॥

विनाञ्जनेनापि विना विशेषमूलैरमूल्यैर्निधिकोटिलाभः ।
यथा तथा ... गृहे मे ॥ ९७ ॥

अमन्दानन्दकन्दानां हारपादारविन्दयोः । अन्वयो योग्य एवेति तेनानन्दः प्रजायते ॥ ९८ ॥

अतः परं सुन्दरताऽपि युक्ता यन्मन्दिरस्याद्य विशेषतोऽद्य ।
यतो महादेवपदारविन्दध्यानप्रवीणामृतवीक्षणं मे ॥ ९९ ॥

इदं परं पावनमेव जन्म सुजीवितं जीवितमस्य जातम् ।
यतो महादेव .. वीक्षणं मे ॥ १०० ॥

अपारकल्याणपरंपराणां मन्मन्दिरेषु प्रसरोऽपि भावि ।
यतो महादेव ... वीक्षणं मे ॥ १०१ ॥

निमेः कुलं सत्कुलमेव जातं त्वत्पादपद्मप्रसरेण गेहे ।
यतो महादेव ... वीक्षणं मे ॥ १०२ ॥

अहं सुराणामपि पूज्य एव सुरस्तुतीनामपि भाजनं हि ।
यतो महादेव ... वीक्षणं हि ॥ १०३ ॥

दूरे गता पातककोटिवार्ता कृतान्तवार्तापि विशेषतोऽपि ।
यतो महादेव ... वीक्षणं हि ॥ १०४ ॥

भाग्योदयः कोऽयमभूतपूर्वः शिवप्रसादोऽयमनामयो हि ।
यतो महादेव .... वीक्षणं हि ॥ १०५ ॥

तृप्तास्ते पितरः त्वदागमनतः तत्पादसंक्षालनात् पीतं तैरमृतं त्वदङ्घ्रिकमलप्रक्षालनाभ्यर्चनैः ।
जन्मेदं मम पावनं पशुपतिप्रेमास्पदं संपदां सर्वासां पदमस्मि विस्मितमिदं किं चित्रमत्रापि किम् ॥

अस्माकं गुरुरुत्तमोत्तममहादेवांघ्रिपङ्केरुहध्यानाभ्यर्चनपूतमानस इति स्वाखर्वगर्वाश्रयः ।
सोयं पुण्यतमाग्रगण्य इति मे बुद्धिः प्रबुद्धाधुना साध्वी देवधुनीव वृद्धिमगमत् वृद्धिं गमिष्यत्यपि ॥

अस्माकं शिवलिङ्गपूजकपदांभोजार्चनेन प्रियो
निःश्रेयोऽपि पदे पदे प्रतिभवं भावानुरागोदयः ।
उत्कृष्टाभ्युदयः कुलाचलनिभापायव्ययानामयः
शाङ्गाङ्गान्वयसंभ्रमोऽपि बहुधा संभावितः श्रेयसे ॥ १०८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे जनकालयं प्रति याज्ञवल्क्यागमनं नाम त्रिचत्वारिंशोऽध्यायः ॥

—o—

## अथ चतुश्चत्वारिंशोऽध्यायः ।

नन्दिकेशः —

व्याघ्राजिनोपविष्टाय याज्ञ्यवल्क्याय धीमते । शांभवाय प्रसन्नाय जनकः प्रणतो मुहुः ॥ १ ॥
ततः प्राह मुनिश्रेष्ठं जनको विनयानतः । मुक्त्युपायविशेषं मे वद शांभवसत्तम ॥ २ ॥
तीर्थाटनेन कालोऽपि नीतः सज्जनसेवया । गोदानैरपि भूदानैः तुलादानैः सहस्रधा ॥ ३ ॥
फलपुष्पकुलाकीर्णवनदानैश्च कोटिशः । कन्याप्रदानैर्विविधैरन्नदानव्रतैरपि ॥ ४ ॥
विचित्रगृहदानैश्च गजदानादिभिस्तथा । नीतः कालस्तथाप्यस्मात् संसाराद्विरतिर्न मे ॥ ५ ॥
किमस्ति मूलमेतस्य शारीरं चाभवत्कथम् । अहमित्यभिमानोऽपि कथमस्य प्रजायते ॥ ६ ॥
गौरोऽहमिति बुद्धिश्च सुन्दरोऽहमिति स्वतः । धनं ममेदं भार्यापि कुमारोऽपि ममेत्यपि ॥ ७ ॥
अन्ततस्तु कुमारोऽयमिति धीरपि जायते । इदं सर्वं विशिष्याद्य वद तत्त्वविदुत्तम ॥ ८ ॥

याज्ञ्यवल्क्यः —

संसारमूलभूतानि पापानि विविधान्यपि । तानि पापानि सर्वाणि संसारं जनयन्त्यहो ॥ ९ ॥
पापसागर एवायं संसारः स पुनः पुनः । पापैश्च वर्धते नीरैः अम्बुराशिरिवान्वहम् ॥ १० ॥

पदे पदेऽपि पापानि सुगमानि कृतान्यपि । कर्तव्यानि क्रियन्ते च न पापाद्विरतं मनः ॥
अनायासेन पापानि बहूनि विविधान्यपि । आयान्ति तानि पापानि वारितानि न केनचित् ॥
तत्पापनाशनोपायचिन्तने यत्न एव न । पापानुसरणोपाययत्नैर्नीतं वयो यतः ॥ १३ ॥
यथा पापमतिः पुंसामनायासेन लभ्यते । तथा पुण्यानुकरणे मतिर्नैव प्रजायते ॥ १४ ॥
परद्रव्ये परद्रोहे परदारेषु सर्वथा । यथा मतिस्तथा धर्मे न भवत्येव सर्वथा ॥ १५ ॥
सापि तावन्मतिः पापैः पुनः पापानुवर्तिनी । सा मतिः पापमूलत्वात् पापमेवानुधावति ॥ १६ ॥
यथा यथा पातकानि प्रवर्धन्ते तथा तथा । संसारवृद्धिरित्यस्य नाशोपायो न दृश्यते ॥ १७ ॥
किंच चित्रमिदं नैव पापे संसारिणां मतिः । विषबीजेन नाम्रस्य वृद्धिर्जन्माङ्कुरस्य वा ॥ १८ ॥
बीजानुरूप एव स्यादङ्कुरोऽपि तथा सति । संसारः पापरूपः स्यात् पापैरेव प्रवर्धते ॥ १९ ॥
संसारपापगिरयः प्रणश्यन्ति कदाचन । तदुपायानुसारेण सोऽप्युपायो मयोच्यते ॥ २० ॥
अनायासेन संसारः प्रवृद्धोऽपि विनश्यति । शिवार्चनेन तूलाद्रिः यथा वह्निकणान्वयात् ॥
शिवार्चनं न सुलभं तत्र बुद्धिश्च दुर्लभा । पुण्यकोटिभिरेव स्याद् बुद्धिः शङ्करपूजने ॥ २२ ॥
विहितानन्तपुण्यानां करणे प्रतिजन्मनि । शिवार्पितानि तान्येव जनयन्ति तथा मतिम् ॥ २३ ॥
लोके शिवार्पणं कर्तुं पुण्यं पुण्यांबुधिः परम् । प्रवर्तते तदन्यस्तु तत् कर्तुं न प्रवर्तते ॥ २४ ॥
कोऽपि लोके महापुण्यैः शिवानुग्रहभाजनम् । तदनुग्रहमात्रेण बुद्धिः शङ्करपूजने ॥ २५ ॥
उग्रलिङ्गार्चने भक्तिः उग्रैः पुण्यैः प्रजायते । उग्रस्यापि न चोग्रत्वं सर्वेष्वपि विशेषतः ॥ २६ ॥
येनैव विहितं कर्म कृतं घोरतमं महत् । तं प्रत्युग्रोऽप्यनुग्रोऽपि स्वभावादेव शङ्करः ॥ २७ ॥
तं प्रत्युग्रो महारुद्रः तं पातयति सर्वथा । यः शङ्करार्चनं त्यक्त्वा शिवान्यार्चनतत्परः ॥ २८ ॥
संसारनरके घोरे गर्भवासे विशेषतः । पातयत्येव तं मर्त्यममृत्युञ्जयपूजकम् ॥ २९ ॥
गर्भस्वरूपकथने लज्जा तावत्प्रजायते । तथापि मोहनाशाय तत् तावत्प्रतिपाद्यते ॥ ३० ॥
कामान्धकारग्रस्तस्य विवेकरहितस्य तत् । यौवनोन्मादमत्तस्य तरुणीषु रतिर्भवेत् ॥ ३१ ॥
तरुणी वारुणीतुल्या सेविता भ्रान्तिमेव सा । जनयत्यनपाया सा कष्टरूपा विशेषतः ॥ ३२ ॥
वारुणीपानमत्तस्य विवेको न यथा तथा । तरुणीसङ्गतस्यापि विवेकस्त्वतिदुर्लभः ॥ ३३ ॥
वारुणीपानमत्तस्य किञ्चिदौषधमस्ति तत् । सेवितं वारुणीदोषं निवारयति तत्क्षणे ॥ ३४ ॥
पापसाधनमेवेदं तरुणीमरणावधि । मरणेऽपि स्मृता सा तु मरणाय प्रकल्पते ॥ ३५ ॥

मृतापि तरुणी तावत् तरुणेन स्मृता यदि । तरुणीज्वररूपेण मरणायोद्यता भवेत् ॥ ३६ ॥
वारुणी चेत् परित्यक्ता स्मृता नोन्मादसाधनम् । त्यक्तापि तरुणी तावत् उन्मादाय प्रवर्तते ॥
मरणं साधयत्येव दूरेऽपि तरुणी स्थिता । अतस्तत्सङ्गयत्नोऽपि परित्याज्यो मनीषिभिः ॥ ३८ ॥
स एव बुद्धिमान् लोके स एवातिविचक्षणः । न यस्य तरुणीसङ्गे रतिः सर्वात्मना भवेत् ॥
तरुणीमुखरूपेण विषेण मरणं क्षणात् । अदृष्टेनापि दृष्टेन नूनं विषविलक्षणम् ॥ ४० ॥
पीतेनैव विषेण स्यात् मरणं दूरतस्तु न । दूरेऽपि तरुणी सद्यो मरणस्यैव साधनम् ॥ ४१ ॥
तारुण्यवारुणीपानात् तरुणीतनुसङ्गमात् । उन्मादे सति किं चित्रं तद्यतस्तस्य कारणम् ॥
कारणानि बहून्येव मरणे सन्ति तानि तु । तरुणस्य विशेषेण तरुणीपरमाणवः ॥ ४३ ॥
तरुणीविरहेणैव तरुणीमरणक्षणे । क्षीणा धरण्यां जीवन्ति तरुणीपरमाणुभिः ॥ ४४ ॥
अवस्थाभेदमासाद्य युवतीसङ्गमे सति । कामोद्रेकात् काममेव कामकार्यकरो नरः ॥ ४५ ॥
तदा पुण्यप्रभावेन शङ्करस्मरणे सति । तद्योगजनितं सौख्यं शङ्कराय निवेदयेत् ॥ ४६ ॥
तन्निवेदनपुण्येन तत्र यो जायते नरः । स शाङ्करो भवत्येव तत्तत्पुण्यानुबन्धतः ॥ ४७ ॥
तदा यदि सुदुर्वृत्तः चिन्तान्तररतो यदि । अशाङ्करो भवत्येव जायमानो नरस्तदा ॥ ४८ ॥
जीवस्तु नित्य एवायं आकाशसदृशस्ततः । तस्योत्पत्तिर्न चित्तस्य जन्म देहस्य केवलम् ॥
न नाशो नापि जन्मास्य जीवस्य जनिधीरपि । देहमादाय निष्पन्ना [1] तद्भेदोऽप्युच्यते शृणु ॥
लिङ्गदेहोऽस्य कोऽप्यस्ति स्थूलदेहोऽस्य कश्चन । देहान्वया सर्वदाऽपि मुक्तः स तु विनश्यति ॥
लिङ्गदेहान्वयस्तस्य स्थूलदेहक्षये सति । द्विविधः स्थूलदेहोऽपि पार्थिवापार्थिवात्मकः ॥ ५२ ॥
पञ्चभूतात्मकं देहं केचिदाहुर्वयं तु न । पार्थिवानि शरीराणि नरादीनां विशेषतः ॥ ५३ ॥
भूतान्तराणां संयोगः पार्थिवे जायते ततः । तत्संयोगेन तद्देहे पाञ्चभौतिकताभ्रमः ॥ ५४ ॥
भूतान्तरगुणध्वंसे गुणिभूतलये सति । गन्धानुवृत्त्या तद्गन्धगुणत्वं पार्थिवं मतम् ॥ ५५ ॥
गन्धेन पार्थिवत्वस्याप्यनुमानं तनुष्वतः । अस्मदादिशरीराणि पार्थिवानीति मन्यताम् ॥ ५६ ॥
अस्य देहस्य जनने रेतः प्रथमसाधनम् । लोहितं च तयोर्योगो गर्भभागे प्रजायते ॥ ५७ ॥
रेतसो लोहिताधिक्यात् नारीरूपं प्रजायते । नारीयोनिप्रदेशस्थं लोहितं तस्य साधनम् ॥
तदन्योन्यान्वयेनैव कललं जायते ततः । तस्यापि कललावस्था पक्षमात्रात् प्रजायते ॥ ५९ ॥

1 तद्देहोऽप्युच्यते C

ततः परं बुद्बुदत्वं मासमात्रेण जायते । प्रसारत्वं द्वितीये तु मासि तस्य प्रजायते ॥ ६० ॥
तृतीये रसपुष्ट्या तु मांसगोलः प्रजायते । तत्रापि शङ्करेच्छायामङ्गाभिव्यक्तिरित्यपि ॥ ६१ ॥
चतुर्थे त्वान्त्रसम्बन्धः पञ्चमे पित्तसङ्गमः । षष्ठे मज्जास्थिसंबन्धः तदा प्राणसमन्वयः ॥ ६२ ॥
स्वस्वादृष्टविशेषेण जीवस्तत्रान्वितो भवेत् । लिङ्गदेहेन तेनैव तद्विनाशो न जायते ॥ ६३ ॥
प्रभूतपुण्यपूरस्य कस्यचित् शांभवस्य तु । भोगेच्छायां गर्भभागे प्रवेशः स्यात् सुखावहः ॥ ६४॥
पापपुञ्जस्वरूपस्य शिवभक्तिवियोगतः । पापभोगाय गर्भेषु वासो भवति सर्वदा ॥ ६५ ॥
पुण्यावरणयोगेन दुर्गन्धानुभवोऽपि न । दारुपुत्तलिकामध्यप्रविष्टस्येव वस्तुतः ॥ ६६ ॥
पापात्मनां तु गर्भेऽपि घोरा नरकयातना । तत्र यातनया तस्य जीवनं मरणोपमम् ॥ ६७ ॥
यावद्गर्भे निवासः स्यात् तावत्कर्मानुचिन्तनम् । धर्मादिचिन्तनं तेन स्यादधर्मानुचिन्तनम् ॥६८॥
पुण्यवासनया तत्र पुण्यं कर्तव्यमित्यपि । बुद्धिर्भवति पुण्यानां तस्यापुण्यमतिस्तु न ॥ ६९ ॥
पापात्मनां पापमेव कर्तव्यमिति धीः परम् । जायते तेन पापेन रतिः स्यात् पापकर्मणि ॥ ७०॥
सप्तमे पुष्टिरङ्गानामष्टमेऽपि प्रजायते । नवमे त्वङ्गभागानां सुखवेदनयोर्मितिः ॥ ७१ ॥
दशमे गर्भवातेन प्रभूतेन समन्वये । भवत्येवाविलम्बेन योनिमार्गाद्विनिष्क्रमः ॥ ७२ ॥
बाह्यवातान्वयात् पश्चात् मन्दबुद्धिः प्रजायते । कश्चित् कश्चन पुण्यात्मा प्रबुद्धज्ञानवानपि ॥७३॥
ईदृशानि शरीराणि पापिष्ठानां पुनः पुनः । दुष्टान्यपि शरीराणि कष्टभोगाय केवलम् ॥ ७४ ॥
शांभवानां शरीराणि पुण्यरूपाणि केवलम् । ततस्तानि शरीराणि पुण्यानीत्यवधारय ॥ ७५ ॥
पुण्यकारणभूतानां शरीराणां विशेषतः । पुण्यपूरान्वयस्तेन पुनः पुण्यं प्रजायते ॥ ७६ ॥
पुण्यं कर्तुं प्रवृत्तस्य स्वेच्छया देहसङ्गमः । न देहेन विना पुण्यं देहं पुण्यस्य साधनम् ॥ ७७ ॥
लिङ्गार्चनं शरीरेण विना नैव प्रजायते । अतः शरीरमप्येकं शिवपूजनसाधनम् ॥ ७८ ॥
भूरिपुण्यप्रभावेन शांभवो भुवि जायते । तं दृष्ट्वा भूरियं तुष्टा भवत्येव न संशयः ॥ ७९ ॥
अनेन देहयोगेन शांभवो मयि सङ्गतः । [1]धन्योऽस्मि मम पुण्यस्य नान्तोऽस्तीति महीवचः ॥
शरीरं शांभवं पुण्यं शरीरस्यापि रक्षणम् । कर्तव्यमिति भूर्नित्यं करोत्येवानुभाषणम् ॥ ८१ ॥
एवं प्रजातदेहस्य शांभवस्य महात्मनः । जन्मप्रभृति बुद्धिः स्यात् श्रीमहादेवपूजने ॥ ८२ ॥
महादेवार्चने तस्य जाता बुद्धिः प्रवर्धते । बाल्येऽपि ज्ञानसंपन्नो मानसे पूजने रतः ॥ ८३ ॥

---

1 धन्यास्मि D

तत्त्वज्ञानं समासाद्य शिवरूपं विचिन्त्य च । गर्भप्रवेशमारभ्य शिवपूजारतो भवेत् ॥ ८४ ॥
विषयेष्वनुरागोऽपि तस्य तावन्न जायते । शिवार्चने परं बुद्धिर्धन्योऽहमिति जायते ॥ ८५ ॥
कस्यचिद्भूरिपुण्यस्य वाग्व्यापारोऽनुवर्तनम् । उच्चैर्महेशनामानि बाल्येऽपि वदति ध्रुवम् ॥ ८६ ॥
शिवपूजनसामग्रीं संपाद्य विविधां मुहुः । करोति पूजनं शम्भोः लिङ्गे मङ्गलदायके ॥ ८७ ॥
जन्मप्रभृति यस्य स्यान्महादेवार्चने रतिः । तस्य पुण्यस्य नान्तोऽस्ति स गणः केवलं नृप ॥
गणा अप्यभिवांछन्ति मानुषं देहमाश्रिताः । यतो मानुषदेहेन पुण्यवृद्धिः प्रजायते ॥ ८९ ॥
यस्तु मानुषदेहेन दुर्लभेन विशेषतः । शिवार्चनपरः पुण्यैः तत्पुण्यममितं भवेत् ॥ ९० ॥
पुण्यानि सन्त्यनेकानि तानि पुण्यानि केवलम् । शिवपूजनपुण्योपकरणानि विशेषतः ॥ ९१ ॥
यानि पुण्यान्यनन्तानि तानि सर्वाणि वस्तुतः । शिवपूजोपयुक्तानि पुण्यत्वं प्राप्नुवन्ति हि ॥
पुण्यानामपि पुण्यत्वं केवलं शिवपूजया । अतः शिवार्चनस्यास्य महिमापि महान् खलु ॥
शिवार्चनमहिम्नोऽपि महिम्नः कीर्तनं परम् । मुक्तिसाधनमित्याहुः ततस्तत् केन वर्ण्यते ॥ ९४ ॥
फलं शिवार्चनस्येदं इयदेवेति यो वदेत् । स एव वेदबाह्येषु गणनीयो विशेषतः ॥ ९५ ॥
शिवपूजाफलेयत्ता वेदान्तेष्वपि न श्रुता । अमितं तत्फलं यस्मात् तस्मिन्नमितधीर्मता ॥ ९६ ॥
[1]शङ्करेणापि सहसा शिवार्चनफलं परम् । इयदेवेति निर्णेतुं न शक्यमिति मे मतिः ॥ ९७ ॥
शूलपाणिः स्वभावेन स सर्वज्ञशिरोमणिः । तदर्चनफलेयत्ता नास्तीति मनुते नृप ॥ ९८ ॥
कृते शिवार्चनाभ्यासे बहुकल्पेषु सादरम् । तदा शिवार्चनफले रमते परमे मनः ॥ ९९ ॥

मनोहराणां च मनोहरं हि महन्महादेवसमर्चनं स्यात् ।
तदेव तावन्मधुरेषु सर्वेष्वतीव तावन्मधुरं मनोज्ञम् ॥ १०० ॥

वन्दे पुण्यस्वरूपं भवभजनपराभूतसन्तापपापं
प्रध्वस्तानन्तकोपं प्रतिहत विविधध्वान्तसङ्काशशापम् ।
रत्नाधारातिधीरं स्फुरदुरुशिखरस्फारचामीकराख्या-
व्यापारापारपूर्व्यतिकररुचिराचारमेरूच्चचापम् ॥ १०१ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे याज्ञवल्क्यजनकसंवादे गर्भस्वरूपकथनं
शिवपूजामहिमानुवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥

---

1 अयं श्लोकः C कोशे नोपलभ्यते ।

# अथ पञ्चचत्वारिंशोऽध्यायः ।

[1] व्यासः —

याज्ञ्यवल्क्यमुनिवाक्सुधानिधेराधिशान्तिरधुना विधूदयः ।
स्वर्धुनीविविधवीचिकोच्चयः सोऽयमभ्युदय एव कोऽपि मे ॥ १ ॥

आपदामपि निवारणाय सा याज्ञ्यवल्क्यमुनिवागभूदिह ।
सा महेश्वरकथानुवादिनी घोरपापपरिहारकारिणी ॥ २ ॥

अस्मदार्जितमहाघसंक्षयोऽप्यद्य जात इति मे मनागपि ।
पापभीतिरपि नोपजायते जन्मकोटिघटनेऽपि सर्वथा ॥ ३ ॥

अद्य धन्यतममेव जन्म मे शांभवेन सह भाषणं यतः ।
जातमाशु सुकृताम्बुराशयो वृद्धिमेवमुपयान्ति कोटिशः ॥ ४ ॥

कोऽयमभ्युदयकालसङ्गमः शङ्गलिङ्गविविधार्चनोद्यमः ।
जात एव मम तत्समागमात् धन्यधन्यमिदमस्य जीवनम् ॥ ५ ॥

अन्नमन्नमिति जीवनं परं नीयते न शिवपूजनोद्यमैः ।
अद्य तावदधुना तदुद्यमो जात एव शपथोऽपि शङ्करे ॥ ६ ॥

शाङ्करानुसरणेन केवलं शङ्गलिङ्गविभवार्चने मतिः ।
तेन तच्चरणसेवया परं नेय एव दिवसो विवेकिना ॥ ७ ॥

शङ्करार्चनफलं मुहुः श्रुतं शाङ्करामितकथासुधानिधेः ।
सन्निधानमपि मे निधानतां प्राप्य तावदभयाय जायते ॥ ८ ॥

अद्भुतं किमिदमेतदीदृशं पापराशिविनिवारकाशनिः ।
आगतः कथमभूदघक्षयात् अक्षयामृतनिधानसङ्गमः ॥ ९ ॥

शङ्कर स्मर हरान्तकान्तक त्राहि मामव परं महेश्वर ।
तावकं कथममुं विहाय ते मन्दराचलनिवासने रतिः ॥ १० ॥

---

1 जनकः इति C कोशे ।

चित्तमस्य परिशोधयाधुना लिङ्गपूजनरतिप्रदानतः ।
अन्यदद्य न च वांछितं च मे तावदेव मम मुक्तिसाधनम् ॥ ११ ॥

लिङ्गपूजनमनुक्षणं मया कार्यमित्यपि मतिर्भवेद्यदि ।
सा मतिः सकलदुःखनाशनं कर्तुमेव निपुणा न संशयः ॥ १२ ॥

यावदस्ति धनमद्य सञ्चितं तावदीशपदपूजनोत्सुकैः ।
देयमेतदुपयुक्तमत्र चेत् अर्जनं च सफलं धनस्य मे ॥ १३ ॥

कर्मणापि मनसाऽपि सर्वथा वाग्भिरप्यनुदिनं महेश्वरः ।
पूजितो यदि तदाघसंक्षयो जात एव [1]विषयोऽपि नात्र मे ॥ १४ ॥

किं कलत्रचिरगात्रसङ्गमैः किं कुमाररुचिरानुभाषणैः ।
किं गजादिपशुपोषणोत्सवैः शंकरार्चनपरो भावाम्यहम् ॥ १५ ॥

किं गृहस्य परिरक्षणेन वा प्राज्यराज्यपरिपालनेन वा ।
शौर्यकर्मकरणेन वा मुहुः शंकरार्चनपरो भवाम्यहम् ॥ १६ ॥

शंकरो मम गतिः स शंकरः शं करिष्यति समर्चितो मुहुः ।
शंकरे सति किमस्त्यपेक्षितं मोक्षदोऽपि स शिवः स्मृतोऽपि मे ॥ १७ ॥

मङ्गलापति पदाम्बुजार्चनं सर्वमङ्गलविशेषसाधनम् ।
सिद्धिसाधनमिदं विहाय मे कृत्यमन्यदिह रोचतेऽपि न॥ १८ ॥

चन्द्रमौलिचरणाम्बुजार्चनं ध्यानसाधनमिदं मनोऽपि मे ।
अन्यकार्यविमुखं विशेषतो जायतामिति मतिः प्रजायते ॥ १९ ॥

जीर्णमङ्गमधुना विशेषतः शङ्करार्चनमतिर्न मे यदि ।
तर्हि जीवनमिदं वृथा भवेत् इत्यवैमि मुनिवाक्यकोटिभिः ॥ २० ॥

अर्जितं न सुकृतं मया पुरा न स्मृतोऽपि गिरिजामनोहरः ।
सेवितोऽपि न च शांभवो मुहुः व्यर्थमेव गतमस्य जीवनम् ॥ २१ ॥

शांभवैः सह कदापि सङ्गमो नाभवद्गिरिशलिङ्गपूजनम् ।
जन्म तावदह हा वृथा गतं हा किमस्य दुरदृष्टमद्भुतम् ॥ २२ ॥

---

1 शिवयोपि D E विशयोपीति पाठः मातृकासु एवं परिणतः इति भाति ।

वार्धके कथमुमापतिप्रियैः शांभवैः सह विशेषतोऽधुना ।
सङ्गमेऽपि गिरिशार्चनादरः शीर्णदेहपरिपाकदुःखतः ॥ २३ ॥

न श्रुतापि मुहुरादरात्कथा सा परा गिरिशपूजकोदिता ।
जीर्णकर्णकरणेन तत्कथावर्णमात्रमपि गृह्यते कथम् ॥ २४ ॥

गर्भवासजनितातिदुःखतः शङ्करस्तु न समर्चितस्तदा ।
तत्पुरीषविषकीटकोटिभिः दंशने सति शिवस्मृतिः कथम् ॥ २५ ॥

रेतसा खलु शरीरमद्भुतं लोहितेन जनितं कुयोनिषु ।
सूकरादिषु बहुष्वनेकधा तेन भुक्तमपि दुःखमन्वहम् ॥ २६ ॥

गर्भवासपरिपीडितस्य मे तत्पुरीषजलसंयुतस्य च ।
दुःखमेव समभून्मुहुर्मुहुः दारुणं विषमिवेह भक्षितम् ॥ २७ ॥

दुष्टकष्टविनिवारकं च किं गर्भवासनिरतस्य दृश्यते ।
अज्ञता खलु तदातिगर्हिता सा मुहुर्मुहुरपारदुःखदा ॥ २८ ॥

कीटयोनिषु यदा जनिस्तदा बंभरादिषु पुनर्भ्रमोदयः ।
तद्भ्रमापसरणादिकारणं तत्र किञ्चिदपि दृश्यते कथम् ॥ २९ ॥

सूकरादिजठरे यदेकदाऽनेकजन्तुतनुसङ्गमस्तदा ।
कष्टमेव तनुसन्निकर्षणात् भुक्तमेव बहुधा मुहुर्मुहुः ॥ ३० ॥

सूकरीजठरपावकाहता विष्टया जठरपूरणोद्यता ।
तन्मलाविलतनुर्यदा तदा तेन दुःखमनुभूतमेव हि ॥ ३१ ॥

सूकरस्य खलु रेतसा तनुः कापि पापपरिपाकयोगजा ।
जातु नैव हि परन्तु सा मुहुः जन्मकोटिषु शिवार्चनं विना ॥ ३२ ॥

येन केनचिदपि स्मृतः शिवः पूजितोऽपि सकृदादरात् शिवः ।
जन्मसङ्गपरिहारको भवेत् इत्यपि श्रुतिशिरः स्मृतं मया ॥ ३३ ॥

मोहजालपरिवेष्टितस्य मे शङ्करार्चनरताङ्गसङ्गमः ।
नाभवत् परमशोकनाशकः पापकर्मपरिपाकतो मम ॥ ३४ ॥

शांकरेण सह भाषणे मुहुः पातकानि विलयं गयान्त्यपि ।
याति याति यमयातनाभयं तन्न जातमतिदुष्कृतात्मनः ॥ ३५ ॥

शांकराय नवरत्नमन्दिरं दत्तमेव न पुरा मया मुदा ।
रत्नकोशपरिरक्षणं वृथा जातमेव बहुदुःखसाधनम् ॥ ३६ ॥

अर्जितं च गणनाविवर्जितम् हेम तेन न शिवार्चनं कृतम् ।
पट्टकूलगिरयः समार्जिताः शाङ्करेषु न समर्पिताः खलु ॥ ३७ ॥

गोकुलान्यपि बहूनि यानि मे तानि शांकरवशानि भक्तितः ।
नार्पितानि न शिवोऽपि गोरसापारपूरपरिवेष्टितः कृतः ॥ ३८ ॥

कोटिशो न धृतकम्बलैर्मुहुः शाङ्गलिङ्गमभिवेष्टितं कृतम् ।
पूजितं च मधुपूरराशिभिः नादरेण दधिपूरराशिभिः ॥ ३९ ॥

शर्करागिरिभिरर्चितः शिवो गन्धनीरनिकरैरहर्निशम् ।
पुष्पकुङ्कुमफलाम्बुराशिभिः नार्चितं गिरिशलिङ्गमुत्तमम् ॥ ४० ॥

चन्द्रभागगिरिदीपमालिकाकोटिभिश्च न शिवार्चनं कृतम् ।
धूपपर्वतसमूहधूपतो धूपितोपि न मुहुर्महेश्वरः ॥ ४१ ॥

शांकरो न गुरुरर्चितो मया शङ्करार्चनविधानबोधकः ।
नापि रुद्रजपसंस्कृतोऽस्म्यहं भूतिपुण्ड्रसमलंकृतोऽपि वा ॥ ४२ ॥

फालमण्डलमिदं न भस्मना भूषितं करगलादिकं च मे ।
किं च [1]पञ्चमकुलेनवञ्चितः चञ्चरीककुलवञ्चितोऽस्म्यहम् ॥ ४३ ॥

किञ्च पञ्चशरचेष्टया मुहुः कष्टमेव बहुधाऽनुभूयते ।
कामिनीकनककङ्कणध्वनिः कर्णभूषणतया निषेवितः ॥ ४४ ॥

यौवनेन परिवेष्टितस्य मे कामिनीकमललोचनादरः ।
नादरः शिवपदाम्बुजार्चने तेन तावदफला जनिर्मम ॥ ४५ ॥

पुण्डरीकसदृशेन नेक्षितं वीक्षणेन शिवलिङ्गमर्चितम् ।
मारमन्दिरविलोकनादरात् आर्जितं बहुविधं च पातकम् ॥ ४६ ॥

अङ्गनाङ्गकरसङ्गरादरे शाङ्गलिङ्गकरसङ्गमादरः ।
नाभवज्जनिरियं लयं गता खिन्नखिन्नहृदयस्य सत्वरम् ॥ ४७ ॥

---

1 खेन C कुलीन E

श्वेतभस्मकणपुञ्जमञ्जुला कोमलाऽतिविमला न मे तनुः ।
तेन सूकरकुयोनिसेवनं जातमेव बहुकल्पकोटिषु ॥ ४८ ॥

लिङ्गपूजनविशेषसाधनं बिल्वपत्रमपि नार्चितं मया ।
तेन सूकरकुयोनिसेवनं जातमेव बहुकल्पकोटिषु ॥ ४९ ॥

शाङ्गलिङ्गममलैर्जलैरलं नाभिषिक्तमपि भक्तिपूर्वकम् ।
तेन सूकर ... कोटिषु ॥ ५० ॥

शांकराय न दुकूलमर्पितं चन्दनं च न समर्पितं मया ।
तेन सूकर ... कोटिषु ॥ ५१ ॥

नार्चितं मुहुरखण्डतण्डुलैः शाङ्गलिङ्गमतितुङ्गमङ्गदैः ।
तेन सूकर ... कोटिषु ॥ ५२ ॥

बिल्वकोमलदलैर्महेश्वरो नार्चितः कमलपुष्पमालया ।
तेन सूकर .... कोटिषु ॥ ५३ ॥

धूपधूमपरिवेषवेष्टितं मन्दिरं न कृतमेव शाङ्करम् ।
तेन सूकर ... कोटिषु ॥ ५४ ॥

मन्दिरं च नवरत्नरञ्जितं शांकराय न निवेदितं मया ।
तेन सूकर ... कोटिषु ॥ ५५ ॥

गोघृतेन न च दीपमालिका कापि कापि रचिता शिवालये ।
तेन सूकर ... कोटिषु ॥ ५६ ॥

ओदनोऽपि न निवेदितो मया शङ्कराय घृतशर्करान्वितः ।
तेन सूकर ... कोटिषु ॥ ५७ ॥

न प्रदक्षिणपुरःसरं नतः शङ्करः स मुहुरादरान्मया ।
तेन सूकर ... कोटिषु ॥ ५८ ॥

निर्मलामितसुशीतलैर्जलैः क्षालितोऽपि न मया शिवालयः ।
तेन सूकर ... कोटिषु ॥ ५९ ॥

दर्पणं च विनिवेदितं मया शङ्कराय न सुवर्णभूषणम् ।
तेन सूकर ... कोटिषु ॥ ६० ॥

नार्पितं कनककाश्चिरञ्जितं छत्रमेकमपि शर्वमस्तके ।
तेन सूकर ... कोटिषु ॥ ६१ ॥

चारुचामरसमीरणार्पणैः सेवितोऽपि न मया महेश्वरः ।
तेन सूकर ... कोटिषु ॥ ६२ ॥

नर्तनं च न कृतं शिवाङ्गणे शाङ्करस्मरणपूर्वकं मया ।
तेन सूकर ... कोटिषु ॥ ६३ ॥

शङ्करलिङ्गमभिषिच्य सादरं तज्जलं न शिरसा धृतं मया ।
तेन सूकर ... कोटिषु ॥ ६४ ॥

शङ्करार्पितजलं मुहुर्मया पीतमेव न महाघनाशकम् ।
तेन सूकर ... कोटिषु ॥ ६५ ॥

शङ्कराय विनिवेदितं फलं नीरमन्नमपि भुक्तमेव न ।
तेन सूकरकुयोनिसेवनं जातमेव बहुकल्पकोटिषु ॥ ६६ ॥

कष्टकालविगमोप्यभूदहो शाङ्करागमनतो गृहाङ्गणे ।
इष्टसिद्धिरधुना भविष्यतीत्यष्टमूर्तिकृपया परं मम ॥ ६७ ॥

शङ्करातिरुचिरोरुमन्दिरं शाङ्कराङ्गमिति तेन सङ्गमे ।
दुर्लभं न किमपीति मे मतिः सन्ततं भवतु शङ्करार्चने ॥ ६८ ॥

शङ्करामितकथासुधारसैः तूर्णमेव मम कर्णपूरणे ।
चीर्णमेव मम पुण्यवर्णनं चारणैरमरकोटिभिः सह ॥ ६९ ॥

शंकरोऽपि करुणारसार्णवो मद्गुणानपि स वर्णयिष्यति ।
मामकोऽयमिति मामकार्चनात् सोऽपि शङ्करसमर्चनोत्सुकः ॥ ७० ॥

यद्यपि प्रबलपापराशिभिः व्यावृतोऽस्मि सततं तथाप्यहम् ।
शांकरांघ्रिकमलावलोकनात् नष्टपातककुलो न संशयः ॥ ७१ ॥

कालतोऽपि न भयं ममाधुना कालकालभजनप्रियान्वयात् ।
कालकालकलनोत्सवोऽपि मे वर्धते मुहुरनुक्षणं मुहुः ॥ ७२ ॥

सोऽयमभ्युदयकाल एव मे कालकालचरणांबुजार्चकः ।
मद्गृहं प्रति समागतोऽधुना शाङ्करः स शिवशङ्करालयः ॥ ७३ ॥

शङ्करः स खलु दीनवत्सलः शाङ्कराकृतिमुपेत्य मद्गृहम् ।
प्राप पापविनिवृत्तिमादरात् कर्तुमेव करुणारसार्णवः ॥ ७४ ॥

एतदेव सुदिनं यतोऽधुना शङ्करस्मरणसङ्गतं मनः ।
अद्य तावदशुभग्रहान्वयो नष्ट एव हि शुभग्रहान्वये ॥ ७५ ॥

यद्यदुत्तममिहास्ति मन्दिरे तत्तदद्य कनकादिकं धनम् ।
शङ्कराय विनिवेदितं मया स्वत्वमस्य विनिवृत्तमेव मे ॥ ७६ ॥

शङ्कराय विनिवेदितं धनं शाङ्कराय विनिवेद्यते मया ।
तत्तु दत्तमिह वित्तमद्य मे कोटिकोटिगुणितं भविष्यति ॥ ७७ ॥

वित्तपात्रमिति निश्चितं मया शाङ्करस्य कर एव नापरः ।
सादरं यदि तदर्पितं मया तत्र तेन सुखमक्षयं भवेत् ॥ ७८ ॥

कामधेनुरिव शाङ्करो धनं हर्षवर्षसमलंकृतो मुहुः ।
दातुमेव यवसं समाप्नुयात् दुग्धमेव मुहुरादराद्बहु ॥ ७९ ॥

नीरसेऽपि यवसेऽपि भक्षिते दुग्धमत्र बहु दीयते गवा ।
तद्वदेव स ददाति शांभवः सिद्धिमल्पधनपूजितोऽपि सन् ॥ ८० ॥

शाङ्करे सति न दैवधेनुभिः कृत्यमस्ति सुरपादपैरपि ।
तत्पदाम्बुजविलोकनाद्यतः सिद्धिरेवमनुधावति स्वतः ॥ ८१ ॥

भस्मभूषणपरिग्रहेण मे सर्वसिद्धिगणसंश्रयोऽपि सः ।
किं किमद्य न करिष्यति प्रियं कामधेनुरिव कामसाधनम् ॥ ८२ ॥

यः प्रमादमपहाय मायया त्यक्त एव शिवपूजकार्चनम् ।
कर्तुमिच्छति स एव सर्वथा पुण्यवानिति गुणेन गीयते ॥ ८३ ॥

भर्ग भीम भव शङ्करेति वा नीलकण्ठ शिव शर्व सर्वग ।
कालकाल गिरिशेति वा मुहुः चित्तपोतक शिवं स्मर स्मर ॥ ८४ ॥

चन्द्रशेखर सुरासुरार्चितानङ्गभङ्गकर तुङ्गविग्रह ।
शङ्ग लिङ्गनिलयाव्ययेति वा चित्तपोतक शिवं स्मर स्मर ॥ ८५ ॥

अन्धकासुरहरामरेश्वरापारवीरकरुणारसाकर ।
मारसंहर महेश्वरेति वा चित्तपोतक शिवं स्मर स्मर ॥ ८६ ॥

सृष्टिपालनविनाशकारणानन्तसुन्दर विहारविग्रह ।
भूतिभूषणविशोभितेति वा चित्तपोतक शिवं स्मर स्मर ॥ ८७ ॥

तारकारुचिरहारकन्धर व्यापृताद्रितनयाकराञ्चल ।
चञ्चलाचलसमानमानसासीम मामव हरेति वा स्मर ॥ ८८ ॥

शैलराजतनयाकुचोल्लसत्कुङ्कुमाङ्कितपदाम्बुजाञ्चल ।
अम्बिकारमण मामवेत्यपि चित्तपोतक शिवं स्मर स्मर ॥ ८९ ॥

कल्पकोटिकृतपातकानि मे संहर स्मरहर स्मृतोऽपि माम् ।
मामकोऽयमिति गोचरं कुरु त्राहि मामिति मनः स्मर स्मर ॥ ९० ॥

भूतिभूषिततनुः भवे भवे भाग्यभारपरिपाकतः शिवम् ।
पूजयामि बहुसाधनैरहं पाहि मामिति मनः स्मर स्मर ॥ ९१ ॥

[1]आनमामि भगवन्तमन्ततः सन्ततं च न भवन्तमेव किम् ।
शैलराजतनयापते मुहुः पाहि मामिति मनः स्मर स्मर ॥ ९२ ॥

मत्कृतामितमहापराधभीः भूतनाथचरणांबुजस्मृतेः ।
यातु नाशमिति सादरं हरं नानुवारमपि किं मनः स्मर ॥ ९३ ॥

भावलिङ्गनिलयाप्रमेय मे मङ्गलारमण मङ्गलं कुरु ।
तावकं कुरु कुरु क्रमेण वा दीनमित्यपि मनः स्मर स्मर ॥ ९४ ॥

लीलयालमनुवेलमव्ययापायकायविपर्यैरलं बलैः ।
कालकालकलनेन कालभीः नेति कालहरमेव संस्मर ॥ ९५ ॥

मन्मनःसरसिजासनाश्रयः किं क्षणार्धमपि वा सदाशिव ।
इत्यनुक्षणमुमापतिं भज भ्राजमानमनिशं मनः स्मर ॥ ९६ ॥

मन्दिराणि तव सुन्दराणि चेत् मन्दिरेऽपि वसतिः कथं तव ।
तद्वदीश मम मानसासने संवसेति सततं मनः स्मर ॥ ९७ ॥

शङ्करातिरुचिरं न सुन्दरं चित्तमन्दिरमथापि सुन्दरम् ।
तत्कथामृतसुधानुलेपनादित्यपि स्मरहरं स्मर स्मर ॥ ९८ ॥

---

1 अयं श्लोकः C कोशे न दृश्यते ।

नर्मदाकठिनलिङ्गसङ्गमे शङ्ग ते मतिरभूद्यथा तथा ।
मानसेऽपि मम संवसादरात् इत्यनुक्षणमुत क्षणं स्मर ॥ ९९ ॥

दीनबन्धुरिति या प्रथाऽस्ति ते सा यथा न वितथा तथा कुरु ।
मामवाऽगतनयामनोहर त्राहि मामिति मनः स्मर स्मर ॥ १०० ॥

नानुवारमगराजकन्यकासानुरागचरणांबुजादरम् ।
किं मुहुर्मुहुरपर्णनायकेत्युच्चरन् उरुतरं मनः स्मर ॥ १०१ ॥

सत्वरं किमिति न प्रसन्नतामाप शङ्कर इति त्वरा त्वया ।
किं कृतानुचितकारिता कथं मय्यपीति मनसा स्मर स्मर ॥ १०२ ॥

कः कल्याणपरम्परार्णवपरं तं शङ्करं न स्मरेत्
गौरीचारुकुचोरुकुङ्कुमरसासारारुणांघ्रिं परम् ।
सोऽहं भावनयापि संस्मर महादेवं मुहुर्मोहभीः
त्याज्या पूज्यतमोत्तमोत्तमतमं सोमं मनः संस्मर ॥ १०३ ॥

आकल्पं मम जीवनं भवतु मे भक्तिर्भवे भस्मनि
श्रीरुद्राक्षविभूषणे शिवपुरीवासे शिवाराधके ।
नित्यं शङ्कर शङ्गलिङ्गभजने तत्पूजने तज्जपे
तद्ध्याने तदवेक्षणेऽपि सुतरां मत्सन्ततेरन्वहम् ॥ १०४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे जनकसत्यप्रतिज्ञावाक्य
निरूपणं नाम पञ्चचत्वारिंशोऽध्यायः ॥

—o—

# अथ षट्त्रिंशोऽध्यायः ।

[1]व्यासः —

स याज्ञवल्क्यो जनकोक्तिरूपां सुधां मुहुः कर्णपुटैरमन्दम् ।
पीत्वा महानन्दमवाप भक्त्या स्मृत्वा महादेवपदाम्बुजं च ॥ १ ॥

श्रीमन्महादेवकथासुधाब्धितरङ्गमालाविमलाऽनुवेलम् ।
श्रीकालकालार्चनसाधनानां सम्पादनाय प्रभवत्यवश्यम् ॥ २ ॥

अनुग्रहः शङ्करपादपद्मस्मृतेरयं भक्तिरसोदयोऽपि ।
श्रीमन्महादेवकृपाम्बुराशि कल्लोलमालाप्रसरप्रवादः ॥ ३ ॥

अस्माकमेतत्खलु भाग्यमद्य विद्याविलासैः खलु चन्द्रमौलिः ।
स्मृतो महानन्दपदप्रदाता स्वानन्दरूपोऽपि स चिद्घनोऽपि ॥ ४ ॥

अनाद्यविद्याविलयोऽपि जातः तवाप्यविद्यावरणे विनष्टे ।
तत्रावशिष्टं शिवरूपमेकं अनेकधा भाति च भानमेव ॥ ५ ॥

न तत्र सूर्योऽपि विभाति चन्द्रो नाग्निर्न ताराऽपि न चापि विद्युत् ।
स्वयंप्रकाशः खलु वृत्तिरूपा विद्या न तत्र प्रसरत्यवश्यम् ॥ ६ ॥

ओंकाररूपं प्रवदन्ति केचित् तन्निर्विकारं शिवरूपमेकम् ।
स एव तावत् स्फुरति स्वभावात् न तस्य तु स्फोरकमस्ति लोके ॥ ७ ॥

इति तद्वचनं श्रुत्वा जनको विनयान्वितः । शिवज्ञानोदयः केन तद्वद श्रुतिशेखरैः ॥ ८ ॥

याज्ञवल्क्यः —

शिव एव परं ब्रह्म शिव एव शिवात्मकः । इति बुद्धिर्महादेवलिङ्गाराधनतो नृप ॥ ९ ॥

महादेवे महानन्दे परब्रह्मणि शङ्करे । [2]भक्तया शिवार्चनेन स्यात् भक्तिरव्यभिचारिणी ॥ १० ॥

[3]शिवपूजा श्रुतिप्रोक्ता शिवलिङ्गे शिवात्मके । तयैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥

शिवमुद्दिश्य सुकृतं यद्यत्कृतमनेकधा । तेनैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥ १२ ॥

---

1 श्रीस्कन्दः C   2 अयं श्लोकः D कोशे नास्ति ।   3 अयं श्लोकः E कोशे नास्ति ।

कृतानि येन दानानि शिवप्रीत्यर्थमादरात् । तेनैव [1] जायते शंभौ भक्तिरव्यभिचारिणी ॥ १३ ॥
येन कन्याप्रदानेन शैवः सन्तोषितो मुहुः । तेनैव जायते शंभौ भक्तिरव्यभिचारिणी ॥ १४ ॥
येन रत्नप्रदानेन शांभवास्तोषिता मुहुः । तेनैव जायते शंभौ भक्तिरव्यभिचारिणी ॥ १५ ॥
येनाश्वगजदानाद्यैः शांभवस्तोषितो मुहुः । तेनैव जायते शंभौ भक्तिरव्यभिचारिणी ॥ १६ ॥
येन गोकोटिदानेन शांभवास्तोषिता मुहुः । तेनैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥ १७ ॥
सुशीतलाम्बुसेकेन येनैवाराधितः स्वकः । तेनैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥ १८ ॥
पट्टतूलप्रदानेन येनैवाराधितः शिवः । तेनैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥ १९ ॥
येन दिव्यान्नदानेन तोषितः पार्वतीपतिः । तेनैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥ २० ॥
रत्नाभरणदानेन येनैवाराधितः शिवः । तेनैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥ २१ ॥
रथोत्सवादिना नित्यं तोषितो येन शङ्करः । तेनैव जायते शम्भौ भक्तिरव्यभिचारिणी ॥ २२ ॥
अविरक्तो विरक्तो वा भक्तिमव्यभिचारिणीम् । प्राप्य यः पार्वतीकान्तमर्चयेत् स तु भाग्यवान् ॥
वैराग्यमपि भोगेच्छाविरहः केवलं मतः । न तु भाग्यपरित्यागो वैराग्यमिति मे मतिः ॥ २४ ॥
भाग्ये त्यक्ते लिङ्गपूजा साङ्गा न तु भविष्यति । निरङ्गं वैदिकं कर्म न फलायेति मे मतिः ॥
लिङ्गार्चनेन कर्तव्यं फलं विविधमित्यतः । तदर्चनं च केनेति साधनं समपेक्षितम् ॥ २६ ॥
भावना प्रत्ययप्राप्ता कुर्यादिति ततः परम् । किमित्येव तदाकांक्षा वस्तुतः फलगोचरा ॥ २७ ॥
कामनीयफलाकांक्षा तावदादौ प्रजायते । सर्वेषामविशेषेण तदेव समपेक्षितम् ॥ २८ ॥
ततः परं तत्फलं च स्वाराज्यं प्राज्यमित्यपि । तेनैव सफलाकांक्षा शान्ता भवति तत्वतः ॥
तत्फले निश्चिते पश्चात् केनेति करणे परम् । आकांक्षा जायते सापि शान्ता स्यात् करणार्पणे ॥
फलस्य तस्य करणं शिवाराधनमित्यपि । शङ्कराराधनेनेति ज्ञातमेव तृतीयया ॥ ३१ ॥
तृतीया करणं वक्तुं समर्था स्यात् तया विना । ज्ञातुं न शक्यते तस्य बोधकं चान्यदत्र न ॥
तद्बोधनार्थनिर्माणं तस्यास्तेन तदीप्सितम् । [2] कारणं प्राप्तमेवेति तदाकांक्षा क्षयं गता ॥ ३३ ॥
करणेऽवगते पश्चात् कथमित्यपि जायते । आकांक्षा सा तु सर्वेषां अङ्गानामेकदा मिता ॥ ३४ ॥
[3] दृष्ट्वा कोटीन (?) नाङ्गानां उपादानं यतस्तदा । सकृदेव तदाकांक्षा कथमित्येव जायते ॥

---

1 प्राप्यते इति सुत्रचम् । एवं शांभवः शांभवा इति वचनभेदोऽप्येकधा निर्वाह्यः ।

2 करणं च प्राप्तमेति C

3 पृष्टा कोटेन नागानां D, E.

ततः परं विशिर्णास्ते तदङ्गविधयः परम् । प्रधानभावनामेव प्रविशन्ति तदिच्छया ॥ ३६ ॥
उत्पश्यन्त्यङ्गविधयः क्वास्मद्ग्राहक इत्यपि । एवमङ्गानि विधयः तदङ्गविधयोऽपि हि ॥ ३७ ॥
अङ्गान्यवान्तरापूर्वद्वारमासाद्य केवलम् । परमापूर्वसंपत्ति हेतुभूतानि वस्तुतः ॥ ३८ ॥
तत्राद्यं साधनं तावत् फलेच्छा कर्तुमन्यथा । तस्य कर्तव्यनिष्पत्तिः विना तु न फलेच्छया ॥
फलेच्छया विरक्तस्य कर्मण्युद्यम एव न । ततः कर्मपरित्यागे विधिः कुण्ठित एव हि ॥ ४० ॥
किं च यद्विहितं कर्म शक्यं चेत् त्यज्यते तदा । तत्त्यागेनैव नरको भविष्यति न संशयः ॥
देहात्मवादिनः केचित् विहिताकरणात् परम् । नरकावासमासाद्य तिष्ठन्ति क्लेशपूर्वकम् ॥ ४२ ॥
महाक्लेशानुबन्धाय विहितं त्यज्यते जनैः । अश्रद्धया ततस्तेषां नरकेषु सदा स्थितिः ॥ ४३ ॥
कृते त्ववश्यं विहिते कर्मणि प्रियमात्मनः । भविष्यतीति यत् ज्ञानं तद् विश्वास इति स्मृतः ॥
तादृशज्ञानसंपन्नः कर्मण्यधिकृतस्ततः । तस्मिन् यस्यास्ति वैराग्यं स निर्भाग्यो विशेषतः ॥ ४५ ॥
शिवार्चने समैतावद्वांछितं सर्वथा फलम् । भविष्यतीति विश्वास्य भाग्यवानधितिष्ठति ॥ ४६ ॥
नैमित्तिकं च नित्यं च काम्यं चेति त्रिधा मतम् । कर्म तत्र फलं काम्ये नान्यत्रेति वदन्त्यपि ॥
तैस्तावद्भावनागन्ध गन्धोप्याघ्रात एव न । विधिस्वरूपज्ञानेन विना ते प्रलयन्त्यपि ॥ ४८ ॥
अन्ध एव विधिः किञ्च फलाभावे प्रवर्तना । कथमभ्युत्थिता तेन सा त्वंशत्रयवेष्टिता ॥ ४९ ॥

आद्यांशः फलमेवेति तथाहत्य श्रुतं क्वचित् ।
क्वचित् कल्प्यं कल्पनापि विध्युत्थानार्थमेव हि ॥ ५० ॥

विधिस्तु फलमादाय प्रथमं संप्रवर्तते । तत्कर्ममात्रसापेक्षं कर्म तेन विना कथम् ॥ ५१ ॥
विभूत्युद्धूलनादीनां नित्यानामपि कर्मणाम् । फलमुक्तं पृथक्तेषां नित्यत्वोक्तिपुरःसरम् ॥
फलानि मन्त्रलिङ्गेनाप्युक्तान्येव हि कानिचित् । प्रधानबोधकैर्वाक्यैः फलं यदि न बोधितम् ॥
अङ्गवाक्योक्तमप्येकं फलं योग्यं प्रगृह्यते । यदि तत्रापि न फलं तदा तत् कल्प्यमेव हि ॥ ५४ ॥
रात्रिसत्रे फलं तावदाहत्य श्रुतमेव न । प्रधानबोधके वाक्ये न वाक्येऽप्यङ्गबोधके ॥ ५५ ॥
नैमित्तिके तु योग्यं तु कल्पनीयं फलं खलु । तस्मान्न कर्म कुत्रापि फलहीनं श्रुतं च न ॥ ५६ ॥
एवं च परिभाषाऽपि नित्यत्वाद्यवगाहिनी । प्रधानबोधके वाक्ये फलस्याश्रवणादिति ॥ ५७ ॥
आर्द्रादियोगरूपस्य निमित्तस्य प्रसञ्जने । नैमित्तिकं पूजनं तु विहितं फलसाधनम् ॥ ५८ ॥
इष्टसाधनताज्ञानं प्रवर्तकमिति श्रुतम् । सर्वत्राप्यविशेषेण केन वा तन्निवार्यते ॥ ५९ ॥

नियोगः फलमित्याहुः केचित् तैरपि तत्फलम् । स्वीकृतं तदसद्वा तु सद्वा तदपि चिन्त्यते ॥
नियोगः फलमित्युक्तं येन तं प्रति संप्रति । वक्तव्यमस्ति तेनापि देयमुत्तरमेव हि ॥ ६१ ॥
मौनं चेदुत्तरं तत्र स फलेन बहिष्कृतः । नियोगफलकं कर्म न कुत्रापि श्रुतं खलु ॥ ६२ ॥
तस्मात् कर्माणि सर्वाणि सफलानि श्रुतान्यतः । विशिष्य सफलं कर्म वैदिकं शिवपूजनम् ॥
तत्राङ्गानि बहून्येव तैरङ्गैरखिलैरपि । निष्पन्नं करणं तेन फलं भवति सर्वथा ॥ ६४ ॥
प्रधाने तु फलापेक्षा मुख्यमङ्गं तया विना । प्रवृत्तिरेव नास्तीति फलं तावदपेक्षितम् ॥ ६५ ॥
[1]साङ्गेन कर्मणा तावत् फलं भवति तस्य तु । उत्पत्तिरङ्गविरहे सर्वथा नेति निश्चितम् ॥ ६६ ॥
अङ्गानि तावदुच्यन्ते तदङ्गाङ्गान्यपि क्रमात् । लिङ्गार्चनेन कर्तव्यं आयुरित्यादिवाक्यतः ॥६७॥
लिङ्गार्चनं तु करणं आयुः फलमिति स्मृतम् । तत्र लिङ्गार्चनं केनेत्याकांक्षापि प्रजायते ॥६८॥
तदाकांक्षानिवृत्तिस्तु बिल्वपत्रादिसाधनैः । वैराग्यं यदि कर्तुः स्यात् बिल्वपत्रादिसाधने ॥
तदा तत्करणस्यैव निष्पत्तिर्नोपजायते । धूपदीपादिदानं च धनसापेक्षमित्यतः ॥ ७० ॥
ततो धने न वैराग्यं किन्त्वार्जितधनैः परम् । शङ्कराराधनं कुर्यात् तेन तत्सफलं धनम् ॥
पञ्चामृताभिषेकाद्याः सर्वेऽपि धनमूलकाः । धनाभावे कथं क्षीरं दधि मध्वाज्यमेव वा ॥ ७२ ॥
स्नानं च विहितं लिङ्गे शुद्धपक्वफलोदकैः । तत्र तावत्फलप्राप्तिर्न धनेन विना खलु ॥ ७३ ॥
परमान्नादिकान्नानि नैवेद्याय श्रुतान्यपि । तानि तावत् धनाभावे न भवन्त्येव सर्वथा ॥ ७४ ॥
श्रुतमाहत्य वेदेषु सौवर्णाभरणार्पणम् । तदाभरणनिष्पत्तिः धनाभावे कथं भवेत् ॥ ७५ ॥
भार्यायामपि वैराग्यमयुक्तमिति निश्चितम् । शिवनैवेद्यपाकाय विनियुक्ता यतः स्वतः ॥ ७६ ॥
विनियोगानुसारेण सापि तावदपेक्षिता । शिवार्चनोपयुक्तानां त्यागे पापं महत् खलु ॥ ७७ ॥
अतस्तत्त्यागमात्रं तु न वैराग्यं तथा सति । वैराग्यवार्ता सर्वत्र तत्त्वतः पारिभाषिकी ॥ ७८ ॥
परिभाषाऽपि निष्पन्ना पदार्थस्य विशेषतः । शिवार्चनोपयुक्तत्वकरणत्वानुरोधतः ॥ ७९ ॥
तस्माद्यदार्जितं वित्तं तन्निवेदनमीश्वरे । तद्वैराग्यमिति प्रोक्तं तेन न प्रत्यवैति च ॥ ८० ॥
शतानन्द इति ख्यातो राजा परमधार्मिकः । गुणवान् वीर्यवान् नित्यं शिवपूजापरायणः ॥
शिवपूजादिधर्माणां विशेषेण विचारकः । महादेवः पूजनीयः कथं कुत्रेति चिन्तनात् ॥ ८२ ॥
कृतज्ञेषु वरिष्ठोऽपि सत्यव्रतपरायणः । शांभवेषु दयालुश्च तत्पोषणरतः सदा ॥ ८३ ॥

---

1 साङ्गं न C

सत्यप्रतिज्ञः सर्वज्ञो नीतिशास्त्रविशारदः । प्रजानां पालने दक्षो दक्षः परनिबर्हणे ॥ ८४ ॥
कीर्तिमान् निपुणो धन्यः शुचिश्च विगतस्पृहः । असूयावर्जितो नित्यं प्रभामण्डलमण्डितः ॥
युद्धकाले सुराणां च सर्वथाऽपि भयप्रदः । सर्वलक्षणसंपन्नः सर्वाशापरिपूरकः ॥ ८६ ॥
तमेकदा गुरुः प्राप शेषेणापि समन्वितः । तमागतं समालोक्य पूजयामास शांभवम् ॥ ८७ ॥
ततस्तेन सहालापाः कृताश्च शिवपूजने । उपयुक्ताः प्रयत्नेन तमुवाच गुरुं नृपः ॥ ८८ ॥

शतानन्दः —

धर्माणां परमो धर्मः को वा धर्मस्त्वया मतः । धर्मोत्तमोत्तमत्वेन ज्ञातं धर्मं वदाऽधुना ॥ ८९ ॥
देवोत्तमोत्तमत्वेन को वा देवस्त्वया मतः । श्रुतिभिः कस्य वा धर्मः कीर्तितः कः परः प्रभुः ॥

गुरुः —

धर्मोत्तमोत्तमत्वेन शिवधर्मः प्रकीर्तितः । शिवधर्मात् परो धर्मो नास्ति न श्रूयते ध्रुवम् ॥ ९१ ॥
तेनैव शिवधर्मेण सर्वान् कामानवाप्नुयात् । यं यं कामयते कामं तं तं कामारिधर्मतः ॥ ९२ ॥
शिवपूजा परो धर्मः तथैव शिवपूजया । शिवपादाब्जभृङ्गत्वं प्राप्नोत्येव न संशयः ॥ ९३ ॥
तत्फलं नोग्रतपसा न यागार्बुदकोटिभिः । परं तु श्रीमहादेवकृपया परया खलु ॥ ९४ ॥
संप्राप्य भूरिपुण्येन भक्तिमव्यभिचारिणीम् । क्षणेन शङ्करं स्मृत्वा मुक्तो भवति पातकैः ॥
यत्पूजया महादेवपादाम्बुजरजो भवेत् । सा पूजा लिङ्गपूजेति विज्ञेया श्रुतिशेखरैः ॥ ९६ ॥
महापातकतूलाद्रिः शिवनामाग्निलेशतः । दग्धः क्षणेन भवतीत्यवधारय सादरम् ॥ ९७ ॥
यस्य शङ्करपूजायां विश्वासोऽतिदृढः सदा । तेन तीर्णः स संसारो नानापातकसागरः ॥ ९८ ॥
शिवपूजाप्रभावस्तु श्रुतिषु प्रथितः स तु । एकया जिह्वया वक्तुं शक्य एव न वस्तुतः ॥ ९९ ॥
सहस्रजिह्वः शेषोऽयं अनेनापि न सर्वथा । शिवधर्मप्रभावो यः स तु वक्तुं न शक्यते ॥१००॥
कृतं पूर्वमनेनापि तपो घोरतरं पुरा । शिवधर्मावबोधाय युगानामयुतं नृप ॥ १०१ ॥
अनेन तपसा तावत् स धर्मो ज्ञात एव न । तत्प्रभावो न सहसा शिवान्यैर्ज्ञायतेऽपि न ॥
शिवः परमधर्मज्ञः शिरोमणिरिति स्मृतः । तथा च शिवधर्माणां तत्त्वं वेद सदाशिवः ॥ १०३ ॥
शिवधर्मपरिज्ञानं शिवायाः शिवसन्निधौ । कथञ्चित् तत्परिज्ञानं कुमारस्यापि वस्तुतः ॥ १०४ ॥
नन्दिकेशादिभिः कश्चित् शैवो धर्मः कथञ्चन । ज्ञायते मादृशेनापि कथं वा स विशेषतः ॥
जानाति शांभवं धर्मं लोके परमशांभवः । स तावदस्मदादीनां दुर्ज्ञेय इति निश्चयः ॥ १०६ ॥

विधयो विविधाः सन्ति शिवपूजावबोधकाः । तत्परिज्ञानमस्माकमतिदुर्लभमेव हि ॥ १०७ ॥

गोपनं शिवधर्माणां शङ्करेण कृतं ततः । तज्ज्ञानं दुर्लभं तेषां अस्माकं नृपसत्तम ॥ १०८ ॥

लोके कोऽपि महेशधर्मनिरतः पूतो विनीतः श्रुतो वेदान्तैरमितैरनन्तविभवैः भावप्रभावादरैः ।

मन्ये दुर्लभमेव शांभवमहं धर्मोत्तमं तं मुहुः वन्दे भावमभावसङ्गरहितं भावप्रभावोत्सुकम् ॥

वेदान्तप्रणुतं शिवार्चकपदं वन्दे मुकुन्दार्चितं
तद् बृन्दारकबृन्दवन्दितमुमाकान्तार्चकाराधकम् ।
तत्सेवा जनिरोगनाशकतया ज्ञाता तदाराधनात्
मुक्तिः शङ्करपूजकस्य महिमा केनापि न ज्ञायते ॥ ११० ॥

धन्याः शांभवधर्मबोधनिधयः शैवोत्तमाः सर्वथा
तत्पादाम्बुरुहार्चकोऽपि सुतरां धन्यः स धन्योत्तमः ।
तत्पादाम्बुजरेणुभिर्यदि शिरः पूतं न भीतिस्तदा
कालादप्यत एव संसृतिभयं नेति स्मरामो वयम् ॥ १११ ॥

अस्माकं शिवपूजनोत्सुकशिवाचारावृताराधक-
ध्यानेनापि पदे पदेऽपि निधयः संसारवार्तापि न ।
निर्धूताखिलकल्मषाः शिवपदं यामो न यामं भयं
पश्यामो नियमादिकाभ्यसनजक्लेशं न मृश्यामहे ॥ ११२ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे शतानन्दगुरुसंवादे
शिवधर्मानुसरणं नाम षट्चत्वारिंशोऽध्यायः ॥

—:×:—

# अथ सप्तचत्वारिंशोऽध्यायः ।

[1] व्यासः —

गुरुगौरववाक्यानि शतानन्दः पुनः पुनः । श्रुत्वा प्रहृष्टस्तं प्राह शिवपूजाक्रमं नृप ॥ १ ॥
शिवार्चनव्रतपरैः किं कार्यं प्रत्यहं गुरो । तत् तावदधुना सर्वं निवेदय यथाक्रमम् ॥ २ ॥

गुरुः —

अरुणोदयवेलायां समुत्थाय बहिः परम् । शौचादिकं निवर्त्यादौ स्नात्वा तीर्थोदके शुभे ॥ ३ ॥
उद्धूल्य भस्मनाऽङ्गानि त्रिपुण्ड्रं च प्रयत्नतः । रुद्राक्षधारणं कृत्वा पश्चात् सन्ध्यां समाप्य च ॥
शिवाराधनसामग्र्या लिङ्गे शङ्करमर्चयेत् । रुद्राध्यायं स्मरन्नेव तन्मन्त्रार्थमनुस्मरन् ॥ ५ ॥
शिवप्रवणचित्तः सन् आसीनोऽपि कुशासने । व्याघ्राजिने वा पूतात्मा विभूत्युद्धूलनादिना ॥
चित्रासने वा माञ्जिष्ठे श्वेते वा कम्बले शुभे । नीले पीतेऽपि हारिद्रे कर्बुरे वा विशेषतः ॥
स्वान्तः सिंहासनासीनं उमालिङ्गितविग्रहम् । कर्पूरगिरिसङ्काशं दुकूलपरिवेष्टितम् ॥ ८ ॥
रत्नाभरणसंयुक्तं अनन्तविभवं प्रभुम् । हरं सर्वामराराध्यं आनन्दघनमद्वयम् ॥ ९ ॥
त्रिलोचनं नीलकण्ठं त्रिशूलकरमक्षरम् । दधानं वामहस्ताब्जे मेरुचारुशरासनम् ॥ १० ॥
जटाजूटतटाबद्धचन्द्ररेखाविराजितम् । त्रिपुण्ड्रविलसत्फालं भक्तसंरक्षणेक्षणम् ॥ ११ ॥
अष्टापदतडित्कूटसन्निभं सुन्दराननम् । उत्फुल्लामन्दमन्दारमालिकासमलंकृतम् ॥ १२ ॥
बिल्वपल्लववीताङ्गं अनङ्गहरमव्ययम् । चारुचामीकराकारकरकङ्कणमण्डितम् ॥ १३ ॥
प्रस्फुरन्नूपुरापारसिञ्जितध्वनिसेवितम् । मुनिमानसभृङ्गाङ्गसंभ्रान्तांघ्रिसरोरुहम् ॥ १४ ॥
मृगाङ्कितकरं देवं वरदाभयपाणिनम् । करुणारसंपूर्णं विरूपाक्षं विचिन्तयेत् ॥ १५ ॥
ततः परं विरूपाक्षं लिङ्गे तुङ्गं मनोहरम् । पूजयेदार्जितैर्द्रव्यैः अमलैः कमलादिभिः ॥ १३ ॥
लिङ्गार्चनं बिल्वपत्रैः द्वित्रैर्वा विमलैः कृतम् । सर्वकामप्रदं पुण्यं तद्वेदान्तेषु विश्रुतम् ॥ १७ ॥
एवं संपूज्य वेदान्ते कुर्यादात्मनिवेदनम् । पूजानिवेदनं कृत्वा प्रणम्य च पुनः पुनः ॥ १८ ॥

मन्मानसं भव भवच्चरणार्चनाय तावत्प्रसूनमिदमस्तु शरीरमस्य ।
धूपाय नित्यमसवोऽप्युपहारयोग्याः चक्षूंषि दीपकलिकाफलतां प्रयान्तु ॥ १९ ॥

---

1 स्कन्दः C

यद्यन्मदीयमनघं वसु चन्द्रमौले तत्तत्तवैव पदपूजनयोग्यमस्तु ।
स्वामिन् त्रिनेत्र मम गात्रमिदं पवित्रं लिङ्गार्चनाय भगवन्ननुकूलमस्तु ॥ २० ॥

धीरैस्सहायसुकुमारकुमारदारैः साकं निराकुलमुमारमणार्चनेन ।
कालं नयामि विमलैः कमलाविलासैः श्रीकालकाल सकलैः सकलैरलं मे ॥ २१ ॥

जन्मानि सन्तु शतशोऽथ सहस्रशो वा किं तावताऽपि यदि भक्तिरुमासहाये ।
धन्यानि तानि सकलानि तदेति मन्ये धन्यं त्रिलोचनकृपैकविधानभूतम् ॥ २२ ॥

मत्प्रार्थनीयमिदमेव भवत्पदाब्जभक्तिर्भवत्पादसरोरुहपूजनाय ।
तेनैव मे सकलसिद्धिपरंपरा स्यात् एतावदेव मम देयमपि त्वयापि ॥ २३ ॥

भक्तिर्भवे प्रतिभवेऽपि विरक्तिरर्थे शक्तिर्गिरीशनगमनेऽनुरक्तिः ।
लिङ्गार्चने रतिरनङ्गहरे प्रवृत्तिः बिल्वार्चने मतिरुमेशकथासु मे स्यात् ॥ २४ ॥

अद्यावधि प्रलयकालमहावसानपर्यन्तमन्तकरिपुत्रिपुरान्तकाख्या ।
नृत्यं करोतु रसनारुचिराङ्गणे मे श्रीशूलपाणिचरणे करवाणि वाणीम् ॥ २५ ॥

यागैरलं सकलयोगकुलैरलं मे दानैरलं परिमलैः कमलाविलासैः ।
अन्यैश्च धर्मनिकरैः सुकरैरपारे गौरीमनोरमण ते चरणौ भजामि ॥ २६ ॥

भाग्यैरलं बहुविधैर्निधिकोटिभिर्वा मातङ्गकोटिभिरलं कमलाविलासैः ।
गोकोटिकोटिभिरलं महिषीकुलैर्वा गौरीमनोरमण ते चरणौ भजामि ॥ २७ ॥

गर्भेऽर्भकत्वसमयेऽपि विवेकशून्यः त्वत्पादपद्मविमुखः कुमुखः कठोरः ।
तत्तावदीशकृपया न पुनर्ममास्तु गौरीमनोरमण ते चरणौ भजामि ॥ २८ ॥

पौगण्डमण्डिततनुर्व्यसनप्रहर्षवर्षाभियोगमभिभोगमपि प्रपद्य ।
भक्त्या स्मृतोऽपि भगवन् न मया जडेन गौरीमनोरमण ते चरणौ भजामि ॥ २९ ॥

सोन्मादयौवनवनोपहतेन तेन नाराधितोऽसि न मनागपि कीर्तितोऽसि ।
तत्तावदीश्वर पुनर्न ममास्तु मास्तु गौरीमनोरमण ते चरणौ भजामि ॥ ३० ॥

नारीमनोहरविहारपराभिभूतचित्तेन तावदसकृन्न नमस्कृतोऽसि ।
तन्मास्तु मास्तु हर मास्तु कदापि मास्तु गौरीमनोरमण ते चरणौ भजामि ॥ ३१ ॥

वित्तार्जनाय बहुदेशविनाशदोषव्यापारपूरिततनुर्न तदा कदाऽपि ।
अभ्यर्चितोऽपि हि मया तदपास्तमेव गौरीमनोरमण ते चरणौ भजामि ॥ ३२ ॥

हारोरुहारपरिहारविहारकारकारानुकारकरणेन वयोऽपि नीतम् ।
तेनालमेव हरहारभयापहारं गौरीमनोरमण ते चरणौ भजामि ॥ ३३ ॥

हारप्रवीरपरमादरतो हरारं हारं सहारमनुवारमपि स्मरामि ।
नाद्यापि हारचिरसङ्गतिराविरासीद् गौरीमनोरमण ते चरणौ भजामि ॥ ३४ ॥

मारोपकारकशरप्रवरप्रहारसंहारभीरुतरुणीचरणोपघातैः ।
नीतं दिनं प्रतिदिनं शमनं न मेने गौरीमनोरमण ते चरणौ भजामि ॥ ३५ ॥

संसारसागरविचारविदूरगते वृत्तिर्न वृत्तिरपि हारमनोहरेषु ।
हारोपहारकरणेऽपि न मे प्रवृत्तिः गौरीमनोरमण ते चरणौ भजामि ॥ ३६ ॥

मन्दारकुन्दनवबिल्वदलप्रवालवल्लीदलैरपि न लिङ्गसमर्चनाय ।
यत्नः कृतः क्रतुशतादिकधर्मजालैः गौरीमनोहरण ते चरणौ भजामि ॥ ३७ ॥

अङ्गारसागरशरीरविकारभार संहार मारहर हारविचारहीनः ।
दैनन्दिनप्रलयसंहरणप्रवीण गौरीमनोहरण ते चरणौ भजामि ॥ ३८ ॥

मामेव मामकधिया परिपश्य पश्यका तावतापि तव तात बतातिहानिः ।
त्वं दीनबन्धुरिति किं श्रुतिषु श्रुतोऽपि गौरीमनोहरण ते चरणौ भजामि ॥ ३९ ॥

इति स्तुत्वा महादेवं प्रणिपत्य पुनः पुनः । बिल्वाद्यैरर्चनं कृत्वा कुर्यान्नैवेद्यभोजनम् ॥ ४० ॥
शिवनैवेद्यशेषस्य भोजनेनापि शङ्करः । हारं पदं ददात्येव हाराहाराय सादरम् ॥ ४१ ॥
प्रतिग्रासोऽपि यत्नेन महादेवमनुस्मरेत् । यत्तस्य पातकं तावत् क्षणेन लयमेष्यति ॥ ४२ ॥
सिक्थानां संख्यया हारः सदा हारानुमोदने । अदनेनापि वा नित्यं तस्यानशनजं फलम् ॥
हारोपहारं कवलं स्पृष्ट्वा स्मरहरं स्मरन् । भुक्त्वा मुक्तो भवत्येव पापभोगैः स भाग्यवान् ॥
हारोपहारं दृष्ट्वाऽपि मुक्तो दुरितराशिभिः । तद्भोजनान्महानन्दकन्दकन्दः प्रजायते ॥ ४५ ॥
हारो हारं सोपहारं दृष्ट्वा हर हरेति यः । वदत्युच्चैः स एवोच्चः ततोप्युच्चो न कोपि हि ॥
हारोपहारसमयं यः प्रतीक्ष्याप्यनुक्षणम् । तुष्टः सोऽपि वरिष्ठः स्यात् वसिष्ठादिमुनिष्वपि ॥
भक्तिर्भवति पुण्येन शिवनैवेद्यभोजने । सा भक्तिरचला यस्य स मुक्तो नात्र संशयः ॥ ४८ ॥
हारोपहारपुष्टाङ्गं हारं दृष्ट्वाऽपि दूरतः । प्रीत्या प्रहृष्टहृदयः स मुक्तो भवति ध्रुवम् ॥ ४९ ॥

हारोपहारपरिपाकविशोकमेकं लोके कमप्यतिनिरंकुशमाश्रयन्ति ।
धन्यास्तदंघ्रिकमलं कमलालयं स्यात् तं नित्यमेव कमलापतिपूजितं च ॥ ५० ॥

तं तावत्परमं वदन्ति मुनयो यो हारमेवादरात्
आहारं परिकल्प्य जीवति हरं हारैः सहात्यादरात् ।
स्मृत्वा नृत्यति हारनाम पुनरप्युन्मत्तवत् कीर्तयन्
शार्ङ्गं लिङ्गमवेक्ष्य मोक्षसुखदं भूयः प्रणम्यान्वहम् ॥ ५१ ॥

हारोदारगुणानुवर्णनपरा जिह्वाऽपि येनार्जिता तत्पादाम्बुजरेणुतामुपगतो भीतिं जहात्यन्तकात् ।
भूतेभ्यः किमुतेति सन्ततमतिश्रान्तोऽपि कान्तादरव्यापारप्रचुरानुबन्धरहितो जीवत्ययं केवलम् ॥

कर्ण स्वयं शृणु न नैव वदस्व जिह्वे नार्चस्व हस्त न विलोकय नेत्रयुग्म ।
चेतो न चिन्तय न चाश्रय चान्यदेवं त्यक्त्वा महेश्वरपदाम्बुजमादरेण ॥ ५३ ॥

चेतः शङ्करमाश्रयेतरसुरांस्तद्द्वारदौवारिकान्
हारद्वारविचारकातरतरान् सेन्द्रानुपेन्द्रादिकान् ।
दूरे सन्त्यज सन्त्यजान्त्यजमिव स्वप्नेऽपि मा संश्रय
श्रेयश्चेत् तव वांछितं शिवतरं सांबं समालम्बय ॥ ५४ ॥

चेतश्चिन्तय शङ्करं जप शिवं जिह्वे नमेशं शिरो
नेत्रांभोरुह शार्ङ्गलिङ्गममलं पश्यादरैः पूजितम् ।
रे रे कर्णपुटाशु शङ्करकथापीयूषधारां पिब
घ्राणाघ्राय लभस्व शं शिवपदाम्भोजच्युतं केसरम् ॥ ५५ ॥

रे रे चारुकरातिकोमललसद्बिल्वीदलैः शङ्करं
लिङ्गं पूजय लिङ्गमस्तकमुपस्पृश्यादरेणान्वहम् ।
कृत्वा हस्तपुटं शिरस्यपि मुहुर्नाट्योत्सवैः शङ्करं
नत्वा स्वाभिनयैः विनोदय महामृत्युञ्जयं चाव्ययम् ॥ ५६ ॥

रे रे मानस राजहंस तरसा सांबांघ्रिपङ्केरुहं
सेन्द्रोपेन्द्रविरिञ्चिमानसमहाहंसप्रशंसावहम् ।
तत्त्वं संभज संभजान्तकमहाव्याधान्न ते तत्र भीः
भव्यं भावि भवोद्भवात् अभयदात् संभावितं शोभनम् ॥ ५७ ॥

रे रे चिद्भ्रमर प्रधावसि वृथा संसारघोरोषरा-
पाराम्भोरुहगन्धलोलुप न ते गन्धो न चाम्भोरुहम् ।

संसारोषरमण्डलेषु बहुधा भ्रान्तोऽधुना वा भज
ब्रह्मानन्दमरन्दकन्दमसकृद्गौरीशपादाम्बुजम् ॥ ५८ ॥

रे रे चारुचिरः पुनः पुनरुमाकान्ताङ्गणे लुण्ठनैः
आस्वेदान्नतिभिश्च जन्म तव तत् सार्थं कुरुष्वादरात् ।
भूयस्तत्प्रणतिप्रभूतकिणजापारव्यथानाशकं
तत्पादाम्बुजमात्मबन्धनमिति ज्ञातं मया तत् कुरु ॥ ५९ ॥

संसारोरुतरोः कठोरपिठरो घोरः कुठारोऽपरो
हाराराधनमित्यवैमि तदिदं संसारिणां दुर्लभम् ।
येनेदं सकृदप्यनन्तसुकृतैः अत्यादरात् चेत् कृतं
नीरैर्वा स तरत्यपारविविधव्याधिप्रपूर्णार्णवम् ॥ ६० ॥

एवं स्तुत्वा महादेवं प्रणम्य च पुनः पुनः । भुक्त्वा शङ्करनैवेद्यं शांभवैः सह संवस ॥ ६१ ॥
शांभवैः सह संवासो न त्याज्यः सर्वथा त्वया । शांभवान् शिवनैवेद्यैः परिपालय सादरम् ॥६२॥
शांभवा एव ते राजन् सहायाः स तु सर्वदा । लिङ्गार्चनादिसमये तदन्यान् मा विलोकय ॥
शिवार्चनादिसमये शांभवैः सह सङ्गमे । शिवार्चनं साङ्गमेव साङ्गात् तस्मात् फलं लभेत् ॥
शिवमन्त्राधिकारोऽपि शांभवानां तथा सति । शिवमन्त्रोच्चारणं च शिवार्चाङ्गमिति श्रुतम् ॥
शिवमन्त्रार्थबोधेन प्रहृष्टाः शांभवाः पुनः । उच्चैः पठन्ति तान् मन्त्रान् तेनार्थस्मरणं भवेत् ॥
तदर्थस्मरणं चाङ्गं सोप्यर्थः संस्मृतस्तथा । यथा स्वाध्यायसंप्राप्तो मन्त्रोऽपीत्यवधारय ॥ ६७ ॥
भुक्त्वा शिवकथामेव शांभवोत्तमबोधिताम् । श्रुत्वा सायमुमाकान्तं पूजयित्वा यथोचितम् ॥
प्रहरानन्तरं शय्यां शङ्कराय निवेदय । शयनेप्युपचारास्तु कल्पनीयाः प्रयत्नतः ॥ ६९ ॥
सुगन्धकुसुमादीनि द्रव्याणि शिवमन्दिरे । स्थापनीयानि यत्नेन शिवार्थमिति केवलम् ॥ ७० ॥
यस्तु रात्रौ महेशाय पूजान्ते शयनादिकम् । कल्पयेत् तेन पुण्येन भवेद्भूमण्डलाधिपः ॥
शिवार्चनसमं पुण्यं न श्रुतं तेन सिद्धयः । करस्था एव तत्सिद्धिः विश्वासेन परं भवेत् ॥ ७२ ॥
मनुष्याणां तु सर्वेषां सर्वदा कलुषात्मनाम् । महादेवार्चने प्रीतिर्न भविष्यति सर्वथा ॥ ७३ ॥
मनुष्यदेहमासाद्य विश्वस्यापि सदाशिवम् । यः पूजयति विश्वेशं स मुक्तो भवति ध्रुवम् ॥ ७४ ॥
विश्वेशपूजनं कृत्वा कृत्वा विश्वेश्वरार्चनम् । काशीवासरतो जातो ब्राह्मणः शास्त्रपारगः ॥ ७५ ॥
स तावन्नित्यमभ्यर्च्य शांकरं लोकशङ्करम् । विश्वेश्वरालयस्यापि करोति परिमार्जनम् ॥ ७६ ॥

स कदाचिन्महादेवं निशि संपूज्य सादरम् । कृत्वा निद्रां महादेवं ददर्श गिरिजान्वितम् ।।

स पृष्टः शङ्करेणैव किं करोषीति सादरम् । आचारः कस्तवात्रेति प्राह स्नेहपुरस्सरम् ।। ७८ ।।

तदा प्राह स विप्रोऽपि भस्मोद्धूलितविग्रहः । रुद्राध्यायेन तु स्तुत्वा प्रणम्य च मुहुर्मुहुः ।।७९।।

सद्भस्मनाङ्गानि विलेपयामो रुद्राक्षरत्नैश्च विभूषयामः ।
पञ्चाक्षरं पापहरं जपामो वाराणसीनाथ किमाचरामः ।। ८० ।।

धर्माणि सर्वाणि विवेचयामः कर्माण्यपाराणि विनाशयामः ।
श्रीभावलिङ्गं हृदि भावयामो वाराणसी ··· माचरामः ।। ८१ ।।

कुन्दैरमन्दैः शिवमर्चयामो वृन्दारवृन्दाश्रयमाश्रयामः ।
गौरीसमेतं सततं भजामो वाराणसी ... माचरामः ।। ८२ ।।

अहर्निशं सादरमिन्दिरादिवृन्दारनारीकबरीनिरुद्धम् ।
गौरीपदाम्भोजयुगं स्मरामो वाराणसी ... माचरामः ।। ८३ ।।

परात्परं यन्महतो महान्तं यदेकमव्यक्तमनन्तरूपम् ।
तद्रूपमेतद्धृदि चिन्तयामो वाराणसी ... माचरामः ।। ८४ ।।

काशीपुरीवीथिषु सञ्चरामो भवादिनामानि सदा वदामः ।
श्रीभावमूर्तिं बहुधा नमामो वाराणसी ··· माचरामः ।। ८५ ।।

आराध्यमेकं शिवरूपमेव विश्वं पुराणं तमसः परस्तात् ।
अनन्तकोट्यर्कसमं भजामो वाराणसी ··· माचरामः ।। ८६ ।।

आनन्दकल्लोलकुलातिलोललीलाविलासालयशैलबालाम् ।
त्वां कालकालं च विलोकयामो वाराणसी .... माचरामः ।। ८७ ।।

गङ्गाम्भसा कुम्भसमन्वितेन वातेन शीतेन सुशीतलेन ।
वीरेश्वरं त्वामभिषिञ्चयामो वाराणसी ··· माचरामः ।। ८८ ।।

जलामलैः कोमलबिल्वपल्लवैः श्रौतेन शुद्धोज्वलभस्मना च ।
वीरेश लिङ्गानि समर्चयामो वाराणसी ... माचरामः ।। ८९ ।।

इत्युक्त्वा गिरिजाकान्तं प्रणम्य च पुनःपुनः । भक्त्या स्तोतुं समारेभे पुनः पुनरनन्यधीः ।।

श्रीकाशीनाथ काशीपुररुचिरकथाकर्णनेन प्रवृत्तं
चित्तं मत्तं कथं वा कथमपि न तयोर्वर्णने वा प्रवीणम् ।
कर्णं शीर्णं न पुण्यं क्षणमपि निपुणं प्राणिनां प्रीणनं वा
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ ९१ ॥

पुण्यारण्यप्रकीर्णप्रणतसुरतरुश्रीयुतानन्दसङ्ग-
व्यासङ्गाभङ्गगङ्गोज्वलमिलिततलश्रीफलश्रीलमूले ।
तुङ्गं लिङ्गं निरङ्गं निगममनुगतं प्रोक्षितं दीक्षितं वा
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ ९२ ॥

स्नात्वा न ब्रह्मनाले सितभसितकृतोद्धूलनश्रीत्रिपुण्ड्र
श्रीरुद्राक्षावृताङ्गः कृतनियमविधिः स्वर्धुनीपूरतीरे ।
श्रीरुद्राध्यायवर्णप्रवणनिपुणधीर्न स्मरामि स्मरारिं
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणापूरसारैकसिन्धो ॥ ९३ ॥

संसारापारघोरज्वरकरखदिराङ्गारपूरप्रसार-
व्यापारानेकशोकव्यतिकरनिकरव्याकुलो बाललीलः ।
काले कालेऽनुवेलप्रलयभयभयं न श्रयामो महेशं
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ ९४ ॥

अश्रान्तानन्तचिन्ताहृदविततमतिः स्वान्तपद्मासनस्थं
स्वच्छं शान्तं नितान्तं नतममरगणैः संस्तुतं वेदसंघैः ।
अस्ताविद्याविलासव्यसनमतिमतं साधु नारोपयामः
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ ९५ ॥

भस्माभ्यङ्गक्षणार्धप्रतिहतविमुखानङ्गमङ्गीकृताङ्गं
शार्ङ्गं गङ्गातरङ्गं प्रतिभटविलसद्भोगिभोगोत्तमाङ्गम् ।
तुङ्गोत्सङ्गाङ्गसङ्गप्रमुदितगिरिजालिङ्गिताङ्गं च नेडे
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणापारपूरैकसिन्धो ॥ ९६ ॥

मत्वा पापानुतापं पुनरपि जननक्लेशकोशावकाशं
श्रुत्वा काशीमशेषश्रुतिशिखरमतानन्दपीयूषराशिम् ।

श्रुत्वाप्याशातिपाशप्रशमनशमितं[1] न श्रयामो नितान्तं
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ ९७ ॥

वारं वारं स्मरामि स्मरहरचरणौ नादरेण क्षणेन
क्षीणप्राणप्रयाणक्षणकरणरणप्रेक्षणादक्षिणोऽपि ।
प्राणप्राणाग्निहोत्रव्रतहितनियमः कामकामप्रकामं
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ ९८ ॥

[2]स्मृत्वा स्मृत्वाऽपि कालज्वलदनलकुलस्तम्भसंभारभार-
व्यापारारम्भभीतिं यमभटघटनाट्टाट्टहासोपहासान् ।
भीतो भीतोऽपि भूतप्रतिभटविपर्यैर्नार्चयामो यमारिं
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ ९९ ॥

सानन्दं वेदवन्द्यं स्मरहरचरणाराधनध्यानदान-
व्यक्तासक्तस्वकर्मप्रतिभुवमभवं मोक्षदाने भव त्वाम् ।
न त्यक्ष्ये लक्षशोऽपि क्षणमपि मरणेऽप्यंघ्रिपद्मं तवेश
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणापारपूरैकसिन्धो ॥ १०० ॥

नग्नो [3]गौरीसहायः स्मृतिजनितनिजानन्दसन्दोहमग्नो
लग्नस्वर्गापवर्गप्रदद(?,मघहरापारलिङ्गार्चनेऽपि ।
नोद्विग्नः पापकोपप्रचुरविषयजापारदुःखाम्बुराशेः
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैकसिन्धो ॥ १०१ ॥

गर्भात्रिर्भावभोगव्यपगमसुगमोपायशीतांशुकाय-
श्रीपादाम्भोजपूजाजितनिजजननव्याजजातद्विजश्रीः ।
विज्ञाभिज्ञोनभिज्ञच्युतवितततमतिर्नामृतं त्वां भजामि
त्र्यक्षाक्षोभ्यापराधान् हर हर करुणासारपूरैक सिन्धो ॥ १०२ ॥

त्र्यक्ष स्वाश्रितरक्षकादिभवनाध्यक्षाधुना रक्ष मां
रक्ष्यं रक्ष्यमुपेक्षसे किमिति मां दक्षोऽपि मद्रक्षणे ।
फालाक्षाक्षरवीक्षणाक्षयमहाविक्षेपदाक्षायणी-
वक्षोजस्फुरदक्षविक्षयकृपालक्ष्यं परीक्ष्य क्षणम् ॥ १०३ ॥

---

1 शमनं C E  २ अयं श्लोकः C कोशे नास्ति ।  3 गौरीसहायस्मृति D

इति वीरेश्वरं स्तुत्वा तदाज्ञां प्राप्य सादरम् । स्थित्वा काश्यां तदर्चायां निरतः समभूत् सदा ॥

इदं सर्वं महद्भाग्यं शिवाराधनजं फलम् । ततस्त्वमपि यत्नेन शिवमाराधयादरात् ॥ १०५ ॥

हारो हारविचारतत्परवरो नोदारहारादर-
व्याहारव्यवहारसादरवरव्यापारभीरुः परम् ।
वारं वारमनुस्मर स्मरहरं हारोपहारादरो
हाराचारविचारमेव कुरुते संसारभारं हरन् ॥ १०६ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे बृहस्पतिशतानन्दसंवादे
वीरेश्वरस्तुतिवर्णनं नाम सप्तचत्वारिंशोऽध्यायः ॥

---

## अथाष्टचत्वारिंशोऽध्यायः ।

---

याज्ञवल्क्यः —

इति तद्गुरुवाक्यानि गुर्वर्थानि विशेषतः । श्रुत्वा शङ्करपूजायां सादरः स ततोऽभवत् ॥ १ ॥

ये शङ्करध्यानविशारदाः सदा ते धीरदारादरसोदराः किम् ।
परन्तु नीहारकरार्धमौलिमनोहराहारविचारधीराः ॥ २ ॥

न जातु जानन्ति जनिं जनन्याः परं वरं यौवनकारणं वा ।
जीर्णं न पश्यन्ति परन्तु ते तु हरं प्रपश्यन्ति चिरेण हाराः ॥ ३ ॥

हारानुदारानुरुहारलिङ्गसमर्चनध्याननिधानलाभान् ।
वन्दे मुकुन्दादिकदेववृन्दवन्दारुमन्दारतरुप्रकाशान् ॥ ४ ॥

संसाररूपामितदर्पसर्पप्रसर्पणप्राणसमर्पणानाम् ।
फालेक्षणाक्षीणकथासुधानुक्षणेऽप्यपर्णारमणं प्रयान्ति ॥ ५ ॥

क्व शङ्करापारकथासुधार्णवः क्व पातकाकारशरीरयोगः ।
क्व दुष्टसंसारविहारवांछा दारादरापाररसाभिवांछा ॥ ६ ॥

एकेन वातेन दुरात्मना वा संसारसर्पार्पितचेतसाऽपि ।
महेश्वरापारकथासुधालवो दैवादवाप्तो यदि सोऽपि मुक्तः ॥ ७ ॥

वक्तुं न शक्यते राजन् शिवार्चनकथार्णवः। तत्र रत्नान्यपाराणि हाररूपाणि सन्त्यपि ॥ ८॥
हारा एव महोदाराः महेश्वरमनोहराः। तेषां प्रभावः केनापि न ज्ञातो लेशतोऽपि वा ॥ ९ ॥
हाररूपाणि रत्नानि दुर्लभानि जगत्त्रये। तत्कान्तिप्रसरेणैव तमोनाशः प्रजायते ॥ १० ॥
अज्ञानरूपतमसः प्रणाशाय महेश्वरः। ससर्ज हाररत्नानि तद्विनाशस्तु तैः परम् ॥ ११ ॥
एकदापारपूराणां उदयोऽपि न सर्वथा। नाज्ञानतमसो नाशः हारहारप्रभां विना ॥ १२ ॥
कृत्वा लोकोपकाराय हारसृष्टिर्हरेण तु। स हारः केनचित् पुण्यैः अपारैरेव जायते ॥ १३ ॥
सर्वोपकारको हारो महोत्सवमनोहरः। यतस्तच्चरणांभोजरजः परमजीवनम् ॥ १४ ॥
संभाषणप्रेक्षणाद्यैः पुनाति भुवनत्रयम्। शांभवः केवलं तस्य दर्शनं पापनाशनम् ॥ १५ ॥
यान्यर्जितानि पापानि तान्यनन्तान्यपि क्षणात्। शाङ्गाङ्गसङ्गवातेन प्रणश्यन्ति न संशयः ॥
शाङ्गलिङ्गार्चनरतो मनोवाकायकर्मभिः। स शाङ्ग इति विज्ञेयः तत्सङ्गादेव मुच्यते ॥ १७ ॥
शाङ्गाः स्पृष्टाश्च दृष्टाश्च पृष्टा अपि विशेषतः। अपारपातकाकारपारावारापकारकाः ॥ १८ ॥
न यद्यपि वदिष्यन्ति शाङ्कराः सहसा पुनः। तथाऽपि तेषां व्याहाराः श्रुताः पापापकारकाः ॥
हारोपचारव्याहाराः व्यवहारादराः परम्। हारास्तदादरेणैव संसारान्मुच्यते जनः ॥ २० ॥
हारव्याहारमात्राणामादरेण हरः परः। संसारसागराद्घोरान् नरान् सन्तारयेत् ततः ॥ २१ ॥
पुरा द्रविडदेशेषु मणिमुक्तानदीतटे। वृद्धाचलेश्वरक्षेत्रे राजा परमधार्मिकः ॥ २२ ॥
शिवालयानां निर्माणं रत्नैरेव मनोहरैः। कारयामास तत्तीरे शांकरोऽतिमनोहरे ॥ २३ ॥
स तेषु रत्नलिङ्गानि स्थापयामास कोटिशः। तस्य वृद्धाचलेशस्य मनोज्ञे मणिमण्टपे ॥ २४ ॥
मणिदीपावलिं कृत्वा पूजयामास शङ्करम्। अरुणोदयमारभ्य कृत्यं तस्य शिवार्चनम् ॥ २५ ॥
न राज्यपालनेच्छापि नेच्छा स्वात्मानुपालने। दारादिविषयेच्छा तु तस्य दूरतरा नृप ॥ २६ ॥
प्रतिप्रहरपूजाभिः तोषयामास शङ्करम्। तत्पूजासाधनं द्रव्यं अमितं प्रत्यहं नृप ॥ २७ ॥
पूजां पुनः पुनर्दृष्ट्वा प्रहृष्टः कष्टवर्जितः। अनिष्टं नाशयत्येव लोकानां स्वावलोकनैः ॥ २८ ॥
महदैश्वर्यसंपन्नोऽप्यपारगुणसागरः। शिवनामसुधाधाराधारो धीरः परं नृपः ॥ २९ ॥
शिवनामसुधासाररसैः तद्रसना चिरम्। पुष्टा रसान्तरापेक्षां न करोत्येव सर्वथा ॥ ३० ॥
कदापि लौकिकं नाम तेन नोक्तं प्रमादपि। शिवनाम्नां संज्ञयैव चरन्त्यनुचरा अपि ॥ ३१ ॥
मेध्याख्याग्रहणेनैव जलपात्रस्य केवलम्। कुर्वन्त्यानयनं तस्य सेवका अपि शाङ्कराः ॥ ३२ ॥

विगुल्याख्यानुसन्धानं दीपानयनसाधनम् । अतप्यनामग्रहणात् आतपत्राहृतिः परम् ॥ ३३ ॥
वात्यग्रहणमात्रेणाप्युशीरव्यजनादिना । वायुप्रसारं कुर्वन्ति सेवकास्तस्य शांभवाः ॥ ३४ ॥
तस्यान्नपतिशब्दानामभिधानेन केवलम् । प्रयच्छन्त्यन्नमनघं महेश्वरनिवेदितम् ॥ ३५ ॥
यद्यद्वस्तु महादेवसंज्ञया संज्ञितं नृप । तत्तत् प्राप्य स राजा तु लौकिकं न वदत्यपि ॥ ३६ ॥
यदा वनपतित्वेन स्मृतो वनपतिस्तदा । तस्य पुष्पवनोद्योगो जात इत्यपि निश्चयः ॥ ३७ ॥
यदा वृक्षपतित्वेन स्मृतो वृक्षपतिस्तदा । बिल्वादिपोषणोद्युक्ताः तदीयाः सेवकास्तदा ॥ ३८ ॥
यदा कक्षपतित्वेन स्मृतः कक्षपतिस्तदा । प्रवृत्ता एव तद्भृत्याः पुष्पकक्षाभिरक्षणे ॥ ३९ ॥
यदा पत्तिपतित्वेन स्मृतः पत्तिपतिस्तदा । पत्तिकोटिसहस्राणि समायान्त्यपि दूरतः ॥ ४० ॥
निषङ्गित्वेन गौरीशं यदा स्मरति पार्थिवः । तदा निषङ्गमादाय प्रयच्छन्ति मनोहरम् ॥ ४१ ॥
यदैवेषुधिमानीशः स्मृतस्तेन महात्मना । तदेषुधिसहस्राणि नीयन्ते तस्य सन्निधिम् ॥ ४२ ॥
तेनारण्यपतित्वेन स्मृतो यदि महेश्वरः । अरण्यपालनोद्योगः तद्भृत्यानां प्रजायते ॥ ४३ ॥
स हिरण्यपतित्वेन स्मृतस्तेन शिवो यदा । तदा हिरण्यगिरयोऽप्यानीयन्तेऽस्य सैनिकैः ॥ ४४ ॥
सरस्यत्वेन गौरीशं यदा स्मरति पार्थिवः । तदा तद्भृत्यवर्गस्य तत्सरःपोषणोद्यमः ॥ ४५ ॥
कूप्यत्वेन यदा राजा स्मरत्येव सदाशिवम् । तदा कूप्योपचारेषु प्रयतास्तस्य सेवकाः ॥ ४६ ॥
वर्ष्यत्वेन यदा राजा स्मरत्येव महेश्वरम् । तदा वृष्ट्यर्थमुद्योगः तद्भृत्यानां प्रजायते ॥ ४७ ॥
नाद्यत्वेन यदा शम्भुः स्मृतस्तेन महात्मना । तदा नदीविचारेषु प्रयतास्तस्य सेवकाः ॥ ४८ ॥
एवं संवसतस्तस्य भूपालस्य महात्मनः । आसायं भोजनापेक्षा न भवत्येव सर्वथा ॥ ४९ ॥
सायंकाले विशेषेण स महादेवपूजने । उद्युक्तः शांभवैर्युक्तः विमुक्तः पापपर्वतैः ॥ ५० ॥
आपादमस्तकं सम्यगुद्धूल्य सितभस्मना । त्रिपुण्ड्रधारणं कृत्वा रुद्राक्षाणां च धारणम् ॥ ५१ ॥
रुद्राक्षरत्नकोटीरं धृत्वा शिरसि सादरम् । रुद्राक्षमालालक्षाणां शोभया समलङ्कृतः ॥ ५२ ॥
भस्मरुद्राक्षमालाङ्कैः शांकरैः सह सादरम् । गोक्षीरादिप्रवाहैश्च पूजयामास शङ्करम् ॥ ५३ ॥
चन्दनैः कुसुमैर्बिल्वैः धूपैर्दीपैश्च कोटिशः । दिव्यान्नराशिभिः शम्भुं पूजयामास सादरम् ॥ ५४ ॥
पूजान्ते नृत्ततूर्याद्यैः तोषयित्वा महेश्वरम् । शांभवैः सह संलापं कृत्वा स्तोत्रं मुहुर्मुहुः ॥ ५५ ॥
स सौभाग्यं महेशाय निवेद्य नियमान्नृपः । हारोपहारशेषान्नैः तोषयामास शाङ्करान् ॥ ५६ ॥

सिद्धाः प्रदोषसमयेषु महेशपूजां लिङ्गेषु रत्नरचितेषु मनोहरेषु ।

कृत्वा मृडापरिवृढं दृढभक्तिभावैः नृत्यन्ति नाट्यनिपुणाः सुरकन्यकाश्च ॥ ५७ ॥

गन्धर्वराजनगरेऽपि शिवार्चनेन नीतः प्रदोषसमयः स सुधामयोऽपि ।
तेषां न कृत्यमितरत् गिरिराजकन्यानाथांघ्रिपूजनमहाव्रतदीक्षितानाम् ॥ ५८ ॥

सायं चतुर्मुखमुखाः त्रिदशास्त्रिनेत्रं लिङ्गस्वरूपममलं सुधयाऽभिषिच्य ।
मन्दारकुन्दकुसुमादिभिरर्चयन्ति ते देवदुन्दुभिनिनादपुरस्सरं हि ॥ ५९ ॥

रंभादिदेवगणिकाः शिवपूजनान्ते नृत्यं महेशनिकटे रजनीमुखेषु ।
कुर्वन्ति सादरममन्दमुदा प्रयत्नैः स्वेदप्रपूरपरिपूरितदिव्यगात्राः ॥ ६० ॥

स्वेदापनीतसितभस्मकृतत्रिपुण्ड्राः ताः स्वर्धुनीजलनिवेशनपूतगात्राः ।
धृत्वा त्रिपुण्ड्रममलं पुनरेव नृत्तं कुर्वन्ति शङ्करमनोहरमन्दिरेषु ॥ ६१ ॥

लोके न कोऽपि रजनीमुखमेत्य भक्त्या कार्यान्तरेषु निरताः प्रमदाश्च सायम् ।
धृत्वा त्रिपुण्ड्रममलं सितभस्मनैव रुद्राक्षधारणपराः प्रभवन्ति भावाः ॥ ६२ ॥

संपाद्य बिल्वकुसुमादिकमादरेण संपूजयन्ति गिरिशं शिवलिङ्गरूपम् ।
कर्पूरदीपरुचिरप्रभया प्रदीप्तं व्याप्तं सुधूपवरधूमगणैरपारैः ॥ ६३ ॥

नारायणो मृदुमृदङ्गतलाभिघातनप्राननश्रवणघातविधूतदोषः ।
स्वेदाम्बुपूरपरिपूरित एव नित्यं नित्यं करोति नियमाद्रजनीमुखेषु ॥ ६४ ॥

रूपं रमापि शिवलिङ्गमनङ्गभङ्गक्रीडास्पदं सुरसरिद्वरनीरपूरैः ।
कस्तूरिकारुचिरचन्दनपुष्पमालाबिल्वादिभिः शुभदमर्चयति प्रयत्नैः ॥ ६५ ॥

पूजां समाप्य परिगृह्य च रुद्रवीणां गानं समाप्य शिवनामविशेषगानैः ।
नृत्यं करोत्यभिनयादिविचक्षणा सा नारायणस्य रमणी तरुणीसमेता ॥ ६६ ॥

नाट्येन सेयमनिशं च निशावसानं कृत्वा प्रनृत्यति पुनः पुनरिन्दुमौलिम् ।
स्मृत्वा मनोहरशिवाचरणांबुजं च भूयः प्रनृत्यति हसत्यपि गानलोला ॥ ६७ ॥

गङ्गापि तुङ्गसुतरङ्गजलप्रवाहैः लिङ्गाभिषेचनविधिं नियमैः समाप्य ।
श्रीचन्दनादिभिरलङ्कृतमीशमाशु नत्वा प्रनृत्यति शिवोत्सवदर्शनेन ॥ ६८ ॥

ब्रह्मा शिवार्चनविधिं विधिभिर्विदित्वा भक्त्या प्रदोषसमये शिवपूजनेन ।
[1]पूज्यो भवत्यनुदिनं प्रणवान्वितानि पञ्चाक्षराणि शिवनाममनोहराणि ॥ ६९ ॥

---

1 पूतो जपत्यनुदिनं D E

वाणी च वाग्भिरमिताभिरभङ्गुरार्थैः प्रस्तौति शङ्करपदाम्बुजपूजनं च ।
कृत्वा प्रदोषसमयेष्वमराङ्गनाभिः साकं प्रनृत्यति विभूतिपवित्रगात्रा ॥ ७० ॥

देवास्तावदुमासहायचरणांभोजं प्रदोषे मुहु-
बिल्वाद्यैः कुसुमैश्च चन्दनवरैः संपूज्य जातोत्सवाः ।
तत्पूजाविरताः कदाऽपि न भवन्त्येवामृतास्वादने
को वा स्याद्विरतः प्रमोदविरतः को वा जगन्मण्डले ॥ ७१ ॥

कः प्राणी गणनाथनाथचरणांभोजार्चनानादरः
सायंकालमवाप्य दुर्लभतरं ब्राह्मण्यमासाद्य च ।
त्यक्त्वा केवलमन्त्यजानपि महापापाश्रयान् दुर्मुखान्
दुर्वीर्यान् दुरदृष्टकोटिघटितान् जारोपजारोद्भवान् ॥ ७२ ॥

मन्येऽमुं पुरुषाधमं नरखरं दुर्वीर्यपातोद्भवं
पापिष्ठातिवरिष्ठमद्यपकुलस्त्रीयोनिगन्धोन्मुखम् ।
यः सायं शिवलिङ्गसङ्गरहितः कार्यान्तरव्यापृतः
शङ्काराधनसाधनादिविमुखो भूभाररूपः परम् ॥ ७३ ॥

तद्वंशः प्रलयं प्रयाति सहसा तन्नाशकैस्तैर्विना
ब्रह्माण्डप्रलयैः प्रदोषसमये यः शङ्करानर्चकः ।
तच्चित्तं खलु पित्तपीतमनिशं तातोपि तस्याधमः
तन्माता व्यभिचारिणी शुनकजा जाताऽपि सा रासभैः ॥ ७४ ॥

ब्रह्माण्डानि पुनाति शङ्करपरः सायं शिवाराधकः
तत्तातः सुकृती सती च जननी तत्सोदरो ब्राह्मणः ।
तत्सन्तानसमृद्धिरप्यनुदिनं तस्याभिवृद्धिः सदा
सन्तोषैर्धनधान्यदारविभवाद्यभ्युच्चयः सन्ततम् ॥ ७५ ॥

तत्पादाब्जरजः परं शिरसि मे तस्मै नमः सर्वदा
यः सायं शिवलिङ्गपूजनतः श्रान्तः प्रणामैर्मुहुः ।
नृत्योत्साहकरः कराद्यभिनयैः अत्यादरादादर-
व्याहारैर्हर शङ्कर स्मरहर त्राहीत्यमन्दोत्सवः ॥ ७६ ॥

सङ्गस्तेन ममास्तु सन्ततमुमाकान्तं प्रदोषेषु यः
 क्षीराद्यैरभिषिच्य लिङ्गविलयं श्रीचन्दनालेपनैः ।
बिल्वैरप्यमलैरमन्दविलसद्गन्धैर्मरन्दान्वितैः
 कुन्दैरर्चयति प्रकृष्टविभवैः कर्पूरदीपादिभिः ॥ ७७ ॥

तत्सङ्गैर्दिनयापनं भवतु मे यः सायमीशार्चनं
 ध्यात्वाऽऽनन्दघनो विभूतिकवचो रुद्राक्षभूषोत्सवः ।
जिह्वा शङ्करनामरूपसुसुधापूरादरास्वादन-
 व्यासक्ता शिवलिङ्गपूजनमहोत्साहस्य सायं मुहुः ॥ ७८ ॥

वासः स्यान्मम तस्य मन्दिरवरे यः सायमीशार्चना-
 नन्दापारतरङ्गसङ्गततनुर्भूतिप्रभाभूषितः ।
रुद्राक्षाभरणः प्रतिक्षणमपि श्रीमन्विरूपाक्ष मां
 रक्ष्यं प्रेक्ष्य परीक्ष्य मामकधिया रक्षेति यः संवसेत् ॥ ७९ ॥

पाताले़ऽप्युरगेश्वरप्रभृतयः श्रीहाटकेशार्चनं
 सायं सन्ततमेव शान्तहृदयाः सायं वधूसंयुताः ।
धूपैर्दीपगणैश्च चन्दनवरैः पुष्पैरमन्दैरपि
 प्राज्याज्यान्नवरैरपारमधुरैर्नाट्यादिभिश्चान्वहम् ॥ ८० ॥

सायंकालशिवार्चनस्य महिमा केनापि न ज्ञायते
 तस्मादेव विमोहमेत्य बहवः त्यक्त्वा शिवाराधनम् ।
कुम्भीपाकमुपेत्य गर्भजनितक्लेशं च संप्राप्य ते
 संसारार्णवमज्जनैरनुदिनं तिष्ठन्ति बंबारवैः ॥ ८१ ॥

लोके शाङ्करसङ्गतिः खलु सदा सायं शिवाराधन-
 ध्यानाय प्रभवत्यवश्यमसकृत् तत्सङ्गतेस्तत् फलम् ।
सा यस्यास्ति स एव भाग्यनिवहाधारः सुराराधितः
 तत्पादाम्बुजपूजनेन भगवान् फालेक्षणस्तुष्यति ॥ ८२ ॥

आकल्पं यदि धर्मकोटिभिरहोरात्रं च यो नीयतां
 किं तैः सायमुमासहायचरणांभोजार्चनं चेद्भवेत् ।

पातिव्रत्यसमं खलु व्रतमिदं त्यागेऽस्य किं दुर्भगो
न स्यादेव ततः कदापि न परित्याज्यं शिवाराधनम् ॥ ८३ ॥

सायङ्कालशिवार्चनेन भगवान् तुष्टो यथा शङ्करः
तद्वन्नान्यविशेषकारनियमाचारैः स तुष्यत्यपि ।
तस्मात्सायमुमासहायभजनं कृत्वा विमुक्तो भवेत्
पापापारमहाम्बुराशिभिरपि प्राप्नोति भाग्यान्यपि ॥ ८४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे वृद्धाचलराजेतिहासप्रदोषपूजामहिमावर्णनं नाम अष्टचत्वारिंशोऽध्यायः ॥

---

## अथैकोनचत्वारिंशोऽध्यायः ।

—*—

याज्ञवल्क्यः —

राजा द्रविडदेशानां शूरसेनाधिपो नृपः । चकार बहुधा धर्मान् शिवपूजनलक्षणान् ॥ १ ॥
वयो नीतं च तैरेव सादरं शङ्करार्चनैः । सायं शिवार्चनं तस्य व्रतं भूपालसत्तम ॥ २ ॥
तस्मिन् व्रते यथा तस्य विश्वासो मुक्तिदायकः । तथा नान्यव्रते राजन् तत्तुल्यं व्रतमेव न ॥
तस्य व्रतस्य महिमा वेदेष्वपि निरूपितः । विधिरप्यविशेषेण वेदेष्वेव प्रकीर्तितः ॥ ४ ॥
विधानमपि वक्ष्यामि सायंकाले शिवार्चने । तत्फलान्यपि वक्ष्यामि विशेषेण नृपोत्तम ॥ ५ ॥
प्रातर्मध्याह्नकालेऽपि मध्येऽपि शिवपूजकः । सायं शिवार्चनं कृत्वा भुङ्क्ते मध्ये न सर्वथा ॥
अस्तपूर्वमुहूर्तेषु कृत्वा शौचादिकं परम् । स्नात्वा शिवोदकेनैव कुर्यादाचमनं क्रमात् ॥ ७ ॥
तत्पूर्वं भस्म धृत्वैव न विना भस्म धारणम् । कुर्यादाचमनं विप्र जलपानं तु तद्यतः ॥ ८ ॥
जलपानाधिकारोऽपि धृते भस्मनि जायते । विना तेन जलं पीत्वा रेतःपानाघवान्नरः ॥ ९ ॥
अभस्मना तु न स्थेयं इति या श्रुतिरीरिता । तया श्रुत्या यतो नित्यं विहितं भस्मधारणम् ॥
मुखप्रक्षालनं कृत्वा स्नानात् पूर्वमपि द्विजैः । भस्मना घर्षयेत् फालं तद्यथा न प्लुतं जलैः ॥
स्नानकाले भावपूतं निवेद्य जलमीश्वरे । तेनैवाचमनं कुर्यात् निवेदितजलेन हि ॥ १२ ॥
स्नानं च प्रत्यहं कुर्यात् जलैः शिवनिवेदितैः । कालेन तेन कर्तव्यं अभिषेकोदकेन वा ॥ १३ ॥

ततः स्नात्वा प्रयत्नेन धृत्वा भस्माभिमन्त्रितम् । पश्चादाचमनं कुर्यात् पश्चाद्वस्त्रस्य धारणम् ॥
पुनराचम्य सर्वाङ्गमुद्धूल्य सितभस्मना । त्रिपुण्ड्रधारणं कुर्यात् पश्चाद्रुद्राक्षधारणम् ॥ १५ ॥
ततः सन्ध्यां समाप्याशु शिवमन्दिरमाविशेत् । प्रक्षालिते पवित्रे च श्रीमहादेवमन्दिरे ॥ १६ ॥
उदङ्मुखः प्राङ्मुखो वा यद्वा पश्चान्मुखो द्विजः । उपविश्य सुखं ध्यात्वा लिङ्गे सोमार्धशेखरम् ॥
जटाजूटतटाघातच्युतचन्द्रकलाधरम् । त्रिणेत्रं नीलकण्ठं च वरदाभयपाणिनम् ॥ १८ ॥
सर्वाभरणसंयुक्तं दुकूलपरिवेष्टितम् । हिरण्यबाहवे तुभ्यं नम इत्यनुषङ्गतः ॥ १९ ॥
ध्यात्वा भक्त्या प्रयत्नेन दद्यादाचमनादिकम् । ततः पञ्चामृतैः कुर्यादभिषेकं पृथक् पृथक् ॥
ततः परं रुद्रसूक्तैः श्रीरुद्राध्यायपूर्वकैः । अभिषेकश्च कर्तव्यो जलाविच्छिन्नधारया ॥ २१ ॥
पश्चादाचमनं दद्यात् दद्याद्वस्त्रं ततः परम् । पश्चाद्विभूतिर्दातव्या शिवमन्त्राभिमन्त्रिता ॥ २२ ॥
ततः परं चन्दनं च देयं कुङ्कुमकेसरैः । कस्तूरिकादिभिर्द्रव्यैः सुगन्धैरपि संयुतम् ॥ २३ ॥
ततः परं बिल्वपत्रैः क्षालितैश्च तिलाक्षतैः । पुष्पैरमन्दैर्मन्दारप्रमुखैश्च समर्चयेत् ॥ २४ ॥
ततः परं धूपदीपौ दत्वा नैवेद्यमुत्तमम् । मधुरद्रव्यसंकीर्णं दद्यादाज्यसमन्वितम् ॥ २५ ॥
परमान्नानि दिव्यानि फलानि विविधान्यपि । यद्यद्रुचिकरं वस्तु तत्सर्वं विनिवेदयेत् ॥ २६ ॥
ततः कर्पूरदीपानां नीराजनसमर्पणम् । दीपावलीप्रदानं च सर्वतः शिवमन्दिरे ॥ २७ ॥
ततः स्तुत्वा महादेवं प्रणम्य च पुनः पुनः । लौकिकैर्वैदिकैर्मन्त्रैः शिवध्यानपुरःसरम् ॥ २८ ॥

नमो नमस्ते त्रिदशाधिनाथ नमो नमस्ते प्रमथाधिनाथ ।
नमो नमो मामव मामवाव स्फुरज्जटाजूटतटोडुनाथ ॥ २९ ॥

संसाररूपविविधामितदन्दशूकदंष्ट्राभिघातपरिपीडितमिन्दुमौले ।
पाहि त्वदीयमतिदीनममन्ददुःखमाधिव्यथाविषविनाशक दीनबन्धो ॥ ३० ॥

श्रीविश्वनाथ शरणागतवत्सलेश त्वत्पादपद्मभजनाय मनः प्रवृत्तम् ।
पुण्यैरगण्यविभवैः तदपारपुण्यनिक्षेपलाभमनुवांछति तत्प्रयच्छ ॥ ३१ ॥

दुर्वारदुःखपरिहारकरं भवन्तं फालेक्षणं भवभयाब्धिविशोषकं च ।
जानाति चित्तमिति मे तदपारपुण्यनिक्षेपलाभमभिवांछति तत्प्रयच्छ ॥ ३२ ॥

ये तावदीश चरणं शरणं प्रपन्नाः ते तावतैव सुखिनो दयया तया ते ।
तत्तावदीश मम चित्तमिदं विचार्य त्वत्पादपद्मभजनाय मनः प्रवृत्तम् ॥ ३३ ॥

अन्यानि यानि कमलानि सरोवरेषु तेषु प्रणाशमुपयाति सुगन्धलेशः ।
इत्यादरेण बहुधैव विचार्य चित्तं त्वत्पादपद्मभजनाय मनः प्रवृत्तम् ॥ ३४ ॥

नान्यन्ममास्ति शरणं तरुणेन्दुखण्डदण्डायमानकर[1]मण्डलमण्डिताङ्गम् ।
त्वत्पादुके शरणमित्यनुवारमेव ज्ञात्वा भजामि भगवन्तमुमासहायम् ॥ ३५ ॥

चित्तं ममेशचरणस्मरणप्रवृत्तं जिह्वा महेश्वरकथासमुदीरणाय ।
कर्णौ सदाशिवकथाश्रवणप्रवृत्तौ हस्तौ शिवार्चनविधौ मम तौ प्रवृत्तौ ॥ ३६ ॥

धन्यं मनो मम शिवस्मरणप्रवृत्तं पुण्यैरपारविभवैस्तदुपार्जितं मे ।
पुण्यानि तेन पुनरप्यमितानि तानि संभावितान्यपि शुभान्यपि भावुकानि ॥

यत्कल्पकोटिसमुपार्जितपुण्यजातं तत्तावदीशचरणांबुजपूजनाय ।
जातं तदेव मम भाग्यमिति स्मरामि भूयः स्मरामि चिरमाशु हर स्मरारे ॥

भो शङ्कर स्मरहरामरवीर धीर गौरीमनोरमण पापहरप्रवीण ।
मामुद्धरोद्धर महाघसमुद्रमग्नं संसारघोरविषसर्पमुखाभिलग्नम् ॥ ३९ ॥

कारुण्यसागरविशेषगुणाम्बुराशे काशीपते कुशलमेव मम प्रयच्छ ।
मामुद्धरोद्धर महाघसमुद्रमग्नं संसारघोरविषसर्पमुखाग्रलग्नम् ॥ ४० ॥

त्वं दीनवत्सल इति श्रुतिषु प्रसिद्धः सिद्धादिसेवित महेश्वर शूलपाणे ।
मामुद्धरोद्धर महाघसमुद्रमग्नं संसारघोरविषसर्पमुखाग्रलग्नम् ॥ ४१ ॥

श्रीनीलकण्ठ गिरिराजसुतोपकण्ठ सोत्कण्ठमिन्दुकलिकाभरणार्चनादौ ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ४२ ॥

का वा महेश्वर गतिर्मम चिन्तिताऽस्ति श्रीकालकाल शिवपूजकपूजकस्य ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ४३ ॥

पापप्रवृत्तिरपि मास्तु भवत्पदाब्जपूजाविधाननिरतस्य शिवासहाय ।
मामुद्धरोद्धर .... मुखाग्रलग्नम् ॥ ४४ ॥

यत्सञ्चितं विविधपापकुलं तदाशु नाशं प्रयातु शशिखण्डविमण्डिताङ्गम् ।
मामुद्धरोद्धर ... मुखाभिलग्नम् ॥ ४५ ॥

---

1 करमण्डितमण्डलांसम् C

गर्भाधिवासजनकं दुरदृष्टमस्य यत्तावदाशु मम तद्विलयं प्रयातु ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ४६ ॥

यो योनिमार्गविषदुर्गविनिर्गमादिहेतुः स तावदधुना विलयं प्रयातु ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ४७ ॥

दुर्गन्धपूरपरिपूरितयोनिभागसंभोगबुद्धिरधुना विलयं प्रयातु ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ४८ ॥

ये ये पुरीषजलसंकुलगर्भवासदुर्वासनापरिवृताः प्रलयोऽस्तु तेषाम् ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ४९ ॥

विश्वेशनामसु सुधारसपानपीना नित्यं ममास्तु रसना गिरिजासहाय ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ५० ॥

श्रीबिल्वपल्लवलवैरपि पूजितस्त्वं मुक्तिं प्रदातुमपि शंकर किं प्रवृत्तः ।
मामुद्धरोद्धर ... मुखाग्रलग्नम् ॥ ५१ ॥

मत्वार्थनीयमिदमेतदनन्तजन्मसञ्चीर्णपुण्यफलभूतमभूतपूर्वम् ।
सानन्दमिन्दुशकलाकलितावतंसपादारविन्दमकरन्दमधुव्रतत्वम् ॥ ५२ ॥

सापायमन्यदिति मे मतिराविरासीत् तेन त्वदीयचरणाम्बुजभक्तिरेका ।
कामान्तकास्तु मम कामद कामयेऽहं कामारिचारुचरणार्चनसाधनानि ॥ ५३ ॥

न ब्रह्मलोकमपि वांछति मानसं मे वाणीमनोरमणतामपि किन्तु शम्भो ।
लिङ्गार्चने शिवनिवेदितभोजनेऽपि वांछां करोति तदिदं वरमद्य देहि ॥ ५४ ॥

वैकुण्ठवासमपि नेच्छति मानसं मे शम्भो रमारमणतामपि किन्तु भक्तिम् ।
वांछत्यपारविभवैः शिवलिङ्गपूजां कर्तुं प्रदोषसमयेषु विशेषतस्तु ॥ ५५ ॥

न स्वर्गलोकमभिवांछति मानसं मे स्वर्गाधिपत्यमपि चारुशशांकमौले ।
प्राणप्रयाणसमयेऽपि शिवार्चनेच्छारूपं फलं समभिवांछति पुण्यपुञ्जैः ॥ ५६ ॥

जातं च चित्तमसकृद्गिरिश त्वया मे वीरेशलिङ्गविकटानिकटाटनेन ।
नीतं वयः शिवदिनेष्वशनं विहाय त्वल्लिङ्गपूजनरतेन न विस्मृतिस्ते ॥ ५७ ॥

देशान्तरस्थितगृहीतविलासिनी या तत्सङ्गमेऽपि न रतिर्मम यौवनेऽपि ।

तत् किं त्वया न विदितं गिरिशार्धजाने जाने शिवान्यमनिशं शिवपूजनेन ॥

बाणपुष्पजालमसकृद्रुचिरं चिरेण कालेन दत्तमपि तुभ्यमपि त्वयापि ।
तत्तद्गृहीतमसकृत् तव विस्मृतिः का काकोदराभरण मां स्मर मां स्मराशु ॥

धुत्तूरपुष्पनवबिल्वदलार्कपुष्पगङ्गाजलातिसितभूतिकणादिभिस्त्वम् ।
नाराधितोऽसि किमुमारमणातिभक्त्या तद्विस्मृतं कथमपि स्मर विश्वनाथ ॥ ६० ॥

एकैकबिल्वनवकोमलपल्लवेन लिङ्गे प्रदोषसमये तव वीरनाथ ।
दत्तेन तेन न चतुर्दशलोकलोकवन्द्यत्वमप्यफलमल्पफलं तदीश ॥ ६१ ॥

गङ्गातरङ्गविमलानिलशीतलेन तोयेन या शिरसि ते रचिता सुधारा ।
सा विस्मृता कथमुमारमणाद्य तस्याः किं वा फलं न सुरगौरिव सा प्रवृत्ता ॥ ६२ ॥

विश्वासबीजविलयाय कथं प्रवृत्तिः तत्तत्फलार्पणसमर्थकदर्थनेयम् ।
सह्या कथं मम तवापि न मामकत्वं अद्यापि ते मयि किमत्र वदामि शम्भो ॥ ६३ ॥

यद्यस्ति तानि परलोकफलानि तेषां नाद्याधुना फलमिति भ्रम एव सोऽयम् ।
सर्वेप्सितार्थफलदानि शिवार्चनानि श्रौतानि तानि सफलानि सदापि शम्भो ॥ ६४ ॥

कृत्यं किमस्ति मरणोत्तरमौषधानां सञ्जीवनीफलमपि श्रुतमेव किं न ।
सा जीवनं जनयतीति निकृष्टवस्तु वस्तु प्रकृष्टमिदमीश शिवार्चनं हि ॥ ६५ ॥

आमुष्मिकान्यपि फलान्यमितानि शम्भो तावद्भवन्तु भगवन् अधुनापि तानि ।
संभावितानि न फलानि कथं बहूनि यैः कीर्तिरत्र बहुधा गिरिशप्रसादात् ॥ ६६ ॥

एतावदीश सहमान मया यदुक्तं तन्नापराध इति मामव दीनबन्धो ।
यो निष्ठुरं वदति कोपि शिशुः कुमारः तत्पालनाय जनकः खलु संप्रवृत्तः ॥ ६७ ॥

स्नेहस्तवास्ति मयि सन्ततमित्यवैमि तेनैव जीवनमपीश ससन्ततेर्मे ।
दूरीकुरु प्रतिभवेऽपि भयानि शम्भो त्वय्यस्तु भक्तिरनिशं मुहुरिन्दुमौले ॥ ६८ ॥

अद्यप्रभृत्यमितपातकराशिभीतिर्नास्तीति मे हर विभात्यनुवारमस्य ।
कल्याणराशिरुपपन्न इति स्मरामि सम्पत्समूहसहितोऽपि पदे पदे मे ॥ ६९ ॥

इति प्रसाद्य गौरीशं प्रणम्य च पुनः पुनः । नृत्यं कार्यं महेशस्य शिवनामपुरःसरम् ॥ ७० ॥

पुनः प्रणम्य गौरीशं प्रक्षाल्य शिवमन्दिरम् । कृत्वा पूजां यथाशक्ति पूजनं विनिवेदयेत् ॥

होमश्च वैश्वदेवश्च शिवनैवेद्यशेषतः। कर्तव्यः पावके शैवैः सघृतेन घृतेन वा ॥ ७२ ॥
भवाद्यैर्देवशब्दान्तैः स्वाहान्तैर्जुहुयात् ततः। पत्नीशब्दोत्तरैरेव स्वाहान्तैर्जुहुयात् पुनः ॥ ७३ ॥
पश्चादाहुतिदानस्य पितृभ्योऽपि स्वधाऽस्त्विति। तैरेवं तर्पणं कार्यं होमात् पूर्वं विशेषतः ॥
होमोत्तरं वा कर्तव्यं स स्यात् कालद्वये यतः। ततः शङ्करनैवेद्यभोजनं शांभवैः सह ॥ ७५ ॥
ततः शिवकथालापैः निशा नेयाऽपि काचन। एवं नित्यमिदं कार्यं सायंकाले शिवार्चनम् ॥
[1] तस्य पुण्यफलं वक्तुं ब्रह्मणापि न शक्यते। इदं व्रतं ब्राह्मणानां शांभवानां विशेषतः ॥
एतद्व्रतसमं पुण्यं नास्ति न श्रूयतेऽपि च। ब्रह्मावर्ते पुरा कश्चित् राजाऽभूत् चक्रपालकः ॥७८॥
तस्यैश्वर्यस्य नान्तोऽस्ति तेन पुण्यं कृतं पुरा। तं द्रष्टुमागतो व्यासः तमाह नृपसत्तमः ॥७९॥
संपूज्य सादरं भक्त्या शिवभक्तिपरायणम् ॥ ८० ॥

राजा —

तत्वज्ञ तत्वविच्छ्रेष्ठ संसारक्लेशनाशकम्। उपायं वद मे येन न संसारभयं मुने ॥ ८१ ॥

व्यासः —

साधु पृष्टं त्वया राजन् धर्मेष्वास्था नृणामिह। दुर्लभा सा यतो लोके प्रायः संसारिणो जनाः ॥
संसाररतचित्तानां कुतः स्याद् धर्मवासना। धर्मवासनया लोके विरक्तो जायते नरः ॥ ८३ ॥
अविरक्तस्य धर्मेषु वासना यदि जायते। क्षणार्धेन विनष्टा सा न पुनर्जायते खलु ॥ ८४ ॥
सन्तता धर्मबुद्धिश्चेत् मनुष्याणां विशेषतः। तयैव मुक्तः संसारादसारादद्य सागरात् ॥ ८५ ॥
धर्माश्च विविधाः सन्ति सन्तु तैरमितैरपि। न फलं धर्मधर्मेण विना धर्मेण केवलम् ॥ ८६ ॥

राजा —

श्रुतमद्येदमाश्चर्यं त्वन्मुखादेव केवलम्। धर्मधर्मः क्व वा शास्त्रे सा वार्ता न श्रुता खलु ॥८७॥

व्यासः —

धर्मधर्मपरिज्ञानं लोके खल्वतिदुर्लभम्। धर्मधर्मप्रवृत्तिश्च लोकानां नोपजायते ॥ ८८ ॥
धर्मोत्तमो धर्मधर्मः तद्धर्मावगमो भुवि। शङ्करस्यास्ति तद्ज्ञानं अन्येषां तु न सर्वथा ॥ ८९ ॥
धर्मधर्म इति ज्ञातो धर्मेषु शिवपूजनम्। देवदेवो महादेवो यथा सर्वामरेष्वपि ॥ ९० ॥
देवत्वेन महादेवो नोच्यते तुल्यता यतः। परन्तु देवदेवत्वव्यवहारो महेश्वरे ॥ ९१ ॥

1 'यो नित्यं प्रयतः कुर्यात् सायंकाले शिवार्चनम' इत्यर्धमधिकं C कोशे। तदपेक्ष्यत एव।

तस्माद्धर्मोत्तमत्वेन शिवधर्मः शिवार्चनम् । धर्मधर्म इति ज्ञातं तस्मिन् सति न दुर्लभम् ॥ ९२ ॥
अधुनापि श्रुतो धर्मो धर्मधर्म इति त्वया । शिवार्चनपरो धर्मो धर्मधर्मो न सर्वथा ॥ ९३ ॥
धर्मधर्मत्वमेतस्य शिवलिङ्गार्चनस्य तु । धर्मान्तरापेक्षया स्यात् तदपेक्षा तु तस्य न ॥ ९४ ॥
यागदानादयो धर्माः शिवलिङ्गार्चनात्मकम् । धर्ममाश्रित्य धर्मत्वं प्राप्नुवन्ति हि सर्वथा ॥
तथा च धर्मधर्मोऽयं धर्मसम्राडिति श्रुतः । अतः शिवार्चनं श्रेष्ठं धर्माणामिति गीयते ॥ ९६ ॥
अनन्तजन्मसंचीर्णैः यागाद्यैः पूतमानसाः । शिवार्चने प्रवर्तन्ते तेन मुक्तिरवाप्यते ॥ ९७ ॥
प्राप्यते दुर्लभा लोके भक्तिरव्यभिचारिणी । कृत्वा शिवार्चनं मुक्तो भवत्येव हि सर्वथा॥ ९८ ॥
प्रातर्मध्याह्नसमये विशेषाद्गिरिशार्चनम् । कर्तव्यं मध्यकालेऽपि सन्ततं च शिवार्चनम् ॥ ९९ ॥

राजा —

मुने सन्ततपूजायाः कः प्रकारः कथं सदा । सा पूजा कालसाध्या हि कथं कार्या वदाधुना ॥

व्यासः —

अविच्छिन्ना नीरधारा शिवलिङ्गे मनोहरा । कल्पनीया सैव धारा शिवसन्ततपूजनम् ॥ १०१ ॥
शिवसन्ततपूजायाः फलमप्युच्यते शृणु । यस्य श्रवणमात्रेण तस्य भक्तिः प्रजायते ॥ १०२ ॥
जलधारा मुक्तिधारा पापधारापहारिणी । धारारूपाणि पापानि नश्यन्ति जलधारया ॥ १०३ ॥
अविच्छिन्नानि पापानि जलाविच्छिन्नधारया । विनश्यन्तीति सा लिङ्गे कल्पनीया सदा द्विजैः ॥
धर्मकाले विशेषेण जलधाराप्रकल्पनम् । शिवलिङ्गेषु कर्तव्यं तेन पापलयो भवेत् ॥ १०५ ॥
अतः पापलयोद्योगः कर्तव्यो नीरधारया । शोधितं नीरमादाय सुगन्धद्रव्यसंयुतम् ॥ १०६ ॥
पत्रैः फलैर्वा पुष्पैर्वा नवदूर्वाङ्कुरैरपि । जलैरपि प्रकुर्वन्ति मुनयः शिवपूजनम् ॥ १०७ ॥
जलं दत्वा महेशाय यत्फलं समवाप्यते । तत्फलं केन वा सम्यग्वर्णनीयं नृपोत्तम ॥ १०८ ॥
शिवार्चनेन सिद्ध्यन्ति सर्वे कामाः श्रुतिश्रुताः । अनायासेन मर्त्यानां शुभदं शिवपूजनम् ॥
अपारकरुणासारसागरः शङ्करः परः । भक्त्या दत्तं फलं पत्रं गृह्णाति शुभदायकः ॥ ११० ॥
तस्य संपूर्णकामस्य नित्यानन्दस्य वस्तुतः । तोषो जलार्पणेनापि जायते तत् किलाद्भुतम् ॥
प्रच्छिन्नान्यपि शुष्काणि बिल्वपत्राणि शङ्करः । गृह्णाति विपुलं भाग्यं दत्वा भक्ताय सादरम् ॥
शिवस्य करुणासिन्धोर्महिमापि महान् खलु । स्वभक्तदयया गृह्णात्यम्बु पत्रं च किञ्चन ॥ ११३ ॥
नाराधयन्ति सहसा करुणासागरं हरम् । न तरन्त्यपि संसारसागरं पातकाकरम् ॥ ११४ ॥

भक्त्या देवशिरोमणिः सुरमणिर्द्वित्राणि पत्राणि वा
नीरं वा कुसुमं फलं मणिमये लिङ्गेऽन्यलिङ्गेऽपि वा ।
दत्तं भस्मविभूषितेन कृपया गृह्णात्यनुग्राहको
दातृत्वव्यसनात् प्रयच्छति महत् भाग्यं भवानीपतिः ॥ ११५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे पूर्वार्धे प्रदोषपूजासन्ततजलधारापूजाविधितत्फलकथनं नाम एकोनपञ्चाशोऽध्यायः ॥

—o—

## अथ पञ्चाशोऽध्यायः ।

—*—

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा प्रहृष्टः स नृपोत्तमः । वाग्भिरभ्यर्च्य तं व्यासं पुनराह विचक्षणः ॥ १ ॥
भगवन् ब्रूहि तत्वज्ञ धर्मधर्माधिकारिणम् । तत्फलं च विशेषेण तदङ्गान्यपि सादरम् ॥ २ ॥

व्यासः —

ब्राह्मणाः क्षत्रिया वैश्याः शूद्रा ये चापि संकराः । तत्तदङ्गप्रभेदेन सर्वे तत्राधिकारिणः ॥ ३ ॥
द्विजानां वैदिकैर्मन्त्रैः शिवलिङ्गसमर्चनम् । अन्येषां तान्त्रिकैर्मन्त्रैः तत्कार्यं सर्वथा नृप ॥ ४ ॥
स्त्रीणां च पुरुषाणां च शिवलिङ्गसमर्चनम् । अवश्यमेव कर्तव्यं तत् त्याज्यं नैव सर्वथा ॥ ५ ॥
शिवलिङ्गार्चनं त्यक्त्वा यः पिबेन्नीरमेव वा । स रेतःपानजं पापं प्राप्नोत्येव न संशयः ॥ ६ ॥
यस्तु लिङ्गार्चनं त्यक्त्वा भोक्तुमिच्छति मानवः । स मलाशनजं पापं प्राप्नोत्येव न संशयः ॥
सात्यकिर्नाम राजाभूत् समस्ते क्षितिमण्डले । स राज्यपालनोद्युक्तो न भवत्येव सर्वथा ॥ ८ ॥
तस्य दाराश्च बहवो रूपलावण्यसंयुताः । स तैः सहानिशं भोगान् भुङ्क्ते दुर्मन्त्रिसंयुतः ॥ ९ ॥
तरुणीतनुसङ्गेन भोजनेन च नीयते । अहोरात्रं च तस्यास्ति कृत्यमन्यत् स्वभावतः ॥ १० ॥
नारीषु तरुणीष्वेव रतिस्तस्य निरन्तरम् । निद्राकालेऽपि तरुणी त्यक्ता नैव दुरात्मना ॥ ११ ॥
एवं संवसतस्तस्य नारी तस्यैव काचन । उद्यानवनमासाद्य तत्र लिङ्गं ददर्श सा ॥ १२ ॥
तत्रैकः शांभवो दृष्टः शिवपूजनतत्परः । भस्मोद्धूलितसर्वाङ्गस्त्रिपुण्ड्राङ्कितमस्तकः ॥ १३ ॥
रुद्राक्षमालाभरणो युवा सुन्दरविग्रहः । तं दृष्ट्वा सहसा नारी कोऽसि कस्मादुपागतः ॥ १४ ॥

किं कुलं कः पिता का वा तव माता नरोत्तम । परिग्रहोऽस्ति किं वा ते नारी कुत्र तवाधुना ॥
इति तद्वचनं श्रुत्वा दृष्ट्वा तामतिसुन्दरीम् । ईषन्नम्राननः प्राह विनयेनातिविस्मितः ॥ १६ ॥
अहं राजकुलोत्पन्नो माता मे वीरसूः पिता । शूरसेन इति ख्यातो भार्या कमललोचना ॥ १७ ॥
भाग्यं च महदेवास्ति गजाश्वरथसङ्कुलम् । गवां च कोटयः सन्ति रत्नागाराश्च कोटिशः ॥
सुवर्णस्य च नान्तोऽस्ति मन्दिरेषु तदेव मे । मन्दिराणि सुवर्णानां रत्नानामपि कानिचित् ॥
इति तद्वचनं श्रुत्वा तमुवाच नृपाङ्गना । किमेवमागतोऽत्रापि किमेकाकी भवानिह ॥ २० ॥
परराष्ट्रे किमागत्य स्वबन्धुजनवर्जितः । भृत्यवर्गैश्च रहितः तपस्वी वाधितिष्ठसि ॥ २१ ॥
वैराग्यं तव किंबीजं महदैश्वर्यसंयुतः । भुङ्क्ष्व भोगान् यथा कामं तरुणीं रमणीं व्रज ॥ २२ ॥
अनित्यं यौवनं नूनं वार्धके समुपागते । कथं ते तरुणीयोगः तारुण्यधनसंक्षये ॥ २३ ॥
किं च सौन्दर्यमेतावत् यौवनं चातिशोभनम् । दुर्लभं मदनस्येदं अपरं रूपमुत्तमम् ॥ २४ ॥
यद्वा मदन एवासि सौन्दर्यमिदमीदृशम् । दुर्लभं भूतले मन्ये कान्तिश्चात्युत्तमा तव ॥ २५ ॥
सौन्दर्यं यौवनं कान्तिरुन्मादनिधिरेव हि । प्रत्येकमेव मिलिताः त्रयो लोकोत्तराः खलु ॥ २६ ॥
केन वा सङ्गमो जातः तव राजकुलोद्भव । वञ्चितोऽसि न सन्देहशिक्षकस्ते न ते खलु ॥ २७ ॥
पित्रा विरोधः किं जातस्तव मात्रा वदाधुना । यद्वा कलत्रकलहः प्रवृत्तस्तव वेश्मनि ॥ २८ ॥
तत्र चेत् कलहो वृत्तः तत्त्यागं कुरु किं ततः । मया तवात्र वसतः सौभाग्यं च भविष्यति ॥
नारीरत्नमिति ख्यातं मम नाम नृपोत्तम । मया सहात्र सङ्गेन दिनानि नय सादरम् ॥ ३० ॥
त्वदधीनमिदं राज्यं प्राज्यमद्य भविष्यति । मद्भर्त्रा सह सङ्गोऽपि मया त्यक्तो नृपोत्तम ॥ ३१ ॥
मत्परिग्रहमात्रेण तव सौख्यं भविष्यति । विषदानेन भर्तापि हन्तव्यो निशि सत्वरम् ॥ ३२ ॥
एतद्राष्ट्राधिपत्यं च देयं तुभ्यमसंशयम् । चन्द्रमण्डलसंकाशाः शय्याः सन्ति मनोहराः ॥
औषधं च गृहे सिद्धं मदनोन्मादसाधनम् । भक्ष्यभोज्यादयः सर्वे पदार्थाः सन्ति कोटिशः ॥
रत्नमन्दिरमेवास्ति शयनार्थमनुत्तमम् । रत्नजालसमाकीर्णं कस्तूरीगन्धवेष्टितम् ॥ ३५ ॥
दिव्यैः परिमलद्रव्यैरपरैरपि वेष्टितम् । दासीजनाश्च बहवो दासाः सन्त्येव कोटिशः ॥ ३६ ॥
अपेक्षितं यद्यदेव तत् सर्वमपि दीयते । अहमेव त्वदीयास्मि तव किं दुर्लभं नृप ॥ ३७ ॥
व्याघ्रीदुग्धं गृहे सिद्धं अपारं तस्य सेवनात् । सर्वदा रमणीयोगे श्रमस्ते न भविष्यति ॥ ३८ ॥
कुसुमान्यपि चित्राणि कोटिशः सन्ति मे वने । इदं वनं ममैवात्र पटमण्टपमण्डितम् ॥ ३९ ॥

दुकूलशय्या रचिता पुष्पशय्या समन्विता । रसद्रव्याणि दिव्यानि सन्त्यत्र परमण्टपे ॥ ४० ॥
अतः परं विलम्बस्य न कार्यमपि दृश्यते । न चात्र भयलेशोऽपि मया सह समागमे ॥ ४१ ॥
पुरुषाणां प्रवेशोऽत्र नास्ति सर्वात्मना नृप । नारीवरगणैरेतदुद्यानं परिवेष्टितम् ॥ ४२ ॥
दास्यो रंभानिभाः सन्ति कोटिशो मम भूपते । दास्यं तास्ते करिष्यन्ति काले काले यथोचितम् ॥
मां पश्य सादरं राजन् उन्नमय्य मुखं नृप । अवाङ्मुखत्वं संत्यज्य रसिकत्वं भजाधुना ॥ ४४ ॥
अतिसौन्दर्यसंपन्नां इन्दिराप्यादरेण माम् । रंभादिभिः समागत्य पश्यन्त्येव मुहुर्मुहुः ॥ ४५ ॥
देवानामपि मय्येव मनः प्रायो नृपोत्तम । दृष्ट्वा मां पुरुषः को वा मदधीनो न जायते ॥
स्त्रीमात्रे पुरुषाणां तु प्रीतिस्तिष्ठति सर्वथा । नारीरत्ने मयि प्रीतिः कथं वा न भविष्यति ॥४७॥
यौवनेनाङ्गपुष्टिर्या मयि सा नृपसत्तम । सौन्दर्यसंयुता पुंसां विनोदाय भविष्यति ॥ ४८ ॥
दृष्टाऽहं सदृष्टेन त्वयापि नृपनन्दन । नित्यं मद्दर्शनाकांक्षां कुर्वन्त्येवामरा अपि ॥ ४९ ॥
नूनं नपुंसकस्यापि पुंस्त्वं मद्दर्शनाद्भवेत् । पश्य पश्य मदङ्गानि सुन्दराण्यतिसुन्दर ॥ ५० ॥
सौन्दर्यधनसंपन्नस्त्वमहं तद्धनं परम् । दृष्ट्वा त्वदीयतां प्राप्ता तद्धनं दुर्लभं यतः ॥ ५१ ॥
नारीणां धनलोभेन प्रवृत्तिः पुरुषेष्वतः । इदं धनं परित्याज्यं न भवत्येव मे नृप ॥ ५२ ॥
कुरूपेष्वपि नारीणां हिरण्याय प्रवर्तनम् । रूपवन्तं परित्यज्य कुत्सितानां स्वभावतः ॥ ५३ ॥
परमैश्वर्यसंपन्नाः स्वर्णागाराश्च कोटिशः । मम स्वर्णेषु रत्नेषु नाकांक्षा सर्वथा नृप ॥ ५४ ॥
त्वदीयमतिसौन्दर्यं धनानां च धनं नृप । इदमाकांक्षितं नित्यं त्यक्तमेव न शक्यते ॥ ५५ ॥
त्वन्मुखालोकनेनैव दूरान्मदनमोहिता । अतः परं सन्निधाने कथं त्याज्यो भवान्मया ॥ ५६ ॥
यत्र यत्रैव गन्तव्यं त्वया तत्र नृपोत्तम । आगन्तव्यं न सन्देहः किं त्याज्योऽस्ति भवान् मया ॥
इति तद्वचनं श्रुत्वा भयेनानतकन्धरः । तामाह नृपतिर्मन्दं स्मरन्नेव महेश्वरम् ॥ ५८ ॥
किमेवं मय्यपि रतिरतिकुत्सितविग्रहे । संसारतापसन्तप्ते दुःखिते तेन सन्ततम् ॥ ५९ ॥
तिष्ठन्ति सदने नार्यो यौवनोन्मादवेपिताः । सौन्दर्यधारारूपास्ताः परित्यक्ताः सहस्रशः ॥
ऐश्वर्यं च परित्यज्य सर्वथापि विनश्वरम् । विनश्वरस्य देहस्य नापेक्षा क्रियते मया ॥ ६१ ॥
किमनेन शरीरेण यौवनेनापि किं मम । अविलम्बेन देहस्य पतनं च भविष्यति ॥ ६२ ॥
सौन्दर्ये च शरीरस्य किमेतस्य विशेषतः । मांसास्थिमज्जारूपस्य सौन्दर्यं कुत्र दृश्यते ॥ ६३ ॥
विनश्वरे शरीरेऽस्मिन् प्रीतिः कार्या न सर्वथा । तन्नाशे खलु दुःखानि भविष्यन्ति न संशयः ॥
अभाग्यानां शरीरेषु भवत्यास्था कदाचन । तया दुःखं बहुप्राप्यं मरणोत्तरमक्षतम् ॥ ६५ ॥

मूत्रेण विष्टया पूर्णं उदरं रेतसा खलु । क्रिमिभिश्च समाकीर्णं दुर्गन्धेन समावृतम् ॥ ६६ ॥
मुखं तु श्लेष्मनिलयं लालाजाल समाकुलम् । नासिकाकर्णनयनैः कुत्सितं निःसरत्यपि ॥ ६७ ॥
पिहितं चर्मणा सर्वं मलादिकमतः कथम् । बुद्धिर्मलपुटे देहे सुन्दरत्वं न कुत्सिते ॥ ६८ ॥
अमेध्यमध्यसंजातः कृमिः किमतिसुन्दरः । अमेध्येन सहैतस्य शरीरस्य स्थितिः खलु ॥ ६९ ॥
गर्भदुःखानि भुक्त्वाति बहूनि विविधान्यपि । गर्भक्रिमिसमाकीर्णं शरीरमभवत् खलु ॥ ७० ॥
शरीरं रेतसा जातं योनिमध्यगतेन हि । मूत्रगन्धसमाकीर्णो योनिदेशोऽपि वस्तुतः ॥ ७१ ॥
अंकुरो रेतसा सिक्तो मूत्रेण परिवेष्टितः । मलैश्चर्मपिनद्धोऽपि स किं भवति सुन्दरः ॥ ७२ ॥
पिचुमन्दाङ्कुरो जातः पारिजाताङ्कुरः कथम् । अतः शरीरे सौन्दर्यं न केनाप्यवधारितम् ॥
दृश्यन्ते बहवो लोके तरुणा मरणोन्मुखाः । मरणे सति सौन्दर्यं तारुण्यं च क्व तद्गतम् ॥ ७४ ॥
अहो महदिदं कष्टं शिष्टानामपि जायते । बुद्धिर्मांसविकारेषु शरीरेषु विशेषतः ॥ ७५ ॥
अभाग्यस्य परं तावत् नारीसंगे रतिर्भवेत् । कुत्सितत्वं न जानन्ति शरीरस्यापि मोहतः ॥ ७६ ॥
मलमांस्थिमज्जानां ग्रन्थिषु प्रीतिरस्ति चेत् । तद्रूपेषु शरीरेषु प्रीतिर्भवतु कस्यचित् ॥ ७७ ॥
इतस्त्वया तु गन्तव्यं त्यज पापमतिं तथा । यमलोकभयं प्रायः त्वयाऽप्यद्याऽपि न श्रुतम् ॥
यद्यद्य मदनोद्रेकात् परदाराङ्गसङ्गमः । तदा पातो भवत्येव कुम्भीपाके विशेषतः ॥ ७९ ॥
परदारानन् दृष्ट्वा मोहात् पापरतः सकृत् । अघोरयातनां प्राप्य कल्पान्ते मुच्यते न वा ॥ ८० ॥
दुराचाराः परं नारीं परस्य परितः परम् । पश्यन्ति ते प्रपश्यन्ति यातनां प्रविशन्ति च ॥ ८१ ॥
मलमूत्रादिदुर्गन्धसमूहपरिवेष्टिते । योनिदेशे दुराचारा रमन्ते पामराः परम् ॥ ८२ ॥
अङ्गानि यानि ते तुङ्गान्यनङ्गपरिपीडिते । तानि मांसपुटान्येव तेषु का प्रीतिरद्य मे ॥ ८३ ॥
योनिः सूकरनारीणां यथा भवति कुत्सिता । तथैव नरनारीणां योनिरप्यतिकुत्सिता ॥ ८४ ॥
एवं सत्यपि देहेषु विशेषः कश्चिदस्ति हि । तेन तावद्विशेषेण ग्राह्याग्राह्यत्वधीरपि ॥ ८५ ॥
अन्तर्बहिश्च दुष्टास्ते सूकरादिकविग्रहाः । अस्पृश्या एव ते तस्मात् ते तावदतिकुत्सिताः ॥
मनुष्याणां शरीराणि कुत्सितान्यन्तरित्यतः । बहिस्त्वकुत्सितान्येव विशेषस्तावता खलु ॥ ८७ ॥
मानुषेष्वपि देहेषु द्विजदेहः परं शुचिः । तेषु ब्राह्मणदेहस्तु शुचिरित्यवगम्यताम् ॥ ८८ ॥
तेषु ब्राह्मणदेहेषु पवित्रतममेव तत् । शरीरं शांभवस्येति शांभवः खलु दुर्लभः ॥ ८९ ॥
शांभवस्य ब्राह्मणस्य शरीरमपि भस्मना । त्रिपुण्ड्रेण च रुद्राक्षैः पवित्रमिति कीर्तितम् ॥ ९० ॥
भूरिपुण्यप्रभावेन ब्राह्मणो जायते नरः । शांभवो जायते तत्राप्यपारैः पुण्यसागरैः ॥ ९१ ॥

शांभवब्राह्मणाङ्गेन सङ्गो मङ्गलदायकः। ममाभवत् तेन बुद्धिः संसारे न प्रजायते ॥ ९२ ॥
राज्यं प्राज्यमपि त्यक्तं हारा दाराश्च कोटिशः। न तत्सङ्गात् सुखं तेन न त्याज्यमिति मे मतिः ॥
मरणे सति राज्यानि कलत्राणि धनानि च। नायान्ति शिवधर्मस्तु सहायास्याति सत्वरम् ॥
पश्चादग्रेऽपि मध्येऽपि शिवधर्मः परं स्वयम्। आवृत्य याति सहसा न जहाति स शांभवम् ॥
संपत्काले यथा पुत्रपौत्रमित्रादयः सदा। तिष्ठन्त्यावृत्य तं तद्वत् धर्मोऽप्यावृत्य तिष्ठति ॥ ९६ ॥
न कलत्रं समायाति मरणे समुपस्थिते। न पुत्रो नापि पौत्रो वा न मित्राद्याश्च बान्धवाः ॥
न चैश्वर्यं समायाति मरणे समुपस्थिते। रथाश्च गजदासाद्याः समायान्ति न सर्वथा ॥ ९८ ॥
यावज्जीवार्जितं वित्तं क्वास्तीति परिपृच्छति। पत्नी पुत्रोऽपि बहुधा मरणे समुपस्थिते ॥ ९९ ॥
अनेन यौवनं नीतं भुक्ता भोगाश्च कोटिशः। अनेन सह मर्तव्यं इति धीःस्त्री न ध्रुवा ॥
प्रौढः पुत्रो यदि तदा म्रियतामयमद्य मे। स्वातन्त्र्यं धनधान्येषु स्यादित्येवावधारयेत् ॥ १०१ ॥
नारी तु मरणे पुंसः क्व मे सुरतमित्यपि। रुदत्ययं कां गतिं वा यास्यतीति न सर्वथा ॥
रक्षणं कृतये तेन जीवता मरणोत्तरम्। रक्षकः कोऽपि नास्तीति रुदन्ति शिशवः परम् ॥ १०३ ॥
भृत्याश्च रक्षकाभावात् रुदन्ति सहसा गृहे। दास्योऽपि बन्धुवर्गाश्च तथैव प्रतिवेशिनः ॥ १०४ ॥
राष्ट्रनिर्वाहकाभावात् राजापि रुदति स्वयम्। प्रजाश्च पालकाभावाद्रुदन्ति मरणोत्तरम् ॥ १०५ ॥
परन्तु तेषु कस्यापि मरणोत्तरमस्य का। गतिरित्यपि धीर्वेति तेष्वास्था न प्रजायते ॥ १०६ ॥
धनार्जनं च पापेन कृतं गृह्णन्ति ते सुताः। न तस्य परलोकार्थं यत्नं कुर्वन्ति सर्वथा ॥ १०७ ॥
न यमाद्रक्षकः कोऽपि लोके मम रिपुं विना। अतो यमान्तको नित्यं पूजनीयः प्रयत्नतः ॥
कालान्तकः परो बन्धुः दयासिन्धुश्च केवलम्। स्मृतोऽपि यातनाभीतिं हरत्येव न संशयः ॥
भ्रमन्ति यौवनोन्मादात् न जानन्ति महेश्वरम्। नार्चयन्ति न पश्यन्ति न स्मरन्ति पुनः पुनः ॥
नृणां मरणकालेऽपि स्मरणं शूलपाणिनः। किं न निर्वाणदं तद्वत् परमानन्द एव हि ॥ १११ ॥
नरस्तु मरणे प्राप्ते तरुणीमप्यनुक्षणम्। पश्यत्यतीव पापिष्ठो न पश्यति महेश्वरम् ॥ ११२ ॥
बिल्वपत्रार्चितं लिङ्गं दृष्ट्वाऽपि मरणक्षणे। मोक्षाङ्गनाङ्गसङ्गेन परमानन्दमाप्नुयात् ॥ ११३ ॥
प्राणोत्क्रमणवेलापि याति कोलाहलैः परम्। शिवनामध्वनिस्तत्र न श्रुतो न कृतोऽपि सः ॥
व्यर्थक्लेशकरैः कालो नीयते परपीडनैः। मुखोरस्ताडनैस्तैस्तु परलोको न तस्य तु ॥ ११५ ॥
न श्राव्यते शिवकथा श्रावितं शिवनाम च। तनुर्न भस्मना लिप्ता नापि बिल्वान्विता कृता ॥
शिवाभिषेकपानीयं न मुखे दीयते तदा। न मध्येऽपि तनुर्दत्ता हरस्य वृषभस्य च ॥ ११७ ॥

विभूत्या रुद्राक्षैरपि मरणकाले परिवृता तनुस्त्यक्ता पुण्यैर्हरवृषभमध्ये यदि तदा।
शिवः स्वाङ्कारूढं तदनु कुरुते तं दृढतरं समालिङ्ग्यायं मे तनुरिति मुहुः स्तौति शिवम् ॥

प्राज्ये राज्येऽप्यपेक्षा नवनवतरुणीसङ्गमे चन्दनादौ
रत्नादौ किन्त्वपेक्षा मम भवति महादेवलिङ्गार्चनेषु ।
प्राणस्याशु प्रयाणे शिव शिव हर भो श्रीमहादेव शंभो
पाहीति स्यादवश्यं मुहुरपि शिवदा नामपीयूषवल्ली ॥ ११९ ॥

विश्वेश श्रीमहेश त्रिदशवर महादेव शंभो त्रिनेत्र
श्रीकण्ठाम्बासहाय त्रिपुरहर महारुद्र कालान्तकेति ।
नामान्येतानि शंभो मम तव कृपया प्राणनिर्याणकाले
प्राप्ते जिह्वाङ्गणाग्रे शिव शिव शिव इत्येव नृत्यन्तु भूयः ॥ १२० ॥

बिल्वाद्यैर्लिङ्गपूजाविरचनचतुरोऽप्यस्तु हस्तो नमस्ते
मूर्धा तावत् करोतु त्रिनयन नयने प्रेक्षणाय प्रवृत्ते ।
लिङ्गस्याभ्यर्चितस्य स्मरहरचरणाराधने मानसं मे
श्रोत्रे स्यातां महेश श्रवणसुखकरे प्राणनिर्याणकाले ॥ १२१ ॥

प्रायश्चित्तानि शंभो शिवपदकमलध्यानमेवेति मन्ये
प्राप्ते प्राणप्रयाणे भसितसिततनोः व्याप्तरुद्राक्षकान्तेः ।
लिङ्गं बिल्वार्पणं च स्मरहर शिव इत्यक्षरोच्चारणं च
प्रत्येकं वा विमुक्त्यै सकृदपि शिवयोः पादपद्मे शपामि ॥ १२२ ॥

कल्याणप्रापकाणां परमिदमिति ज्ञातमर्धेन्दुमौले
त्वत्पादाम्भोजमात्रस्मरणमिदमहं जीवनं रक्षकं मे ।
मन्ये धन्योस्मि तेन त्रिपुरहर भवत्पादपद्मावलम्बं
मत्वा लम्बोदरान्यं शिव शिव शिव न स्कन्दभिन्नं च न त्वाम् ॥

इति श्रीशिवरहस्ये तृतीयांशे हराख्ये पूर्वार्धे जनकयाज्ञवल्क्यसंवादे शिवपूजामहिमानुवर्णने राजस्त्री राजपुत्रसंवादे शरीरनिन्दामरणावसर शिवध्यानप्रार्थनादिवर्णनं नाम पञ्चाशोऽध्यायः ॥

॥ तृतीयांशे पूर्वार्धः समाप्तः ॥

शिव शिव शिव

---

यो रुद्राक्षविभूतिभूषितवपुर्विप्रः सदा हस्तकं चासक्तं शिवपूजने हि तनुते ध्याने मनः शस्तकम् ।
दादाख्यः सुगृणन् शिवश्च भटगोस्वामीजटामस्तकं तस्यैवामृतदायकं शिवरहस्याख्यं त्विदं पुस्तकम् ॥
अयं श्लोकः ग्रन्थमातृका स्वामिनः परिचायकः ।

॥ श्रीः ॥

# ॥ श्रीशिवरहस्यम् ॥

## हराख्यः तृतीयोंऽशः ।

### उत्तरार्धः ।

#### प्रथमोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा सा राज्ञी भयविह्वला । वैराग्यं परमं प्राप्य तमुवाच नृपोत्तमम् ॥ १ ॥

राज्ञी —

न शान्तिमेति सहसा घोरा संसारवासना । कथं वा तस्य शान्तिः स्यादुपायः कथ्यतामतः ॥२॥

अपारघोरसंसारवासनाच्युतिसाधनम् । शिवार्चनमिति ज्ञातं कर्तव्यं तत्कथं वद ॥ ३ ॥

त्वया तनोः कुत्सितत्वं वस्तुतस्तु निरूपितम् । तत्कुत्सितं न सन्देहो दृश्यते च तथा खलु ॥

अस्य देहस्य सौभाग्यमिदमेतावदेव हि । शिवार्चनाय युक्तत्वं शरीरस्यावधारितम् ॥ ५ ॥

अतः परं प्रयत्नेन शिवलिङ्गार्चने यथा । देहस्यास्योपयोगः स्यात् तथा कार्यं मया नृप ॥ ६ ॥

शिवार्चनेन सफलं जीवितं च यथा मम । तथैव यत्नः कर्तव्यः सर्वथापि मया नृप ॥ ७ ॥

आहारं वा परित्यज्य वयो नेयं शिवार्चनैः । श्रुत्वाप्यन्तकभीतिः सा सद्यो हृदयभेदिनी ॥८॥

यथा न गर्भवासः स्यात् गर्भक्लेशोऽपि सर्वथा । तथा प्रयत्नः कर्तव्यः शिवलिङ्गार्चनैर्मया ॥

शिवार्चनप्रकारं मे साधनान्यपि सत्वरम् । वद तावद्यथाशास्त्रं यत्फलं लिङ्गपूजनात् ॥ १० ॥

गुरुस्त्वमेव मे भूयः संसारभयमोचकः । अन्यो गुरुर्भवेत् कोवा शिवाचारप्रवर्तकात् ॥ ११ ॥

नृपः —

कालकालार्चनेनैव कालाद्भीतिर्विनश्यति । नान्यस्तन्नाशकोपायो दृश्यते क्वापि सर्वथा ॥१२॥

तवास्ति महदैश्वर्यं अनेन गुरुपूजनम् । ऐश्वर्यमेव सामग्री शङ्कराराधनस्य तु ॥ १३ ॥
यद्यपि श्रीमहादेवो जलेनाल्पेन वा [1] क्रमात् । मुक्तिदः स्यात् तथाप्येतदैश्वर्यं सफलं कथम् ॥
इदमस्थिरमैश्वर्यं वयोऽप्यायुस्तथा सति । उपयुक्तमिदं सर्वं स्यादत्राशु शिवार्चनम् ॥ १५ ॥
धिग्धिग् धिग्धिग् तदैश्वर्यं येन नाराधितः शिवः । सफलं तु तदैश्वर्यं येनैवाराधितः शिवः ॥
शिवपूजनमुत्कृष्टं सर्वसिद्धिप्रदायकम् । तदेव न कृतं तस्य जन्म तावन्निरर्थकम् ॥ १७ ॥
शिवप्रसादलब्धानि धनधान्यादिकान्यतः । तैरर्चनं महेशस्य कृत्वा मुक्तिमवाप्नुयात् ॥ १८ ॥
तदीयमेव दत्वापि तस्मै भाग्यमनुत्तमम् । प्राप्यमित्येव यत्नेन कर्तव्यं शिवपूजनम् ॥ १९ ॥
विना न पुण्यपुञ्जेन भक्तिर्मृत्युञ्जयार्चने । अतः पुण्यात्मना नित्यं कर्तव्यं शिवपूजनम् ॥२०॥
शिवार्चनेन विज्ञेयः पुण्यवानिति मानवः । तदभावेन विज्ञेयो महापातकवानिति ॥ २१ ॥
अतः स दूरतस्त्याज्यो यो नार्चयति शङ्करम् । तत्संयोगाभिलाषाद्यैर्मानवः पापवान् भवेत् ॥२२॥
येन केनापि रूपेण शरीरं प्राप्य मानवः । शिवार्चनपरो भूयात् स भूयः पुण्यवान् भवेत् ॥२३॥
शिवार्चनपरो मर्त्यः प्रणतः संस्तुतः स्मृतः । हरत्यघान्यनन्तानि घोराणि विविधान्यपि ॥२४॥
घोरपापवनस्यायं कुठारः शङ्करार्चकः । अतः सर्वप्रयत्नैश्च कर्तव्यं शिवपूजनम् ॥ २५ ॥
अतः परं त्वयोन्मादः परित्याज्यः प्रयत्नतः । शिवपूजां कुरु प्रीत्या तव मुक्तिर्भविष्यति ॥ २६ ॥
शरीरं शिवपूजायै यौवने दक्षमित्यतः । प्रयत्नेन महादेवं पूजयस्व यथोचितम् ॥ २७ ॥
स्नानं कुरु प्रयत्नेन शिवकुण्डे शिवोदके । उद्धूल्य भस्मनाङ्गानि त्रिपुण्ड्रं च प्रयत्नतः ॥ २८ ॥
शिरोललाटवक्षःसु स्कन्धे च मणिबन्धने । कूर्परे नाभिदेशेच पार्श्वयोर्गण्डमण्डले ॥ २९ ॥
ऊरुप्रदेशे गुल्फेच त्रिपुण्ड्रं धारयेन्मुहुः । रुद्राक्षधारणं कार्यं द्वात्रिंशत् कण्ठमालया ॥ ३० ॥
शिखायामेकमेव स्यात् द्विचत्वारिंशदुत्तमाः । रुद्राक्षाः शिरसा धार्याः कर्णयोर्द्वादश द्वयोः ॥
शतत्रयं तूपवीते बाह्वोः षोडश षोडश । चतुर्विंशति रुद्राक्षाः द्वयोस्तु मणिबन्धयोः ॥ ३२ ॥
अष्टोत्तरशतैरेव रुद्राक्षैर्जपमालिका । तया पञ्चाक्षरं जप्त्वा शैवः शिवमवाप्नुयात् ॥ ३३ ॥
त्रिभिराचमनं स्त्रीणां पुंसामिव यथाविधि । भवाद्यैर्नामभिर्यद्वा शिवपञ्चाक्षरेण वा ॥ ३४ ॥
पश्चात् कुशासने स्थित्वा यद्वा व्याघ्राजिनादिषु । उदङ्मुखः प्राङ्मुखो वा पूजयेद्गिरिजापतिम् ॥
पञ्चामृताभिषेकाद्यैः कर्पूरादिसमन्वितैः । जलैः फलोदकैरीशं आम्रादिकरसैरपि ॥ ३६ ॥

---

1 सकृत् C E कोशयोः ।

शुद्धोदकैः कवोष्णैर्वा शीतलैर्वा मनोहरैः । पश्चात् दुकूलवसनैः पूजयित्वा सदाशिवम् ॥ ३७ ॥
सुगन्धचन्दनेनापि पूजयेद्गिरिजापतिम् । बिल्वपत्रैरक्षतैश्च प्रफुल्लकुसुमैरपि ॥ ३८ ॥
मन्दारादिप्रसूनानां मालिकाभिः समर्चयेत् । पश्चाद्धूपय धूपैश्च दीपैः कर्पूरसंभवैः ॥ ३९ ॥
ओदनैराज्यसंयुक्तैः शाकसूपसमन्वितैः । परमान्नै र्घृतयुतैः शर्कराराशिसंयुतैः ॥ ४० ॥
लड्डुकैर्वटुकैराज्यैः अपूपैर्मण्डकादिभिः । भक्ष्यैर्लेह्येश्च चोष्यैश्च पेयैश्च विविधैरपि ॥ ४१ ॥
कदलीनारिकेलाद्यैः अपारैः फलमण्डलैः । इक्षुदण्डैश्च मण्डैश्च दधिक्षीररसोद्भवैः ॥ ४२ ॥
दध्योदनैश्च क्षीरैश्च दधिपूरैर्मनोरमैः । सुगन्धजलपूरैश्च नवेक्षुरसपूरकैः ॥ ४३ ॥
द्राक्षाराशिरसैरेता लवङ्गपरिवेष्टितैः । अन्यैरपि रसद्रव्यैः पूजयित्वा महेश्वरम् ॥ ४४ ॥
पश्चादाभरणं दद्यात् रत्नराशिविराजितम् । पुनर्वस्त्राणि रम्याणि रत्नछत्रादिकं तथा ॥ ४५ ॥
दर्पणं चारु व्यजनं चामीकरविराजितम् । चामरं पुष्पमालाश्च पताकाश्च मनोहराः ॥ ४६ ॥
देयं कर्पूरदीपानां नीराजनमनुत्तमम् । पश्चादास्वेदमीशाय प्रणतो नर्तनोत्सवैः ॥ ४७ ॥
रुद्राध्यायादिमन्त्राणां स्तोत्रैः शांभवशोभनैः । पुण्यैः शिवकथालापैः कालो नेयः प्रयत्नतः ॥
एवमासायमीशार्चा कर्तव्या मुक्तिकांक्षिभिः । सायंकाले विशेषेण पुनः पूजां समारभेत् ॥
उक्तैनैव प्रकारेण मोक्षदं शिवपूजनम् । लिङ्गरूपिणमीशानं प्रदोषे यस्तु पश्यति ॥ ५० ॥
स वंशकोटिसंयुक्तः शिवलोकं प्रयच्छति । ब्रह्महत्यादिपापानां प्रलयाय प्रजायते ॥ ५१ ॥
शिवार्चनं परमिदं वेदवेद्यमिति श्रुतम् । प्रदोषकाले संप्राप्ते यः शिवं नार्चयिष्यति ॥ ५२ ॥
स दुर्भगो भवत्येव नरकं च गमिष्यति । अयमर्थस्तु विज्ञातः कुम्भयोनिमुखान्मया ॥ ५३ ॥
तेन वेदैः परिज्ञातः शिवार्चनमहोत्सवः ॥ ५४ ॥

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा सा राजमहिषी तदा । तं प्रणम्य गुरुं नत्वा क्षमस्वेत्यवदन्मुहुः ॥ ५५ ॥

राज्ञी —

त्वं गुरुर्मम भाग्येन संसाराङ्गारसागरात् । संसारात् तारणापेक्षाकटाक्षैः पुण्यपूरितैः ॥ ५६ ॥
इत्युक्तं तद्वचः श्रुत्वा तां ददर्श स भूपतिः । स्वसारमिव संसाराद् विरतः शांकरः परः ॥ ५७ ॥
तामुवाच ततो राजा स्वतन्त्रा नासि भामिति । इतो याहि गृहं शर्वं समभ्यर्च्याद्य सत्वरम् ॥
स्त्रीणां पतिव्रतानां तु सर्वथा भर्त्रनुज्ञया । विना न धर्माचरणं तत्रापि शिवपूजनम् ॥ ५९ ॥

एकाकिना मया साकं अत्र संभाषणे सति । विपरीता मतिर्लोके लोकानां तु भविष्यति ॥६०॥
न चात्र पुरुषाः सन्ति नाङ्गना अपि केवलम् । आवयोरिह संस्थानं न योग्यमिति मे मतिः ॥
यद्यप्येतस्य नारीषु तरुणीष्वपि मे मनः । सन्तप्तलोहखण्डत्वबुद्ध्या नैव प्रवर्तते ॥ ६२ ॥
अङ्गारसागरे को वा प्रचरिष्यति सादरम् । किञ्चिदत्र तथा दुःखप्रचारे न भविष्यति ॥ ६३ ॥
यदा शरीरमङ्गारसागराङ्गारसंयुतम् । तदा तद्विलये दैवात् नास्य यामीययातना ॥ ६४ ॥
परदारशरीरेषु यदि याति मनः क्षणम् । तदा तु घोरे नरके यातना तु भविष्यति ॥ ६५ ॥
वरमेव सुराहारो गोमांसाहारसंयुतः । परदाराभिगमनं न वरं न वरं खलु ॥ ६६ ॥
परदाराभिगमने यस्येच्छा जायते यदा । तदैव नरकावासी जातस्तत्र न संशयः ॥ ६७ ॥
भ्रान्तानां परदारेषु रतिर्भवति यद्यपि । तथापि सा रतिस्तस्य नरकाय प्रजायते ॥ ६८ ॥
अघोरनरकद्वारं परदाराङ्गसङ्गमः । तत्र यस्यास्ति विरतिः स एव पुरुषोत्तमः ॥ ६९ ॥
अविवेकेन दुष्टानां परदाररतिर्भवेत् । ते न जानन्ति तां दीर्घां घोरां नरकयातनाम् ॥ ७० ॥
परदाराङ्गसङ्गेन महापातककोटयः । तुलां न यान्ति सहसा यस्मात् भारतरस्तु सः ॥ ७१ ॥
परदाराङ्गसङ्गेन यावन्तो वा क्षणा गताः । दुःखं तावत्सु कल्पेषु कुम्भीपाकादिपातनैः ॥ ७२ ॥
परदाराभिगमने न यस्य विरतिर्भवेत् । स तावज्जारजो ज्ञेयो नरकाय प्रकल्पितः ॥ ७३ ॥
एवं च न मम प्रीतिः परदारेषु सर्वथा । तथापि सङ्गः संत्याज्यः तैरेकान्ते विशेषतः ॥ ७४ ॥

गुरुत्वबुद्धिर्मयि चेत् तवास्ति तदा परं याहि गृहं स्वकं शुभम् ।
अतः परं नात्र तवोचिता स्थितिः भर्त्रा सह स्थेयमितः प्रयाहि ॥ ७५ ॥

कालोऽपि भूयानगमद्वरेण्ये संभाषणेनैव न ते क्षुधा किम् ।
ममापि कार्यं शिवपूजनं हि व्यर्थं प्रलापैरलमित्ययं मे ॥ ७६ ॥

प्रतिक्षणं क्षीणमिदं किलायुः यद्यद्गतं तद्गतमेव तीव्रम् ।
न तत् समायास्यति रोदनेऽपि दुर्वार्तया किं फलमस्ति मातः ॥ ७७ ॥

निरीक्षणं चापि न रोचते ते मातः शरीरस्य च सुन्दरस्य ।
तवापि दूरे वसतिर्वरं मे मारः परः क्रूरतरः किशोरः ॥ ७८ ॥

वनानि नानाविधमारसेना व्याप्तानि सर्वाणि मनोहराणि ।
पिकास्त्वया पञ्चमचञ्चुरास्ते दृष्टाः प्रहृष्टाः किमनादरेण ॥ ७९ ॥

केकैरनेकैर्मदनानुकूलैः गन्धानिलैश्चम्पकसंकुलैस्तैः ।
किं किं न कार्यं मदनस्य कार्यं इदं वनं नोपवनं विषस्य ॥ ८० ॥

कुन्दं प्रपश्येदमिलिंदवृन्दैः मरन्दलोलैः समलंकृतं हि ।
इदं तु नूनं मदनोत्सवाय मुहुर्मुहुः प्रेरयति प्रियाङ्गे ॥ ८१ ॥

माकन्दकन्दानि विलोकयाशु तान्येव तावत् पिकसुन्दरीणाम् ।
विलासयोग्यानि विलोकयन्ति पिकाश्च केकारवभीतचित्ताः ॥ ८२ ॥

अन्यानि पुष्पाणि मनोहराणि तान्येव तद्वन्मदनायुधानि ।
अतः सुते सत्वरमेव याहि भर्तारमभ्यर्च्य तमन्तकारिम् ॥ ८३ ॥

अतः परं सन्ध्यकालपूजा मया विधेया मदनान्तकस्य ।
इतः प्रयाहि त्वरया प्रयाहि प्रयाहि याहि त्वरया प्रयाहि ॥ ८४ ॥

इतो यदि स्याद्गमनं तवाद्य तदेव तावद्वनमित्यवैमि ।
महेशपूजाप्रतिबन्धकस्य निवृत्तिरस्माकमपेक्षिता हि ॥ ८५ ॥

महेशपूजाप्रतिबन्धकत्वं महाघकूटस्य फलं तदेव ।
हेतुर्यमावासजदुःखभोगसंमोहमात्रस्य न संशयोऽत्र ॥ ८६ ॥

महेश्वराराधनसाधनानां संपादने यः प्रतिबन्धमात्रम् ।
करोति तद्वंशहुताशनस्य स एव यत्नः प्रतिबन्धरूपः ॥ ८७ ॥

शिवार्चने कः प्रतिबन्धमन्धः करोति पापिष्ठवरं विना तु ।
स काकयोनिं शुनकस्य योनिं प्रयाति यस्तत्प्रतिबन्धकः स्यात् ॥ ८८ ॥

इदं शिवस्थानमतिप्रशस्तं लिङ्गं च तुङ्गं शिवगङ्गयाऽपि ।
सङ्कीर्णमेतस्य तु पूजने तु मुक्तिः करस्था भवतीति मन्ये ॥ ८९ ॥

अहो कथं लिङ्गमिदं मनोज्ञं मुक्तिप्रपारूपमिति स्मरन्ति ।
तावन्महादेवपदार्चकास्ते बुद्ध्या तया शङ्करमाचरन्ति ॥ ९० ॥

पत्रं फलं वा जलमत्र दत्तं अनन्तपापौघविनाशकं हि ।
अतः परं मातरयं विलम्बः सोढुं न शक्यः शिवपूजनाय ॥ ९१ ॥

वनानि तावद्वनजान्वितानि वनानि सन्त्यत्र मनोहराणि ।
तैरस्य लिङ्गस्य विशेषतोऽद्य कार्यं मया पूजनमम्ब याहि ॥ ९२ ॥

आयुः क्षीणमिदं प्रतिक्षणमहो मृत्युः शिरस्थस्त्वयं
कुर्वन्नेव कृताद्यसङ्ख्गणनां नायाति चायुर्गतम् ।
शंभुर्नार्चित एव [1]साऽपि न मनागाराधिता शैलजा
वक्षोजाश्चितकुङ्कुमाङ्कितपदांभोजः क्षणं वा मया ॥ ९३ ॥

आयुः शङ्करपूजया यदि भवेत् क्षीणं तदा तत् परं
धन्यं धन्यतमं च यद्यपि भवेद्व्यर्थं तदा कुत्सितम् ।
तस्मादाशु महेशपूजनमनेनैवायुषा सर्वदा
कर्तव्यं तदुमासहायचरणांभोजप्रसूनाय मे ॥ ९४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे याज्ञवल्क्यजनकसंवादे
राजपुत्रराजपत्न्युपदेशवर्णनं नाम प्रथमोऽध्यायः ॥

---

## अथ द्वितीयोऽध्यायः ।

—:×:—

याज्ञवल्क्यः —

इति तस्मिन् वदत्येव नारीरत्नं सखीजनः । सा राज्ञी क्व गतेत्याशु शिवालयमुपागतः ॥ १ ॥
तं दृष्ट्वा दूरतो भूपं मदनापरविग्रहम् । मदनोन्मादसंवीतः स तु रन्तुं मनो दधे ॥ २ ॥
ततः काचित् कराग्रेण तमाकृष्य मदावृता । अयं ममेति मनुते ममेत्यन्या ममेति च ॥ ३ ॥
एवं सखीजनः सर्वः तमावृत्य स्थितस्तदा । तदा राजाऽपि निर्विण्णः तरुणीकरसंवृतः ॥ ४ ॥
काचिदालिङ्ग्य तं भूपं तुष्टा भवति काचन । तां दूरीकृत्य काप्यन्या तमालिङ्ग्याधितिष्ठति॥ ५ ॥
निराकृता सा कयापि सा कयाऽपि निराकृता । एवं तरङ्गसङ्गेन ताः सर्वा मदविह्वलाः ॥ ६ ॥
मदनोऽयं समागत्य वने क्रीडति सादरम् । नायं त्याज्य इति प्राहुः तरुण्यस्ताः सहस्रशः ॥ ७ ॥
स राजा कष्टमेतावत् कथमागतमित्यपि । चिन्तया व्याकुलस्तत्र चिन्तया किं [2]मया तया ॥

---

1 नापि च मनागाराधितः E  2 तया तया C E

अपराधः कृतः को वा मदनारेः पुरा मया। नारीशरीररूपोऽयमायात्यङ्गारसागरः ॥ ९ ॥

अहो किं दुरदृष्टं मे शिपिविष्ट महाप्रभो। नारी .... सागरः ॥ १० ॥

मया कस्य मुखं दृष्टं अशैवस्याद्य सत्वरम्। नारी ... सागरः ॥ ११ ॥

भस्मनोद्धूलनं प्रातः प्रायो न कृतमित्यतः। नारी .... सागरः ॥ १२ ॥

त्रिपुण्ड्रधारणं प्रायः प्रातर्न कृतमित्यतः। नारी ... सागरः ॥ १३ ॥

रुद्राक्षधारणं प्रायः प्रातर्न कृतमित्यतः। नारी ... सागरः ॥ १४ ॥

शिवलिङ्गार्चनं प्रायः प्रातर्न कृतमित्यतः। नारी .... सागरः ॥ १५ ॥

बिल्वपत्रैर्महादेवः प्रातर्नाभ्यर्चितस्ततः। नारी ... सागरः ॥ १६ ॥

शिवलिङ्गे नीरधारा न मया कल्पिता मुहुः। नारी ... सागरः ॥ १७ ॥

न धूपदीपौ दत्तौ च लिङ्गरूपाय शम्भवे। नारी .... सागरः ॥ १८ ॥

नैवेद्यं न मया दत्तं प्रातः शर्वाय सादरम्। नारी ... सागरः ॥ १९ ॥

प्रायो न प्रणतः शम्भुः प्रदक्षिणपुरःसरम्। नारी ... सागरः ॥ २० ॥

नध्यातः प्रायशः शम्भुः गणनायकवन्दितः। नारी ... सागरः ॥ २१ ॥

प्रायः शांभवपूजाऽद्य न कृता तेन सत्वरम्। नारी सागरः ॥ २२ ॥

प्रायः शिवकथाऽप्यद्य न कृता तेन सत्वरम्। नारी .... सागरः ॥ २३ ॥

महेशार्चनविघ्नोयं कथमद्य समागतः। नारीशरीररूपेण किं विधेयमतः परम् ॥ २४ ॥

करैराकर्षयन्त्येताः सर्वास्तावन्ममेत्यपि। पतन्त्यङ्गे ममोत्सङ्गे तुङ्गाङ्गारसमप्रभाः ॥ २५ ॥

अहो किमिदमाश्चर्यं सृष्टमीश त्वयाऽधुना। कोपसृष्टिरियं प्रायो नाङ्गनासृष्टिरिष्टदा ॥ २६ ॥

एतासां मारधीर्जाता मयि सुन्दरविग्रहे। न मे मारदशामेव प्रापयामेय शङ्कर ॥ २७ ॥

निवारय महत्कष्टमिदमेतादृशं प्रभो। विघ्नः कोऽयं समुत्पन्नो नारीरूपेण शङ्कर ॥ २८ ॥

नारीजनश्चेदेतस्य न लज्जा जलमज्जनम्। किमतो विघ्न एवायं नारीरूपमुपागतः ॥ २९ ॥

शिवार्चनेन विज्ञातममितं फलमित्यतः। अस्य विघ्नः समुत्पन्नः सविघ्नं हि महत्फलम् ॥ ३० ॥

अविघ्नानि भवन्त्येव बहून्यल्पफलानि तु। महाफलानि सर्वाणि सविघ्नानीति निश्चयः ॥ ३१ ॥

अतःपरं क्व गन्तव्यं किं कर्तव्यमतः परम्। एतद्विघ्नापहरणं कर्तुं शक्तिश्च कस्य वा ॥ ३२ ॥

शङ्करेणैव सृष्टा चेदियं विघ्नपरंपरा। तदा निवारकः कः स्यात् तत्सृष्टिः प्रबला खलु ॥ ३३ ॥

आपत्काल इवाभाति सोऽयमुद्वेगसाधनम् । कदाप्येतादृशो विघ्नो न जातः सर्वथा खलु ॥
त्यक्तमद्यैवाङ्गनाङ्गसङ्गभीत्या गृहादिकम् । पुनरप्यागतः सोयं अन्तरायस्तदात्मकः ॥ ३५ ॥
एवं व्याकुलचित्तस्य तस्य धीरस्य सर्वथा । विकारो नाभवद्देहे काष्ठस्येव महात्मनः ॥ ३६ ॥
ततः परं विवसनं कृत्वा रूपं कुचेष्टया । नग्नाश्च ताः समारुह्य स्कन्धादौ ननृतुर्नृप ॥ ३७ ॥
तथापि निर्विकारस्य तस्य भूपस्य तास्वपि । पतङ्गधीः समुत्पन्ना दृढवैराग्यभाग्यतः ॥ ३८ ॥
ततः परन्तु ता एव स नपुंसक इत्यपि । निश्चित्य निर्ययुस्तस्मात् श्रीमहादेवमन्दिरात् ॥ ३९ ॥
ततः परं सा विलोक्य राजपत्नी तदद्भुतम् । विस्मयाविष्टहृदया चिन्तयामास चेतसि ॥ ४० ॥
अयं नपुंसकः प्रायो नग्नस्त्रीदर्शनादपि । न च चालनचेष्टा च शाङ्कराङ्गे विशेषतः ॥ ४१ ॥
यद्वा विरक्त एवायं कुत्सितत्वावबोधनात् । को वाऽनुरागसहितः शुनीयोनिविलोकनात् ॥४२॥
अङ्गेषु पुष्टिःसौन्दर्यमपारमिदमस्य तु । अस्य पुंस्त्वे न सन्देहो विरक्तः केवलं नृपः ॥ ४३ ॥
एतादृशस्तु पुरुषो न दृष्टो न श्रुतोऽपि हि । भाग्यवानयमेवैको लोकोत्तरगुणाश्रयः ॥ ४४ ॥
एतस्य दर्शनादद्य ममापि मदनज्वरः । समुत्पन्नः प्रशान्तोऽपि तत्कथाश्रवणादिह ॥ ४५ ॥
एतस्मिन्नन्तरे काले तत्कलत्राणि कोटिशः । समागतानि तत्रास्तीत्याकर्ण्य स नृपोत्तमः ॥ ४६ ॥
समागताश्च तत्रैव गजाश्वरथकोटयः । मन्त्रिकोटिसमाकीर्णाः पत्तिकोटिसमावृताः ॥ ४७ ॥
ततः कोलाहलो जातः संपूर्णे पृथिवीतले । नगरं तत् समावेद्य ते सर्वे मन्त्रिसत्तमाः ॥ ४८ ॥
शिवालयस्य प्रासादं ददृशुस्तुङ्गमुत्तमम् । सौन्दर्यनिधिरत्रैव स्थास्यतीति च मेनिरे ॥ ४९ ॥
ततः परमयं राजा सौन्दर्यनिधिनामकः । तत्रास्तीति विनिश्चित्य ययुरुद्यानमुत्तमम् ॥ ५० ॥
तत्रापि चिन्तयामासुरुद्यानमिदमुत्तमम् । कथं स्थास्यति राजायमत्र पुष्प[1]कुलाकुले ॥ ५१ ॥
अयं विरक्तो न स्थास्यत्यत्र तावद्वने शुभे । किश्चावस्थानबीजं च शिवस्थानमिदं खलु ॥ ५२ ॥
तस्य राज्ञः शिवस्थाने केवलं स्थितिरित्यतः । अन्यत्र गमनं तस्य नैव संपादितं खलु ॥ ५३ ॥
अस्माकं यदि भाग्यं स्यादत्र स्थास्यत्ययं नृपः । शिवस्थानं विहायायं ईदृशं नैव यास्यति ॥
पूर्वेद्युर्निर्गतो गेहात् दूरदेशं न यास्यति । अदूरेण शिवस्थानं ईदृशं दृश्यतेऽपि च ॥ ५५ ॥
एतादृशशिवस्थानप्रासादमवलोकयन् । स्वहर्म्यहर्म्यशिखरे नृपः खलु पुरा स्थितः ॥ ५६ ॥
एवं निश्चित्य ते सर्वे तदुद्यानावलोकनम् । कर्तुं समुद्यतास्तत्र स्त्रीगणं ददृशुर्नृप ॥ ५७ ॥

---

1 फलाकुले C.

ततः परं तु ते सर्वे संशयाविष्टमानसाः । स्त्रीसंकुले वने नूनं न स्थास्यति नृपोत्तमः ॥ ५८ ॥
वराङ्गनास्तदा दृष्ट्वा नृपस्तावदवाङ्मुखः । स कथं वा वने स्थास्यत्यनन्तवनितावृते ॥ ५९ ॥
ऋतु काले तु राजायं स्वनारीसङ्गमे विधेः । प्रवृत्तस्तेन सञ्जाताः कुमाराः पुण्ययोगतः ॥ ६० ॥
तस्य नारीषु नस्नेहो न भोगे सुतरामपि । राज्येऽपि तस्य न प्रीतिः यथा शङ्करपूजने ॥ ६१ ॥
शिवध्यान रतो नित्यं न नारीमभिपश्यति । शिवलिङ्गालोकनेच्छा तस्य सर्वात्मना खलु ॥६२॥
एतत्तु तदवस्थानस्थानमेव न सर्वथा । वृद्धापि नारी सहसा न दृष्टा तेन सत्वरम् ॥ ६३ ॥
तरुणी मसृणारण्यमिदमुद्यानमेव न । वनितावनमेवेदमत्र तस्य स्थितिः कथम् ॥ ६४ ॥
एकैकं तरुमारुह्य नृत्यन्ति तरुणीगणाः । अत्र तस्यापि भूपस्य शङ्किता किमवस्थितिः ॥ ६५ ॥
यद्वा प्रातः समागत्य प्रविष्टः शिवमन्दिरम् । शिवध्यानपराक्रान्तः प्रायः स्थास्यति भूपतिः ॥
सूर्योदयात् परं तावद्वनितास्ताः समागताः । तदुद्यानवनक्रीडां कुर्वन्त्यत्र तु कोटिशः ॥ ६७ ॥
अविवेकस्वभावास्ताः तरुण्यः शिवदर्शने । अनुत्सुकास्तरुष्वेव क्रीडन्ति फलितेष्विह ॥ ६८ ॥
एवं सति शिवागारे स्थातुमर्हति भूपतिः । एतादृशं शिवस्थानं न त्यक्ष्यति महीपतिः ॥ ६९ ॥
अस्माकमत्र सहसा तरुणीगणसंकुले । वने प्रवेशोऽप्युचितो न भवत्येव सर्वथा ॥ ७० ॥
वनिता संकुले देशे वनितानां गतिर्मता । अतः प्रयान्तु वनिताः प्रविशन्तु शिवालयम् ॥ ७१ ॥
तत्र चेन्न भवेद्राजा सुन्दरे शिवमन्दिरे । बिल्वमूलानि पश्यन्तु शिवलिङ्गावृतान्यपि ॥ ७२ ॥
प्रविशन्त्विति तीव्रेण सन्त्यन्या बालकैर्युताः । अन्यासां तत्र गमनं नारीणां तत्र सर्वथा ॥
इत्यालोच्य प्रधानास्ते तत्कलत्रानुमोदकाः । तासां तत्र प्रवेशार्थं उद्योगं चक्रुरादरात् ॥ ७४ ॥
प्रविष्टस्तत्र ताः सर्वा गृहीत्वा बालकानपि । शिवमन्दिरमाविश्य प्रणतास्ताः सदाशिवम् ॥
रत्नैर्मनोहरैस्तास्तु भस्मोद्धूलितविग्रहाः । त्रिपुण्ड्ररुद्राक्षयुताः पूजयामासुरीश्वरम् ॥ ७६ ॥
स्तनन्धयान् बाहुमध्ये गृहीत्वा वक्षसा युतान् । स्तन्यं च पाययन्त्यस्तान् प्रविष्टाः काश्चिदादरात् ।
सगर्भाः काश्चिदुत्कृष्टाः पूर्णगर्भाश्च काश्चन । अजातयौवनाः काश्चित् काश्चित् संपूर्णयौवनाः ॥
सौन्धर्यधारारूपाश्च सर्वाश्च रतिसुन्दराः । रमामनोहराः सर्वाः [1] रूपराशिविराजिताः ॥ ७९ ॥

---

1 सर्वा अपि तं दृष्ट्वा सोऽयं भर्ता ममेत्यपि । प्रहृष्टवदना एव स्मेराञ्चितमुखाम्बुजाः ॥
शिवध्यानरतं धीरं विनिमीलितलोचनम् । दृष्ट्वा विनिर्गताः सर्वाः मन्दभाषणवर्जिताः ॥
त्वया दृष्टस्त्वया दृष्टः त्वयेत्यन्योन्यमादरात् । मन्दमाभाषणं कृत्वा सोत्साहास्तरुणीजनाः ॥
इति श्लोकत्रयं C. E. कोशयोः अधिकम् ।

अपरा मारसेनेव तन्नारीमालिका मुदा । दृष्ट्वा तद्राजपत्न्या (?) सा सर्वाभरणभूषिता ॥ ८० ॥
सापि तं तरुणीसङ्घं विस्मयेन समाकुला । कुतः समागतं कस्य कलत्राणीति सादरम् ॥ ८१ ॥
पप्रच्छ विनयानम्राः तत्सौन्दर्यपराजिताः । तास्तं ध्यानसमायुक्तं राजानं वीक्ष्य लज्जया ॥८२॥
मन्दमाहुः प्रयत्नेन संज्ञया मान्य तां तदा । नीत्वा स्मेरसमायुक्ताः प्रफुल्लवदनाम्बुजाः ॥८३॥
कलत्राणि वयं राज्ञः शांभवस्यास्य शोभने । वैराग्येन गृहं त्यक्तं अनेनैव महात्मना ॥ ८४ ॥
सर्वदा शिवपूजायां निरतः सोऽयमास्तिकः । अनेन नारीवदनं सोत्साहं नैव वीक्षितम् ॥ ८५ ॥
ऋतुकालेष्वयं नारीं प्रत्यवायभिया परम् । भुङ्क्ते तद्भोगकालेऽपि शिवध्यानपरायणः ॥ ८६ ॥
नित्यनक्तव्रती सोऽयं सायंकाले शिवार्चनम् । कृत्वा भुङ्क्ते निशि सदा शांभवैः सह सादरम् ॥
अरुणोदयमारभ्य मध्यरात्रावधि स्वयम् । कालं शिवार्चनेनैव नयति प्रतिवासरम् ॥ ८८ ॥
एतेषु बालकेष्वस्य बालकत्वेन सर्वथा । न प्रीतिः किन्तु शैवत्वबुद्ध्या प्रीतिः कदाचन ॥ ८९ ॥
भस्मोद्धूलितसर्वाङ्गः त्रिपुण्ड्राङ्कितमस्तकः । रुद्राक्षमालाभरणः सर्वदाप्ययमास्तिकः ॥ ९० ॥
न चन्दनानुलिप्ताङ्गो न च रत्नविभूषणः । न चाङ्गनाङ्गसन्तुष्टः न च राज्यरतः सदा ॥ ९१ ॥
अत्युष्णकाले बालानां अङ्गशैत्यार्थमादरात् । अस्माभिश्चन्दने दत्ते सहते नैव भूपतिः ॥ ९२ ॥
प्रक्षाल्य शिवतीर्थेन बालपुत्राङ्गमादरात् । उद्धूलनत्रिपुण्ड्राभ्यां भूषितं तं करोत्यपि ॥ ९३ ॥
कदाचिदस्य बालस्य रत्नकञ्चुकवेष्टिताम् । रत्नाभरणसंयुक्तां ददर्श स तनुं नृपः ॥ ९४ ॥
ततः परं कञ्चुकं च स रत्नाभरणान्यपि । दूरीचकार यत्नेन मुकुटं चास्य भूपतिः ॥ ९५ ॥
भसितालंकृतं तस्मै ददौ रुद्राक्षकञ्चुकम् । रुद्राक्षमकुटं चैतद् ददौ रुद्राक्षमालिकाम् ॥ ९६ ॥
एवं शिशूनां सर्वेषां कन्यकानां च भूपतिः । प्रयच्छति प्रयत्नेन रुद्राक्षाभरणान्यपि ॥ ९७ ॥
शिवार्चनेन कालोऽयं नीयते तेन सादरम् । पूर्वेद्युर्निर्गतो गेहात् राजा तीर्थाटनोद्यतः ॥ ९८ ॥
दैवादत्रागते राज्ञि राजवेषं विहाय तु । रत्नमन्दिरमेतेन कारितं शङ्कराय च ॥ ९९ ॥
अंबिकायै गणेशाय कुमाराय च सादरम् । रत्नप्राकारसंयुक्तं रत्नप्रासादवेष्टितम् ॥ १०० ॥
रत्नपर्वतसंकाशाः प्रासादाः कोटिशो नवाः । कारितानि मनोज्ञानि राज्ञा पुष्पवनान्यपि ॥ १०१ ॥
सुधाकरकराकारतारहारविराजिताः । कारितास्ताः शरद्राकानयकप्रतिमाः प्रियाः ॥ १०२ ॥
अयं भोजनकालेऽपि नान्यवार्तां वदत्यपि । व्यवहारस्तु सर्वोऽपि शिवनाम्ना परं प्रभोः ॥
दुकूलशय्या संत्यक्ता तेन राज्ञा महात्मना । निद्रापि भस्मशय्यायां क्षणमात्रं महानिशि ॥

शिवार्चनेन सर्वोऽपि नीयते समयः खलु । भस्मरुद्राक्षपूताङ्गान् राजा पश्यति सादरम् ॥१०५॥
अस्माकं रत्नरम्याणां भूषणानां तु कोटयः । सन्त्यथापि न तैर्नित्यं क्रियते तनुभूषणम् ॥ १०६ ॥
सूक्ष्मरुद्राक्षयुक्तानि सुवर्णाभरणान्यपि । कोटिशः सन्ति तैरङ्गं नास्माभिर्भूषितं मुहुः ॥ १०७ ॥
भस्मनोद्‌धूलनं कृत्वा त्रिपुण्ड्रं निटिलादिषु । शुद्धरुद्राक्षमालानां भूषणैरङ्गमञ्चितम् ॥ १०८ ॥
एताः सपत्न्यः सर्वाश्च रुद्राक्षाभरणाङ्किताः । उद्‌धूलनत्रिपुण्ड्राभ्यां सर्वथा समलङ्कृताः ॥
विभूत्यपगमे सर्वैः भस्मनाऽलङ्कृता तनुः । क्रियते घर्मकालेषु पुनः पुनरनुक्षणम् ॥ ११० ॥
नाट्यं कुर्मो महेशस्य पुरतो रत्नमण्टपे । शिवगायनमभ्यस्तमस्माभिस्तदनुग्रहात् ॥ १११ ॥
क्रियते गानमस्माभिः सर्वदा शिवमन्दिरे । बालकैरपि गौरीशपूजनं क्रियते गृहे ॥ ११२ ॥
स्तनन्धयोऽप्यन्ततोऽपि कुरुते शिवपूजनम् । कोटिशः शांभवाः सर्वे पञ्चाक्षरपरायणाः ॥ ११३ ॥
हारोपहारैस्ते सर्वे जीवन्ति शिवमन्दिरे । गन्धर्वराजतनयाः सर्वा एव वयं प्रियाः ॥ ११४ ॥
अस्य राज्ञोऽपि शूरस्य स्वयंवरसमावृताः ॥ ११५ ॥
राजा शांभवपुङ्गवोऽयममराराध्यं महेशं सदा लिङ्गाकारमपारसाधनवरैरभ्यर्चयत्यादरात् ।
एतद्दर्शनवांछया सुरगणैः सर्वैः समागम्यते गन्धर्वैरपि किन्नरैरपि मुहुः भूचक्रवर्ती नृपः ॥११६॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे सौन्दर्यनिधिनामकराजवैराग्य
शिवभक्त्युत्कर्षवर्णनं नाम द्वितीयोऽध्यायः ॥

---

## अथ तृतीयोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा राज्ञी विस्मितमानसा । स्वयंवरस्य वृत्तान्तं श्रोतुमाह विचक्षणा ॥ १ ॥
गन्धर्वराजनगरे नीहारगिरिकन्धरे । स्वयंवरः कथं तत्र भूपतेरिदमद्भुतम् ॥ २ ॥
केन पुण्यप्रभावेन भूपालस्य स्वयंवरम् । इदं सर्वं विशेषेण ज्ञेयमित्याह ताः प्रति ॥ ३ ॥
तासु पद्मावती नाम प्रौढा गन्धर्वकन्यका । तामुवाच प्रयत्नेन स्वयंवरमहोत्सवम् ॥ ४ ॥
अयं पूर्वभवे विप्रो भिक्षुकोऽप्यतियाचकः । प्रतिग्रहेण कालोऽपि नीतस्तेन सदा मुहुः ॥ ५ ॥
दुरन्नभक्षणोद्युक्तो दुष्परिग्रहलोलुपः । आसायं याच्ञया कालं नयति प्रतिवासरम् ॥ ६ ॥

याच्ञया जीवनं कृत्वा सायंकाले प्रयत्नतः । चिदम्बरेश्वरं दृष्ट्वा नत्वा याति प्रयत्नतः ॥ ७ ॥
दीपमालामहापूजां दृष्ट्वा नत्वा मुहुर्मुहुः । सम्यक् सम्यगिदं सम्यगित्युदीर्यातिविस्मितः ॥ ८ ॥
धूपभस्म समादाय सोऽङ्गानि परिमृज्य च । प्रयाति भवनं पश्चात् भुङ्क्ते पूजामनुस्मरन् ॥ ९ ॥
एवं स्थितो दैवयोगात् जहौ प्राणाननातुरः । ततो यमभटैर्नीतो यमेनापि स वीक्षितः ॥ १० ॥
चित्रगुप्तमुवाचायं कः पुण्यं किं कृतं पुरा । अनेनेत्याह तं प्राह चित्रगुप्तोऽति विस्मितः ॥ ११ ॥

चित्रगुप्तः —

दुरन्नभक्षणैर्नीतः कालोऽत्रानेन वै यम । न सन्ध्या वन्दिता तेन होमवार्ताऽपि दूरतः ॥ १२ ॥
स्नानं कर्तुं न जानाति न कृतं भस्मधारणम् । रुद्राक्षधारणं तेन न कृतं दुष्टचेतसा ॥ १३ ॥
लिङ्गार्चनं च न गृहे शिवनामापि न श्रुतम् । अयं शिवकथालापं जानात्येव न सर्वथा ॥ १४ ॥
नानाजातिगृहान् गत्वा याच्ञां कृत्वा प्रयत्नतः । आसायं दुष्टवार्ताभिः कालं नयति दुष्टधीः ॥
पराङ्गनाङ्गसङ्गेऽपि निरतः पापकृत्तमः । न स्मार्तकर्मनिरतः श्रौतकर्मपराङ्मुखः ॥ १६ ॥
अयं तु मरणात् पूर्वं मासमात्रं निशामुखे । शिवपूजां विलोक्यैव चकार निशि भोजनम् ॥१७॥
पूजां दृष्ट्वा प्रमोदोऽपि कृतोऽनेन मुहुर्मुहुः । धूपभस्म समादाय स्वगात्रं च पवित्रितम् ॥ १८ ॥
ततः परं मृतः सोऽयं इति श्रुत्वा वचो यमः । त्वरया प्रणतस्तस्मै रत्नसिंहासनं ददौ ॥ १९ ॥
पूजयामास तं विप्रं ततः प्राहातिविस्मितः । भाग्यवानसि धन्योऽसि मान्योऽसीति मुहुर्मुहुः ॥
धन्यं धन्यं मनुष्याणां जीवनं रजनीमुखे । दृष्ट्वाऽपि पूजितं लिङ्गं भवन्ति सुरवन्दिताः ॥२१॥
अनायासेन भाग्यानि प्राप्नुवन्ति मुहुर्नराः । दृष्ट्वाऽपि पूजितं लिङ्गं सायङ्काले विशेषतः ॥
शिवार्चनोपकरणं सायङ्काले विशेषतः । अर्चितं लिङ्गमालोक्य मुच्यते पापकोटिभिः ॥ २३ ॥
वृषस्याण्डमुपस्पृश्य वृषशृङ्गान्तरं नराः । शाङ्गं लिङ्गं समालोक्य मुच्यन्ते पापकोटिभिः ॥ २४॥
धृत्वा भस्म प्रयत्नेन सायं पश्यति यः शिवम् । तस्य पुण्यफलं वक्तुं शेषेणापि न शक्यते ॥
मया कथं वा तत्पुण्यं वक्तव्यमियदित्यपि । वेदैरपि न तच्छक्यं वक्तुमित्येव मन्महे ॥ २६ ॥

प्रदोषकाले शिवलिङ्गपूजां दृष्ट्वा सकृद्वा शिवमेव यान्ति ।
भुक्त्वाऽपि भोगान् विपुलानपारान् अनश्वरानित्यपि मे मतिर्हि ॥ २७ ॥
अहो न जानामि शिवप्रभावं प्रदोषकालीनवशिवार्चनस्य ।
फलं न जानामि विमूढचित्तः संसारपाशातिनिबद्धगात्रः ॥ २८ ॥

कृत्वा महीमण्डनमेत्य देहं संरक्षणं पुण्यनिशामुखेषु ।
लिङ्गार्चनार्थं कृतकृत्य एव तेनैव तावन्मनुजो महान् हि ॥ २९ ॥

मर्त्यत्वं खलु दुर्लभं द्विजजनिस्तत्रापि सा दुर्लभा
ब्राह्मण्यं खलु तत्र दुर्लभमभिज्ञत्वाच्च भक्तिः शिवे ।
सा चेदव्यभिचारिणी यदि तया लिङ्गार्चनेऽत्यादरः
तर्हि प्राप्तमुमासहायचरणांभोजप्रभामण्डलम् ॥ ३० ॥

धन्यः कोऽपि शिवार्चकः कलियुगे भस्मत्रिपुण्ड्रादरो रुद्राक्षाभरणप्रियः शिवमनुव्याहारमात्रादरः।
लिङ्गाराधनपुण्यपुण्यविभवो भावो भवानीपतिध्यानानन्दसमुद्रमग्नहृदयः तस्मै नमः कोटिशः ॥

धन्यः शांभवपुङ्गवः कलियुगे कश्चिद्भविष्यत्यहो काशीवासविनीतयौवनमदो वीरेश्वराराधकः ।
तेनापारमहेश्वरामृतकथासिन्धुः प्रवृद्धोऽभवत् तत्कीर्तिश्रवणेन यास्यति शिवं यः कोऽपि रंकोऽपि वा॥

धन्या तज्जननी पिता च सुतरां धन्योऽस्य धन्यं कुलं
तद्भृत्योऽपि स धन्य एव हि मुहुर्यः कालकालार्चकः ।
सर्वानप्यमरानपास्य विधिवद्भस्मत्रिपुण्ड्राङ्कितो
रुद्राक्षाभरणः शिवैकशरणः श्रेष्ठोऽतिमान्यः सदा ॥ ३३ ॥

भूपालोऽपि भविष्यति प्रभुरयं दाता शिवाराधको
रम्यापार कुमारगर्वसहितो गन्धर्वनारीपतिः ।
वैराग्यैकनिधिः शिवार्चकनिधिः नूनं प्रदोषार्चितं
लिङ्गं दृष्टमिति प्रसूननिकरव्याप्तं मुहुः सादरम् ॥ ३४ ॥

इत्युक्तं तद्वचः श्रुत्वा सर्वे यमसभासदः । तमूचुर्विस्मयात् सर्वे विनताननकन्धराः ॥ ३५ ॥

सभासदः —

यम नाम तवानर्घ्यं धर्मराज इति प्रथा । तव या स्वर्गलोकादौ स्वर्धुनीव प्रवर्धते ॥ ३६ ॥
शौचस्नानादिकर्माणि स्मार्तानि विविधानि च । तेषु कोऽपि कृतो धर्मः नानेनेति श्रुतं मुहुः ॥
ज्योतिष्टोमादयो यागाः तव दूरत एव हि । [1]अस्याज्ञानस्य वार्ताऽपि यस्मादत्यन्तदूरतः ॥
अतिकुत्सितवृत्तिश्च श्रुता तावदयं खलु । नीचसेवारतोऽप्यस्य पुण्यधीरपि न ध्रुवम् ॥ ३९ ॥
प्रदोषे पूजितं लिङ्गं द्रष्टव्यं पापनाशनम् । इति नायं प्रजानाति विवेकरहितो यतः ॥ ४० ॥

---

1 अस्याद्य दानवार्तापि C "अस्याग्न्याधाने"त्युचितः पाठः ।

एवं सति तथा पूजा कथमस्य विशेषतः । स्वसिंहासनमारूढः कथं तिष्ठति शैववत् ॥ ४१ ॥
शिवार्चकाः समायान्ति मार्गेणानेन शांभवम् । लोकं गन्तुं तदा तावत् [1] अवकाशोऽत्र दुर्लभः ॥
अन्येषामवकाशोऽत्र दुर्लभः खलु वस्तुतः । क्व सिंहासनमुत्कृष्टं क्वायं धर्मविवर्जितः ॥ ४३ ॥
एतावत्कालपर्यन्तं न दृष्टमिदमीदृशम् । अद्भुतं दृष्टमधुना यम सिंहासनाऽधिप ॥ ४४ ॥

यमः —

धर्मसूक्ष्मं न जानन्ति वानरा इव पामराः । अशांकराः परं क्रूराः तावद्वानरवृत्तयः ॥ ४५ ॥
किमेतद्विषये जाताः कठोराः शूलपाणयः । पूज्येषु न कठोरोक्तिः मरणेऽप्युचिता यतः ॥ ४६ ॥
किं धर्मैरितरैः स्मार्तैः वैदिकैर्वा विशेषतः । लौकिकैर्वा धर्मवार्ता भवद्भिर्न श्रुता यतः ॥ ४७ ॥
प्रदोषे पूजितं लिङ्गं यः क्षणार्धार्धमेव वा । विलोकयति तत्पुण्यमनन्तविभवं खलु ॥ ४८ ॥

प्रदोषकाले च महेशपूजाविलोकनासक्तमतिर्न यस्य ।
स पातकाकार इति प्रसिद्धः स बौद्ध एवेति मयाऽपि बुद्धः ॥ ४९ ॥

प्रदोषे लिङ्गपूजायां दृष्टायां पापसंक्षयः । अक्षया मोक्षलक्ष्मीश्च भविष्यत्यधमस्य च ॥ ५० ॥
जन्म तस्यैव सफलं येन सम्यक् समर्चितम् । सायं सकृदयत्नेन आलस्याद्वा प्रयत्नतः ॥ ५१ ॥
आयासमात्रफलकैः धर्माभासैः कुतः फलम् । स्मार्तैर्वा वैदिकैर्वाऽपि शिवलिङ्गार्चनं विना ॥
स्मार्तवैदिकधर्माणां अनुष्ठानेऽपि कोटिशः । लिङ्गार्चनेन यत् प्राप्यं तत् प्राप्यं तैर्न सर्वथा ॥
धर्मान्तराणां करणं धननाशाय केवलम् । शिवार्चनं परो धर्मः परमानन्दसाधनम् ॥ ५४ ॥
पापराशिविनाशाय शिवलिङ्गावलोकनम् । कल्पितं गिरिशेनेति न जानात्येव नारकी ॥ ५५ ॥
लोकोपकारकं सृष्टं शिवलिङ्गावलोकनम् । तन्न कुर्वन्ति पापिष्ठाः पतन्ति नरकेष्वहो ॥ ५६ ॥
अनाथनाथं श्रीनाथनयनार्चितपादुकम् । न जानन्ति महादेवं नरकेषु पतन्त्यहो ॥ ५७ ॥
श्रीमहादेवमहिमा दुर्ज्ञेयो दुर्जनैरतः । पतन्ति नरके घोरे पितृभिः सह सर्वथा ॥ ५८ ॥
पितापितामहादीनां यः शंभुर्यो भवः प्रभुः । तं न जानन्ति दुर्वृत्ताः पतन्ति नरकेष्वहो ॥ ५९ ॥
शिवधर्मेष्वविश्वासादन्यधर्मरता नराः । पतन्ति नरके क्रूरा नराः शङ्करनिन्दकाः ॥ ६० ॥
तदर्थं नरकाः सृष्टाः सर्वथा दुःखहेतवः । यैर्महादेवलिङ्गार्चाफलं न ज्ञातमादरात् ॥ ६१ ॥
न जानाति महादेवलिङ्गपूजाफलानि यः । स सूकरः खरो यद्वा शुनकः काक एव वा ॥ ६२ ॥

---

1 तिष्ठन्त्यत्रासने क्षणम् C E

दुर्भगा एव ते सर्वे भर्गार्चनपराङ्मुखाः । तन्मुखानि प्रदग्धानि शिवद्वेषाग्निकोटिभिः ॥ ६३ ॥

सुलभं न विजानन्ति महादेवार्चनं जनाः । शुद्धदूर्वांकुरेणापि लिङ्गपूजा विमुक्तिदा ॥ ६४ ॥

क्षीरं वा नीरमुत्सृज्य भक्त्या लिङ्गे शिवात्मके । विधूतपातका एव प्रयान्ति शिवमव्ययम् ॥

शुष्केण बिल्वपत्रेण तच्चूर्णेनापि यः शिवम् । पूजयिष्यति तस्यापि मुक्तिकान्ता न दुर्लभा ॥

व्यासङ्गेनापि यः शाङ्गं लिङ्गं मङ्गलदायकम् । सायं पश्यति पुण्यात्मा नमस्तस्मै नमो नमः ॥

अनाराध्य महादेवमनायासेन पापिनः । प्रयान्ति दुर्गमं घोरं नरकालयमन्वहम् ॥ ६८ ॥

वने वनानि रम्याणि वनजान्यपि तैः शिवः । नाराध्यते दुर्भगेन नरकावासमिच्छता ॥ ६९ ॥

अनिच्छयाप्युमाकान्तं लिङ्गं पश्यति यो नरः । सायं स दोषनिर्मुक्तो मुक्तो भवति नान्यथा ॥

तृणैरपि शिवं मूर्खाः कथं नाराधयन्त्यहो । महादेवं महामोहो महानरकसाधनम् ॥ ७१ ॥

शिवलिङ्गार्चकाङ्गानि दृष्ट्वाऽपि रजनीमुखे । प्रयान्ति ब्रह्मसदनं तल्लीलाऽत्यन्तमद्भुता ॥ ७२ ॥

सुभगत्वेन विज्ञातं शाङ्गाङ्गस्य विलोकनम् । तदभाग्याग्निदग्धानां अतिदुर्लभमेव हि ॥ ७३ ॥

लिङ्गार्चनेन किं पुण्यमित्युपेक्षापि चेत् क्षणम् । तद्वंशक्षय एव स्यात् पक्षपातेन नोच्यते ॥७४॥

अहो महदिदं भाग्यं शिवलिङ्गार्चने मतिः । तदेव हि महद्भाग्यं महाभाग्यमिति श्रुतम् ॥ ७५ ॥

लोके दुराचाररताः शिवार्चां विहाय तिष्ठन्त्यतिविष्ठया ते ।
लिप्ता भविष्यन्ति न संशयोऽत्र शिवापदाम्भोजयुगे शपामि ॥ ७६ ॥

यः कर्मणा वा मनसाऽपि वाग्मी नित्यं त्रिभिर्वा त्रिपुरान्तकार्चाम् ।
करोति तत्पादरजःप्रसादं वांछत्युपेन्द्रोऽपि चतुर्मुखोऽपि ॥ ७७ ॥

किं वक्तव्यमुमासहायचरणाम्भोजार्चकाराधका-
पारैश्वर्यपरं हरिः प्रतिदिनं तत्सेवकाराधकः ।
श्रीवाणीरमणादयोऽपि मुनयः सिद्धाः सुमुग्धास्ततो
गन्धर्वा अपि किन्नरा अपि तथा शेषादयः सेवकाः ॥ ७८ ॥

शम्भुस्सर्वजगत्प्रभुर्विभुरिति ज्ञात्वा परं शाम्भवाः
तत्पूजानिरताः परात् परतरं तेजः परं शांभवम् ।
प्राप्यान्ते परमोत्सवाद्दतनिजव्यापारपारंगताः
पारावारविहारपूजितपदांभोजाः प्रसन्नाः सदा ॥ ७९ ॥

कस्तूरीमृगराजराजसहितः कर्पूरगन्धो यथा
न ज्ञातः शुनकैस्तथा शिवशिवाचारव्रतानादरैः ।
न ज्ञातं शिवलिङ्गपूजनफलं तत्कालकालार्चकैः
ज्ञेयं केवलमित्यलौकिकमिदं ज्ञेयं कथं पामरैः ॥ ८० ॥

किमन्यद्वक्तव्यं स्मरहरकथासङ्गसरसो न विज्ञातो लोकैरमितमहिमा तेन सहसा ।
न बुद्धिर्मन्दानां शिवचरणसेवानुकरणे क्षणं वा न क्षीणं यदि मरणकालेऽप्यघकुलम् ॥ ८१ ॥

बलादेते लोकाः खलजनरता एव नितरां न जानन्त्येवालं बत बत न कालान्तकमतम् ।
अतोऽन्ते सन्तप्ताः प्रतिपदमहाघोरनरकेष्वसन्तोषे दोषप्रलयनविषादेति स विषम् ॥ ८२॥

अहो मोहः कोवा जगति न महादेवभजने मतिर्भक्तिः श्रद्धा कथमपि न तत्पूजनरतिः ।
न तद्भक्तालापेप्यभिरुचिरतो यान्ति नरकेष्वघोरेषु भ्रष्टाः शिवरुचिरमार्गादिति शठाः ॥ ८३ ॥

ललाटे किञ्चिद्वा सितभसितमालिप्य शिरसा मुहुर्नत्वा यद्वा सकृदपि सुरुद्राक्षवपुषा ।
शिवं दृष्ट्वा सायं जलमपि विनिक्षिप्य विमलं कलौ लिङ्गे शाङ्गे शिवपदसरोजे प्रविशति ॥ ८४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे यमसदस्यसंवादे
प्रदोषकालदीपदर्शन पूजामहिमवर्णनं नाम तृतीयोऽध्यायः ॥

—o—

## अथ चतुर्थोऽध्यायः ।

—*—

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा कम्पमानाः सभासदः । प्रणतास्तं यमं विप्र शिवध्यानपुरःसरम् ॥ १ ॥
ततः परं स्वर्गलोकं यमेनाभ्यर्चिता ययुः । स विप्रः स्वर्गलोकेऽपि शचीनाथेन पूजितः ॥ २ ॥
विमानवरमारुह्य ब्रह्मलोकं ययौ शिवः । ब्रह्मलोके यथाकाममुवासाभ्यर्चितः सुधीः ॥ ३ ॥
ततः परं स एवाभूद्ब्रह्मा भूपसुतः स्वयम् । योगमार्गं समासाद्य वामदेव इवापरः ॥ ४ ॥
गर्भेप्युषित्वा बहुधा स्मृत्वा शङ्करमव्ययम् । योनिमार्गेण गमनं मास्त्वित्येव स्थितः पुरा ॥५॥
ततः परं सुराः सर्वे तं द्विजं गर्भसंस्थितम् । तुष्टुवुर्विनयानम्राः कृताञ्जलिपुटा अपि ॥ ६ ॥
अनुवित्तः (वृत्तः) पुराणोऽयं पन्थाः तेनैव भूसुर। प्रवृत्ता ऋषयः साध्याः सिद्धाः सर्वे सुरा वयम्॥

मार्गान्तरेण गमनं गर्भस्थस्योचितं न हि। तपस्यतस्तवात्रापि गर्भवासो न रोचते ॥ ८ ॥
तथापि गर्भवासार्थं त्वमिहाभ्यागतोऽसि हि। मार्गान्तरेण गमने सदुःखा जननी भवेत् ॥ ९ ॥
यत्र कुत्राऽप्यवस्थानं येन केन पथा गतिः। योगिनामपि युक्तेति कुत्सितत्वमतिं त्यज ॥ १० ॥
मनुष्ययोनिमासाद्य योनिमार्गविनिर्गमे। न दूषणं हि लोकानां सर्वेषां सममित्यतः ॥ ११ ॥
सृष्टिमप्यन्यथा कर्तुं शक्तिरस्त्येव यद्यपि। तथापि न तथा कर्तुं युक्तमेवेत्यमन्यत ॥ १२ ॥
अतः परं योनिमार्गादग्रे निःसरणं न ते। शरीरं चरमं यस्मात् तव ब्राह्मणसत्तम ॥ १३ ॥
सायंकाले त्वया दृष्टं शिवलिङ्गं समर्चितम्। तेन पुण्यप्रभावेन ज्ञानमेवमभूत् तव ॥ १४ ॥
तदिदं पुण्यमुत्कृष्टं तत्प्रभावात्तवेदृशी। मतिर्युक्ता न सन्देहः तत्पुण्यं तादृशं यतः १५ ॥
शङ्करानुग्रहेणैव तत्पुण्यमभवत् तव। अन्यथा तादृशं पुण्यं देवानामपि दुर्लभम् ॥ १६ ॥
शिवलिङ्गार्चनं दृष्ट्वा सायङ्काले विशेषतः। स्वयं नृत्यति सन्तुष्टो दिव्यदेवगणैः सह ॥ १७ ॥
प्रदोषसमये दृष्टं शिवलिङ्गं समर्चितम्। सर्वकामदमित्याहुः तत्सत्यमभवत् खलु ॥ १८ ॥
सन्दिहानः शिवाचारे पापिष्ठो न प्रवर्तते। एतादृशं महाभाग्यमधुना दृष्टमद्भुतम् ॥ १९ ॥
तव स्वरूपं विज्ञातं त्वयापि न शिवार्चनम्। कृतं पापेन नीतानि दिनानि खलु सर्वदा ॥ २० ॥
दुष्प्रतिग्रहलोलस्त्वं दुराचाररतः सदा। न स्नानकर्मनिरतो वैदिकं ज्ञायतेऽपि वा ॥ २१ ॥
नीचान्नभक्षणेनैव वयो नीतं त्वया खलु। मद्यपाङ्गनया साकं बहुकालमवस्थितम् ॥ २२ ॥
तस्मादुत्पादिताः पुत्राः कन्यकाश्च दुरात्मना। त्रिपुण्ड्रधारणं तावन्न कृतं श्रुतिचोदितम् ॥ २३ ॥
रुद्राक्षाणां च धरणं कदाचिन्न कृतं त्वया। बिल्वपत्रं न निक्षिप्तं जलं वा लिङ्गमस्तके ॥ २४ ॥
न दीपवर्तिका दत्ता त्वया शङ्करमन्दिरे। दीपप्रदानवार्ता तु दूरतस्तव सर्वथा ॥ २५ ॥
न सोमवासरे भुक्तं नियमान्निशि सादरम्। शांभवैः सह संलापो न त्वया कृत एव हि ॥ २६ ॥
पुण्याः शिवकथालापाः सर्वथा न श्रुतास्त्वया। रुद्राध्यायो न जप्तो हि मन्त्ररत्नसमाश्रयः ॥
एतादृशेन दुष्टेन प्रदोषे दैवयोगतः। शिवलिङ्गं त्वया दृष्टं कृतकृत्योऽसि तावता ॥ २८ ॥
शिवलिङ्गं न दृष्टं चेत् सायङ्काले त्वया तदा। आकल्पं नरकात् घोरात् प्रच्यवस्ते कथं भवेत् ॥
शिवाचारविहीनानां नरकात् निर्गमः कथम्। पुत्रादिभिः सहावासो नरकेष्वेव कोटिशः ॥ ३० ॥
जन्मोत्तरं वा सततं शिवमर्चय सादरम्। जातिस्मरत्वं संप्राप्य तेन पुण्येन सत्वरम् ॥ ३१ ॥
तत्वज्ञानस्य धर्माणां यागानामपि यत्फलम्। तत्फलं केवलं मन्ये श्रीमहादेवपूजनम् ॥ ३२ ॥

शिवार्चनेन सर्वेषां कामानां सिद्धिरित्यतः । प्रयत्नैर्बहुभिर्नित्यं कुरु शङ्करपूजनम् ॥ ३३ ॥
भूपालत्वं समासाद्य नोन्मत्तो भव सर्वदा । विभवैर्बहुभिर्नित्यं शिवलिङ्गं समर्चय ॥ ३४ ॥
यदि तत्र तवोन्मादः तदा कुत्सितयोनिषु । तव जन्मान्यनन्तानि भविष्यन्ति न संशयः ॥ ३५ ॥
पापिष्ठानां शिवाचारे न बुद्धिर्जायते ततः । प्रयान्ति नरकं घोरं यावदाचन्द्रतारकम् ॥ ३६ ॥
अतो गर्वं विहायाद्य योनिमार्गेण केवलम् । भुवं व्रज यथाकामं यज मृत्युञ्जयं मुहुः ॥ ३७ ॥
इति तद्वचनं श्रुत्वा तथाऽस्त्विति पुनः पुनः । नत्वा तान् प्रेषयामास स्वकृतं सुकृतं स्मरन् ॥
स मासनवकं स्थित्वा गर्भे गिरिशमर्चयन् । मनसा केवलं पश्चात् योनिमार्गाद्विनिःसृतः ॥ ३९ ॥
सुमुहूर्ते समुत्पन्नः पित्रोरानन्दवर्धकः । बभाषे शिव इत्यादौ श्रीमहादेव इत्यपि ॥ ४० ॥
तदा तद्वचनं श्रुत्वा तन्माता कम्पसंयुता । तदा तन्निकटे सर्वाः कम्पमापुः स्त्रियस्तदा ॥ ४१ ॥
किमद्भुतमिदं जातं बालचेष्टा तु नेदृशी । इदं खलु महद्भूतमुत्पन्नं भयसाधनम् ॥ ४२ ॥
राज्ञे निवेद्यमप्येतन्महाद्भुतविचेष्टितम् । इति विस्मयमापन्नाः तद्दास्यो नृपसन्निधिम् ॥ ४३ ॥
गत्वा तत्पुत्रवृत्तान्तं कीर्तयामासुरादरात् । राजन् कुमारः सञ्जातो मदनापरविग्रहः ॥ ४४ ॥
तद्देहतेजसा व्याप्तं सूतिकामन्दिरं नृप । तद्देहप्रभया दीपाः सर्वे वान्ता इव स्थिताः ॥ ४५ ॥
अन्यदप्यद्भुतं किञ्चिदुत्पन्नेन सुतेन ते । उच्चैः शिव महादेव महेशेत्युक्तमादरात् ॥ ४६ ॥
इदमद्भुतमाकर्ण्य बालको नायमित्यपि । तन्मातुरभवद्बुद्धिः अस्माकमपि सा मतिः ॥ ४७ ॥
इत्युदीरितमाकर्ण्य स राजा विस्मयं गतः । उत्साहोऽपि विवृद्धोऽभूत् भूपालस्य तदा महान् ॥
तदानीमागतस्तत्र नारदो मुनिपुङ्गवः । तमागतं विलोक्याशु पूजयामास भूपतिः ॥ ४९ ॥
निवेद्य पुत्रवृत्तान्तं नारदाय स भूपतिः । संस्तुतो नारदेनाशु मुहुः प्रीतिपुरःसरम् ॥ ५० ॥
राजन् तव कुमारस्य योगाद् ज्ञाता जनिर्मया । पूर्वजन्मार्जितं पुण्यं तस्य तद्धि फलं खलु ॥
सायङ्काले तेन दृष्टं मनोज्ञं च विशेषतः ।

बिल्वैः पुष्पैः पूजितं शाङ्गलिङ्गं धूपैः रत्नैर्दीपदानैरनन्तैः ।
तत्वज्ञोऽयं तेन पुण्येन भूयः तस्मान्नित्यं पूज्य एव शिवः स्यात् ॥ ५२ ॥

पुण्यान्यनन्तान्यपि सन्ति किं तैः प्रदोषकाले शिवपूजनेन ।
भवत्यवश्यं नृप तत्ववेत्ता सौभाग्यसौन्दर्यनिधिश्च मर्त्यः ॥ ५३ ॥

किं कौतुकं सृष्टमिदं शिवेन दृष्टं प्रदोषे शिवलिङ्गमात्रम् ।
सूते सुखानि स्वयमेक एव नान्यत् परं किञ्चिदपेक्षितं च ॥ ५४ ॥

प्रदोषकाले शिवसंमतोऽतः प्रदोषकालीनशिवार्चनेन ।
प्रयाति शैवं पदमद्भुतं तत् न ज्ञायते भूप सुराधिपैश्च ॥ ५५ ॥

यः कोऽपि सायं शिवदर्शनेन भुक्त्वाऽपि भोगान् विपुलानपारान् ।
शिवं प्रयात्येव विना प्रयत्नैः स योगिनामप्यतिदुर्लभो हि ॥ ५६ ॥

स यागवार्तां न करोति शम्भुः न योगवार्तामपि दानवार्ताम् ।
परन्तु सायं शिवपूजकानां करोति वार्तां गिरिजासमेतः ॥ ५७ ॥

प्रदोषकाले समुपागतोऽद्य पुष्पं गृहीत्वा कमलं गृहीत्वा ।
स बिल्वमादाय जलं गृहीत्वा स भूतिमादाय तिलाक्षतानि ॥ ५८ ॥

स धूपमादाय समागतोऽद्य दीपं समादाय फलं गृहीत्वा ।
ताम्बूलमादाय स सायमादौ लिङ्गार्चनासक्तमतिर्भवानि ॥ ५९ ॥

निरीक्ष्यते तेन महाप्रदोषे बिल्वार्चितं लिङ्गमनुत्तमं मे ।
प्रदक्षिणं च प्रणतं च तेन ध्यातं च तेन क्षणमास्तिकेन ॥ ६० ॥

विभूतिपूतेन विलोकितं च पुनः पुनर्लिङ्गमनुस्मृतं च ।
रुद्राक्षमालाछविभूषणं च पुनः पुनस्तत् प्रणतं च लिङ्गम् ॥ ६१ ॥

ताम्बूलमादाय निवेदितं च द्राक्षाफलं तेन निवेदितं च ।
तेनार्पितं तत्कदलीफलं च प्रदोषकाले शिवलिङ्गमूर्ध्नि ॥ ६२ ॥

तेनाम्रपक्वोरुफलानि तानि दत्तानि लिङ्गोपरि तेन दत्तम् ।
दुकूलमत्युज्वलमायतं च तदेव तावद्विपुलं मनोज्ञम् ॥ ६३ ॥

क्षीरप्रवाहैरभिषिक्तमद्य प्रदोषकालेषु दधिप्रवाहैः ।
घृतप्रवाहैश्च मधुप्रवाहैः सुशर्कराराशिभिरर्चितं च ॥ ६४ ॥

मन्दारमालासमलङ्कृतं च लिङ्गं मदीयं घनचन्दनेन ।
कस्तूरिकाकर्दमसंयुतेन प्रदोषकाले खलु शाम्भवेन ॥ ६५ ॥

सुशर्करासद्घृतकुम्भयुक्तं क्षीरान्नमेतेन निवेदितं मे ।
अपूपराशिश्च समर्पितो मे महाप्रदोषे खलु शाम्भवेन ॥ ६६ ॥

अनेन रत्नाभरणानि दत्तान्यनेन दत्ता खलु बिल्वमाला ।
प्रदोषकाले मुहुरादरेण सृष्टं च लिङ्गं मम आदरेण ॥ ६७ ॥

अयं हि हस्तो भगवानयं मे पुण्यस्वभावो भगवत्तरो मे ।
अयं हि हस्तः खलु विश्वभेषजो यस्मादयं मेऽद्य शिवाभिमर्शनः ॥ ६८ ॥

अनेन भुक्तं न दिवा भवानि जलं न पीतं फलभक्षणं च ।
कृतं न ताम्बूलमपि प्रदोषे त्यक्त्वा शिवाराधनमादरेण ॥ ६९ ॥

एते मदीयाः सितभस्मपूताः प्रदोषकाले शिवपूजनाय ।
कृतप्रयत्नाः शिवनामपूताः प्रकृष्टरुद्राक्षविभूषिताङ्गाः ॥ ७० ॥

प्रदोषकालीनशिवार्चनेन भुक्त्वैव भोगान् विपुलानपारान् ।
स्थास्यन्ति सर्वेऽपि ममैव पार्श्वे मत्पूजनं प्राप्य महोत्सवास्ते ॥ ७१ ॥

एते विमानानि मनोहराणि प्राप्यान्तकाराधितपादपद्माः ।
विधीन्द्रनारायणपूजिताश्च स्थास्यन्ति मत्पादनखप्रभाभिः ॥ ७२ ॥

धन्याः प्रदोषेषु शिवार्चकास्ते सर्वे ममैवापरविग्रहास्ते ।
तेषां परं पादरजो यमोऽपि धत्ते शिरस्येव तथैव विष्णुः ॥ ७३ ॥

प्रदोषकालीनशिवार्चनाय मतिः शिवे स्यान्मदनुग्रहेण ।
अघोरसंसारविकारसागरे पुनर्न दुःखानि तया भवन्ति ॥ ७४ ॥

तावन्महापापभयं भवानि यावन्न पूजां रजनीमुखेषु ।
करोति लिङ्गे सितभस्मवीतत्रिपुण्ड्ररुद्राक्षविभूषितः सन् ॥ ७५ ॥

पूजां कोऽपि महाप्रदोषसमये कृत्वा विभूतिप्रभारुद्राक्षाभरणप्रभापरिवृतो लिङ्गे जलैर्वा फलैः ।
बिल्वैर्वा नवकण्टकारिकुसुमैः दूर्वाङ्कुरैर्वा शिवे भूपालत्वमवाप्य मत्पदरजःपुञ्जेन संक्रीडति ॥

को वा तेन समः प्रदोषसमये येनाहमभ्यर्चितो
बिल्वानां खलु मालया जललवैः श्रौतेन वा भस्मना ।
उत्फुल्लैः करवीरचम्पकमहामल्लीप्रसूनैः शिवैः
तत्पादाम्बुजरेणुभिर्मुहुरहो नारायणः पूजितः ॥ ७७ ॥

आजन्माखिलकण्ठशोषणकरैः किं वेदपारायणैः
किं यागैर्धनधान्यनाशनकरैः कन्याप्रदानैरपि ।

किञ्चोत्तुङ्गतुरङ्गदन्तिनिकरागारप्रदानैः शिवे
सायङ्कालशिवार्चनार्जितफलाभावे न मुक्तिर्यतः ॥ ७८ ॥

क्षीणा स्यात् तनुरेव घोरतपसा दानैर्धनं नश्यति
व्यर्थं चायुरपि प्रयाति गिरिजे लिङ्गार्चनं तन्न चेत् ।
तेनैवाखिलभाग्यभोगविभवो भूमण्डले जायते
पश्चान्मुक्तिमुपैति तेन सदृशं लिङ्गं न जाने ध्रुवम् ॥ ७९ ॥

स्वर्गः केवलमङ्गजातसहितात् यागात् स सव्यङ्गतो
व्यङ्गं लिङ्गसमर्चनं जललवैः श्रीबिल्वचूर्णैः कृतम् ।
तेनापारसुरार्चितेन विभवैः स्वर्गापवर्गप्रदं
लिङ्गाराधनमेव तेन सदृशो धर्मो न लोकत्रये ॥ ८० ॥

चित्तं यस्य न लिङ्गपूजनरतं तज्जन्म तावद्गतं
व्यर्थं तज्जननीवयस्तरुवरच्छेदे कुठारः स तु ।
तद्वार्ताऽप्यवसाधनाय गिरिजे लिङ्गार्चनाराधको
यस्तस्यानुचरोऽपि सोऽपि हि महान् कालाद्भयं तस्य न ॥ ८१ ॥

तज्जन्मातिमनोहरं सुखकरं मन्येऽतिमान्ये शिवे
यः सायं शिवपूजनोद्यतमतिर्मध्याह्नकाले शिवे ।
यं दृष्ट्वाऽपि यमादयोऽपि बहुधा कम्पायमानाः सदा
धन्या तज्जननी पिता च सुतरां धन्यः स मान्यः सुरैः ॥ ८२ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे प्रदोषपूजादर्शनफलवर्णनं नाम चतुर्थोऽध्यायः ॥

---

## अथ पञ्चमोऽध्यायः ।

याज्ञ्यवल्क्यः —

इत्युक्तं तद्वचः श्रुत्वा नारदेन सहाविशत् । मन्दिरं लिङ्गसंवीतं रत्नमण्डलमण्डितम् ॥ १ ॥

तत्रानीतः स बालोऽपि ब्रह्मभूपाज्ञया तदा । स बालकोऽपि तं दृष्ट्वा सन्तुष्टो लिङ्गमन्दिरम् ॥

रत्ननन्दीशसंकीर्णं रत्नभृङ्गिविराजितम् । रत्नध्वजसमाकीर्णं मणितोरणसंयुतम् ॥ ३ ॥

ततः प्रफुल्लवदनं दृष्ट्वा राजानमास्तिकम् । नारदं च प्रविष्टोऽसौ गर्भागारं शिवस्य सः ॥ ४ ॥

ततः प्रणम्य तल्लिङ्गं आलिङ्ग्य समभून्मुहुः । भूतिरुद्राक्षपूताङ्गः पूजयामास शङ्करम् ॥ ५ ॥

पञ्चामृतप्रवाहाद्यैश्चन्दनाद्यैर्मनोहरैः । पूजयामास गिरिशं बिल्वपुष्पादिराशिभिः ॥ ६ ॥

नैवेद्यराशिभिर्दिव्यैः धूपदीपादिभिर्मुदा । तेन नाट्यं चकारायं बालको नाट्यमण्टपे ॥ ७ ॥

प्रणम्य बहुधा शम्भुं शिवध्यानपुरःसरम् । ततः स नारदं दृष्ट्वा राजानं च शिवार्चकः ॥ ८ ॥

भूतिरुद्राक्षपूताङ्गं भूतिरुद्राक्षभूषणः । प्रणम्य नारदं प्राह धर्माधर्मं वदेति सः ॥ ९ ॥

नारदः —

साधु साधु महाप्राज्ञ चिरं जीव शिवं व्रज । भज मृत्युञ्जयं भक्त्या जय मृत्युं शिवार्चनैः ॥

धन्योऽसि कृतकृत्योऽसि कृतकृत्यतमः श्रिया । आदृतोऽसि महाशैव भूतिरुद्राक्षवत्तया ॥ ११ ॥

जातमात्रस्य या बुद्धिः महादेवार्चने तव । सा तावन्नाद्भुता सायं दृष्टं लिङ्गं त्वया यतः ॥

तल्लिङ्गदर्शनोत्पन्नपुण्येनैव शिवार्चनम् । अधुना भक्तिरुत्पन्ना सद्यः स्वर्गापवर्गदा ॥ १३ ॥

अद्यप्रभृति न त्याज्यं शिवलिङ्गार्चनं त्वया । न त्याज्यं सहसा बाल भस्मरुद्राक्षभूषणम् ॥

शिवार्चनेन कालोऽयं नेयः कल्याणदो यतः । व्यर्थकालापनयनं न कार्यं ज्ञानिना त्वया ॥

आयुः शिवार्चनेनैव यदि क्षीणं भविष्यति । तदा ज्ञानं च सफलं तदाऽऽयुरपि सार्थकम् ॥ १६ ॥

ज्ञानेनाज्ञानमात्रस्य विनाशे सति सर्वथा । शिवार्चनार्थं यत्नस्तु कर्तव्यस्तेन मुच्यते ॥ १७ ॥

यावद्भूमौ भवेज्जीवः तावद् भ्रमति सर्वथा । संसारघोरनरके पापनक्रग्रहाकुले ॥ १८ ॥

ज्ञानमात्रं च यत् तुल्यं तुच्छजन्तुसमाश्रितम् । तादृशं ज्ञानमन्येषां न मुक्त्यर्थं प्रजायते ॥

पतज्ज्ञानां न किं ज्ञानं तत् किं मोक्षस्य साधनम् । मोक्षसाधनभूतं तु ज्ञानमन्यद्विलक्षणम् ॥

येन ज्ञानेन मुक्तिः स्यात् तद्ज्ञानाभ्यसनात् परम् । मुक्तो भवति तद् ज्ञानं केवलं शिवपूजया ॥

देवोत्तमोत्तमत्वेन ज्ञाते सति महेश्वरे । तद्ज्ञानादेव मुक्तिः स्यात् तद्ज्ञानं च शिवार्चनम् ॥
धर्माधर्मतया ज्ञानं श्रीमहादेवपूजनम् । तेन मुक्तिर्भवत्येव स्वर्गभोगाश्च सर्वथा ॥ २३ ॥
भक्त्या शङ्करमभ्यर्च्य यः स्वर्गं नाभिवांछति । तस्यापि भवति स्वर्गोऽप्यपवर्गो न संशयः ॥
स्वर्गार्थमपि चेद्भक्त्या शङ्कराराधकस्तदा । अपवर्गो भवत्येव स्वर्गोऽप्यत्र न संशयः ॥ २५ ॥
स्वर्गापवर्गदं यस्मात् लिङ्गे शङ्करपूजनम् । तत् तत् फलमदत्वा तु न तिष्ठत्येव सर्वथा ॥ २६ ॥
शिवलिङ्गार्चनाकारो यः कल्पतरुरुत्तमः । स सर्वफलदो नित्यं भवत्येव न संशयः ॥ २७ ॥
रूपलावण्यसंपन्नाः तरुणीगणकोटयः । आसन्ना एव तस्य स्युः यः शिवाराधनप्रियः ॥ २८ ॥
दिव्यतुङ्गतुरङ्गाणां कोटयः समुपस्थिताः । भवन्त्येव न सन्देहः शिवलिङ्गार्चकाङ्गणे ॥ २९ ॥
उपस्थिताः सर्वदापि मत्तमातङ्गकोटयः । यः शिवाराधनोद्युक्तः तद्गृहद्वारमण्टपे ॥ ३० ॥
सुरास्तद्वशमायान्ति यः शिवाराधनोत्सुकः । तिष्ठन्ति देवाः सततं शिवाराधकमन्दिरे ॥ ३१ ॥
शिवज्ञानं समासाद्य यः शिवार्चनतत्परः । तद्दर्शनेन मुक्तिः स्यात् स यस्माच्छङ्करप्रियः ॥ ३२ ॥
शांभवैः सह संलापोऽप्यघकोटिविनाशकः । शांभवानां दर्शनं च शङ्करस्यैव दर्शनम् ॥ ३३ ॥
शांकरो दुर्लभो लोके शिवपूजाऽपि दुर्लभा । दुरात्मनां तथा बुद्धिः कुतः स्याद् शिवपूजने ॥
किं वाऽन्यदुच्यते वाल शांकरेणाऽपि भोजनम् । कृतं हि शिवविद्यायां ततः साऽतीव दुर्लभा ॥
शिवविद्या महाविद्या विद्यानां परमा मता । तस्याः सङ्गोपनं तेन कृतमित्यत्र नाद्भुतम् ॥ ३६ ॥
सा तु विद्या प्रयत्नेन पार्वत्या स्कन्दसन्निधौ । प्राप्ता शिवप्रसादेन स्कन्देनापि महेश्वरात् ॥३७॥
आराधितः शङ्करोऽपि स्कन्देन शिवयाऽपि च । ताभ्यामुक्ता महाविद्या भुक्तिमुक्तिप्रदायिनी ॥
अनन्तयत्नलब्धा सा महाविद्या महात्मना । महादेवेन दत्तेति महागौर्या मुहुर्मुहुः ॥ ३९ ॥
सा या तु मूलविद्याऽस्ति शिवविद्या शिवात्मिका । सा दुर्लभा न कस्यापि सा स्फुरत्यपि सर्वथा ॥
तद्विद्यासाधनीभूतं शङ्कराराधनं परम् । अशांकराराधकस्य दुर्लभं खलु दृश्यते ॥ ४१ ॥
यद्दुर्लभमिति ज्ञानं तदेव सुलभं भवेत् । शिवार्चनेन तत् तस्मात् सर्वसिद्धिप्रदायकम् ॥ ४२ ॥
शिवार्चनेन लोकेषु को वा मुक्तो न जायते । तत्र तावन्न विश्वासो भविष्यति दुरात्मनाम् ॥
महेशार्चनमाहात्म्यं न विजानन्ति मानवाः । अत एव पतन्त्येते नरकेषु न संशयः ॥ ४४ ॥
शिवार्चनपरित्यागः सर्वथा पापसाधनम् । तेन पापेन यात्येव नरकं दुष्करं परम् ॥ ४५ ॥
अयत्नेन प्रयत्नेन नरकं प्रति मानवाः । अहो न नीरमप्यल्पं न च यच्छति पल्लवम् ॥ ४६ ॥

पुष्पं वा देवदेवाय लिङ्गरूपाय सर्वदा । सुलभान्येव पत्राणि जलानि विमलान्यपि ॥ ४७ ॥
सर्वभावेन यो भावो भावपूजनतत्परः । भवे भवेऽपि न भवेत् स भूयो न भविष्यति ॥ ४८ ॥
कः शङ्करज्ञानरसं विहायाऽपि रसान्तरम् । स तावदज्ञो विज्ञेयः संज्ञया विद्ययाऽपि वा ॥ ४९ ॥
अवज्ञायाः परं स्थानं शङ्करानर्चको जनः । तुष्यत्येव महादेवः केवलं तदनुज्ञया ॥ ५० ॥
अवज्ञापात्रभूतस्याप्यवज्ञां यस्तु मोहतः । न करिष्यति तं तावत् पातयत्येव पातके ॥ ५१ ॥
कृत्वा पापान्यनन्तानि सकृद्वा यः शिवं स्मरेत् । स धूतपाप इत्येव विज्ञेयो मुनिसत्तमैः ॥ ५२॥
मुनीनामपि वन्द्यः स्यान्महादेवपरायणः । वन्द्यो नारायणादीनां सुराणामपि सर्वथा ॥ ५३ ॥
शिवार्चनपरो लोके वन्द्यः पूज्यश्च सर्वथा । तत्पूजया परं सर्वे मुक्ता इत्यवधारणा ॥ ५४ ॥
महादेवोऽपि तं दृष्ट्वा तुष्टो भवति मानवम् । यो भक्त्या लिङ्गपूजायां निरतः सर्वसाधनैः ॥
सकृद्वा प्रणमेद्यस्तु शङ्करं भक्तिपूर्वकम् । तस्य पापानि नश्यन्ति स एव पुरुषर्षभः ॥ ५६ ॥
धन्यं कृतार्थं तं मन्ये कृतकृत्योत्तमोत्तमम् । यः क्षणं वा महादेवं लिङ्गे पूजयति प्रभुम् ॥
भस्मोद्धूलितसर्वाङ्गो रुद्राक्षाभरणान्वितः । यो नार्चयति गौरीशं स पातकगणाश्रयः ॥ ५८ ॥
शिवार्चनाग्निसन्दग्धाः पापपर्वतकोटयः । तस्याशक्यं न लोकेऽस्मिन् सर्वथा नृपबालक ॥ ५९ ॥
भाग्यबुद्धिः प्रवृद्धा स्यात् श्रीमहादेवपूजया । दुर्लभं दुर्लभं यस्मात् श्रीमहादेवपूजनम् ॥ ६० ॥
प्रातः काले महादेवं भस्मरुद्राक्षभूषणम् । अभ्यर्च्य लिङ्गरूपं त्वं मुच्यसे नात्र संशयः ॥ ६१ ॥
कालत्रयेऽपि कर्तव्यं शिवलिङ्गार्चनं बुधैः । मध्ये मध्येऽपि कर्तव्यं विरतिस्तस्य नोचिता । ६२॥
यस्य स्याद्विरतिर्दैवात् श्रीमहादेवपूजने । स न संसारपापेभ्यो मुच्यते नात्र संशयः ॥ ६३ ॥
[1] पापार्णवसमाकीर्णो न लिङ्गार्चनतत्परः । लिङ्गार्चनपरित्यागात् पुन [2] श्चाघं भविष्यति ॥ ६४ ॥
शिवलिङ्गार्चनं मन्ये महापातकनाशनम् । तन्न जानन्ति सहसा नरा वानरवृत्तयः ॥ ६५ ॥
येषां नराणां पुण्यानि बहूनि विविधान्यपि । तेषामेव भवेद्धर्मः शिवलिङ्गसमर्चने ॥ ६६ ॥
शिवार्चने न यस्यास्ति विश्वासो मुक्तिदायकः । स एव साध इत्येव ज्ञातव्यो मुनिभिर्नृप ॥
शिवार्चनं विना भूप न पेयं जलमादरात् । न भोक्तव्यं च सहसा ताम्बूलस्य च चर्वणम् ॥
यदेव स्वोपभोगार्थं पवित्रं वस्तु तन्मुदा । निवेद्य शम्भवे पश्चात् स्वभोगाय प्रकल्पयेत् ॥ ६९ ॥
येन भोगोपकरणं न शिवाय समर्पितम् । स नारकीति विज्ञेयः स पामरतरो यतः ॥ ७० ॥

---

1 इदमर्धं E कोशे नोपलभ्यते 2 पुनः सापि C

शिवविज्ञानहीना ये ते सर्वे पामरा नराः । वानरा एव ते तावत् सर्वेऽपि नरकाकराः ॥ ७१ ॥
अशैवसृष्टिः कष्टाय तेषां नरकपातनम् । करोत्येव सदा कालः कालभेदेन केवलम् ॥ ७२ ॥
कालकालार्चनं त्यक्त्वा यः सञ्चरति केवलम् । तं कालदूताः पश्यन्ति मुहुरेव मदोद्धताः ॥ ७३ ॥
पातनीयो मया यत्नादयं नरकसागरे । सर्वथेति वदन्तस्ते प्रधावन्ति मुहुर्मुहुः ॥ ७४ ॥
शङ्करानर्चकस्यास्य कदा वा मरणं भवेत् । कदा नेय इति प्रायः प्रचरन्ति प्रदक्षिणम् ॥ ७५ ॥
आयुरस्याखिलं क्षीणं शिवानर्चनतस्ततः । अयत्नतो मया घोरे कुम्भीपाके निपात्यते ॥ ७६ ॥
अयं दुरात्मा दुर्वृत्तः शिवानर्चनतत्परः । एतदर्थं मया सृष्टाः सन्तप्तायसशृङ्खलाः ॥ ७७ ॥
सन्तप्तेष्वायसस्तम्भेष्वशैवान् तप्तमुद्गरैः । बध्वा सन्ताडयिष्यामो मुहुरद्य न संशयः ॥ ७८ ॥
पूर्वं यमपुरी सर्वा शून्या जाता ततः परम् । अशैवैरेव संपूर्णा सा तद्वासाय कल्पिता ॥ ७९ ॥
अशैवसदनत्वेन कुम्भीपाकं वदन्त्यतः । अत्राशैवाः प्रयत्नेन नेयाः सर्वे न संशयः ॥ ८० ॥
अशांभवास्तु पापिष्ठाः सर्वे विष्ठालयेष्वपि । तप्तेषु पातनीयास्ते न त्याज्याः सर्वथा मया ॥
संतप्तमूत्रकुण्डेषु शिवार्चनविवर्जिताः । पतिष्यन्ति न सन्देहः तेषां स्थानानि तान्यपि ॥ ८२ ॥
यानि यान्यतिदुष्टानि स्थानानि यममन्दिरे । तानि स्थानानि सृष्टानि शैवान्यस्य दुरात्मनः ॥
पूयकुण्डानि तप्तानि रेतसा संयुतान्यपि । अशैवार्थं निर्मितानि यमेनैव महात्मना ॥ ८४ ॥
सर्वे पापानुरूपेण दण्डनीयाः प्रयत्नतः । अशैवानां तु नवधा ते घोरनरकाश्रयाः ॥ ८५ ॥
किञ्चावासस्तु ये येषां स तेषामिति निश्चयात् । अशैवानां निवासाय क्लृप्तं नरकमन्दिरम् ॥
सन्तप्तभिण्डिपालानां कुण्डेषु विनिपातिताः । अशैवास्तु मया पूर्वं तिष्ठन्त्येवाधुनापि हि ॥ ८७ ॥
ते तावन्न मया त्याज्याः कल्पान्तेऽपि न संशयः । अहं तद्दुःखदानाय विधिना सृष्ट इत्यतः ॥
इत्थं यमभटाः सर्वे प्रवदन्ति हसन्ति च । अशैवालोकनेनैव बम्भारवपुरःसरम् ॥ ८९ ॥
अतः कुरुष्व यत्नेन लिङ्गे शङ्करपूजनम् । लिङ्गार्चने कृते भीतिर्न मृत्योरपि जायते ॥ ९० ॥
मृत्युर्बिभेति भीतास्ते कालस्यापि भटाः सदा । मृत्युञ्जयार्चनं दृष्ट्वा जलैरपि फलैरपि ॥ ९१ ॥
कल्याणान्यनुधावन्ति कल्याणपतिपूजया । सर्वकल्याणनाथोऽयं मङ्गलापतिपूजया ॥ ९२ ॥
स सर्वमङ्गलाकान्तः सर्वमङ्गलसंश्रयः । सर्वमङ्गलदाता च शिवभक्ताय केवलम् ॥ ९३ ॥
आलस्येनापि यः कुर्यान्महादेवस्य पूजनम् । स तरत्येव संसारमहापङ्कोरसागरात् ॥ ९४ ॥
सुलभं च महेशस्य पूजनं शांभवस्य तु । अशांभवानां कठिनं तत्र नाधिकृतोऽपि सः ॥ ९५ ॥

शैवत्वमङ्गं शिवपूजनेषु मुख्यं न तेनापि विना शिवार्चा ।
अन्यच्च तत्साधनमस्तु तच्चु मुख्यं तदेवेत्यवधारितं हि ॥ ९६ ॥

तेनाधिकारे सति सर्वदापि शिवार्चनं तेन कृतं प्रयत्नात् ।
सर्वार्थसिद्ध्यै भवतीति मन्ये स एव धन्यो भुवनत्रयेऽपि ॥ ९७ ॥

शैवेन दत्तं फलमम्बु पत्रं शुष्कं नवं वा त्रुटितं क्षतं वा ।
गृह्णाति शम्भुः शिरसा ददाति तस्मै फलान्यप्यमितानि नित्यम् ॥ ९८ ॥

यो विश्वस्य महेश्वरं त्रिनयनं लिङ्गे समभ्यर्चयेत्
भक्त्या भूतिविभूषितोऽतिमुदितो रुद्राक्षभूषाश्रयः ।
तत्पादाम्बुजरेणुभिर्जगदिदं पूतं सुराः पावनाः
सर्वे विष्णुचतुर्मुखप्रभृतयः तस्मात् स धन्यः सदा ॥ ९९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे राजकुमारनारदसंवादे
शिवपूजामहिमावर्णनं नाम पञ्चमोऽध्यायः ॥

—:×:—

## अथ षष्ठोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा प्रहृष्टः सोऽपि बालकः । महाविद्यां प्रयच्छेति प्रणतो नृपनन्दनः ॥ १ ॥
महाविद्याप्रदानेन कृतार्थं कुरु मां प्रभो । शिवविज्ञानसंपन्नो गुरुर्दुर्लभ एव हि ॥ २ ॥
सर्ववेदान्ततत्वज्ञ त्वं मह्यं मुनिसत्तम । शिवविद्यां प्रयच्छाद्य कृतार्थं कुरु मां प्रभो ॥ ३ ॥
उपदिष्टा महाविद्या यदि सद्गुरुणा तदा । मोक्षोपयुक्ता सा तावत् भवतीत्येव मे मतिः ॥ ४ ॥
मदद्दृष्टवशेनैव तवात्राद्य समागमः । मय्यस्त्वनुग्रहः शम्भोरित्यनेन मितं खलु ॥ ५ ॥
यद्यद्य शांभवीं विद्यां मह्यं दास्यसि सादरम् । तदा स्याज्जलपानं मे दूरे भोजनमस्तु ॥ ६ ॥
यमसिंहासने वार्ता संश्रितेन मया श्रुता । तां वार्तामधुना वक्ष्ये शृणु नारद सादरम् ॥ ७ ॥
मयि तत्र स्थिते कोऽपि समानीतो भटैस्तदा । तं दृष्ट्वा प्राह कालोऽपि चित्रकूटं महामतिम् ॥
किमनेन महाविद्या प्राप्ता नेत्यतिसत्वरम् । ततस्तेनापि न प्राप्ता सा विद्या सूक्तमादरात् ॥९॥

ततः परं यमः क्रूरः तं दृष्ट्वा भीमशासनः । कोपाग्निना परं दृष्ट्वा न शान्तः कोपसंकुलः ॥ १० ॥

ततस्तं प्रेषयामास कुम्भीपाकाय सादरम् । पच्यतां खाद्यतां तीव्रैः अग्निशस्त्रैर्मुहुर्मुहुः ॥ ११ ॥

न प्राप्ता शांभवी विद्या तेन तावद्दुरात्मना । अतस्तेनैव तद्दुःखमशैवः प्राप दुर्मतिः ॥ १२ ॥

शिवविद्याविनिर्मुक्तो नरो न भवति ध्रुवम् । तयैव विद्यया पूर्वं गणत्वं प्राप्तमास्तिकैः ॥ १३ ॥

शिवविद्यामनुप्राप्य शिवार्चनपरो यदि । तदा संसारमोक्षः स्यादिति श्रुतमनेकधा ॥ १४ ॥

शैवविद्यासमाना तु न विद्या सर्वथेत्यपि । वदन्ति वेदवेदान्तपारगाः शिवपूजकाः ॥ १५ ॥

मदीयेनैव भाग्येन त्वया तावदिहागतम् । अतः परं शैवविद्याप्रदानं कुरु सादरम् ॥ १६ ॥

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । कोऽयं नारद तत्वज्ञ किञ्च किं नास्य सूतकम् ॥

नारदः —

शिवार्चनप्रभावेन तत्वज्ञोऽयं नृपोत्तम । नचास्य सूतकं नापि शौचमागन्तुकं नृप ॥ १८ ॥

स्वत एव विशुद्धात्मा शिवपूजापरायणः । अतोऽस्य शौचकर्माणि शङ्कितान्यपि न ध्रुवम् ॥

यस्य देहाभिमानोऽस्ति गौरोऽहमिति धीरपि । तस्याशौचं न तत्वज्ञः सूतकीत्यवधारय ॥ २० ॥

एतस्य पुण्यपुञ्जस्य दर्शनादपि सर्वथा । अशुचिश्च शुचिर्नूनं अस्याशौचं न सर्वथा ॥ २१ ॥

शिवभक्तिविहीनास्तु अशौचा एव सर्वथा । मरणान्तं तदाशौचं मरणान्तं वरं च तत् ॥ २२ ॥

अशुचिर्वा शुचिर्वापि यः स्मरेद्गिरिजापतिम् । स शुचिस्तेन युक्तोऽपि शुचिर्भवति सर्वथा ॥ २३ ॥

अशुचित्वं तावदेव यावन्नैव स्मृतः शिवः । स्मृते शिवे शुचिः सद्योऽप्यन्यापेक्षा ततस्तु न ॥

यः शिवस्मरणोद्युक्तः सोऽपि पावनपावनः । श्रुतः स्मृतः शिवो मर्त्यैः तत्राऽप्यस्ति किमद्भुतम् ॥

शिवप्रभावमज्ञात्वा नित्यसूतकितां गताः । सर्वकर्मपरिभ्रष्टाः ते यान्ति नरकं ध्रुवम् ॥ २६ ॥

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । शिवदीक्षासमारम्भमहोत्साहसमन्वितः ॥ २७ ॥

अलंकृत्य महेशस्य मण्टपं रत्नमण्डितम् । पुष्पमाल्यादिभिर्वस्त्रैः विविधैस्तोरणैरपि ॥ २८ ॥

महादेवमहापूजां कृत्वा स्नानादिपूर्वकम् । जातकर्मादिकं सर्वं समाप्य स तु भूपतिः ॥ २९ ॥

नाभिनालस्य विच्छेदं कृत्वा बालस्य भूपतिः । स्नापयामास तं बालं शिवतीर्थैर्मनोहरैः ॥ ३० ॥

भूत्या रुद्राक्षमालाभिरलंकृत्य प्रयत्नतः । कलशस्थापनं कृत्वा हुत्वा वह्नौ घृतादिभिः ॥ ३१ ॥

शिवमन्त्रैर्धर्मरूपैः पञ्चाक्षरपुरःसरैः । गृहीत्वा बालकं राजा गत्वा शङ्करमन्दिरम् ॥ ३२ ॥

स्वयं संपूज्य विधिवत् महादेवं स्वसाधनैः । पूजयित्वा सुनैवेद्यैः भक्ष्यैरपि फलादिभिः ॥ ३३ ॥

कारयित्वा बालकेन पूजाद्रव्यैर्मनोहरैः । लिङ्गमूर्तेर्महेशस्य नृपः सन्तुष्टमानसः ॥ ३४ ॥
ततः परं नारदोऽपि भस्मस्नानादिना शुचिः । ददौ दीक्षां बालकाय नवनीतादिभिर्मुदा ॥ ३५ ॥
ततः परं महाविद्यां शैवीं पञ्चाक्षरात्मिकाम् । ददौ स्मृत्वा महादेवं पार्वतीं गणनायकम् ॥
स्कन्दं च वीरभद्रं च स्मृत्वा च कालभैरवम् । नन्दिकेशादिकान् सर्वान् महाशिवगणानपि ॥
शैवीं विद्यां स संप्राप्य रराज सुतबालकः । ततस्तद्देहतः कापि पापमूर्तिर्विनिर्गता ॥ ३८ ॥
मषीवर्णा वक्रदन्ता वक्रपृष्ठभुजान्तरा । वक्रदंष्ट्रा काणनेत्रा दीर्घरूक्षशिरोरुहा ॥ ३९ ॥
तां दृष्ट्वा स तु भूपालो भीतो नारदमाह सः । केयमित्यतिभीत्यैव मन्दं गद्गदवाक् सदा ॥

नारदः —

पापमूर्तिरियं भूप बालदेहाद्विनिर्गता । शिवविद्याग्निसन्दग्धा नारकं देहमाश्रिता ॥ ४१ ॥
अतः परं पापमूर्तिस्तमुवाच महामुनिम् । क्व गन्तव्यं मया स्वामिन् स्थिता तद्देहमाश्रिता ॥
शिवविद्याप्रदीप्तिर्या तया तत्तनुरावृता । अतः परमवस्थानमत्र मे दुर्लभं खलु ॥ ४३ ॥
इति तद्वचनं श्रुत्वा राजा विस्मयमागतः । बालोऽपि राजकीयाश्च मन्त्रिणोऽपि द्विजा अपि ॥
तामाह नारदो धीरः प्रवृद्धां च प्रतिक्षणम् । यमालयमितो याहि सत्वरमित्यपि ॥ ४५ ॥
एतद्देशे त्वया तावन्न स्थेयं दुर्मुखि व्रज । इति तद्वचनं श्रुत्वा पापमूर्तिरुवाच तम् ॥ ४६ ॥

पापमूर्तिः —

तत्वज्ञोऽसि मुनिश्रेष्ठ शरणागतवत्सल । अपावनानामनिशं पावनत्वं त्वदीक्षणात् ॥ ४७ ॥
दृष्टेऽपि शांभवे दैवात् पापशङ्का कथं भवेत् । पवित्राणां पवित्रत्वमनपेक्षितमेव हि ॥ ४८ ॥
अपवित्रे पवित्रत्वं कर्तुं शक्तिस्तवाधुना । अतः पावय मां दीनां सद्यः सुरमुने मुदा ॥ ४९ ॥
स्थितमेनं समाश्रित्य बहुकालं मयाऽधुना । अपारकल्पगणना कर्तुमेव न शक्यते ॥ ५० ॥
अनेन सह वासोऽपि नरकेषु कृतो मया । अनन्तब्रह्मकल्पेषु तेषां तु गणनाऽपि न ॥ ५१ ॥
प्रतिजन्मनि पापानि कृत्वैवायं मुहुर्मुहुः । नरकेषु पतत्येव लज्जा नास्याभवन्मुने ॥ ५२ ॥
न शिवार्चनवार्ताऽपि श्रुताऽनेन प्रयत्नतः । शिवार्चकैर्न सङ्गोऽपि कृतो मङ्गलदायकः ॥ ५३ ॥
दूरतोऽपि न दृष्टास्ते शांभवाग्रेसराः परम् । अनेन मन्दिरं दृष्टं न कदाऽपि शिवस्य तु ॥ ५४ ॥
न प्रासादप्रकारो वा प्राकारो वा शिवस्य तु । तथोत्सवोऽपि न रथो दृष्टोऽनेन दुरात्मना ॥
अटनं दुष्टगेहेषु कृतमेतेन सर्वदा । नीचसंभाषणेनैव कालो नीतो दुरात्मना ॥ ५६ ॥

शिवनाम न जानाति सोऽयं शुनकसन्निभः । नानाव्रणैः व्याधिभिश्च क्षुधितः पीडितोऽप्ययम् ॥
ब्राह्मण्यमपि संप्राप्य महापातककोटिभिः । समाक्रान्तो यातनां च भुक्त्वाऽयं स्थित एव हि ॥
स्मार्तं वा वैदिकं कर्म नानेन ज्ञातमेव हि । नास्य पुण्ये रतिर्जाता कदाऽपि मुनिसत्तम ॥ ५९ ॥
न चैतत्पापगणनां कर्तुं शक्तो यमोऽपि सः । चित्रगुप्तादयः श्रान्ताः तत्पापामितसंख्यया ॥
यद्यत् कृतं पुरा पापं तेन पापं पुनः पुनः । पुनः पापं पुनः पापं आर्जितं गणनाऽस्य न ।६१॥
भूपांशुगणनापि स्यात् कदाचिन्मुनिसत्तम । न चैतत्पापगणना शेषेणापि च शक्यते ॥ ६२ ॥
यमदूताः परिश्रान्ताः ताडनेनास्य कोटिशः । छिन्नानि भिण्डिपालानि शस्त्राणि त्रुटितान्यपि ॥
एतद्देहाभिघातेन सर्वदा यममन्दिरे । पुनर्जनिः पुनर्मृत्युः पुनश्च यमयातनाः ॥ ६४ ॥
एवं जन्मानि नीतानि कष्टदान्येव कोटिशः । पापनाशकरं कर्म न ज्ञातं न कृतं मुने ॥ ६५ ॥
पातकं च परं ज्ञातं कृतं च मुहुरादरात् । भूभारभूत एवायं पापराशिसमाश्रयः ॥ ६६ ॥
न पापराशिगणना पापानां गणना कुतः । तानि सर्वाणि पापानि सायं शङ्करदर्शनात् ॥ ६७ ॥
नष्टानि नार्जितं पुण्यं तद्भिन्नं मुनिसत्तम । देहारम्भकपुण्यानां मूर्तिरेषा क्व यास्यति ॥ ६८ ॥
एतस्य नाशः केन स्यात् कदा वा तं वदाधुना । एतत् चरममेतस्य शरीरमिति निश्चितम् ॥
अतः परमनेन स्यात् सङ्गोऽप्यत्यन्तदुर्लभः । दुष्टो विषतरोर्मध्ये यथा कीटः स्थितस्तथा ॥७०॥
तथा स्थितं मया देहे बालस्यास्य मुनीश्वर । यानि वीर शरीराणि कीटकेष्वस्य तेष्वपि ॥ ७१ ॥
मया स्थितं पापभोगैः केवलं नीयते दिनम् । किञ्चैतज्जननादत्र शांभवव्याप्लुता मही ॥ ७२ ॥
भविष्यति मया कुत्र स्थातव्यं तद्वदाधुना । न पापिष्ठशरीराणि राष्ट्रेऽस्मिन् मुनिपुङ्गव ॥ ७३ ॥
इतो बहिर्वा गमनं मम शक्यं न सर्वथा । शांभवाग्रेसरे दृष्टे भीतिरस्याः प्रजायते ॥ ७४ ॥
पलायनं च सहसा न भविष्यति सर्वथा । मुक्तिः संपादनीया मे भूतिदानेन केवलम् ॥ ७५ ॥
विभूतिः पापमूर्तीनां नाशायाशु प्रजायते । विभूतिधारणादेव मुक्ताः पूर्वं मुनीश्वराः ॥ ७६ ॥
प्राप्तं मुनीश्वरत्वं च केवलं भूतिधारणात् । ऐश्वर्यं परमं प्राप्तं भूतिरुद्राक्षधारणात् ॥ ७७ ॥
न भूतिसदृशं वस्तु भूतिदत्वेन कीर्तितम् । भूतिर्विभूषणं येषां ते भूतपतिसेवनम् ॥ ७८ ॥
कृत्वा मुक्तिपतिं यान्ति महादेवं कृपानिधिम् । भूतिप्रभावो न ज्ञातः केनापि भुवि सर्वथा ॥
अतः संसारभारेण भवन्ति परिपीडिताः । अलौकिकं लौकिकं वा स्वतो भस्मातिपावनम् ॥
तत्पावयति पापिष्ठवरिष्ठान् दुष्टचेतसः । भस्म स्मृत्वाऽपि मुच्यन्ते भक्त्या परमपावनम् ॥ ८१ ॥

महाभस्मप्रियं भस्म तद् भस्मातीव दुर्लभम् । पापानां भर्त्सनाद्भस्म भासनादीश्वरस्य च ॥ ८२ ॥
तद्भस्म देयं तेनैव मम मुक्तिर्भविष्यति । भवन्तं गुरुमासाद्य भवत्करतलार्चितम् ॥ ८३ ॥
भस्माऽऽदाय गृहीत्वाद्य मुक्तैवाहं भवाम्यहो । महानुभावे यो भावः स्वभावेन स्वभावताम् ॥
संभावयत्यभावस्याप्येतत् चित्रं न वस्तुतः । इति तद्वचनं श्रुत्वा कृपालुरपि नारदः ॥ ८५ ॥
क्व ते भूतिः क्व ते मूर्तिः मुक्तिवार्तापि दूरतः । त्वया निष्ठुरमत्रोक्तं बालकस्य महात्मनः ॥
शैवविद्यादीक्षितोऽयं अत्र तत्पापसाधनम् । यस्यास्ति शैवविद्यायां बुद्धिः सोऽपि महान् खलु ॥
तत्र निष्ठुरमुक्त्वान्ते नरकं याति सर्वथा । अज्ञानेन प्रमादाद्वा प्रसङ्गाद्वा कदाचन ॥ ८८ ॥
शिवज्ञानान्वितं दृष्ट्वा न नमेद् यः स पापधीः । शैवविद्यादूषकानां नरके वसतिः खलु ॥ ८९ ॥
अतः परं त्वयाऽप्याशु गन्तव्यं नरके ध्रुवम् । शैवदीक्षापूतदेहः पुण्यपुञ्ज इति स्मृतः ॥ ९० ॥
तत्र निष्ठुरमुक्त्वाऽन्ते यान्त्येव नरकं ध्रुवम् । विभूतिधारणे भक्तिः शङ्करे शाङ्करेऽपि वा ॥
यस्य स्यात् स तु मुक्तः स्यात् अन्यस्य तु न सा खलु । भस्मधारणपूतात्मा यः पूतः शिवविद्यया ॥
स एव तावदुत्कृष्टः तत्रेष्टं चेष्टभाषणम् । शिवविद्यादीक्षितेषु विनयेनानुवर्तनम् ॥ ९३ ॥
सर्वपापविनाशाय सद्य एव प्रजायते । शिवविद्यामणिः कण्ठे यदा यस्याधितिष्ठति ॥ ९४ ॥
तदा तद्वशमायान्ति सर्वे ब्रह्मादयः सुराः । कल्पान्तवह्निरूपस्य बालस्यास्याधुना मया ॥ ९५ ॥
तेजो न सह्यते सोढुं निष्ठुरोक्तिस्तु दूरतः । यस्तु स्वापेक्षया नीचः तत्र निष्ठुरभाषणम् ॥ ९६ ॥
कदाचिदुचितं तत्राप्युचितं तत् कथं सदा । स्वाधीनां रसनां प्राप्य निष्ठुरं यो वदिष्यति ॥९७॥
स नारकीति विज्ञेयो यतस्तत् पापसाधनम् । शिवनामोच्चारणाय सृष्टा जिह्वा विशेषतः ॥
ततस्तया निष्ठुरोक्तिः न युक्ता देहिनां खलु ।

मधुरान्मधुरं मनोहरं सुकरं शङ्करनाम केवलम् ।
वदति श्रुतिभूतिपावनो मधुरास्वादनलोलजिह्वया ॥ ९९ ॥

मधुरोक्तिभिरेव तोषणं मधुरालापसुधारसज्ञया ।
अनया खलु जिह्वया मुहुः शिवनामामृतपानमीप्सितम् ॥ १०० ॥

आरोग्यं परमायुरुत्तममतिः सौभाग्यवृद्धिर्यशः
श्रेयो रूपमुदारता रतिसुखं सन्तानवृद्धिर्महः ।

कान्तिः शौर्यमपारशत्रुविजयो विद्याऽपि संप्राप्यते
नित्यं शङ्करपूजया शिवमहाविद्यावता सर्वथा ॥ १०१ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे नारदात् राजबालस्य शिवविद्योपदेश-
महिमवर्णनं नाम षष्ठोऽध्यायः ॥

—:×:—

## अथ सप्तमोध्यायः ।

याज्ञवल्क्यः —

इत्युदीरितमाकर्ण्य पापमूर्तिरुवाच तम् । कृतार्थं कुरु मां दीनां दीनबन्धो महामुने ॥ १ ॥
अज्ञानेनापराधानां करणेऽपि मुहुर्मुहुः । क्षन्तव्यास्ते महाभाग क्षमा युक्ता महात्मनाम् ॥ २ ॥
कृतापराधे कुर्वन्ति करुणां दीनवत्सलाः । तदभावे तया किं वा मुने करुणया वद ॥ ३ ॥
यमोऽपि करुणाहीनः करोति करुणां खलु । कदाचिदिति मे तावदपराधं प्रणश्यतु ॥ ४ ॥
अपारपापनाशाचेत् सामर्थ्यं तर्हिं किं मया । अपराधापकरणे न शक्तिः शांभवस्य ते ॥ ५ ॥
क्षणं वाऽनेन संलापः शांभवेन महादरात् । कृतस्तस्याद्य विलयो भवतीत्यपि निश्चितम् ॥ ६ ॥
पापराशिविनाशाय शांभवाङ्गानिलोऽप्यलम् । गङ्गातरङ्गानिलवद् विशेषो न तयोर्यतः ॥ ७ ॥
शैवाङ्गालोकनं भक्त्या सकृद्वा यः करिष्यति । स पूतः कृतकृत्यश्च तत्पुण्यममितं खलु ॥ ८ ॥

शैवाङ्गसङ्गः खलु दुर्लभोऽयं लोकोत्तरः पावनपावनोऽयम् ।
त्वं शैवविद्यानिधिरेव साक्षात् निधानलाभे सुखमेव नूनम् ॥ ९ ॥
लब्ध्वा निधानानि भवन्ति लोके बहूनि तावत् सुखिनस्तथा च ।
अनेकशाङ्गाङ्गसमागमेन लभ्या सुखानां न परम्परा किम् ॥ १० ॥
किञ्चाधुना सन्निहितः शिवोऽत्र लिङ्गेषु तुङ्गेषु मनोहरेषु ।
तद्दर्शनादेव विमुक्तिरद्य जाता ममेति प्रमितिः प्रवृत्ता ॥ ११ ॥
अतः परं देहविसर्जनाय तावद्विलम्बोऽस्तु ततस्तु किं मे ।
किंचाधुना लिङ्गशरीरनाशो लिङ्गेषु दृष्टेष्वधुनैव वृत्तः ॥ १२ ॥
लिङ्गानि दृष्टानि यदैव येन तदैव पापानि लयं गतानि ।
गतेषु पापेषु न लिङ्गदेहः पापानुबन्धः खलु लिङ्गदेहः ॥ १३ ॥

यदिन्दुमौलिस्थलमात्रमेव दृष्टं महाङ्गप्रलयाय शक्तम् ।
अतः परं लिङ्गविलोकनेन पापस्वरूपान्न भयं भवाब्धौ ॥ १४ ॥

भाग्यानि लिङ्गानवलोकनेन नश्यन्ति तावद्विलयस्य बीजम् ।
तदेव यस्मादिति निश्चयं हि लिङ्गेषु दृष्टेषु सुखानि नूनम् ॥ १५ ॥

सुखानि लिङ्गप्रभवानि तानि लिङ्गाद्भवन्त्येव विलोकनेन ।
अतः परं मे सुखसन्ततिः स्यात् अत्रान्तरायस्तु न सर्वथाऽपि ॥ १६ ॥

शाङ्गाङ्गसङ्गस्त्वतिदुर्लभो हि लिङ्गाङ्गसङ्गस्तदपेक्षया हि ।
दैवात् द्वयोरत्र समागमेन पुनः पुनः स्यात् सुखकल्पवल्ली ॥ १७ ॥

शाङ्गानि लिङ्गानि चराचराणि स्थिराणि तेषामवलोकनेन ।
आनन्दराशिः समुदेति नूनं अतः कुतः स्याद्भयराशिभीतिः ॥ १८ ॥

इति तद्वचनं श्रुत्वा नारदो हृष्टमानसः । ददौ भूतिकणं तस्मै तदा तल्लिङ्गमण्टपे ॥ १९ ॥
द्वित्रैरपि पवित्रैस्तैः युता भस्मकणैः क्षणात् । तत्याज तां तनुं घोरां कुरूपां कुत्सितामपि ॥ २० ॥
अतः पापशरीरस्य नाशे तद्देहदेवता । तद्भूतिकणयोगेन दिव्यरूपमवाप च ॥ २१ ॥
सूर्यमण्डलसंकाशां तनुं प्राप्य मनोहराम् । पौरुषं रूपमासाद्य बभौ विस्मापयन् जनम् ॥ २२ ॥
ततो विभूतिपूताङ्गो रुद्राक्षाभरणान्वितः । प्रणम्य दण्डवद्भूमौ पूजयामास शङ्करम् ॥ २३ ॥
ततस्तं पुरुषं दृष्ट्वा भूपालः प्रीतमानसः । पूर्वपूर्वभवे कोऽयं तद्वदेत्याह नारदम् ॥ २४ ॥

नारदः —

दृष्टं तावत्त्वया राजन् अतिविस्मयसाधनम् । शिवविद्याप्रभावोऽपि ज्ञातः खलु विशेषतः ॥ २५ ॥
राजन्ननादयः सर्वे जीवास्तावद्विशेषतः । जीवानां देहभेदोऽपि नटस्येवानुवर्तते ॥ २६ ॥
नटो बहूनि रूपाणि गृह्णात्येकस्तथा खलु । देहद्वयं समासाद्य सर्वदाप्यधितिष्ठति ॥ २७ ॥
भिन्ना लिङ्गशरीरस्य देवता काचिदेव सा । देवता स्थूलदेहस्य सापि भिन्नैव तिष्ठति ॥ २८ ॥
स्थूलदेहस्य विलये लिङ्गदेहोऽनुवर्तते । लिङ्गदेहलयस्तावत् मुक्तिकाले प्रजायते ॥ २९ ॥
द्विविधो मुक्तिकालोऽपि जीवन्मुक्ति ... ... । ज्ञेया परममुक्तिस्तु सर्वतस्तु विलक्षणा ॥ ३० ॥
जीवन्मुक्तिदशायां च शिवविद्याप्रभावतः । लिङ्गदेहविनाशोऽपि कस्यचित् जायते नृप ॥ ३१ ॥
लिङ्गदेहाभिमानोऽपि भूतिसङ्गाद् विनश्यति । तद्देहदेवतायाश्च तद्विनाशेन केवलम् ॥ ३२ ॥
तपसा देवता रम्यं धृत्वा देहं विशेषतः । स्वेच्छया चरते प्रीत्या सत्यलोकादिषु ध्रुवम् ॥ ३३ ॥

अतः परमयं तावत् पुरुषो भूतिभावनः। शिवनामानुसन्धानसुधापानरतो भवेत् ॥ ३४ ॥
अतः परं न देहे तु स्पृहाऽप्यस्य भविष्यति। अयं देहः पुण्यरूपो यत्र कुत्रापि सञ्चरेत् ॥ ३५ ॥
सञ्चारे शिवनामानि गायन्नेव मुहुर्मुहुः। पापदेहस्य विलये न पुनः पापसङ्गमः ॥ ३६ ॥
दैवान्मया पापदेहः परित्यक्तः शिवाज्ञया। अतः परं न तस्यास्तु सङ्गः सर्वात्मना मम ॥ ३७ ॥
मुक्तोऽहं कृतकृत्योऽहं द्वित्रैर्भूतिकणैरपि। कृपा वृत्ता महेशस्य देवदेवस्य शूलिनः ॥ ३८ ॥
अतः परं न कालाद्वा मम भीतिरतः परम्। यत्र कुत्राऽपि सञ्चारो लोकेषु विगतस्पृहः ॥ ३९ ॥
अतः परं न चादानं न विसर्गोऽपि कुत्सिते। न प्रवृत्तिर्निवृत्तिश्च निर्गमः स्थितिरेव वा ॥ ४० ॥
न कार्यं कारणं वाऽस्य तदाकांक्षाऽपि न ध्रुवम्। न सङ्गतिरसङ्गो वा स्वानन्दानुभवे सति ॥
महाशांभवदत्तेन भस्मना लिङ्गदर्शनैः। प्राप्तमेतन्महाभाग्यं दुर्लभं खलु सर्वथा ॥ ४२ ॥
अनेककल्पपर्यन्तं देहबुद्धिः स्थिता मम। अतः परं जितं नूनं नष्टा संसारशृङ्खला ॥ ४३ ॥
चिरं कुत्सितगर्भेषु स्थितं दुःखेन सर्वथा। निर्गतं कुत्सितेनैव योनिमार्गेण कोटिशः ॥ ४४ ॥
सहस्रकोटिसंख्याकयोनिमार्गविनिर्गमात्। भुक्तान्यपारदुःखानि तानि नातः परं खलु ॥ ४५ ॥
सङ्गः समभवद्योऽयं शांभवैः सह तेन मे। संसारबन्धमोक्षोऽभूत् कृतकृत्योऽस्मि सर्वथा ॥ ४६ ॥
न च ब्रह्मत्ववाञ्छा मे विष्णुत्वं नाभिवाञ्छितम्। कालो नेयः प्रयत्नेन शिवनामानुगायनैः ॥
सितभूतिस्वरूपेण सुधानिधिरुपागतः। तेन तृप्तोऽस्मि सततं निवृत्ता सा तृषा मम ॥ ४८ ॥
क्षुधया दग्धमुदरं तृषयापि पुनः पुनः। याञ्चा दैन्यान्न भूत्यादि दग्धो देहः पुरा खलु ॥ ४९ ॥
अकस्माद् देहसंबन्धविश्लेषः किमभून्मम। अहो कल्याणकालोऽयं कल्याणपतिदर्शनात् ॥ ५० ॥
स सर्वमङ्गलाकान्तो लिङ्गरूपेण भाग्यतः। दृष्टः कष्टविनाशाय कोऽयमद्य महोदयः ॥ ५१ ॥
लिङ्गदर्शनकालोऽयं स महाभ्युदयप्रदः। दुर्लभः सर्वकालेषु महतामपि दुर्लभः ॥ ५२ ॥
अतः परं यत्र यत्र शिवलिङ्गानि तत्र मे। सञ्चारः सुखदस्तत्र निवासोऽपि कदाचन ॥ ५३ ॥
शिवलिङ्गानि दृष्ट्वैव कालो नेयो मया मुहुः। शिवार्चनं प्रकर्तव्यं प्रमादेन विना मया ॥
शांभवैः सह सङ्गोऽपि कर्तव्यश्च पुनः पुनः। महादेवध्यानमेव कर्तव्यं सततं मया ॥ ५५ ॥
महादेवकथासिन्धुर्यत्र यत्र प्रवर्धते। तत्र तत्र मया स्थेयं प्रमादेन विना खलु ॥ ५६ ॥
[1] शिवनामसुधापानैः विना तनुरियं यदि। तया सुखमिति ज्ञातं मया भाग्यवशात् खलु ॥

---

1. अयं श्लोकः C E कोशयोः न दृश्यते।

शिवस्थानपरित्यागो न कर्तव्यो विशेषतः। शिवतीर्थेषु सततं कर्तव्यमवगाहनम् ॥ ५८ ॥
शिवलिङ्गार्चनेनैव कालो नेयो मया मुहुः। शैवसङ्गपरित्यागे बुद्धिर्मास्तु ममाधुना ॥ ५९ ॥
अमृतत्वप्रापकानि शिवनामानि सन्ततम्। जपनीयानि यत्नेन तेन कालभयं कुतः ॥ ६० ॥
सौभाग्यभोगकालोऽयं संप्रत्यस्मासु वर्तते। शिवप्रसादादेतस्य वृद्धिरस्तु सदा मम ॥ ६१ ॥
देवोत्तमे महादेवे भक्तिरव्यभिचारिणी। ममास्तु तावता नित्यमानन्दोऽपि प्रवर्धताम् ॥ ६२ ॥

अशैवमार्गप्रलयप्रवृत्तिरतः परं तावदुमासहाय।
भविष्यति प्रायश एव यस्मात् ममाऽप्ययं लिङ्गशरीरनाशः ॥ ६३ ॥

कल्पावसाने खलु मुक्तिकाले भवेदयं लिङ्गशरीरनाशः।
ममाधुना शांभवदत्तभूत्या वृत्तः परं लिङ्गशरीरनाशः ॥ ६४ ॥
कष्टानि मे लिङ्गशरीरयोगात् बहूनि चान्यान्यपि योनियोगे।
तस्य प्रसादेन तु योनियोगो न यातना नापि शरीरबन्धः ॥ ६५ ॥
न शांभवानामपि सङ्गमो मे कदाऽपि पापक्षयहेतुभूतः।
अद्याधुना दैववशात् स वृत्तः तेनापि तावत् कृतकृत्य एव ॥ ६६ ॥
कल्याणकालोऽयमुमासहायो दृष्टो यतः शांभवपुङ्गवाश्च।
दृष्टाः समस्तेष्टनिधानभूताः श्रीमन्महादेवकृपाकटाक्षैः ॥ ६७ ॥

आनन्दावाप्तिहेतुः शिवभजनरतामन्दपादारविन्द-
श्रीगन्धं गन्धवाहः स्पृशति जनिजरामृत्युदुःखापनुत्यै।
आयात्यागत्य देहं स्पृशति पुनरयं देवतानां च देहान्
मुक्तिं संपादयिष्यत्यपि सितभसितैः पूत एवानुवारम् ॥ ६८ ॥

इत्युदीरितमाकर्ण्य स राजा विस्मयं गतः। बालोऽपि विस्मितः पश्चात् तमेवाह स नारदः ॥
अद्यप्रभृति यत्नेन संवसात्रैव सर्वदा। कृत्वाऽत्यन्तप्रयत्नेन पिशाचानां [1] निवारणम् ॥ ७० ॥
आधिव्याधिभयं चात्र विशेषेण निवारय। अत्युच्चैः कुरु यत्नेन शिवनामानुगायनम् ॥ ७१ ॥
तावता न पिशाचानां प्रवेशोऽत्र भविष्यति। भस्मनां राशयः सन्ति स्पृशतामनुवासरम् ॥ ७२ ॥
निर्माल्यबिल्वपत्राणामाघ्रायाघ्राय सादरम्। दत्वा नैवेद्यमीशाय बलिदाने कृते सति ॥ ७३ ॥

---

1 इतः परं 'बालग्रहादयः सर्वे वारणीयाः प्रयत्नतः। शाकिनीडाकिनीमुख्याः दुष्टग्रहसमन्विताः। सर्वदा कुरु यत्नेन महोत्पात निवारणम्।' इत्यर्धत्रयमधिकं C E कोशयोः।

बलिनैवेद्यमास्वाद्य भुक्त्वा तुष्टो भवान्वहम् । संसारबन्धनाशाय शिवनैवेद्यभोजनम् ॥ ७४ ॥
कल्पितं गिरिशेनेदमन्तकान्मुक्तिसाधनम् । मुक्तिसाधनभूतेषु श्रेष्ठानि दश तानि तु ॥ ७५ ॥
सेवनीयानि यत्नेन मुमुक्षुभिरहर्निशम् । शिवतीर्थं विभूतिश्च रुद्राक्षश्च शिवार्चकः ॥ ७६ ॥
शिवलिङ्गं विल्वपत्रं शिवनैवेद्यभोजनम् । जपः पञ्चाक्षरस्यापि शैवस्यापि शिवार्चनम् ॥ ७७ ॥
सदा शिवकथालापोऽप्येते दश विमुक्तिदाः । मुक्तिदं दशकं सेव्यमप्रमादेन सादरम् ॥ ७८ ॥
एतस्मादधिकं नास्ति मुक्तिदत्वेन कीर्तितम् । मुक्तिदेषु प्रमादं यः करिष्यति विमोहतः ॥ ७९ ॥
नरो न मुच्यते नूनं घोरसंसारसागरैः । भाग्यादन्यानुबन्धेन मुक्तिदं दशकं बुधैः ॥ ८० ॥
प्राप्तं तदा प्राप्तमेव शिवं शिवपदं परम् । न जानन्ति विमूढास्ते दशकं पापनाशनम् ॥ ८१ ॥
मुक्तिदं च ततो जन्म प्राप्नुवन्ति नराधमाः । मुक्तिदत्वेन विज्ञातं दशकं योऽनुकीर्तयेत् ॥
सोऽपि मुक्तिमवाप्नोति तस्मात् तत्सेवनं परम् । तत्सेवनं नित्यमेव तत्रैकमपि यस्त्यजेत् ॥
स संसारी भवत्येव तस्मान्मुक्तिर्न सर्वथा । मुक्तिकामैर्मुनिवरैः मुक्तिदं दशकं मुहुः ॥ ८४ ॥
सेव्यते सेवया तस्य मुक्तिरेव भविष्यति । वेदेष्वप्ययमेवार्थो निश्चितो दशकात्मकः ॥ ८५ ॥
सेवनीय इति ज्ञात्वा तत्सेवानिरतो भव । यो न तद्दशकाभ्यासं करिष्यति पुनः पुनः ॥ ८६ ॥
स वारणीयो नगरात् देशादपि विशेषतः । दशकाभ्यासनिरताः सेवनीयाः प्रयत्नतः ॥ ८७ ॥
तेषां यो दुःखदो मर्त्यः स याति नरकं ध्रुवम् । दशकाभ्यासहीनानां नरकेष्वनिशं स्थितिः ॥
तदर्थान्येव नरकान्यपाराणीति निश्चयः । दशकाभ्यासनिरताः सभाग्याः केवलं भुवि ॥ ८९ ॥
तैरेवालंकृता भूमिः तदपेक्षां करोति सा । सर्वपापविनाशाय दशकाभ्यासकार्चनम् ॥ ९० ॥
कर्तव्यमिति यत्नेन तेन मुक्तिश्च जायते । यो वा को वाऽतिपुण्येन दशकाभ्यासनप्रियः ॥ ९१ ॥
न तस्य गर्भवासः स्यात् नरकोऽपि न सर्वथा । तदभ्यासरतिस्तावत् अशैवानां च जायते ॥९२॥
अतस्ते दुःखसंवीताः सर्वेऽपि प्रतिजन्मनि । एतावदेव वक्तव्यं हिताहितमथादरात् ॥ ९३ ॥
दशकाभ्यासनादन्यत् केवलं श्रमसाधनम् । अनायासेन नाशः स्यात् पापानां दशकान्वयात् ॥
अतः प्रयत्नतः सेव्यं दशकं मुक्तिकांक्षिभिः ।

यन्मुक्तिदं दशकमस्ति तदेव तावत् संसारदुःखविनिवारकमित्यवैमि ।
तस्मात्तदन्वहमुपास्यमुमासहायः तेनैव तावदघपञ्जरनाशकः स्यात् ॥ ९५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे पापमूर्तिशरीरमोचनमुक्तिदशकवर्णनं नाम
सप्तमोऽध्यायः ॥

# अथ अष्टमोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा प्रणतः सोऽपि नारदम् । ओमित्युक्त्वा स्थितस्तत्र दिव्यवेषधरो नृपः ॥ १ ॥

ततः परं बालकं च निरीक्ष्य नृपसत्तम । नारदं प्राह तत्वज्ञं शिवभक्तिरतं च सः ॥ २ ॥

नृपः —

अस्य भाविक्रमग्रेऽपि भावुकं मुनिसत्तम । कियदायुःप्रमाणं च तत् सर्वं मे वदाधुना ॥ ३ ॥

नारदः —

अस्य कामानुसारेण जीवनं नृपसत्तम । इयत्तारहितं भाग्यं एतस्याग्रे भविष्यति ॥ ४ ॥

स्थास्यन्त्यस्य गृहद्वारि मत्तमातङ्गकोटयः । मातङ्गमदधाराणां पूरैर्व्याप्ता धरा भवेत् ॥ ५ ॥

सदा तुङ्गतुरङ्गाणां कोटयोऽपि गृहाङ्गणे । स्थास्यन्त्यस्य महीपाल भूपालोऽयं भविष्यति ॥ ६ ॥

सौन्दर्यनिधिरित्यस्य नाम नाम्नार्थतोऽप्ययम् । सौन्दर्यनिधिरेवायं मन्मथापरविग्रहः ॥ ७ ॥

अस्मिन् भूपालनोद्युक्ते शत्रुवार्ताऽपि दूरतः । सुवर्णरत्नकोशानां वृद्धिरस्य भविष्यति ॥ ८ ॥

रत्नागारप्रभापूरैः इदं मन्दिरमण्डलम् । मण्डितं रमणीयं च भविष्यति नृपोत्तम ॥ ९ ॥

गन्धर्वराजनगरे विहाराय प्रयास्यति । तत्र भावी विवाहोऽस्य संभ्रमेण स्वयंवरे ॥ १० ॥

गन्धर्वकन्यकाः सन्ति सहस्रं रतिविग्रहाः । अपूर्वकन्यकासृष्टिरष्टमूर्तिकृता पुरा ॥ ११ ॥

शांभवाग्रेसरः सोऽयं सर्वदा शिवपूजकः । शङ्करार्चनधाराभिः अयं पूतो भविष्यति ॥ १२ ॥

यावज्जीवश्रुतिस्तावदनेनैव महात्मना । सार्था भविष्यति प्रायः तथाऽनुष्ठानसंभवात् ॥ १३ ॥

अप्रामाण्यं च नास्त्यस्य अननुष्ठानलक्षणम् । येन केनाप्यनुष्ठाने तस्याः प्रामाण्यसंभवात् ॥ १४ ॥

पश्य पश्याधुना भाग्यमेतस्य नृपसत्तम । शिवविद्यापि संप्राप्ता मत्तो जन्मदिने पुरा ॥ १५ ॥

केन जन्मदिने प्राप्ता शिवविद्याऽपि मोक्षदा । अस्य पुण्यस्य नान्तोऽस्ति भाग्यवानयमेव हि ॥

अस्य पुत्राश्च बहवः शूराः परमसुन्दराः । भविष्यन्ति शिवाचारनिरताः शतमास्तिकाः ॥ १७ ॥

न चास्य रोगपीडा स्यात् कदाचिन्नृपसत्तम । अव्याहतगतिर्लोके लोकानामुपकारकः ॥ १८ ॥

एतद्दर्शनमात्रेण धन्याः केचिन्महीपते । अनेन सह संलापैः गमनागमनैरपि ॥ १९ ॥

एतादृशः शांभवस्तु न जातो न भविष्यति । अयं प्रतिदिने वृद्धिं प्रयास्यति शिवार्चनात् ॥ २० ॥

शिवार्चनजपुण्येन भाग्यमस्य भविष्यति । तस्य भाग्यस्य विलयो न भविष्यति सर्वथा ॥ २१ ॥
किञ्चायं शिवसात् सर्वं करिष्यति धनं नृप । तेन पुण्येन कोशानां वृद्धिरेव क्षणे क्षणे ॥ २२ ॥
आयुषो वृद्धिरस्य स्यात् निरन्तरशिवार्चनात् । धनधान्याभिवृद्धिश्च वृद्धिः स्यात् सन्ततेरपि ॥

राजा —

मुनिश्रेष्ठ महाभाग निरन्तरशिवार्चनम् । कथं भवति मर्त्यानां निद्रालस्यादिसंभवात् ॥ २४ ॥

नारदः —

जलधारा कल्पनीया शिवलिङ्गे शिवात्मके । मणिकाः पूरणीयाश्च सुगन्धैः शीतलैर्जलैः ॥ २५ ॥
शिवार्चकाः कल्पनीयाः शतशः शिवमन्दिरे । करणीयं च तैरेव शिवलिङ्गसमर्चनम् ॥ २६ ॥
कस्यचित् स्यात् तदालस्यं निद्राऽपि स्यात् कदाचन । अनालस्यैः कारणीयमन्यैरेव शिवार्चनम् ॥
तोषणीयाश्च ते सर्वे धनैर्गोभिर्गृहैरपि । शिवनैवेद्यदानैश्च दुकूलैर्भूषणैरपि ॥ २८ ॥
शिवनामानुसन्धानकथाश्रवणपूर्वकम् । कालो विनेयः सर्वोऽपि निद्राऽपि स्यात् कदाचन ॥
किं च मृत्युं सदा पश्यन् को वा निद्रां करिष्यति । मृत्युभीत्या न निद्राऽपि भोजनेऽपि रतिः कुतः ॥
कदा मरणमस्य स्यात् कदा वा यमयातना । इत्येव चिन्तया किंचित् नीयते दिनमास्तिकैः ॥
नास्तिकानां [1] तथा जन्म तेषां न शिवपूजनम् । अतो मृत्युभयं तेषां यातनाभयमन्वहम् ॥
मृत्युं तरति मर्त्योऽपि महामृत्युञ्जयार्चनात् । अतो मृत्युञ्जयो नित्यं पूजनीयः प्रयत्नतः ॥ ३३ ॥
मृत्युञ्जयार्चनेनैव यदि स्यादायुषः क्षयः । तदा तदायुः सफलं तदन्यन्निष्फलं खलु ॥ ३४ ॥
पुरा किलायुर्मूर्तीनां समूहो युगपत् क्वचित् । उपस्थितस्तदा तत्र यमोऽपि समुपागतः ॥ ३५ ॥
अटन् लोकान् भटैः साकं रटन्नाम च शांभवम् । मध्ये मध्ये नटन्नेव स्मरन् निटिललोचनम् ॥
तदा तमागतं दृष्ट्वा यमं कम्पमुपागताः । यमो दृष्ट्वैव ताः प्राह चित्रगुप्तं विचक्षणम् ॥ ३७ ॥

यमः —

आयुर्मूर्तिरियं भाति चन्द्रवद् भानुवच्छुभा । इयं पावकवद्भाति सा विभाति तथैव सा ॥ ३८ ॥
तारावद्भाति सा कापि भाति विद्युल्लतेव सा । गाढान्धकारवद्भाति सापि सा सापि सापि सा ॥

उल्कावद्भाति सा कापि कापि सा कापि कापि सा ।
सापि सा सापि सा सापि सापि सा सापि सापि सा ॥ ४० ॥

---

1 'तया' C E

परमानन्दसंपूर्णा सापि सा सापि सापि सा । सापि .... सा ॥ ४१ ॥
सुस्मेरवदना कापि सापि सा ... । सापि सा ... सापि सा ॥ ४२ ॥
शिवगानरता कापि साऽपि सा कापि सापि सा । सापि सा ... सापि सा ॥ ४३ ॥
आनन्दाश्रुसमाकीर्णा सापि सा कापि साऽपि सा । सापि सा ... सापि सा ॥ ४४ ॥
रुद्रवीणां गृहीत्वा सा कापि गानं करोति सा । सापि सा ... सापि सा ॥ ४५ ॥
सा नृत्यति विलासेन सापि सा साऽपि सापि सा । सापि सा ... सापि सा ॥ ४६ ॥
ध्यानं करोति सा कापि मन्दस्मेरमनोहरा । सापि सा ... सापि सा ॥ ४७ ॥
शिवनामानि जपती कापि सा सापि सापि सा । सापि सा .... सापि सा ॥ ४८ ॥
विलोक्य दर्पणं फाले त्रिपुण्ड्ररचनादरा । सापि सा ... सापि सा ॥ ४९ ॥
रुद्राक्षमालिकाकाया कापि सा सापि सापि सा । सापि सा ... सापि सा ॥ ५० ॥
शिवलिङ्गार्चनरता विल्वपल्लवकोटिभिः । सापि सा ... सापि सा ॥ ५१ ॥
कापि सा पिबति प्रीत्या महेश्वरकथां शुभाम् । सापि सा ... सापि सा ॥ ५२ ॥
शिववार्तारसरसं दृष्ट्वा हृष्टापि कापि सा । सापि सा ... सापि सा ॥ ५३ ॥
दृष्ट्वा पूजितलिङ्गानि स्पृष्ट्वा स्पृष्ट्वा मुहुर्मुहुः । कापि सा ... सापि सा ॥ ५४ ॥
सा हर्षवर्षधाराभिः आप्लुता शङ्करस्मृतेः । कापि सा .... सापि सा ॥ ५५ ॥

अयं समूहोऽद्य मनोहरो मे महेश्वराराधनतत्परत्वात् ।
एतत्समूहातिविलोकनेन दिनानि नेयानि मया सहात्र ॥ ५६ ॥

अपारपापानलदह्यमानाः पुनः पुनर्गर्भनिवेशभीताः ।
स्मरन्ति ये शांभवसङ्घमाशु तरन्ति ते भीतिमहार्णवौघम् ॥ ५७ ॥

अद्याधुना धन्यमभूद् दिनं मे शिवार्चकालोकविलोचनस्य ।
इदं च धन्यं मम लोचनं च धन्यं परं जीवनमस्य भाग्यम् ॥ ५८ ॥

अयं कथं मे चरराशितुल्यः सद्यो रुदत्यश्रुकलाकुलोऽसौ ।
धिग् धिग्धिगापदशयातिपीडा जातानि जातानि न जातु जाने ॥ ५९ ॥

इति तद्वचनं श्रुत्वा चित्रगुप्तोऽतिविस्मितः । विस्मापयन् यमं प्राह शृणु कौतुकमित्यपि ॥ ६० ॥

चित्रगुप्तः —

शृणु शांभवसङ्घानां वार्ता श्रोत्रमनोहराम्। यद्वार्ताश्रवणेनापि शिवभक्तिर्दृढा भवेत् ॥ ६१ ॥

शांभवानामयं सङ्घः सुधाराशिरिवाधुना। दृष्टोऽप्यानन्दपीयूषमयूखान् जनयत्यहो ॥ ६२ ॥

क्षणमप्यायुषो नास्य वैयर्थ्यं शिवपूजया। आयुः क्षीणमभूदस्य प्रतिक्षणशिवार्चनात् ॥ ६३ ॥

सुधाधाराभिषेकेण शिवपूजा प्रतिक्षणम्। तया क्षणसहस्रांशोऽप्यस्य नाभूत् वृथा यम ॥ ६४ ॥

तेन पुण्येन महता नृत्यन्ति प्रहसन्ति च। लिङ्गपूजां च कुर्वन्ति पुनः पुनरिहान्तक ॥ ६५ ॥

एतत्सङ्घाश्रयाणां तु धनानि विविधानि च। जानाति शिवपूजार्थं तेन गायन्ति कोटिशः ॥

एतत्सङ्घसमाश्रयामितधनैरभ्यर्चितः शङ्करो नित्यं चन्दनबिल्वपल्लवलसन्मन्दारकुन्दादिभिः।
नैवेद्यैरमितैर्मनोहरमहाकर्पूरदीपावलीसङ्घैरप्यमिते[1] रनुक्षणमतो नृत्यन्ति गायन्ति च ॥ ६७ ॥

तेषामेव धनैः शिवार्चनमभूत् पञ्चामृतैः शोधितैः
शुद्धैस्तैः कपिलाघृतैरपि सदा धारापि लिङ्गे मुदा।
विच्छिन्ना न भवत्यनन्तविभवा सा मुक्तिधारा परा
गोक्षीरादिकधारयापि गिरिशः सन्तुष्ट एवान्वहम् ॥ ६८ ॥

रत्नागारविशेषनिर्मितमहालिङ्गप्रभापूरकैः
तद्द्रव्यैरमितैः शिवार्चनफलैः साङ्गैरमोघैरपि।
तेनैते शिवपूजनोत्सवरसाः स्वानन्दधारावृताः
कल्याणाश्रयपूजनाय सततं नृत्यन्ति गायन्ति च ॥ ६९ ॥

तत्संघाश्रितवित्तपूजनफलैः तावत्प्रनृत्यन्त्यहो
गायन्त्येव वहन्ति सन्ततममी श्रीरुद्रवीणादराः।
शम्भो शङ्कर चन्द्रशेखर महादेवेति सप्तस्वर-
व्यापारप्रकरप्रचारनखरव्यापारसारादरैः ॥ ७० ॥

स्वप्नेऽप्यंबुजबिल्वपल्लवरसैरभ्यर्चयन्तीश्वरं
निद्रायामपि चित्रमेतदपरं निद्राऽपि तेषां क्षणम्।

---

1 अनुक्षणमित्यारभ्य धनैरित्यन्तं C कोशे त्रुटितम्। तेनोपरितनश्लोकेषु पादक्रमविपर्यासो दृश्यते।

आयुर्वृद्धिमुपैति शङ्करपदाम्भोजार्चनादन्वहं
तस्य क्षीणदशा कदापि न भवत्यर्धेन्दुमौलिस्मृतेः ॥ ७१ ॥

तेषां तावदपारशंकरकथापीयूषपानात् तनुः
पीना पीनतराऽपि ते मुहुरुमाकान्तांबिकानायकम् ।
स्मृत्वा चेतसि सन्ततं कथमपि त्वामेव देवोत्तमं
मत्वा शङ्करनामधेयसुसुधापानैर्नयामो दिनम् ॥ ७२ ॥

तेषामायुरनुक्षणं पणगणैर्वेश्यामुखालोकनैः
मद्यस्त्रीपरिसेवनेन चरितं पण्याङ्गणालापनैः ।
तेनाश्राव्यतया नयन्ति दिवसांस्ते मेचकाकारतां
संप्राप्यापि मुहुर्मुहुः शिवकथालापोऽपि तैर्न श्रुतः ॥ ७३ ॥

हा हन्तामितवित्तनाशनकरव्यापारभारादरैः
नीतं तद्दिनमन्धकारिविमुखैः दुःखोपकारादरैः ।
आराध्यः शिव इत्यपारविभवो नैवानुभूतो भवो
भावैः साकमभाषणं च कृतमित्यज्ञः परं क्लिश्यति ॥ ७४ ॥

अज्ञानाद्गिरिशार्चनं न च कृतं लिङ्गं च नालोकितं
लिङ्गागारमहोत्सवोऽपि न कृतो दृष्टा न दीपावली ।
लिङ्गागारविनिर्मिता विधिवशाद् धूपप्रधूपावली
दृष्टा नृत्यति चिन्तया परमयं [1]सङ्गः परं क्लिश्यति ॥ ७५ ॥

नानापापविनाशिनी शिवकथा नाकर्णिता न श्रुतं
नामापि स्मरवैरिणः सकरुणः श्रीशूलपाणिः स्वयम् ।
नैवान्तःकरणाम्बुजे स्मृत (?) इति व्यर्थं वयो निर्गतं
हा हा हन्त वयो वृथा गतमिति व्यर्थं रुदन्त्यद्य ते ॥ ७६ ॥

आयुर्व्यर्थमिदं गतं शिवपदं न ध्यातमेवादरात्
लिङ्गे बिल्वदलं प्रसूनममलं गङ्गाजलं वा मुदा ।
न क्षिप्तं न च वीक्षितं च नगरं विश्वेश्वरस्यादरात्
इत्थं ते प्रलपन्ति हन्त बत ते ते तेऽपि ते तेऽपि ते ॥ ७७ ॥

---

1 सद्यः स्वयं क्लिश्यति C E

श्रीविश्वेश्वरलिङ्गमुत्तमतमं श्रीचन्दनेनानघैः
पुष्पैर्बिल्वदलैश्च नार्चितमहो क्षीणं वयः सर्वथा ।
हा हन्तामितपातकार्जनरतं चित्तं वयो निर्गतं
किं कर्तव्यमिति प्रतिक्षणममी दुःखातुराः कातराः ॥ ७८ ॥

श्रीविश्वेश्वरपूजनं च न कृतं द्वित्रैः पवित्रैर्नवैः
बिल्वैः कोमलपल्लवैः [1] जलरुहैर्दूर्वाङ्कुरैर्भस्मना ।
नो दृष्टं निकटापदाम्बुजयुगं नाराधितं चन्दनैः
मल्लीमालिकया दुकूलकलिकैरित्यन्वहं दुःखिताः ॥ ७९ ॥

न स्नातं मणिकर्णिकांभसि च वै नोद्धूलितेयं तनुः
भूत्या फालमपि त्रिपुण्ड्ररचनैर्नालङ्कृतं भस्मना ।
रुद्राक्षैश्च न भूषिता तनुरहो व्यर्थं गतं जीवनं
हा हन्तेति बतेति दैवहतमित्येते रुदन्ति स्वतः ॥ ८० ॥

वीरेशाय न कल्पितातिरुचिता सा नीरधारा मुहुः
श्रीवीरेश्वरतुङ्गलिङ्गमसकृन्नाभ्यर्चितं चन्दनैः ।
सायं न प्रणतं च नेक्षितमहो भूतोपवासैर्निशा
नीता नेति रुदन्ति हन्त सततं ते काल भीत्या तव ॥ ८१ ॥

काश्यामेव न कालभैरवदिने कालाष्टमीनामके
कृत्वा जागरणं मुहुर्मुहुरयं दृष्टो मया भैरवः ।
कालेशोऽपि न वीक्षितो मुहुरहो हा हन्त हन्तेत्यमी
दुःखेनैव नयन्त्यनुक्षणमहो ते काल भीत्या तव ॥ ८२ ॥

इति तद्वचनं श्रुत्वा यमो विस्मयमानसः । शिवभक्तगणं दृष्ट्वा पूजयामास संस्तुवन् ॥ ८३ ॥

धन्यं कुलमिदं दृष्टं शिवभक्तायुषां मया । धन्यं धन्यमिदं तावत् जीवनं नयनाम्बुजम् ॥ ८४ ॥

एतदालोकनेनैव विनेयः समयो मया । अपूर्वोऽयं शिवगणः शिवनाममहोत्सवः ॥ ८५ ॥

कथं गायन्ति दिव्यानि शिवनामानि कोटिशः । आनन्दोद्बोधकान्येव मुहुर्मुहुरतन्द्रिताः ॥

एते धन्याः परं धन्याः सर्वे तद्वीक्षणादराः । धन्यस्तदङ्गवासोऽपि मुक्तिकान्तानुकर्षकः ॥८७॥

---

1 'अभिनवैः' E

सङ्गोऽपि तावत् कर्तव्यः तावदेतैः सहान्वहम् । एतत्सङ्गानुषङ्गोऽपि भुक्तिमुक्तिप्रदो भवेत् ॥

धन्यं धन्यमिदं शरीरमधुना धन्याङ्गसङ्गादयं
धन्यः शाङ्करसङ्ग इत्यनुगतो ब्रह्मादिदेवस्तुतः ।
अस्माकं गिरिजामनोहरपदाम्भोजार्चनं जायते
बुद्धिः [1] शांकरतोत्तमोत्तमतमा मुक्तिप्रदानोद्यमा ॥ ८९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे यमचित्रगुप्तसंवादे आयुर्मूर्तिशिवभक्त्युत्कर्षवर्णनं नाम अष्टमोऽध्यायः ॥

—*—

## अथ नवमोऽध्यायः ।

——o——

याज्ञवल्क्यः —

एतस्मिन्नन्तरे काले विमानवरमाश्रिताः । देवाः समागतास्तत्र कौतुकं द्रष्टुमुद्यताः ॥ १ ॥
तत्र ते शिवभक्तानामायुर्मूर्तिविलोकनैः । प्रहृष्टाः प्रस्थितास्तेऽपि कृताञ्जलिपुटाः स्थिताः ॥ २ ॥
ततः प्रहर्षमतुलं प्राप्तास्तत्तद्विलोकनात् । धन्यमायुरिदं तेषां क्षीणं शङ्करपूजया ॥ ३ ॥
एतद्भाग्यस्य नान्तोऽस्ति कृतकृत्यमिदं खलु । सुमेरुस्वर्णदानेऽपि क्षणार्धार्धायुरप्यहो ॥ ४ ॥
दुर्लभं तद्गतं भूयो नायात्येव गतं गतम् । शिवार्चनेन विलये तत्तावत् सफलं खलु ॥ ५ ॥
आयुः संपादितं पूर्वं शिवपूजनसाधनम् । शिवार्चनोपयुक्तं चेत् सफलं नात्र संशयः ॥ ६ ॥
तदेवायुस्तावत् सफलममलं पुण्यनिलयं तदेवायुर्वन्द्यं क्षणमपि यदेवादरदरैः ।
मुहुर्लिङ्गं तुङ्गं प्रणमति पुनः पश्यति पुनः स्पृशत्यालिङ्ग्याङ्गैरभिनवजलैः सिंचति मुदा ॥ ७ ॥
तदेवायुः पुण्यैरमितविभवैरर्जितमभूत् तदायुः क्षीणं चेद्गिरिशभजनेन क्षणमपि ।
तदा धन्यं मन्ये तदिति न ततोऽप्यन्यदधिकं यतो वन्द्यं वेदैरपि सुरगणैर्वा मुनिगणैः ॥ ८ ॥
अपारायुः प्राप्य प्रमथयति लिङ्गार्चनरतं मनः कृत्वा कृत्वा शिवभजनमेव प्रतिलवम् ।
मुहुर्बिल्वैर्नीरैरतिरुचिरकर्पूररचितैः वयो नेयं लिङ्गे स्नपनविधिना केवलमिदम् ॥ ९ ॥

---

[1] सिद्धिकरोत्तमोत्तमतमा मुक्तिप्रदानोद्यता C E

लसद्वल्लीमल्लीकमलकनकार्कादिकुसुमैः मुहुस्तुङ्गं लिङ्गं विमलकमलाभ्युक्षितमहम्।
प्रपश्यन् तत्पूजारचनचतुरं शङ्करपदं मुदा मन्दं मन्दं मधुरनिनदैरेव कलये ॥ १० ॥

महद्भाग्यं योग्यं यदि गिरिशपूजोपकरणं तदेवायुस्तावद् यदि गिरिशसेवोपकरणम्।
तदन्यत् तद्व्यर्थं व्यथयति कथं वा न वितथं मनस्तस्मात् कस्मात् स्मरहरपदं न स्मरति मे ॥ ११ ॥

स्मरारे पापारे हर हर यमारे करुणया महासंसारारे हर हर मनो मे निजपदम्।
यथा नेदं व्यर्थं कथमपि कथं वा कथय मे तथा गौरीनाथ प्रमथगणनाथातिशपथैः ॥ १२ ॥

त्वदीयं मत्वा मामयमिति शिशुः शोककलितैः शनैः शान्तिं यातु श्रमजनकसंसारविरतः।
भवत्यत्युत्साहादुपदिश महेश त्रिदशताप्यपास्या कस्यास्यां रतिरपि शिवेति प्रलपतः ॥ १३ ॥

कदा तुङ्गं लिङ्गं कनककुसुमाभ्यर्चितमिदं मुहुर्दृष्ट्वा नत्वा शिवशिव महेशामरपते।
महेश त्वं स्वामिन् इति सततमेवानुवदतो भवत्वायुः क्षीणं शिव शिव शिवावल्लभ विभो ॥ १४ ॥

महासंसारारे किमपि न तवाशक्यमिति मे मनो नूनं नूनं त्रिनयन भवत्पादभजनैः।
महद्भाग्यं रत्नान्यमितधनधान्यादिकमपि प्रभावोऽप्येतन्मे शिव शिव शिवाराधनमिति ॥ १५ ॥

प्रबोधो वृत्तोऽयं प्रबलमहिमाऽयं भवतु मे वने बिल्वव्याप्ते शिव शिव शिवेति प्रलपतः ॥ १६ ॥

इत्युक्त्वा तु सुराः सर्वे तैः सुरैः सह सत्वरम्। विमानानि समारुह्य स्वर्गमार्गं ययुर्मुदा ॥ १७॥

पश्चात् पापस्वरूपाणां अप्यायुमूर्तयः शनैः। मत्तैर्यमभटैर्नीताः कुम्भीपाकालयं प्रति ॥ १८ ॥

तस्मात् प्रदक्षिणं पूजा शङ्करस्य यथा तथा। यत्नः कार्यो धीमता तु बन्धः स्यादन्यथा खलु ॥

वरमेवात्महननं सुरापानं वरं परम्। न वरं श्रीमहादेवध्यानहीनवयः प्रियम् ॥ २० ॥

गोमांसभक्षणं चापि वरमेव दुरात्मनाम्। न वरं श्री ... प्रियम् ॥ २१ ॥

स्वर्णस्तेयं वरं मन्ये वरं ब्रह्मवधं तथा। न वरं श्री ... प्रियम् ॥ २२ ॥

गुरुदाराभिगमनं वरं मद्यपसेवनं। न वरं श्री ... प्रियम् ॥ २३ ॥

नानाविधानां पापानां करणं वा वरं परम्। न वरं श्री .... प्रियम् ॥ २४ ॥

अहो पातकिनः सर्वे भविष्यन्ति कलौ युगे। सर्वार्थदायकं देवं न जानन्ति विशेषतः ॥ २५ ॥

अतः प्रयान्ति सर्वेऽपि नरकं नात्र संशयः। उमासहायपूजायां आलस्यं यः करिष्यति ॥ २६ ॥

स याति नरकं घोरं पुनरावृत्तिदुर्लभम्। उमासहायभजनं ये कुर्वन्ति प्रयत्नतः।

ते यान्ति परमं स्थानं कैलासं शङ्करालयम् ॥ २७ ॥
अनायासेन यान्त्यन्ये शिवमन्दिरमास्तिकाः । शिवाचाररताः शैवाः सत्यं सत्यं न संशयः ॥
यः शिवाचारनिरतः स धन्यो धन्यकृत्तमः । तद्दर्शनेन नश्यन्ति पातकानि बहून्यपि ॥ २९ ॥
पुरा मगधदेशेषु कश्चिद्राजाऽतिधार्मिकः । सर्वसौभाग्यसंपन्नः शिवपूजारतः सदा ॥ ३० ॥
शिवनैवेद्यशेषेण कुर्वन् जीवनरक्षणम् । अन्यद्भाग्यं महेशाय दत्तमित्यवगम्यते ॥ ३१ ॥
तेन यत्पूजनं प्राप्तं कृतमासीन्महात्मना । तेन पुण्यप्रभावेणाभवत्प्रमथमध्यगः ॥ ३२ ॥
तस्य भूपस्य निलये शिवलिङ्गानि कोटिशः । रत्नमन्दिरनिर्माणं शङ्करार्थं चकार सः ॥ ३३ ॥
यावत् तेनार्जितं द्रव्यं तत्सर्वं शार्वमित्यपि । स शर्वाराधनेनैव सर्वायुःकलनोद्यतः ॥ ३४ ॥
क्षणमात्रं च तस्यायुः न शिवाराधनं विना । शिवाराधनमात्रं तु तस्य व्रतमनुत्तमम् ॥ ३५ ॥
शिवाराधनरूपेण व्रतेनैव मुहुर्मुहुः । नयत्यायुर्वयस्तस्य शिवाराधनसाधनम् ॥ ३६ ॥
तस्य तावत् कृतार्थस्य शिवपूजारुचिर्यथा । तथा रुचिर्न दारेषु कुमारेषु धनेष्वपि ॥ ३७ ॥
तस्यार्जनेन तुल्यानि धनानि विविधान्यपि । सत्पात्रेषु धनत्यागे यवसं मनुते धनम् ॥ ३८ ॥
तस्य पुण्यप्रभावस्य शाङ्करस्य गृहं परम् । द्रष्टुमभ्यागतो दैवात् कश्यपो मुनिसत्तमः ॥ ३९ ॥
तं दृष्ट्वा कश्यपं हारं हारकोटिसमावृतम् । सन्तुष्टः प्रणतो भक्त्या कृतार्थोऽस्मीति भूपते ॥ ४० ॥
ततः परं स राजा तु सर्वान् हारानुदारधीः । हारोपचारैः सन्तुष्टान् चकार नृपसत्तम ॥ ४१ ॥

हारोपहारादरहारसङ्घं विलोक्य राजा विनयानतः सन् ।
पप्रच्छ भक्त्या परमं स हारं धर्मं विशेषेण स हारवीरः ॥ ४२ ॥

कश्यपः —

धर्मेषु सर्वेष्वपि हाररूपो धर्मः परत्वेन विनिश्चितोऽतः ।
तं धर्ममाश्रित्य परं प्रयान्ति हारं परं हारविशेषसेव्यम् ॥ ४३ ॥

हारा एव भवन्ति हारचरणाम्भोजार्चनाराधन-
ध्यानान्तःकरणाः क्षणं यदि वयः क्षीणं शिवाराधनैः ।
संसारस्य च दुःखनाशकरणं श्रेष्ठं तदेवादरात्
पुण्यैरार्जितमित्यवैमि पुनरप्यायुस्तदेवेप्सितम् ॥ ४४ ॥

आयुस्तावदशेषदोषकरणोपायो हि दुष्टात्मनां
प्रायः पुण्यवतां विलक्षणमभूदायुः शिवाराधनैः ।

क्षीणं यस्य भविष्यति प्रतिदिनं तस्मै नमोऽस्त्वायुषे
तत्तावत्खलु दुर्लभं भुवि नृणां तद्बन्ध्यमेवान्वहम् ॥ ४५ ॥

अस्माकं गिरिजार्चनं व्रतमतस्तेनैव नेयं वयः
तस्मादप्यधिकं न मे व्रतमिति ज्ञातं मुहुर्वैदिकम् ।
तत्तावद्व्रतमित्यवैमि बहुधा तत्तुल्यमन्यद्व्रतं
नास्तीत्येव मतिर्ममापि विधितो जाता मतिस्तादृशी ॥ ४६ ॥

संसारव्रणनाशनार्थमसकृत् दृष्टं मयाऽप्यौषधं
वेदान्तेषु भिषक्तमार्चनमिति ब्रह्मादिकानामपि ।
अस्माकं सुतरामतः परमुमाकान्तार्चनं केवलं
संसारोरुतरप्रमूलहुतभुग्विश्वेश्वराराधनम् ॥ ४७ ॥

काशीवासरतं मनोऽस्तु सततं विश्वेश्वराराधने ढुण्ढीशार्चनपूर्वकं यदि मनः स्यादन्नपूर्णालये ।
दृष्ट्वा तां गिरिराजराजतनयां वीरेश्वराराधनैः नेयं स्यादिदमायुरित्यनुदिनं चिन्ता परं वर्धते ॥

अस्मद्भाग्यवशेन शंकरपुरी जाता शिवाराधनं तस्यां चेद्वकोटिकोटिविलये देहव्यपाये सति ।
तस्यां मुक्तिरुमासहायचरणे दृष्टे भविष्यत्यपि प्राणस्योत्क्रमणोत्तरं स गिरिशः पञ्चाक्षरं दास्यति ॥

मन्त्राणां स शिरोमणिः शिवमनुस्तत्रापि पञ्चाक्षरः तत्राप्यक्षरयुग्मरूपममृतं तद्दुर्लभं केवलम् ।
यच्छुद्धं शिवनामकं शिवकरं तन्मोक्षदानोद्यतं तत्सामर्थ्यममेयमेव न मया ज्ञातं परं तत्वतः ॥

वेदे किं शिवनामतुल्यममृतं किञ्चामृतं तत्परं संसारौषधमित्यवैमि तदिदं ब्रह्मादिभिश्चिन्तितम् ।
तत्तावत् सुलभेन मोक्षजननोपायः प्रियं सर्वथा श्रीमृत्युञ्जयपूजकस्य सुतरां मृत्युञ्जयस्यापि तत् ॥

हे मृत्युञ्जय हे महेश्वर महादेवेति नामादरात् गेहद्वारकुमारदारधरणीधान्यादिवांछापि न ।
संसारः सुतरां न वांछित इति प्रायः शिवाराधने वांछा कल्पतरुः स एव सकलाभीष्टप्रदानोद्यतः ॥

यावत्पुष्टिरदृष्टकोटिघटिता देहे भवेदक्षया तावत्तद्गिरिशार्चनार्थमसकृद्यत्नोऽपि कार्यो नरैः ।
आलस्यं परिहाय तद्यदि भवेत् तत्तद्विषं जायते तत्तावद्विषमित्यवैमि बहुधा तत्त्याज्यमेवान्वहम् ॥

भस्मोद्धूलनपूर्वकं प्रतिदिनं रुद्राक्षपूतो मुदा
श्रीमृत्युञ्जयपूजनाय यतते बिल्वादिभिः साधनैः ।
तद्यत्नैः खलु पापसंघनिलयः तस्मिन् कृते तत्क्षणात्
जीवन्मुक्तिरतः परं प्रतिदिनं तत्सन्ततं वैदिकम् ॥ ५४ ॥

यावज्जीवमुमासहायभजनैर्नेयं वयस्तत् सदा
कर्तव्यं नरपुङ्गवैरिति मुहुस्तत्रापि ये ब्राह्मणाः ।
तैस्तत् सन्ततमेव कार्यमिति मे बुद्धिस्ततस्तद्यदि
व्यर्थं स्यात् पतितो भवत्यपि भवेत् तस्यैव सा यातना ॥ ५५ ॥

नानायोनिषु जन्म तावदसकृद् भुक्तं च भुक्तं मुहुः
घोरा सा यमयातनाऽपि बहुधा लज्जा तथाऽप्यस्य न ।
जीवस्याशु शिवार्चने जनिजरारोगाग्निरूपे मुहुः
किं वक्तव्यमतः परं शिवरतो धन्योऽस्ति यः कोऽपि सः ॥ ५६ ॥

गर्भावासमतीव दुःसहमिति ज्ञात्वाऽपि मूढो दृढं
शैलाधीश्वरकन्यकापरिवृढं नाराधयत्यादरात् ।
गौरीकान्तपदारविन्दभजनान्मुक्तिः परं जायते
सा कस्याप्यनपेक्षिता खलु महासंसारमग्नात्मनाम् ॥ ५७ ॥

संसारविषपानाय यतते मनुजः सदा । शिवनामामृतं पातुं न यत्नं कुरुते जनः ॥ ५८ ॥
मलाशनाय यतते सूकरोऽपि खरोऽपि वा । तथा नरोऽपि यतते संसाराय परं खरः ॥ ५९ ॥
क्रूरो नरखरो लोके संसारमलमिच्छति । शिवार्चनसुधापाने तस्येच्छा जायते कथम् ॥ ६० ॥
शिवार्चनसुधा सा चेत् पीता मुहुरहर्निशम् । तृप्तो न क्षुधितो नापि तृषितोऽपि प्रतिक्षणम् ॥
संसारविषसर्पेण दष्टः कष्टमवाप्नुयात् । पुनः पुनः स संसारी मृत्युमाप्नोति दुःखितः ॥ ६२ ॥
अन्तकालः कथं भावी मरणोत्तरमस्य किम् । भविष्यतीति सहसा न विचारं करोति च ॥ ६३ ॥
चातुर्यमस्य संसारविचारेष्वेव जायते । न शङ्कराराधनेषु नरस्यासिदुरात्मनः ॥ ६४ ॥
दुर्बुद्धिरेव संसारसर्पानेवानुसर्पति । तद्दशाविष्टदेहोऽपि न तस्माद्विमुखो भवेत् ॥ ६५ ॥
इदमेव किलाश्चर्यं दन्दशूकाभिदंशने । मृतः पुनः पुनर्दोषैः तद्दर्शनमपेक्षते ॥ ६६ ॥
येन मार्गेण मरणं भवतीति विनिश्चितम् । मृगैरपि स मार्गस्तु त्यज्यते न नरैः परम् ॥ ६७ ॥
जन्ममृत्युजरारोगदन्दशूकाभिवेष्टिताः । न कुर्वन्ति दुराचाराः शङ्कराराधनं परम् ॥ ६८ ॥
अनाराध्य महादेवं को वा मुक्तो भवेद्भुवि । मुक्तिमिच्छति यस्तावत् स करोति शिवार्चनम् ॥
मुक्त्यपेक्षाऽपि बहुधा नराणां न प्रजायते । परन्तु दारहारादाविच्छा सञ्जायते पुनः ॥ ७० ॥
सिद्धे धने तु बहुधा धनेच्छा तु प्रवर्धते । तथा शिवाराधनेषु नेच्छा कस्यापि जायते ॥ ७१ ॥

तुङ्गाङ्गनाङ्गसङ्गेषु यथेच्छा जायते नृणाम्। तथा न शाङ्गलिङ्गेच्छा कदापि दुरदृष्टतः ॥ ७२ ॥
तुङ्गलिङ्गाङ्गमालोक्य क्षणं वा योऽभिनन्दति। तस्यानन्दः प्रवृत्तः स्यात् आनन्दघनसेवया ॥
आनन्दघनमद्वैतं चिन्तयन्ति महेश्वरम्। केचिदन्याः शिवरतास्तेभ्यो नित्यं नमो नमः ॥ ७४ ॥
शङ्कराराधनोद्युक्तो यस्तत्पदरजः परम्। पुनाति शिरसा लग्नं अलग्नं पापकोटिभिः ॥ ७५ ॥
क्षणेन पापकोटीनां भवेद्विध्वंसनं मुहुः। निटिलाक्षार्चनादेव तत्तावदमृतं खलु ॥ ७६ ॥
अहो नामृतपानार्थं यतन्ते दुर्जनाः कलौ। मलिनानां कुतस्तेषां मतिः शङ्करपूजने ॥ ७७ ॥
अतिशुद्धात्मनामेव कदाचिद्गिरिशार्चने। मतिः स्याद् ध्यायतः साक्षादमृतत्वं प्रयच्छति ॥
अमृतत्वमनायासात् गिरिशाराधनात् परम्। भवतीत्यवगन्तव्यमन्यथा तद्धि दुर्लभम् ॥ ७९ ॥
दुर्लभं मानुषं जन्म प्राप्यापि नरसूकरः। न करोति प्रयत्नं वा शङ्कराराधने धने ॥ ८० ॥
शिवाराधनमस्माकं धनं निधिरपि स्वतः। सूते पुनर्निधिं सूते नवमेव निधिं पुनः ॥ ८१ ॥
निक्षेपास्ते स्वयं प्राप्ताः केवलं धनसञ्चिताः। अक्षयो निधिरस्माकं शङ्कराराधनं परम् ॥ ८२ ॥
निधीनां निधिरस्माकं शिवाराधनलक्षणम्। अयं निधिर्दुर्लभो हि ब्रह्मादीनामपि ध्रुवम् ॥ ८३ ॥
निधिलाभाय कुर्वन्ति यत्नं ब्रह्मादयोऽपि ते। अक्षयो निधिरप्राप्यः सर्वथेति चरन्ति ते ॥ ८४ ॥
क्षयास्तु निधयो लभ्याः सर्वैरप्यक्षयस्तु सः। निधिर्ब्रह्माण्डमध्येऽस्मिन् शिवाराधनलक्षणः ॥

मन्ये विरूपाक्षपदार्चनं परं मोक्षप्रदानक्षणवीक्षणेऽपि।
निक्षेप एवेदमिदं विलक्षणं मोक्षस्वरूपो निधिरक्षयोऽयम् ॥ ८६ ॥

अनेन मोक्षो भवतीति बुद्धिः श्रीदक्षिणामूर्तिकृपाकटाक्षैः।
अस्माकमाजन्म खलु प्रवृत्ता वृद्धा भविष्यत्यपि सा प्रवृद्धा ॥ ८७ ॥

धन्याः परं शङ्करलिङ्गपूजाप्रविष्टचित्ताः परमप्रवृत्ताः।
अतः परं किं बहुभाषणैर्वा वामार्धजानिं भज चन्द्रमौलिम् ॥ ८८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे मगधराजकश्यपसंवादे
शिवाराधनमहिमानुवर्णनं नाम नवमोऽध्यायः ॥

—:×:—

## अथ दशमोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । कीर्तिकेतुरुवाचेदं वचनं धर्मसाधनम् ॥ १ ॥

प्रभावं शिवलिङ्गानां शिवलिङ्गार्चनस्य च । विभूतिधारणस्यापि रुद्राक्षाणां च मे वद ॥ २ ॥

नारदः —

साधु साधु शिवाचारनिरतोत्तम भूपते । प्रश्नोऽयं पुण्यरूपस्ते महापुण्यप्रवर्धकः ॥ ३ ॥

प्रश्नाः सन्त्येव बहवः केचित् तत्रोत्तमोत्तमाः । उत्तमाः केचिदत्रापि मध्यमाश्च तथाऽधमाः ॥

प्रश्नस्तवायं सर्वेषु भवत्येवोत्तमोत्तमः । एतत्प्रश्नसमः प्रश्नो न जातो न भविष्यति ॥ ५ ॥

यत्प्रश्नश्रवणेनापि पूतमेव मनः पुनः । न पावनान्तरापेक्षा पावनत्वाय केवलम् ॥ ६ ॥

तृप्तमेव मनो नूनमानन्दोऽपि प्रवर्धते । एतत्प्रश्नसुधाधारा मुक्तिधारेव भाति मे ॥ ७ ॥

सत्सङ्गतिः कल्पलतेव पुंसां सर्वार्थसिद्ध्यै भवतीति मन्ये ।
धन्योऽपि मान्योऽपि न संशयोऽत्र प्रश्नः कृतो मुक्तिद एव नूनम् ॥ ८ ॥

अतः परं मे विषयेषु बुद्धिः विनिर्गता सापि न वासना मे ।
पापो विकारोऽपि निवृत्त एव प्रवृत्तिरेवाद्य शिवप्रसङ्गे ॥ ९ ॥

शिवप्रसङ्गः शिवदायको मे यतः शिवावल्लभसन्निधानम् ।
तस्मिन् प्रसङ्गे सति सर्वथापि नान्यत्र तिष्ठत्यगजापतिस्तु ॥ १० ॥

शिवप्रसङ्गः क्व भविष्यतीति विचार्य तिष्ठत्यपि चन्द्रमौलिः ।
अतः परं मङ्गलहेतुरीशो महेश्वरः सन्निहितः स्वभावात् ॥ ११ ॥

महेश्वराभ्यागमने भवानी कुमारमादाय गणेशमादौ ।
आयास्यतीति द्रुतमेव नन्दी भृङ्गी च सर्वैः स्वगणैः समेतः ॥ १२ ॥

अयं प्रसङ्गः श्रुत एव नूनं कैलाससिंहासनसंस्थितेन ।
शिवेन गौर्याऽपि गणेश्वरेण स्कन्देन नन्दीशमुखैः सुरैश्च ॥ १३ ॥

तीर्थानि सर्वाण्यपि मूर्तिमन्ति शिवेन साकं गिरिशप्रसङ्गे ।
आगत्य धन्यत्वमुपेत्य तावत् यास्यन्ति नूनं नृपसत्तमाद्याः ॥ १४ ॥

शिवप्रसङ्गः स्वयमेव पूजा महेश्वरस्येति मतिर्ममाऽपि ।
शिवप्रसङ्गेन समानपूजा यतः शिवोत्कर्षक एव सोऽयम् ॥ १५ ॥

यतः शिवोत्कर्षविशेषवार्ता शिवस्य पूजा परमुक्तिहेतुः ।
तद्वार्तया सा न सुधा समाना सा मुक्तिदा नेति विनिश्चयेन ॥ १६ ॥

शिवप्रसङ्गः स्वयमेव मुक्तिं करोति सद्यः श्रुत एव साक्षात् ।
यतो विरूपाक्षहितप्रसङ्गः संसारसङ्गांकुरपावकोऽयम् ॥ १७ ॥

शिवप्रसङ्गाय मनोऽस्मदीयं न चोरहार्यं न तदन्यहार्यम् ।
श्रुतोऽपि भूयो भवति प्रवृद्धः हृतोऽपि संसारहरः स्वभावात् ॥ १८ ॥

शिवप्रसङ्गे च विमुक्तिलाभः कथासुधाराशिकृतोपकारः ।
न कोऽपि तावत् स परं महेशः गौरीसमाकर्षणहेतुभूतः ॥ १९ ॥

शिवप्रसङ्गयुक्तानामस्माकं गिरिजापतिः । प्रसन्नोऽपि विशेषेण किमस्मभ्यं प्रदास्यति ॥ २० ॥

महामुक्तिर्महाम्भोजचरणाम्बुजरेणुभिः । सहवासः स तावत् स्यात् तत्कथाश्रवणान्नृप ॥ २१ ॥

महेश्वरकथासुधां पिबति शङ्करः शङ्करीकुमारगणनायकप्रमथदेववृन्दैः सह ।
इयं खलु सुधाऽपरा परममुक्तिदानोत्सवा तयापि न समानमित्यपि मतिः प्रवृद्धा भुवि ॥ २२ ॥

आनन्देन निधीयते नियमतः सा दुर्लभा दुर्लभं
तद्भिन्नं ननु सर्वथाऽपि न कृतिस्तस्यां सुधायां नृप ।
सा तावत्स्वयमेव शङ्करकृपारूपापि नित्यापि सा
तद्ध्यानेन समा समानमितरत् जन्यं न तेनास्त्यपि ॥ २३ ॥

सा तावद्गिरिशप्रसादजनिता जन्मादिदुःखाटवी-
कल्पान्तानल एव सा न सुलभा विश्वेश्वरानुग्रहे ।
सा तावत् सुलभा भवत्यपि सुधा तद्गोपनं सर्वथा
कर्तव्यं शिवयोगिने परमिदं देयं सुधामुक्तये ॥ २४ ॥

शिवकथामृतपानपानरतः सदा धनपतेर्धनमिच्छति कः पुमान् ।
तदिदमस्य धनं न धरापते धनदकोशगृहेऽपि न तद् धनम् ॥ २५ ॥

धनानि तावद्विविधानि लोके व्यथाकराण्येव तदार्जनेऽपि ।
व्ययेऽपि विश्वेशकथानिधानं न दुर्लभं शांभवपुङ्गवानाम् ॥ २६ ॥

अपारपुण्ययोगेन श्रुता शिवकथासुधा । पापाग्नितप्तजिह्वाग्रतृषामपहरिष्यति ॥ २७ ॥

संसारानलसागरानलमहाज्वालाकुलव्याकुलो
निर्दग्धस्तृषितः क्षुधानलकुलव्याप्तोदरः सादरम् ।
यो भक्त्या सकृदेव वा शिवकथापीयूषराशिं मुदा
श्रुत्वा तृप्तिमुपैति तस्य न तृषा क्षुद्वा न तद्वेदना ॥ २८ ॥

आनन्दामृतसिन्धुरेव गिरिजाकान्तप्रभावप्रथा
पीयूषार्णववर्णनं शिवकथासारः स सारः परम् ।
संसारार्णवमोचकोत्तम इति ज्ञातस्ततस्तत्परं
किं वा स्यादिति चिन्तनेऽपि न समस्तेनास्ति लोकत्रये ॥ २९ ॥

अतः शिवकथालापैरपलापोऽपि संसृतेः । अतः सत्सङ्गतेरेव तत्कथास्वर्धुनी हृदि ॥ ३० ॥

प्रभावः शिवलिङ्गानामपारः तस्य वर्णनम् । न मया नामरैर्वापि वेदैरपि न शक्यते ॥ ३१ ॥

शिवलिङ्गप्रभावज्ञः कोऽपि लोकत्रये महान् । भविष्यति न वा नास्मन्मनस्तद्वर्णनक्षमम् ॥ ३२ ॥

न वाचां विषयस्तावल्लिङ्गवर्णनमित्यतः । वेदान्तास्तत्र विश्रान्ताः कृतान्तान्तककीर्तनात् ॥ ३३ ॥

यस्मिन् मतिर्यस्य भवेत् शिवलिङ्गावलोकने । स तावद् धन्य एवेति कालोऽयं सुतरामपि ॥

लिङ्गरूपं समासाद्य रमते गिरिजापतिः । लिङ्गरूपं प्रियं तस्य लिङ्गं गृह्णाति पूजनम् ॥ ३५ ॥

लिङ्गं मङ्गलदत्वेन येन ज्ञातं महात्मना । स मङ्गलापतिं याति तद् ज्ञानमतिदुर्लभम् ॥ ३६ ॥

लिङ्गं मङ्गलदं विदुर्मुनिवराः सर्वे सुराः किन्नराः
सिद्धाः किंपुरुषा गणाश्च विविधाः शेषादयोऽप्यन्वहम् ।
तल्लिङ्गार्चनतत्पराः परमिदं लिङ्गं यतः सर्वदा
सर्वार्थप्रदमित्यवैम्यहमपि प्राग्जन्मपुण्यैर्नृप ॥ ३७ ॥

लिङ्गानामिदमुत्तमोत्तमतमं लिङ्गेषु तत्पूजया
साक्षात् पूजित एव तेन सदृशं लिङ्गं न भूमण्डले ।
तद्बिल्वीनवपल्लवैरनुदिनं येनार्चितं सादरं
भक्त्या तत् सकृदेव वा स हि महान् मान्यो महेशप्रियः ॥ ३८ ॥

यः प्रातः प्रयतः प्रपश्यति मुहुर्लिङ्गं विभूत्या परं
पूतः सन् प्रणतः स्वतोऽपि परतो मुक्तो भवेत् पातकैः ।

तल्लिङ्गं विमलैर्जलैरभिनवैः बिल्वीदलैरर्चयन्
चर्चामेव न संसृतेः खलु करोत्याकल्पमन्तेऽपि वा ॥ ३९ ॥

लिङ्गाराधनपुण्यराशिरसकृद् वृद्धः प्रवृद्धः पुनः
संसारार्णवशोषकः खलु महापापौघविध्वंसकः ।
तेनैवामृततामुपैति स पुनः संसारवार्तारसं
न स्वप्नेऽपि स पश्यतीति स महान् लिङ्गार्चको भूपते ॥ ४० ॥

लिङ्गार्चकेन सदृशो न महाध्वराणां कर्तापि तस्य तु फलं खलु तुल्यमेव ।
स्वर्गात्मकं शिवपदाम्बुजपूजकस्य तत्तावदिष्टमपि नेति वदन्ति सिद्धाः ॥ ४१ ॥

यो रंभापरिरम्भणेऽपि शुनकीतुङ्गाङ्गसङ्गेऽपि वा
तुल्यत्वं मनुते शिवार्चनपरः स स्वर्गवांछां कथम् ।
कर्तुं वा यतते विरक्तमनसां तत्राप्यपेक्षा कथं
मोक्षेच्छा परमस्ति तस्य सततं लिङ्गार्चकस्य ध्रुवम् ॥ ४२ ॥

लिङ्गाराधनमेव साधुमनसां तावद्धनं तद्धनं
सर्वेषां समपेक्षितं यदि भवेत् मुक्तोऽपि सर्वस्ततः ।
तस्मात् कस्यचिदेव भूरितपसां पुञ्जस्य तत्साधनं
तत्तावद्धनमक्षयं निधिमपेक्ष्यैवार्जितं सज्जनैः ॥ ४३ ॥

लिङ्गार्चनं व्रतमिति प्रवदन्ति धन्याः तेनैव मुक्तिरिति निश्चय एव तेन ।
सर्वार्थसिद्धिरत एव हि तद्विहीनान् हीनान् वदन्ति मनुजानतिदुर्जनांस्तान् ॥ ४४ ॥

पुरा विन्ध्यप्रदेशेषु कश्चिद्राजाऽतिसुन्दरः । युवा परमपापिष्ठः सर्वदा युवतीवृतः ॥ ४५ ॥
कामोद्रेकः सदा तस्य तादृशद्रव्यसेवनात् । तेनोन्मादेन नीतानि दिनानि सुबहून्यपि ॥ ४६ ॥
ततः परं जरायां च न जहाति पराङ्गनाम् । पराङ्गनाङ्गसङ्गेन व्याधिवृद्धिरभूत् खलु ॥ ४७ ॥
तथापि न परित्यक्ता परदाररतिस्ततः । जारिणीं चोरमार्गेण याति याति पराङ्गनाम् ॥ ४८ ॥
नानाविधाङ्गनासङ्गाद्विरतिस्तस्य नाभवत् । तेनैव रोगः सञ्जातः पापिष्ठस्य दुरात्मनः ॥ ४९ ॥
ततस्तेनैव रोगेण जातान्येव व्रणान्यपि । तथापि न परित्यक्ता परनारी विशेषतः ॥ ॥ ५० ॥
ततः परमभूत् तस्य मरणावसरस्ततः । तद्राष्ट्रोपप्लवो जातः सर्वलोकभयङ्करः ॥ ५१ ॥
प्रबलाश्च गतास्सर्वेऽप्यटवीमटनेन ते । पूर्णं चक्रुः स राजापि नीत एवाटवीं प्रति ॥ ५२ ॥

तृषार्तः क्षुधितो जातः स्वकर्मानुक्षणं स्मरन् । स्वदारालोकनेनैव चकार दिनयापनम् ॥ ५३ ॥
राज्यभ्रंशेन यद् दुःखं व्रणैश्च तरुणारुणैः । व्रणशोणितधाराभिः अश्रुपूर्णोऽप्यभून्नृपः ॥ ५४ ॥
हा हा राज्यं कथमिदं धनं बहुविधं गतम् । तुङ्गास्तुरङ्गास्तुङ्गाश्च मातङ्गाश्चोष्ट्रगोगणाः ॥ ५५ ॥
क्व गताः क्व च मित्राणि क्व कलत्राणि तानि मे । क्वामात्याः क्व गृहास्तेऽपि क्व शय्याश्च मनोहराः ॥
क्व तानि रत्नपात्राणि स्वर्णपात्राणि कोटिशः । क्व वा तानि दुकूलानि विपुलान्यमलान्यपि ॥
क्व ते भृत्याः क्व दास्यश्च क्व तान्याभरणान्यपि । मरणावसरे प्राप्ते गतं तत्सर्व[1]माहृतम् ॥
अधुना तृषितस्यापि क्षुधितस्यापि सेवकः । नान्नदो जलदो वाऽपि वस्त्रदो वा न दृश्यते ॥ ५९ ॥
धृतं वस्त्रं गतं दूरे नास्त्येव वसनान्तरम् । शान्ता [2]सुरायां तृष्णापि नाद्यापि मम दुर्मतेः ॥
अतः परं गतिः का वा मरणानन्तरं च मे । यममार्गस्य वार्तापि श्रुता प्रातर्मया खलु ॥ ६१ ॥
गोक्षुराङ्गारसङ्कीर्णो यममार्ग इति श्रुतः । विवृतास्या महासर्पाः सन्ति तन्मार्ग इत्यपि ॥ ६२ ॥
लोहशङ्कुसहस्राणि सन्ति तप्तानि तान्यपि । प्रतप्ता भिण्डिपालाश्च सन्ति मार्गेषु कोटिशः ॥
भर्जिताः सिकतास्तत्र मार्गेष्वाच्छादिताः किल । अङ्गारवाहिनी तत्र ज्वालामालाकुला किल ॥
[3]अथवा तत्र गमनमतिकष्टमुपागतम् । गाढान्धकारस्तत्रापि मित्रवार्तापि दूरतः ॥ ६५ ॥
हठादेव भटास्तत्र ताडयन्त्यतिदारुणम् । तत्ताडनमतिक्रोधान्मरणोपममेव हि ॥ ६६ ॥
हा हा कथं दुर्दशेयं ममेति प्रलपन् जहौ । प्राणान् स भूपतिस्तत्र विपिने कण्टकावृते ॥ ६७ ॥
स मृतो यत्र तत्रैव निकटे लिङ्गमुत्तमम् । ततः समागतो वातः तमुपस्पृश्य निर्गतः ॥ ६८ ॥
ततः परन्तु नारीणां रोदनेन कियान् गतः । कालस्ततो गताः सर्वे पाल्यास्तेऽपि भयाकुलाः ॥
व्रणदुर्गन्धसंवीतस्त्यक्तस्तावत् स दूरतः । अमात्यैरवशिष्टैश्च स दुष्टः शिष्टनिन्दितः ॥ ७० ॥
ततो नीतो यमभटैरग्निमार्गेण दुर्मदैः । दयालेशविहीनैस्तैः कशाघातनपूर्वकम् ॥ ७१ ॥
अग्नितप्तकशाघातैरतितीव्रतरैर्मुहुः । तप्तलोहक्षुरप्राणां कोटिभिर्निहतो मुहुः ॥ ७२ ॥
एवं प्रलपमानोऽयं सन्तप्ताग्निशिलातले । पातितः पश्यति यमे दयालेशविवर्जिते ॥ ७३ ॥
ततो यमोपि तं दृष्ट्वा चित्रगुप्तमुवाच सः । किमस्य पुण्यं पापं वा वदेति मुहुरादरात् ॥ ७४ ॥

चित्रगुप्तः —

यम धर्मार्थनिपुण पापानि शृणु सत्वरम् । तत्कृतानि दुरन्तानि संख्याहीनानि सत्वरम् ॥ ७५ ॥

---

1 मार्जितम् C 2 सुरत C E 3 कथं वा C E

यम तत्कृतपापानां संख्यया परमायुषः । क्षयस्य देवकल्पान्ते यस्य मुक्तिर्न सर्वथा ॥ ७६ ॥
तत्पापसंख्यया कालो यावानेव गमिष्यति । तावज्जीवनमस्माकं दुर्लभं खलु सर्वथा ॥ ७७ ॥
एकैकपापकूटस्य गणनायां च कोटिशः । कल्पास्तावत्प्रयास्यन्ति संख्यापि त्वरया यदि ॥ ७८ ॥
पृथगित्यपि संख्यातुं कदापि न भविष्यति । अतः परं कथं संख्या तत्पापानां वदाधुना ॥ ७९ ॥
अहो किं दुरदृष्टं मे दुष्टपापावलोकनैः । तत्पापसंख्ययाप्यायुः नश्यत्येव क्षणे क्षणे ॥ ८० ॥
तत्संख्याश्रवणेनैव तवाप्यायुर्विनश्यति । न जप्तः शिवमन्त्रोऽपि क्षणं वा भक्तिपूर्वकम् ॥ ८१ ॥
तत्पापसंख्यया तावन्नास्माकं शिवपूजनम् । का सृष्टिरावयोस्तावत् कालकालकृपां विना ॥ ८२ ॥
अस्माकमप्यन्तकाले शिवधर्मावलोकनात् । यातना भाविनी सा तु केन वा विनिवार्यताम् ॥
रसनाऽप्यन्यपापानां संख्यया निष्फला खलु । अहो जन्म वृथा जातं शिवपूजाविवर्जितम् ॥
शिवपूजाविहीनानां यातनेत्यवगम्यते । तथापि तस्यां न मतिः क्रियते न (?) सा तथा ॥ ८५ ॥
यत्पूजया परा मुक्तिः सा नास्माभिः कदाचन । कृता भक्त्या यथाशास्त्रं किं कर्तव्यमतः परम् ॥
पातकानां गणनया पातकार्जनमेव हि । अतः परमनेनापि नाधिकारेण नः सुखम् ॥ ८७ ॥
किमनेनाधिकारेण किं नः पातकसंख्यया । शिवपूजावर्जितेन जीवनेनापि किं फलम् ॥ ८८ ॥
धिग्धिग् जीवनमस्माकं शिवार्चनविवर्जितम् । परपापानुवादेन गतमायुः पुनः पुनः ॥ ८९ ॥
परपातकसंख्यार्थं पूर्वमायुः समार्जितम् । शिवपूजाविहीनस्य मरणं केवलं परम् ॥ ९० ॥
मरणोत्तरमप्यस्य यद्यप्यस्त्येव यातना । तथापि जीवनं व्यर्थं इति दुःखं न जायते ॥ ९१ ॥
शिवपूजाविहीनस्य जीवतः सुखमेव न । दुःखमेव परं तत्तु यातना किं न तद्वद ॥ ९२ ॥
मित्रमध्ये जीवतोऽपि न स्याद्यदि शिवार्चनम् । तदा तद्दुःखमत्यन्तं दुःसहं चायशश्च तत् ॥
अयशोराशिरेवायं महेशानर्चको जनः । धिग्धिग्धिग् जीवनं तस्य जीवनं मरणोपमम् ॥ ९४ ॥
शङ्करानर्चको लोके यदि जीवितुमिच्छति । तदा तस्यायशोवह्निज्वालया नाश एव हि ॥ ९५ ॥
अपकीर्त्यग्निसन्दग्धः को वा जीवितुमिच्छति । शिवार्चनपरित्यागादयशश्च किमस्ति नः ॥ ९६ ॥
शिवार्चनपरित्यागस्वरूपाकीर्तिरार्तताम् । संपादयति देहस्य जीवस्य सुतरामपि ॥ ९७ ॥
शिवार्चनपरित्यागस्वरूपाकीर्तिवह्निना । वंशनाशोऽपि बहुधा तन्नाशः सुतरामपि ॥ ९८ ॥
कष्टानि विविधान्येव तेषु श्रेष्ठमिदं खलु । शिवार्चनत्यागरूपं कष्टं कष्टतरं खलु ॥ ९९ ॥
शिवार्चनत्यागरूपकष्टादेव पुरा यम । अकाण्डप्रलयो वृत्तः तत्र [1] देवाः सुरा अपि ॥ १०० ॥

---

1 दग्धाः C E

तृषार्तः क्षुधितो जातः स्वकर्मानुक्षणं स्मरन् । स्वदारालोकनेनैव चकार दिनयापनम् ॥ ५३ ॥
राज्यभ्रंशेन यद् दुःखं व्रणैश्च तरुणारुणैः । व्रणशोणितधाराभिः अश्रुपूर्णोऽप्यभून्नृपः ॥ ५४ ॥
हा हा राज्यं कथमिदं धनं बहुविधं गतम् । तुङ्गास्तुरङ्गास्तुङ्गाश्च मातङ्गाश्चोष्ट्रगोगणाः ॥ ५५ ॥
क्व गताः क्व च मित्राणि क्व कलत्राणि तानि मे । क्वामात्याः क्व गृहास्तेऽपि क्व शय्याश्च मनोहराः ॥
क्व तानि रत्नपात्राणि स्वर्णपात्राणि कोटिशः । क्व वा तानि दुकूलानि विपुलान्यमलान्यपि ॥
क्व ते भृत्याः क्व दास्यश्च क्व तान्याभरणान्यपि । मरणावसरे प्राप्ते गतं तत्सर्व[1] माहृतम् ॥
अधुना तृषितस्यापि क्षुधितस्यापि सेवकः । नान्नदो जलदो वाऽपि वस्त्रदो वा न दृश्यते ॥ ५९ ॥
धृतं वस्त्रं गतं दूरे नास्त्येव वसनान्तरम् । शान्ता [2] सुरायां तृष्णापि नाद्यापि मम दुर्मतेः ॥
अतः परं गतिः का वा मरणानन्तरं च मे । यममार्गस्य वार्तापि श्रुता प्रातर्मया खलु ॥ ६१ ॥
गोक्षुराङ्गारसङ्कीर्णो यममार्ग इति श्रुतः । विवृतास्या महासर्पाः सन्ति तन्मार्ग इत्यपि ॥ ६२ ॥
लोहशङ्कुसहस्राणि सन्ति तप्तानि तान्यपि । प्रतप्ता भिण्डिपालाश्च सन्ति मार्गेषु कोटिशः ॥
भर्जिताः सिकतास्तत्र मार्गेष्वाच्छादिताः किल । अङ्गारवाहिनी तत्र ज्वालामालाकुला किल ॥
[3] अथवा तत्र गमनमतिकष्टमुपागतम् । गाढान्धकारस्तत्रापि मित्रवार्तापि दूरतः ॥ ६५ ॥
हठादेव भटास्तत्र ताडयन्त्यतिदारुणम् । तत्ताडनमतिक्रोधान्मरणोपममेव हि ॥ ६६ ॥
हा हा कथं दुर्दशेयं ममेति प्रलपन् जहौ । प्राणान् स भूपतिस्तत्र विपिने कण्टकावृते ॥ ६७ ॥
स मृतो यत्र तत्रैव निकटे लिङ्गमुत्तमम् । ततः समागतो वातः तमुपस्पृश्य निर्गतः ॥ ६८ ॥
ततः परन्तु नारीणां रोदनेन कियान् गतः । कालस्ततो गताः सर्वे पाल्यास्तेऽपि भयाकुलाः ॥
व्रणदुर्गन्धसंवीतस्त्यक्तस्तावत् स दूरतः । अमात्यैरवशिष्टैश्च स दुष्टः शिष्टनिन्दितः ॥ ७० ॥
ततो नीतो यमभटैरग्निमार्गेण दुर्मदः । दयालेशविहीनैस्तैः कशाघातनपूर्वकम् ॥ ७१ ॥
अग्नितप्तकशाघातैरतितीव्रतरैर्मुहुः । तप्तलोहक्षुरप्राणां कोटिभिर्निहतो मुहुः ॥ ७२ ॥
एवं प्रलपमानोऽयं सन्तप्ताग्निशिलातले । पातितः पश्यति यमे दयालेशविवर्जिते ॥ ७३ ॥
ततो यमोपि तं दृष्ट्वा चित्रगुप्तमुवाच सः । किमस्य पुण्यं पापं वा वदेति मुहुरादरात् ॥ ७४ ॥

चित्रगुप्तः —

यम धर्मार्थनिपुण पापानि शृणु सत्वरम् । तत्कृतानि दुरन्तानि संख्याहीनानि सत्वरम् ॥ ७५ ॥

---

1 मार्जितम् C    2 सुरत CE    3 कथं वा CE

यम तत्कृतपापानां संख्यया परमायुषः। क्षयस्य देवकल्पान्ते यस्य मुक्तिर्न सर्वथा ॥ ७६ ॥
तत्पापसंख्यया कालो यावानेव गमिष्यति। तावज्जीवनमस्माकं दुर्लभं खलु सर्वथा ॥ ७७ ॥
एकैकपापकूटस्य गणनायां च कोटिशः। कल्पास्तावत्प्रयास्यन्ति संख्यापि त्वरया यदि ॥ ७८ ॥
पृथगित्यपि संख्यातुं कदापि न भविष्यति। अतः परं कथं संख्या तत्पापानां वदाधुना ॥ ७९ ॥
अहो किं दुरदृष्टं मे दुष्टपापावलोकनैः। तत्पापसंख्ययाप्यायुः नश्यत्येव क्षणे क्षणे ॥ ८० ॥
तत्संख्याश्रवणेनैव तवाप्यायुर्विनश्यति। न जप्तः शिवमन्त्रोऽपि क्षणं वा भक्तिपूर्वकम् ॥ ८१ ॥
तत्पापसंख्यया तावन्नास्माकं शिवपूजनम्। का सृष्टिरावयोस्तावत् कालकालकृपां विना ॥ ८२ ॥
अस्माकमप्यन्तकाले शिवधर्माविलोकनात्। यातना भाविनी सा तु केन वा विनिवार्यताम् ॥
रसनाऽप्यन्यपापानां संख्यया निष्फला खलु। अहो जन्म वृथा जातं शिवपूजाविवर्जितम् ॥
शिवपूजाविहीनानां यातनेत्यवगम्यते। तथापि तस्यां न मतिः क्रियते न (?) सा तथा ॥ ८५ ॥
यत्पूजया परा मुक्तिः सा नास्माभिः कदाचन। कृता भक्त्या यथाशास्त्रं किं कर्तव्यमतः परम् ॥
पातकानां गणनया पातकार्जनमेव हि। अतः परमनेनापि नाधिकारेण नः सुखम् ॥ ८७ ॥
किमनेनाधिकारेण किं नः पातकसंख्यया। शिवपूजावर्जितेन जीवनेनापि किं फलम् ॥ ८८ ॥
धिग्धिग् जीवनमस्माकं शिवार्चनविवर्जितम्। परपापानुवादेन गतमायुः पुनः पुनः ॥ ८९ ॥
परपातकसंख्यार्थं पूर्वमायुः समार्जितम्। शिवपूजाविहीनस्य मरणं केवलं परम् ॥ ९० ॥
मरणोत्तरमप्यस्य यद्यप्यस्त्येव यातना। तथापि जीवनं व्यर्थं इति दुःखं न जायते ॥ ९१ ॥
शिवपूजाविहीनस्य जीवतः सुखमेव न। दुःखमेव परं तत्तु यातना किं न तद्वद ॥ ९२ ॥
मित्रमध्ये जीवतोऽपि न स्याद्यदि शिवार्चनम्। तदा तद्दुःखमत्यन्तं दुःसहं चायशश्च तत् ॥
अयशोराशिरेवायं महेशानर्चको जनः। धिग्धिग्धिग् जीवनं तस्य जीवनं मरणोपमम् ॥ ९४ ॥
शङ्करानर्चको लोके यदि जीवितुमिच्छति। तदा तस्यायशोवह्निज्वालया नाश एव हि ॥ ९५ ॥
अपकीर्त्यग्निसन्दग्धः को वा जीवितुमिच्छति। शिवार्चनपरित्यागादयशश्च किमस्ति नः ॥ ९६ ॥
शिवार्चनपरित्यागस्वरूपाकीर्तिरार्तताम्। संपादयति देहस्य जीवस्य सुतरामपि ॥ ९७ ॥
शिवार्चनपरित्यागस्वरूपाकीर्तिवह्निना। वंशनाशोऽपि बहुधा तन्नाशः सुतरामपि ॥ ९८ ॥
कष्टानि विविधान्येव तेषु श्रेष्ठमिदं खलु। शिवार्चनत्यागरूपं कष्टं कष्टतरं खलु ॥ ९९ ॥
शिवार्चनत्यागरूपकष्टादेव पुरा यम। अकाण्डप्रलयो वृत्तः तत्र [1] देवाः सुरा अपि ॥ १०० ॥

---

1 दग्धाः C E

शिवार्चनत्यागरूपप्रलयानलसंहतः । को वा जीवति लोकेषु जीवनाशापि कुत्र सा ॥ १०१ ॥

जीवनाशाविनाशाय शिवानर्चनकल्पनम् । अतस्तेन तदाशापि विनश्यति न संशयः ॥ १०२ ॥

शिवार्चनपरित्यागस्वरूपाशनिपातने । को वा जीवति लोकेऽस्मिन् स एव प्रलयानलः ॥ १०३ ॥

शिवार्चनत्यागकालो यः स एव विशेषतः । महाप्रलयकालो नः तेन जीवनमेव न ॥ १०४ ॥

अहो कष्टमिदं नूनं कष्टसागरमध्यगः । शिवार्चनविहीनोऽतः तस्य तत्रैव मज्जनम् ॥ १०५ ॥

लोके दुर्जनसङ्गत्या शङ्करानर्चने मतिः । तया कष्टतरे घोरे नरके वसतिः सदा ॥ १०६ ॥

अशाङ्कराणामधुना सृष्टिरस्माकमीदृशी । यातनार्थमिति ज्ञेया किं वा पापं पुरा कृतम् ॥ १०७ ॥

पापमूर्तिस्वरूपेण न करोति शिवार्चनम् । स महाप्रलयान्तेऽपि नरके स्थास्यति ध्रुवम् ॥ १०८ ॥

नरकाणामियं सृष्टिः अशाङ्करजनाय सा । तत्सृष्टिरपि न व्यर्था शिवानर्चनतत्परे ॥ १०९ ॥

अतः परं नाधिकारे ममापेक्षा यमाधुना । यत्र कुत्रापि गन्तव्यं कर्तव्यं शिवपूजनम् ॥ ११० ॥

मानुषं रूपमास्थाय स्थित्वा बिल्ववने तथा । संपाद्य नर्मदालिङ्गं बिल्वैरभ्यर्चयाम्यहम् ॥ १११ ॥

यो गर्भवासजननातिजरादिरूपरोगप्रणाशमभिवांछति दुःखहीनः ।
तस्याशु बिल्वदललिङ्गसमर्चनेन तद्रोगनाश इति संप्रवदन्ति विप्राः ॥ ११२ ॥

अस्माकमिन्दुशकलाभरणः क्षणं वा नाराधितो विमलकोमलबिल्वपत्रैः ।
द्वित्रैर्जलैरपि न नार्मदतुङ्गलिङ्गे तेनापि दुःखविलयो भवति प्रकामम् ॥ ११३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे विन्ध्यप्रदेशस्थदुष्टराजेतिहासे चित्रगुप्तयमसंवादो नाम दशमोऽध्यायः ॥

—:×:—

# अथैकादशोऽध्यायः ।

याज्ञ्यवल्क्यः —

इति तद्वचनं श्रुत्वा यमोऽपि परितापितः । तमुवाचातिधैर्येण मुञ्चन् अश्रुकणान् मुहुः ॥ १ ॥

किं कर्तव्यमिहास्माभिः अस्माकं दुरदृष्टतः । अधिकारोऽपि संप्राप्तः कष्टानुभवकारणम् ॥ २ ॥

तस्मात् कर्मानुसारेण प्राप्त एवायमीदृशः । अधुना परिहारोऽपि कथमस्य भविष्यति ॥ ३ ॥

अस्मदीयानि दुःखानि विचार्य स महेश्वरः । करुणाविमुखो भूयात् कदा दुःखं प्रयास्यति ॥ ४ ॥

स्वतन्त्रः स महादेवः यद्यद्वा कर्तुमिच्छति । तत्सर्वं स करोत्येव को वा तस्य निवारकः ॥ ५ ॥

अस्माकमल्पभाग्यानामधुना न शिवार्चनम् । अतः परं चिन्तयापि किं तयाऽतिदुरन्तया ॥ ६ ॥

तप्तं यदर्थं च तपः तत्फलं जातमीदृशम् । अतः परं किमस्माकं चिन्तायाः फलमस्तिकः ॥ ७ ॥

यद्युप्तं पिचुमन्दबीजमधुना द्राक्षाफलं किं भवेत्
तद्बीजाङ्कुरजं न तत् किमपि तत् पीयूषरूपं परम् ।
तस्मादस्मदृष्टमीदृशमतो नाराध्यते शङ्करो
न ध्यातोऽपि न बिल्वपल्लवजलैः लिङ्गेषु नाभ्यर्चितः ॥ ८ ॥

किं कर्तव्यमतः परं बहुविधैः पापैरपारैरियं
प्रारब्धानि तनोत्युमापतिपदाम्भोजार्चने धीर्मम ।
न ध्यातं चलदङ्घ्रिपङ्कजरजःपुञ्जं सकृद्वा स्मृतं
हा हन्तामितमायुरेवमनिशं क्षीणं किलानुक्षणम् ॥ ९ ॥

अक्षीणं करणं यदा सुकृतिनां धर्मैरपारैस्तदा
श्रीविश्वेश्वरलिङ्गपूजनमतिर्जातानुवृत्ता भवेत् ।
अभ्यस्ता भवतीति तादृश[1] महद्भाग्योदयः कस्य वा
यस्य स्यादतिपुण्यगौरववशाद्भावाय तस्मै नमः ॥ १० ॥

भावो भाग्यवशेन भावसहितो भावानुरक्तो मुहुः
भावं पश्यति लिङ्गमुत्तमतमं श्रीबिल्वमूले मुदा ।

---

1 महाभाग्येति सुवचम् । एवमन्यत्रापि ।

तस्मिन् बिल्वदलैः शिवार्चनरतो भूयादपायैर्विना
तद्भाग्यं कथमस्मदादिभिरपि प्राप्यं तपोभिर्विना ॥ ११ ॥

आयुस्तावदिदं गतं गतमिदं भूयो न यात्येव नः
पाषाणैरपि ताडनेपि शिरसोऽप्युच्चैः कृते रोदने ।
चोराकारमहाघनीतमिति तन्नायाति सर्वात्मना
शम्भो का गतिरस्य हन्त वद ते जाता दया मय्यहो ॥ १२ ॥

हा हा हन्त बतातिदीनमधुना पश्य क्षणं वा प्रभो
शम्भो मय्यनपायिनी यदि तया तर्हि प्रसीदाधुना ।
त्वत्पूजानिरतं मनो भवतु मे का तावता ते क्षतिः
क्षीणानामपि रक्षणे न करुणा किं ते क्षणार्धक्षणम् ॥ १३ ॥

एतस्मादधिकारतः च्युतिरियं संपादनीया त्वया
यामो बिल्ववनं नवारुणलसद्बिल्वीदलैः कोमलैः ।
तुङ्गे निर्मलबिल्वमूलनिहिते लिङ्गे समभ्यर्चनं
कृत्वा ते निवसामि तेन सफलं तत्तावदायुर्मम ॥ १४ ॥

धिग् धिग् जन्म निरर्थकं नियमतो येनैव नाराधितो
लिङ्गे बिल्वदलैर्जलैरपि शिवः शश्वत्सकृद्वा क्षणम् ।
तं पापिष्ठवरिष्ठनिष्ठुरवचोवीचीसमाकर्णन-
व्यासक्तं सततं मलाविलजलक्षिप्तं प्रपश्याम्यहो ॥ १५ ॥

एते तावदुमासहायचरणध्यानेन हीनाः परं
कुम्भीपाकमहानिलाविलमहाज्वालाकुलव्याकुलाः ।
एतैर्नार्मदलिङ्गवीक्षणमपि त्यक्तं न तत् संस्मृतं
तल्लिङ्गे नवबिल्वकोमलदलं क्षिप्तं न सर्वात्मना ॥ १६ ॥

एतैः पापरतैर्न नार्मदमहालिङ्गाङ्गसङ्गः कृतः
तल्लिङ्गार्चनतत्परोऽपि न ततो न प्रार्थितः साधनैः ।
वाक्यैर्वातिमनोहरैरनुदिनं तत्पापभोगोऽधुना
कुम्भीपाकविशेषतप्तखदिराङ्गारप्रवाहे स्थितः ॥ १७ ॥

एतैर्भूपतिभिः प्रमत्तहृदयैः सर्वात्मना शङ्कर-
ध्यानाराधनपूजनोपकरणद्रव्यैः कदाचित् प्रभुः ।
शम्भुर्नार्चित एव तेन बहुलज्वालाकुलव्याकुलः
कुल्यायां मलपूयकीटचरणाघाताकुलायां स्थिताः ॥ १८ ॥

एतैः प्रातरुमासहायचरणाम्भोजार्चनेष्वादरः
तावन्नैव कृतः कदापि खदिराङ्गारप्रवाहाश्रितैः ।
एतैर्बिल्वदलार्चनं च न कृतं पापेन तेनाधुना
सन्तप्तायसखण्डमुण्डितमहामुण्डाश्चरन्ति द्रुतम् ॥ १९ ॥

एतैर्नार्चितमेव लिङ्गमसकृद् भक्त्या स्थितं दुर्जनैः
तत्पापेन चरन्ति वह्निकुहरज्वालाकुलव्याकुलाः ।
एतैः शङ्करदूषणं कृतमतः तप्तायसं जिह्वया
कृत्वा संकलितं चरन्ति बहुधा सन्तप्तकुल्याजले ॥ २० ॥

एतैर्नैव कृतः कृताघनिचयैः हारोपहारादरः
तत्पापेन मलं चरन्ति बहुधा तप्तं पुरीषे चिरम् ।
तिष्ठन्त्येव लुठन्ति सन्ततमपि क्लिश्यन्ति हन्तेति ते
सन्तप्तायसवायसातिकठिनाघातैस्तुदन्त्यन्वहम् ॥ २१ ॥

एतैः फालतले कदापि न कृतं भस्मत्रिपुण्ट्रं श्रुतं
तेनैवायसवायसोरुचरणाघातैः हताः कोटिशः ।
रुद्राक्षैर्न विभूषिता तनुरतस्ते भिण्डिपालाहताः
किं कर्तव्यमिति प्रधावनपराः क्लिश्यन्ति हाहातुराः ॥ २२ ॥

एतैर्नैव शिवाभिषेचनजलं पीतं ततो दुःसहं
सन्तप्तक्रिमिसंकुलं मलयुतं रेतः पिबन्त्येव ते ।
सन्तप्तायसशस्त्रजालनिहताः क्लिश्यन्ति हा हन्त हा
हाहन्तेति बतेति हन्त हतमित्येवानुधावन्त्यपि ॥ २३ ॥

एतैर्भस्मविहीनपीनमदनव्यापारदूनाङ्गना-
सङ्गेनैव निशा निशापतिकरव्यापारहारादरैः ।

नीता तेन चरन्ति पावकगिरिप्राकारदाराङ्गना-
व्यासङ्गेन मुहुर्मुहुर्हतमहो हा हन्त हन्तेति ते ॥ २४ ॥

एतैर्नार्पितमीश्वराय सुरतव्यापारसौख्यं मुहुः
मोहाविष्करणेन लोहरमणीं तप्तां समालिङ्गय ते ।
तिष्ठन्त्येव हि हा बतेत्यपि कशाघाताहताः पीडिताः
तद्रेतश्च पिबन्ति तप्तमसकृन्मूत्रं पुरीषान्वितम् ॥ २५ ॥

पूयप्रवाहेषु चरन्ति दुष्टाः कष्टैः शिवाराधनवर्जितास्ते ।
मलप्रवाहेषु चरन्ति भूयो रेतःप्रवाहेष्वपि कोटिशस्ते ॥ २६ ॥

तेषां शिवाचारविवर्जितानां न रक्षकः कोऽपि विशेषधर्मः ।
अतोऽतिपीडाकरवह्निशस्त्रसङ्घाहतास्ते शिवदूषकाश्च ॥ २७ ॥

तेषां गृहे नार्मदलिङ्गवार्ता नास्त्येव लिङ्गार्चनसाधनं च ।
अतो महावह्निगुहाप्रविष्टाः तिष्ठन्ति विष्टाशनजातकष्टाः ॥ २८ ॥

एतैः प्रणामो न कृतः शिवाय न नर्तनं वा कृतमीश्वराय ।
तेनाग्निसन्तप्तशिलातलेषु पतन्ति भूयः पुनरुत्पतन्ति ॥ २९ ॥

न श्रुता तेन सहसा महेश्वरकथासुधा । अतो विकर्णो लुठति वह्निकुल्यासु कोटिशः ॥ ३० ॥
नानाविधा यातनाश्च शिवाचारविवर्जितैः । भोक्तव्याः सर्वदा तेषां नरकेभ्यो न निष्कृतिः ॥

रे रे महादेवकथासुधाब्धिः विनिन्दितः शङ्करदूषकेण ।
तत्पापभोगस्त्वरया तवास्तु महाग्निकुण्डेषु निपातनेन ॥ ३२ ॥

हारोपहारमपहाय किमद्य भुक्तं अन्नं भवद्भिरिति लोहकशाभिघातैः ।
ते पीडिताः प्रलपिता निपतन्ति वह्नौ भूयः पतन्ति पतिताः पुनरुत्पतन्ति ॥ ३३ ॥

रे रे किमद्य मरणेऽपि न ते त्रिपुण्ड्रं फाले शिरस्यपि गलेऽप्युरसीति हत्वा ।
छित्वा तदङ्गमसकृत् बहुवह्निकुण्डे ते निक्षिपन्त्यपि पुनःपुनरग्निकुण्डे ॥ ३४ ॥

रे रे मुहुर्न मरणावसरेऽपि लिङ्गं दृष्टं सबिल्वदलपूजितमित्यपारे ।
घोरे विकारनरके प्रलपन्तमेतं पश्यन्ति हन्त हतचेतनमग्निकुण्डे ॥ ३५ ॥

रे रे न बिल्वदलसंयुतलिङ्गतीर्थं पीतं त्वयाद्य मरणावसरेऽपि दुष्ट ।
तेनाग्नितप्तमलसंयुतनीरपानपीनोदरो भव पुनः पुनरेव दुष्ट ॥ ३६ ॥

यो नारीषु कृशोदरीषु विपुलोत्तुङ्गाङ्गभेदप्रभा-
संभोगानुविलोकनेन नयनव्यापारसाराङ्गतः ।
ते ते वह्निविकारलोहरमणीसङ्गोऽस्तु लिङ्गोत्सवो
दृष्टो नेति न तत्र वा कथमभूत् लिङ्गभ्रमस्ते क्षणम् ॥ ३७ ॥

मारापारविहारधीरमनसा नारी परं वीक्षिता
तच्चक्षुः शिवलिङ्गवीक्षणरतं नाभूत् क्षणं वा कथम् ।
लिङ्गादर्शनपातकेन बहुधा सन्तप्तलोहाङ्गना-
सङ्गेनात्र वसेति तप्तनलिकायन्त्रान्तरालस्थितः ॥ ३८ ॥

एवं बहुविधा घोरा यातना केवलं जनैः । शिवार्चनविहीनैस्तैः प्राप्यते प्रतिवासरम् ॥ ३९ ॥

असह्योऽप्यधिकारोऽयं सह्यः स्यादीश्वरेच्छया । न चैतत्परिहारोऽपि स्वतस्त्वनुचितः खलु ॥

अस्वातन्त्र्यं महेशेन सर्वेषामपि कल्पितम् । अतोऽधिकारत्यागोऽपि स्वतः संमत एव न ॥ ४१ ॥

यत्किञ्चिदस्तु किं तेनेत्यपि न त्यज्यते यतः । अस्वतन्त्रस्य तत्त्यागे स्वतन्त्रः खलु कुप्यति ॥

अस्माकमीशपादाब्जपर्यन्तं गमनं न च । क्व वयं क्व महादेवः क्व कैलासोऽतिदुर्लभः ॥ ४३ ॥

एवं च जीवनं व्यर्थं विना शङ्करपूजया । सा तावत् कालसाध्येति कालोऽप्यत्यन्तदुर्लभः ॥

दुष्टदोषविचारेण कालो याति स्वतस्ततः । समयः शिवपूजायाः सर्वथा दुर्लभः खलु ॥ ४५ ॥

यथाकथञ्चित् कर्तव्यं शङ्करध्यानमेव नः । न तु पूजोपकरणं तस्य कालो न दृश्यते ॥ ४६ ॥

अस्मदर्थं महेशेन सृष्टं मानसपूजनम् । तेन प्रीतो भवत्येव नूनं गौरीमनोहरः ॥ ४७ ॥

गौरीमनोहर महेश्वर मानसं वा लिङ्गार्चनं यदि तदा सफला जनिः स्यात् ।
इत्येतदेव हृदये भवतु प्रभो मे शंभो प्रसीद भगवन्निति संवसामि ॥ ४८ ॥

एवं [1]वसति कालेऽस्मिन्नागताः शिवकिङ्कराः । विमानानि समारुह्य शिवनामानुगायकाः ॥

तान् दृष्ट्वा विस्मितः कालः किमाश्चर्यमिति द्रुतम् । उत्पश्यन्नुत्थितो दृष्ट्वा प्रणतश्च पुनः पुनः ॥

ते यमं प्रणतं प्राहुः विमानस्थाः शिवार्चकाः । रे रे यम दुराचार तव लज्जा न सर्वथा ॥ ५१ ॥

कियद्वारं ताडितोऽसि कशया शस्त्रधारया । तत्ताडनानां गणना विस्मृता वा कथं त्वया ॥

दृढपादतलाघातैः कशया सह तद्व्धतिः । समागता लोहितेन सहसा विस्मृता कथम् ॥ ५३ ॥

---

1 वदति C E

पश्चात्कृत्वा बाहुदण्डौ बद्धौ पृष्ठेऽपि रज्जुभिः । अन्तराले स्थापितोऽसि ताडितोऽसि मुहुर्मुहुः ॥
अतो मुख्यस्य बहुधा कशया घातनं कृतम् । तव तद्विस्मृतं किंतु ताडनास्मरणं कथम् ॥ ५५ ॥
तत्ताडने व्रणकिणैरङ्किता ते तनुर्यम । व्रणानि नूतनान्येव तव जातानि कानिचित् ॥ ५६ ॥
आज्ञप्तो बहुधा पूर्वं तदाज्ञा स्मर्यते मया । अतः परं कियद्वारं सोढव्यस्ताडनश्रमः ॥ ५७ ॥
गतिः शांभवमार्गेषु माऽस्त्वित्युक्तं मुहुर्मुहुः । तद्विस्मरणकालोऽयं केवलं मरणाय ते ॥ ५८ ॥
त्वयि यद्यनुकम्पा स्यात् तदा त्रिपुरवैरिणः । कोपोऽस्मासु भवत्येव स किं किं न करिष्यति ॥
यथाऽत्र शांभवद्रोहः तथा चेज्जीवनं तव । अन्यथा नरकावासः तव तावद्भविष्यति ॥ ६० ॥
शांभवाः पूजनीयास्ते प्रणामार्हाः परन्तु ते । यातनामार्गगमनं कथं तेषां भविष्यति ॥ ६१ ॥
इत्युक्तं तद्वचः श्रुत्वा स यमः कम्पमागतः । कृताञ्जलिपुटः प्राह प्रणतश्च पुनः पुनः ॥ ६२ ॥

यमः —

श्रीमद्भिरधुना शिक्षा सम्यगेव कृता खलु । तथापि मम विज्ञप्तिः श्रोतव्या कापि सादरम् ॥
रत्नसिंहासनेष्वेव क्षणं वा स्थेयमादरात् । भवदाज्ञालङ्घने वा कस्य शक्तिर्जगत्त्रये ॥ ६४ ॥
इति तद्वचनं श्रुत्वा श्रान्तास्ते शिवकिङ्कराः । रत्नासनेषु रम्येषु स्थितास्तेन समर्चिताः ॥ ६५ ॥
ततस्तानाह स यमः शैवद्रोहः कथं मया । कर्तव्यः सोऽतिदुःखाय स्यादित्येव मतिर्मम ॥ ६६ ॥
मरणेऽपि न कर्तव्यः शङ्करद्रोह इत्यपि । मतिर्दृढतमा नूनं शपथः शिवपादयोः ॥ ६७ ॥

माहेश्वरेषु यदि कश्चन दुष्टबुद्ध्या द्रोहं करिष्यति कदाचन तत्कुलानाम् ।
नाशो भविष्यति न संशयलेशवार्ताप्यत्रापि शङ्करपदाम्बुजयोः शपामि ॥ ६८ ॥

यः शांभवः स तु पिता जननी सखा च भ्राता च बन्धुरपि मित्रमपीति मन्ये ।
धन्यः स एव मम मान्य इति स्मरामि गौरीसहायचरणाम्बुजयोः शपामि ॥ ६९ ॥

यः शांभवः स तु शिवापरविग्रहोऽतः पूज्यः स मान्य इति मे मतिराविरासीत् ।
अत्राधिकारसमयावधि शैलकन्यानाथांघ्रिपङ्कजयुगे शपथस्त्रिसत्यम् ॥ ७० ॥

दूतैर्न शांभवगृहाध्वनि सङ्गतेऽपि तैस्तद्गृहेषु गमनं न कृतं तदापि ।
दृष्ट्वातिदूरशिवभक्तगृहाङ्गणानि नित्यं नमन्ति मुहुरादरतो भटा मे ॥ ७१ ॥

न ज्ञायते खलु शिवार्चकगेहवार्ता तन्मन्दिराणि न मनागघसंकुलानि ।
दृष्टानि शङ्करगृहाणि पुनन्ति लोकान् गङ्गाजलामलतरङ्गसमानि तानि ॥ ७२ ॥

नित्यं शिवार्चनपरायणपादरेणुपुण्यप्रभावगणनातिविचारणेन ।
नीतं वयः खलु मया न तदङ्घ्रिसेवात्यागः कृतः शिवपदाम्बुजयोः शपामि ॥

शांभवेषु मम संप्रति शम्भुज्ञानमेव भवतीति न चित्रम् ।
तत्र साक्षिरपि तावदुपेक्षां किं करिष्यति शिवो मयि दीने ॥ ७४ ॥

दीनबन्धुरधुना यदि साक्षी न क्षरःक्षितिरपि क्षणदेशः ।
भानुरप्यथ दिगप्यनिलोऽपि त्र्यक्षपक्षनिहितोऽत्र शपामि ॥ ७५ ॥

किं मया कृतमहो दुरदृष्टं निन्दया तनुरियं तनुरासीत् ।
चिन्तयाऽपि शिवपूजकसेवा किं मयापि न कृतैव सुखाय ॥ ७६ ॥

शांभवेषु मम भक्तिरपारा न स्वभावजनिता जननीया ।
केन वा मधुरिमा जननीयो द्राक्षदुग्धदधिसारविशेषे ॥ ७७ ॥

दुर्भगस्य परमेश्वरभक्ते भक्तिरेव न भवत्यत एव ।
यातनाशतमुपेत्य शरीरं सूकरस्य जठरे समुपैति ॥ ७८ ॥

इत्युदीरितमाकर्ण्य यमस्यातिमनोहरम् । तत्वविज्ञानदं प्राहुः सोत्सुकाः शिवकिङ्कराः ॥ ७९ ॥

शिवकिङ्कराः —

दृढा भक्तिर्महादेवे तवास्ति यम वस्तुतः । अस्मिन्नर्थे न सन्देहः कस्यापि भुवनत्रये ॥ ८० ॥

शिवध्यानरतो नित्यं नित्यं धर्मविचारकः । त्वया न सदृशः कोऽपि कर्मदेवेषु वस्तुतः ॥ ८१ ॥

आनीतोऽयं यमभटैरग्निमार्गेण सत्वरम् । अयं दृष्टो महादेव्या श्रीमहादेवसन्निधौ ॥ ८२ ॥

ततोऽतिकृपया गौरी प्राह शङ्करमानता । विनयावनता मन्दं मन्दस्मेरपुरःसरम् ॥ ८३ ॥

गौरी —

पश्य पश्य महादेव महाकारुणिकोत्तम । नीयते सोऽग्निमार्गेण यमभृत्यैर्मदोद्धतैः ॥ ८४ ॥

तं मोचय महादेव स तावदतिदुःखितः । इतोऽपि यातना घोरा का वा वद सदाशिव ॥ ८५ ॥

तद्दर्शनेऽपि हृदयं विदीर्णं मम शङ्कर । स तिष्ठति कथं सोढा वह्निमार्गविकुण्ठनम् ॥ ८६ ॥

अहो नरशरीरेण कष्टमेव प्रतिक्षणम् । गर्भेऽपि दुःखमुत्पन्नं पुनर्दुःखं पुनः पुनः ॥ ८७ ॥

धिग्धिङ् नरशरीराणि यातनाकल्पितान्यतः । इतोऽपि यातना का वा भविष्यति महेश्वर ॥

मृदुला तत्तनुः शंभो तरुणव्रणपीडिता । व्रणं रक्तसमाकीर्णं वह्निमार्गेण नीयते ॥ ८९ ॥
अङ्गारसागराकारः स मार्गस्तस्य वीक्षणम् । अशक्यं तत्प्रवेशस्तु दूरतः सुतरामपि ॥ ९० ॥
अहो पातकमेतेन किमस्ति कृतमक्षयम् । वह्निसागरमग्नोऽपि न मुक्तः पापबन्धनैः ॥ ९१ ॥
किमर्थं यातना सृष्टा त्वया वा करुणाकर । घोरा घोरतरा चान्या बहुदुःखप्रदायिनी ॥
करुणालेशहीनत्वमपकीर्तिकरं न किम् । अहो तद्दुरदृष्टस्य विनाशः केन वा वद ॥ ९३ ॥
करुणारसरूपस्य हृदयस्य तवेश्वर । करुणारससङ्गः किं पुनस्ते समपेक्षितः ॥ ९४ ॥

किं जन्मकोटिघटितस्य न तस्य बुद्धिर्जाता शिवार्चकविशेषसमन्वयेन ।
शंभो कदापि किमिदं न विचित्रमेव नामापि ते शिव न वै श्रुतमेव शम्भो ॥ ९५ ॥

किं केनापि न जन्मना शिवकथा नाकर्णिता नाम वा
न श्रोत्रे पतितं मनागपि नवा लिङ्गं न दृष्टं तव ।
हारं सुन्दरमन्दिरं शिवरतो दृष्टो न दृष्टो रसो
येनायं ज्वलनार्णवे निपतितः कष्टं प्रकृष्टं गतः ॥ ९६ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवगणयमसंवादे शिवं प्रति श्रीगौरीप्रार्थना नामैकादशोऽध्यायः ॥

—o—

## अथ द्वादशोऽध्यायः ।

याज्ञवल्क्यः —

इत्यम्बिकावचनरूपसुधां महेशः पीत्वा प्रहृष्टहृदयः स्मितपूरपूर्णः ।
तामाह शैलतनयामवलम्ब्य तस्याः तूर्णं कराम्बुजयुगे युगपन्मनोज्ञम् ॥ १ ॥

श्रीशङ्करः —

तेनापि तानि दुरितानि कृतानि गौरि तन्नाशकालि नरकाणि न सर्वथाऽपि ।
भूयांसवोऽपि गणनाविषयाः कथञ्चित् तत्पापराशिगणना न कदापि नूनम् ॥ २ ॥

शिवे भसितधारणं न कृतमेव तेनासकृत् सकृत् क्षणमपि क्षणात् प्रथितफालभागेऽपि वा ।
न लिङ्गमपि वीक्षितं न च मनोज्ञबिल्वीदलं न दत्तममलं जलं विमलतुङ्गलिङ्गे मम ॥ ३ ॥

न दीपरचना कृता कपिलगोघृतेनादरात् कदाऽपि घनसारतः प्रबलदीपमाला कृता ।
फलं च न निवेदितं दधि मधु प्रदत्तं शिवे पयोऽपि घृतमेव वा विमलतुङ्गलिङ्गालये ॥ ४ ॥

न शाम्भवमुखे हुतं घृतसमेतमन्नं मुदा पयःप्रभवसारतो दधिविशेषसारादपि ।
समेतसितशर्करा रुचिरहारवक्त्रे हुता न हारमुपहारमप्यशनमस्य मन्ये शिवे ॥ ५ ॥

न चन्दनमपि प्रिये भसितमेव वा सादरं न पुष्पमपि केतकीप्रभवमद्रिमल्लीदलम् ।
जपाकुसुममेव वा विमलतुङ्गलिङ्गेऽमले कदापि न समर्पितं भवति सद्गतिस्तस्य वा ॥ ६ ॥

शिवे सुरतभोजनव्यसनमेव तस्याभवत् सदाऽपि न कदापि वा गिरिशमन्दिरावेक्षणम् ।
न शांभवजनः प्रियः शिवकथारसाभिज्ञता न शांभवि ततः कथं भवति तस्य का सद्गतिः ॥ ७ ॥

अनुक्षणमिदं मुदा निजशरीरनारीसुखं विलोक्य पुनरादरादथ मतिस्तदालिङ्गनैः ।
विनीतमसकृद्दिने रतिविशेषवार्तारसैः ततः कथमुमे गतिर्भवति तस्य पुण्यात्मनाम् ॥ ८ ॥

न बिल्ववनदर्शनं कृतमनेन दुष्टात्मना न शङ्करपुरीकथा कथमनेन नाकर्णिता ।
अनेन मणिकर्णिकापवनसेवनं वा कथं कृतं न गिरिकन्यके भवति तस्य का सद्गतिः ॥ ९ ॥

रुद्राक्षमाला न धृतैव तेन दुरात्मना तस्य न तत्र भक्तिः ।
भस्म त्रिपुण्ड्रं च न तस्य फाले बाले गतिस्तस्य कथं मनोज्ञा ॥ १० ॥

पञ्चाक्षराभ्यासरतो न जातो जातोऽपि जातप्रसभेन वायम् ।
न शांभवेनान्वित एव मार्गे ततः कथं वा गतिरस्य गौरि ॥ ११ ॥

उदारदारोदरहारभारपरीक्षया किं क्षयमाप नायुः ।
अस्यांबिके तेन कथं सुवासना गतिर्भवित्री बहुपुण्यलभ्या ॥ १२ ॥

कदापि नैवोच्चरिता शिवाख्या प्रसङ्गतो वा गिरिराजकन्ये ।
अतः कथं वा गतिरस्य गौरि महात्मनां शांभवपुङ्गवानाम् ॥ १३ ॥

तत्कृताघविलयो न तावता वह्निगर्तविनिपातनेन वा ।
तस्य दुर्गतिरवश्यमद्रिजे भामिनी तु न च भावनां गतः ॥ १४ ॥

भावमार्गगमनेन भामिनी भो भवानि भवपापविच्युतिः ।
भावमार्गविरहे भवे भवे दुर्गतिर्भवति सर्वथा नृणाम् ॥ १५ ॥

भावा एव भवन्ति भाग्यनिलयास्तैरेव भाग्योदयः
तेषां तावदशेषदोषविषयाभावे भवे दुर्लभः ।

तस्य स्यात् सुलभं भवाब्धितरणं यद् भूषणं भस्मना
रुद्राक्षैरपि शांभवोत्तमपदांभोजस्फुरद्रेणुभिः ॥ १६ ॥

संसारे खलु कष्टमेव बहुधा दुष्टात्मनां सङ्गति-
र्नष्टा दुष्टकुलाकुलानलकुलज्वालाकुलालिङ्गिता ।
लिङ्गाराधनवर्जितार्जितमहापापैरपारैः परं
घोरा सा खलु यातना पुनरविश्राम श्रमः सन्ततम् ॥ १७ ॥

हा हा हा नरके पतन्ति बहवो मोहादहो जातु वा जन्मानन्तरमन्तरायरहितं शाङ्गेषु लिङ्गेषु मे।
बिल्वं वा जलमेव वा सकृदुमे न प्रक्षिपन्त्यादरात् घोरापत्कुलयातनालयभयग्रस्ताः परं दुर्जनाः ॥

हा हा हा यमयातनार्थमसकृत् कुर्वन्ति पापं जनाः
सर्वे तद्विमुखाः सुखश्रमवशात् अश्रान्तचित्ताः शिवे ।
नारीसङ्गतिमेव दुर्गतिकरीं नाराधयन्त्यादरात्
लिङ्गं नार्मदमेव शर्मदमहो दुष्टस्य कष्टा गतिः ॥ १९ ॥

एतेषां न मनागपीन्दुशकलालङ्कारलिङ्गस्पृहा
तल्लिङ्गस्मरणं च नो गुणकथाबोधः कदाचिन्मुदा ।
तस्मिन् बिल्वदलार्पणं जललवैस्तत्प्रोक्षणं वीक्षणं
तस्यानुक्षणमप्यतोऽप्यतिभये वह्नौ निबद्धाः शिवे ॥ २० ॥

एते भस्मकृतत्रिपुण्ड्ररहितास्तेनैव पूर्णार्णवे
संबद्धाः पतिताः पुनः पुनरमी सन्तप्तपूयार्णवे ।
स्थित्वा तच्च पिबन्ति पश्य गिरिजे तेषां विमोक्षः कदा
सा चिन्ताऽपि न जायते मम यतस्ते शङ्करद्वेषिणः ॥ २१ ॥

सकृद्वा मन्नामस्मरणविमुखं तस्य करणं क्षणं वा मल्लिङ्गस्मरणविमुखो यो भुवि भवेत् ।
स एवाघोरेऽस्मिन् पतति नरके निर्गतिकथा न तेषां दुष्टानामिति मतिरभूदेव गिरिजे ॥ २२ ॥

वृथालापैर्नीतं गिरिवरसुते तेन तु वयो न मन्नाम प्रीत्या स्मृतमपि कदाचिन्मुहुरपि ।
सकृद्वा तेनायं ज्वलननिलयः पश्य सदये न तेनार्चा ज्ञाता कथमपि च लिङ्गेषु कुसुमैः ॥ २३ ॥

एतद्गृहेषु धनधान्यसमृद्धिरासीत् धान्येन लिङ्गमसकृत् सकृदेव वाऽयम् ।
नाराधनोद्यतमतिर्मम तुङ्गलिङ्गे तेनायमत्र पतितो यमयातनायाम् ॥ २४ ॥

दीपो न तेन रचितः शिवमन्दिरान्तः दीप्तिर्यथा तमसि न प्रणतं च लिङ्गम् ।
तेनायमद्य स महानलतप्तकुण्डे क्षिप्तः प्रधावति पुनः पतनाय गौरि ॥ २५ ॥

श्रीविश्वनाथ गिरिजारमण त्रिणेत्र श्रीचन्द्रशेखर शिवेत्यपि नामवल्ली ।
नाकर्णितेति कशया निहतः स तावदग्नौ प्रपातित इति प्रलयोऽस्य जातः ॥ २६ ॥

लिङ्गे न येन नवबिल्वदलं प्रदत्तं तस्यापि किं भवति दुर्गतिरेव नातः ।
एतस्य घोरनरकालयतो निवृत्तिर्नास्तीति निश्चितमतः कुगतिर्भवित्री ॥ २७ ॥

यैर्नार्चितं कनकचम्पकबिल्वपत्रैः लिङ्गं मदीयमसकृत् सकृदेव वा तैः ।
प्राप्तव्य एव शुनकीजठरे निवासः पश्चान्महानरकवासजशोकराशिः ॥ २८ ॥

[1] प्राप्तं न यस्य शिवलिङ्गसमर्चनेन प्रक्षीणमायुरसकृत् सकृदेव वाऽयम् ।
नित्यं महानरकभोगमवाप्य भूयो भूमण्डले जनिमुपैति शुनीषु गौरि ॥ २९ ॥

भक्त्या यैर्न कृता प्रणामरचना प्रातः प्रदोषेषु वा
मल्लिङ्गेषु न ते प्रयान्ति बहुधा सद्गर्भवासं परम् ।
किन्त्वत्यातुरसूकरीकृमिकुलव्याप्तेषु गर्भेषु ते
जन्म प्राप्य पुनः पुनः प्रतिभवे दुःखालयाः सन्ततम् ॥ ३० ॥

कालः पश्यति कालकालविमुखान् को वा कलौ तानहं
ज्वालाव्याकुलवह्निशैलनिलयान् पश्यामि दस्यूनिव ।
इत्यालोच्य चराचरं चरति किं नेति प्रपश्यादरात्
कालं कालविशेषदोषनिवहान् पश्यादरादम्बिके ॥ ३१ ॥

यमो धर्मविचारज्ञः धर्मराज इति स्मृतः । अतिक्रूरोऽपि न क्रूरः शाङ्करं प्रति सादरः ॥ ३२ ॥

शाङ्कराणामयं मित्रं कथञ्चिदपि तेष्वयम् । न क्रूरदृष्टिं कुरुते तेषु शान्तः सदाशिवे ॥ ३३ ॥

अनन्तजन्मनामन्ते यदि यः कश्चिदादरात् । शाङ्करस्तं विलोक्यापि प्रणमत्ययमादरात् ॥ ३४ ॥

पापराशिः क्षणेनैव तेन तावत् परीक्ष्यते । तत्र स्याद्यदि पुण्यांशः तदा गृह्णाति तं यमः ॥ ३५ ॥

विभूत्यनुद्धूलनतत्पराणां स गौरि तावत् प्रलयानलाभः ।
तद्दृष्टिपातात् प्रलयं प्रयान्ति ते तावदर्धक्षणलेशलेशे ॥ ३६ ॥

---

1 प्रातर्न C

त्रिपुण्ड्रलेखाललितं न फालं तेषां यमो मृत्युरमृत्युरेव ।
त्रिपुण्ड्ररेखातिविशुद्धफालान् शैवान् प्रति प्रत्यहमेक एव ॥ ३७ ॥

न तस्य तावत्प्रलयेऽपि गौरि न्यूना शिवाचाररतेषु तेषु ।
पूज्यत्वबुद्धिः प्रतिवासरं स्याद् अनुक्षणं रक्षकतामतिश्च ॥ ३८ ॥

स शांभवद्रोहरताशनिः स्याद् अशांकरापारवनानलोऽपि ।
अशांभवाब्धेर्वडवानलोऽपि स गौरि चित्रं मम नात्र चित्रम् ॥ ३९ ॥

लिङ्गार्चकाराधकसेवकान् वा दृष्ट्वा प्रयत्नेन नतो नयेन ।
कृताञ्जलिः स्यादत एव मित्रं यमो मदीयं गिरिराजकन्ये ॥ ४० ॥

यन्मन्दिरे नार्मदलिङ्गपूजा तन्मन्दिरस्थान् न यमो गवादीन् ।
विलोक्य दूरात् प्रणतोऽतिनम्रः करोति तस्य स्तुतिमादरेण ॥ ४१ ॥

धन्यं गृहं तस्य तदेव तावत् पवित्रमत्र त्रिपुरान्तकस्य ।
लिङ्गं मनोज्ञं वसतीति मत्वा नमत्ययं मन्दिरमप्यपारम् ॥ ४२ ॥

लिङ्गालयं पश्यति यः प्रयत्नात् तमेव दृष्ट्वा स यमोऽतिभक्त्या ।
धन्योऽतिधन्यः सुतरां स धन्यो मान्यो यमेति प्रवदत्यवश्यम् ॥ ४३ ॥

तन्मन्दिरं शङ्करमन्दिरत्वात् वृन्दारवन्द्यं मुनिवृन्दवन्द्यम् ।
तत्सर्ववन्द्यं भवतीति मत्वा पुनः पुनः स प्रणमत्यवश्यम् ॥ ४४ ॥

यदङ्गे रुद्राक्षाः स तु भवति फालाक्ष इति धीः विभूतेर्वा लेशो यदि भवति तत्फालफलके ।
सकृद्वा मन्नामप्रजपनपरा यस्य रसना तमालोक्यालोक्य प्रणमति पुनर्नृत्यति यमः ॥ ४५ ॥

पिबन्ति ये वा शिवनामरूपां सुधां मुहुस्तान् प्रणमत्यवश्यम् ।
एते महेशप्रियविग्रहत्वात् पूज्या इति स्तौति यमः स गौरि ॥ ४६ ॥

यस्यैव मय्यव्यभिचारिणी स्यात् भक्तिस्तमाशु प्रणतोऽतिभक्त्या ।
स्तौति प्रनृत्यत्यपि गौरि नित्यं स एव मित्रं मम नात्र चित्रम् ॥ ४७ ॥

लिङ्गानि ये वा रजनीमुखेषु दृष्ट्वा प्रयत्नेन नमन्ति धीराः ।
तानाशु दृष्ट्वा प्रणमत्यवश्यं कालस्तदाराधनसक्तचित्तान् ॥ ४८ ॥

[[1] त्रिपुण्ड्ररुद्राक्षधरान् विलोक्य दूरादपि प्राञ्जलिरेव भक्त्या ।
तानाशु दृष्ट्वा .... सक्तचित्तान् ॥ ४९ ॥

---

1 कोष्ठान्तर्गतं श्लोकचतुष्टयं C कोशेऽधिकम् ।

ये प्रातरुत्थाय शिवं स्मरन्ति मामव्ययं पातकनाशहेतुम् ।
तानाशु दृष्ट्वा ... सक्तचित्तान् ॥ ५० ॥

काशीपुरीदर्शनपूतचित्तान् शिवार्चनोत्पन्नसुखप्रवाहान् ।
तानाशु दृष्ट्वा .... सक्तचित्तान् ॥ ५१ ॥

मल्लिङ्गपूजाजनितोत्सवा ये मल्लिङ्गसन्दर्शनपावनाश्च ।
तानाशु दृष्ट्वा ... सक्तचित्तान्] ॥ ५२ ॥

कुम्भीपाकमुखादिघोरनरकावासान् करोत्यादरात्
सर्वान् मद्विमुखान् गिरीन्द्रतनये कालः स कालान्तरे ।
तान् सर्वानपि रासभादिजठरावासान् करोत्यादरात्
कुम्भीपाकरतान् करोति शुनकीगर्भस्थितान् भूरिशः ॥ ५३ ॥

प्रीतिस्तस्य तु शांभवे खलु महाधर्मे ततः शांभवान्
दृष्ट्वा दूरत एव गौरि शिरसा नत्वा प्रबद्धाञ्जलिः ।
धन्याग्रेसरदर्शनेन विकृतिः संसारजा निर्गता
धन्योऽहं कृतकृत्य इत्यपि मुहुः सन्तोषवर्षाप्लुतः ॥ ५४ ॥

मन्नामस्मरणोद्यतो यदि भवेत् शूद्रोऽथवा पुल्कसः
तं तावत्प्रणमत्युमे द्विजवरं हाराभिमानच्युतम् ।
कुम्भीपाकगतं करोति सुरमप्यन्यस्य वार्तापि का
कालो हारमनोहरोऽतिचतुरो लिङ्गार्चने सादरः ॥ ५५ ॥

रुद्राक्षैः सितभूतिभास्वररजःपुञ्जैश्च पूतं वपुः
येषां तच्चरणाम्बुजप्रणतिषु प्रीतिर्हि यस्याम्बिके ।
तद्भिन्नान् नरकेषु केवलमयं संपातयत्यन्वहं
व्याप्तं मद्विमुखैर्यमालयमये पश्यन् प्रनृत्यत्यपि ॥ ५६ ॥

एकेनापि न जन्मना यदि सकृल्लिङ्गानि तुङ्गानि मे
बिल्वीकोमलपल्लवैरभिनवैर्नाराधितानि प्रगे ।
दृष्टानि प्रणतानि वा सकृदपि ध्यातानि वा शैलजे
तर्हि प्रापयति प्ररोदनपरान् कालोऽनलाम्भोनिधिम् ॥ ५७ ॥

हे विश्वेश्वर चन्द्रशेखर महादेव स्मरारे हर
श्रीकण्ठ त्रिपुरान्तक त्रिनयन श्रीकालकालाव माम् ।
दीनं मामिति ये वदन्ति विलसद्रुद्राक्षभूतिप्रभा-
संवीताः सुकृतैस्त एव गिरिजे कालार्चिताः केवलम् ॥ ५८ ॥

गौरीवल्लभ मन्मथान्तकरिपो फालाक्ष विश्वाधिक
श्रीकण्ठ प्रमथाधिपाव भगवन् इत्यादरात् सन्ततम् ।
दीनं मामिति ... केवलम् ॥ ५९ ॥

ये भर्ग त्रिदशार्चितांघ्रिकमल श्रीपुञ्जविश्रामभूः भूधारीश्वरकन्यकाकुचगिरिश्रीपूरसारादर ।
दीनं मामव शङ्करेत्यनुदिनं ... केवलम् ॥ ६० ॥

शम्भो नार्मदतुङ्गलिङ्गनिलयामेय प्रभो धूर्जटे संसारार्तिभिषक्तमोत्तम महादेवामराधीश्वर ।
दीनं मामव ... केवलम् ॥ ६१ ॥

रुद्राक्षप्रिय भूतिभूषण लसद्बिल्वीदलाभ्यर्चित श्रीशूलिन् मृगशावचिह्नितकरांभोजाम्बुजाराधित ।
दीनं मामव .... केवलम् ॥ ६२ ॥

श्रीमृत्युञ्जय कालकण्ठ करुणासिन्धो कपर्दिन् विभो
भक्ताभीप्सितदानलोल ललितादेवीसमाराधित ।
दीनं मामव ... केवलम् ॥ ६३ ॥

श्रीमन्मेरुशरासनातिरुचिरव्यापारसारादर
स्वामिन् चारुसुधाकरार्धघटित भाकोटिपीताम्बर ।
दीनं मामव ... केवलम् ॥ ६४ ॥

विश्वाधीश्वर हे महेश्वर महारुद्रान्तकारे हर
ज्ञानानन्दघनानपाय विलसत्सौभाग्यभाग्योदय ।
दीनं मामव ... केवलम् ॥ ६५ ॥

भो शंभो भव भीमशङ्कर हर व्योमान्तकेशानघ
ब्रह्माण्डोदयपालनव्यतिकरव्यापार विश्वेश्वर ।
दीनं मामव ... केवलम् ॥ ६६ ॥

मन्नामोत्सुकमानसो मुहुरयं कालः प्रपश्यत्ययं
　मत्पूजानिरतांश्च पश्यति मुहुर्भस्मत्रिपुण्ड्राङ्कितान् ।
रुद्राक्षाभरणांश्च तच्चरणजान् रेणून् शिरस्यादरात्
　धृत्वा नृत्यति शर्व शङ्कर महादेवेति शैलात्मजे ॥ ६७ ॥

मन्नाम स्मृतमेव जीवनमिति ज्ञात्वा स्मरत्यादरात् मामीशं शिवमप्रमेयविभवं ये ते परं शैलजे ।
कैलासं समुपेत्य मत्पदरजःपुञ्जैः सह क्रीडनं कुर्वन्त्युत्तमभूतिभूषितमहारुद्राक्षवक्षःस्थलाः ॥

न शिवालयवातपोतनीतोऽप्यगजे यो मरणक्षणे क्षणं वा ।
स न संसृतिसागरान्तमेतीत्यनुवारं कलयोक्तिमादरेण ॥ ६९ ॥

करुणा न ममाम्बिके कदापि प्रलये चाविगतत्रिपुण्ड्रफाले ।
अनले स पतत्यवश्यमेवेत्यसकृन्मद्वचनेषु नादरः किम् ॥ ७० ॥

भानोः स्यादुदयोऽपि पश्चिमगिरिद्वारोदराभ्यन्तरात्
　इन्दोर्वाऽभ्युदयः कदाचन तथाप्यायुःक्षयो भूषणम् ।
भूतिर्यस्य न तस्य गौरि सहसा सन्तोषवार्तापि वा
　किंत्वाकल्पमघोरदुःसहतरापारव्यथा भूरिशः ॥ ७१ ॥

यदि [1] सूकरबालकोदरादमरोत्तुङ्गगजोदयस्तदा ।
गिरिजे सुखवासना भवेदशिवाराधनभक्तचेतसाम् ॥ ७२ ॥

शुनकीमृतपोतगर्भजो यदि वाजी [2] सुरवाजिभस्तदा ।
गिरिजे सुखवासना भवेदशिवाराधनसक्तचेतसाम् ॥ ७३ ॥

यदि मर्कटकुक्कुटोदरात्सुरधेनोरुदयो भवेत् तदा । गिरिजे .... चेतसाम् ॥ ७४ ॥

यदि पुल्कसकुत्सिताङ्गनाजनितो ब्राह्मणपुङ्गवस्तदा । गिरिजे ... चेतसाम् ॥ ७५ ॥

यदि दुष्टमलान्मनोहरो दधिसारः समुदेति सर्वथा । गिरिजे ... चेतसाम् ॥ ७६ ॥

न दयाऽपि तवोचिता शिवे शिवनिन्दानिरतेषु सन्ततम् ।
श्रुतिसंस्तुतभूतिवर्जितः शिवनिन्दापर एव सन्ततम् ॥ ७७ ॥

न कृपापि तवाम्बिके मता सततं मद्विमुखेषु सर्वथा ।
श्रुतिनिन्दनतत्पराः परं नरके वै निपतन्ति सन्ततम् ॥ ७८ ॥

---

1 जारकिशोरसोदरः सुरनारीषु मनोहरस्तदा इति C E　2 सुरवाजिनोस्तदा C

श्रुतिबोधितलिङ्गपूजनं न कृतं येन दुरात्मना शिवे ।
स महाघकुलाश्रयोऽनिशं नरकावासरतो न संशयः ॥ ७९ ॥

श्रुतिबोधितभूतिधारणं न कृतं येन दुरात्मना शिवे ।
स महाघकुलाश्रयोऽनिशं नरकावासरतो न संशयः ॥ ८० ॥

रुद्राक्षभूषणमुमे श्रुतिषु प्रसिद्धं तत् कार्यमेव सततं द्विजपुङ्गवैस्तु ।
त्यक्त्वा तदन्तसमये नरकं प्रयान्ति सत्यं त्रिसत्यमिदमूर्ध्वभुजो वदामि ॥ ८१ ॥

शिवलिङ्गमतुङ्गमस्तु तुङ्गं किमनेनापि विशेषचिन्तनेन ।
यदि नार्मदमीक्षितं स्मृतं वा सकृदभ्येति ममान्तिकं भवानि ॥ ८२ ॥

नयनाम्बुजमीक्षणाय सृष्टं शिवलिङ्गस्य समर्चितस्य गौरि ।
तदवेक्षणहीनजन्म हीनं नरकावासनिवासहेतुभूतम् ॥ ८३ ॥

परमं खलु कर्णभूषणं शिवनामश्रवणं मनोहरम् ।
तदपारसुखावहं सदा न कृतं येन स याति यातनाम् ॥ ८४ ॥

कुसुमार्चितलिङ्गचिन्तनं मनसः कृत्यमिति श्रुतं ततः ।
तदपास्य वसन्ति दुर्जनाः स्वलयाय प्रभवन्ति केवलम् ॥ ८५ ॥

कृत्यं लिङ्गसमर्चनं करतलस्येति श्रुतं तेन चेत्
तन्नैवासकृदादरेण न कृतं यद्वा सकृत्तेन किम् ।
तस्य स्यात् फलमित्यतः स पतति ज्वालाकुलव्याकुलः
कुम्भीपाकजपावके स शुनकीयोनिं प्रयास्यत्यपि ॥ ८६ ॥

उद्धृत्याद्य भुजद्वयं निगदितं लिङ्गार्चनं केवलं मोक्षोपायतया श्रुतं श्रुतिशतैस्तेनैव मुक्तिः परा।
तत्र स्यादधिकारितापि भसितेनोद्धूलनं सर्वथा तेनैवानुलवं त्रिपुण्ड्ररचना फालादिके बालिके ॥

यन्नामस्मरणेन केवलमुमे प्राणप्रयाणेप्सितं
भस्माङ्गे करकण्ठकर्णयुगले रुद्राक्षमाला यदि ।
मुक्तिः स्यादनपायिनी मम सखा स स्यान्मदीयं धनं
सर्वं तस्य वशे स केवलमहं सत्यं त्रिसत्यं शिवे । ८८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवकिङ्करयमसंवादे गौरीशङ्करसंवादवर्णने
शिवधर्मानुवर्णनं नाम द्वादशोऽध्यायः ॥

# अथ त्रयोदशोऽध्यायः ।

याज्ञवल्क्यः —

इत्थं सा गिरिराजराजतनया श्रुत्वा मुहुः शङ्करव्याहारामृतसागरान् करुणया प्राह प्रमोदावहम् ।
नत्वा तत्पदपङ्कजं करतले धृत्वाऽपि सा तत्करं तत्कृत्यं पुनरेव सस्मितमुखं स्मेराननं शङ्करम् ॥

श्रीपार्वती —

स्वामिन् शङ्कर चन्द्रशेखर महादेवामराधीश्वर व्याहारामृतसारसाररचना कर्णावतंसाय ते ।
अद्यापूर्वमपूर्वयुक्तिमणिभिर्व्याप्तं परं भूषणं संपूर्णं मम कर्णयोर्विरचितं तन्मे परं भूषणम् ॥ २ ॥

शम्भो तस्य महाप्रयाणसमये तस्मिन्नरण्ये शुभे दूरे शाङ्करमन्दिरं रुचिकरं तस्मात् किलाद्यानिलः ।
जातस्तत्कुणपे स्पृशन्नपगतो नूनं स धन्यस्ततः तस्यैवं यमयातना त्वनुचिता मुक्तिश्च संभाविता ॥

वातेनैव हितेन नीतममलं तत् काननं व्याप्तं
यत् किञ्चिद्दवभस्म तेन च तनुस्तस्यातिपूता तनुः ।
तस्यैवं यमयातना कथमयं मुक्तोऽस्तु का तावता
हानिः स्यादपराधिनामवनमप्यर्थेन्दुमौले स्मृतम् ॥ ४ ॥

यस्याङ्गे दवभस्मरेणुपवनः तं पावनं मेनिरे
वातः शङ्करमन्दिरादपगतः पापापहारोद्यतः ।
तेनाप्यन्वित एव सोऽयमधुना मुक्तोऽस्ति मय्यस्ति चेत्
स्नेहश्चेत् स्मरशासकासकृदिदं वक्तव्यमप्यस्ति किम् ॥ ५ ॥

दवसितभसितानुव्याप्तवात्याविनीतच्छदपतनजभीतिव्यावृता भूतसङ्घाः ।
निजतनुमतिघोरां क्षुत्पिपासातिदूरां जहुरतिमुदितास्ते ब्रह्मलोकं प्रपन्नाः ॥ ६ ॥

शिवभसितकणानां यः प्रभावः स वेदैः कथमपि [1] जनितो वा नागरैर्वा मया वा ।
शिवसितभसितेनोद्धूलितस्तस्य तत्वं स्तुतमपि निगमान्तैः ज्ञायते न त्वयापि ॥ ७ ॥

भूतप्रेतपिशाचघातुकतया ज्ञाता विभूतिस्त्वया
सा संसारपिशाचनाशकतया ज्ञाता न किं शङ्कर ।

1 अपूर्वः प्रयोगः । ज्ञाजनोर्जा । तर्हि ज्ञातः जातः जनितश्चेति प्रयोगभ्रातरः । ज्ञात इत्यर्थे जनित इति प्रयुक्तमत्र । अहो वश्यवाक्त्वं ग्रन्थकर्तुः ।

तद्वातेन विधूतपातककुलास्ते कालकालाधुना
सर्वेषामपि पावनाः सुरसरिद्वाताः पुनन्त्येव ते ॥ ८ ॥

हर जातु न जायते नरः स्मरणेनापि विभूतिधारिणः ।
तव भूतिरजःप्रसारजः पवनः पावयतीति नाद्भुतम् ॥ ९ ॥

इति तद्वचनं श्रुत्वा प्रहृष्टः परमादरात् । हरोऽपि प्रेरयामास तमानेतुं स्वकिङ्करान् ॥ १० ॥

नन्दिकेशं च भृङ्गीशं रिटिं चाहूय सादरम् । प्राह प्रसन्नवदनो हरो गौरीमनोहरः ॥ ११ ॥

शिवः —

पश्य पश्य स भूपालो नीयते यमकिङ्करैः । पातितो वह्निकुण्डेषु कशाघातातिपीडितः ॥ १२ ॥

तेन यद्यपि पापानि कृतान्येव प्रतिक्षणम् । तथापि तस्य पापानि नष्टानि दवभस्मना ॥ १३ ॥

अतस्तस्य निवासोऽस्तु ब्रह्मलोके ततः परम् । स पुनर्भूपतिर्भूत्वा लिङ्गार्चनपरो भवेत् ॥ १४ ॥

स मोचनीयो यत्नेन यमोपि कुपितोऽधुना । स सान्त्वनीयो यत्नेन मदाज्ञावचनैर्मुहुः ॥ १५ ॥

दवभस्मान्वयो वृत्तः तस्यैव मरणोत्तरम् । इति तत्सान्त्वनं युक्तं अन्यथा कुपितो भवेत् ॥ १६ ॥

इत्युक्तमीश्वरेणेति तैरुक्ता वयमादरात् । अतः समागता एव वयमप्यादरादिह ॥ १७ ॥

याज्ञवल्क्यः —

इति शङ्करदूतदूतवाक्यैः स यमस्तावदतीव हृष्टचित्तः ।
तमुपायनकल्पनैः प्रहृष्टं स चकार प्रयतो नृपं नृप ॥ १८ ॥

शिवाज्ञावचनैः कालः सन्तुष्टः स तदा नृपम् । रत्नासनस्थं कृत्वाशु पूजयामास सादरम् ॥ १९ ॥

ततः प्राहातिसन्तोषात् चित्रगुप्तः स विस्मितः । नन्दिकेश्वरदूतेषु शृण्वत्स्वेव नृपोत्तम ॥ २० ॥

यमः —

करुणारससारसागरो हर एवेति मुहुः श्रुता श्रुतिः ।
अत एव हि तस्य सा दयाऽप्यतिदीनेष्वपराधसिन्धुषु ॥ २१ ॥

महेशकरुणारसप्रसरमात्रमेव क्षणं भविष्यति यदा तदा सकललोकसारः क्षणात् ।
अपारकरुणानिधिस्त्रिदशवर्गवन्द्यः शिवः स एव गतिरित्यहं दिवसयापनं मन्महे ॥ २२ ॥

अहं तावद्धन्यः सकलसुरवर्गेष्वपि गणाः क्षणं वा मन्नामव्यवहरणयोग्यं कथमपि ।
महादेवस्यासीदिदममितपुण्यैरिति मतिः प्रवृत्ता सा गौरी करकमललीलासुकलिता ॥ २३ ॥

परं ब्रह्मानन्दाभ्युदयसमयोऽयं मम यतो महादेवो देवप्रमथगणवृन्दारकगणैः।
न दृष्टो वेदान्तैरपि गिरिजया साकमसकृन्मदीया वार्ताऽभूदमिददयया केवलमहो॥ २४॥

अहं तावद्गौरीरमणचरणाम्भोजरजसः प्रभावज्ञस्तज्ज्ञप्रवरवरवार्ताऽपि चतुरा।
अहो धीरो वीरः खलु करुणया मय्यपि मुहुः दयापूर्व्याप्ते वितरति मुदा मामकमतिम्॥

महादेवस्याहं हितकरवरत्वेन विहिते शिवे भक्तिः श्रद्धाप्यनवरतमस्यास्तु नियता।
तया मुक्तिर्भाग्यं सकलजनवन्द्यत्वमपि मे भविष्यत्येवेति प्रमितिरभवत् तच्छिवकृपा॥ २६॥

इति तद्वचनं श्रुत्वा गणाः सन्तुष्टमानसाः। तं नीत्वा ब्रह्मसदनं प्रापुर्यमसमन्विताः॥ २७॥

तमानीतं विधिर्दृष्ट्वा गणानीतं गणानपि। पूजयामास विधिवन् सन्तोषं जनयन्मुदा॥ २८॥

ततः परं गणाः सर्वे शिवलोकं ययुर्मुदा। स भूपतिर्ब्रह्मलोके बहुकालं स्थितो नृप॥ २९॥

ततः परमवापायं दिव्यदेहमुपाश्रितः। रेवातीरं बालदेहो रूपलावण्यसंयुतः॥ ३०॥

तत्र रेवाजले स्नात्वा भस्मनोद्धूल्य भक्तितः। स्वाङ्गान्युन्मील्य नयने ददर्श विपुलां नदीम्॥

ततः प्राह स बालोऽपि प्राहातिरुचिरं वचः। यद्वचःश्रवणादेव मुक्तिः करतलस्थिता॥ ३२॥

बालः —

नर्मदे शर्मदे पाहि शाङ्गं लिङ्गं मनोहरम्। हरस्याप्यनुवारं ते विलोकनसमुत्सवः॥ ३३॥

तीरजास्तरवोऽप्यम्ब लिङ्गरूपास्तवामले। चरलिङ्गस्वरूपास्ते विचरन्ति नरा अपि॥ ३४॥

अचलं यच्चरं तीरे नीरे वा तव नर्मदे। तत्सर्वं लिङ्गरूपेण दृश्यते पापनाशनम्॥ ३५॥

ब्रह्मलोकेऽपि लिङ्गानि तावद् दृष्टानि कोटिशः। ब्रह्मणा तेषु लिङ्गेषु क्रियते शङ्करार्चनम्॥

शक्तिरत्यद्भुता दृष्टा तव लिङ्गे शिवात्मके। यल्लिङ्गदर्शनादेव मुच्यते पापकोटिभिः॥ ३७॥

नर्मदातीरतरवः प्रयान्ति शिवमन्दिरम्। गणास्त्वत्पूजनोद्युक्ताः सर्वदा खलु नर्मदे॥ ३८॥

अतः परमहं तीरे तवैव हि निरन्तरम्। वसामि शिवसायुज्यं तेन तावद्भविष्यति॥ ३९॥

इत्युक्त्वा नर्मदालिङ्गं तज्जलैर्विमलैरपि। अभिषिच्य प्रयत्नेन प्रणतश्च पुनः पुनः॥ ४०॥

तत्तीरबिल्वपत्राणि नवानि विमलान्यपि। प्रक्षिपन्नेव बहुधा चचार स शनैः शनैः॥ ४१॥

तत्तीरवासिनः सर्वे तं दृष्ट्वा बालकं मुहुः। परमाश्चर्यसंपन्नाः प्रहृष्टास्ते पुनः पुनः॥ ४२॥

ततस्तत्तीरनगरे चित्रकेतुरिति श्रुतः। तस्मै निवेदयामासुः बालवृत्तान्तमास्तिकाः॥ ४३॥

प्रधानपुरुषा एव विनयानतकन्धराः। कृताञ्जलिपुटास्तद्ज्ञाः शिवभक्तिपरायणाः॥ ४४॥

प्रधानाः —

राजन्नत्यद्भुतं दृष्टं रेवातीरे मनोहरे। पुरा न दृष्टमस्माभिः तादृशं विस्मयावहम् ॥ ४५ ॥
राजन् बालोऽतिविमलः संजातः प्रायशः प्रियः। नेत्रयोस्तस्य माता वा पिता वा नैव दृश्यते ॥
सूर्यमण्डलसङ्काशो मन्मथापरविग्रहः। यादृशं तस्य सौन्दर्यं तादृशं दृष्टमेव न ॥ ४७ ॥
विशालनेत्रकमलः स्वपादकमलश्रिया। तिरस्करोति कमलान्यारक्तानि नृपोत्तम ॥ ४८ ॥
प्रदक्षिणप्रक्रमेण [1]स्पन्दत्येव स यद्यपि। तथापि कुरुते राजन् स लिङ्गानां प्रदक्षिणम् ॥ ४९ ॥
नृत्यत्यग्रे स लिङ्गानां करसंपुटघातनैः। स्वेदधारापरिक्रान्तः शरीरमपि विस्मरन् ॥ ५० ॥
क्षणं निमील्य नयने करोति ध्यानमादरात्। [2]तथापि कुरुते राजन् स लिङ्गध्यानमादरात् ॥
पश्चादाश्चर्यसंयुक्तः पुनर्लिङ्गानि बालकः।
तं दृष्ट्वा मुनयः सर्वे रेवातीरनिवासिनः। परमाश्चर्यसंपन्नाः तिष्ठन्ति परिवृत्य तम् ॥ ५२ ॥
ते तं पश्यन्ति मुनयः स बालस्तान् न पश्यति। स चानिमिषया दृष्ट्या धीरो लिङ्गानि पश्यति॥
उदहार्योपि पश्यन्ति जलकुम्भान् विहाय ताः। गोपाला अपि पश्यन्ति गोभिः सह विशेषतः ॥
मधुरं शिवनामानि स गायति मुहुर्मुहुः। गान्धर्वे गानविद्यायां निपुणः प्रायशः स तु ॥ ५५ ॥
इति तद्वचनं श्रुत्वा राजा विस्मितमानसः। तद्दर्शनार्थं त्वरया निर्गतो वाजिवाहनः ॥ ५६ ॥
बालकालोकनं कर्तुं भूपतिस्त्वरयाऽऽगतः। रेवातीरं तदा तावत् गतिभेदोऽपि वाजिनाम् ॥
न ज्ञातस्त्वरया तस्य गमनोत्कण्ठया नृप। तुरङ्गकोटिघटितो मत्तमातङ्गकोटिभिः ॥ ५८ ॥
संवृतो भूपतिस्तीव्रं रेवातीरमुपाययौ। ततो दूरात् स राजाऽपि मुनिबृन्दानि कोटिशः ॥ ५९ ॥
उपर्युपरि संक्रान्तशरीराणि विलोकयन्। आनन्दाश्रुसमाकीर्णः तुरङ्गादवतीर्य सः ॥ ६० ॥
ययौ प्रधानसंवीतः सनकाद्यैः समावृतः। बालस्य निकटे गत्वा स राजा विस्मितः परम् ॥ ६१ ॥
मन्दं प्रदक्षिणीकृत्य दण्डवत् प्रणतो मुहुः। ततः सर्वे समालोक्य बालकं विस्मयावहम् ॥ ६२ ॥
स्थिताः सर्वेऽपि परितस्तत्र चित्रार्पिता इव। स न पश्यति राजानं न प्रधानान् मुनीश्वरान् ॥
नात्मानं च परं लिङ्गं पश्यन्नभ्यर्चितं मुहुः। न वदत्येव केनापि शिवनाम परं शिवम् ॥ ६४ ॥
उच्चैरप्युच्चरन् धीरोऽप्यानन्दाश्रुपरिप्लुतः। तं दृष्ट्वा विस्मयाविष्टाः ते सर्वे विष्टराश्रयाः ॥६५॥
त्रिविष्टपसमं मत्वा स्थानं हाराश्रितं स्थिताः। स पुनः पुनरादाय शीतलं विमलं जलम् ॥ ६६ ॥

1 स्खलत्येव C E 2 इदमर्धं C E कोशयोर्नास्ति।

अभिषिच्य च लिङ्गानि बिल्वैः संपूजयन् मुहुः । तं विलोक्य सलज्जास्ते सनृपाला मुनीश्वराः ॥
नत्वा तमूचुः कोऽसीति ते कृताञ्जलयस्तदा । ततः सोऽपि महादेवः सदाशिव इतीरयन् ॥६८॥
नान्यां वाचमुवाचापि न ददर्श च तान् नृप । ततः परं जिताहाराः ते सर्वे विस्मयाकुलाः ॥
आसायं तं विलोक्यैव स्थिताः केवलमादरात् । स्नात्वा रेवाजले सर्वे त्रिपुण्ड्राङ्कितमस्तकाः ॥
उत्थिताङ्गाश्च शाङ्गास्ते शङ्गार्चनपरायणाः । सोऽपि बालः पुनः स्नात्वा भस्मनोद्धूल्य सादरम् ॥
त्रिपुण्ड्रधारणं चक्रे रुद्राक्षसमलंकृतः । पश्चाद्बिल्वावृतं लिङ्गं शाङ्गं लिङ्गं स नार्मदम् ॥ ७२ ॥
अभिषिच्य नवैर्बिल्वैः पूजयामास शङ्करम् । तं दृष्ट्वा ते जनाः सर्वे विस्मयाविष्टचेतनाः ॥ ७३ ॥
धन्योऽयं कृतकृत्योऽयं कोऽपि मानुषविग्रहः । प्रायः कोऽयमिति प्रीत्या हारो हारमनोहरः ॥
न चास्याहारलेशोऽपि प्रातरारभ्य सर्वथा । तच्चरित्रं विचित्रं हि त्रिनेत्रार्चनया चिरम् ॥ ७५ ॥
कालं नयति बालोऽपि न चेदं बालचेष्टितम् । न चास्य तत्वं विज्ञातुं शक्यते मनुजैरिह ॥
त्यक्त्वा बालं न गन्तुं च प्रवृत्तं मानसं खलु । अनादरोऽयमाहारैः किं च नाहारदोषतः ॥
नानादरोऽपि नार्यां च तस्यानादर एव हि । इत्यालोच्य नृपः सोऽपि कृपया परया युतः ॥
गोक्षीराहारमादाय ययौ बालकसन्निधिम् । एतस्मिन्नन्तरे काले विधिः सायं शिवार्चनम् ॥
कृत्वा रेवामवापाथ तं ददर्श स बालकम् । भूतिरुद्राक्षपूताङ्गं शिवनामजपोत्सुकम् ॥ ८० ॥
चतुर्मुखं विलोक्याह बालः शिव शिवेति सः । ततः परं स राजाऽपि तं विलोक्य चतुर्मुखम् ॥
पूजयामास हृष्टात्मा शिवभक्तधिया परम् । ततः परमुवाचेदं राजा परमधार्मिकः ॥ ८२ ॥
कोऽयं त्वया ज्ञायते किं न वेति विनयान्वितः ।

राजा —

प्रातरारभ्य बालोऽयं करोति गिरिशार्चनम् । नृत्यत्यग्रे महेशस्य लिङ्गरूपस्य केवलम् ॥ ८३ ॥
प्रातरारभ्य सर्वेऽपि विधे नगरवासिनः । नाहारेष्वादरा एव विहारे सुतरामपि ॥ ८४ ॥
अद्भुता बालचेष्टेयं दृश्यते गोधनैरपि । न पीतं यवसं गोभिः यवसं न च भक्षितम् ॥ ८५ ॥
अग्निहोत्रादिकर्माणि मुनिभिर्विस्मृतान्यपि । लज्जया नीयते कालः केवलं तद्विलोकनात् ॥ ८६ ॥
मुनीश्वरकलत्राणां गात्राण्यपि विशेषतः । विचित्राणीव दृश्यन्ते तेषु संचार एव न ॥ ८७ ॥
मुनिबालाश्च पश्यन्ति तस्य बालस्य चेष्टितम् । आहारस्तैरपि त्यक्तो वार्ता नान्यस्य सर्वथा ॥
नायं मुनिर्न गन्धर्वः पन्नगो वा नरोऽपि वा । सुरोऽयमसुरो वापि सिंहो वा यक्ष एव वा ॥

केयं सृष्टिर्महेशस्य लोकानां विस्मयावहा। न माता दृश्यते तस्य न भ्राता न च बान्धवः ॥
न सखा नोपद्रष्टा च न वदत्यपि बालकः। नगरं प्रति गन्तुं वा न मनो जायते मम ॥ ९१ ॥
वृथैव गतमायुर्मे चिन्ता तावत्प्रजायते। पञ्चवत्सरपर्यन्तं शिववार्ता श्रुताऽपि न ॥ ९२ ॥
गर्भवासे बहून्येव दुःखानि विविधान्यपि। भुक्तान्येव न तेषां तु गणनागणनापि न ॥ ९३ ॥

जननीजठरानलेन तप्ता जठरे तावदियं तनुस्तनुर्मे ।
अधुनाऽपि न वासना गता मे बत हा हन्त बतेति हा महेश ॥ ९४ ॥

जठरानलतापपापभीतिर्न गता तावदिहापि नूनमस्य ।
नरकालय एव गर्भवासः स न सह्यः खलु सर्वदा ममासीत् ॥ ९५ ॥

बहुधा खलु दुःखमेव भुक्तं जननीयोनिविनिर्गमक्षणे तु ।
तदनु क्षुधयाऽतिपीडितोऽहं जननीस्तन्यमपेक्षितं तदा हि ॥ ९६ ॥

न च वागपि निर्गता ममाभूत् वदनात् सा रसनातिकुण्ठिता ।
मलसंकुलदेहपीडयापि प्रबलं दुःखमभूत् पुनः पुनर्मे ॥ ९७ ॥

अङ्गारशकटी धाटी खट्वा निकटतापिनी। सापि पापाय तत्पापप्रणाशो नाभवत् खलु ॥ ९८ ॥
औषधानि कटून्येव तिक्तान्यपि कदाचन। सेवितान्यपि दुःखाय जातान्यपि विशेषतः ॥ ९९ ॥

ततः परं दुर्व्यसनेन नीतं वयः कियत् कामविमोहितेन ।
हा हा अनाराधित एव शंभुर्भूयो भवाम्भोनिधिकर्णधारः ॥ १०० ॥

हारेषु दारेष्वपि योऽनुरागः स एव हारे न हरेऽपि हारे ।
लिङ्गेऽतितुङ्गे तत एव नायुर्गतं किमेतस्य वृथा तदायुः ॥ १०१ ॥

यथा ममोत्तुङ्गतुरङ्गवाञ्छा मातङ्गवाञ्छा न तथा कदापि ।
लिङ्गे न शाङ्गे खलु सस्पृहोऽहं हा हा हतोऽहं हत एव नूनम् ॥ १०२ ॥

यथा ममोत्तुङ्गकुरङ्गलोचनाविलोचनालोकनधीस्तथा चेत् ।
उत्तुङ्गलिङ्गेऽपि च शाङ्गसङ्गेष्वत्यद्भुता तर्हि विमुक्त एव ॥ १०३ ॥

दाराः कुमाराश्च धनं हरन्ति वयो हरत्येव तरां हरस्तु ।
न संस्तुतो न श्रुत एव हा हा नूनं हतोऽहं हत एव नूनम् ॥ १०४ ॥

दारप्रसङ्गेषु न शाङ्कवार्ता यतस्तदा मारशराभिघातः ।
शराभिघातेन सुरोऽपि मूढः ततो मृडे भक्तिरभूत् दृढा का ॥ १०५ ॥

कौमारे वा यौवने वार्धके वा बुद्धिर्नासीत् तुङ्गलिङ्गार्चनेषु ।
नाभ्यस्ता वा शांभवी ज्ञानविद्या लोके याम्ये का गतिर्वा भवित्री ॥ १०६ ॥

शम्भो गौरीवल्लभानाथनाथ पाहि स्वामिन् पापराशिं कृशाशम् ।
वध्यं मृत्युर्मामवैति प्रकामं किं कामारे मय्युपेक्षा तवाऽपि ॥ १०७ ॥

त्वं माता मे त्वं पिता मे सखा मे त्वं भ्राता मे शासकोऽपि त्वमेव ।
त्वं मे त्राता प्राणरक्षामणिस्त्वं नान्यं जाने त्वद्विना मे शरण्यम् ॥ १०८॥

कदा रेवातीरे हर हर महादेव भगवन् महारुद्रेशान स्मरहर हरान्धान्धकरिपो ।
उमाकान्ताभ्रान्तप्रकटितजटाजूट भगवन् इति प्राणत्यागं क्वचिदपि करोमि प्रसभतः ॥ १०९ ॥

कदा वा सद्भस्मप्रकररुचिरा स्यात् तनुरियं महारुद्राक्षाणामपि विततमालाऽतिरुचिरा ।
कदा रेवातीरे रुचिरहरलिङ्गस्य निकटे शरीरस्य त्यागं शिव शिव महेशेति कलये ॥ ११० ॥

कदा रेवालिङ्गं विमलनवबिल्वीदलयुतं प्रपश्यन्नेवेश स्मरहर महेशेति विलपन् ।
मुहुर्भस्मच्छन्नः सितभसितरुद्राक्षवलयः शरीरस्य त्यागं हर हर महेशेति कलये ॥ १११ ॥

कदा मुदा शङ्करमन्दिरेषु वृन्दारमन्दारविजृंभितेषु ।
लिङ्गेषु तुङ्गेषु विलोकितेषु महाप्रयाणावसरेषु भावी ॥ ११२ ॥

भावस्य [1]भावावसरेषु शम्भो कथं भवाम्भोनिधिमज्जनं स्यात् ।
त्वं चेद्भवाम्भोनिधिकर्णधारो महेश्वरः शांभवसंघबन्धुः ॥ ११३ ॥

कदा रेवातीरे हर हर महेशेति विलपन् मुहुः प्राणांस्त्यक्त्वा शिवभटविमानोत्तमगनः ।
यमेन्द्रब्रह्मादिस्तुतिमुदितचित्तः शिवपदं प्रपद्ये यत्प्राप्त्या पुनरपि न संसारकलनम् ॥ ११४ ॥

कदा शरीरं भसितेन पूतं रुद्राक्षमालाभिरलङ्कृतं च ।
त्यक्ष्ये विरूपाक्षविलोकनेन स्मरन् विरूपाक्षपदारविन्दम् ॥ ११५ ॥

मत्प्रार्थनीयं मरणं महेश महेशनामस्मरणं सभस्म ।
रुद्राक्षमालाभरणं मदङ्गे तुङ्गे च लिङ्गं मम नर्मदायाः ॥ ११६ ॥

---

1 भावानुचरस्य C

रेवालिङ्गं मरणसमये यस्य नास्त्येव तुङ्गं श्रौतं भस्म स्फुटितरुचिरं स्थूलरुद्राक्षमाला ॥ ११७ ॥

विद्या शुद्धा शांभवी तस्य मुक्तिः नास्तीत्युक्तं सर्वदा सिद्धसङ्घैः ।
सन्तोषोऽयं भूरिपुण्यैकलभ्यः शंभो शंभुध्यानमात्रानुरागः ॥ ११८ ॥

त्वन्नामोक्तिर्मुक्तिकान्तानुरागे हेतुर्नूनं सत्यमेव त्रिसत्यम् ॥ ११९ ॥

अस्माकं मरणक्षणे यदि मुदा रेवातटे नार्मदं
लिङ्गं लोचनगोचरं नवलसद्बिल्वीदलाभ्यर्चितम् ।
भस्माङ्गेपि विशेषतो यदि भवेत् रुद्राक्षमाला शिव-
ध्यानं शांभवसङ्गतिः शिवशिवेत्युक्तिस्तदा किं भयम् ॥ १२० ॥

शिवस्मरणपूर्वको यदि भवेद्विहारस्तदा
जितं खलु जगत्त्रयं क्व मम दुर्दशावासना ।
क्व वासवचतुर्मुखाद्यमरभाववांछा तदा
महेश्वरपदाम्बुजस्मरणमेव मुक्तिर्मम ॥ १२१ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवलिङ्गमहिमप्रकरणे
राजवाक्यं नाम त्रयोदशोऽध्यायः ॥

---

## अथ चतुर्दशोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा सर्वपापहरं परम् । तमाह धन्यधन्योऽसि धन्योऽसीति मुहुर्मुहुः ॥ १ ॥

यद्वक्तव्यं मया तद्धि त्वयैवोक्तं नराधिप । अतः परं किमत्रास्मिन् प्रसङ्गावसरो मम ॥ २ ॥

रेवातीरनिवासिनां शिवपदध्यानामृतास्वादनात् सिद्धा बुद्धिरिहेति किमिदं चित्रं स्वतस्ते यतः ।
शुद्धान्तःकरणप्रमाणविषयाः तद्धीस्ततस्ते परं रेवालिङ्गसमर्चकाः शिवपदं यान्त्येव नात्राद्भुतम् ॥

मुक्तिः प्राप्या परा तावद्रेवातीराङ्कुरैरपि । नरैरिति किमत्र स्याददद्भुतं नरपुङ्गव ॥ ४ ॥

रेवातीरतरङ्गसङ्गतमहावाताभिघाताद्यदा
तत्तीरे तरवः पतन्ति पतितास्ते तावदत्युत्तमाम् ।

संप्राप्यैव गतिं प्रयान्ति शिवमित्येतेऽपि धन्या जनाः
तत्तीरप्रभवाः प्रभूतविभवाः सर्वे न लिङ्गानि किम् ॥ ५ ॥

यावद्रेवातीरवातप्रवृत्तिः तावन्मुक्तिर्जन्तुजातस्य सत्यम् ।
जीवन्मुक्तो नर्मदातीरजन्तुः मुक्तिश्चान्ते स्यात्पराप्यन्तकाले ॥ ६ ॥

तस्माद्भाग्यैर्नर्मदातीरवासो रेवावासः काशिवासेन तुल्यः ।
काशीदेशे प्रस्तरो नैव लिङ्गं रेवादेशे प्रस्तरो लिङ्गमेव ॥ ७ ॥

पुरा नदीसमूहेन तपस्तप्तं नृपोत्तम । पावनत्वं प्रपन्नाः स्मः पावनेष्विति निश्चयात् ॥ ८ ॥
हिमवत्कन्धरे गङ्गा तपश्चक्रे मनोरथैः । युगानामयुतं राजन् देवानां विस्मयावहम् ॥ ९ ॥
प्रज्वाल्य पावकान् पश्चात् पुरतः पार्श्वयोरपि । पश्यन्ती मण्डलं भानोः ध्यायन्ती साम्बमीश्वरम् ॥
सूर्यमण्डलमध्यस्थं स्वर्णकुण्डलमण्डितम् । स्वर्णाङ्गदप्रभाकीर्णं स्वर्णकेयूरभासुरम् ॥ ११ ॥
दिव्यरत्नाङ्गुलीयानां शोभया च विराजितम् । किरीटताटहाराणां राशिभिश्च विराजितम् ॥१२॥
सुवर्णरचितानन्तमणिमेखलया वृतम् । स्फुरन्नूपुरशिञ्जीरशिञ्जितैश्च विराजितम् ॥ १३ ॥
दिव्याभरणसंपूर्णवामाङ्गगिरिजायुतम् । स्तूयमानं वेदसङ्घैर्नीलग्रीवं महेश्वरम् ॥ १४ ॥
सेव्यमानं सुरगणैः प्रमथाद्यैश्च सेवितम् । फाललोचनमाराध्यं त्रिशूलाभयपाणिनम् ॥ १५ ॥
कटाक्षैरमृताकारैः प्रपश्यन्तं मुहुर्मुहुः । स्वभक्तान् नन्दिकेशादीन् मन्दारासारसेवितम् ॥ १६ ॥
गौरीमनोहरं धीरं जरामरणवर्जितम् । अप्रमेयमनाद्यन्तं व्युप्तकेशं कपर्दिनम् ॥ १७ ॥
कल्याणरूपमानन्दं आनन्दवनमद्वयम् । महाविद्याप्रदातारं दातारं संपदामपि ॥ १८ ॥
स्मेरधाराधराधारं नित्यं गौरीमनोहरम् । अपारकरुणापूरपरिपूर्णं च सुन्दरम् ॥ १९ ॥
उत्पत्तिस्थितिसंहारहेतुभूतं सनातनम् । तडिन्मण्डलसंकाशदिव्यवस्त्रविराजितम् ॥ २० ॥
हिरण्यबाहुमीशानमपराजितमद्वयम् । प्रतिक्षणेऽप्यभिनवं महोदारं सुरस्तुतम् ॥ २१ ॥
अनन्ताप्रतिमामेयकल्याणगुणसागरम् । वरदानोन्मुखं शान्तं सर्वाशास्यवरप्रदम् ॥ २२ ॥
एतादृशं महादेवं ध्यायन्ती मनसा शिवम् । गङ्गा परं तपस्तेपे दिव्यसुन्दरविग्रहम् ॥ २३ ॥
देवास्तत्तपसा क्षुब्धाः सर्वे मुनिवरा अपि । गिरिकन्दरसंकीर्णा चकम्पे सधराधरा ॥ २४ ॥
मेरुमन्दरमुख्याश्च गिरयस्तत्तपोग्निना । सन्तप्ता एव हिमवान् प्रतप्तो गन्धमादनः ॥ २५ ॥
विन्ध्यश्च निषधश्चान्यः शैलादः पर्वतेश्वरः । अन्ये च गिरयः सर्वे सन्तप्ताः तत्तपोऽग्निना ॥ २६ ॥

रेवया च तपस्तप्तं तथा यमुनया नृप । सरस्वत्या तपस्तप्तं तत्तप्तं शोणभद्रया ॥ २७ ॥

फल्गुन्या च तपस्तप्तं भद्रया शोणयाऽपि च । गोदावर्या तपस्तप्तं वेण्याऽथो कृष्णयाऽपि च ॥

भीमयाऽपि तपस्तप्तं कावेर्यापि नृपोत्तम । कुमुद्वत्या तपस्तप्तं धारया क्षीरया तथा ॥ २९ ॥

अन्यैरपि नदीभेदैः तपस्तप्तं सुदुस्सहम् । क्षुब्धं लोकत्रयं तेन तपसा केवलं नृप ॥ ३० ॥

अत्युग्रतपसा तप्तां रेवां दृष्ट्वा महेश्वरः । प्रसन्नः पार्वतीयुक्तः तामुवाच दयानिधिः ॥ ३१ ॥

सदाशिवः —

नर्मदे शर्मदे देवि वरं वृणु मनोहरम् । किं तवाभीप्सितं लोके तत्प्रयच्छामि सर्वथा ॥ ३२ ॥

इति तद्वचनं श्रुत्वा नर्मदा प्राह शङ्करम् ।

नर्मदा —

मयि संवस गौरीश सर्वदा शिवया सह ॥ ३३ ॥

प्रार्थनीयं महादेव मम तावदिदं प्रभो । एतावता कृतार्थाऽस्मि सन्निधानं तवेप्सितम् ॥ ३४ ॥

सदा सन्निहितस्यापि सन्निधानं विशेषतः । अपेक्षितं ममेशान तपस्तत्सफलं भवेत् ॥ ३५ ॥

मत्तीरतरुषु स्वामिन् मत्तीरगिरिराजिषु । प्रस्तरेष्वपि मत्तीरे सदा सन्निहितो भव ॥ ३६ ॥

न चागमप्रतिष्ठायास्त्वपेक्षा त्वदनुग्रहात् । तत्प्रस्तरार्चनेनैव तुष्टो भव सदाशिव ॥ ३७ ॥

यद्यत् प्रतिष्ठितं देवैर्लिङ्गं मर्त्यैर्मुनीश्वरैः । तल्लिङ्गापेक्षया लिङ्गमिदमुत्तममस्तु मे ॥ ३८ ॥

मत्तीरनीरजो वायुः या च स्पृशति तत्तनुः । पवित्रा भवतु स्वामिन् त्वन्नामस्मरणादिव ॥ ३९ ॥

मल्लिङ्गपूजया शंभो मुक्तो भवतु मानवः । मल्लिङ्गसदृशं लिङ्गं मास्तु सर्वात्मना प्रभो ॥ ४० ॥

काश्मीरे रसलिङ्गे वा रत्नलिङ्गेष्वपि प्रभो । तवाभिमानो न तथा यथा मत्प्रस्तरोत्तमे ॥ ४१ ॥

इदं सोमेश्वरं नाम लिङ्गं मङ्गलदायकम् । एतद्दर्शनमात्रेण मुक्तिरस्तु सदाशिव ॥ ४२ ॥

सोमेशलिङ्गकुण्डानि भुजङ्गाभरणान्यपि । भवन्तु तेषु सर्वेषु सदा सन्निहितो भव ॥ ४३ ॥

सोमेशकुण्डनिलयं स्थूलमस्थूलमेव वा । लिङ्गं भुजङ्गाभरणं पूजितं भुक्तिमुक्तिदम् ॥ ४४ ॥

यः प्रार्थितो वरः शम्भोः मया त्वद्भक्तिपूतया । तादृशो न वरो देयो मद्भिन्नाय महेश्वर ॥

सर्वात्मनाप्यन्यविलक्षणत्वं मय्यस्तु शम्भो त्वदनुग्रहेण ।
अयं वरोऽन्योऽतिविलक्षणो मे देयस्त्वया शङ्कर दीनबन्धो ॥ ४६ ॥

वरान्तराणां मम नास्त्यपेक्षा श्रीमन् विरूपाक्ष कृपाकटाक्षैः ।

अपेक्षितं ते मयि सन्निधानं मत्प्रस्तरेषु प्रथितेष्वपीश ॥ ४७ ॥

तवाप्यदेयो न वरो महेश देवेषु तावद्गणनीय एव ।
अयं वरः प्रार्थित एव नान्यैः मया परं प्रार्थित इत्यवैमि ॥ ४८ ॥

सर्वज्ञमूर्तेः करुणाकरस्य किमस्त्यदेयं तव चन्द्रमौले ।
अयं वरो लोकहिताय तावत् मयापि संप्रार्थित एव नूनम् ॥ ४९ ॥

लोकेपि तावद्बहवोऽपि शक्ताः कदाचिदालस्यपराहताश्च ।
तेषां विमुक्तिः कठिनेति मत्वा वरो मया प्रार्थित एव सोऽयम् ॥ ५० ॥

बिल्वीदलं वा सजलं जलं वा दूर्वाङ्कुराद्यासितभूतिभूषः ।
मत्प्रस्तरेभ्यः प्रददाति तत्ते प्रियं भवत्वर्धशशाङ्कमौले ॥ ५१ ॥

हे नर्मदे देवि शिवप्रियेति मन्नाम निद्रासमये स्मरन्ति ।
तेषां न दुःस्वप्नभयानि तावद् भवन्तु शम्भो त्वदनुग्रहेण ॥ ५२ ॥

त्वत्पादसंदर्शनपूतचित्तां मां यः सकृद्वा स्मरते प्रभाते ।
तस्यास्तु भक्तिस्त्वयि चन्द्रमौले तया स मुक्तोऽस्तु कृपानिधान ॥ ५३ ॥

ब्रह्मा —

इति तत्प्रार्थितान् सर्वान् वरान् दत्वा महेश्वरः । तत्रैवान्तर्दधे राजन् सर्वभूतपितामहः ॥ ५४ ॥

ततः परं महादेवः कैलासनिलयः प्रभुः । गङ्गाकृतं तपो दृष्ट्वा परं विस्मयमागतः ॥ ५५ ॥

को वा वरो मया देयः कस्त्वया प्रार्थितो वरः । तपो घोरतरं तस्याः सर्वलोकभयङ्करम् ॥ ५६ ॥

इत्येवं स्मरतः शंभोर्गणाः सर्वे नृपोत्तम । प्रणताः शङ्करं प्राहुः पाहि पाहीति सादरम् ॥ ५७ ॥

गणाः —

स्वामिन् हिमगिरेः कन्या ज्येष्ठा गङ्गेति विश्रुता । सा तपः कुरुते घोरं तपसामपि तत् तपः ॥

तेनैव तपसा सर्वे सन्तप्ताः पर्वता अपि । विना सङ्कर्षणामीश तरुभ्यो वह्निरुद्गतः ॥ ५९ ॥

कुलाचलादयः सर्वेऽप्यचलाश्चलतामिताः । अमितास्तपसा तेन लुब्धाः सर्वे सुरा अपि ॥ ६० ॥

अतः परं महादेव प्रसीद करुणानिधे । अन्यथा प्रलयोऽपि स्यादकाण्डे गिरिजापते ॥ ६१ ॥

इति तैः प्रार्थितः शम्भुः गणकोटिसमन्वितः । तूर्यध्वनिसमाकीर्णो गङ्गाप्रत्यक्षतां गतः ॥ ६२ ॥

ततः परं महादेवे प्रसन्ने सति शङ्करे । प्रणम्य दण्डवद्भूमौ गङ्गा तुष्टाव शङ्करम् ॥ ६३ ॥

गङ्गा —

नमो नमस्ते गिरिजासहाय नमो नमस्ते पुनरिन्दुमौले ।
नमो नमस्तेऽस्तु पुनर्नमस्ते नमो नमस्ते करुणासमुद्र ॥ ६४ ॥

श्रीमन्महारुद्र नमो नमस्ते श्रीवीररुद्राय नमो नमस्ते ।
नमो नमस्ते गिरिश त्रिनेत्र नमो नमस्तेऽस्तु विभूतिगात्र ॥ ६५ ॥

श्रीनीलकण्ठाय नमो नमस्ते फालप्रदेशानललोचनाय ।
नमो नमस्तेऽस्तु कपर्दिने नमो नमो नमस्तेऽस्तु सदाशिवप्रभो ॥ ६६ ॥

मार्ताण्डमण्डलनिवास नमो नमस्ते मार्ताण्डकुण्डलविराजितभूषणाय ।
मार्ताण्डचण्डकरसङ्कुलमण्टपाय तस्मै मृडाय भगवन् भवते नमोऽस्तु ॥ ६७ ॥

यद्वीक्षणप्रसरमात्रविधूतपापाः संप्राप्नुवन्ति परमं पदमिन्दुमौलेः ।
तैरेव मां मुहुरपि प्रणतां प्रपश्य पश्याद्य वह्निनिकराश्रिततप्तदेहाम् ॥ ६८ ॥

माता त्वमेव भगवन् जनकस्त्वमेव मित्रं त्वमेव मम चन्द्रकलावतंस ।
भ्राता त्वमेव भगवन् गिरिजासहाय त्राता त्वमेव भगवन् हर नीलकण्ठ ॥ ६९ ॥

त्वं कालकूटविषधारणधीरचित्तः त्वं मारसंहरणकारणभूत एव ।
ब्रह्माण्डमण्डलसुखण्डनहेतुभूतः त्वामेव तावदधुना शरणं प्रपन्नाः ॥ ७० ॥

त्वन्नामकीर्तनसुधारसपानपीनो दीनोऽपि दैन्यमपहाय दिवं प्रयाति ।
पश्चादुपैति परमं पदमीश तेन तद्भाग्ययोग्यकरुणां कुरु मामपीश ॥ ७१ ॥

वरो वरः प्रार्थित एव देयः प्रागेव यस्तावदुमासहाय ।
दत्तो वरः शर्मद नर्मदायै सा शर्मदा सर्वसुरासुराणाम् ॥ ७२ ॥

अतः परं तादृश एव देयो वरो न लोकेषु तथा च तस्याः ।
न प्रार्थनीयः त्वमतो वरो मे देयस्तदन्यो मम मुक्तिहेतुः ॥ ७३ ॥

जलस्वरूपेण ममास्तु काश्यां वासो मदीयेन जलेन नित्यम् ।
तवाऽभिषेकोऽस्तु कृपैकसिन्धो श्रीविश्वनाथात्मकलिङ्गरूपे ॥ ७४ ॥

लिङ्गस्वरूपेण महेश काश्यां अवस्थितिस्ते प्रमिता मयाऽतः ।
तत्राभिषेकोऽस्तु जलैर्मदीयैः अयं वरो मे वर एव शंभो ॥ ७५ ॥

एतस्मादधिको वरोऽपि न वरो येनैव काश्यां स्थितं
मुक्तिः सर्वमता ममापि तव सा तस्माद्वरोऽयं वरः।
येनेदं हि ममाधुना वरमुमाकान्तायमेव प्रियः
सर्वेषामिति रेवयाऽपि न वरः सोऽयं मया प्रार्थितः ॥ ७६ ॥

तत्प्रार्थितस्तु स वरो वर एव नूनं सर्वोपकारकतया प्रथितः पृथिव्याम्।
स्वर्गेऽपि सत्यभवनेऽपि ततस्तदन्यो देयो वरो भवति ते स तु दुर्लभोऽपि ॥ ७७ ॥

यः काशीनगरे यदम्बुषु मुहुः स्नात्वा कृतोद्धूलनः
सर्वाङ्गे भसितत्रिपुण्ड्ररुचिरो रुद्राक्षमालावृतः।
तन्नीरैरभिषिच्य लिङ्गममलं विश्वेश्वराख्यं ततः
त्रिः पीत्वा त्वभिषेकवारि स तव प्रायः प्रियोऽस्तु प्रभो ॥ ७८ ॥

कल्पान्ते मम मुक्तिरस्तु भगवन् त्वन्नामसङ्कीर्तनैः
तावज्जीवनमस्तु वस्तुविषये मास्तु स्पृहा मास्तु मे।
काशीवासरतिः स्थिराऽस्तु भसिते रुद्राक्षमालास्वपि
श्रीविश्वेश्वरतुङ्गलिङ्गभजने प्रीतिर्ममास्तु प्रभो ॥ ७९ ॥

इत्युक्त्वा प्रणतां गङ्गां तथाऽस्त्विति महेश्वरः। तत्रैवान्तर्दधे साम्बः सर्वदेवगणैः सह ॥ ८० ॥

गोदावरीप्रमुखदेवनदीभिरेवं संप्रार्थितः स च वरं परमुक्तिरूपम्।
दत्वा मुहुर्मुहुरभिष्टुत एव ताभिः संप्राप सौख्यनिलयं निलयं स्वकीयम् ॥ ८१ ॥

तस्मात् सेयं नर्मदा शर्मदा स्यात् सर्वेषां नः प्राणिनां सौख्यहेतुः।
यन्नीरं वा त्रिः पिबेत् तस्य तावन्नापार्वा पातकैरेव भीतिः ॥ ८२ ॥

सेयं रेवा सेविता येन पुंसा तस्यावश्यं मुक्तिरेवेति मन्ये।
धन्या मान्या शर्मदा नर्मदेयं का वा तुल्या रेवया वा नदी स्यात् ॥ ८३ ॥

रेवातीरं प्रार्थयत्येव गङ्गा तीरोत्पन्नो मुक्तिकामश्च नित्यम्।
रेवातीरे येन तप्तं तपः स्यात् मुक्त्यै रेवा लिङ्गरूपा विपापा ॥ ८४ ॥

पापानि संहरति निर्मलनर्मदाम्भः संसेवितं सकृदपारसुखं तनोति।
पीतं महेशनिहितं वितनोति मुक्तिं रेवाजलेन सदृशं किमिहास्ति लोके ॥ ८५ ॥

इत्याकर्ण्य विधेर्वाक्यं स राजा वीतमत्सरः। बालकस्यास्य वृत्तान्तं पप्रच्छ नृपसत्तम ॥

राजा —

कोऽयं बालः किमेतस्य जनकोऽस्ति न वा वद । माता वा कुत्र सञ्जातः कथमत्रागतो विधे ॥
कथमस्यामवस्थायां शिवनामजपोत्सुकः । शिवार्चनरतो धीरो निराहारो गतस्पृहः ॥ ८८ ॥
अहो किमिदमाश्चर्यं दृष्टपूर्वमिदं तु नः । कथं गायति नामानि मधुराणि मनोहरः ॥ ८९ ॥
मनोहराणि दिव्यानि महादेवस्य शूलिनः । नामानि मधुराण्यत्र गायन् नृत्यति पश्यति ॥ ९० ॥
ईदृशः कथमुत्साहः समुत्पन्नश्चतुर्मुख । अस्य बालस्य माहात्म्यं वद सर्वं विशेषतः ॥ ९१ ॥

ब्रह्मा —

चित्रं चित्ररथैतस्य स्वरूपं शृणु सादरम् । चरित्रेण पवित्रश्च पवित्रं गात्रमस्य तु ॥ ९२ ॥
अयं पूर्वभवे राजा महापातकपर्वतः । न चैतत्पापगणना कर्तुमेव हि शक्यते ॥ ९३ ॥

एतादृशोऽपि नरकार्णवमार्गमध्ये सर्पोदरेषु गत एव विषार्दितोऽपि ।
निष्कासितश्च गणदन्तनिघातचूर्णः तद्वह्निकुण्डपतितः परितः प्रवृत्तः ॥ ९४ ॥

आनीलवृश्चिकगणैरपि दृष्ट एव तद्वेदनार्णवनिमग्नशरीर एव ।
तप्तेषु वह्निकुहरेषु पुनः प्रवृत्तः कुल्याप्रवाहपतितः पुनरुत्थितोऽपि ॥ ९५ ॥

सन्ताडितोऽप्यनलतप्तसभिण्डिपाललोहोरुदण्डकठिनाग्रविघट्टितोऽपि ।
एतादृशोऽपि यममार्गमहाव्यथाभिरार्तः शिवानयनगोचरतां गतोऽसौ ॥ ९६ ॥

पश्चादयं तु यमयातनया विमुक्तः कालार्चितः शिवगणैः सह मामवाप ।
पश्चान्मयापि बहुधैव समर्चितोऽयं प्रीत्या मया सह मदालयसन्निविष्टः ॥ ९७ ॥

मल्लोकवासिभिरयं सह सर्वदापि स्थित्वा शिवार्चनकथाश्रवणेन पूतः ।
लिङ्गानि पश्यति मुहुर्मुहुरादरेण तान्यर्चयत्यनुदिनं [1] उमया सहायम् ॥ ९८ ॥

हारं तत्र सुधोपहारमसकृत्पीत्वा स्थितो भूपतिः योगेनायमयोनिजेन नृपते देहेन रेवां गतः ।
रेवालिङ्गसमर्चनोद्यतमतिस्त्रस्तः सदा भस्मना पूताङ्गः समलङ्कृतः शिवरतो रुद्राक्षमालागणैः ॥

एतच्चित्रविचित्रमात्रमधुना तावत् पवित्रं मया दृष्टादृष्टविशेषपुण्यफलदं कष्टापहारोद्यतम् ।
द्रष्टुं तावदिहागतः शिवनदी दृष्टा मया पुण्यतः दृष्टोऽसि त्वमिहातिशांभववरो रेवाविहारादरः ॥

सोऽयं वृद्धिमुपैति शांभववरो रेवाजलैः सर्वदा रेवालिङ्गसमर्चनेन सकलं कालं नयन् भूपते ।
भूपालत्वमुपेत्य शांभवगणैः साकं महीमण्डले चण्डालानपि खण्डपर्शुभजनासक्तान् करिष्यत्ययम् ॥

1 च मया CE

एतद्दर्शनमन्वहं मुहुरयं कर्तुं प्रवृत्तः सुरैः
सार्कं स्वर्गनिवासिभिर्मुनिवरैः सिद्धैस्तथा किन्नरैः ।
गन्धर्वैरपि यत्नपूर्वकमयं पूज्यो यतः शांभवो
रेवालिङ्गसमर्चनेषु नियतो बिल्वैश्च रेवाजलैः ॥ १०२ ॥

जन्मापि दुष्करमथापि मनुष्यजन्म तत्रापि शङ्करसमर्चनधीरतुल्या ।
केनापि धर्मनिचयेन स एव धर्मो धर्मेषु तावदधिकः स विमुक्तिहेतुः ॥ १०३ ॥

धर्माः सन्ति सहस्रशोऽपि निगमैरुक्तास्तथा तेष्वयं
धर्मः श्रेष्ठ इति श्रुतो बहुविधैर्वेदान्तवाक्यैरपि ।
लिङ्गाराधनलक्षणः क्षणमपि त्याज्यो न सर्वात्मना
लिङ्गाराधनमम्बिकाऽपि कुरुते शङ्काङ्कवासापि सा ॥ १०४ ॥

लिङ्गाराधनमुत्तमोत्तममिति ज्ञातं प्रवृत्तं ततः
कर्तुं कर्तुमनन्तजन्मतपसा बुद्धिः परं जायते ।
यद्वा शङ्करपादपद्मजरजःपुञ्जप्रसादादियं
बुद्धिः संभवतीति भूरिविभवैर्भाग्यं परं जायते ॥ १०५ ॥

को वा भूतिविभूषणो भुवि भवेद्रुद्राक्षमालाश्रयो
लिङ्गाराधनतत्परः शिवशिवव्याहारमात्रादरः ।
हाराहारहितोपहारपरमप्रीतो न जाने स मे
वन्द्यः पूज्यतमोऽपि शङ्करगणश्रेष्ठो वसिष्ठार्चितः ॥ १०६ ॥

अभ्यासेन न तादृशी मतिरुदेत्याराधकावेक्षणात्
किन्त्वाकल्पकृतातिघोरतपसा भक्तिः शिवे जायते ।
सा भक्तिर्यदि सन्ततं च तनुते सन्तानसंपत्प्रभा
वृद्धिं वृद्धिमुपैति सापि सततं लिङ्गार्चनेनादरात् ॥ १०७ ॥

ब्रह्मत्वं मम लिङ्गपूजनकृतं तेनैव सत्याभिधो
लोको लोचनगोचरोऽपि न सतां प्राप्तो मया दुर्लभः ।
लिङ्गाराधनपुण्यमेव न यतो मुक्तिः परं भाविनी
तत्पुण्यं तु विलक्षणं क्षणमपीत्युक्तं न शक्यं मया ॥ १०८ ॥

जारो जातु न जारिणीष्वनुरतस्तस्माद्विरक्तो युवा
न स्यात्तां तरुणीं प्रपश्यति मुहुस्त्यक्त्वापि कार्यान्तरम् ।
तद्वद्यः शिवलिङ्गपूजनरतो दूर्वाङ्कुराद्यैर्मुदा
वारं वारमदृष्टभेदघटितो हारः स लोकोत्तरः ॥ १०९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे गङ्गानर्मदादितपोवर्णन तद्वरप्रदान नर्मदामहिमनर्मदालिङ्गपूजनमहिमबालकपूर्वजन्मवृत्तान्तादिकथनं नाम चतुर्दशोऽध्यायः ॥

---

## अथ पञ्चदशोऽध्यायः ।

---

याज्ञ्यवल्क्यः —

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । विधिं प्राहातिविनतः कृताञ्जलिपुटो नृपः ॥ १ ॥

राजा —

विधे मन्दिरमा याहि बालकेन सहामुना । शिवमन्दिरसंकीर्णं मन्दिरं मणिसुन्दरम् ॥ २ ॥
रत्नमन्दिरमध्यस्थान्यपाराणि चतुर्मुख । रेवालिङ्गान्यर्चितानि द्रष्टव्यानि त्वयाऽधुना ॥ ३ ॥
इति तद्वचनं श्रुत्वा विधिः सन्तुष्टमानसः । ययौ साकं बालकेन नगरं नृपमन्दिरम् ॥ ४ ॥
तद्रत्नतोरणाकीर्णं रत्नप्रासादसंवृतम् । रेवालिङ्गसमाकीर्णं ददर्श स विधिस्ततः ॥ ५ ॥
तत्र लिङ्गानि रम्याणि पूजितानि मनोहरैः । बिल्वैर्दलादिभिः पुष्पैरर्चितानि ददर्श सः ॥ ६ ॥
ततः स बालकस्तत्र रत्नलिङ्गावलोकनात् । सन्तोषं परमं प्राप मुक्तिबीजमनुत्तमम् ॥ ७ ॥
अनायासेन दृष्टानि शिवलिङ्गानि कोटिशः । पूजितानीति सन्तुष्टो बालकः स मुहुर्मुहुः ॥ ८ ॥
पूजाद्रव्याण्यपाराणि ददौ तस्मै स भूपतिः । स तैः समर्चयामास लिङ्गानि मुदितोऽर्भकः ॥ ९ ॥
दुर्भगाणामसुलभं शंभुपूजनमित्यपि । बालोऽपि पूजयामास लिङ्गानि शिवमन्दिरे ॥ १० ॥
पञ्चामृतप्रवाहाद्यैः अर्चयित्वा स बालकः । ननर्त प्रणतो भूयो भूयो भूयः स भूपते ॥ ११ ॥
ततस्तं बालको दृष्ट्वा सर्वाश्चित्ररथाङ्गनाः । समागताः समालोक्य सन्तोषं परमं ययुः ॥ १२ ॥
नृत्तप्रसङ्गसन्तुष्टं तं बालं वीक्ष्य सादरम् । राजकन्या समालोक्य मुदा नाट्यं चकार सा ॥
ततस्तन्नाट्यमालोक्य पूजयित्वा महेश्वरम् । प्रणम्य प्राह राजानं कन्यकां वीक्ष्य सादरम् ॥१४॥

ब्रह्मा —

राजन् केयं बालिकाऽपि भूतिरुद्राक्षभूषणा। शिवलिङ्गरता नित्यं करोति प्रीतमानसा ॥ १५ ॥

एतादृशं तु सौन्दर्यं नास्ति देवाङ्गनास्वपि। वयोविशेषसंपन्ना संपन्ना भाग्यराशिभिः ॥ १६ ॥

राजा —

विधे वनविहारार्थं पुरा रेवामनोहरे। तीरे स्थितं मया तत्र दृष्टेयं गिरिगह्वरे ॥ १७ ॥

तत्रैकं नार्मदं लिङ्गं बिल्वमूले मनोहरे। तत्पूजनेन सुप्रीता सेयं कन्या मनोहरा ॥ १८ ॥

गायन्ती शिवनामानि वीणामादाय शांभवी। दृष्टा प्रहृष्टवदना लिङ्गार्चनपरायणा ॥ १९ ॥

ततः सेयं समानीता शपथैर्विविधैर्विधे। नायाति सहसा कन्या शिवपूजनतत्परा ॥ २० ॥

एतद्दर्शनमात्रेण मम भक्तिरभून्नृप। शिवार्चने शिवध्याने शिवनामजपेष्वपि ॥ २१ ॥

सेयमत्युत्सवा दृष्टा मद्दृष्टविशेषतः। एतद्दर्शनमात्रेण ममोत्साहः प्रजायते ॥ २२ ॥

इयं कालत्रयं गत्वा तत्र लिङ्गार्चनं मुदा। करोति विविधैर्द्रव्यैः तत्र गानं करोति च ॥ २३ ॥

अस्यास्तु न पिता माता न भ्राता न च बान्धवः। न जातिरपि विज्ञाता तस्याः सर्वात्मना मया॥

तत्वज्ञोऽसि त्वया तावदेतज्जन्म किमित्यपि। न ज्ञायते ततो ज्ञात्वा वक्तव्यमिति मे मतिः ॥

ब्रह्मा —

इयं पूर्वभवे राजन् सुता भिल्लस्य कस्यचित्। स भिल्लो वनमध्यस्थः सकुटुम्बः सदाऽभवत् ॥

तत्र बिल्वतरुः कश्चित् सर्वदा नवपल्लवः। तन्मूले लिङ्गममलं नार्मदं स्थितमुत्तमम् ॥ २७ ॥

तत्रेयं कन्यका क्रीडां कृत्वा तिष्ठति सर्वदा। क्रीडार्थं जलसेकं च तत्र कृत्वाऽथ तिष्ठति ॥

तत्रेयं स्वविहारार्थं नित्यं संमार्जनादरा। तरुणं बिल्वमालोक्य सा ददाति जलं मुदा ॥ २९ ॥

तरुमूलार्पितं नीरं लिङ्गोपरि पतत्यपि। तेनाभिषिक्तं तल्लिङ्गं तत्रत्यैरपि पूजितम् ॥ ३० ॥

एवं स्थिता तदा तत्र कन्या सेयं वनान्तरं। गता तत्र मृता दैवात् स्मृत्वा क्रीडास्थलं मुहुः ॥

[[1]ततो यमो गतस्तत्र संचरन् पृथिवीमिमाम्। तां मृतां स विलोक्याह चित्रगुप्तं विचक्षणम् ॥

केयं पुण्यं किमेतस्याः कृतं किमनया वदे। अनया का दशा प्राप्या सर्वमेव विशेषतः ॥ ३३ ॥

चित्रगुप्तः —

इयं भिल्लस्य कन्या स्यात् सदा मांसं किलाशनम्। एतत्पिता बिल्वमूले चकार विपिने कुटीम् ॥

---

1 कोष्ठन्तर्गतः पाठः C E कोशयोः अधिकः पाठः मूलेऽपि अपेक्ष्यत एव।

तस्य बिल्वस्य मूले तु रेवालिङ्गं स्थितं यम । बिल्वं सिञ्चति यत्नेन छायावृद्ध्यै जलैर्मुहुः ॥ ]

तज्जलं पतितं लिङ्गे तुङ्गे रेवाजलोद्भवे । हस्तलभ्यानि पत्राणि तान्यादाय मुहुर्मुहुः ॥ ३६ ॥

पातयत्येव सा लिङ्गे बिल्वमूले स्थिते मम । संमार्जनं करोत्येषा बिल्वस्य पुरतस्तदा ॥ ३७ ॥

इयं तु नित्यं गिरिमल्लिकाभिः बिल्वीदलैरर्चयति प्रभाते ।
लिङ्गं च बिल्वं च जलाभिषिक्तं अग्रे परं नृत्यति तस्य नित्यम् ॥ ३८ ॥

संमार्जनाद्यैस्तदलंकृतं च स्थलं विलोक्यासकृदेव हृष्टा ।
एवं स्थितेयं विधितः समाप पञ्चत्वमस्यास्तु न पातकानि ॥ ३९ ॥

इति तद्वचनं श्रुत्वा तां प्रणम्य यमस्ततः । पुष्पके तां च संस्थाप्य निनाय स्वपुरं प्रति ॥ ४० ॥

तत्र स्थितेयं कल्याणी तेन नित्यं समर्चिता । ततो मत्सदनं प्राप विमानवरमाश्रिता ॥ ४१ ॥

युगानामयुतं तत्र स्थिता लिङ्गार्चनप्रिया । योगेनायोनिजं देहं प्राप कन्या मनोहरा ॥ ४२ ॥

इयं च लिङ्गार्चनवासनायां दृष्ट्वाऽत्र लिङ्गानि मनोहराणि ।
रेवाजलस्थे गिरिकन्दरेऽपि चकार वासं गिरिपूजनाय ॥ ४३ ॥

राजा —

भगवन् कौतुकं जातं सन्देहोऽपि गतो मम । जात्यज्ञानेन सन्देहः समभूत् स गतोऽधुना ॥

अयोनिजेयं कस्मै च कन्या देया मयाऽधुना । प्रौढापि युवती सेयं विवाहार्हा विधे खलु ॥

ब्रह्मा —

श्रेष्ठेयं कन्यका जात्या यस्मादियमयोनिजा । अयोनिजो वरो योग्यो योग्यं योग्येन युज्यते ॥

अत्युत्तमायाः कन्यायाः वरः स्यादुत्तमोत्तमः । न मध्यमो नाधमोऽपि न जात्यन्तरसंयुतः ॥

ब्रह्मा —

अयोनिजोऽयं बालः स्यात् पतिर्योग्योऽयमित्यतः । अयोनिजत्वरूपा तु जातिरेका तयोर्मता ॥

राजा —

अयमद्यतनो बालः प्रौढेयं खलु कन्यका । युवतीयुवयोर्योगः खलु लोके सुखावहः ॥ ४९ ॥

अद्याप्ययं प्रवृद्धोऽपि भविष्यति तथाऽपि किम् । विरक्तः शिवपूजायां अनुरक्तः सदा खलु ॥

विवाहयोग्यो न विरक्तचित्तो वृत्ते विवाहेऽपि विरक्त एव ।
किं वा विरक्तस्य विवाहकृत्यं विरक्तबुद्धिस्तु विलक्षणैव ॥ ५१ ॥

अस्यास्तु तावन्न विरक्तिरस्ति स्त्रीणां विरागः खलु दुर्लभो हि ।
वैराग्यवार्तापि भवेदसह्या स्त्रीणामतो नात्र विवाहयोग्यः ॥ ५२ ॥

अयं वरश्चेन्मम भाग्यमेव वरत्वसंपत्तिरिह त्वयापि ।
किं कल्पनीया तव शक्तिरस्ति महेश्वराराधनसाधनेन ॥ ५३ ॥

माहेश्वराणां किमिहास्त्यशक्यं यस्मादयोग्योऽपि खलु क्षणेन ।
योग्यो भवत्येव शिवप्रसादात् शिवप्रसादात् सकलार्थसिद्धिः ॥ ५४ ॥

यद्यद्दुर्लभमेव वस्तु तदपि प्रायः शिवाराधने तत्सर्वं सुलभं भवत्यनुदिनं किं दुर्लभं भूतले ।
सर्वं शङ्करपूजनेन भवतीत्याहुः महाशांभवाः तस्मात् शांभववर्य योग्यमधुना बालं कुरुष्वादरात् ॥

सोऽयं यौवनसंयुतो यदि भवेद्बालोऽनुरक्तोऽधुना
तर्हि स्यात् त्वदनुग्रहेण शुभदः पाणिग्रहः सत्वरम् ।
एवं स्यान्मदपेक्षितं पुनरयं कालो भवेत् दुर्लभः
संपत्तिर्महती ममास्ति विविधा द्रव्यान्वयोऽप्यस्ति मे ॥ ५६ ॥

इति तद्वचनं श्रुत्वा तमाह नृपतिं विधिः । वृद्धिं यास्यत्ययं नूनं अद्य षोडशवार्षिकः ॥ ५७ ॥

अधुनैव विवाहोऽस्तु सुन्दरे शिवमन्दिरे । शोभनं द्रव्यसंवीतं इदं शङ्करमन्दिरम् ॥ ५८ ॥

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । नाम्ना चन्द्रमुखीं प्राह तरुणीं रमणीं स्वकाम् ॥५९॥

राजा —

अयोनिजा पालितेयं कन्या कमललोचना । इयं तु युवती जाता प्रायशः पतिमिच्छति ॥ ६० ॥

अस्यास्त्वयोनिजो भर्ता दुर्लभः खलु भूतले । दैवादयं बालकोऽत्र दृष्टः सोऽयमयोनिजः ॥६१॥

असौ कन्या मया देया शांभवाय महात्मने । दुर्लभः शांभवो लोके दानपात्रं स्वभावतः ॥६२॥

राज्ञी —

साचीकृतानना राज्ञी सस्मेरा विनयान्विता । विशीर्णनीविदेशा सा विभग्नाङ्गदकङ्कणा ॥ ६३ ॥

राजन्नभ्युदयः प्रियः परिणयो योग्येन योग्यान्वयो
योग्यः स्यात् पतिकामनाद्य बहुधा तस्याः शरीरान्विता ।
सा रंभेव विभाति नेत्रयुगलं दृष्ट्वैव नीलोत्पलं
तस्याः कज्जलमाविवेश सजलं क्वान्यत्र तद्यास्यति ॥ ६४ ॥

रंभास्तम्भनिभोरुदेशसुषमा फेनोपमेया मया तद्बाहुद्वयकान्तिरप्यनुपमा तद्वक्त्रकान्तिस्तथा ।
तद्वेणीफणिकान्तिरप्यनुपमा वक्षोजकान्तिस्तथा राजन् तज्जघनछविः पदरुचिर्हस्तच्छविर्वागपि ॥

सोऽयं स्तन्यप एव तावदधुना माता न तातोऽपि वा
भ्राता वा न सखा न मित्रमथवा धान्यं धनं वा नृप ।
पोष्यस्तावदयं कथं परिणये योग्यो न जाने मनो
राजन् तज्ज्ञवरास्य यद्रुचिकरं तत्ते कुरुष्वादरात् ॥ ६६ ॥

कुलं शीलं मूलं कुशलमतुलं कालममलं विचार्यादौ पश्चात् कुलविहितविद्यामपि वयः ।
विचार्यैर्देया भवति खलु कन्याप्यनुचितं न यस्मै कस्मैचित् वितरणमसाम्यस्य वसुनः ॥ ६७ ॥

राजा स राज्ञीवचनेष्वनादरः तामाह राज्ञीं विधिरागतोऽस्ति ।
उल्लङ्घनं तद्वचनस्य नेष्टं शुभावहे कर्मणि तस्य शक्तिः ॥ ६८ ॥

यन्मङ्गलद्रव्यमिहास्ति गेहे तावत्तदासादनमस्तु तूर्णम् ।
अन्यद्भविष्यत्यधुनेति मत्वा पुनर्विधिं प्राह महोत्सवेन ॥ ६९ ॥

तस्मै स राज्ञीवचनानि नाह चतुर्मुखायापि स तद्विदित्वा ।
राजानमाह प्रियवाग् विधाता ज्ञातं च राज्ञीवचनं मयेति ॥ ७० ॥

पश्चात्स राजा नतकन्धरोऽभूत् तमाह राजानमिति प्रियोक्त्या ।
अयं विचारो न सुरेषु युक्तः सोऽयं मनुष्येषु भविष्यतीति ॥ ७१ ॥

अयोनिजा सा खलु कन्यकापि तस्याः पिता नापि नृपास्ति माता ।
तस्याः कुलं किं न विचारणीयं इदं द्वयोरप्युपपन्नमेव ॥ ८२ ॥

वरस्य तावद्गुणवर्णने तु वरोऽयमुत्कृष्टतमो वयस्तु ।
सदाप्ययं षोडशवार्षिकः स्यात् जराविचारोऽप्यतिदूरतोऽस्तु ॥ ७३ ॥

भूमण्डलस्याधिपतिः स एव भावी भवाराधनसाधनज्ञः ।
भावत्वमुत्कृष्टगुणोऽस्य सोऽयं वरेषु तावत् खलु दुर्लभो हि ॥ ७४ ॥

इत्यालोचनतत्परे सति नृपे बालः कुमारोऽभवत् पश्चाद्यौवनमाप कामसदृशः कामैव दृष्ट्वैव तम् ।
लज्जाकज्जलमज्जनेन मलिनस्तातानुरूपोऽभवत् तत्तातो मलिनस्तमेव तनयं दृष्ट्वा परं प्रायशः ॥

युवानं तं दृष्ट्वा नृपतिरतिसन्तुष्टहृदयः विवाहोत्साहेन द्रुतमखिलमन्त्रिप्रमुयुतः ।

शिवं नत्वा भूयः सकलशुभदानव्यसनिनं पुनश्चक्रे तावद्विधिजनयुतो मङ्गलविधिम् ॥ ७६ ॥

युवत्वं संप्राप्तः स इति महिलामाह स महान् महीपालः शीलं शिवभजनशीलं च कुशलम् ।
विचार्यार्यां कन्यामपि तव वरोऽयं वरवरो महावीरो हारः सुरसदनतोऽप्यागत इति ॥ ७७ ॥

ततः सा लज्जया नम्रा चेष्टाभेदैः परं नृपम् । ज्ञापयामास हृदयं वरः संमत इत्यपि ॥ ७८ ॥

ततो युवानं समुपेत्य राजा चतुर्मुखेनापि सहातिहृष्टः ।
विज्ञापितः प्राह विधिः स राज्ञा विवाहदीक्षार्थमतिप्रमोदैः ॥ ७९ ॥

विवाहकालस्तव सोऽयमद्य कन्या मनोज्ञा युवती नृपस्य ।
त्वं मङ्गलस्नानविधानयोग्यः प्राज्ञः शिवाराधनतत्परोऽपि ॥ ८० ॥

इति तद्वचनं श्रुत्वा सततं शिवतत्परः । शिव शम्भो महेशेति वदन् रेवां गतः पुनः ॥ ८१ ॥

ततः परं स राजापि विस्मितो विधिना सह । रेवां गतो ददर्शाथ तमेव शिवपूजकम् ॥ ८२ ॥

स तत्रोद्धूल्य सर्वाङ्गं शीतलैर्नर्मदाजलैः । अभिषिच्यार्चयामास बिल्वैर्लिङ्गं मनोहरम् ॥ ८३ ॥

ततः परं स राजापि विधिश्चातीव विस्मितः । विचारनिरतो नित्यं किमस्मत्कार्यमित्यपि ॥ ८४ ॥

किं कन्यकाफालविलोचनानि दुष्टान्यशेषाणि न संशयोऽत्र ।
एतादृशो दुर्लभ एव लोके वरो वराणां वर एव सोऽयम् ॥ ३५ ॥

उत्साहवृद्धिः कथमस्य वृत्ता जाताऽपि सा तावदिहातितान्ता ।
अहो कथं लोचनयोर्न भाग्यं तयोर्विवाहानवलोकनेन ॥ ८६ ॥

रत्नस्य कार्तस्वरसङ्गमेन भवत्यवश्यं सुषमा प्रवृद्धा ।
तयोः पृथङ् न स्थितिरिष्टहेतुः उत्साहबीजं तु न सर्वथाऽपि ॥ ८७ ॥

एतस्य वैराग्यविशुद्धवृत्तेः कदाऽपि संसारविशुद्धवार्ता ।
नासीन्न चाग्रेऽपि भविष्यतीति सा कन्यका तं वरमेत्य तुष्टा ॥ ८८ ॥

तरुणीमणिरेव सा तु कन्या रमणीनां रमणी मनोहरेण ।
वयसा रुचिरेण सा मनोज्ञा कमनीयं वरमाप्नुयाद्वरं वा ॥ ८९ ॥

यदि शङ्कर एव मानसाब्जे सततं तस्य हितं हिताय वृत्तः ।
हितमित्यवधार्य तं प्रवृत्तं कुरुते तर्हि शुभप्रवृत्तिरेव ॥ ९० ॥

न ममात्र किलातिचातुरी चतुरः शङ्कर एव सर्वथाऽपि ।

जगतामुदयेऽपि रक्षणे वा विलये वा शिव एव सर्ववेत्ता ॥ ९१ ॥

यः सर्वज्ञशिरोमणिर्मुनिगणाराध्यः प्रसाध्याङ्को नायं तस्य तु सिद्धमेव सकलं किं दीपवद्भासकः।
यद्वाऽयं जनकः समस्तजगतां सर्वस्वतन्त्रः सदा सर्वं कर्तुमपि प्रवृत्त इति मे बुद्धिः परं जायते॥

इति चिन्ताकुलो ब्रह्मा राज्ञा सह तमर्भकम् । प्राह धृत्वा करं तस्य विनयेनैव सादरम् ॥ ९३ ॥

ब्रह्मा —

विवाहाय प्रयत्नोऽद्य कृतो भूपतिना खलु । अयं किलातिसन्तुष्टः शिवपूजनतत्परः ॥ ९४ ॥
एतदाज्ञानुसारेण वर्तते शिवपूजनम् । रेवालिङ्गार्चनेनैव नीतमेतेन जीवनम् ॥ ९५ ॥
मुनीनामपि दाराणामस्त्येव हि परिग्रहः । शिवार्चनादिधर्माणां दारास्तु न विरोधिनः ॥ ९६ ॥
हारदारानुरोधेन हरसेवा प्रवर्धते । हारोपहारकरणे दाराः स्युरधिकारिणः ॥ ९७ ॥
दारैर्हारत्वमापन्नैः सितभस्मविभूषितैः । रुद्राक्षमालाभरणैः धीरैः सुखमनुक्षणम् ॥ ९८ ॥
ऋतुकालोऽपि दाराणां सङ्गोऽपि सुखदायकः । तत्सुखं शङ्करायेति यन्मनः स तु शांभवः ॥
लोकेषु कस्य वा नास्ति वद दारपरिग्रहः । दृश्यन्ते सकुटुंबास्ते मुनयः शिवतत्पराः ॥ १०० ॥
इन्द्रादयः सुराः सर्वे सदारा एव सर्वथा । अहं सदारो विष्णवाद्याः शेषाद्याश्च कुटुम्बिनः ॥
कुमारो गणनाथश्च वीरभद्रश्च भैरवः । नन्दिकेशश्च भृङ्गी च तुण्डिश्च रिटिरेव च ॥ १०२ ॥
रोहिणीप्रमुखाः सन्ति चन्द्रस्य वनिताः खलु । छाया सूर्यस्य रमणी वज्रिणश्च पुलोमजा ॥
वाणी मे रमणी विष्णोः कमला रमणी खलु । पन्नगेन्द्रस्य महिला केवला रतिसुन्दरी ॥
तस्मात् त्वमपि यत्नेन कुरु दारपरिग्रहम् । कुरु मद्वाचि विश्वासं अन्यथा नोच्यते [1] खलु ॥

बालः —

अलं दारैर्धीरैरलमलमपारैरपि धनैः अलं दानैर्योगैरलमलमशेषानुसरणैः ।
परं हारं लिङ्गं सितभसितमप्यस्य शरणं पुनस्तन्मे तावत् चरणमिह तन्मे पुनरपि ॥

मरणे समुपस्थिते न दारैः निकटेऽपि स्थितिवारणं कृतं किम् ।
क्व ममाभरणं क्व पट्टकूलं क्व धनं वेत्यनुधावनं कृतं किम् ॥ १०७ ॥

पूर्वं दारपरिग्रहेण बहुधा दुःखानि भुक्तान्यहो नीतं जीवनमेव तैरनुदिनं शक्तिश्च नीतान्तरा ।

---

1 यागदानादयः सर्वे धर्मकार्याः (?) प्रयत्नतः । भार्यया सह योगोऽपि न विरुद्धस्तया सह इति श्लोकः C कोशेऽधिकः ॥

आयुः क्षीणमभूद् वृथाऽतिसुरतैः दारादरैरन्वहं मोहेनापि मुहुर्महेशचरणध्यानं कृतं नैव हि ॥

नित्यं कुङ्कुमकेसरादिसहितैः कस्तूरिकाकर्दमैः कर्पूरद्रवसंयुतैरपि लसन्नीहारनीरैरपि ।
श्रीखण्डद्रवसेचनैरपि मुहुर्नीतं पुनः केवलं सेकेनैव करश्रमोऽपि स करस्तुङ्गे न लिङ्गे कृतः ॥

हारैरप्यनुदारहारकुचयोरावेष्टनं कल्पितं मन्दारामलमल्लिकादिकुसुमस्रग्वेष्टितौ तत्कुचौ ।
दृष्टौ तौ दुरदृष्टतो मुहुरतो दृष्टं न लिङ्गं मया तुङ्गं नार्मदमद्रिकुन्दकुसुमैर्बिल्वीदलैरर्चितम् ॥

व्याप्ता सा तरुणीगणैर्मुहुरहो शय्या मदीया सदा
तत्संमर्दवशात् कथञ्चिदभवत् छायाञ्चलेऽवस्थितम् ।
तस्मादप्यवनीतले निपतितं दासीकराघातनैः
साकं शङ्करलिङ्गपीठनिकटे नैवाभवल्लुण्ठनम् ॥ ११२ ॥

दुग्धं गोघृतशर्करादिसहितं सौवर्णपात्रे स्थितं यन्नारीगणपीतशिष्टमभवत् तत् पीतमत्यादरात् ।
तत्रोच्छिष्टमतिः कदापि न ममाभूदेव भूयः परं तत्पीतं न तु पीतमेव सुखदं रुद्राभिषेकोदकम् ॥

तन्नारीजघनोदरान्तरगतावर्तेपि गर्तेऽप्यभूत् मन्नेत्रप्रसरः पुनः पुनरहो पापैरपारैः परम् ।
तुङ्गं लिङ्गमुमामनोहरवरं रेवाजलालङ्कृतं बिल्वीपल्लवसंकुलं च न मनाक् दृष्टं प्रकृष्टं मया ॥

हा हा हा बहुजन्मसंचितवयः पुष्टाङ्गनालिङ्गनैः
नीतं जन्म कदापि लिङ्गमसकृत् तुङ्गं च नालिङ्गितम् ।
बिल्वीपल्लवकोमलैः सकमलैर्नाभ्यर्चितं न स्मृतं
न स्पृष्टं न विलोकितं न च नतं नाराधितं वा मया ॥ ११४ ॥

अद्येयं मतिरस्य शङ्करकृपालेशेन जाताऽधुना विघ्नो मास्तु मतेः पुनः पुनरियं वृद्धिं प्रयात्वन्वहम् ।
कस्य स्यात्सुखसाधनं विषमिवानङ्गाङ्गनासङ्गमः त्याज्यो दूरत एव शङ्करपुरीवासेन नेयं वयः ॥

भुक्तं वान्तमनुक्षणं दधियुतं क्षीरान्नमप्यादरात्
भोक्तुं नेच्छति मानवः पुनरपि प्रायस्तथैवाङ्गना ।
त्यक्त्वा तद्विषयस्पृहां तु न कदाप्यन्येषु वान्तेषु किं
वांछा संभवतीति बुद्धिरसकृन्मूढस्य वा किं न सा ॥ ११६ ॥

नवोढां मूढो वा दृढमपि सकृद्वा यदि मुहुः
मुहुर्भुक्त्वा त्यक्त्वा पुनरपि न वान्ताशननिभाम् ।

पुनर्भोक्तुं वांछत्यपि सुकृतपाकेन विषयः
परित्याज्यः पूज्यः पुनरपि महेशः पुनरपि ॥ ११७ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे अयोनिजकन्याऽयोनिजवरविवाहप्रसङ्गे ब्रह्मादिसंबोधितवरविवाहनेच्छावर्णनं नाम पञ्चदशोऽध्यायः ॥

## अथ षोडशोऽध्यायः ।

याज्ञ्यवल्क्यः —

इत्येतद्वचनप्रवाहजनितोत्साहोऽपि तं केवलं ब्रह्मा दारपरिग्रहोद्यतमतिं कर्तुं पुनर्बालकम् ।
प्राहानन्दजलाकुलोत्तमतनुं लिङ्गार्चनेऽभ्युद्यतं बिल्वीकोमलपल्लवैरभिनवैः शीतैश्च रेवाजलैः ॥

ब्रह्मा —

यद्यत् स्यादनुकूलमेव सततं तत् कालकालार्चने ग्राह्यं तस्य परिग्रहेऽप्यनुदिनं तत्सेवनेनापि किम् ।
तस्माद् दारपरिग्रहोऽपि न दुराचारः सदारस्य ते हारश्चापि दुराग्रहस्त्वनुचितो दारेषु धीरेष्वपि ॥

इत्याकर्ण्य विधेर्वचोऽप्यनुचितं मत्वाऽपि नत्वाऽपि तं
कृत्वा चेतसि धैर्यमेव स मुहुर्हित्वापि दारेषणाम् ।
हत्वा मोहरिपुं पुनः पुनरपि स्मृत्वैव तां यातनां
मुक्त्वा मुक्तिविरोधिनं स्मरहरं संसारपारः परम् ॥ ३ ॥

बालः —

गौरीमनोहरपदाम्बुजमादरेण वन्दे मुकुन्दनयनाम्बुजपूजितं मे ।
आनन्दसुन्दरमरन्दविनोदधारा धाराधरं सुखदमाशु मुहुः स्मरामि ॥ ४ ॥

उमाकटितटस्फुरत्करिवराननालोकनप्रसन्नहृदयं धिया सदयमिन्दुचूडं मृडम् ।
उमापरिवृढं भजे भजनमातृदत्तेप्सितं स्मितानननमनामयं प्रियमुमासहायं मुदा ॥ ५ ॥

हाराणामपि हारकः खलु खलः को वा हराराधनध्यानानन्दनिमग्नमेव विषयैरुद्विग्नमज्ञोऽग्निवित् ।
कर्तुं वा यतते ततस्त्वमपि चेत् गन्तुं प्रवृत्तस्तदा गन्तव्यं मम तावदत्र वसतिः देहावसानावधि ॥

तुङ्गानि लिङ्गानि मनोहराणि हाराण्यपाराणि विहाय को वा ।

हारादरः स्यादमरत्ववाञ्छां जहाति किं मृत्युवशः शिशुर्वा ॥ ७ ॥

करतलकनकातिचित्रपात्रस्थितमपि दुग्धमपास्य दिग्धमाज्यैः ।
अमधुरमतिदग्धदुग्धबन्धं कथमपि खर्परमर्पयेन्मुखे किम् ॥ ८ ॥

किं मुग्धा मधुरा धराधरसुधाधाराधरा धीर मे
सा नासावदनान्तरालगरलश्लेष्माकलापाकुला ।
लाला सा कुधिया सुधेति विदिता धिग्धिग्धिगेषा विधे
धीराणामपि हारनाम सुसुधापानातिपीनात्मनाम् ॥ ९ ॥

पुरा नारीपीनस्तनगिरिविहारेण कुधिया न हाराचाराणामनुसरणमार्येण न कृतम् ।
न वा तुङ्गं लिङ्गं कथमपि शशाङ्कं नवजलैः नवैर्बिल्वैः पुष्पैः सकृदपि कृतं पूजनमहो ॥ १० ॥

मुहुः को वा वान्तं पुनरपि गृहाणेति करुणां परित्यक्त्वा वक्तुं सुमुख यतते दुर्मुखमुखः ।
अयं क्लेशः सद्यः कथमपि वधूसङ्गविमुखः सुखी लोके शोके न खलु [1] हरदारापसरणे ॥ ११ ॥

पुरीषकुहरान्वितं यदि न मूत्रकुण्डं तदा मतिः किमिति जायते जगति नानुरागान्विता ।
यतस्तदुभयान्वयः सपदि तद्वधूसङ्गमे स तावदतिकुत्सितो भवति कुत्सिताभीप्सितः ॥ १२ ॥

यतो वधूनां विविधा कथापि मता न मे तावदतः कथं वा ।
मतिर्वधूसङ्गतिगोचरा स्यात् इहापि हारस्य ममाधुनापि ॥ १३ ॥

लज्जासागरमज्जनैरलमलं नालं किमद्यापि मे कुम्भीपाकविलोकनागतभयापारार्णवा सज्जनैः ।
तत्राङ्ग जनमज्जनाचलनिभध्वान्तप्रवेशो न मे यत्नेनाप्यलमप्यलं खलु फलैर्बालाभियोगैरलम् ॥

काले काले कालकालानुवेलं लिङ्गं तुङ्गं शाङ्गमभ्यर्चयामि ।
इत्येषा मे बुद्धिरस्तु प्रवृद्धा बुद्धिर्नारीसङ्गमे मास्तु मास्तु ॥ १५ ॥

न दारुदारेष्वपि शैवदारेष्वशैवदारेष्वपि दुर्मतिर्मे ।
मास्त्वेव मास्त्वेव पुनश्च मास्तु पुनश्च मास्त्वेव पुनश्च मास्तु ॥ १६ ॥

करोमि शपथं पुनः शिवपदाम्बुजेऽप्यञ्जसा वधूजनमदुर्जनीजनतया विहीने वने ।
वनेपि न भजत्यतः स्वजनताभिमाने पुनः न ताभिरनुवर्तनं सह समृच्छति स्वच्छधीः ॥ १७ ॥

---

1 हृतदारापसरणे C E

भवन्ति बहवो मुहुर्जगति दारभारादराः प्रयान्तु यममन्दिरं यमभयातिवाताहताः ।
स्वकीयहितचिन्तनं विहितमेव सर्वात्मना ततस्त्रिनयनं परं परममुक्तिदं प्रार्थये ॥ १८ ॥

अतः परमहर्निशं गिरिशमेव बिल्वीदलैः जलैरपि सुशीतलैरभिनवैः समाराधये ।
विमुक्तिमपि साधये यमभटानपि त्रासये विहाय युवतीजनस्तनघनापहारं परम् ॥ १९ ॥

महाप्रयाणावसरेण नारीशरीरसङ्गेन सुखाभिषङ्गः ।
उत्तुङ्गशृङ्गामितलिङ्गसङ्गादानन्दसङ्गाभिनवाङ्गसङ्गः ॥ २० ॥

क्व संसारभारापहारोद्यमो मे क्व दाशानुरागानुकारोद्यमस्ते ।
क्व सर्पारिभीतोऽपि सर्पानुकारप्रकारोपकारानुरक्तानुरक्तः ॥ २१ ॥

अत्युच्चातिमनोज्ञरत्नरुचिरे सिंहासनेऽधिष्ठितः किं वाञ्छां कुरुते मलाकुलजला वार्ताधिवासे ततः ।
नेच्छा शङ्करपूजनोद्यतमतेर्दारेषु हारेषु वा तस्माद् दारविचारचातुर चिरं किं वञ्चितश्चञ्चुरः ॥

न दारव्याहारैरिदमपि विनेयं खलु वयो मया ध्येयं ध्येयं शिवचरणपङ्केरुहरजः ।
मुहुर्मेयं मेयं मुहुरपि च मृत्युञ्जयपदं मदान्धैः सिन्दूरप्रवरगतिनिन्दाङ्कुरवरैः ॥ २३ ॥

पुरा यद्यद्भुक्तं तदपि न मया विस्मृतमहो महादेवध्यानस्मरणपरिपाकैः स्मृतमपि ।
भयोद्वेगायालं पुनरपि न तद्भोगरचना चिरं त्यक्ता त्यक्ता पुनरपि न तत्रादरमतिः ॥ २४ ॥

कृती लोके कोपि प्रभवति कृतान्तान्तकहितः स्मराराातिध्यानप्रवणहृदयः पुण्यनिचयः ।
तमाराध्यं मत्वा शिवभजनचिन्तामणिधनाः क्वचित् सन्तः सन्ति त्रिनयनवने बिल्वजदने ॥

दूरदूर्वाङ्कुराहारो हारो धीरो मनोहरे । हर स्मरहरेत्येवं स्मरन् कालं नयाम्यहम् ॥ २६ ॥

पुनः पुनर्दारपरिग्रहाय दुराग्रहस्तेऽनुचितो यतस्ते ।
न वस्तु कस्तूरिकया समानं मुक्तापि शस्तापि न तत्समाना ॥ २७ ॥

अभिमानविहीनमानसानां न जनानां जनताप्रवेशवार्ता ।
अत एव निवृत्तिरार्तितः परिवृत्तेऽपि न दारसंग्रहे ॥ २८ ॥

ग्राहग्रस्त इवातिदुस्तरमहासंसारसारादरो
दारग्राहविमुक्तिमिच्छति परं भूमण्डले कोऽप्यतः ।
तस्मान्मुक्तिरपेक्षितैव सहसा दुष्टात्मनां दुर्गतिः
किं नामेध्यविलोलजन्तुसदृशो दारानुकारी जनः ॥ २९ ॥

दारैर्दारुणयातना खलु मुहुर्दारानुसङ्गी सुखं
न स्वप्नेऽपि महाप्रयाणसमये तेषां न वार्ताप्यतः ।
सा वार्ता विषवद्विभाति न विषं पातुं प्रवृत्ताऽपि किं
जीवामीति सदापि दारवरणे सा जीवनाशा कुतः ॥ ३० ॥

यत्र क्वापि नयामि जीवनमिदं रेवातटे केवलं
ध्यायन् फालविलोचनं मुहुरहं तं कालकालं जलैः ।
रुद्राध्यायजपेन लिङ्गममलं संसेचयन् कोमलैः
आरक्तैर्नवबिल्वकोमलदलैरभ्यर्चयन् शंकरम् ॥ ३१ ॥

आयुर्नेयं सायमारभ्य भूयो भूयो भूयः पूजनेनैव शंभोः ।
तस्मादायुर्दारभोगैर्न नेयं तद्भोगार्थं तद्दिनं नोपयुक्तम् ॥ ३२ ॥

या या नेया यामिनीनाथचूड ध्यानैर्नेया यामिनी नेयमन्या ।
एकाकारा सा न दारोपभोगे योग्या योग्या शङ्कराराधने सा ॥ ३३ ॥

न वृथा खलु जन्म पावनं यमदूतावसराय नायुरस्य ।
न च मेरुसमानमायुरल्पं तदिदं दारपरिग्रहे वृथा स्यात् ॥ ३४ ॥

दारोपभोगसमयः परिकल्पनीयः को वा तवाभिमत इत्यपि तन्न विद्मः ।
सर्वोऽपि शर्वभजनेन विनेय एव कालोऽयमायुरपि ते न वृथा न भूयः ॥ ३५ ॥

यमभटपटुपट्टभिण्डिपालज्वलनकुलाकुलचेतसां क्व दाराः ।
हर हर हर इत्यपारनामव्यतिकरनेयमिदं वयः प्रियं मे ॥ ३६ ॥

मा मास्तु मास्तु मम दारपरिग्रहेच्छा स्वेच्छाविहारहारपराक्रमस्य ।
को वा सुधामपि विहाय मलाशनेच्छुः स्वच्छन्दवृत्तिरपि सूकरदारवृत्तिः ॥ ३७ ॥

आकण्ठं यदमेध्यमात्रमशनं वान्तं पुनस्तत् पुनः स्वीकृत्योदरदुर्विकारभरणं कर्तुं प्रवृत्तः कुधीः ।
को वा तं वद दारहारनिकरव्यापारधीरः परं हारो वाञ्छति चञ्चुरः परमतो हारे ममास्त्वादरः ॥

दारव्याहारवीराः कतिचन कतिचिन्मारसंहारहार-
व्याहारासारसारप्रचुरचिरकथामात्तचित्ताः पवित्राः ।
तत्राद्ये न प्रवेशो मम भवतु भवत्वग्रभोगे प्रवेशः
तेनाघौघौघनाशोऽप्यनुदिनमिति मे शङ्कराराधनेच्छा ॥ ३९ ॥

इच्छा शङ्करपूजने यदि तदा धन्यं तदायुः परं नीहाराचलकन्यकापतिपदाम्भोजार्चनं जीवनम् ।
येषां तत्पदपूजनेन च मया नेयं दिनं सादरं तत्तद् दुर्दिनमित्यवैमि बहुधा यस्मिन् न तच्चिन्तनम् ॥

को वा सन्ततमन्तकान्तकपदाम्भोजार्चनं नादरात्
कर्तुं वांछति संचिताघविलये तावत् तदिच्छां त्यजेत् ।
अस्माकं दुरदृष्टकष्टनिलयस्येदं परं सादरं
यद्रेवातटतुङ्गलिङ्गभजनं बिल्वीदलैर्वा जलैः ॥ ४१ ॥

सुधापानैः पीनः पुनरपि सुधामेव कलयन् परं क्षारं नीरं परिहरति दारानपि तथा ।
कथं वारं वारं परिहरति हारोऽपि न मुहुः महादेवं ध्यायन् मुहुरमृतरूपं मुहुरपि ॥ ४२ ॥

चित्तं तावदुमासहायचरणध्यानाय यत् कल्पितं
तत् किं धावति धूर्तधूर्तजवधूतुङ्गाङ्गसङ्गेच्छया ।
नायं क्वापि सुधाकरो विषकरचित्तं तथा शङ्कर-
ध्यानाराधनसाधनप्रवणमप्येतस्य दाराऽरतिः ॥ ४३ ॥

दाराऽरतिर्दारुणयातनायाः तावन्न किं स्याद्विनिवारणाय ।
क्व वाऽन्धकारापगमेऽपि चक्षुर्न भानुभानुग्रहणाय शक्तम् ॥ ४४ ॥

दारेषणा मास्तु धनेषणापि शिवेषणा तावदनन्तराया ।
स्यादस्य तेनास्य शिवं शिवानि शिवोऽपि दास्यत्यनुवारमेव ॥ ४५ ॥

चिरं हर हरेति मे मनसि हारनामामृतं महेश्वरकथारसप्रसवसिद्धिसिद्धिप्रदम् ।
पदं न विपदामिदं भवति संपदां तत्पदं तदेव मुहुरादरात् पिब पिबाम्यहं सादरम् ॥ ४६ ॥

वृथा किमिति नीयते वद वयः प्रियं ते वयः कियत् किमपि तेन वा न कृतमेव पुण्यं मुहुः ।
न तेन महनीयता त्वयि कृता वृथा जल्पनं कृतं कृतमतः परं कुरु महेशवार्तां विधे ॥ ४७ ॥

न वाणीवाणीनां स्मरणमुचितं ते श्रवणमप्यतस्तावद्गौरीरमणचरणद्वन्द्वमनघम् ।
धनं यावज्जीवं शिव शिव महेशेति विलपन् वरे रेवातीरे चर चर विचारैरलमलम् ॥ ४८ ॥

अकस्मादेतस्मिन् पतति च शरीरे पुनरिदं क्व वा रेवालिङ्गं भसितमपि बिल्वीदलमपि ।
क्व वायं व्यापारो हर हर महेशेत्यपि ततो वृथाऽमुं व्याहारं परिहर हराराधक विधे ॥ ४९ ॥

विधेरपि विधिं विना विविधशङ्कराराधनं प्रसाधनसमाधयः प्रभवितुं समर्था अपि ।
अहो किमिदमम्बिकारमणचेष्टितैर्वेष्टितं अतः शरणमम्बिकारमणपादपद्मं मम ॥ ५० ॥

वने वनहुताशनप्रभवभूतिभूषश्रिया विराजिततनुः शनैरनशनैरहं शर्वरीम्।
नयामि शिवपूजया शमनदूतभीतो मुहुः मुहुर्मुहुरनुक्षणं भवति तेन नायुःक्षयः॥ ५१॥

क्षणार्धमपि शर्वरीरमणखण्डचूडामणिं निधाय हृदयाम्बुजे भज भजाद्य मृत्युञ्जयम्।
हर स्मरहरामरप्रवर शङ्करेति स्मरन् जपन्नपि मुहुर्मुहुः कलय कालकालं विधे॥ ५२॥

कल्याणार्णव एव शङ्कर इति ज्ञेयः स कल्याणदः
कल्याणीरमणोपि पुण्यकरुणाकल्लोलपूर्णार्णवः।
तस्मिन् चेतसि संस्थिते स्मरहरे न स्मारवार्तादरो
दाराणां तु कथाऽतिदूरत इति ज्ञात्वा तमाराधय॥ ५३॥

नेत्थं हारकथा महेश्वरकथा यद्वा शिवाराधनं यद्वा पन्नगभूषणस्मरणमप्यर्धेन्दुचूडार्चनम्।
यद्वा शङ्करपट्टणस्थितिरतस्त्याज्या वृथा सा कथा निर्वेदं भज शंकरं करुणया देवाधिदेवं परम्॥

हाहा जन्म वृथा गतं बहुविधैः फुल्लैः प्रसूनैर्नवैः
बिल्वीकोमलपल्लैवरपि शिवो नाराधितो न स्मृतः।
रेवातीरवने वनैः सयवनैः यात्यायुरायाति किं
जुष्टं फालविलेखनं भवहरो भावोऽपि नालोकितः॥ ५५॥

दुरालापः प्रायः प्रचुरतरदारादिविषयः विषप्रायः प्रायः कथमपि न चित्तं व्यथयति।
कथं मोहो वृत्तो मयि निरपराधे सति मुदा व्यथारूपं कर्तुं कथमपि समभ्यागत इति॥ ५६॥

अतः परं किं न भवं भजामो निशावसाने स्मरशासनाय।
पूजा विधेया विविधोपचारैः बिल्वीदलैर्वा विमलैर्जलैर्वा॥ ५७॥

गता रात्रिर्व्यर्था व्यथयति मनो मे पृथगयं विधिर्लग्नो भूयो विधिरपि विधिज्ञो व्यथयति।
कथं वा दौर्भाग्यं भवति पुरुषायुः क्षणमपि प्रयात्येतत् भावाद्गिरिशभजनेनाभवदहो॥ ५८॥

अहङ्कारः को वा गिरिशभजनध्यानविधिभिः प्रवृत्तस्यास्यापि क्षणमपि न कालेक्षणकथा।
न वा तुङ्गे लिङ्गे नवकमलबिल्वीनवदलैः अखण्डैरभ्यर्चा बत बत वयः क्षीणमधुना॥ ५९॥

महामृत्युः पश्यत्ययमनिशमीशार्चनरतः न जातो न ध्यातं शिवचरणपङ्केरुहरजः।
अनेनेति प्रायः क्व गतिरहहा हा हत इति व्यथा चित्तारूढा कथमपि नवोढा मनसि मे॥ ६०॥

महामोहस्यायं कथमपि न कालः स्मरहरो हरः स्मर्तव्यो मे मम भटविभीतस्य न निशा।

प्रगे तुङ्गं लिङ्गं स्मृतमपि महापातकहरं सहारं दृष्टं चेत् सकलदुरदृष्टा[1] भयकरम् ॥ ६१ ॥

करोमि करवीरजप्रसवमल्लिकामालया न लिङ्गपरिवेष्टनं कमलकुन्दमन्दारजैः ।
अमन्दजलधारयाऽप्यनुलवं कि[2] माटोपया बहुभसितभूषितो विगतपापतापोऽधुना ॥ ६२ ॥

गन्तव्यं विपिने नवाम्बुजदलान्यानीय लिङ्गं मुदा
तैरापूर्य पुनः पुनश्च भसितैः फालं विलिप्यामलम् ।
कृत्वा नाट्यमहोत्सवं च गिरिशं नत्वातिभक्त्या मुहुः
भो शम्भो भगवन् भवेति बहुधा कालं नयाम्यादरात् ॥ ६३ ॥

कन्दर्पाद्भुतदर्पदर्पदलनोपायो मयाऽलंकृतो योऽयं चेतसि शङ्करः स्मररिपुः पापापहारः स्मृतः ।
तस्मिन् चेतसि तिष्ठति स्मरकथा का का कथा वा वधूपीनोत्तुङ्गकुचान्तरालसुरतस्वेदापहारस्य च ॥

नारीकुचोरुगिरिशेश्वरहीरहारभारापहारचतुरोऽपि करो ममाभूत् ।
तेनानुवेलमनलाचलकूटपातभीमानुभूतविषयो विगतस्पृहोऽद्य ॥ ६५ ॥

मुग्धाधरामृतरसप्रविलोभमूढो गाढान्धकारकुहरानललालयाऽहम् ।
तप्तं पुनः पुनरतोऽस्य न तत्र वांछा किन्त्वीशपादकमलस्मरणेऽस्ति वांछा ॥ ६६ ॥

नारीधनस्तननिपीडनताडनाद्यैः साङ्गारलोहरमणीस्तनपीडनाय ।
सन्ताडितोऽहमसकृद्यमदण्डचूडाज्वालाकुलैरिति न तत्र ममास्ति वांछा ॥ ६७ ॥

रम्भामण्डलगण्डमण्डनमुखच्छायाच्छटालोकने
नेच्छा कस्य तथापि सा यमभटाटोपाटनैस्त्यज्यते ।
आकल्पं खलु यातना खलजनस्यातः क्षणार्धं सुखं
तद् दृष्ट्वापि कटाहवन्हिनिकटे लोकोऽटति व्याकुलः ॥ ६८ ॥

का बाला निजलीलयाऽनुकुरुते स्वाधीनमेवाधुना
लोके तेन न पारवश्यमहितं तावत् स्वतन्त्रस्य किम् ।
तस्माद् दूरत एव तत्परिणयापेक्षा विरूपाक्ष मे
रुद्राक्षाभरणस्य दक्षतनयानाथाङ्घ्रिपद्मस्मृतेः ॥ ६९ ॥

पिकालापप्रायैः तरुणतरुणीगाननिनदैः वयो नीतं नीतं धनमपि धनेच्छ ? धनमपि ।
मुहुर्ध्यातं ध्यातं न पदमसकृच्छैलतनयापतेर्भूतं भूतं पुनरपि न तत्रास्य तु मनः ॥ ७० ॥

1 क्षयकरम् C E 2 किमाशापटीः पद्धः C E

आरक्तामलबालविद्रुमलताबालाधरेणादरात्
तेन स्यादवशो वशोऽप्ययशसां राशिर्वशी वाऽवशी ।
तस्मात् तत्परिहार एव वरमित्यस्यास्तु धीर्मे विधे
सा धीस्तावदिहाधुना विधिवशाज्जातापि सा जातु नः ॥ ७१ ॥

काञ्चीकान्तिविजृम्भिततलिवलिकासंख्यापनैर्जीवनं नीतं तेन तु यातना तनुरभूत् तावत्तनुस्तापतः ।
तत्पापोपशमाय कायमसकृत् सापायमेवामयैः मत्वा शङ्करपूजनोत्तरमहं त्र्यक्षे शिवेत्युच्चरन् ॥

या या पूर्वभवेषु दोषविषयैरेणीदृशा दुर्दशा भुक्ता सा तनुगोचराऽपि वचसा लज्जानुवादेन मे ।
तद्वेणीफणिबन्धनेन बहुधा निर्बन्ध एवाभवत्तत्काले खलु कालकालकलना नासीन्मनाङ् मानसी ॥

हे मत्तेभमरालराजगमने हे चन्द्रबिम्बानने हे नीलोत्पललोचने विवसने पश्येति नीतं वयः ।
तेनातप्तमहासिनापि रसना छिन्नेति हे शङ्कर श्रीविश्वेश्वर पाहि मामिति जपैः कालं नयामः कदा ॥

अमन्दानन्दा वा मदनकदने कापि तरुणी मृणालान्तस्तन्तुद्वयसवसना सापि रमणी ।
मुहुर्दृष्ट्वा स्पृष्ट्वा किमिति बहुकष्टानुभवतः प्रहृष्टः सन्तुष्टः कथमिह पुनस्तन्मनसि चेत् ॥ ७५ ॥

विषप्राया प्रायो भवति युवती कापि युवती सुधाप्राया त्वाद्या शिवभजनहीनानुसरणा ।
द्वितीया सा गौरीरमणचरणाम्भोजभजनप्रवीणा सा पुण्यैरमरतटिनीवाघहरणे ॥ ७६ ॥

का वा स्याद्गिरिशोपहारकरणव्यापारमात्रादरा
हारत्वं समुपेत्य हारविमुखा नीहारहारादरा ।
रुद्राक्षैरपि भस्मनापि ललिता भस्मत्रिपुण्ड्राङ्किता
सा लोके खलु दुर्लभैव तरुणी कामैव कामप्रिया ॥ ७७ ॥

का वा लोचनगोचरा न तरुणी कामातुरा कामिनी
निष्कामानपि कामसायककरा कामातुरान् कातरान् ।
कर्तुं वांछति पञ्चबाणरमणी तत्प्राणसंरक्षणे
तावत् सातिविचक्षणेव करुणा का तत्र तस्याः प्रिया ॥ ७८ ॥

दूरे सा तरुणी वनेऽपि तरुणीवार्ता न मे रोचते
सा नारी शबरी नराधममृगव्याधस्य सा स्याद् प्रिया ।
नारीचारुगिरा नरोऽपि निरयं तद्रौरवं यात्यतः
सा तस्मिन्नधम त्वमेव कुरुते तस्याः स्वभावस्ततः ॥ ७९ ॥

सुधाकरकराकरं यदि न मन्दिरं सुन्दरं तदा तु रमणीमणिश्चरणताडनापीडितम् ।
करोति रमणं ततः परिणयोऽपि न प्राणिनां क्षणं सुखमपीति मे मरणमेव तत्ताडनैः ॥ ८० ॥

अमन्दमदनव्यथा न गिरिकन्धरावासिनां असारकणभक्षणैरुपलराशिशय्यासनैः ।
अतः कथमनुक्षणं स्मरहरार्चनाराधनैः नयामि न मुदा वयो मुहुरुमासहायाश्रये ॥ ८१ ॥

कर्णात्तदीर्घनयनानुविलोकनेन नीलोत्पलाञ्चितकपोलतलोपघातैः ।
नीतं वयः कियदतः परमिन्दुमौलिं लिङ्गोपधानरचनेन नयामि कालम् ॥ ८२ ॥

कः कालोऽपि वराक इत्यपि मनः कालान्तराराधनैः
नूनं मे भवतीति निश्चितवतः पङ्केरुहैः शङ्करम् ।
निःशङ्कं समुपास्महे मुहुरुमाकान्ताभिधानामृतं
पीत्वा पीनवपुः स्मृतान्तकरिपुस्त्यक्त्वैव नारीस्पृहाम् ॥ ८३ ॥

नारी मारमनोहरेति चतुरो हारो न तस्यां रतो
यस्मान्माररिपुः प्रकुप्यति रिपुप्रेम्णास्पदानास्पदम् ।
प्रीतस्तद्रिपुपुङ्गवस्य च ततो नारी न मे रोचते
हारस्येति विचारितं पुनरिदं किं वा विचारास्पदम् ॥ ८४ ॥

वितानं यस्यासीदमृतकररूपं दिगबला शिला शय्या रेवाजलविमलमूलातिविपुला ।
इदं लिङ्गं तुङ्गं विविधमुपधानं धनमिदं कशादिः सेवायै मम भवति भाग्यैरिह विधे ॥ ८५ ॥

अधुनापि वधूजनै[4]र्विरोधे मदने तद्वदनानुलोकनेन ।
न किमस्य वयोऽपि याति वह्नौ पतितं नीरपृषत्कवत् वृथाऽहो ॥ ८६ ॥

अहो नीराहारो मिहिरकरतप्तः प्रतिदिनं प्रतप्तः पाथोधः स्मरणदहनेनाप्यनुदिनम् ।
शरीरत्यागेनाप्यतिरुचिरधारातिरुचिरां वरां नारीं धीरां कथमपि न पश्यामि मनसा ॥ ८७ ॥

संसाराग्निकदर्थितः कथमुमाकान्तार्चनाराधना धाराधारहरानुपक्तमनसां सङ्गैरभङ्गैः पुनः ।
लिङ्गाराधनमेव तावदधुना कर्तुं प्रवृत्तो मुहुः नानङ्गज्वरसारकातरतरां नारीं न पश्याम्यपि ॥

नारीतुङ्गकुरङ्गलोचनचमत्काराकरावेक्षणे क्षीणं तावदहो वयः कियदपि प्रोत्साहकालोकनैः ।
आलोकेष्वपि तद्विलोकनमिति न्यूना न नूनं मुहुः नेहे भूतिविभूतिभूषितवपुर्भूयोपि भूयो भुवि ॥

4 जनाविरोधे नटने C

प्रासादवातायनवातपोतनीतोत्तरीयोन्नतनीविबन्धाः ।
बन्धाय जाताः खलु दृष्टिबन्धैः यमालये ताभिरतः परं किम् ॥ ९० ॥

वारं वारं वारनारीविहारैः मारापारासाररूपैः सपापैः ।
नीतः कालः कालकालानुवेलं काले काले नार्चितः कालभीतैः ॥ ९१ ॥

न वातपोतानपि जातु सुन्दरीघनस्तनान्तः पतितानुपेतान् ।
मनो न मे वांछति तुङ्गगङ्गातरङ्गलिङ्गानिलनाललोलम् ॥ ९२ ॥

रेवातीरसमीरनीरतरुजापारप्रसूनार्चितं तुङ्गं लिङ्गमभङ्गलानि हरतीत्यत्राङ्गनाङ्गानिलः ।
नायातीति मुहुर्मुहुर्हर महादेवेति कालं नयन् अत्राद्यावधि कालकालकलनं मन्ये धनं जीवनम् ॥

अनन्तसङ्कल्पविकल्पनैर्वा कुलीलयाऽलं कमलाविलासैः ।
वराङ्गनापाङ्गतरङ्गसङ्गैरनङ्गमातङ्गहरिं भजामः ॥ ९४ ॥

अभ्यर्णे मरणक्षणे तु रमणीनिर्वाणपर्णाशनं
शर्वाणीरमणानुवर्णनमुदा कर्णे करोत्येव न ।
नैवाङ्गे भसितं करोति न मनाग्रुद्राक्षमालां गले
लिङ्गं मङ्गलदायकं न हृदये बिल्वानि वा किं तया ॥ ९५ ॥

दूरादेव पतिं विलोक्य पतितं दैवान्मृतं चामृतं दूतैर्नेतुमुपागतैस्तु सुरताभावानुलापे रता ।
पश्चात्कामशराकराकुलवधूः संगुप्तरोदना तद्भिन्ना जरयापि पीडिततनुः जारं परं पश्यति ॥ ९६ ॥

उमासहायः शिवपूजनं च भूतिश्च रुद्राक्षविभूषणं च ।
यथा हितायास्य तथा हिताय माता न तातो न वराङ्गनापि ॥ ९७ ॥

मुहुर्मुहुः कुङ्कुमपङ्कगौरगुरुस्तनान्तर्गतहारभारः ।
विलोकितो मारविहारकाले कर्पूरगौरो न हरः स्मृतोऽपि ॥ ९८ ॥

उन्मत्तोऽपि करी करेण विमले कुम्भस्थलेऽलङ्कृते
मुक्ताजालककल्पनेन तरुणीवक्षोजतुल्यं मुहुः ।
धूलिं प्रक्षिपति क्षणेन चरणैः हारान् क्षिणोत्याहतान्
आक्रोशत्यपि हा हतोहमिति किं लज्जा न तेनापि मे ॥ ९९ ॥

पुरा नारीतुङ्गस्तनभरकराघातनफलं
गजत्वं संप्राप्तं पुनरपि कुचाभेन शिरसा ।

मुहुर्दुःखं नैवेत्यपि शिरसि धूलिं क्षिपति किं
ततो नारीदूरे विहरतु मनो मे शिव शिवे ॥ १०० ॥

उमाकान्तानन्तान्यपि मम दुरन्तान्यघकुलान्यपारब्रह्माण्डप्रलयसमकालान्यपि मुहुः ।
विनष्टान्येवाद्य स्मरहर विहाराकरवरे वरे रेवातीरे स्थितमिति महाहारनिकरे ॥ १०१ ॥

शिव शिव शिव शम्भो चन्द्रमौले स्मरारे हर हर हर घोरापारसंसारभारम् ।
परिहर परनारीसङ्गमङ्गारभङ्गव्यतिकरवररूपं पाहि पाहि स्मरारे ॥ १०२ ॥

शम्भो मामकतामतिस्तव सदा मय्यस्तु का तावता हानिः स्यादनुवारमेतदधुना संप्रार्थनीयं मम।
किञ्चादेयमुमासहाय तव किं सर्वामराधीश्वरे दातापीति पुनः पुनर्मम मनस्त्वय्येव गौरीपते ॥

भूतिर्भालतले सितातिविमले रुद्राक्षमाला गले
जिह्वायां शिवनाम चेतसि शिवध्यानं शिवाचिन्तनम् ।
भक्तिश्चाव्यभिचारिणी त्वयि महादेवे निवासः सदा
काश्यां शङ्करलिङ्गपूजनमतिर्भूयान्मम श्रेयसे ॥ १०४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे अयोनिजबालस्य विरक्तिपूर्वकशिवभक्तिवर्णनं नाम षोडशोऽध्यायः ॥

---

## अथ सप्तदशोऽध्यायः ।

---

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा विधिर्व्याकुलमानसः । राजापि राज्ञी कन्यापि व्याकुला किमभूदिति ॥ १ ॥
अहो कल्याणसमयो नाद्याप्यस्याः समागतः । कन्यायाश्च विशेषेण किं कर्तव्यमतः परम् ॥ २ ॥
अत्युदारोऽपि धीरोऽपि हारो वीरोऽतिसुन्दरः । पञ्चरेखान्वितस्तावत् वरोऽयमतिदुर्लभः ॥ ३ ॥
सा तावद्युवती तावन्मदनज्वरपीडिता । बन्धात् कमलनालानां तन्तुभिः शीतलैः परम् ॥ ४ ॥
पश्यन्ती चित्ररूपाणि पुरुषाणां पुनः पुनः । तं न पश्यति सा चित्ते तत्तुल्योऽप्यधिकस्तु न ॥
मनसा केवलं ध्यात्वा तं पञ्चशरखण्डिता । खण्डितेवातिविमला सा बाला कमलानना ॥ ६ ॥
नावाप निद्रामुद्रां च पश्यन्ती सा पुनः पुनः । इतस्ततोऽपि दिङ्मात्रं अन्यच्छून्यं विपश्यति ॥

सिनीवालीविधुकला कोमला विमला किल । सा बाला कमलेवाली कमलैरपि लालिता ॥ ८ ॥

न क्षीरेच्छा न नीरेच्छा नाहारेच्छा तरामपि । हारेच्छा न तुषारेच्छा न नीहारकरस्पृहा ॥

नीहारकरदूरतः करतलाभिधातैरलं न ते तव कराः परं शरपरंपरा यामिनी ।
यमोनुसरतीत्यतः सरति सा शरीरं परं हरिष्यति यमस्य सा हरदयाविहीने मनः ॥ १० ॥

तल्पान्यनल्पानलतल्पकल्पान्यमन्दकुन्दच्छदसुन्दराणि ।
मन्दारमाकन्दमरन्दधारा नीहारधाराकरकाकुलानि ॥ ११ ॥

सा नांबरं पश्यति दृश्यमानं विहाय तावद्वसनं निशायाम् ।
आशाविकारं परिहर्तुमिच्छां चकार धैर्यापगमेन धीरा ॥ १२ ॥

अयं न तावद्रमणः स तावत् वरो वरेण्यो रमणो ममेति ।
तल्पान्तराण्येव विकल्पमाना स्तंभेऽपि गम्भीरवरस्वरूपे ॥ १३ ॥

तान्ता नितान्तमवनीतलमाप बाला लीलाविलासकमला कमलाकुला सा ।
सा भूतिभूषिततनुः शमनावकाशं आशंसमानमनिशं च तिरश्चकार ॥ १४ ॥

रेवातीरं साऽपि नीता विनीता तत्तीरे सा शीतवातेन नीता ।
लिङ्गे तुङ्गे सङ्गते साऽपि दृष्टा राज्ञा पृष्टस्तामुवाचाथ बालाम् ॥ १५ ॥

ब्रह्मा —

रेवातीरे परं हारं शरीरं तुङ्गलिङ्गकम् । विभूतिभासुरं पश्य तत्रायास्यति शङ्करः ॥ १६ ॥

तदङ्गस्पर्शनेनापि पवित्रं गात्रमित्यतः । न सेवनीयो यत्नेन स्पृष्टं चेदिष्टदं च तत् ॥ १७ ॥

इति तद्वचनं श्रुत्वा स गतस्तत्र बालकः । विधिना तेन राज्ञापि विधिना प्रेरितस्तदा ॥ १८ ॥

तत्कालं सितभूतिभूषितमिदं बाले विलोक्यादरात्
दूरेणापि स मारभल्लनिहतः सा बालिका चेतनाम् ।
प्राप्ता बालविलोकनेन विमला पुष्टापि दृष्टापि सा
साचीकृत्य मुखं मुखेन ससखीवृन्दैरमन्दैर्वृता ॥ १९ ॥

ततः परं स बालोऽपि प्राह तं चतुराननम् । इयं शिवरता बाला कमलामललोचना ॥ २० ॥

ईदृशी दुर्लभा लोके फाललोचनपूजने । सा धनं साधनं नूनं धनानामपि सा धनम् ॥ २१ ॥

इति तद्वचनं श्रुत्वा विधिः सन्तुष्टमानसः । राजापि बालिका सापि हर्षवर्षपरिप्लुता ॥ २२ ॥

ततः सोमेशकुण्डे सा बालिका फाललोचनम् । स्मृत्वा स्नात्वा विभूत्यापि भूषिता भूतिभूषणा ॥
ततः सोमेशलिङ्गे सा हरं गौरीमनोहरम् । पूजयामास विविधैरुपचारैरनेकधा ॥ २४ ॥
ततो दुकूलवसना त्रिपुण्ड्रनिटिलालका । दिव्याभरणसंपन्ना ननर्तावर्तचेष्टया ॥ २५ ॥
सोऽपि बालः प्रगे स्नात्वा भूतिभूषितविग्रहः । सोमेश्वरालयं प्राप सर्वसौभाग्यसंयुतम् ॥ २६ ॥
ततः पूजोपकरणं दापयामास बालिका । संज्ञया बालकायाऽयमर्चयामास तेन तम् ॥ २७ ॥
उपचारैर्बहुविधैः दिव्यैः पञ्चामृतादिभिः । उत्पश्यन्नेव तां बालां पूजयामास बालकः ॥ २८ ॥

स्मेराननं स्मरहरार्चनतत्परं सा बाला विलोक्य मुहुरादरतोऽति धीरा ।
मन्दस्मितेन मदनप्रसवायुधेन विद्धेन साऽपि विरता विविधार्थनाद्यैः ॥ २९ ॥

सीमन्तसिन्दूरविराजमानां त्रिपुण्ड्ररेखारुचिरोरुफालाम् ।
बालां विलोक्यादरतः स बालो नावाप धैर्यं मदनाश्रितोऽसौ ॥ ३० ॥

बाला लोचनगोचरा यदि मुहुर्न स्यात् तदा धीरता
पुंसां सा यदि दैवतो भवति तत् तल्लोचनालोचनम् ।
नूनं वञ्चितमेव चञ्चुरमनः पञ्चायुधेन क्षणं
तद्धैर्यं यदि तर्हि शर्वनिभता स्यादेव सर्वात्मना ॥ ३१ ॥

रुरुरपि तरुमूले स्वानुकूलाबलानां कलनमशनहीनो जीर्णपर्णाशनोऽपि ।
फलमिति कुरुतेऽतः क्वानुरक्तो विरक्तो न खलु पुरुषभावे स्वानुभावानुभावे ॥ ३२ ॥

रोमाञ्चाञ्चितकाञ्चनाभतनुभिः संभाविता भामिनी
भावैः भावजकेलिलोलनयनैः कैर्वा जनैः सज्जनैः ।
कः संभावितमर्थमप्यनुदिनं व्यर्थं कथं वा व्यथाः
त्यक्त्वा तां च कदर्थनामपि मुधा यद्दुर्जनावर्जितम् ॥ ३३ ॥

परस्परविलोकने स्मितवितानसंवीतयोः विलोकनविलोभनैरपि मुहुर्मुहुर्धीरता ।
गतेति स सखीजनो विरल एव मन्दं मुदा स्मरावसरसूचकः स खलु कोऽपि कालस्तयोः ॥३४॥

कमलामललोचनानुरक्तः स विरक्तस्त्वविरक्त एव शक्तः ।
अविरक्त इवाह कामुकामिव चेष्टाभिरलंकृतां नताङ्गीम् ॥ ३५ ॥

बालकः —

कासि मध्यमवयस्थमध्यमे लोचने शफरगर्वमोचने ।
फालमप्यमलभल्लसन्निभं दुर्लभं भुवनमण्डले खलु ॥ ३६ ॥

अभिनवकमलेन नाभिमूलं किमपि तवेदमभूतपूर्वमेवम् ।
तदुपरि किमयं स रोमराजिः मदनविनोदविशेषकेतुरेव ॥ ३७ ॥

मेरुद्वयं क्वापि न दृष्टमेव तच्चन्द्ररेखाभिरलंकृतं च ।
अहो कथं ते भुजमध्यभागे रुद्राक्षमालावलयानुकूलम् ॥ ३८ ॥

बाला विद्रुमवल्लिका कथमभूदम्भोजपार्श्वे कथं तन्मध्ये वरहीरजालरचना तस्मिन् क्व वा रक्तिमा ।
बालेन्दुद्वयमस्ति फालनिकटे वेणी फणी कोऽप्ययं सृष्टिस्तावदिहाष्टमूर्तिकरुणाभेदेन जाता त्वयि ॥

आनन्दशशिरेवायं नारीरूपमुपागतः । नृत्यत्यग्रे महेशस्य महेशानुग्रहेच्छया ॥ ४० ॥

तडित्कोटिकूटप्रभा केवलेयं वधूरूपमासाद्य सद्योऽनवद्या ।
शिवाचारविस्तारचातुर्यराशिः प्रकाशाय तावत् प्रनृत्यत्यहो किम् ॥ ४१ ॥

किमेषा सन्तोषं वितरति मुहुर्मोहमसकृत् निजापाङ्गासङ्गैरनुगतगतानङ्गनियतैः ।
कथं नीता कान्तिर्मलिनदलनीलोत्पलगता किमन्यायो न स्यादिह यदि भवेत् कज्जलजलम् ॥

इत्यानन्दवचोवीचिप्रपञ्चमपि बालिका । निधाय हृदये मन्दमनङ्गोद्रेकमाह सा ॥ ४३ ॥

कन्यका —

पाणिग्रहोत्तरमहं मदनोत्सवाय राकासुधाकरकराकरकल्पतल्पे ।
आकल्पकल्पनपुरस्सरमेव हारं आहारसारमुपभुज्य विलीनलज्जा ॥ ४४ ॥

इति तद्वचनं श्रुत्वा स्मरासारपुरःसरम् । मदनानन्दसन्दोहसंवीत इव बालकः ॥ ४५ ॥

ततः परं नाट्यसमाप्तिमाशु कृत्वा सुखं वेश्म समाविवेश ।
सा राजकन्या सुरवृन्दमान्या नवेन्दुरेखेव जनाभिरामा ॥ ४६ ॥

सा दिव्यतूर्यध्वनिभिः प्रविष्टा स्वमन्दिरं शङ्करमन्दिरे च ।
सा शोभनाचारविचारयुक्ता चकार राज्ञीमपि तामभिज्ञाम् ॥ ४७ ॥

सा राज्ञी तां विलोक्याशु हर्षवर्षसमावृता । मङ्गलाचरणोद्युक्ता देवदुन्दुभिनिःस्वनैः ॥ ४८ ॥

स राजा विधिना साकं स्नात्वोद्धूल्य च भस्मना । त्रिपुण्ड्ररुद्राक्षधरो ययौ सोमेश्वरालयम् ॥

ततः परं महादेवमुपचारैरनेकधा । पूजयामास विधिवत् भूपालो मुक्तिकांक्षया ॥ ५० ॥

ततः परं स राजाऽपि तस्य बालस्य चेष्टितम् । पाणिग्रहानुकूलत्वं विचार्याशु प्रहर्षितः ॥ ५१ ॥
ततः स च समाहूय मन्त्रिवर्गान् विशेषतः । मङ्गलाचारसंपत्तिविचारनिरतोऽभवत् ॥ ५२ ॥
अलंकृतं च नगरं मन्दिरं च विशेषतः । अलंकृतेन बालेन विधिना गन्तुमुद्यतः ॥ ५३ ॥
सितभूतिसमाक्रान्तं कर्पूरनिभमादरात् । विलोक्य राजा सन्तुष्टो रुद्राक्षाभरणं च तम् ॥ ५४ ॥

विलोक्य बालं चतुरन्तयाने संविष्टमिष्टाभरणैर्दुकूलैः ।
आवेष्टितं त्वष्टुरपीष्टमिष्टं प्रधानवर्गस्य च तं ददर्श ॥ ५५ ॥

देवदुन्दुभयो नेदुः सतूर्यध्वनिभिः सह । मन्दारपुष्पवृष्टिश्च बभूव गमनोत्सवे ॥ ५६ ॥
ततः परं स नगरं नगरन्ध्रकरार्चितः । विवेश नगरावासं वासवैरिव पूजितः ॥ ५७ ॥
केचिद्विचिक्षिपुर्लाजान् मङ्गलाचारसूचकान् । विचिक्षिपुः पल्लवांश्च कुसुमान्यपि केचन ॥ ५८ ॥
मन्दारमकरन्दानां धाराभिः पथि सेचनम् । कृतमेवामरैः सर्वैः नगरं समलङ्कृतम् ॥ ५९ ॥
वितानध्वजमालाभिः तोरणैरपि कोटिशः । मुक्ताजालैरपारैश्च कृतं नगरमण्डनम् ॥ ६० ॥
ततो दिगन्तविश्रान्ततूर्यध्वनिविराजितम् । मन्दिरं सुन्दरं प्राप रत्नप्राकारमण्डितम् ॥ ६१ ॥
रत्नसिंहासनाकीर्णे सुन्दरे शिवमन्दिरे । उपविश्यार्चयामास स राजा सविधिः शिवम् ॥ ६२ ॥

ततः परं मङ्गलमण्डपानां सतोरणानां कुसुमान्वितानाम् ।
विलोकनेनैव सुखं स राजा प्रापामृतेनैव सुरेन्द्रवर्गः ॥ ६३ ॥

ततः परं स बालोऽपि दृष्ट्वा शङ्करमन्दिरम् । पूजयामास विधिवदुपचारैर्महेश्वरम् ॥ ६४ ॥
राजा राज्ञीसमेतः सन् तया कन्यकया सह । चकार मङ्गलस्नानं मुहूर्ते विधिबोधिते ॥ ६५ ॥
नवग्रहमखं कृत्वा नान्दीं कृत्वा विशेषतः । सिंहासनाश्रितं चक्रे स राजा बालकं मुदा ॥ ६६ ॥
मङ्गलाचारसंयुक्तां सर्वाभरणभूषिताम् । रुद्राक्षमालासंयुक्तां कन्यकां भूतिभूषिताम् ॥ ६७ ॥
विलोक्य राजा सन्तुष्टो विधिना सह सादरम् । कथं देया कन्यकेयमित्याह स महीपतिः ॥
गोत्रसूत्रादिकं नात्र न च पित्रादिकं विधे । कः सङ्कल्पोऽत्र कर्तव्यः तमाहेति स्मितैर्मुहुः ।
इति श्रुत्वा वचस्तस्य ब्रह्मा राजानमब्रवीत् ॥ ६९ ॥

ब्रह्मा —

शिवस्वरूपाय शिवस्वरूपा कन्या शिवस्तुष्यतु दत्तयाऽयम् ।
इत्येव संकल्प्य विभूतिपूतां प्रयच्छ तां भूतिविभूषणाय ॥ ७० ॥

कन्याप्रदानेन महेश्वरो मे तुष्टो भवत्वद्य शिवाद्य तुष्टा ।
इति प्रदेया खलु कन्यकापि केनाशु तावत्सुखमाप्नुवन्ति ॥ ७१ ॥

यः कन्यकां भस्मविभूषणाय त्रिपुण्ड्ररुद्राक्षविभूषितां ताम् ।
ददाति तेनाखिलभूप्रदानपुण्येन युक्तो भवतीति मन्ये ॥ ७२ ॥

धन्यं शांभवरूपपात्रमनघं भूतिप्रभाभूषितं कन्यारत्नमिदं मनोरमतमं देयं ततो दीयताम् ।
एतद्दानसमं न दानमिति मे सिद्धान्त एव ध्रुवं तस्माच्छांभवदम्पतीमतिरपि प्राग्जन्मपुण्योदयैः ॥

इति तद्वचनं श्रुत्वा ददौ तस्मै स कन्यकाम् । देवदुन्दुभयो नेदुः पुष्पवृष्टिसमन्विताः ॥ ७४ ॥

विवाहहोमे सति लाजहोमे चकार पाणिग्रहणं स बालः ।
रराज राजेव स रोहिणीं तां संप्राप्य सस्मेरविहारभूमिः ॥ ७५ ॥

वधूवराभ्यां समुपेत्य मन्दं आनन्दधारां समुपेत्य नित्यम् ।
कृताञ्जलिः शङ्करमन्दिरान्तः साम्बाय लिङ्गोन्नतविग्रहाय ॥ ७६ ॥

कृत्वा ततः परमुमारमणार्चनं च सायं शिवाय विनिवेदितमेव भुक्त्वा ।
राजापि तेन विधिना द्विजपुङ्गवैश्च सन्तोषमाप स परं स वधूसमेतः ॥ ७७ ॥

तस्मिन् विवाहसमये विधये स राजा कृत्वार्हणामनघरत्नसमन्विताभिः ।
वस्त्रादिभिस्तदनु शांभवपुङ्गवेभ्यः पूजां चकार सकलोत्सववत्सलोऽयम् ॥ ७८ ॥

चतुर्थदिनपर्यन्तमेवमुत्सवसंयुतः । ययौ विधिर्ब्रह्मलोकं निवेद्य स महीपतिम् ॥ ७९ ॥

राजाऽपि पाणिग्रहणोत्तरं मुहुः स्वानन्दमात्राभिनयैर्विनोदम् ।
उत्पादयन्नेव निनाय कालं स्वाभीष्टसिद्ध्या खलु हर्षवर्षः ॥ ८० ॥

सा राज्ञी मणिमण्टपान्तरयुते मंचे विपञ्चीयुते युक्ते पञ्चशरारिसुन्दरशरैः कुन्दादिभिर्भूरिशः ।
संविष्टौ नवदम्पती मनसिजक्रीडाविनोदोत्सवे दृष्ट्वा स्मेरमुखी गतागतमतिं मन्दा चकारादरात् ॥

तयोस्तु तावन्मदनोत्सवोऽपि वृत्तः स्मरारिस्मरणैरपारैः ।
ताभ्यां महेशाय समर्पितोऽपि भक्त्या परं मारमहोत्सवोऽपि ॥ ८२ ॥

ततः परं पुष्टिरियं प्रकृष्टा जाता प्रवृद्धा मदनोत्सवस्य ।
ततः परं सापि बभार गर्भं शनैः शनैर्वृद्धिमवाप गर्भः ॥ ८३ ॥

सा गर्भचिह्नैः परिचिह्निताऽभूल्लज्जामवाप स्मरचेष्टयाऽपि ।

ततः परं सा सुषुवे कुमारं कुमारकल्पं सुमुहूर्तयोगे ॥ ८४ ॥

स जात एवाशु महेश शंभो पाहीति नत्वा गिरिशाय भक्त्या ।
चकार पूजां वचनैरपारैः महेश्वराख्यान्वयपावनैस्तैः ॥ ८५ ॥

शिवनामसुधापानपीनमालोक्य बालकम् । तत्पिताऽतीव सन्तुष्टः स राजाऽपि विशेषतः ॥ ८६ ॥
सा राज्ञी तोषमापन्ना सखीभिः सह मन्त्रिणः । नगरस्थाश्च ते सर्वे सन्तोषं परमं ययुः ॥ ८७ ॥
जातकर्मादिकं कृत्वा ब्राह्मणेभ्यो महोत्सवे । ददौ रत्नान्यपाराणि गास्तुरङ्गांश्च दन्तिनः ॥ ८८ ॥
एकादशेऽह्नि संप्राप्ते नामकर्म चकार सः । पुण्याहवाचनं कृत्वा भोजयित्वा द्विजोत्तमान् ॥
तदानीमागतो ब्रह्मा तदुत्साहविलोकनम् । कर्तुमेवागतं वीक्ष्य पूजयामास भूपतिः ॥ ९० ॥
ततः परं स राजापि तन्नामकरणोत्सवे । केन नाम्ना चिन्हितः स्यात् अयमित्याह तं विधिम् ॥
मम नामेति वेदेन द्विजानां नाम बोधितम् । तेनैव नाम्ना बालोऽयं चिन्हितोऽस्ति महीपते ॥
रुद्रोऽग्निरिति वेदेन रुद्रशब्दोऽग्निशब्दवत् । शिवबोधक एवेति शिवशब्दान्वितस्त्वयम् ॥ ९३ ॥
अग्निशब्दः शिवं प्राह वेदेषु बहुधा ततः । शिवः शिवंकरत्वेन सोऽयमित्युच्यतां सदा ॥ ९४ ॥
एवं कुमाराः शतशो भविष्यन्ति शिवाख्यया । चिन्हिताश्च भविष्यन्ति शूराः शांकरपुङ्गवाः ॥
इति तद्वचनं श्रुत्वा शिवनामान्वितान् सुतान् । चकार शिवभक्तार्यः शिवभक्तार्यसंज्ञया ॥ ९६ ॥
ततः परं तमुत्साहं दृष्ट्वा धर्मविबोधनम् । कृत्वा ययौ ब्रह्मलोकं ब्रह्मा सन्तुष्टमानसः ॥ ९७ ॥
स तावद्ववृधे बालः शिवपूजापरायणः । तं दृष्ट्वा परमं प्राप सुखं तज्जनको मुहुः । ९८ ॥

शिवायाहि पश्येदनीशानलिङ्गं शिवार्थं प्रयच्छात्र बिल्वं प्रयच्छ ।
शिवत्वं शिवं वीक्ष्य हृष्टः शिवत्वं भजस्वेति मातापि तानाह राजा ॥ ९९ ॥

शिवे भोजनीयं प्रदेयं च वस्त्रं शिवायानघं चन्दनं रत्नहारः ।
इति प्रीतिपूर्वं स तन्नाम नित्यं गृहीत्वा शिवाराधनासक्तचित्तः ॥ १०० ॥

ततः परमभूत् पुत्रः पुनरन्यो मनोहरः । स शङ्कर इति ख्यातः शङ्करत्वेन शङ्करः ॥ १०१ ॥
अन्योऽप्यभूत् सुतस्तस्य स महादेवसंज्ञया । ख्यातस्तेन सुखं प्राप जनको जननी च सा[1] ॥
पुनरप्यभवत् पुत्रः स महेश्वरसंज्ञया । ख्यातः शिवाचाररतः शिवपूजकपूजकः ॥ १०३ ॥

1 'तदन्योऽप्यभवत् पुत्रः स महारुद्रसंज्ञया । प्रसिद्धस्तेन पुत्रेण सुखमाप महीपतिः' इत्यधिकः श्लोकोऽत्र C कोशे ।

एवमष्टोत्तरशतं पुत्रास्तस्य मनोहराः । शिवार्चनपराः सर्वे सर्वे सुन्दरविग्रहाः ॥ १०४ ॥
ते सर्वे सकृदैवेशं शिवाराधनतत्पराः । हृष्टाः प्रहृष्टाः सन्तुष्टाः पित्रोस्ते तोषवर्धकाः ॥ १०५ ॥
तान् कुमारान् विलोक्यैव जनकौ हृष्टमानसौ । तौ शिवाराधनोद्युक्तावहर्निशमनुक्षणम् ॥ १०६ ॥
रेवालिङ्गानि तुङ्गानि ताभ्यां प्रत्यहमादरात् । आसायमर्चितान्येव बिल्वपत्रादिसाधनैः ॥ १०७ ॥
पूजां प्रदोषकालीनां समाप्य प्रत्यहं मुदा । भुक्तः शिवोपहारस्तु शिवचिन्तनपूर्वकम् ॥ १०८ ॥
तयोरहर्निशं कृत्यं नित्यं शङ्करपूजनम् । तद्विहाय क्षणमपि ताभ्यां न स्थितमेव हि ॥ १०९ ॥
ताभ्यां शिवप्रसादेन विश्वेश्वरसमर्चनम् । प्रत्यहं क्रियते ताभ्यां वीरेशस्यापि पूजनम् ॥ ११० ॥
पञ्चक्रोशस्थलिङ्गानि पूज्यन्ते तैरनेकधा । कुमारैः सह तैः सर्वैः शिवपूजापरायणैः ॥ १११ ॥
रात्रिः शिवकथालापैः ताभ्यां सर्वापि नीयते । न जाता सुखभोगेच्छा तयोः शङ्करपूजया ॥
स भस्मोद्धूलितान् दृष्ट्वा रुद्राक्षवलयावृतान् । शिवपूजनसंसक्तान् अवाप परमं सुखम् ॥
सापि दृष्ट्वा शिवाचारपरायणमनामयम् । भर्तारं सुखसंपन्ना कुमारानपि शाङ्करान् ॥ ११४ ॥
शिवस्तोत्ररता नित्यं तुष्टाव परमेश्वरम् । चन्द्रचूड महादेव शिव रुद्र महेश्वर ॥ ११५ ॥
आयाहीति स तानुक्त्वा सन्तोषं परमं ययौ ॥ ११६ ॥

हे विश्वनाथ गिरिश त्रिपुरान्तकेति हे भूतिभूषण गिरीश महान्धकारे ।
मृत्युञ्जयेति मुहुरादरतः कुमारान् आहूय सा सुखमवाप सहैव भर्त्रा ॥ ११७ ॥

तौ वीक्ष्य शङ्कररताननुवारमाशु राज्ञी च भूपतियुता सुखमाप नित्यम् ।
तौ सच्चरित्रकमनीयपवित्रगात्रौ नेत्रोत्सवाय जगतामुपकारकौ तौ ॥ ११८ ॥

तदाचारमालोक्य सर्वेपि हाराः तिरस्कृत्य संसारवार्तां हरार्चाम् ।
परं कृत्यमेवेति मत्वा स्थितास्ते चिरं नर्मदातीरलिङ्गार्चनेन ॥ ११९ ॥

तयोर्हराराधनमेव कृत्यं तेनैव तावत् सकलार्थसिद्धिः ।
ताभ्यां पवित्रं नगरं च सर्वं रेवा पवित्रापि पवित्रिता सा ॥ १२० ॥

विचित्रतच्चरित्राणि विलोक्य मुनयोऽपि ते । तत्तीरवासिनः सर्वे महाशाम्भवतां गताः ॥ १२१ ॥
नित्यं मुनिवधूवर्गः कर्तुं तद्दर्शनं परम् । समायाति प्रदोषेऽपि मध्याह्नेऽपि प्रगे अपि ॥ १२२ ॥
तद्विलोकनमात्रेण पापिनोऽप्यतिपावनाः । भवन्त्येव तयोस्तावत् दर्शनं खलु दुर्लभम् ॥ १२३ ॥
ताभ्यां तु व्यवहारेषु लौकिकेष्वपि शङ्करः । स्मर्यते शिवनाम्नैव पदार्थो व्यवहार्यते (?) ॥

यद्यत्कृतं सुकृतकर्म तदीश्वराय ताभ्यां समर्पितमघापहरं हराय ।
कृत्वा निवेदयति कर्म स एव मुक्तो युक्तोऽपि बन्धुजनदारकुमारवर्गैः ॥ १२५ ॥

स्वाधीने मनसि स्थिते सति शिवे कः शङ्कराराधनं
त्यक्त्वा तिष्ठति बिल्वपल्लवजलैस्तुङ्गेषु लिङ्गेष्वपि ।
रेवातीरगतेषु तेषु बहुषु व्याप्तेषु रेवातटं
त्यक्त्वा याति हितार्थमर्थनिकरप्राप्त्यर्थमत्यादरात् ॥ १२६ ॥

पूर्वं रेवातीरमासाद्य सर्वे मुक्तास्तेषां सन्ततिश्च प्रवृद्धा ।
रेवालिङ्गाराधनेनैव नित्यं रेवालिङ्गं दुर्लभं भूतलेषु ॥ १२७ ॥

रेवालिङ्गं सर्वचिन्हं सकृद्वा यो वा नित्यं पूजयेत् तस्य सङ्गः ।
पापापारव्याधिनाशाय नूनं तल्लिङ्गार्चा शर्वसन्तोषहेतुः ॥ १२८ ॥

जन्म मानुषमवाप्य सन्ततं नर्मदानिलयलिङ्गपूजनम् ।
यः करोति स तु पूज्य एव मे तत्पदाम्बुजरजोऽपि पावनम् ॥ १२९ ॥

लोके पावनपावनो विजयते यः कालकालार्चकः
तत्पादाम्बुजरेणुरेणुरजसा गङ्गापि सा पावनी ।
तस्मात् तद्भजनेन मुक्तिरिति या मुक्तिः परं दुर्लभा
सा मुक्त्यै भवतीति मुक्तिवनिताडिण्डीरवो जायते ॥ १३० ॥

उच्चैः शङ्कर शङ्करेत्यपि मुहुः यः कालकालार्चनं
ध्यानानन्दनिमग्न एव परया भक्त्या वदेदन्वहम् ।
तत्पादाम्बुजपूजनोद्यतमतिः ब्रह्मापि नारायणः
शर्वाणीरमणप्रसादमहिमा मर्त्यैः कथं ज्ञायते ॥ १३१ ॥

यो भक्त्या सकृदेव वा स्मरहरं स्मृत्वा कृतार्थं परं
मत्वा तच्चरणारविन्दभजनासक्तः स वंशोन्नतः ।
तत्सङ्गः खलु दुर्लभः शुभद इत्येव प्रसिद्धो बुधैः
सर्वाशास्यतया प्रसिद्ध इति किं नाशास्य एवान्वहम् ॥ १३२ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे अयोनिजदम्पत्योः सन्तानाभिवृद्ध्यादिसच्चरित्रवर्णनं नाम सप्तदशोऽध्यायः ॥

# अथाष्टादशोऽध्यायः ।

कश्यपः —

एवं शिवाराधनसक्तचित्तः सुखाम्बुराशिं समवाप्य पुत्रैः ।
पौत्रैः प्रपौत्रैरपि तत्प्रपौत्रैः मुक्तो भविष्यत्यपि नर्मदायाम् ॥ १ ॥

अध्यायमेनं पठति प्रभाते यः पुत्रकामो धनधान्यकामः ।
स तावदाप्नोति तमिष्टमादौ महेश्वरार्चानिरतोऽपि भूयात् ॥ २ ॥

इति नारदवाक्यानि श्रुत्वा तावत् स भूपतिः । दृष्ट्वा पुत्रं सुखं प्राप पूतं शांभवविद्यया ॥ ३ ॥
स तावद् ववृधे राजा नित्यं शङ्करपूजया । स शिवाराधनं कृत्वा कदाचिद्विपिनं ययौ ॥ ४ ॥
स बिल्वतरुसंकीर्णं मन्दारतरुशोभितम् । जम्बीरबीजपूरादितरुकोटिविराजितम् ॥ ५ ॥
तद्वनं तुङ्गपुन्नागनारिकेलविराजितम् । केतकीचम्पकादीनां राजिभिश्च विराजितम् ॥ ६ ॥
मल्लिकाकुन्दवल्लीभिः सपुष्पाभिर्विराजितम् । एलाविद्रुमवल्लीनां कोटिभिश्च विराजितम् ॥ ७ ॥
उत्फुल्लहेमकल्हारसरोमालाविराजितम् । सुवर्णकदलीकोटिपवनाम्रविराजितम् ॥ ८ ॥
तत्र रत्नसमाकीर्णं हेमप्रासादरञ्जितम् । हेमगोपुरसंकीर्णं ददर्श शिवमन्दिरम् ॥ ९ ॥
तं दृष्ट्वाऽतीव सन्तुष्टो राजा शङ्करपूजनम् । चकार सरसि स्नात्वा भस्मरुद्राक्षभूषणः ॥ १० ॥
सेनां दूरे परित्यज्य चित्रैः शाम्भवपुङ्गवैः । सह तत्र शिवध्यानं कृत्वा नाट्यं चकार सः ॥ ११ ॥
ततः परं रुद्रवीणां गृहीत्वा शिवगायनम् । चकार हर गौरीश शिव शङ्कर इत्यपि ॥ १२ ॥
तदानीं तावदस्माभिः गन्धर्वनगरात् परम् । तत्रागतं स दृष्टश्च भूपालो गानतत्परः ॥ १३ ॥
ततः परं स गानेन तोषयामास शङ्करम् । पुनः पुनः शिवानन्दतरङ्गपरिवारितः ॥ १४ ॥
ततस्तद्दर्शनेनैव हृदि पञ्चशरः परम् । प्रविष्टस्तेन नास्माकं नान्यत्रासीद् गतिः खलु ॥ १५ ॥
तदा गन्धर्वराजोऽपि तत्र शङ्करपूजनम् । कर्तुमभ्यागतो देवाः चकार शिवपूजनम् ॥ १६ ॥
गन्धर्वगानचतुरः स गन्धर्वः शिवप्रियम् । गानं चकार मनसा संस्मरन्नेव शङ्करम् ॥ १७ ॥
राजा तद्गानमाकर्ण्य शिवभक्तकृतं मुदा । प्राह गन्धर्वराजानं शिवगानरतं मुहुः ॥ १८ ॥

राजा —

गन्धर्ववर किं वा ते वद तावदभीप्सितम् । गानेनानेन सन्तुष्टः शिवनामाङ्कितेन हि ॥ १९ ॥

शिवनामरतो यस्तु तस्यादेयं न मे भुवि । इतोपि नाधिकं लोके दानपात्रं च दृश्यते ॥ २० ॥
इदन्तु शांभवं क्षेत्रं शांभवायात्र यद्वसु । दीयते यद्भवत्येव तत् कोटिगुणितं खलु ॥ २१ ॥
इति तद्वचनं श्रुत्वा गन्धर्वो हृष्टमानसः । शिवभक्तिरतं प्राह राजानमतिसुन्दरम् ॥ २२ ॥

गन्धर्वः —

अनृतोक्तिविरक्तिरद्भुता भुवि तावद्बहुधा नृपोत्तम ।
न च सत्यमहाव्रते रतिः शिवभक्तस्य परं तु यद्व्रतम् ॥ २३ ॥

शिवः सत्यं तस्माच्छिवभजनकाले शिवरतः शिवं स्मृत्वा सत्यं वदति बहुधा सत्यमसकृत् ।
त्वया सत्यं तावद्व्रतमिति गृहीतं मुहुरपि स्मृतो भक्त्या भावैः सह कृतमुमाकान्तभजनम् ॥२४॥

सत्यव्रतं यस्य निरन्तरायं स एव धन्यः शिवपूजकोऽपि ।
शिवालये शांभवपुङ्गवेषु सत्यं वदत्येव विशेषतस्तु ॥ २५ ॥

दिव्यं सत्यं सत्यसंकल्पमाहुः सत्ये तावत् सर्वदा सर्वसिद्धिः ।
तस्मात् सत्यं मय्यवश्यं त्वया तु वक्तव्यं ते सत्यमस्तु व्रतं च ॥ २६ ॥

मत्प्रार्थनीयमिदमेव नृपोत्तमास्ति कन्याशतं तदधुनाऽद्य मुदा गृहाण ।
तत्तावदिन्द्रवनितागणतुल्यमेव प्रीतिस्तवास्तु नृप सन्ततमेव तत्र ॥ २७ ॥

अत्रास्ति कन्याशतकं प्रपश्य शिवार्चनार्थं समुपागतं च ।
राजन् सरस्वतीरगतं प्रपश्य विलासयोग्यं च वनं किलेदम् ॥ २८ ॥

तासां शिवाराधनमेव तावत् व्रतं विभूतिः परमा विभूषा ।
रुद्राक्षमाला च शिवार्चकेषु तेषां खलु प्रीतिरनन्तराया ॥ २९ ॥

त्रिपुण्ड्ररेखाललितोत्तमाङ्गाः तास्तावदालोकनमात्रतोऽपि ।
हरन्त्यघानीति विनिश्चयो मे हाराङ्गना हाररता विरक्ताः ॥ ३० ॥

एतावदेते खलु तावदद्य मत्प्रार्थनीयं मम भाग्यमेतत् ।
तुल्यस्त्वया कोपि न भूतलेपि जातो भविष्यत्यपि वर्तते वा ॥ ३१ ॥

आजन्मशुद्धोऽसि विभूतिपूतो रुद्राक्षमालाभरणो महेश ।
त्वय्यस्ति मे प्रीतिरियं प्रवृद्धा भवत्विहान्यन्न मयोक्तमेव ॥ ३२ ॥

पश्य पश्य नृपपुङ्गव पश्चात् कन्यकाशतमुमापतिपूजाम् ।

कर्तुमेव विविधैरुपचारैरादरेण शिवगानरतास्ताः ॥ ३३ ॥

शिव शिव मृड रुद्र चन्द्रमौले स्मरहर शङ्कर शर्व नीलकण्ठ ।
इति वदति मुहुः शृणु प्रणामैरलमलमेव युवासि भूपते त्वम् ॥ ३४ ॥

इति तद्वदनं श्रुत्वा स राजा सत्यवत्सलः । ओमित्याह शिवं पश्यन् शिवार्चनपरायणः ॥ ३५ ॥

ततः समागताः कन्यास्तास्तावदतिसुन्दराः । ददर्श शिवपूजार्थमुद्यताः प्रयता अपि ॥ ३६ ॥

तं विलोक्य मदनातुरचित्ताः ताः शिवार्चनपरा अपि सोऽपि ।
पञ्चबाणवशमाप स भूपो भीरुरेव हरपूजनपूतः ॥ ३७ ॥

शिवमभ्यर्च्य ताः सर्वाः प्रार्थयित्वा वरस्त्वयम् ।
हरास्माकमिति स्मृत्वा प्रणतास्ताः पुनः शिवम् ॥ ३८ ॥

ततः परं तुङ्गकुरङ्गलोचनाः तस्तावदानम्रमुखाम्बुजास्तम् ।
उद्वीक्ष्य सस्मेरमुखं स्मिताननाः विनिर्गताः शङ्करमन्दिरेभ्यः ॥ ३९ ॥

ततस्सरस्तीरगते मनोज्ञे हर्म्ये सुगन्धानिलपोतवीते ।
स्थिताः परं रत्नवरासनेषु वरं स्मरन्तोपि हरं स्मरन्तः ॥ ४० ॥

ततः स गान्धर्वविवाहमेव चकार गन्धर्वपतिः प्रमोहैः ।
समर्चयित्वा गिरिशं स राजा पुनर्विवाहोत्सवमेव कर्तुम् ॥ ४१ ॥

ततः परं ताभिरपारसौख्यप्रदानलीलाभिरलंकृतोऽसौ ।
उवास भुक्त्वा विविधान्नमन्नं दत्वा महेशाय विभूषणानि ॥ ४२ ॥

ततः परं स गन्धर्वः सन्तुष्टः प्राह भूपतिम् । सुखासीनं सुखासीनः स्मरन्नेव महेश्वरम् ॥ ४३ ॥

गन्धर्वः—

लक्षं गन्धर्वकन्यानामस्ति मन्नगरे नृप । ताः सर्वाः परिणेयास्ते ता अप्यत्यन्तसुन्दराः ॥ ४४ ॥

कामना तासु कन्यासु सुराणामपि तिष्ठति । दुर्लभा एव ताः कन्याः प्रियाः सन्तु तवाधुना ॥

एतावत् प्रार्थनीयं मे न तावदधिकं नृप । इत्युक्तं तद्वचः श्रुत्वा गन्धर्वं प्राह भूपतिः ॥ ४६ ॥

तव यद्वचनं तस्य कर्तव्यं परिपालनम् । तेन सत्या प्रतिज्ञा मे भविष्यत्यधुना तु न ॥ ४७ ॥

किं च यद्यत् त्वया तावद्वक्तव्यं मे हितं भवेत् । तत् सर्वमपि कर्तव्यं यतः सत्यं व्रतं मम ॥

इत्युक्तः प्रीतहृदयः प्रेषयामास चारणम् । गन्धर्वनगरस्थाय मन्त्रिणे स्वहिताय सः ॥ ४९ ॥

स मन्त्री चारणोक्तानि श्रुत्वा वाक्यानि सादरम् । अनेकमन्त्रिसंयुक्तः कन्यकाभिर्ययौ वनम् ॥
तदागमनकालेषु पुष्पवृष्टिरभूत् तदा । देवदुन्दुभयो नेदुः जगुर्गन्धर्वकन्यकाः ॥ ५१ ॥
अत्युत्सवसमाकीर्णाः ते तत् प्राप्य वनं मुदा । स्नात्वा सरसि पूजां च चक्रुस्ते शङ्करस्य तु ॥
कमलैः कुमुदैः पुष्पैः विमलैर्बिल्वपल्लवैः । दिव्यैः परिमलद्रव्यैरुपचारैः सहस्रशः ॥ ५३ ॥
ताश्च कन्याः समालोक्य शिवपूजनतत्पराः । स राजाऽतीव सन्तुष्टः तत्पाणिग्रहणोद्यतः ॥ ५४ ॥
ताश्च सर्वाः समालोक्य राजानमतिसुन्दरम् । ममैवायं ममैवायमित्यूचुस्ताः परस्परम् ॥ ५५ ॥
रत्नहर्म्येषु दिव्येषु पुष्पशय्याकुलेष्वयम् । चचार राजा सर्वत्राप्येकोऽनेकत्वमागतः ॥ ५६ ॥
तेषु सर्वेषु हर्म्येषु सोयमेकोऽपि भूपतिः । दृष्टस्ताभिर्मया साकं मया साकमिति स्थितः ॥ ५७ ॥
एक एव स भूपालः शतलक्षशरीरभाक् । एकदा ताभिरानन्दक्रीडया परया स्थितः ॥ ५८ ॥
स राजा विस्मयं दृष्ट्वा मन्त्रिभिः सह सादरम् । सन्तोषं परमं प्राप कृत्यं जातमिति स्वकम् ॥
कृतं तत्रैव नगरं रत्नप्राकारवेष्टितम् । रत्नमन्दिरसंकीर्णं शिवमन्दिरवीक्षणम् ॥ ६० ॥
कर्तुमायान्ति गन्धर्वाः कोटिशः प्रत्यहं मुदा ॥ ६१ ॥

तस्मिन् वने नित्यमहोत्सवानां विलोकनायामरसुन्दरीणाम् ।
गणः समायाति गणेश्वराणां गणोऽपि गन्धर्वगणोऽपि नित्यम् ॥ ६२ ॥

भाग्यं प्रवृद्धं महदस्य राज्ञः संख्या न भाग्यस्य विशेषरक्ताः ।
जाताः कुमाराश्च कुमारतुल्याः सर्वे सुभार्याः सुशिवार्चकास्ते ॥ ६३ ॥

लक्षं तद्वनिताः स्वभावललिताः भूतित्रिपुण्ड्राङ्किताः
रुद्राक्षैः समलंकृताः शिव महादेवेति गानोद्यताः ।
सर्वास्ताश्च पतिव्रताः शिवकथाध्यानानुवादे रताः
तन्मध्ये वयमप्यपारविभवास्तत्पाणिसंस्पर्शनात् ॥ ६४ ॥

एतादृशं भाग्यमनेन लब्धं प्रदोषकाले शिवदर्शनेन ।
शिवार्चनं चेत् क्रियते प्रदोषे तत्पुण्यसंख्यागणनापि केन ॥ ६५ ॥

अयं महादेवपरायणत्वात नारायणाद्यैरपि पूजनीयः ।
प्रदोषकाले शिवदर्शनेन को वा न सर्वाणि सुखानि भुङ्क्ते ॥ ६६ ॥

पुण्यैरेव महाप्रदोषसमये दृष्ट्वापि लिङ्गं मुहुः
नत्वा भक्तिपुरस्सरं जललवं दत्वा च बिल्वीदलम् ।

भुक्त्वा हारमहोपहारमसकृत् श्रुत्वा कथां शांभवीं
हित्वा भोगरतिं प्रयात्यघरिपुं हत्वा शिवं शांभवः ॥ ६७ ॥

इत्येतद्वचनं श्रुत्वा राज्ञी विस्मितमानसा। तथैव प्राह राजानं प्रणता भक्तिपूर्वकम् ॥ ६८ ॥
तव प्रभावो विज्ञातः सर्वोऽपि नृपसत्तम। उदारास्तव दारास्ते तिष्ठन्त्यत्र शिवालये ॥ ६९ ॥
तास्तु स्तनन्धयान् बालान् गृहीत्वा क्षुधितानपि। अत्रैवागत्य तिष्ठन्ति शिवपूजापरायणाः ॥
अमात्यास्ते तव द्वारि तिष्ठन्त्यागत्य कोटिशः। तुरङ्गमत्तमातङ्गकोटयोऽपि समागताः ॥ ७१ ॥
नगरं वेष्टितं सर्वमस्माकं तैरतः परम्। शाधि शाधि प्रसन्नस्त्वं मां महीपालसत्तम ॥ ७२ ॥
इति तद्वचनं श्रुत्वा स राजा बहिरागतः। दूरात् स्त्रैणं ददर्शापि दृष्ट्वा दारान् शिवालये ॥ ७३ ॥
ततो बालाः समुत्थाय बालकैः सह सत्वरम्। प्रणताः स्मेरवदनाः साचीकृत्य मुखान्यपि॥
ततस्ते बालकाः सर्वे भूतिरुद्राक्षभूषणाः। जननीकटिभागेभ्यश्च्युतास्तं प्रतिपेदिरे ॥ ७५ ॥
शिव शम्भो महेशेति वदतस्तान् विलोक्य सः। दृढमालिंग्य सस्नेहं पस्पर्श च शताधिकान् ॥
तेऽपि बालाः शिवं दृष्ट्वा रत्नैः संपूज्य शङ्करम्। प्रणम्य दण्डवद्भूमौ चक्रुर्नाट्यं शिवाङ्गणे ॥
तान् विलोक्य मुदं प्राप स राजा तेऽपि बालकाः। पुनः प्रवृत्ताः स्तन्यार्थं पुनर्नाट्याय ते पुनः॥
बालकानां शिवाचारं शिवनाट्यमहोत्सवम्। दृष्ट्वा राजा प्रहृष्टोऽभूत् मेने धन्योऽहमित्यपि ॥
ततः परं तु सा राज्ञी संप्रणम्य महीपतिम्। कृताञ्जलिपुटा भूत्वा प्राह नम्रानना नृपम् ॥८०॥
पुरा दुर्धीरभूद्राजन् सा बुद्धिर्विलयं गता। अतः परं निवृत्तिश्च जाता दोषावलोकनात् ॥ ८१ ॥
यावन्न विषये दोषो दृश्यते मोहसङ्गमात्। तावत् प्रवृत्तिविषये तदभावेन साऽपि हि ॥ ८२ ॥
निवृत्तिर्मनसस्तावत् विषयेऽभ्येति दुर्लभा। मन्दं मन्दं निवृत्तिः स्यात् महादेवाज्ञया परम् ॥
इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः। पश्यन् स बालकानेव राज्ञीं तामाह तत्वतः ॥ ८४ ॥
सौन्दर्यविषयाक्रान्ता सा रूपायतनं हि तत्। स्त्रीणां निवृत्तिरत्यर्थं दुर्लभैव स्वभावतः ॥ ८५ ॥
बहुधा विषयापेक्षा नारीणामुपजायते। विषयेषु ततस्तेषु तदन्तःकरणं खलु ॥ ८६ ॥
किं च बालासि सुभगे निवृत्तिसमयो न ते। निवृत्तिरपि कालेन जाता दैवात् प्रवर्धते ॥ ८७ ॥
सति भर्तरि नारीणां वैराग्यमुचितं च न। तत्सेवया परं नेयः स धर्मः परमः खलु ॥ ८८ ॥
इति तद्वचनं श्रुत्वा सा राज्ञी खिन्नमानसा। प्रणता प्राह भूपालमश्रुपूर्णविलोचना ॥ ८९ ॥

राज्ञी —

भर्तृसेवा परं धर्मः स्त्रीणामिति ततः परम् । सत्यमत्र न सन्देहः पतिः संसारलोलुपः ॥ ९० ॥
शिवनाम न विज्ञातं तेन भूपेन भूपते । न श्रुता शिववार्तापि श्रोतव्यमिति धीरपि ॥ ९१ ॥
त्रिपुण्ड्ररेखाकान्तिश्च न बाल्येऽपि नृपोत्तम । रुद्राक्षमालावार्तापि न श्रुता तेन सर्वथा ॥ ९२ ॥
न श्रुतः शिवलिङ्गानां महिमा पूजनस्य च । शाम्भवैः सह वार्तापि न कृता तेन भूपते ॥ ९३ ॥
इदं पुरातनं स्थानं शिवस्य परमात्मनः । न दृष्टमेव निकटे कदापि निकटस्थितम् ॥ ९४ ॥
मुदा वनविहारार्थमागत्याप्यत्र सर्वथा । इदं न दृष्टं देवस्य लिङ्गं मङ्गलदायकम् ॥ ९५ ॥
तरुणीजनसंकीर्णः सर्वदा पुण्यवर्जितः । तरुणीवार्तया जन्म कृतवान् व्यर्थमेव सः ॥ ९६ ॥
लक्षशः सन्ति वनिताः तस्य तावन्मदोद्धताः । नित्यं तावदहोरात्रं साकं भूपेन भूपते ॥ ९७ ॥
ममापि बुद्धिरत्यन्तं दुष्टा पुरुषसङ्गमे । पुनः पुनः पुनः प्रीतिर्विरतिर्नैव जायते ॥ ९८ ॥
त्वयापि सह संयोगः कर्तव्य इति धीरभूत् । तवैव धैर्यान्नाभून्मे सङ्गः पातकसाधनम् ॥ ९९ ॥
तत्वबोधः कृतस्तेन विरतिर्मम जायते । अशांभवः पतिः प्राप्तो मया दुर्भगया खलु ॥ १०० ॥
भर्तारं शाङ्करं प्राप्य भवन्तं भगवत्तरम् । एताः सुखेन तिष्ठन्ति भाग्यमेतादृशं कुतः ॥ १०१ ॥
इहापि सुखमत्यन्तं शाङ्करे सति भर्तरि । परलोकसुखं तावत् सुलभं तेन सङ्गमे ॥ १०२ ॥

सुखं तदा शाङ्करभर्तृयोगात् नारी समाप्नोति ततः फलेन ।
भर्तारमीशानपरं परत्र सुखाय चात्रापि न संशयोऽत्र ॥ १०३ ॥

तप्तं तपः पूर्वमघोरमाभिः भर्तारमीशानपरं महेश ।
मया तु भर्ता दुरदृष्टयोगात् अशाङ्कराग्रेसर एव लब्धः ॥ १०४ ॥

अतः परं तस्य तु सेवयापि सदा परं दुःखपरम्परा स्यात् ।
अशाङ्करं पश्यति यः प्रमादात् स याति तावन्नरकं सुतं वा ।
तातं तथा भ्रातरमाश्रितं वा भर्तारमप्यत्र न संशयोऽस्ति ॥ १०५ ॥

भर्ता तावदुमासहायचरणाम्भोजार्चको दुर्लभ-
स्तस्माद्देहविसर्जनेन भसितेनोद्धूल्य लिङ्गालये ।
जप्त्वा शङ्कर शङ्करेत्यपि मुहुः यास्ये पदं शाम्भवं
भोगेच्छा न ममास्ति शङ्करपदाम्भोजे शपामि ध्रुवम् ॥ १०६ ॥

भर्ता मे शिव एव मे शरणमित्यस्यास्ति को दुर्लभो
न स्त्रीणां पुरुषान्तरान्वयमतिः पापाय सा केवलम् ।

तैनाशाङ्करभर्तृयोगविरतिः धर्मार्थमित्येव मे
न स्यात् सा यमयातनापि सुतरां जन्मान्वयोऽपि ध्रुवम् ॥ १०७ ॥

भूयोऽशांभवभर्तृयोगविरतिः पुण्यैः परं जायते
पुण्यान्यप्यमितानि तावदधुना त्वत्पादसन्दर्शनात् ।
जातान्यत्र न संशयोऽत्र सुकृतक्षेत्रे पवित्रेऽधुना
गोत्रे मे विरतिस्त्रिनेत्रकृपया साक्षी स फालानलः ॥ १०८ ॥

उद्धूल्याङ्गान्यत्र रुद्राक्षमालाः कण्ठे कर्णे बाहुयुग्मे ललाटे ।
नासाभागेऽप्यस्तु किं मौक्तिकेन सीमन्ते वाऽप्यस्तु किं रत्नमालाः ॥ १०९ ॥

अलं कनककङ्कणैरलमपाररत्नस्फुरत्सुवर्णरचिताङ्गदैरलममूल्यकाञ्च्यादिभिः ।
अलं विविधवीटिकारसकुलानुरागैरलं हरस्मरणकारणप्रवणमस्तु चित्तं मम ॥ ११० ॥

अलं विविधमण्डनस्फुरणरम्यहर्म्यस्फुरन्मरन्दरसलोलुपभ्रमरकुन्दशय्यासनैः ।
कुशेषु शयनं वरं हरपदाम्बुजाराधनश्रमप्रभवनिद्रया परमभद्रया मे गतिः ॥ १११ ॥

अलं रण्डागानैरलमखिलचण्डालतरुणीरणत्काञ्चीरङ्गस्थलविपुलनाटयाङ्गणगणैः ।
अलं मारारावैः स्मरहरपदाम्भोजयुगलं मुहुः स्मृत्वा त्यक्ष्ये तनुमिह महादेवकृपया ॥

हारोपहारपरिकल्पितनीरधारामाहारमेत्य कुरुतोदरपूरणाय ।
विश्वेश्वरस्मरणमेव करोमि चित्ते कृत्वा शिवापतिपदाम्बुजमादरेण ॥ ११३ ॥

रतिपतिहितभूतक्रोडया क्रीडयाऽलं रमणिचरणघातैः तत्करावेष्टनैश्च ।
अलमलमनुवेलं कालकालाबलायाः चरणकमलशोभामेव नित्यं स्मरामि ॥ ११४ ॥

गौरीमनोहरपदाम्बुजमादरेण स्मृत्वा तरन्ति खलु पातकपावकाधीन् ।
तस्मादनन्यशरणः शिवपादपद्मं पद्मापतिप्रियमहं शरणं व्रजामि ॥ ११५ ॥

नान्यन्मनोहरमघापहमस्ति लोके गौरीमनोहरपदाम्बुरुहं विहाय ।
तत्केवलं शरणमित्यहमादरेण स्मृत्वा वसामि विपिने शिवमन्दिरेषु ॥ ११६ ॥

संसारदुःखमघकोटिकुलाकुलत्वात् त्याज्यं मनागपि न तेन सुखं कदापि ।
जन्मव्ययापायकरणं परमिन्दुमौलिपादारविन्दभजनं प्रवदन्ति धीराः ॥ ११७ ॥

नारी कदापि न सुखाय यतः स्वतन्त्रा नान्यस्य सेवनपरा परतन्त्रता या ।

सा तावदेकमसुखं तदनन्तरं च दुःखान्यघान्यपि न सा शिवभक्तियुक्ता ॥ ११८ ॥

भर्ता शांभवपुङ्गवो यदि भवेत् तत्सेवया केवलं
भीतिः कालकृता न सा शिवपदाम्भोजार्चकाराधने ।
सा तावन्न कदापि तावदसकृत् संभाविता शांभवं
कालः सेवितुमिच्छतीति स महान् कालान्तकाराधकः ॥ ११९ ॥

कः कालान्तकपूजकः कलिमलप्रध्वंसको बालको-
ऽप्याशास्याधिकपुण्यकर्मजनको न स्यात् तपस्याफलैः ।
तस्यानुस्मरणेन पापविलयस्तत्पादुकाराधनात्
मोक्षश्रीरिति कालकालमहिमा सोऽयं किलात्यद्भुतः ॥ १२० ॥

अहो महापातकराशिकोटितूलानलः शङ्करलिङ्गपूजा ।
सा दुर्लभा भाग्यवशेन लोके तपस्यया स्यात् सुलभा विमुक्त्यै ॥ १२१ ॥

नारीणां खलु गर्भधारणभयं सह्यं न सर्वात्मना तद्दुःखापनयाय केवलमुमाकान्तार्चनं साधनम् ।
तेनानन्दमवाप्नुवन्ति सततं भूतिप्रभाभूषिताः सन्तः सन्ततमन्तकान्तकपदध्यानामृतास्वादनाः ॥

आराध्यं जगतीतले शिवपदाम्भोजं तदभ्यर्चना-
दानन्दाम्बुनिधेः प्रवृद्धिरसकृत् सा मुक्तिरित्यन्तकः ।
तत्पादाम्बुजपूजकः प्रणमति प्रस्तौति सेन्द्रो मुहुः
लक्ष्मीकान्तयुतश्चतुर्मुखयुतोप्यत्यादरादन्वहम् ॥ १२३ ॥

कः कालान्तकलिङ्गपूजनरतो नाराधितो विष्णुना
सेन्द्रेणापि चतुर्मुखेन च यमेनान्येन वा वायुना ।
तत्पादस्मरणेऽपि पापविलयः सद्यो भवत्यन्वहं
कोऽयं शांभवपुङ्गवस्य महिमा लोकोत्तरो मोचकः ॥ १२४ ॥

अहमिह परिहाय मोहजालं शिवपदपूजनमेव सावधानम् ।
धनमिति धनवांछयापि मन्ये धनमिदमक्षयमेव सर्वथाऽपि ॥ १२५ ॥

लोके कः कमलाविलासनिलयं दृष्ट्वापि मोहाश्रितो
न स्यादेव पुनः पुनः स विलयापेक्षैव दुष्टात्मनाम् ।

कस्यापि स्मरवैरिणश्चरणयोर्ध्यानं धनं तत्परं
पुण्यानां फलमित्यवैमि तपसा निःश्रेयसं तेन मे ॥ १२६ ॥

यः कश्चिद्भवतु त्रिलोचनपदाम्भोजार्चकः सादरं
हारत्वं समवाप्य हारसहितो दारैरुदारैः सह ।
संसारानुरतोऽपि तस्य न भयं कालान्तकाराधने
भीतिः कल्पलयेऽपि नेति बहुधा गीर्वाणवाणी श्रुता ॥ १२७ ॥

यस्यास्त्यपर्णारमणार्चनायां भक्तिः स मुक्तो भवतीति मन्ये ।
स चानुरक्तोऽपि विरक्त एव दारेषु हारेषु विहारकाले ॥ १२८ ॥

कमलामलपल्लवे कदाचित् सलिलं तावदलातमेव वह्नौ ।
पतितं समुपैति नाशमम्भः शिवपूजाविरतस्तु नाशमेव ॥ १२९ ॥

मयाऽधुना तावदुमासहायपादारविन्दस्मरणेन कालः ।
नेयः प्रयासोऽपि न तावता मे पीयूषपाने सति कः श्रमोऽपि ॥ १३० ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे सौन्दर्यनिधिराज्ञीसंवादो नाम अष्टादशोऽध्यायः ॥

---

## अथ एकोनविंशोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्गिरमाकर्ण्याप्यपर्णारमणाश्रिताम् । तृप्तिं नावाप स सुधां पीत्वा ग्रीष्मातुरो यथा ॥ १ ॥

कस्त्रस्तः शिवनामसंयुतकथापीयूषपानैर्मुहुः तत्पानातिरतो युवातितरुणीं रम्भामिव द्राक् शिशुः ।
स्तन्यं मेघमिवाङ्कुरः कुलवधूर्भर्तृप्रियं शांभवः शाङ्गं लिङ्गमुमामहेश्वरमिव प्राप्तं पुनर्वाञ्छति ॥

धन्यानां धनमिन्दुशेखरकथापीयूषराशिः परं
तत्सेव्यं सततं तदेव हि सदा संरक्षणीयं मुदा ।
तत् स्वीयाय शिवार्चकाय सततं देयं प्रदत्तं मुहुः
वृद्धिं याति न नाशमेत्यपि कदाप्यक्षय्यरूपं धनम् ॥ ३ ॥

किं प्राज्यैरपि राज्यभोगनिकरैः मत्तेभसङ्घैश्च किं
किं वाजिप्रकरैरपारविभवैः किं वा गवां कोटिभिः ।
सर्वं नश्वरमित्यतः शिवकथापीयूषपानैः परं
मर्त्यस्तावदमर्त्यतामुपगतो नित्यं न तत् स्यात् सुरैः ॥ ४ ॥

अभिनवमिदमौषधं जनानां जननविनाशकमेकमेव लोके ।
कथमपि गिरिशाभिधानरूपं शिव शिव सृष्टमिदं मनोहरं मे ॥ ५ ॥

शिव शिव शिव चातुरी किमेषा जनजननामयभोगनाशनाय ।
शिवपदरचनानुकूलरूपा शिवपदमेतदपूर्वमौषधं हि ॥ ६ ॥

रे रे जनाः पिबत शंकरनामधेयपीयूषरूपमिदमौषधमादरेण ।
तेनैव जन्ममरणादिकरोगभोगसंभावितोऽपि न भविष्यति सर्वदाऽपि ॥ ७ ॥

अहो जनास्तावदतः परं नः सर्वात्मना जन्म जरा मृतिर्वा ।
नास्त्येव सृष्टं शिवनामरूपमभूतपूर्वं परमौषधं हि ॥ ८ ॥

शिवशङ्करनामरूपमेतत् गिरिशेनापि न सृष्टमौषधं चेत् ।
जरया मरणेन पीडिताः स्युः जननेनापि जगत्त्रयान्तरस्थाः ॥ ९ ॥

जन्तुर्वाञ्छति जन्मरोगविलयं तत्कारणेच्छा परं
लोके कस्यचिदेव भूरितपसा पुण्यैरपारैरपि ।
तत् तावद् गिरिशाभिधानमसकृत् संसेवितं भाग्यतः
तज्जन्मापनयं करोति सकृदप्यावर्तनेनापि किम् ॥ १० ॥

शिवाभिधानाभिधमौषधं चेत् पीतं सकृत्सर्वरुजां विनाशम् ।
करोति तत्तुल्यमिदं विचित्रं मेने च सर्वामयनाश एव ॥ ११ ॥

श्रुतमपि शिवनामधेयरूपं परममिहौषधमामयप्रवाहान् ।
परिहरति विचित्रमेवमेतत् किमिति न पीतमनामयाय लोकैः ॥ १२ ॥

संसारामयभेषजं श्रवणमप्यारोग्यहेतुः परं तत्तावद्गिरिशाभिधानमिति मे जिह्वाङ्गणे सर्वदा ।
नृत्यत्यादरपूर्वकं शिवकथापीयूषधारान्वितं तत् किं मे न करिष्यतीति सकलाभीष्टप्रदं तन्मम ॥

एकेनापि सकृत् प्रसङ्गवशतः पीतं तदेवौषधं
शर्वाणीरमणाभिधानममरान् कर्तुं प्रवृत्तं श्रुतम् ।

तद्वंश्यानखिलांस्तदीप्सिततमान् भृत्यानपीत्यद्भुतं
मन्ये शङ्करनामरूपमनघं दिव्यौषधं दुर्लभम् ॥ १४ ॥

निरामयोऽयं धनराशिभिः स्यात् पुत्रैः प्रपौत्रैः कमलाविलासैः ।
व्याप्तः श्रुतेनापि शिवाभिधानदिव्यौषधेनेति मतिः प्रिया मे ॥ १५ ॥

बहुधा बहवोऽपि सेविताः सततं पूर्वभवेषु निर्जराः ।
सुखदत्वविमोहतो मया सह तैर्जन्म जरा मृतिर्मम ॥ १६ ॥

अनुभूतमनेकधा पुरा जननं तैर्मरणं हि दुःसहम् ।
इति तद्विरतं मनोऽधुना शिवपूजाप्रवणं शिवप्रियम् ॥ १७ ॥

अशिवः शिवमिच्छता मया मुहुराराधित एव मोहतः ।
नहि तेन शिवं कदापि शुक्त्या रजतं तद्भ्रम एव केवलं नः ॥ १८ ॥

कामिनीकरविभूषणोद्यतः शुक्तिकामुपगतो यथा तथा ।
देवतान्तरसमर्चको जनः सर्वथा न शिवमेति मूढधीः ॥ १९ ॥

उन्मत्तोन्मदकुम्भिकुम्भदलनान्मुक्ताफलं प्राप्यते
तत्कुम्भीनकुम्भभोगदलनात् नीलादिकं लक्ष्यते ।
खद्योताहननेन केवलमघं संप्राप्यते शं कुतः
शर्वान्यामरपूजनेन परमानन्दः शिवाराधनात् ॥ २० ॥

शिव शिव शिव नामधेयरत्नं कथमिदमद्भुतमद्य सृष्टमस्मै ।
अनवरतमिहास्तु कण्ठभागे कथमिह दृष्टिरिहास्ति दुर्जनानाम् ॥ २१ ॥

जातो जारजजारिणीजठरतो यस्तस्य नातिप्रियः शर्वाणीरमणाभिधानमणयश्चिन्तामणिस्तैरभूत् ।
तैरेवामरभूरुहाः समभवन् गौर्निर्जराणां सुधा स्वर्गश्रीरपि तैरभूदिति मुहुस्ते रक्षणीयाः परम् ॥

शिवनाममणिप्रभावजालं भुवने वेदविदां वरः परो यः ।
सुरसेवितकाशिकानिवासप्रभया वेद स कोऽपि पुण्यरूपः ॥ २३ ॥

संसाराभिरतिं विहाय सततं वीरेश्वराराधनैः
नीतं येन वयोऽप्युपोषणजलाहारैः परं तेन चेत् ।
न ज्ञातः शिवनामदिव्यमहिमा ज्ञेयः स केनापि वा
तज्ज्ञानाय तपः कृतं खलु महद् वीरेशलिङ्गालये ॥ २४ ॥

श्रीकालभैरवविलोकनपूतचित्तो वीरेश्वरार्चनरतो जलधारयापि ।
यस्तेन तावदसकृत् गिरिशाभिधानमाहात्म्यमादरवशात् विदितं विचित्रम् ॥ २५ ॥

किं चित्रं शिवपादपद्मभजनं यस्याभवज्जीवनं तेनापारशिवाभिधानमहिमा पीयूषराशिः परः ।
पीतस्तेन स पीनतामुपगतस्तं वेद विश्वेश्वरः तेनेयं रचना कृता शिवरतानन्दाधिकन्दात्मिका ॥

शिवकथामृतमेव हि जीवनं यदि दिनेऽपि निशास्वपि तज्जनिः ।
विषमिव प्रलयाय भवत्यतः शिवकथामृतमेव सुजीवनम् ॥ २७ ॥

कति कति न वराकाः सन्ति लोकेषु काकाः कति कति पिकघूकाः शङ्करद्वेषिणोऽपि ।
परिहृतनिजधर्मास्तेषु तावन्न भक्तिः शिवचरणसरोजे तावता मे न हानिः ॥ २८ ॥

शिवचरणसरोजराजहंसः खलु मम मानसमीशनामधेयम् ।
विसमिव सुधयाभिषिक्तमेतत् मुहुरनुधावति धीरमादरेण ॥ २९ ॥

अमन्दमन्दारतरुष्वपेक्षा न देवधेनुप्रवरे मणौ वा ।
परन्तु मे सन्ततमन्तकारिनामामृतेनैव किलामृतः स्याम् ॥ ३० ॥

पुरा गन्धर्वनगरे विश्वावसुरिति श्रुतः । गन्धर्वस्तस्य विश्वासः सर्वथा शिवपूजने ॥ ३१ ॥
तेनाहर्निशमीशाननामपीयूषसेवनम् । कृतं तस्य न वार्तासु रतिर्नारीषु सर्वथा ॥ ३२ ॥
स गौरीलिङ्गमभ्यर्च्य हिमवत्कन्धरे पुरा । नन्दिकेश्वरमालोक्य विनयेनाह शांभवम् ॥ ३३ ॥
प्रणतः प्राञ्जलिर्भूत्वा पुष्पैरभ्यर्च्य सादरम् । पादसंवाहनं कृत्वा तद्रजः शिरसा वहन् ॥ ३४ ॥

विश्वावसुः —

नन्दिकेश महाभाग प्रज्ञानघनपूजक । विज्ञानसाधकं किं वा किमानन्दप्रवर्धकम् ॥ ३५ ॥

किं वा मुक्तिप्रदं लोके किं वा [1]सर्वमनामयम् ।
सकृत् स्मृतं वा पीतं वा श्रुतं वा सर्वसिद्धिदम् ॥ ३६ ॥

नन्दिकेशः —

विज्ञानं शिवपूजनेन स यतो विज्ञानदः शङ्करो विज्ञानात्मक एव तेन परमानन्दोऽपि संवर्धते ।
मुक्तिः शङ्करपूजया भवति सा सर्वामयध्वंसने शक्ता सा सकलार्थदाननिपुणा पुण्यैः परं जायते ॥

नश्यन्त्यामयकोटयः खलु महादेवार्चनात् केवलं तन्नाशाय तदेव तावदधुना शक्तं तदेवामृतम् ।
तत्तावन्मम जीवनं जनिजरानाशापहारोद्यतं तत्तावत् सुकृतात्मनां हृदि सदा भात्येव भानुप्रभम् ॥

1 सर्वामयनाशकम् C

सद्यः शिवाराधनभानुनैव मोहान्धकारप्रलयः प्रजातः ।
स जातु नोत्तिष्ठति सर्वथाऽपि नष्टः कथं वा पुनरुत्थितः स्यात् ॥ ३९ ॥

मोहं नाशयतीति नाद्भुतमिदं संसाररोगक्षयं
शर्वाराधनतस्तथा सति मुहुः संसारबीजक्षयः ।
तत् कर्तुं क्षणमेव पर्वतलये शक्तः स कालानलः
किं तत्पर्वतशुष्कपर्णविलये शक्तो न सर्वात्मना ॥ ४० ॥

विन्ध्याकारमहाघकोटिविलयः सद्यः शिवाराधनात्
नूनं जायत इत्यपारमहिमा कालान्तकः संस्मृतः ।
तावत् पापकुलक्षयाय स परं शक्तस्ततः किं तया
किं विश्वेश्वरपूजयापि फलमित्येवाभिमानो मम ॥ ४१ ॥

येनानामयतां प्रयाति मनुजः तद्दुर्लभं देहिनां
पुण्याभावविनिश्चयेन सुकृताम्भोधिप्रवृद्ध्या परम् ।
लिङ्गाराधनधीर्भवत्यपि पुनः सा वर्धते सर्वथा
तत्पूजानिरतात्मनां सुकृतिनां सर्वात्मना सर्वथा ॥ ४२ ॥

श्रीरुद्रो भिषजां भिषक्तम इति ख्यातः श्रुतः संस्मृतः
संसारामयनाशनाय सहसा शक्तः स जन्मादिकम् ।
दुःखं नाशयति स्मृतोऽपि सुतरां दृष्टः स कष्टापहः
कस्तेनापि समः सुरेषु स सुराराध्यः सुराधीश्वरः ॥ ४३ ॥

सुराधीश्वराय प्रणामः कृतश्चेत् महेशाय संसारदुःखापहारः ।
भवत्येव [1] सद्यस्ततस्तावदेव प्रभावैर्भवक्लेशलेशावकाशः ॥ ४४ ॥

प्रणामोद्यमेनापि संसारनाशः प्रणामेन दुःखप्रणाशः कथं वा ।
अतः शङ्कराय प्रणामो विधेयः स वेदैकबोध्यः स विज्ञानरूपः ॥ ४५ ॥

सुरासुरवरोरगप्रवरकिन्नराराधितः प्रमापरमुमापतिप्रणतिमाहुरस्त्यास्तिकाः ।
इयं प्रमितिरम्बिकारमणपादपद्मार्चनैः भविष्यति न तैर्विना भवति सर्वथा दुर्लभा ॥ ४६ ॥

येनैव तत्प्रभाधारा शङ्कराय समर्पिता । तस्यैव दुःखविलयः सर्वथा भवति ध्रुवम् ॥ ४७ ॥

---

1 सद्यः कुतस्तावदेतत् C

इदं दिव्यौषधं मन्ये संसारामयनाशनम्। इदं दिव्यौषधं लोके दुर्लभं दुष्टवर्त्मनाम् ॥ ४८ ॥
पुरा कैलासशिखरे सुखासीनं जगत्प्रभुम्। शंभुं प्रणम्य गिरिजा प्राह भक्त्या प्रणम्य तम् ॥

गौरी —

हर संसारमग्नानां प्राणिनां दुष्टचेतसाम्। संसारबन्धमुक्तिः स्यात् कथं वा तद्वदाधुना ॥ ५० ॥
गर्भवासे महादुःखं तथैव जननक्षणे। जननानन्तरं दुःखं क्षुत्पिपासादिना मुहुः ॥ ५१ ॥
मूत्रेण च पुरीषेण व्याकुला तनुरन्वहम्। कटुतिक्तकषायाम्लरसौषधनिषेवणात् ॥ ५२ ॥
उष्णोदकप्रदानेन शरीरस्यातिवेदना। अङ्गारशकटापारतेजसाऽप्यतिवेदना ॥ ५३ ॥
जरादिव्याधियोगेन पीडा खलु शरीरिणाम्। बाल्ये दुःखं बहुतरं कौमारेऽपि तथा प्रभो ॥५४॥
यौवने विषयालाभात् लब्धस्यापगमादपि। दुःखानुभव एवेति जरायामपि तत् समम् ॥ ५५ ॥
किञ्चाधिकं जरायां तु दुःखं तत्सह्यमेव न। जरातुरस्य वचनं विषेण सममुच्यते ॥ ५६ ॥
न शृणोति जराक्रान्तो न पश्यति विशेषतः। जायापि जरया युक्तं तरुणी त्यजति ध्रुवम् ॥
विषयस्यार्जने दुःखमार्जितस्यापि रक्षणे। रक्षितस्य व्यये दुःखं एवं दुःखतरं धनम् ॥ ५८ ॥
कलत्रपुत्रपौत्राद्यैः धनमाकांक्षितं मुहुः। न च तत्पोषणाकांक्षा शुश्रूषा तस्य दूरतः ॥ ५९ ॥
कफादिव्याधिसंक्रान्ते पुरुषे म्रियतामयम्। जीवतापि न मे कृत्यं मृतेन सुतरामपि ॥ ६० ॥
ततो मरणमेव स्यात् इत्यास्यैरुच्यते खलु। न रम्यमन्नं वसनं भूषणं वा न जीवता ॥ ६१ ॥
दत्तमेतेन मरणे जीवनेऽपि समा स्थितिः। यावता मरणं तावत् तिष्ठन्ति परिवृत्य तम् ॥ ६२ ॥
पश्चात् स्वकं स्वकं स्थानं प्राप्नुवन्ति विशेषतः। तस्यैव श्लेष्मणा वेश्म नष्टं दुर्गन्धदूषितम् ॥
तत्पुरीषेण तन्नष्टं तन्मूत्रेणापि केवलम्। तत्कर्णे कटिदेशे वा करशाखास्वपि स्थितम् ॥ ६४ ॥
हरन्ति माषमात्रं वा सुवर्णं [1] मदपाः खलु। यद् दुकूलादिकं तस्य तदप्यपहरन्ति ते ॥ ६५ ॥
वाहनं शयनीयं च जलपात्रादिकं तथा। मृतोऽयं त्वरया नेयः कार्यमस्तीति सत्वरम् ॥ ६६ ॥
नयन्ति तं पातयन्ति किमनेनेति दुर्जनाः। जीवता दुःखमेतेन दत्तं भर्त्सितमित्यपि ॥ ६७ ॥
वदन्त्यपि कलौ केचित् शपन्त्यपि मुहुर्मुहुः। परलोकः कथं तस्य स्यादित्यपि वदन्ति न ॥ ६८ ॥
पापार्जितानि वित्तानि गृह्णाति स्वस्वभागतः। परन्तु तस्य पापस्य निष्कृतिर्नैव चिन्त्यते ॥ ६९ ॥
तदङ्गे भस्मलेशोऽपि पुत्रेणापि न दीयते। भार्या चेत् तरुणी तस्य भोगाभावविचिन्तनैः ॥ ७० ॥

---

1 सदयाः खलु C

अपहृत्य धनं सर्वं कालं नयति दुर्मतिः । बालकश्चेन्मृतो दैवात् संगृहीत्वा विमोहतः ॥ ७१ ॥
नयन्ति कालं मोहेन शिरस्ताडनरोदनैः । व्याधिग्रस्ते बालके तु तन्मूत्रमलदूषिताः ॥ ७२ ॥
न शिवाचारवार्तां वा कुर्वन्त्यशनमेव वा । वैद्याभासाय सर्वस्वं प्रयच्छन्त्यपि मोहतः ॥ ७३ ॥
एतद्रोगं वारयेति वारं वारं विशेषतः । स गृहीत्वा धनं सर्वं औषधाभासदानतः ॥ ७४ ॥
प्रयाति पश्चान्मरणे धनार्थमतिदुःखितः । केचिन्मृतं सुतं स्मृत्वा प्रत्यहं दिनयापनम् ॥ ७५ ॥
कृत्वा प्रयान्ति मरणं दुःखेनैव ततः परम् । एवं बहुविधा लोकाः सर्वे जन्मजराभयैः ॥ ७६ ॥
मरणेनापि संप्राप्य दुःखं दुःखसमाकुलाः ॥ ७७ ॥

संसारामयनाशकं वद महादेवाधुना सादरं
किञ्चित्तावदिहौषधं स्मृतमपि प्रायो रुजां नाशकम् ।
जन्मादिक्षयकारणं करुणया कालान्तकाशु प्रभो
शम्भो यत्सुगमं तदेव बहुधा निश्चित्य निर्वाणदम् ॥ ७८ ॥

मन्दान्तःकरणाः प्रमाणविषयज्ञानैर्विहीनाः परं
भ्रान्ता एव चरन्ति सन्ततमुमाकान्तातितान्ताः परम् ।
तेषां का गतिरिन्दुशेखर कृपापूरस्य ते सादरं
तन्मुक्तिप्रदमेव वाक्यमधुना श्रोष्यामि शुश्रूषया ॥ ७९ ॥

इति तद्वचनं श्रुत्वा शङ्करः करुणाकरः । सारभूतां गिरं प्राह महागौरीं मनोहराम् ॥ ८० ॥

शङ्करः —

शृणु गौरि वरारोहे सुधारूपां गिरं मम । विचार्य तावदधुना बहुधा तदिहोच्यते ॥ ८१ ॥
औषधानि विचित्राणि सन्ति तद्बोधनं परम् । सुलभान्यपि तान्येव दुर्लभान्यपि शैलजे ॥ ८२ ॥
औषधं गुप्तमेवास्ति महारोगविनाशकम् । तद्गोपनं कृतं यत्तत् कलौ तावद्विशेषतः ॥ ८३ ॥
कलौ कलुषचित्तानां दिव्यौषधविचारणा । न भवत्येव सहसा सा पुण्यानां फलं यतः ॥ ८४ ॥
औषधेष्वपि विश्वासः तावदादौ भवेद्यदि । तत्सेवनेनामयस्य विनाशोऽपि प्रजायते ॥ ८५ ॥
सर्वेषामपि दुःखानां नाशो दिव्यौषधैः श्रुतः । भवत्यद्भुतमेतावत् ज्ञायते न कलौ जनैः ॥८६॥
यस्तु रोगो महांस्तस्याप्यौषधं महदेव तत् । दुर्लभं सुलभं च स्यात् केवलं मदनुग्रहात् ॥ ८७ ॥
तादृशेऽप्यौषधे तावन्न विश्वासो यथा तथा । मोहः संपादितो गौरि सर्वथापि दुरात्मनाम् ॥
शिवाचारविहीनानां अशिवं भवति प्रिये । तस्याशिवस्य नाशस्तु दिव्यौषधमपेक्षते ॥ ८९ ॥

अशिवाचारनिरतैरौषधं तन्न लभ्यते। अतः स्यादशिवं तेषां सर्वथा प्रतिजन्मनि ॥ ९० ॥

अशिवाराधनपरैरशिवं प्राप्यते ततः। शिवं तेषां कथं भावि दुर्जनानां वदाधुना ॥ ९१ ॥

संसाररोगनाशाय यदस्त्यौषधमुत्तमम्। तत्राशिवाराधकानां विश्वासो नोपजायते ॥ ९२ ॥

अतः सर्वामयच्छेदः सकृदेव कथं शिवे। किं च तेनैव सर्वेषां मुक्तिः स्यादेकदा खलु ॥ ९३ ॥

येन पापान्यपाराणि कृतान्येन पुनः पुनः। तस्य तावन्न विश्वासः तस्मिन् दिव्यौषधे शिवे ॥

देयं विश्वासमुत्पाद्य दिव्यौषधमनुत्तमम्। इति तावन्न वक्तव्यं स स्वतो नोपजायते ॥ ९५ ॥

न पञ्चगव्येन पवित्रगात्रः श्वा रासभो वाऽप्यथ सूकरो वा।
यथा तथा वा शिवपूजकोऽपि विश्वासजन्मस्थलमेव नाद्धा ॥ ९६ ॥

निम्बे क्षीरफलोदयो यदि भवेदिष्ट्वा (ष्ट्यां) सुरत्नोदयः
तर्हि स्यादशिवार्चकस्य गिरिजे दिव्यौषधासेवने।
विश्वासोऽपि भविष्यतीति बहवो जानन्ति किं नेतरान्
जातो मत्तगजो भविष्यति महान् पञ्चाननो वा शिवे ॥ ९७ ॥

वक्त्रं पुंसां (वक्रं पुच्छं) सारमेयस्य तावत् नैवावक्रं बन्धनेनापि नूनम्।
तद्वन्नैवाशाङ्कराचारचित्ते विश्वासः स्यात् शङ्कराचारमार्गे। ९८ ॥

अहो दुष्टं कष्टं न भवति शिवाचारनिरते तमाचारं हित्वा त्वशिवभजने यस्तु निरतः।
स कुम्भीपाकेषु स्वजनसहितस्तिष्ठतु सदा जनिं मृत्युं प्राप्याप्यनवरतमेवागतनये ॥ ९९ ॥

अशाङ्करजनाश्रितं नरकमन्दिरं सर्वदा तदेव यमचिन्तितं निलयमीश्वरद्रोहिणाम्।
अशैवजनमन्दिरं नरकमाहुरत्यास्तिकाः कदाचिदपि ते शिवे नरकतो न निर्यान्त्यपि ॥ १०० ॥

पुनः पुनरनेकधा शुनकतामवाप्यामयैः प्रखिन्नहृदयाः परं नरकमेव यान्त्यन्वहम्।
पुनः पुनरुमापतिस्मरणवर्जिता दुःखिताः सदापि मनुजाः शिवे नरकसंयुताः प्रायशः ॥ १०१ ॥

प्रायः स्यादशिवार्चनेन गिरिजे पापं ततस्तत्फलं
कुम्भीपाकनिवेशनं पुनरपि श्वाजन्म जन्मान्तरे।
भूयो रासभतामुपेत्य मलभुक् स्यात् सूकरो वृश्चिकः
चण्डालोऽपि ततः प्रयाति नरकं पश्चात् पुनः सूकरः ॥ १०२ ॥

अशैवजननी सदा नरकमेव याति ध्रुवं सुतैः सह पुनः पुनर्नरकमेव संप्राप्य सा।
न जातु सुखलेशमप्यनुभवत्यतो दुःसहा व्यथा भवति सर्वथा शिवपराङ्मुखानां शिवे ॥

धिग् धिग् धिग् धिगशैवजन्म धिगिदं धिक् शङ्करद्वेषिणां
वंशस्तत्कुलजाननानि सततं विष्ठानुलिप्तान्यपि ।
तिष्ठन्त्येव पुरीषकुण्डकुजलव्याप्तोरुकीटाकुला-
न्याकल्पं व्यथया गिरीन्द्रतनये तेषां कथं निर्गतिः ॥ १०४ ॥

अशैवो महावह्निकुल्यासु बद्धः महावह्निशस्त्राभिघातप्रतप्तः ।
पुनर्भिण्डिपालैः प्रतप्तः प्रतप्तः पुनर्वह्निकुण्डेषु तिष्ठत्यवश्यम् ॥ १०५ ॥

अशैवं निरीक्ष्यैव ते कालदूताः प्रबध्वैव पाशैर्महावह्नितप्तैः ।
ज्वलद्वह्निदण्डैर्मुहुस्ताडयन्तो नयन्त्येव कालान्तिकं निष्कलङ्काः ॥ १०६ ॥

दृष्ट्वैव तादृशं कालः तदा शांभवमित्यपि । मत्वा क्रुद्धो भवत्येव मुञ्चन् वह्निं मुहुर्मुहुः ॥ १०७ ॥

रे रे दुराचार शिवान्यपूजा कथं कृता दुर्भग इत्यपारैः ।
कशाग्रघातैरदयेन हत्वा प्रपातयन्त्येव महाग्निकुण्डे ॥ १०८ ॥

प्रतप्तमानीय तमग्निकुण्डात् अशांभवाराधकहस्तमग्नौ ।
निक्षिप्य दंशेन निकृत्य मांसं तदानने प्रक्षिपति प्रकोपात् ॥ १०९ ॥

रेरे दुराचार शिवेतरांघ्रिप्रणामदुष्टं धिगिदं शिरस्ते ।
इत्युच्चरन्नेव स वह्निशस्त्रैः छिनत्ति तन्मस्तकमस्थिभागम् ॥ ११० ॥

रेरे दुराचार किमन्यनाम स्मृतं कथं विस्मृतमीशनाम ।
इति प्रदग्ध्वा हृदयं तदीयं पुनर्महाग्नौ क्षिपति प्रकोपात् ॥ १११ ॥

पादौ न यातौ शिवयात्रयापि पापार्जनोपायतयापि दुष्टे ।
इत्युच्चरन्नेव छिनत्ति तस्य पादद्वयं लेशतयैव वह्नौ ॥ ११२ ॥

रेरे दुराचार तवास्य मध्यं हारोपहारेण न पूतमेव ।
इत्युच्चरन्नेव तदास्यमध्यं विष्ठाजलैः पूरयति प्रकोपात् ॥ ११३ ॥

रेरे दुराचार न लोचनाभ्यां लिङ्गं सुदृष्टं कमलार्चितं वा ।
इत्युच्चरन्नग्निकणैः प्रदग्धं करोति तन्नेत्रयुगं प्रकोपात् ॥ ११४ ॥

रेरे शङ्कर शङ्करार्चनकथापीयूषधारा श्रुता नत्वापीति विधाय कर्णकुहरे तप्तायसांभः परम् ॥
वह्नौ पातयति प्रकोपदहनज्वालाकुलव्याकुलान् कुर्वन्नेव यमः पुनः पुनरुमे धावत्यशैवान् प्रति ॥

अशैवकुलपावको जयति काल एवाम्बिके स तावदशिवार्चकाननविलोकनेनानलैः ।
प्रपूरयति तन्मुखं मुहुरपारवह्विस्फुरत्स्फुलिङ्गनिकराकरज्वलनजालजालैर्भृशम् ॥ ११६ ॥

अमोघमघमन्तको वदति कालकालेतरप्रणामभजनादिकं सकलवेदधर्मप्रभुः ।
अतः कथमुमे सकृत् सकलदुःखनाशोद्यमः शिवेतरसुरार्चकप्रलयकालकालानले ॥ ११७ ॥

कः कालानलदावघोरदहनज्वालाकुलव्याकुलो
न स्याद् गौरि शिवेतरार्चनपरो लिङ्गार्चनानादरः ।
व्यक्तोद्धूलनफालभस्मविलसद्रुद्राक्षमालस्ततो
मत्पूजानिरतः प्रयाति परमं मामेवमानन्ददम् ॥ ११८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे अशैवयमयातनावर्णनं नाम एकोनविंशोऽध्यायः ॥

---

## अथ विंशोऽध्यायः ।

—:x:—

नन्दिकेशः —

इत्याकर्ण्य शिवा शिवोक्तवचनं नत्वा मुहुः शङ्करं
हृष्टा स्मेरवराननातिविनता स्तुत्वा मुहुः सादरम् ।
प्राहानन्दवचः प्रपञ्चचतुरा धृत्वा करे षण्मुखं
ढुण्ढीशं च चतुर्मुखादिविनतं स्तन्यं पिबन्तं मुदा ॥ १ ॥

स्वामिन् शङ्कर शं कुरु प्रतिभवे भक्ताय भक्तः कलौ
तावद्दुर्लभ एव पुण्यगिरिभिर्भक्तिप्रवृद्धिर्भवेत् ।
भाग्येनेति विचारितं मुहुरतो भाग्यस्वरूपाय ते
भक्तिर्भाववराय [1]भावविभवव्यापारसारैः परम् ॥ २ ॥

स्वामिन्मय्यनुराग एव सततं तस्य च्युतिर्मास्तु मे
मत्प्रीत्यर्थमिदं महौषधमिति ख्यातं किमस्ति प्रभो ।
तन्मह्यं वद सादरं करुणया तच्चित्रमत्यद्भुतं
न ज्ञातं विधिनापि वेदनिकरैरप्यन्ततः सन्ततम् ॥ ३ ॥

---

1 विषय C

यस्यौषधस्य श्रवणात् स्मृतेर्वा सर्वामयध्वंस इति प्रसिद्धिः ।
तदौषधं तावदुमासहाय मह्यं वदाद्यादरसाधनेन ॥ ४ ॥

श्रुतानि कुत्रापि किलौषधानि न रोगनाशाय भवन्ति शंभो ।
तदेतदत्यद्भुतमित्यवैमि प्रलोभनार्थं न तदुक्तमेव ॥ ५ ॥

वेदास्तावदुमासहायवचनान्यन्यानि शास्त्राण्यपि
व्यक्तान्येव न चित्रमत्र भगवन् विद्यापतित्वं यतः ।
वाक्यं ते मम वेद एव सततं विश्वास एवास्ति मे
शङ्काशूकविवर्जितानि वचनान्यन्तादिशून्यान्यपि ॥ ६ ॥

नित्यं त्वां किल केचिदाहुरधुना वेदेषु तेषां कथं
नित्यत्वं परमाणुतुल्यमसकृत् जन्म श्रुतं वेदतः ।
छन्दांसीति तथा च नित्यमतिरप्याप्तोक्तवाक्यत्वतो
दूरे तावदतः परं खलु मतो नित्यप्रवाहादरात् ॥ ७ ॥

प्रवाहनित्यत्वमपेक्ष्य वेदे नित्यत्वमुक्तं शिव तेन तस्मिन् ।
नित्यत्ववार्तापि भविष्यतीति सेयं त्वदुक्तिष्वनुभूयते च ॥ ८ ॥

ईशानः सर्वविद्यानामिति वेदेन निश्चितम् । विद्याधीश्वरता शम्भो मिता त्वयि महेश्वर ॥ ९ ॥

अतस्त्वदुक्तं सकलं प्रमाणं अभ्रान्तवाक्यत्वविशेषणेन ।
ज्ञातं प्रमाणं तदिदं प्रमाणं श्रेष्ठप्रमाणेषु विचित्रमेव ॥ १० ॥

अलौकिकार्थानवबोधकानां प्रामाण्यमात्रं क्वचिदानृतं च ।
अलौकिकार्थावगमो विधेः स्यात् स वेद एवेति विधेर्मतोऽपि ॥ ११ ॥

विधिरपि न विधीनां वेद तत्वं विधिज्ञः त्वमिति तव विधीनामन्वयज्ञानमस्ति ।
विधिजननसमर्थस्त्वं ततस्तं प्रमाणं वदति विधिविशेषज्ञानबोधेन कोऽपि ॥ १२ ॥

अतो महादेववचः प्रमाणं तदेव वेदोऽपि तदेव शास्त्रम् ।
विश्वासबीजं च तदेव शंभो न तत्प्रविश्वासविपर्ययो मे ॥ १३ ॥

विद्यानामधिपं समस्तजगतां कर्तारमित्यादरात्
भर्तारं सुखसम्पदामपि सदा दातारमारात् परम् ।

मत्वा त्वां शरणं गताः स्म भगवन् फालेक्षणानुक्षणं
प्रत्यक्षं भगवन्तमेव शरणं प्राप्ताः कृतार्थाः परम् ॥ १४ ॥

यत्पादाम्बुजपूजया हरिरभूदर्च्यो यदंघ्र्यर्चना-
दर्च्या सा कमला विधिप्रभृतयोऽप्यर्च्या यदभ्यर्चनात् ।
तं कामान्तकमन्तकान्तकमुमाकान्तं मुहुः सन्ततं
सन्तः स्वान्तसरोजराजचरणांभोजं भजन्त्यादरात् ॥ १५ ॥

वाणीं तां गिरिराजराजतनयावक्त्रांबुजान्निर्गतां पीयूषार्णवपूरपूरितमहाकल्लोलजालोज्वलाम् ।
श्रुत्वा स्नेहपुरस्सरं गिरिसुताहस्तं स्पृशन्नादरात् सुस्मेराननकान्तिदूरकलिकामाहाम्बिकां शङ्करः ॥

शङ्करः —

यद्गोपनार्हं तदुमे कदापि नूनं न वक्तव्यमिति स्मरामि ।
गोप्यत्वमप्यस्ति विशेषतस्तु सङ्गोपनीयेषु न संशयोऽत्र ॥ १७ ॥

यद्यत् तावदुमे भविष्यति मया सङ्गोपनीयं धनं
तत्सर्वं विनिवेदनार्हमिति ते बुद्धिः कथं जायते ।
नारीणामपि गोपनार्हमतिरप्याच्छादनीया ततो
यद्वस्तु प्रकटं तदेव बहुधा सन्दर्शनार्हं शिवे ॥ १८ ॥

सङ्गोपितं वस्तु खलु प्रसिद्धं करोति नारी परमादरेण ।
पृष्ट्वा प्रविष्टस्य गृहे विशेषात् प्रलोभिता लोभयता यतः सा ॥ १९ ॥

सा गौरी गरलाकारां श्रुत्वा हरगिरं पराम् । उवाचोद्विग्नहृदया लग्ना भुग्नापि तत्पदे ॥ २० ॥

गौरी —

अविश्वासबीजं मयि श्रीमहेश त्वया क्वापि दृष्टं न सर्वात्मनापि ।
मया गोपनार्हं प्रसिद्धं कृतं किं महार्हेषु वस्तुष्वपारेषु केषु ॥ २१ ॥

नारीसामान्यबुद्ध्या तव यदि न दया मय्युमाकान्त सा ते
कत्या नारीमतिर्वा कथमनघमते मय्यपि ज्ञानरूपाम् ।
वेदास्तावद्वदन्तीत्यपि विविधजगज्जालनिर्माणहेतुं
मामाहुर्वेदवादाः कतिचन तपसा पूतचित्तास्तु [1] शुद्धाः ॥ २२ ॥

---

1 सिद्धाः C

मामाराध्यामादिविद्यां वदन्तः मुक्तास्तावत् त्वत्प्रसादेन शम्भो ।
तस्मादार्या मां विदित्वापि भार्या यद्यद्रस्यं तद्रहस्यं वदाशु ॥ २३ ॥

यद्यद्रहस्यं रहसि स्वभावात् तत्तत्प्रकाशार्हमुमासहाय ।
कलत्रवर्गस्य रहस्यवार्ता ततः किमन्यद्वद मे रहस्यम् ॥ २४ ॥

यद्गोपनीयं च रहस्यमासीत् तदेव तावद्रहसि प्रसिद्धम् ।
भर्तुः कलत्रस्य च तत्कलत्रं रहस्यबोधेन विना कथं वा ॥ २५ ॥

ददाति गृह्णाति च वस्तु रम्यं सङ्गोपनीयं च ददात्यवश्यम् ।
पृच्छत्ययं भोजयते च भुङ्क्ते मित्रत्वमेतैः खलु निश्चितं च ॥ २६ ॥

मयि चेदकृपा तवाधुना मम तावद्विरतिर्भवेत् त्वयि ।
अनपायरतिर्ममास्त्वतः करुणा मय्यनपायिनी तवास्तु ॥ २७ ॥

त्वया कथं वा निधयोऽपि दत्ताः प्रसिद्धरूपाश्च न ते यतस्ते ।
सङ्गोपनार्हं खलु रत्नजातं दत्तं पुरा मह्यममूल्यमेव ॥ २८ ॥

मणीनां न प्रदत्तानां गणना न गणाधिप । अमूल्यानि दुकूलानि दत्तानि विविधानि मे ॥ २९ ॥

अपाररत्नाभरणानि दत्तान्यथैव तेषान्तु न मूल्यमस्ति ।
शय्यापि दत्ता तव चन्द्रमौले त्वया सदा मह्यसनामयेन ॥ ३० ॥

अङ्कं दत्तं निष्कलङ्कं त्वया मे शङ्कातङ्काशून्यमत्र स्थितिर्मे ।
देहस्यार्धं दत्तमर्धेन्दुमौले दाता को वा त्वत्समो भूतलेऽपि ॥ ३१ ॥

कलङ्की न मौलौ शशाङ्को धृतः किं सदर्पोऽपि सर्पेश्वरः कण्ठभागे ।
विषं कालकूटाख्यमप्यस्ति कण्ठे ततो नीलकण्ठत्वबुद्धिस्त्वयीश ॥ ३२ ॥

यद्यप्यस्ति महापराधसहिता का तावता मे भयं
त्वत्पादाम्बुजरेणुभिः सह मया स्थेयं पदे ते प्रभो ।
शंभो मय्यनपायिनी तव दया स्यात् तावता का क्षतिः
मेघोऽप्यूषरसागरादिषु समां वृष्टिं करोत्यम्भसा ॥ ३३ ॥

अस्तु प्रस्तुतवस्तुवर्णनमुमाकान्ताधुना तद्यदि श्रोतव्यं परमौषधं जनिजरामृत्युव्ययायाधुना ।
तर्हि स्यादमृतत्वमेव भयधीर्नाशं प्रयात्यन्वहं तत्पानात् पृथुकौ च शोकरहितौ स्यातामुमाकान्त मे ॥

श्रीशङ्करः —

शिवपदमिदमौषधं भवानि त्रिदशवरैर्मुनिभिश्च सिद्धसङ्घैः ।
अनवरतमुपास्यमाधिमात्रव्यपनयनाय विनिर्मितं मयापि ॥ ३५ ॥

इदं शिवपदं शिवे शिवदमित्यवैमि प्रिये प्रियं मम शिवव्रते त्वयि यथाऽनुरागो मम ।
अनुक्षणमुमे तथा शिवपदेन तद्यत् परं तदेव पदमात्मनः परमितोऽपि किं वा भवेत् ॥ ३६ ॥

शिवनामसुधाशनोऽनिशं यः स तु मृत्युं जयतीत्यनामयस्य ।
इदमेकमनामयत्वहेतुः तदिदं मे परमं रहस्यभूतम् ॥ ३७ ॥

पुरा विन्ध्यगिरिप्रान्ते कश्चित् ब्राह्मणवेषतः । चचार द्विजगेहेषु शूद्र एव स्वभावतः ॥ ३८ ॥
तेन पापान्यपाराणि कृतानि गिरिकन्यके । तत्पापगणनायां तु न शक्तः स चतुर्मुखः ॥ ३९ ॥
पापेषु क्रियमाणेषु तेन तद्गणना परम् । अशक्या सर्वथेत्याह चित्रगुप्तो यमोऽपि सः ॥ ४० ॥
स मार्गे ब्राह्मणान् रुध्वा वञ्चयित्वा स्ववेषतः । तद्धनं समुपादाय सुरापानरतोऽप्यभूत् ॥ ४१ ॥
जननीगमनेनापि तेन नीतं वयः खलु । तस्यामुत्पादिताः पुत्राः तेन पापात्मना शिवे ॥ ४२ ॥
कन्यकाश्च समुत्पन्नाः तस्यामेवातिसुन्दरीः (?) । तासु रेमे सुदुर्वृत्तः ताभ्यो जाताश्च कन्यकाः ॥
गोमांसभक्षणादीनि कुर्वन्नेव स्थितः सदा । तस्य भक्ष्यमभून्निन्द्यं सर्वदा लशुनादिकम् ॥ ४४ ॥
न स्नानं पर्वकालेषु कृतं तेन दुरात्मना । शिवक्षेत्राटनं तेन न कृतं सर्वथा खलु ॥ ४५ ॥
शिवक्षेत्राटनोद्युक्तैर्न कृतं परिभाषणम् । न श्रुतं शिवनामापि कदापि दुरितापहम् ॥ ४६ ॥
न दृष्टः शिवयोगी वा शिवध्यानपरायणः । भस्मोद्धूलितसर्वाङ्गो रुद्राक्षाभरणप्रियः ॥ ४७ ॥
शिवलिङ्गार्चकः क्वापि दृष्टस्तेन न सर्वथा । न बिल्वतरुमूलानि तेन दृष्टानि सर्वथा ॥ ४८ ॥
न बिल्वाय जलं दत्तं रक्षणं वा कृतं च न । शांभवद्रोहनिरतः शिवमार्गनिरोधकः ॥ ४९ ॥
न भस्मव्रातसंवीतो भस्मानङ्कित एव सः । न दृष्टो भस्मदेशोऽपि तेन दुष्टात्मना शिवे ॥ ५० ॥

रुद्राक्षमालानिलवाललीला विलासहेतुश्च न जात एव ।
रुद्राक्षशब्दोऽपि न तेन तावत् प्रीत्या श्रुतः पापविनाशदक्षः ॥ ५१ ॥

पापानि सर्वाणि लयं प्रयान्ति रुद्राक्षशब्दश्रवणेन गौरि ।
स तादृशो न श्रुत एव शब्दः तेनातिपापव्रततत्परेण ॥ ५२ ॥

प्रदोषकालीनशिवार्चनं वा दृष्टं न तेनाघविनाशनाय ।

शिवार्चकस्यापि मुखं न दृष्टं प्रदोषकालेषु रतिप्रियेण ॥ ५३ ॥

वाराङ्गनाङ्गानि विलोक्य सायं पुनः पुनस्तेन विलोकनेन ।
विनीतमायुः पुरुषाधमेन तेनैव तावद्रजनीमुखेषु ॥ ५४ ॥

अल्पायुरप्यनल्पानि कृत्वा पापानि भूरिशः । नित्यं स्वदारमात्रस्य करोति परिपूरणम् ॥ ५५ ॥

तस्यासीद्वनिता कापि ब्राह्मणी छिन्ननासिका । व्यभिचारेण विच्छिन्ना नासा तस्याः परं शिवे ॥

व्यभिचारव्रणगणव्याकीर्णा जारजान्विता । तस्यामनुरतः सोऽपि कुत्सितस्यापि कुत्सितः ॥

तथा संवसतस्तस्य मृत्युकालः समागतः । तदा तद्वनिता दृष्ट्वा तं रुरोद तदोच्चकैः ॥ ५८ ॥

व्रणव्रातसमाक्रान्ततनुरालिङ्गिता मया । अतः परं न कोऽप्यस्ति जारस्तुल्यस्त्वया मम ॥ ५९ ॥

व्रणगन्धं समाघ्राय जारो यात्यतिदूरतः । त्वया तु न गतं क्वापि जारस्तुल्यस्त्वया न मे ॥६०॥

इत्यादिभिर्बहुविधैः प्रलापैः सापि दुःखिता । मरणावसरं प्राप्ता तेनैव पतिना सह ॥ ६१ ॥

तदानीं शिवाचारपूतोऽपि भूत्वा त्रिपुण्ड्रेण रुद्राक्षमालासमेतः ।
चरन्नाह कन्यां स्वकीयां स मार्गे शिवे पश्य मार्गं प्रयाहीति दैवात् ॥ ६२ ॥

स शब्दः श्रुतस्तेन वाताभिधानात् तयापि श्रुतः पापतूलाग्निभूतः ।
तदा तं विनेतुं प्रमत्ताः प्रवृत्ताः महाकालदूताः परं दण्डहस्ताः ॥ ६३ ॥

तदा तेन दुर्गन्धवातेन सर्वे निवृत्ताः परं मृत्युदूताः समस्ताः ।
ततस्तैर्विचारः कृतस्तौ कथं वा विनेयौ यमेनापि दण्डाभिघातैः ॥ ६४ ॥

दूतत्वमेतदुपकारकमेव जातं दुर्गन्धदुष्टतनुदूरविलोकनेन ।
दुर्गन्धदुःखमपि सह्यमिदं कथं वा पापिष्ठदेहनयनेन कुतः सुखं नः ॥ ६५ ॥

एतादृशाः कति न सन्ति महाघरूपाः तेषां यमालयविवेशनतोऽपि पापम् ।
नाशं न यास्यति महाघलयाय का वा स्याद्यात नापि शमनेन न सापि सृष्टा ॥ ६६ ॥

यमोऽपि क्रोधार्तः क्षिपति बहुधा वह्निनिलये महाघोरे सर्पव्यतिकरमहावृश्चिककुले ।
पुनर्वह्निज्वालास्वपि नरकभेदेषु निरये पुनः कुम्भीपाकेऽप्यहह न च तेनाप्यघलयः ॥

शिवनामसुधा कथं न पीता सुलभा सा न दुरक्षरावृताऽपि ।
नवनीतनिभाक्षरावृता सा दुरदृष्टेन कदापि नैव पीता ॥ ६८ ॥

सृष्टं नाम शिवस्वरूपकमिदं पापाटवीनां दवः
पापाम्भोनिधिवाडवोऽप्यघगिरिप्रध्वंसनायाशनिः ।
यौ वर्णौ शिव इत्यपारविभवौ तौ संश्रुतौ वा सकृत्
सर्वापत्कुलवारणाय परमानन्दाय मुक्त्यै परम् ॥ ६९ ॥

शिवनामसुधापाने प्रीतिः स्यात् कस्यचिद्भुवि । अपारपुण्यपुञ्जस्य सा नान्यस्येति निश्चयः ॥

मनुष्यदेहमासाद्याप्यास्वाद्य मुहुरादरात् । शिवनामसुधां धन्यः प्रयाति शिवमेव सः ॥ ७१ ॥

स्वाधीना रसना शिवामृतरसं पातुं प्रवृत्ता कथं
नासीदेव दुरात्मना कथमिदं भाग्यं महाघान्वये ।
को वा जीवति तत्सुधाशनमहोरात्रं क्षणं वा सकृत्
यस्य स्यादघकोटिनाशकतया ख्यातं स वन्द्यः सुरैः ॥ ७२ ॥

अघकोटिविनाशनाय दक्षं शिवनाम श्रुतमेकमेव वेदैः ।
अनुवारमिदं जनाः कथं वा न वदन्ति स्मृतिमात्रतोऽपि मुक्तेः ॥ ७३ ॥

मुक्ताफलामलमिदं शिवनाम लोके सृष्टं शिवेन सकलार्तिविनाशनाय ।
तत्कोऽपि पुण्यपुरुषः श्रवणे निधाय नृत्यत्युमापतिपदाम्बुजदर्शनाय ॥ ७४ ॥

नामानि सन्ति बहुधा गिरिशस्य तानि तुल्यानि नैव शिववर्णयुगेन तत्र ।
प्रीतिः शिवस्य शिवरूपमिति प्रसिद्धं नामापि तद्रुचिकरं खलु शङ्करस्य ॥ ७५ ॥

शिवा वाणी लोके शिवपदसमेता शिवपदं ददात्युक्ता तावत् स्मरणपथमाप्तापि शिवदा ।
अतो धन्यैर्नित्यं शिव शिव शिवेति प्रजनने नयन्त्यायुः प्रायः शिवपदसरोजार्चनबलात् ॥ ७६ ॥

यो वक्तुं यतते शिवाक्षरयुगं सायं प्रगे वा मुदा
मध्याह्नेऽपि समर्चयन्ति विबुधाः सर्वे मुनीन्द्रा अपि ।
तस्मादभ्यधिको न कोऽपि भुवनेष्वालोडितं भूतलं
ब्रह्माण्डान्यखिलानि तावदसकृन्नालोडितान्येव किम् ॥ ७७ ॥

जम्बूद्वीपे जन्म संप्राप्य को वा जारादन्यो जारजादप्यपारः ।
शैवं वक्तुं नाम वै चाद्य तस्य पापिष्ठानां तत्र तावन्न भक्तिः ॥ ७८ ॥

आकण्ठं शिवनामधेयसुसुधां पीत्वातिपीनो मुदा
यो वा नृत्यति शङ्खलिङ्गनिलये तत्पादपद्मं सुराः ।

दृष्ट्वैव प्रणताः स्तुवन्ति बहुधा तत्पादुकाराधने
राधामाधवयोर्विधेरपि मनस्तावत्प्रवृत्तं मुहुः ॥ ७९ ॥

तज्जन्मैव मनोहरं च सुकरं चानन्ददं सर्वदा
यस्य स्याद्रसना शिवाक्षरसुधापानप्रवृत्ता मुहुः ।
तन्माता सुभगा पिता च सुभगस्तस्यैव तत्पादुके
लोकानामुपकारिके स्मृतिपदं प्राप्ते विमुक्तिप्रदे ॥ ८० ॥

अघकोटियुतोपि दैवयोगात् शिवनामस्मरणेन पूत एव ।
स पुनाति जगत्त्रयं सकृद्वा श्रुत एव स्मृत एव वा विशेषात् ॥ ८१ ॥

शिवनामसमानमस्ति किं वा भुवनेषु प्रथितेषु भूतलेषु ।
गिरिसुन्दरकन्दरेषु भूयोऽप्यटनेनापि न लभ्यते समानम् ॥ ८२ ॥

रे रे जनाः किमिति जन्म वृथैव नीतं भक्त्या श्रुतं न शिवनाम मुदा कदापि ।
हा हन्त हन्त हतजीवनमेव लोके लोकोपकारकशिवार्चननिन्दयापि ॥ ८३ ॥

धिग् धिग् धिग्रसनाऽपि तस्य बहुधा शैवं न नामादरा-
दुक्तं मुक्तिफलप्रदं मुहुरहो भक्त्या यया जिह्वया ।
हा हा तस्य निरर्थका जनिरभूत् सा नातिभाराय किं
सा तावद्रसना न किन्तु शुनकीकर्णं वृथा वेष्टितम् ॥ ८४ ॥

शिवाभिधानामृतपानपीनानदीनमानाननिमानगानान् ।
पश्यत्यवश्यान् शमनोऽपि नत्वा नारायणस्तान् कमलासनोऽपि ॥ ८५ ॥

शिवपदं पदमीप्सितसम्पदां पदमिदं पदमात्मसुखस्य च ।
अपदमेतदहो सकलापदां पदमनुत्तममुक्तिपदं पदम् ॥ ८६ ॥

सुधाधाराकारा शिवपदसरूपाऽपि भुवने तया जन्मापायो न भवति जनिः किं शिवपदे ।
श्रुते जन्मापायो भवति न जरा नापि मरणं स्मृते मुक्तिस्तेनेत्यपि वदति वेदोऽपि सततम् ॥

सुधाराशिः कोऽयं विजयति(?)शिवाख्यात्मकतया महानन्दाकारान् जनयति सुधांशूनगणितान् ।
पुनस्तैरप्यन्येऽप्यमृतकिरणा एव जनिताः समाहारस्तेषां शिवचरणपङ्केरुहगतः ॥ ८८ ॥

न विज्ञातं सिद्धैः परममृतरूपं शिवपदं न वा देवैः कैरप्यपरमुनिसंघैरपि गणैः ।
न वा वेदैर्ज्ञातं शिवपदमिदं वेद स शिवो महानन्दाकारो निरुपमशिवज्ञानमहिमा ॥ ८९ ॥

इदं तावद्रूपं शिवपदमिदं तावदमृतं परं नातः किञ्चित् जगति सकलाघक्षयकरम् ।
अनेनैवानन्दो भवति शिवपादाम्बुजरजःप्रसादात् केषाञ्चित् गिरिशचरणाम्भोजभजनात् ॥ ९० ॥

न जानीमस्तत्वं शिवपदमहिम्नः परमिदं परां मुक्ति दास्यत्यनुपदमविज्ञातविभवम् ।
कृतं वा केनापि श्रुतमपि किमेतादृशमिदं पुरा सृष्टं दिव्यं जनिमरणनाशार्थमनिशम् ॥ ९१ ॥

अहो कल्पान्ते वा न भवति कथञ्चिद्विवरणं महाकुम्भीपाकप्रभृतिषु महाक्लेशविरतिः ।
अकस्मादेतस्मात् जननमरणापायजनको महारोगापायो भवति शिवशब्दस्मरणतः ॥ ९२ ॥

यद्गोपनीयं बहुभिः प्रयत्नैः तन्नामरत्नं तदिदं शिवस्य ।
कण्ठे सदा तिष्ठति यस्य तस्य पादाम्बुजाराधनतोऽपि मुक्तिः ॥ ९३ ॥

न ज्ञायते शङ्करनामशक्तिः केनापि तद्वस्तुनिभं न वस्तु ।
इतः समस्तामयनाश एव स्यादित्यवश्यं भजनीयमार्यैः ॥ ९४ ॥

स एव तावद्भुवि पावनश्च यः शाङ्करं नाम मुहुर्मनःस्थम् ।
कृत्वा स्मरत्यन्वहमादरेण स एव तावत् परमोऽस्ति कश्चित् ॥ ९५ ॥

शिवशब्दसमानशब्दमस्मिन् भुवने वेदगणेऽपि नैव विद्मः ।
अमुमेव महौषधं विदित्वा भुवि धन्याः प्रचरन्ति रोगहीनाः ॥ ९६ ॥

मन्ये रोगविनाशनं शिवपदं धन्यैकभाव्यं सदा
धन्यानामपि धन्यता शिवपदं धन्येषु धन्यं परम् ।
मन्ये तं शिवशब्द एव सततं धन्यं करोति स्मृतः
सद्यः पावयतीति तत्पदमहो दिव्यौषधं सौख्यदम् ॥ ९७ ॥

किमौषधाभासविचारणेन दिव्यौषधे शङ्करनामरूपे ।
तिष्ठत्यपारामयनाशकेऽस्मिन् अन्यं न वांछा विषयीकरोति ॥ ९८ ॥

करोतु पापान्यमितानि किं तैः अपारसंसारमहामयेऽस्मिन् ।
किं तद्यतः शङ्करनामरूपं दिव्यौषधं तिष्ठति कण्ठभागे ॥ ९९ ॥

संसाररोगहरणाय शिवाभिधानं दिव्यौषधं तन्मुहुरादरेण ।
संसेवनीयं सकलाघशान्तिः तेनैव संसारभयापहारः ॥ १०० ॥

संसाररोगमपहर्तुमशक्त एव यः कोपि शंकरपदस्मरणानुरक्तः ।
तं तारयत्यनुदिनं पदमेकमेव तन्नान्यदिच्छति तदीयभयापनुत्त्यै ॥ १०१ ॥

अहो केऽपि संसाररोगापहारप्रयासप्रवृत्ताः प्रमत्ताः परं ते ।
अनायाससिद्धेऽपि विश्वेशनाम्नि प्रकृष्टाघनाशाय के वा प्रवृत्ताः ॥ १०२ ॥

संसाररोगविनिवारकमेकमेव दिव्यौषधं शिवपदाभिधमामनन्ति ।
तेनैव तस्य विलयो भवतीति सिद्धं सिद्धान्त एव मम तावदसंशयोऽत्र ॥ १०३ ॥

एवं मुहुर्मुहुरुमे त्वरया वदन्तो दूताः प्रपद्य यममाहुरतिप्रसन्नम् ।
शंभो महेश गिरिशेति मुदा वदन्तो भीताः शनैः शिवपदश्रवणोत्सुकं तम् ॥१०४॥

यमदूताः —

स्वामिन् कश्चन पापसंघमलिनो भूलोकशोकप्रदो
दुर्गन्धेन समावृतोऽपि बहुभिः पूयव्रणैः सङ्कुलः ।
जारिण्या सहितो मृतस्तमधुनाप्यानेतुमिच्छा न नः
दुर्गन्धैर्गमनं च तत्र बहुधा तावन्न शक्यं प्रभो ॥ १०५ ॥

संसारामयसागरक्षयकरं तेनादरान्न श्रुतं
न ध्यातं न च कीर्तितं श्रुतमपि प्रायः प्रमत्तोऽपि सः ।
पापार्तो भसितानुपानसहितं पीतं न दिव्यौषधं
न ध्यातोऽपि भिषक्तमः सुभिषजां मध्ये न रुद्राक्षभाक् ॥ १०६ ॥

अपारघोरसंसाररोगसागरवारकम् । महेश्वराभिधानाख्यमौषधं भसितान्वितम् ॥ १०७ ॥

श्रुतमपि शिवनामरूपमेतत् भसितमिदं परमौषधं श्रुतं वा ।
सकृदपि हरतीति रोगजालं प्रलयमुपैति महाभयप्रवाहान् ॥ १०८ ॥

महामयानां यदुमासहायपादारविन्दस्मरणौषधेन ।
आत्यन्तिको नाश इति प्रवृत्तिर्वेदान्तवाक्ये खलु जायतेऽपि ॥ १०९ ॥

संसारामयनाशनोद्यतमतिः को वा शिवाराधनं
त्यक्त्वा तिष्ठति तन्महौषधमिति ज्ञातं मुहुः शांभवैः ।
तस्मात् तं सततं विभूतिविलसद्रुद्राक्षभूषैर्मुदा
कर्तव्यं तदपारदुःखविलयं कर्तुं समर्थाः खलु ॥ ११० ॥

अमरैरपि संसाररोगसागरपीडितैः । शिवनामौषधं पीतं तेन मुक्ताश्च ते तदा ॥ १११ ॥

कः संसारमहारोगसागरानपहारकम् । शिवनामौषधं प्राप्य सकृद्वा भक्तिपूर्वकम् ॥

सकृदपि शिवनामरूपमेकं भसितयुतं परमौषधं स्मृतं वा ।
श्रुतमपि हरति प्रवाहभूतां रुजमघमूलमघानि कोटिशोऽपि ॥ ११३ ॥

इति तद्वचनं श्रुत्वा यमः सन्तुष्टमानसः । चित्रगुप्तं विलोक्याह स तु कीदृश इत्यपि ॥ ११४ ॥

चित्रगुप्तः —

यद्यदुक्तं काल दूतैः तत्सर्वमविचिन्तितम् । निष्कृतिस्तत्कृताघानां कदापि न भविष्यति ॥ ११५ ॥

यावन्ति पापानि कृतानि तेन तेषां न संख्याकरणं च शक्यम् ।
स्यात् सैकतानां गणनापि संख्या भूपांसुसंख्याऽपि ममैव शक्या ॥ ११६ ॥

न तस्य फाले भसितं कदापि रुद्राक्षमाला न गले करे वा ।
कर्णप्रदेशे च तथा च बाह्वोः स पापमूर्तिः परिभावनीयः ॥ ११७ ॥

न भाववार्तापि कदापि तेन कृता कृतान्तान्तकनामवार्ता ।
कृता महेशार्चनपुण्यवार्ता कृतापि रुद्राक्षविभूतिवार्ता ॥ ११८ ॥

कृतान्यनन्तान्यपि पातकानि विभूतिमात्रस्मरणेन तानि ।
नश्यन्ति तस्याः स्मरणं न तेन कृतं कदापि स्मरवैरिणः सा ॥ ११९ ॥

न ब्रह्महत्यादिकपापराशेः भीतिः कदापि प्रलयेऽपि कालः ।
यदि स्मरारिस्मरणं कदाचित् तत्तेन तावन्न कृतं क्षणं वा ॥ १२० ॥

श्रीकालकालस्मरणाग्निलेशात् क्षणेन पापामिततूलराशिः ।
विनश्यतीति श्रुतिरप्यपारा पापापहारप्रवणा श्रुता सा ॥ १२१ ॥

पापान्यपाराणि लयं प्रयान्ति महेश्वराराधनचिन्तनेन ।
तत्तावदत्यद्भुतपापयोगात् न जायते कस्यचिदस्य भाग्यात् ॥ १२२ ॥

कः शक्तो भुवि कर्तुमप्यघकुलं तावत्प्रयासेन वा यावन्नाशमुपैति शङ्करपदध्यानेन वा तत्स्मृतेः ।
तत्तावत् सुलभं तथापि न करोत्यालस्यपापादिना तेनैव प्रविशन्ति घोरनिलयं संसारराशिं ततः ॥

इत्याकर्ण्य वचो यमोऽपि बहुधा वेदान्तवार्ताप्रियः
सन्तुष्टस्तमुवाच भाग्यनिलयस्त्वं पावनोऽसीत्यपि ।
एतावान् शिवपूजनादिमहिमा ज्ञातस्त्वया तावता
धन्यो धन्यतमोऽसि मान्य इति मे मान्योऽतिमान्योऽप्यसि ॥ १२४ ॥

पापापारमहाम्बुराशितरणोपायः शिवाख्यास्मृतिः
तद्दिव्यौषधमित्यवैमि बहुधा संसाररोगक्षये ।
सा तावत् सुकृताम्बुराशितरणोपायः सुखांभोनिधि
कर्तुं साधनमेव साधनमपि प्राज्ञस्य पुण्यात्मनः ॥ १२५ ॥
अद्यायं शिवदिव्यनाममहिमा तावच्छ्रुतो मुक्तिदः
ब्रह्मानन्दद एव तेन भगवान् फालेक्षणस्तुष्यतु ।
इत्युक्त्वा पुनरप्युवाच स मुदा तं चित्रगुप्तं शिवे
किं तत्पाकविनाशकं किमपि किं तस्यास्ति किं नेत्यपि ॥ १२६ ॥

चित्रगुप्तः —

स यत्रैव मृतस्तस्मात् दूरे शङ्करमन्दिरम् । बालबिल्वतरुव्याप्तं तिष्ठत्येकं मनोहरम् ॥ १२७ ॥
तदेव मन्दिरं तावत् सरोवरविराजितम् । मन्दारुतरुसंकीर्णं बृन्दारकविराजितम् ॥ १२८ ॥
अपारहारसंकीर्णहारदारविराजितम् । भूतिराशिसमाकीर्णं रुद्राक्षौघसमाश्रितम् ॥ १२९ ॥
तत्र गन्तुं समुद्युक्तः कृत्वा गौरीसमर्चनम् । दूरात् स्वकन्यया युक्तः शिवनाम स्मरन् मुहुः ॥
तां कन्यां मनसा दृष्ट्वा त्वरया बाललीलया । गन्तुमप्युद्यतामम्ब शिवे पाहीति सादरम् ॥
स शब्दस्तत्र वातेन सर्वपापविनाशकः । वीचीन्यायेन तत्कर्णं प्राप पश्चान्मृतोऽपि सः ॥ १३२ ॥
स शब्दस्त्रिक्षणस्थायी स तावन्नैव तिष्ठति । यद्यप्यथाऽपि शब्दोऽन्यः तज्जातीयो भविष्यति ॥
तस्मादपि पुनः कश्चित् तस्मादपि कथा भवेत् । तज्जातीयत्वमेतेषां विच्युतिर्नैव सर्वथा ॥ १३४ ॥
इति तद्वचनं श्रुत्वा त्वरया स यमः शिवे । उत्थाय गन्तुमुद्युक्तः स यत्रागान्मृतो नरः ॥१३५॥
स गच्छन् वरुणेनापि सह तद्देशमण्डलम् । जलैः संपूरयामास तद्दुर्गन्धविनाशकैः ॥ १३६ ॥
ततस्तत्र गतः कालः तं प्रणम्य पुनः पुनः । पूजयित्वा बिल्वपत्रैः ननर्त च सुरैः सह ॥ १३७ ॥
ततो विमाने संस्थाप्य तं तया सहितं शिवे । आश्चर्यं परमं प्राप चित्रगुप्तादिभिः सह ॥ १३८ ॥
तदानीमेव तैर्दृष्ट्वा कोटिशोऽपि महोरगाः । सन्दग्धपुच्छभागास्ते दग्धास्यरसना अपि ॥ १३९ ॥
तान् दृष्ट्वा विस्मयाविष्टाः ते सर्वेऽपि सुराः शिवे । तदानीमागतो ब्रह्मा तं द्रष्टुं विष्णुना सह ॥
ततः प्रणम्य तं विष्णुं यमः प्राह विचक्षणः । किमेतदद्भुतं विष्णो वदेति प्रीतिपूर्वकम् ॥

विष्णुः —

शिवाख्या श्रुता तेन तत्पापराशिः महासर्परूपेण दग्धः प्रयाति ।

अतः पुण्यवानेव सोऽयं महात्मा मया पूज्य एव त्वयाऽप्यत्र काल ॥ १४२ ॥

अनेनान्तकाले श्रुतं नाम शैवं तदेवाघकोटिप्रणाशाय शक्तम् ।
न तत्कृत्यमेतावदेवेति मन्ये शिवाग्रेऽपि नृत्यं करिष्यत्ययं हि ॥ १४३ ॥

अयं पुण्यवानस्य पुण्यस्य नान्तो यतो नाम दिव्यं श्रुतं शांभवं हि ।
कथं वा न धन्योऽपि पूज्यश्च देवैर्महद्भाग्यमेतस्य सौभाग्यमेवम् ॥ १४४ ॥

पुण्यानि सन्ति विविधानि तथापि किं तैरन्ते कृतान्त जनिदुःखकराणि तानि ।
पुण्यप्रणाशमुपयान्ति पुनश्च गर्भे वासो भवत्यपि पुनर्मरणं जनिश्च ॥ १४५ ॥

एकं शङ्करनामरूपमनघं दिव्यास्त्रमत्यद्भुतं तद्येन श्रुतमन्ततः स्मृतमपि ध्यातं च दैवात् स तु ।
तेनैवाशु विनाशयत्यघकुलाकारान् रिपून् कोटिशः संसारार्णवलक्षणं रिपुमपि स्वच्छन्दवृत्तिः स्वतः॥

ध्यातं पुण्यमहाम्बुधिं जनयति ज्ञातं स्मृतं वा श्रुतं
नामेदं यम शांभवं महदिदं शस्त्रं रिपूणां क्षये ।
संसारामयशत्रुरूपविलयोपायः परं तत्पदं
मुक्तिं दातुमपि प्रवृत्तमसकृद् यद्वा सकृद्वा स्मृतम् ॥ १४७ ॥

दत्तं शङ्करनामरूपममृतं सेव्यं सुरैः सर्वदा पुण्यैः सर्वसमाश्रयैर्मुनिवरैः सिद्धैः फणीन्द्रादिभिः ।
गन्धर्वैरपि किन्नरैर्नरवरैः संसारभूरिव्यथाव्यर्थायासकदर्थनाय बहुधा तत्तुल्यमन्यत्तु न ॥ १४८ ॥

मुक्तिश्चेत् समवेक्षिता शिवपदध्याने रताः सन्ततं
सन्तः सन्तु सहस्रशोऽपि निगमप्रोक्ताश्च धर्माः परम् ।
किन्तैर्मुक्तिरवाप्यते यदि भवेत् स्वर्गः परं तैर्भवेत्
अन्ते जन्म जरा च मृत्युरपि तैर्मुक्तिः कथं वा भवेत् ॥ १४९ ॥

ज्योतिष्टोमेनेति वाक्येन तावत् स्वर्गं काम्यं तत्फलं स्वर्ग एव ।
ज्योतिष्टोमः साधनं चेति तद्धि विज्ञातं चेत् तत्र मुक्तिः कथं वा ॥ १५० ॥

एतादृशानि वाक्यानि सन्ति तावद्बहून्यपि । तादृशी मुक्तिवार्तापि सर्वथा न कृता खलु ॥

न ज्ञातोऽपि शिवाभिधानमहिमा वेदैर्मुनीन्द्रैर्मया
सिद्धैर्वा परमिन्दुखण्डशिरसा ज्ञातः स तावद्यम ।
तस्मिन् देवशिखामणेरतिकृपा किं तेन तप्तं तपः
तन्नामामृतवेदरत्नमिति तत् श्रेष्ठं च वेदेष्वपि ॥ १५२ ॥

वेदास्तेऽपि शिवाभिधानसहिताः पूताः परं पावनं
मत्वा तं प्रवदन्ति तेऽपि बहुधा तन्नामसङ्कीर्तनम् ।
कुर्वन्ति प्रणमन्ति वेदशिरसा रत्नं तदेवेत्यपि
व्याहृत्यान्वहमादरेण बहुधा तत्प्रस्तुवन्त्यद्भुतम् ॥ १५३ ॥

सुलभं शिवनामकीर्तनं तपसा तावदिदं विशेषतः ।
अतिदुर्लभमेव दुष्कृते सति तावन्महतामपि ध्रुवम् ॥ १५४ ॥

अङ्के यन्मधु तद्विहाय विपिनं यान्त्यर्भकाः क्रीडया
बिल्वैस्तद्वदघौघनाशकमुमाकान्ताभिधानामृतम् ।
त्यक्त्वा यान्ति वनानि तावदधुना कर्तुं तपः सन्ततं
व्यर्थायासफलाय गाढतिमिरे मूढाः पतन्त्येव हि ॥ १५५ ॥

यन्नामस्मरणादघौघविलयः सर्वापदां नाशनं संसारामयनाशनं च सुलभं तत्र श्रमः कोऽपि न ।
तन्नामामृतपानमेव सततं कर्तव्यमित्यादरो लोके पुण्यवतां परं भवति चेत् अन्यस्य नात्रादरः ॥

शिवस्मरणलालसं यदि भवेत् तदा मानसं पुनर्न जनिसाध्वसं मरणसाध्वसं वा यम ।
ततस्तदमृतामृतं मृतजनस्य संजीवनं जरामरणजन्मनामपि विनाशने साधनम् ॥ १५७ ॥

इत्युक्तं तद्वचः श्रुत्वा यमः सन्तुष्टमानसः । तमेव पूजयामास विष्णुना ब्रह्मणा सह ॥ १५८ ॥

तमुवाच ततो विष्णुः प्रणम्य शिरसा मुहुः । अर्चयित्वा बिल्वपत्रैर्मन्दारकुसुमैरपि ॥ १५९ ॥

विष्णुः —

शिवाभिधानं मरणक्षणे श्रुतं त्वया शिवानुग्रहपात्रभूतम् ।
मन्ये भवन्तं भगवन्तमेव त्वया न तुल्यो भुवनत्रयेऽपि ॥ १६० ॥

स्वच्छन्दवृत्त्या स्थितमेव पूर्वं तपः कृतं नोग्रमघापनुत्त्यै ।
शिवाभिधानश्रवणेन सद्यो मुक्तोऽसि संसारमहाम्बुराशेः ॥ १६१ ॥

कुर्वन्ति केचित् गिरिकन्दरेषु दारान् विहायापि तथा कुमारान् ।
न तैरिदं प्राप्यमनन्तरायं शिवाभिधानं मरणक्षणेषु ॥ १६२ ॥

अहो कृतार्थोऽसि शिवाभिधानं श्रुतं यतो मोक्षविधानदक्षम् ।
साक्षाद्विरूपाक्षकृपाश्रयेषु फालाक्षरूपोऽपि भविष्यसि त्वम् ॥ १६३ ॥

अनायासेनेदं खलु फलमुमाकान्तकृपया त्वया प्राप्तं नूनं मरणसमये शांभवमिदम् ।
श्रुतं नामानन्तामयविलयहेतुः शिवकृपा कथं त्वय्यप्यासीदमितसुकृतानां फलमिदम् ॥

मनुष्याणां तावन्मरणसमये रोदनरवैः परं कालो याति प्रणयसहितानामपि दया ।
महादेवाख्यायाः सकृदपि न चोच्चारणमतिः वृथा हाहाहाहेत्यपि समयनाशोद्यतधियः ॥

मरणावसरेषु कण्ठभागे कफपित्तप्रभवे भवोद्भवस्य ।
स्मरणं शिवनामकीर्तनं वा न भवत्येव कदाऽपि पापयोगात् ॥ १६६ ॥

दारान् कुमारानपि वीक्ष्य तावन्मुमूर्षुरप्यादरतोऽश्रुपूर्णः ।
रुदत्ययं न स्मरति स्मरारिं न शांभवं नाम शृणोति दुष्टः ॥ १६७ ॥

अन्तकालसमये महेश्वराराधने भसितभूषणेऽपि वा ।
जायते न सहसा मतिस्ततो याति घोरनरकालयं नरः ॥ १६८ ॥

अन्तकालविषये सदाशिवध्यानमात्रमपि मुक्तिसाधनम् ।
तत्कथञ्चिदपि जायते नृणां शङ्करो यदि पुरा समर्चितः ॥ १६९ ॥

अन्तकालविषये शिवस्मृतिः भस्मधारणमघौघनाशने ।
जायते खलु कथञ्चिदुच्चकैः नाम शाङ्करमपि श्रुतं भवेत् ॥ १७० ॥

भस्मोद्धूलितविग्रहोऽतिविपुलां रुद्राक्षमालां वहन्
कण्ठे कर्णयुगेऽपि शङ्करपदान्यप्युच्चरन्नादरात् ।
स्पृष्ट्वा लिङ्गमनुत्तमं मुहुरपि स्पृष्ट्वा च बिल्वीदलैः
संपूज्याशु समर्पणं च कुरुते शङ्गाय शाङ्गो जनः ॥ १७१ ॥

शम्भो भर्ग भवेन्दुशेखर महादेवेति यः संवदन्
रुद्राक्षामलभूतिभूषिततनुः कृत्वा च लिङ्गार्चनम् ।
शङ्गायाशु समर्पणं च कुरुते शाङ्गः स शङ्गो भवेत्
तत्पादाम्बुजरेणुभिर्मम शिरः पूतं भवत्यन्वहम् ॥ १७२ ॥

महाप्रयाणेषु महेशनाम श्रुतं स्मृतं वा यदि पुण्यवेगात् ।
तदा स मुक्तो भवतीति मन्ये नान्यस्य मुक्तिः प्रलयेऽपि सत्यम् ॥ १७३ ॥

शपामि शिवपादयोः शिवपदस्मृतेः केवलं विमुक्तिरिति सा स्मृतिर्भसितभूषणानां परम् ।
भविष्यति भवान्वयो न भवतीति मन्ये पुनः पुनः पुनरहं भुजद्वयमिदं समुद्धृत्य तु ॥ १७४ ॥

एतस्मिन्नन्तरे गौरि मदीया अपि किङ्कराः । विमानरत्नमारुह्य समानेतुं गताः परे ॥ १७५ ॥

तदा तानागतान् दृष्ट्वा विष्णुब्रह्मादयः सुराः । कृताञ्जलिपुटाः सर्वे प्रणताश्च पुनः पुनः ॥१७६॥

ततः परं तान् मुदितान् विलोक्य दूतान् मदीयान् गिरिजे सुरास्ते ।
ऊचुः क्व वा गम्यत इत्युपांशु कम्पायमानाः शिरसा प्रणम्य ॥ १७७ ॥

दूताः —

अनेन मरणक्षणे शिवपदं श्रुतं देवताः प्रभूतबहुपुण्यवानयमभूत् शिवानुग्रहात् ।
शिवान्तिकमयं सुराः सपदि नेय एवादरात् विमानवरमाश्रितः सुरगणादिसेव्यो मुदा ॥ १७८ ॥

अपारकल्पेष्वपि येन तप्तं तपोऽतिघोरं बहुवह्निमध्ये ।
तस्यापि तावन्न महाप्रयाणे शिवाभिधानश्रवणावकाशः ॥ १७९ ॥

अहो कृतार्थाः कतिचिन्महेशप्रसादपात्रत्वमुपेत्य धन्याः ।
कैलासवासं समवाप्नुवन्ति पूज्याः सुराणामपि सर्वथाऽपि ॥ १८० ॥

धनं परमिदं सुराः शिवपदं परं सम्पदां विपत्कुलविनाशकं सकलपापसंहारकम् ।
स्मृतं सपदि पातकं हरति संश्रुतं वा मुदा ददाति शिवसन्निधिं निधिमपि प्रदत्वा मुहुः ॥ १८१ ॥

अपारजननामयं हरति मृत्युवातादिकं श्रुतं शिवपदं मुदा शिवपदाम्बुजानुग्रहात् ।
इतः किमधिकं धनं भुवि निधिप्रदानक्षमं विमोक्षदमतिप्रियं शिवपदार्चकानां सुराः ॥ १८२ ॥

अतः परमिहाधुना खलु तथा विलम्बस्तदा विनेय इति निश्चये सति कथानुवादैरलम् ।
भवद्भिरतिपूजितो भवतु सोऽयमत्यादरात् इति प्रियतमैस्तदा सुरगणैः समाराधितः ॥ १८३ ॥

ततः परं पुष्पकरत्नसंस्थं तमानयामासुरिहादरेण ।
स मुक्त एवात्र शिवाभिधानमाहात्म्यमेतत् श्रुतमद्य गौरि ॥ १८४ ॥

शिवनामसुधाशनेन धन्याः कतिचित् ते गिरिजे ममापि मान्याः ।
इदमादरतोऽतिगोपनीयं मणिरेवायमहो महान् स शैवः ॥ १८५ ॥

नन्दिकेशः —

इति शङ्करवाग्विलासलोला कमलापूजितपादपद्मसाला ।
शिवनामसुधाप्रवाहलीला महिला कापि शिवस्य सा सुशीला ॥ १८६ ॥

तस्मादन्यं मुक्तिबीजं न विद्मो लोके मुक्तिः शङ्करानुग्रहेण ।
तस्मादेकः शङ्करः शङ्करो मे सेव्यः सेव्यः सर्वदा सर्वदाऽपि ॥ १८७ ॥

इति तद्वचनं श्रुत्वा विश्वावसुरतिप्रियम् । तुष्टाव नन्दिकेशं तं शिवभक्तवरं मुदा ॥ १८८ ॥

विश्वावसुः —

धन्योऽसि मान्योऽसि गणाग्रगण्य विश्वेश्वराराधनतत्परोऽसि ।
त्वत्पादपद्मार्चनतोऽपि मुक्तिः संभाविता स्याद्गिरिशप्रसादात् ॥ १८९ ॥

शाङ्कराङ्घ्रिकमलार्चनादपि प्रीत एव भगवानुमापतिः ।
शाङ्करेषु खलु तस्य सर्वथा प्रीतिरेव गिरिशः स शांभवः ॥ १९० ॥

समर्चितः स्यात् यदि शांभवस्तदा साक्षान्महेशोऽपि समर्चितः स्यात् ।
ईशाभिमानः खलु शांभवेषु ते दुर्लभाः किं शिवयोगिनोऽपि ॥ १९१ ॥

धन्यास्ते शिवयोगिनः शिवपदाम्भोजार्चनाराधनध्यानानन्दरसप्रसाधनरसाः संसारवार्तालसाः ।
तेषां पूजनमेव तावदधुना संसारदुःखापहं तत्सङ्गात् खलु शङ्कमङ्गलकथापीयूषधारार्णवः ॥

अहो विचित्रं खलु शांभवानां चरित्रमत्यद्भुतमप्यचित्रम् ।
चित्रं किमत्रास्ति पवित्रवार्ता करोति तावत्परमं पवित्रम् ॥ १९३ ॥

कः शङ्करार्चनपरो न सुरो नरो वा सर्वे सुरा अपि तदंघ्रिसमर्चनेन ।
धन्या भवन्ति बहवो भुवि शांभवाः किं वीरेश्वरार्चनपरः खलु कोऽपि शैवः ॥ १९४ ॥

वीरेश्वरानुग्रहपात्रमेकः स बाल्यमारभ्य शिवार्चकः सन् ।
वयः शिवाराधनसाधनेषु परं चकारामरहारवीरः ॥ १९५ ॥

भवानिहैको भगवत्प्रसादात् अभ्यागतो मत्सुकृतैरपारैः ।
त्वया तु तावद्गिरिशार्चनाय समागतं पावयितुं गृहं मे ॥ १९६ ॥

अस्माकं गृहमेधिनामपि बहु त्वत्पादसंक्षालनात्
तत्प्रक्षालनजातपुण्यसलिलासेकानुपानादिना ।
त्वत्पादाम्बुजरेणुभिः परमिदं सद्मापि मे पावनं
मद्वंशोऽप्यतिपावनः स तु महान् त्वं शांभवो दुर्लभः ॥ १९७ ॥

मनागपि तथा पुरा शिवकथासुधासागरः श्रुतः श्रवणपावनः श्रवणपात्रपीतो मुहुः ।
अतः परमहं मुदा गिरिशपादपद्मार्चनं करोमि करुणाम्बुधे शिवपदाम्बुजाराधकः ॥ १९८ ॥

श्रोत्रं पवित्रं मम जातमद्य गात्रं ममैतत् सुतरां पवित्रम् ।
त्वदुक्तविश्वेशकथासुधाब्धितरङ्गमालाकलितोऽहमेव ॥ १९९ ॥

जन्मान्यतीतानि बहूनि तेषु महेश्वरापारकथासुधाब्धिः ।
नाकर्णितो नाप्यनुसन्धितो वा न चार्चितो वाप्यमृतत्वसिद्ध्यै ॥ २०० ॥

किं तैर्जन्मभिरप्यपारतरुणीसंसारवार्तारस-
व्यापारैरपराधकोटिसहितैर्यैः शङ्करो नार्चितः ।
न ध्यातोऽपि न च श्रुतोऽपि नयनैर्दृष्टोऽपि कष्टार्णवा-
दुद्धर्तुं स समर्थ इत्यनुदिनं नाराधितो वैभवैः ॥ २०१ ॥

ब्रह्माद्यैरपि यत्पदाम्बुजरजःपूजार्थमत्यद्भुतं
तप्तं घोरतरं तपोऽपि बहुधा धर्माः कृताः कोटिशः ।
तत्पादस्मरणं कदापि न कृतं दारैः परं वञ्चितो
भोगैरप्यमितैरतः परमहं पूतस्त्वदालोकनात् ॥ २०२ ॥

अद्यागत्य महेश्वरामृतकथापीयूषधारा परा
दत्ता सा त्वदनुग्रहेण सततं संरक्षणीया मया ।
सेयं कण्ठमणिर्ममास्तु सुकृतैः यैर्यैः श्रुता सा कथा
ते सर्वेऽपि शिवाभिधानसुधया मुक्ताः समन्तादपि ॥ २०३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवनाममहिमानुवर्णने महापातकिमरणकाले शिवनामश्रवणतः कैलासप्राप्तिवर्णनं नाम विंशोऽध्यायः ॥

---

## अथैकविंशोऽध्यायः ।

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा राज्ञी सन्तुष्टमानसा । राजानमाह विनता प्रणम्य च पुनः पुनः ॥ १ ॥

राजन् गुरुर्मम भवानिह तत्वबोधः त्वत्तो ममाभवदतः परमादरेण ।
मय्यद्य तावदधुनैव दया विधेया विद्यापि मोक्षफलदा परमाऽत्र देया ॥ २ ॥

इति तद्वचनं श्रुत्वा राजाऽपि प्रीतमानसः । साचीकृत्य मुखं प्राह साचीकृतमुखाम्बुजाम् ॥ ३ ॥

राजा —

त्वरयात्र न ते कृत्यं मनः परिणतं न ते । कालान्तरे भावि भावि शिवयोगिसमागमे ॥ ४ ॥
अधुना मन्दिरं तावद्गन्तव्यं सत्वरं त्वया । अविलम्बेन भर्तापि कुपितः स्यात् तवान्यथा ॥ ५ ॥
यादृशस्तादृशो वास्तु भर्ता नारीभिरादरात् । यतोऽनुसरणीयोऽतो न तत्त्यागस्तवोचितः ॥ ६ ॥
यावद् जीवति भर्तापि तावत्सेव्यः स सादरम् । मृते तस्मिन्वने साकं मरणं तु तवोचितम् ॥
तेनानुगमनेनैव तव स्वर्गो भविष्यति । तस्यापीति त्वया तावत् कार्यं संसेवनं त्वया ॥ ८ ॥
अयं तु कुलनारीणां धर्मो धर्मविपर्ययः । न कर्तव्यो न कर्तव्यो यतस्तत् पापसाधनम् ॥ ९ ॥
इति तद्वचनं श्रुत्वा राज्ञी दुःखसमाकुला । अश्रुसङ्कीर्णनयना तमुवाच नतानना ॥ १० ॥

राज्ञी —

योऽयमुक्तस्त्वया धर्मः केवलं पुण्यभर्तरि । मृतेऽनुगमनं तत्तु पतितेन न सर्वथा ॥ ११ ॥
मद्यपानादिभिः पापैः भर्ता चेत् पतितो मृतः । तेनानुगमनं कार्यमिति शास्त्रं न दृश्यते ॥ १२ ॥
उद्धूलनं त्रिपुण्ड्रं च द्विजैः कार्यमहर्निशम् । तत्त्यागे पतितो भूयादिति वेदः श्रुतः खलु ॥ १३ ॥
लिङ्गार्चनपरित्यागात् पतितो भवतीत्यपि । वेदः श्रुतस्ततस्तेन सहानुगमनं कथम् ॥ १४ ॥
महापातकराशीनामभ्यासात् पतितो यथा । तथा शिवार्चनत्यागात् पतितोऽपि भवेन्नरः ॥ १५ ॥
पतितेनान्वयस्तावत् पातित्याय भविष्यति । मम पातित्यसंपत्तिः सर्वथाऽप्यनपेक्षिता ॥ १६ ॥
पतितं पतिमुत्सृज्य व्यभिचारं विहाय च । स्थातव्यमिति नारीणां धर्मोऽयं परमो मतः ॥ १७ ॥
किं वा तद्वार्तया किं वा फलं वद नृपोत्तम । चिन्तनीया गतिस्तावन्मम सर्वात्मना खलु ॥ १८ ॥
इष्टसाधनताज्ञानं सामान्येन प्रवर्तकम् । अनिष्टसाधनज्ञानाद्बालकोऽपि निवर्तते ॥ १९ ॥
बालोऽग्निमेकदा स्पृष्ट्वा पुनः स्प्रष्टुं न वांछति । ततोऽप्यहं कथं मूढा तन्मूढत्वं हि निर्गतम् ॥
किं चानुगमने तेन जन्म तावद्वृथा भवेत् । भर्तुश्च मृतकल्पस्य सेवयाऽपि न मे फलम् ॥
मृतकल्प इति ज्ञेयः पतितस्तु पतिर्मम । न तेन रोचते सङ्गः कुत्सितत्वेन निश्चये ॥ २२ ॥
मया जन्म समासाद्य शिवो नाराधितः खलु । तदाराधनहीनानां जन्म तावन्निरर्थकम् ॥ २३ ॥
लिङ्गं करसरोजेन न स्पृष्टमपि सादरम् । न चन्दनेनानुलिप्तं कस्तूरीसहितेन तत् ॥ २४ ॥
न वा बिल्वदलैरीशो बिल्वरूपी न पूजितः । पञ्चामृतप्रवाहैर्वा लिङ्गं नाभ्यर्चितं खलु ॥ २५ ॥
क्षीरसंपूर्णकलशो नोद्धृतोऽपि बलान्मया । शिवलिङ्गाभिषेकाय तेनाभून्नरकश्रमः ॥ २६ ॥

पक्वान्नानि पवित्राणि मधुराणि कृतानि नो । नार्पितानि कराभ्यां तान्युमाकान्ताय सादरम् ॥

करपद्माक्षिनयनैर्नार्च्यं च न कृतं मुदा । शिवालये मार्जनं च करेण न कृतं खलु ॥ २८ ॥

वीणामादाय विमलां विपुलां गिरिशालये । न गानं च कृतं सम्यग् गतं जन्म निरर्थकम् ॥

न ध्यातं मनसा महेश्वरपदाम्भोजं मुहुर्मानसैः
व्यापारैरपि सुन्दरैर्विरचिता पूजा न शर्वाय सा ।
सर्वापद्विनिवारणाय सकलाभीष्टार्थसिद्ध्यै सदा
किं कर्तव्यमतः परं जनिजरारोगव्यपायः कथम् ॥ ३० ॥

सरोजदलसन्निभं नयनयुग्ममेतद्वृथा बहुप्रसवपूजितं न शिवलिङ्गमुद्वीक्षितम् ।
रथोऽपि न निरीक्षितः शिवमहोत्सवः शांभवो विभूतिकृतभूषणो नयनगोचरो नादरात् ॥ ३१ ॥

हारोपहाररससारविवेकहेतुर्जिह्वापि नेति न तया शिवनामवादः ।
सा तावदद्य विषतामुपयाति नूनं कृत्यं तया न सहसेत्यपि भारहेतुः ॥ ३२ ॥

कर्णाभ्यां न सदाशिवार्चनकथापीयूषपानं कृतं
मूर्ध्ना न प्रणतोऽपि शैलतनयाकान्तो मुहुः सादरम् ।
यन्नासीद्गिरिशार्चनाय तदभूत् सर्वं वृथा सर्वथा
हा हन्तान्तकवार्तयापि सततं चिन्ता परं जायते ॥ ३३ ॥

अपाररत्नैरपि हारमन्दिरं कृतं न सौवर्णमणिप्रमण्डितम् ।
स रत्नकोशोऽपि वृथैव जातः सुवर्णकोशोऽप्यमितो वृथैव ॥ ३४ ॥

एवमुक्त्वा स्थिता राज्ञी तदानीमागतो नृपः । तस्यास्तु भर्ता ससुतो मुमूर्षुर्व्रणपीडितः ॥ ३५ ॥

तदा स भूपस्तं दृष्ट्वा दूरेण व्रणपीडितम् । दुष्टैः स्वभृत्यैरानीतमाक्रम्य नगरं परम् ॥ ३६ ॥

तद्भृत्यैस्ताडितः क्रूरैः बद्धः पाशैः स भूपतिः । कोलाहलसमाक्रान्तः भर्त्सितोपि मुहुर्मुहुः ॥

ततः स राजा बहिरागतोपि किमेतदासीदिति विस्मितः सन् ।
पश्चादमात्यैः प्रणतोऽतिभक्त्या क्रूरैः कुमारैरतिदूरतोऽसौ ॥ ३८ ॥

पृष्टास्ते मन्त्रिणस्तेन कोऽसाविति तमूचिरे । भिल्लपक्कणराजोऽयमशाम्भववरो नृप ॥ ३९ ॥

अयं दुरात्मा दुर्बुद्धिर्भिल्लराजो विशेषतः । पुरं गृहीतमस्माभिरेतस्याद्य दुरात्मनः ॥ ४० ॥

अस्मदीयैः कथं तस्य नगरस्य च रक्षणम् । सुवर्णकोशसंवीतरत्नकोशसमन्वितम् ॥ ४१ ॥

अयं तु सर्वदा स्वामिन् शिवयात्रानिरोधकः। शिवयात्रारतद्रव्यमनेनापहृतं मुहुः ॥ ४२ ॥
सर्वदा तरुणीसक्तः शिवपूजाविवर्जितः। त्वयि शासति भूलोकं किमयं स्थातुमर्हति ॥ ४३ ॥
न भूलोके रिपुः कोऽपि तव भूपालसत्तम। उपेक्षितोऽयं तुच्छत्वात् रक्षणीयो न सर्वथा ॥
किं च भूमण्डले राजन् शिवाचारविवर्जितः। अयमेकः स नगरः नगरे स शिवालयः ॥ ४५ ॥
पश्य पश्य मनोज्ञानि सुवर्णाभरणान्यपि। एकोऽपि तेषु रुद्राक्षो नास्ति भूपाल पावनः ॥ ४६ ॥

रुद्राक्षहीनाभरणानि यानि तानि स्वभावेन न मण्डनाय।
किं मंडनैर्मण्डनसूत्रहीनैः प्रचण्डचण्डाभरणैर्विचित्रैः ॥ ४७ ॥

इति तद्वचनं श्रुत्वा स्मृत्वा शङ्करमादरात्। पुनर्विवेश त्वरया तदेव शिवमन्दिरम् ॥ ४८ ॥
तत्र दृष्ट्वा महादेवं लिङ्गरूपमनुत्तमम्। प्रणम्य बहुधा स्तुत्वा शिवध्यानरतो नृपः ॥ ४९ ॥
ततः स भिल्लराजस्तु ताडितोऽपि मृतस्ततः। सा वार्ता तेन राज्ञापि श्रुता तद्भार्ययापि सा ॥
ततः परं च सा राज्ञी प्रणता तं नृपोत्तमम्। पाहि पाहीति पाहीति खिन्नाननविलोचना ॥
ततस्तामाह राजापि खेदं मा कुरु मा कुरु। तवाभिलषितं नूनं मया गम्यत इत्यपि ॥ ५२ ॥
मासानन्तरमत्रैव पुनरागम्यते मया। तावद्वसात्र नियमैरगत्वा शङ्करालयम् ॥ ५३ ॥
इति तद्वचनं श्रुत्वा सा चाप्युक्त्वा तथाऽस्त्विति। उवासोद्यानभूदेशे राजा स्वनगरं ययौ॥५४॥
पुत्रपौत्रादिसंयुक्तो दारैरपि समावृतः। निजं नगरमासाद्य शिवार्चनपरोऽभवत् ॥ ५५ ॥
ततः कालेन सा राज्ञी स्वतकान्ते शिवार्चनम्। कृत्वा स्थिता निराहारा भस्मभूषितविग्रहा ॥
तस्याः सपत्न्यस्ताः सर्वा सदा भर्तृवियोगतः। दुःखिताः ससुता एव स्थितास्तत्र वनाद्बहिः ॥
ततः शिवरतां दृष्ट्वा तां सपत्न्यः सुता अपि। तदेव व्रतमाश्रित्य स्थिता एव तदाज्ञया ॥ ५८ ॥
त्रिपुण्ड्ररुद्राक्षधराः सर्वास्ताः शिवपूजने। उद्यता एव सततं भस्मोद्धूलितविग्रहाः ॥ ५९ ॥
ततः परं स राजापि सत्यव्रतपरायणः। तदुद्यानवनं प्राप वृतः परिजनैर्भितैः ॥ ६० ॥
तत्रागत्य सरस्तीरे स्नात्वा भूतिविभूषणः। चकार पूजनं शम्भोः बिल्वपत्रादिभिर्मुदा ॥ ६१ ॥
ततो ददर्श तां राज्ञीं भूतिरुद्राक्षभूषणाम्। शनैः शिवशिवेत्युक्त्वा स्थितामपि कृशामपि॥ ६२ ॥
ततः परं सपत्न्यश्च तस्यास्तावत्समागताः। पुत्राश्च तासां रुद्राक्षैः भस्मना च विभूषिताः ॥
शिव शङ्कर विश्वेश पाहि पाहीत्यनुक्षणम्। वदन्त एव तद्दाराः तत्पुत्राश्च समागताः ॥ ६४ ॥
तान् दृष्ट्वा सोऽपि भूपालो विस्मितः शिवतत्परान्। ते सर्वे प्रणतास्तस्मै पाहि पाहीति सत्वरम् ॥

सापि राज्ञी निराहारा कृशा तं प्रणतं नृपम् । तामाह राजा विनतां क्व प्रीतिरिति सादरम् ॥

[1 राज्ञी —

प्रीतिर्महादेवपदारविन्दध्यानार्चनादौ नृप सर्वथा मे ।
अतः परं किं मम कार्यमस्ति कृत्यं विशेषेण कृतं विशेषात् ॥ ६७ ॥

राजा —

त्वं तावदन्तःपुरमानयोग्या स्थितिर्वने ते वनिताऽसि यत्नात् ।
आयाहि नित्यं शिवपूजनाय पुरं प्रयाहि त्वरया किमत्र ॥ ६८ ॥]

राज्ञी —

कदा रेवातीरे रुरुनिकरबालातिरुचिरे चिरं तुङ्गं लिङ्गं नवरुचिरदूर्वाङ्कुरजलैः ।
समाराध्य ध्यात्वा सितभसितपूता शिव शिव महेशेति त्यक्ष्ये तनुमिति मम प्रीतिरनिशम् ॥

अतः परमुमापतिस्मरणमेव मे जीवनं विभूतिपरिवेष्टिता तनुरियं त्रिपुण्ड्राङ्किता ।
महेश्वरसमर्चनस्मरणसाधनं मन्मनः शिवार्पणमिदं कृतं नृप शपामि शम्भोः पदे ॥ ७० ॥

सुधाकरशिलातले कुमुदगन्धमन्दानिले प्रफुल्लकमलामले तुहिनमण्डले शीतले ।
प्रचण्डकरजानलज्वलितसुरकान्तेऽपि वा समा मतिरुमापतिस्मृतिसुधारसास्वादने ॥ ७१ ॥

प्रासादे तुहिनांशुकान्तविशदे मन्दारकुन्दच्छदस्वच्छन्दक्षुरगोक्षुरव्यतिकरक्षारोपरे वा स्थितिः ।
अस्तु न्यस्तसमस्तवस्तुविषयापेक्षस्य किं तावता चेतः सन्ततमन्तकान्तकमुमाकान्तं चिरं चिन्तय ॥

किमस्मिन् संसारे स्मरहरविहाराकरपुर प्रहारव्याहारप्रवरवरहारानुसरणैः ।
खलः कालो नेयः कथमपि किलायं न कमलाविलासानामाशां हर हर दयासागर हर ॥ ७३ ॥

निर्वन्धोऽपि गतो गतः पतिरतः संसारवार्ता गता
नातः कोऽपि गतागतार्तिविगतः श्रान्तिर्गता तावता ।
चित्तं मत्तकृतान्तदूतवचनव्यापारदूतं यथा
न स्यादेव तथा विधेयमधुना विश्वेश्वरध्यानतः ॥ ७४ ॥

दैनन्दिनप्रलयकालभयं गतं मे सोमावतंसचरणस्मरणादरेण ।
एतावतास्मि कृतकृत्यतमा किमस्ति कृत्यं च तावदधुना न च जीवनस्य ॥ ७५ ॥

---

1 कोष्ठान्तर्गतौ श्लोकौ C कोशेऽधिकौ ।

प्रयातु स शिवं मनः शिवपदाम्बुजाराधनं करोतु मम दुर्दशामपि निवेद्य सद्यः पुनः ।
पुनर्न जनिजां रुजं हरसि किं हराराधितो हरः परतरं सुखं वितरतीति तत्त्वं वद ॥ ७६ ॥

रे रे मनः शिवपदाब्जरजःप्रसारं संसारभारपरिहारकरं परं त्वम् ।
दृष्ट्वाऽपि तावदधुना पुनरेहि मोहं हित्वा मुहुर्मुहुरुपेहि हराङ्घ्रिपद्मम् ॥ ७७ ॥

रे रे मनः पश्य शिवांघ्रिपद्मं तच्चेद्विहारस्थलमुत्तमं ते ।
तत्रैव तावद्वस वासुदेवनेत्राम्बुजं तिष्ठति तेन साकम् ॥ ७८ ॥

नारायणेनापि शिवांघ्रिपद्मे समर्पितं नेत्रमतो मयापि ।
समर्पितं चित्तमतः प्रयाहि तदेव गौरीरमणांघ्रिपद्मम् ॥ ७९ ॥

दैवात् स्थितिः शङ्करपादपद्मे सदा मनस्ते यदि तावता मे ।
संसारघोरामितदुर्दशाऽपि निवेदनीया समये सतीति ॥ ८० ॥

अहो नरकभाजनं कथमहं भजामि त्वयि प्रिये मनसि संस्थिते स्मरहरांघ्रिपङ्केरुहे ।
त्वया सह समागमे मम किलोपकारश्रमो न किन्तु शुभसंपदामुपगमो भवत्वन्वहम् ॥ ८१ ॥

मनः सत्यां वाणीं शृणु शृणु परं प्राणविगमे महोदारं धीरं हरमनुसरापारकरुणम् ।
मुहुर्मन्दं मन्दं वद हर हरापारकरुणारसासारासिक्तं कुरु कुरु मुहुः सत्वरमिति ॥ ८२ ॥

मरणावसरे न कोऽपि तावत् परिहर्ता मरणक्षणव्यथायाः ।
इति सन्ततमन्तकान्तकं परमन्तःकरणाश्रयादरात् ॥ ८३

मरणे हितकृन्न कोऽपि ते कृतपुण्यस्य हरार्चनं परम् ।
हितकारणमित्यतः परं हरमेवानुसरादराद्वरम् ॥ ८४ ॥

कुमारैरुदारैर्न दारैश्च कृत्यं मम प्राणनिर्याणकालेऽनुवेलम् ।
महाकालकाल स्मरारे स्मरेति स्मरापारगर्वापहारं वदाशु ॥ ८५ ॥

दयासागरापारपापापहार स्मरारे मदीयापराधान् क्षमस्व ।
प्रयच्छाशु मोक्षं महोक्षध्वजाशु प्रपश्य प्रपश्येति शम्भुं वदाशु ॥ ८६ ॥

अहो नेतुमेते प्रवृत्ताः प्रमत्ताः कृतान्तस्य दूताः कृतान्तोऽपि यातु ।
समानेतुमेवोद्धतो नन्दिकेश प्रपश्येति पाहीति तावद्वदाशु ॥ ८७ ॥

न कोऽप्यस्ति पाता त्वदन्यो न दाता ममात्रापवर्गस्य स्वर्गादिहेतो ।

दयावीक्षणेनाशु पश्य प्रपश्याद्य मां मोचयाद्यान्तका ... त्वम् ॥ ८८ ॥

महाकालदत्तप्रचण्डाट्टहासैः परं नासवो यान्ति किं तात मत्तः ।
अतस्तेन दूरे तरां यान्ति शान्ताः तवानुग्रहे तावदुग्रे प्रयान्ति ॥ ८९ ॥

अकस्मान्नयन्त्येव ते तात यावत् न तावत्प्रपश्यादरादिन्दुमौले ।
त्वदालोकनेनैव ते यान्ति दूरं मम प्राणवायुप्रयाणे प्रसक्ते ॥ ९० ॥

अखर्वगर्वामितसर्पदर्पमुखेषु दूताः खलु पातयन्ति ।
तथा च तद्दर्शनया विमुक्तं कुरु त्वरा तावदहो विधेया ॥ ९१ ॥

तदुत्पन्नदुःखापहारस्त्वया स्यात् ममेशान पाहि प्रपन्नं प्रसन्नः ।
प्रपन्नार्तिसंहारहेतुस्त्वमेकः त्वदन्यो न कोऽप्यस्ति लोकत्रयेऽपि ॥ ९२ ॥

आश्यामातुच्छपुच्छव्यतिकरविलसद्वृश्चिकव्याप्तमार्गे
　दुर्गर्ते पातयित्वा पदयुगलमहापाशबन्धान्नयन्ति ।
के तावत्पातयन्ति प्रतपनधमितभ्राष्ट्रमध्येऽप्यमेघ्ये
　वध्यं मत्वा विदित्वा क्षणमपि करुणां पाहि शंभो विलोक्य ॥ ९३ ॥

कालस्तिष्ठतु दूरतो यमभटास्तावद्रटन्त्वन्वहं
　यावन्नीयत एव तावदसकृत् सन्तप्तशैलाहतान् ।
कुर्वन्त्येव ततो विलोक्य दयया दृष्ट्या तथा केवलं
　ते दूताः प्रपलाय्य यान्ति कृपया शम्भो तवैवाधुना ॥ ९४ ॥

सन्तप्तामितलोहकण्टकयुते मार्गे नयन्त्याशु ते
　तेषां तात निवारकोऽपि नरकादुत्तारको वाऽस्ति कः ।
तं तावद्यमशासकोऽपि कृपया पश्येति चाक्रोशनैः
　तं कालं कलयानुवेलमदयं तं कालकालं वद ॥ ९५ ॥

वद वद वद मे त्वा पाहि पाहीति मत्वा [1]वटविटपिनिकुञ्जे कालकालं विदित्वा ।
भयमपि बहु हित्वा सादरं त्वाशु नत्वा शिव शिव शिव राजश्चिन्तयित्वा महेशम् ॥ ९६ ॥

न कोऽपि खलु रक्षकस्त्वयि सतीदृशी दुर्दशा कथं मम महाप्रभो भव भवाभयं देहि मे ।
अनागसमिवादरादनुविलोकयाद्याधुना कृतागसमपि प्रभुः प्रणतमाशु दृष्ट्वाऽवति ॥ ९७ ॥

---

1 शिव शिव शिव एवं कालदण्डं विदित्वा C

मनः सततमम्विकारमणपादपङ्केरुहं महार्हमिति दुःसहामितमहापदां नाशकम् ।
भजानघ मुहुर्मुहुर्हर महेश्वरेत्यादरात् वदामद मदेन किं मदनदुर्दशावर्धकम् ॥ ९८ ॥

अपारकरुणारसं गिरिकुमारिकालिङ्गनप्रकल्पितमहोरसं स्मरविहारहारालसम् ।
शिवानुसरणार्हणप्रवणवीक्षणालालसं प्रयातु मम मानसं विधुकलावतंसं मुहुः ॥ ९९ ॥

सदर्पे दर्पे वा गुणमणिगणे वा विशरणे व्रणे वा भ्रूणे वा कुमुदसदने वा सपवने ।
वने वा क्षीरे वा गरलगरलैर्वाऽतितरले कथं चित्तं मत्तं सममिदमुमाकान्त वद मे ॥ १०० ॥

अमित्रे मित्रे वा मदनकदने वाऽरिकदने कुवृक्षे द्राक्षे वा कुदलकरतालापकदले ।
सुपर्णेऽपर्णे वा विपदवसने वा कुवसने कथं चित्तं मत्तं वद मदनसंहारक विभो ॥ १०१ ॥

अरम्ये रम्ये वा मुनिवरकुले वा द्विजकुलेऽप्यकाले काले वा मरणसमये वा सुसमये ।
विषे वा पीयूषे प्रदरकरदे वापि वदरे कथं चित्तं मत्तं वद मदनसंहारक विभो ॥ १०२ ॥

धाराधरप्रकरसुन्दरसम्बरान्तं नृत्यन्मयूरगिरिकन्दरकन्दलानि ।
विद्युल्लतावृतदिगन्तमपि प्रपश्यन् शैवो युवापि पथिकोऽपि न मोहमेति ॥ १०३ ॥

चेतश्चिन्तय चिन्तयान्तकभयग्रस्तास्तु नामासकृत्
स्वस्ति स्वस्तिमतिस्तवा ... मुहुर्व्यस्तेषु वस्तुष्वपि ।
कालोऽसौ यदि कालकालकलना तर्हि स्वकालेऽप्ययं
कालत्वं विजहाति हन्त सततं तं कालकालं भज ॥ १०४ ॥

स्मर स्मरहरं परं त्रिपुरवैरिणोऽनुक्षणं परं चरणपङ्कजं जनिजरामृतिव्यत्ययम् ।
करोति न सकृत् स्मृतं किमत एव गौरीकरप्रवालकमलामलच्छविसमर्चितं सादरम् ॥ १०५ ॥

किमस्माकं लोके शरणमगजाभ्यर्चितपदं महादेवं हित्वा शरणममराणामपि सदा ।
तमेवाहुस्तावच्छरणमसुराणामपि नृणां तथा गन्धर्वाणामिति विदितमेवामरनुतम् ॥ १०६ ॥

अनभ्यस्ते मार्गे यमभटगणाकीर्णतरुणज्वलज्ज्वालामालाचिरतरवरोरूपरयुते ।
अपारे संचारः कथमिति कथञ्चित् स्मरहरं स्मरापस्माराणामनुसरणमुत्सृज्य च मनः ॥ १०७ ॥

सहायो नास्माकं यमसदनमार्गेऽतिकठिने महाव्याधिव्याधव्यथितजनजातव्यतिकरे ।
महाज्वालाकीर्णे फलमपि न तत्रास्ति विमलं किमस्माकं तस्मिन् भवति भगवन् कालनयने ॥

उमासहायो न सहायभूतो यस्यैव तस्यापि कुतः सुखं स्यात् ।
अतः सुखोपाय उमासहायः सहायभूतः पथि चिन्तनीयः ॥ १०९ ॥

न मित्रवार्ता न च पुत्रवार्ता कलत्रवार्ता न च यत्र तत्र ।
गन्तव्यमेवेति सहायभूतं उमासहायं परिकल्पयामः ॥ ११० ॥

श्रुतः स गौरीरमणोऽपि मार्गे दुर्गेऽनुयातीति मुहुः स्मरामि ।
स्मरारिमेव त्रिपुरारिनाम स्मरन्ति सन्तस्तु वने वसन्तः ॥ १११ ॥

अद्यापि नाशां विजहाति देहे कथं महाभूतलयेऽपि काले ।
न कालकालस्मरणप्रवीणं किमेतदन्तःकरणं क्षणं वा ॥ ११२ ॥

कः कालकालं कलयत्यकाले कालेऽपि वा कालभयं विहाय ।
स कालकालं समुपेत्य किं मे कालः करिष्यत्यपि सोऽनुभूतः ॥ ११३ ॥

अहो मायाजालं परिहर महादेव शरणं प्रपन्नोऽहं भक्त्या हरचरणपङ्केरुहमतः ।
क्क वाऽयं व्यामोहः क्क च शिवपदाम्भोजभजनं महापत्काले वा कथमपि न दुःखं शिवमतेः ॥

प्रयच्छातिस्वच्छां शिव शिवपदेच्छामसुलभां अतुच्छामच्छाये जनपदविहीने सगहने ।
न गन्तुं शक्तिर्मे यमसदनदावाध्वनि वरैः कुमारैर्दारैर्वा न कृतमहहा मेऽनुसरणम् ॥ ११५ ॥

वृथा जातमेतत् कथं वा वने वा वने वा वने वा वने वा नितान्तम् ।
उमाकान्तलिङ्गं न सिक्तं न दत्तं प्रसूनं जलं वा नवं बिल्वपत्रम् ॥ ११६ ॥

त्रपामात्रहीनं मनः किं ममेदं स्मरारातिचिन्ताविहीनं क्षणं वा ।
शरण्यान्तरं नेति निश्चित्य पश्चात् महाकालदूताद्भुताट्टाट्टहासम् ॥ ११७ ॥

मनः पततु पावके यदि पुनः पुनः सन्ततं स्मरत्यपि न भक्तितः स्मरहरांघ्रिपङ्केरुहम् ।
महापदि कदापि वा स्मृतमुमासहायं परं मनोहरपदाम्बुजं रहसि रंहसा सादरम् ॥ ११८ ॥

परदारमनोहरोदरव्यभिचारादरमेव कातरम् । अनुवारमतः परं कथं ज्वलनायाप्यवदानमीदृशम् ॥

लोके न कोऽपि कुतुकी परलोकशोकनिर्वापणाय यतते सततं सदारः ।
भूभार एव स धराधरवद्विहारो हारेण साकमसकृत्सकृदिन्दुमौलेः ॥ १२० ॥

न हारैर्दारैर्वा रुचिकरकुमारैरपि धनैः फलं याम्ये मार्गे शिवभजनमेकं शरणदम् ।
अतः कृत्यं तावत्तव भवतु चेतश्चिरमिदं शिवध्यानं तेन स्मरहरपदावाप्तिरधुना ॥ १२१ ॥

असकृन्मदुदीरितं त्वया न कृतं ते न कृपा त्रपाऽपि वा ।
तदिदं दुरदृष्टमेव ते न च दृष्टं गिरिशाङ्घ्रिपङ्कजम् ॥ १२२ ॥

रे रे मनश्चिरमुमारमणे सहाये न क्वापि भीतिरत एव तमेव भक्त्या ।
भूयः स्मर स्मरहरं रुचिरेन्दुखण्डक्लृप्तावतंसमुमया सह सोपहासम् ॥ १२३ ॥

को वा कालः कालदूताश्च के वा किं तत्कृत्यं कालकालानुवेलम् ।
ध्यातः सद्यो घोरसंसारबन्धात् मुक्तं तावत्कर्तुमेवातिशक्तः ॥ १२४ ॥

अतः परमुमापतिस्मरणकारणव्यत्यये परं प्रलय एव नः प्रलयकालकालानलः ।
असह्यतम एव हि व्यसनमेतदत्युत्कटं कदापि विकटापदिस्मरणपुण्यहीनात्मनाम् ॥ १२५ ॥

रे रे विचारय विचारय चारुशीलं पद्मस्फुरत्करतलामलशूलमूलम् ।
श्रीशूलपाणिचरणस्मरणानुकूलं श्रीकालकालममलं कलयानुवेलम् ॥ १२६ ॥

कालान्तकं कोऽपि कृतान्तभीतः प्रयाति पुण्यैः सितभूतिपूतः ।
स चानुभूतः सततं प्रभूतः करोति पापप्रलयं विभीतः ॥ १२७ ॥

अन्तकान्तकपदाभिवन्दने मन्दधीरपि सनन्दनादिभिः ।
वन्दनीयतम एव जायते जातु जन्म [1]न विजायते पुनः ॥ १२८ ॥

जारः परं जारजवृत्तजातो न जातु जानाति च निर्विनाशम् ।
यतो न तस्येन्दुकलावतंसपादारविन्दानमनप्रवृत्तिः ॥ १२९ ॥

सद्वृत्तः खलु कोऽपि पुण्यविभवैर्भावो भवत्युत्सवैः
उत्साहात्मकमन्तकान्तकमुमाकान्तांघ्रिपङ्केरुहम् ।
ध्यात्वा तच्चरणाब्जरेणुगणनां कुर्वन् परं क्रीडति
क्रीडेयं परिमुक्तिरित्यवगता संसारशान्त्या परम् ॥ १३० ॥

कः संसारदवापहारचतुरो वीरोऽपि वीरेश्वरादन्यो मान्यतमोऽपि तेन स भवेद्वीरेश्वराराधकः ।
सामान्यः कथमिन्दुशेखरपदध्यानामृतास्वादनध्यानोत्सेकनमोदमानहृदयोदारेषणानिर्दयः ॥

हर हर हर कालकाल चित्तं धनमदमत्तमिदं भवत्पदाब्जम् ।
अनवरतमिदं व्रतादिदूनं चिरतरशाङ्करलिङ्गसङ्गतिज्ञम् ॥ १३२ ॥

पुरा पुरारातिकथाविचारैः वयो न नीतं न च भूतिपूतम् ।
अतः परं वा भज सावधानं कालान्तकं भूतिविभूषणेन ॥ १३३ ॥

---

1 विजयाय ते पुनः C

शरद्राकालोकव्यतिकरसुधारश्मिसदृशप्रकाशातिग्मांशुस्फुरदुरुसुधामण्डलदृशम् ।
महेशं वीरेशं भज भज भजापारकरुणारसासारोदारप्रसरपरिसन्तर्पितदृशम् ॥ १३४ ॥

किं ते सन्ततमन्तकान्तककथासारप्रसारैरयं धन्यत्वं समुपैति पूतविततस्वान्ते भवन्तं स्मरन् ।
अश्रान्तामितभूतिभूतरहितो निर्धूतपापप्रभाव्यापारोऽपि परापवादरहितः शान्तो नितान्तं सदा ॥

संसारे न सुखं कदापि सुकृताम्भोधिप्रवृत्तः पुनः
नाशं याति सुखाम्बुराशिजननात् यागादिधर्मार्जितः ।
तस्मात् तत्परिहृत्य सन्ततमुमाकान्तं स्मरात्यादरात्
तेनान्ते तव नान्तकादपि भयं संसाररोगादपि ॥ १३६ ॥

उमाकान्तध्यानैर्न गतमिदमायुः प्रियतमप्रयासो यो वृत्तः सुरतविगमोपायनियतः ।
स एव व्यत्यस्तः पुनरपि स माराजिरशरप्रसारव्यापारप्रकरकरवीरप्रकरतः ॥ १३७ ॥

अहो दुष्टः कष्टं पतति पतितो मोहवडिशैः विषाकारापारव्यसनविषयोपायनियतैः ।
अतिश्रान्तः स्वान्ते तुहिनकरकान्तेऽतिनिरते उमाकान्तं शान्तो न भजति भुजङ्गाङ्गदमहो ॥

विद्याम्भोधिसमार्जनेन भुवने सभ्यत्वलाभो न वा
राज्यस्यापि समार्जनैर्नवनिधीन् प्राप्यापि कल्पायुषा ।
वीरोदारकुमारदारनिकरैः किं सादरैरप्युमा-
कान्ताराधनसाधनं यदि मनो न स्यात् तदा तद्वृथा ॥ १३९ ॥

मत्वा कालविलासमसाधनघनापायं व्ययं चायुषो
भाग्यस्यापि लयं मुहुर्मुहुरुमाकान्तं भजत्यन्ततः ।
सन्तः स्वान्तमनन्तमासनमिति ज्ञात्वा पुनस्तन्मुहु-
र्दत्वा ज्ञानजलाम्बुजैरनुदिनं तं पूजयन्त्यादरात् ॥ १४० ॥

ध्यात्वा स्वान्तनिविष्टमन्तकरिपुं तद्ध्यानधारामृतं
पीत्वा पीनमनोविलासपिशुनैरानन्दबाष्पैर्भृशम् ।
सिक्ताः केवलमन्तकान्तक महादेवेति नामामृतैः
सानन्दामृतराशिपूरणकराः तिष्ठन्तु हाराश्चिरम् ॥ १४१ ॥

अस्माभिः सकृदिन्दुमौलिचरणध्यानप्रवीणैरयं
संसारो विषसागरः परिहृतो नास्मान् समायात्ययम् ।

दारापारविहारनक्रविविधव्यापारसारादरो
हारोदारकथासुधानिधिरपि व्यापार[1] धीरान्तरम् ॥ १४२ ॥

वारं वारमुदारहारचरणध्यानामृतास्वादने संसारोरुदवानलाकुलजनव्यापारदूरादरः ।
दारास्तावदहो मुहुर्मुहुरहं हारैः परं सादरो दारानादर एव हारकथया कालव्ययायोद्यतः ॥ १४३ ॥

कुत्रानङ्गमतङ्गभङ्गगहने लिङ्गानि तुङ्गानि मे गङ्गातुङ्गतरङ्गसङ्गललितान्यालिङ्गनार्हाण्यपि ।
कुत्र श्रीफलपल्लवाः सकमलाः कालान्तकाराधनध्यानाराधनसाधनानि सततं तानि प्रियाण्यद्य मे ॥

सन्त्वन्ये तरवोऽपि बिल्वतरवो यस्मिन् वने पावने तस्मिन् पावनपावनेऽतिरुचिरे रेवांबुतीरे परे।
तन्नीरैरभिषिच्य लिङ्गममलं बिल्वीदलैरंकुरैर्दूर्वाणामपि शङ्करेऽतिकलये कालं न कालस्तदा ॥

यदा भूतिः फाले विमलतररुद्राक्षवलयः करे लिङ्गं तुङ्गं विमलजलबिल्वीदलयुतम् ।
पुरः शंभो भर्ग त्रिपुरहर पाहीत्यपि वचः तदा कालाद्भीतिर्न भवति शुभं भावि सततम् ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे भिल्लराज्ञीविरागोक्तिवर्णनं नाम
एकविंशोऽध्यायः ॥

---

## द्वाविंशोऽध्यायः ।

---

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा स राजा सत्यभाषणः । तां राज्ञीं विनतामाह शिवव्रतपरायणः ॥ १ ॥

त्वं शङ्करानुग्रहपात्रमेव चित्रं पवित्रं तव येन जातम् ।
पवित्रमूर्तिः सततं त्रिनेत्रः स्मृतः सकृद्वा स्मरणेन मुक्तिः ॥ २ ॥

जिह्वा पवित्रा तव पुण्यमूर्तेराख्या महेशस्य यया प्रवृत्ता ।
गङ्गा यथा तुङ्गतरङ्गभङ्गा हिमाचलापारगुहानदीभ्यः ॥ ३ ॥

यानावगाहनविलोकनलोलचित्तान् गङ्गा पुनाति शिवनाम सकृत् श्रुतं चेत् ।
हन्त्येव पातककुलान्यमितानि पश्चात् मुक्तिं प्रयच्छति विलक्षणमेव नाम ॥ ४ ॥

---

1 धीमान् परम् C

एवं मनस्ते खलु पूतमासीत् उमासहायस्मरणेन धन्यम् ।
जिह्वा तवेति स्मरवैरिनाम स्मर स्मरावारसुखाय सद्यः ॥ ५ ॥

संसाररोगविनिवारकमेतदेव माराररिनाम तदिदं सकलार्थहेतुः ।
श्रुतं स्मृतं वा हरतीह मोहं नयत्युमाकान्तपदारविन्दम् ॥ ६ ॥

त्वया पुरा शङ्करपादपद्मं सम्यक् समाराधितमेव तेन ।
भक्तिः प्रभूता खलु कालनेते तत्रैव मुक्तिर्बहुधा भवित्री ॥ ७ ॥

हन्त्येनांसि निहन्ति चान्तकभयं हन्त्यापदो वैरिणो
हन्त्यार्तिं च तथापकीर्तिविकृतीर्दैन्याज्ञतादुर्धियः ।
शोभाप्राभववैभवाश्रयशुभारंभैकभूः भो प्रभो
शंभो पाहि शिवेति वागपि परां मुक्तिं प्रयच्छत्यपि ॥ ८ ॥

कदापि यदि न श्रुता शिवशिवेति वाणी तदा कथं भवति जीवनं मरणकल्पमेवेदृशम् ।
ज्वलत्वनलमध्यगं भवतु भस्मसादप्यतः शिवस्मरणसाधनं भवति जीवनं जीवनम् ॥ ९ ॥

तृप्तिं न याति मम चित्तमुमासहायनामामृतं मुहुरपेक्षितमाशु पीत्वा ।
धन्योऽस्मि तेन कृतकृत्यतमोऽस्मि तस्मात् धन्यः शिवस्मरणतत्पर एव मर्त्यः ॥ १० ॥

दुर्लभं खलु महेश्वरलिङ्गं दुर्लभं खलु महेश्वरनाम ।
दुर्लभः खलु महेश्वरभक्तो दुर्लभं शिवकथामृतपानम् ॥ ११ ॥

अद्य धन्यमभवद्दिनं दिनं सर्वदाऽपि खलु नेदृशं यतः ।
शङ्करमङ्गलकथानुवर्तने नीतमेव कियदायुरादरात् ॥ १२ ॥

वयः खलु शिवार्चनश्रवणसाधनं पावनं तदेव धनमित्यपि प्रवदति प्रमाणं मम ।
अनुक्षणमिदं प्रियं गिरिशनामधेयालयं नभःश्रवणलक्षणं शुभदमन्यथा किं पुनः ॥ १३ ॥

पुरा पुण्यं किंवा कृतमखिलपापक्षयकरं न जाने जाने किं गिरिशचरणाम्भोजभजनम् ।
यदि ज्ञातं सद्यो न भवति कथं वा जनिभयं प्रणाशोप्याशायाः कथमपि न नाशो विधिवशात् ॥

अहो जन्मरागादिरोगव्यपायः पुरा नानुभूतोऽनुभूतोऽयमद्य ।
यतः शङ्कराख्यामृतं पीतमासीत् इदं दुर्लभं सर्वथा दुर्लभं हि ॥ १५ ॥

शाङ्गाङ्गसङ्गेन कदाचिदेवं भवत्युमाकान्तकथाभिषङ्गः ।

तेन प्रसङ्गेन सुखाभिषङ्गः शाङ्गाभिषङ्गोऽपि स मङ्गलाय ॥ १६ ॥

यत्कल्याणपरम्पराकरणतां प्राप्तं यदापत्कुलप्रध्वंसाशनितां च पातककुलापाराटवीवह्निताम् ।
तन्नाम स्मरवैरिणः शिवजनस्वर्गापवर्गप्रदं प्राप्तं कर्णपथं कथञ्चिदधुना पुण्यैरगण्यैः कृतः ॥ १७ ॥

शिवनामसुधाप्रवाहपूरव्यतिकरपात्रमिदं पवित्रमेकम् ।
अमिताद्भुतपुण्यपुण्यभूतं मम खलु चित्तमिदं प्रभूतपुण्यम् ॥ १८ ॥

न ज्ञातं गिरिजाभिधानसुधया तुल्यं पदार्थान्तरं
यत्सद्यः श्रुतमेव हन्ति बहुधा पापान्यपाराण्यपि ।
संपदानविधानदक्षमधुना स्वर्गापवर्गप्रदं
तत्तुल्यं जगतीतले ध्रुवमिदं लोकान्तरे वा ध्रुवम् ॥ १९ ॥

तत्तुल्या निधयोऽपि नैव नव ते शंखादयः केवलं
तिष्ठन्त्येव न भोगसाधनतया ज्ञातास्ततस्तैः सह ।
तुल्यं नाम न शांभवं शिवपदं तावद् धृतं मुक्तिदं
सर्वापद्विनिवारकं च सुतरां तद्भाग्यभोगप्रदम् ॥ २० ॥

यः कश्चिद्भुवि वाऽतुलोऽतिकलुषव्यापारधीव्याकुलो
यत् किञ्चिद्वदतु प्रधावतु मुहुर्मत्ताभिशस्तान्वितः ।
किं तेनाहमुमासहायचरणध्यानाभिधानश्रुतेः
मुक्तिः स्यादिति बाहुमूर्ध्वमसकृत् कृत्वा वदामि स्फुटम् ॥ २१ ॥

इत्याकर्ण्य वचः सुधामयमिदं राज्ञी प्रहृष्टा मुहुः
तं नत्वा शिवविद्यया च परया पूतां परं मां कुरु ।
इत्येतद्वचनं मुहुः श्रुतिपुटव्याप्तं च कृत्वा सकृत्
तामाहान्यत एव ते भवतु सा विद्या गुरोः शांभवात् ॥ २२ ॥

इत्याकर्ण्य वचस्तस्य शिवविद्याविलम्बतः । मूर्छिता भूतले सद्यः पपातातिकृशा नृप ॥ २३ ॥
ततः स भूपतिर्दृष्ट्वा मूर्छितां करुणानिधिः । अश्रुव्याकुलनेत्रान्तो नितान्तं तान्त एव सः ॥
तां दृष्ट्वा पतितां प्राह राजा हाहा वृथा गता । सेयं न पूता कल्याणी मुक्त्यै शांभवविद्यया ॥
अप्राप्य शांभवीं विद्यां तनुत्यागं करोति यः । स मुक्तो न भवत्येव शिवभक्तोऽपि वस्तुतः ॥
शिवविद्याग्निना दग्धे महापातकपर्वते । पश्चाद्भवति मुक्तिश्च शिवलोकावलोकनम् ॥ २७ ॥

शिवाचारोऽपि सहसा न विना शिवसेवया । तदधीनं तदाचारं विदुः शांभवपुङ्गवाः ॥ २८ ॥
अभिव्यक्ता यदि भवेत् सा विद्या शांभवोत्तमात् । तदाचाररतादेव तदाचारस्तदा भवेत् ॥ २९ ॥
दीक्षिताचारनियमो यतो नादीक्षितस्य सः । अतो दीक्षानुयोगेन दीक्षिताचारसङ्गमः ॥ ३० ॥
पुरा कश्चिदभूद्राजा गङ्गातीरे मनोहरे । तुङ्गलिङ्गसमाक्रान्ते चित्रकेतुरिति श्रुतः ॥ ३१ ॥
स शांभवो महाराजा सर्वभूचक्रपालकः । अपारधनवांस्तस्य मत्तमातङ्गकोटयः ॥ ३२ ॥
तस्योत्तुङ्गतुरङ्गाश्च रत्नानि विविधानि च । गोकुलान्यप्यपाराणि दासीनामपि कोटयः ॥ ३३ ॥
रुद्राक्षकण्ठास्ते सर्वे सदा भस्मविभूषिताः । तत्पोषकाश्च ते सर्वे भूतिरुद्राक्षभूषणाः ॥ ३४ ॥
तुङ्गं तुरङ्गमासाद्य भूतिरुद्राक्षभूषितम् । स राजा विपिनं याति विहाराय कदाचन ॥ ३५ ॥
न तेन निहतो जन्तुर्वनेऽप्याखेटके सति । रुरून् गृह्णाति तरसा तुरङ्गाधिष्ठितो नृपः ॥ ३६ ॥
तं गृहीत्वा रुरुं तस्य कण्ठे रुद्राक्षमालिकाम् । दत्वा भूतिं त्यजत्येव शिवनाम समुच्चरन् ॥
तस्मिन् राष्ट्रे वने क्वापि नारुद्राक्षो मृगो नृप । नालिङ्गं बिल्वमूलं च नालिङ्गं च नदीतटम् ॥
आनम्रतरुशाखाभ्यः पत्राण्यस्यै मृगा अपि । आनीय लिङ्गे दत्वैव प्रयच्छन्ति तृणान्यपि ॥
अरण्यतरुवृक्षेभ्यः फलान्यादाय सादरम् । बिल्वमूले प्रयच्छन्ति शिवलिङ्गार्थमित्यपि ॥ ४० ॥
तृणं शिवार्पणं कृत्वा जलं च नवमादरात् । स्वयं गृह्णाति शिरसा शिवस्मरणपूर्वकम् ॥ ४१ ॥
ये मयूरादयस्तस्मिन् अरण्ये ते विभूषिताः । रुद्राक्षैर्भस्मनाप्येवं नारुद्राक्षैर्विलोक्यते ॥ ४२ ॥
दवभस्मनि सर्वेऽपि कृत्वाङ्गपरिवर्तनम् । शिवं स्मरन्तः पश्यन्तः शिवलिङ्गानि ते नृप ॥ ४३ ॥
तुरङ्गमत्तमातङ्गभक्ष्यं भूतिकणाश्रितम् । न भूतिरहितान्नानि भक्षणार्हाणि भूपते ॥ ४४ ॥
भूतियुक्तं यदेवान्नं तत् कृत्वा शङ्करार्पणम् । अश्वादिभ्यः प्रयच्छन्ति गजाश्वादिकरक्षकाः ॥४५॥
तस्मिन् राष्ट्रे जनः क्वापि न शिवानर्चको नृप । शिवालयाश्च सर्वत्र भस्मराशिविराजिताः ॥४६॥
रुद्राक्षमालासंवीता लिङ्गसंमर्दभास्वराः । प्रतिसद्मनि लिङ्गानि तुङ्गानि विमलान्यपि ॥ ४७ ॥
नार्मदानि विचित्राणि बिल्ववृक्षाः सपल्लवाः । शिवार्चनसमाकीर्णाः तद्देशावासभूमयः ॥ ४८ ॥
शिव शङ्कर विश्वेश महादेवेति वादिनः । सदाचाररता एव सर्वे तद्देशवासिनः ॥ ४९ ॥
सर्वे शिवकथामेव शृण्वन्ति विबुधोत्सवे । बालकाश्च विशेषेण शिवनामामृतोत्सुकाः ॥ ५० ॥
योषितामपि सर्वासां भस्मरुद्राक्षभूषणम् । रुद्राक्षारहितं तासां कण्ठसूत्रं न सर्वथा ॥ ५१ ॥
मङ्गलापतिरूपस्य रुद्राक्षस्य विशेषतः । नित्यं मङ्गलसूत्रेषु धारणं मङ्गलान्वयात् ॥ ५२ ॥

अमङ्गलत्वानि निराकरोति रुद्राक्षवन्मङ्गलसत्वमेतत् ।
विभूतियुक्तं च विभूतिदं स्यात् अतः परं मङ्गलसत्रमुक्तम् ॥ ५३ ॥

धिग् धिग् फालं भस्महीनं विहीनं धिग् धिग् गात्रं भस्मरुद्राक्षहीनम् ।
धिग् धिक्चित्तं शङ्करध्यानशून्यं धिग् धिग्गेहं लिङ्गसंबन्धहीनम् ॥ ५४ ॥

शिवशब्दविहीनवाग्विलासो धिगवश्यं धिगवश्यमेव धिग् धिग् ।
स यतः परमायुषः क्षये विनियुक्तः शिवशब्दवर्जितः ॥ ५५ ॥

श्लोके यस्मिन्नाम नास्त्येव शार्वं सोऽपि श्लोकः किन्तु शोकः परं सः ।
सर्वं शोकं हन्ति पापानि शार्वं यस्मिन् श्लोके नाम सद्यो विमुक्त्यै ॥ ५६ ॥

सा वाणी खलु पुण्यदाननिपुणा या शंभुनामान्विता शंभो शङ्कर चन्द्रशेखर महादेवेति संवादिनः ।
सर्वे तत्पुरवासिनोऽपि सुतरां तद्देशसंवासिनः तन्नामध्वनिपूरितं जगदभूत् सर्वं सदा भूपते ॥

तं भूपालमणिं वदन्ति कवयः ते शाङ्कराराधकं
तं दृष्ट्वा प्रणमन्ति सोयममरः कोपीति पुण्याम्बुधिम् ।
केचित् तं प्रवदन्ति शङ्कररतं दृष्ट्वा प्रहृष्टाः परं
दृष्टः कष्टविनाशकोऽपि सततं शिष्टो गरिष्ठेषु सः ॥ ५८ ॥

तद्देशमन्यमराङ्गनाः प्रतिदिनं गत्वा तदीयाङ्गणे
शर्वाराधनतत्पराः सितलसद्भूतित्रिपुण्ड्राङ्किताः ।
रुद्राक्षाभरणाः समीक्ष्य विनताः तत्पादपद्मान्यमी
धन्या इत्यपि ताभिरीश्वरकथाः शृण्वन्ति नृत्यन्ति च ॥ ५९ ॥

शंभो भर्ग भवेति गायनमपि श्रुत्वैव ताभ्यो मुहुः
तन्नामव्यसनेन सादरमुमाकान्तार्चनालोकनैः ।
नीत्वा कालमुमापतिं हृदि मुहुर्ध्यात्वा प्रयान्त्यन्वहं
गत्वा ताः पुनरादरेण गमनोद्युक्ताः सुरप्रेषिताः ॥ ६० ॥

तस्मिन् शासति भूलोकं भूलोके सुरसंश्रिते । अशांभवकथा वार्ता निवृत्ता सर्वथा नृप ॥ ६१ ॥

दुर्भिक्षादिभयं न तस्य नगरे देशेऽपि वा सर्वदा
सर्वं भूतलमुज्ज्वलाखिलफलं पुष्पैः फलैश्चान्विताः ।

तद्देशे तरवः सदा स्वसमयापेक्षा न तेषां कदा-
प्यार्तिर्नैव जनस्य कीर्तिसहितः सर्वोऽपि शार्वो जनः ॥ ६२ ॥

यदा यदा वृष्टिरपेक्षिता तदा वृष्टिर्भवत्येव विलक्षणा सा ।
नात्यातपो नातिहिमं च तस्मिन् राज्ये नृपे शांभवपुङ्गवेऽस्मिन् ॥ ६३ ॥

गवां तृणं नूतनमेव तस्मिन् राष्ट्रे शिवाचाररतेऽपि भूपे ।
सदा बहुक्षीरदुघाश्च गावो वत्साः प्रवृद्धाः पयसा परं ते ॥ ६४ ॥

गवां निरोधोऽपि वने न तासां न व्याघ्रजा भीतिरघातुकास्ते ।
व्याघ्रादयः शांभवपुङ्गवेन संरक्षिता भूरिति सर्वदापि ॥ ६५ ॥

गावश्चरन्ति नवघासचरार्थमेव रम्ये वने वनवनार्थमपि प्रवृत्ताः ।
दृष्ट्वैव बिल्वतरुमूलगतानि लिङ्गान्यालिङ्ग्य लिङ्गजलमेव पिबन्ति धन्याः ॥ ६६ ॥

क्षीरप्रस्रवणेन बिल्वनिलयं लिङ्गं समभ्यर्च्य गाः
स्थित्वा शङ्कर शङ्करेति च मुहुः वत्सोत्सवाकारणाम् ।
श्रुत्वा गौरि शिवे शिवेति च वचः श्रुत्वा प्रयान्त्यादरात्
गोपालैरभिनन्दिताः प्रतिदिनं पुष्टास्तृणग्रासतः ॥ ६७ ॥

पुंव्यक्तिस्त्वखिलासु शङ्कर महादेवेति नामादरात्
स्त्रीव्यक्तिस्त्वखिलासु गौरि गिरिजे कालीति नामादरात् ।
तद्देशे शिवनामचिह्नितमभूत् सर्वं सदा भूपतिः
यस्माच्छांभव एव तेन सुकृतांभोधिः प्रवृद्धो मुहुः ॥ ६८ ॥

चरन्त्यरण्येषु वनेषु निर्भयाः चोरादयस्तत्र न संश्रिताश्च ।
व्याघ्रादयो घातुकजन्तवोऽपि वृत्तिं मुनीनां समुपाश्रितास्ते ॥ ६९ ॥

तस्मिन् शासति भूपाले भूलोके मरणान्यपि । भवन्ति स्वेच्छया तत्र न मृत्युगमनं खलु ॥
मरणानन्तरं भूप सर्वे तद्देशवासिनः । पुष्पकाणि समारुह्य प्रयान्ति शिवमन्दिरम् ॥ ७१ ॥
सशरीराः प्रयान्त्यन्ये त्यक्त्वा केचित् तनुं मुदा । शरीरान्तरमासाद्य भूतिरुद्राक्षभूषितम् ॥

रुद्राक्षभूतिसमलङ्कृतदिव्यदेहाः शम्भो महेश इत्यभिलापनेन ।
आरुह्य पुष्पकवरं गिरिशं प्रयान्ति तूर्येण तावदभितोऽप्यनुभूय तोषम् ॥ ७३ ॥

कैलासमार्गगमने शिवपूजनस्य काले स्वभावनियमेन शिवार्चनानि ।
मन्दारमूलनिलयेषु मनोहरेषु कुर्वन्ति पुष्पनवबिल्वदलादिभिस्ते ॥ ७४ ॥

सर्वे कल्पतरुप्रभूतकुसुमैः पक्वैः फलैर्निर्मलैः
श्रुत्वा देवनदीजलैरपि मुहुर्लिङ्गार्चनं सादरम् ।
कृत्वा स्वादुशिवोपहारमसकृत् भुक्त्वा स्मरन्तः शिवं
दृष्ट्वा नृत्यमपि प्रयान्ति शिव मां पाहीति संवादिनः ॥ ७५ ॥

कैलासमार्गगमने पथि पुष्पशय्याः कल्पद्रुमामलतलेषु सुधाप्रवाहाः ।
पक्वानि तान्यपि फलानि मनोहराणि पुष्पाणि नीरललितानि शिवोत्सवानाम् ॥

पुष्पासाराश्चारुकैलासमार्गे वीणानादाः शङ्कराराधकाश्च ।
मध्ये मध्ये रत्ननीराजनानि रम्यं हर्म्यं पुष्पशय्यासमेतम् ॥ ७७ ॥

चामीकरातिरुचिरोन्नतचामरौघैः ते वीजिताः पथि गणाधिपमन्दिरेषु ।
मुक्ताकलापरुचिरेषु मनोहरेषु विश्रम्य यान्ति शिवमन्दिरमीशभक्ताः ॥ ७८ ॥

नारायणादिसुरबृन्दकृतप्रणामान् दृष्ट्वा कराभिनयनेन परं गृहीत्वा ।
तैः संस्तुताश्च मुहुरुन्नतकन्धरास्तान् दृष्ट्वा प्रयान्ति शिवमन्दिरमीशभक्ताः ॥ ७९ ॥

धन्याः प्रयान्ति शिवमन्दिरमम्बुजाक्षि पद्मे विलोकय विलोकय तानपीति ।
नारायणस्य वचनेष्वपि सादरास्ते श्रुत्वा प्रयान्ति शिवमन्दिरमीशभक्ताः ॥ ८० ॥

रुद्राक्षभूषणविभूषणभूतदेहाः ते यान्ति शङ्करपदं कमले प्रपश्य ।
पश्येति विष्णुवचनेष्वपि सादरास्ते श्रुत्वा प्रयान्ति शिवमन्दिरमीशभक्ताः ॥ ८१ ॥

भस्मत्रिपुण्ड्ररचनार्जितपुण्यवन्तस्ते यान्ति शङ्करपदं कमले प्रपश्य ।
पश्येति ... मीशभक्ताः ॥ ८२ ॥

लिङ्गार्चनार्जितमनोहरपुण्यपूर्णास्ते यान्ति शङ्करपदं कमले प्रपश्य ।
पश्येति ... मीशभक्ताः ॥ ८३ ॥

पञ्चाक्षरश्रवणकीर्तनपूतचित्तास्ते यान्ति शङ्करपदं कमले प्रपश्य ।
पश्येति .... मीशभक्ताः ॥ ८४ ॥

रुद्राभिषेकजलपानविशुद्धचित्तास्ते यान्ति शङ्करपदं कमले प्रपश्य ।
पश्येति ... मीशभक्ताः ॥ ८५ ॥

हारोपहारकृतभोजनपुण्यवन्तस्ते यान्ति शङ्करपदं कमले प्रपश्य ।
पश्येति ··· मीशभक्ताः ॥ ॥ ८६ ॥

रमे दारास्तेषामनवरतमीशार्चनरताः कुमारास्तत्कन्याः शिवभजनचित्ताः सुनिरताः ।
विभूत्या पूताङ्गाः सितभसितरुद्राक्षललिताः तदीयास्ते यान्ति स्मरहरपुरं पश्य विमलान् ॥

रमे भाग्यं तेषां मदनहरपूजार्थमभवत् तदीयास्ते पुत्राः शिवभजनपूजार्जितधनाः ।
प्रपश्येदं भाग्यं किमपि नयनानन्दजनकं त्रिपुण्ड्रं तत्काले कररुचिररुद्राक्षवलयम् ॥ ८८ ॥

रमे जिह्वा तेषां शिवशिव महेशेत्यपि मुहुः सुधां पीत्वा पीतां पुनरपि पुनः पश्य विमलाम् ।
इयं धन्या मान्या भुजगपतिमान्यापि सततं शिवं स्तोतुं याति स्मरहर महद्भाग्यमिति ताम् ॥

इयं वाणी पश्यत्यतिविनयनम्रान् शिवरतान् मुहुर्दृष्ट्वा दृष्ट्वा पुनरपि शची पश्यति मुहुः ।
इयं छाया पश्यत्यपि मुहुरयं धन्य इति तं शिवाचारं पश्य [1] स्मरति च कथालोलममलम् ॥

धन्याः प्रयान्ति शिवमन्दिरमिन्दिरे ते गौरीमनोहरपदाम्बुजपूजनेन ।
पश्याधुना मुहुरयं न महोत्सवः स्यात् एते प्रयान्ति शिवमेव सदा प्रपन्नाः ॥ ९१ ॥

धन्यास्ते शिवलिङ्गपूजनरतास्तद्वीक्षणेन क्षणं धन्यं तावदतः परं शिवरतः क्वास्तीन्दिरे सुन्दरम् ।
मन्दारैरपि सुन्दरैरपि पुनस्तत्पादुकाराधनं कर्तव्यं गिरिशालयं प्रति मुदा नाप्यम्बिकालोकिता ॥

कमलामललोचने विशाले नयने ते शिवभक्तपादपद्मम् ।
मुहुरादरतो विलोक्य सद्यः कृतकृत्यत्वमवाप्य किं न तुष्टे ॥ ९३ ॥

क्व पुनर्वद शांभवा भवन्तः पुरमाविश्य न यान्ति सर्वथापि ।
अत एव विलोकयाशु भक्त्या कमले नेत्रयुगेन पुण्यसिद्ध्यै ॥ ९४ ॥

पुण्यं शांभवदर्शनेन महता तत्पूजनेनाप्यतः
ते दूरे गमनं न तत्र गमनं तद्दर्शनं वा कुरु ।
तावन्मात्रमदृष्टतोऽद्य समभूत् तत्पादुकालोकनात्
पापापज्जलराशयोपि सुतरां शुष्यन्ति नश्यन्ति च ॥ ९५ ॥

अहो पुण्यमस्माकमद्यानुकूलं शिवाराधकालोकनायानुवेलम् ।
अलं जन्मनाऽनेन जन्मान्तरे वा महादेवभक्ताङ्घ्रिपद्मं भजामि ॥ ९६ ॥

---

1 स्मरहर C

भवानीपते पाहि पाहि त्रिशूलिन् भवत्पादुकाराधकालोकनेन ।
मनो मे प्रवृत्तं भवत्पादपद्मे प्रणामप्रवाहस्त्वयं महेश ॥ ९७ ॥

भाग्यं न कैलासगिरीन्द्रवासप्रसादने यद्यपि किं तथापि ।
त्वत्पादपद्मस्मरणानुरक्तिः विरक्तिरप्यस्तु शिवासहायात् ॥ ९८ ॥

इत्युच्चैरुच्चरन्तं सुरगणसहितं वीक्ष्य लक्ष्मीपतिं ते
दृष्ट्वा ते पुष्पकाग्राद्गिरिवरतनयाकान्तमेव स्मरन्तः ।
गत्वा कैलासलोकं शिवचरणरजःपुञ्जसङ्गाद्विमुक्ताः
ते तावल्लिङ्गपूजाफलमखिलमिदं प्रापुरेवानिवृत्त्यै ॥ ९९ ॥

तस्मिन् शासति शांभवे भुवि सदा भावप्रभावोत्सवे
तिष्ठन्त्यन्तकभीतिमात्ररहिताः सर्वेऽपि लोकाः सदा ।
रोगेभ्यो न भयं न भूतजनिता भीतिर्नवाऽरातिजा
नागेभ्यो न भयं जलाच्च न भयं भीतिर्न वात्यादिभिः ॥ १०० ॥

पुत्रपौत्रादिसंपन्नाः सर्वे तद्देशवासिनः । धनधान्यादिसंपन्नाः सर्वे नित्यमहोत्सवाः ॥ १०१ ॥
शुभानि सततं तेषां गृहेषु शिवपूजया । कदाप्यशुभवार्तापि तद्देशेषु न सर्वथा ॥ १०२ ॥
न पुत्रमरणं दृष्टं नृपतेर्देशवासिभिः । न दृष्टान्येव तत्रत्यैः पौत्रादिमरणान्यपि ॥ १०३ ॥
सिन्दूररेणुसंपूर्णसीमन्तातिमनोहराः । दाराः सर्वेपि तद्देशे दारा न पतिवर्जिताः ॥ १०४ ॥
सति भर्तरि नारीणां मरणं नैव सर्वथा । न पुत्रक्लेशसंयुक्ताः केऽपि तद्देशवासिनः ॥ १०५ ॥
तद्देशे शोकवार्तापि नास्ति सर्वात्मना नृप । शिवपूजारताः सर्वे पतिशुश्रूषणे रताः ॥ १०६ ॥
भर्तुरेव प्रियं नित्यं तद्दारैरभिवांछितम् । न दारकलहस्तत्र सपत्नीनां नृपोत्तम ॥ १०७ ॥
शिवनामजपेनैव समयस्तैः समाप्यते । अतो नावसरस्तेषां लौकिके कलहेऽपि वा ॥ १०८ ॥
कृत्वा लिङ्गार्चनं सर्वे प्रार्थयन्ति महेश्वरम् । कृताञ्जलिपुटा एव प्रणताः सादरं मुहुः ॥ १०९ ॥

भक्तिप्रदानसमयोऽयमुमासहाय त्वत्पादपद्मभजनेन निरन्तरायम् ।
त्वय्येव भक्तिरखिलाघविनाशनाय देहि प्रसीद भगवन् शरणागताय ॥ ११० ॥

त्वत्पादपद्ममकरन्दरसाभिषिक्तं मच्चित्तभृङ्गमसकृत् कुरु शर्व शंभो ।
मत्प्रार्थनीयमिह नान्यदुमासहाय धन्योऽस्मि तेन धनिकोऽस्मि जगत्त्रयेऽपि ॥

यद्यन्ममाभिलषितं तदुमासहाय सिद्धं त्वदंघ्रिकमलार्चनभक्तिलेशात्।
अन्यन्न वांछितमपीश किमस्ति लोके त्वद्भक्तिदुर्लभमिति प्रतिभाति नित्यम्॥

आकांक्षा शिवनाममात्रभजने भस्मत्रिपुण्ड्रे तथा रुद्राक्षाभरणेऽपि शङ्कविलसल्लिङ्गार्चनेऽपि प्रभो।
लिङ्गाराधनसाधनेष्वपि मुहुर्लिङ्गप्रणामेऽपि मे लिङ्गालोकनलोलमेव सततं चित्तं समास्तु प्रभो॥

मन्नेत्राम्बुजकृत्यमस्तु सततं बिल्वादिकाभ्यर्चितापाशानङ्गविहारभङ्गविलसल्लिङ्गार्चनालोकनम्।
तेनैतज्जननं च धन्यमिति मे बुद्धिः प्रवृद्धा मुहुः भूयादित्यनुवासरं भवतु मे संप्रार्थनीयं प्रभो॥

श्रोत्रस्यापि न कृत्यमन्यदधुना विश्वेशपूजाकथापीयूषार्णवपानमेव मुहुरप्यत्यादरेणान्वहम्।
तत्कृत्यं तदपारपुण्यजलधौ प्राप्यं तदेवान्तकं दूरीकर्तुमलं तदेवमसकृत् सर्वार्थसिद्धिप्रदम्॥

कृत्यं मत्करयोर्महेश्वर महालिङ्गालयप्रोक्षणं लिङ्गाभ्यङ्गविलेपनं च विलसत्पश्चामृतासेचनम्।
उत्फुल्लामलकुन्दपङ्कजलसद्बिल्वीदलाभ्यर्चनं कर्पूरागरुसारकर्दमलसत्पाटीरसारार्पणम्॥ ११६॥

क्षीरान्नार्पणधूपदीपविलसन्नीराजनार्घ्यर्पणं रत्नच्छत्रसमर्पणं च विपुलश्रीचामरार्घ्यर्पणम्।
यच्चामीकरदर्पणार्पणमपि प्रायः प्रणामार्पणं कृत्यं मत्करयोर्भवत्वनुदिनं गौरीविहारादर॥ ११७॥

जिह्वाकृत्यमुमासहायचरणाम्भोजार्चनाराधनध्यानानुस्मरणप्रभावकथनं तन्नामसङ्कीर्तनम्।
तद्गौरीरमणोपहारसुरसव्याख्यानमप्यादरात् तत्पूजाकरणानुवादनमपि श्रीनीलकण्ठ ध्रुवम्॥

नासाकृत्यमुमासहायचरणाम्भोजार्चितात्युल्लसद्बिल्वीपल्लवफुल्लनीलकमलामोदग्रहस्तत्करः।
उग्रानुग्रहतः समग्रत इति ज्ञेयो महानुग्रहो हाराहारसुगन्धसुन्दरमिदं नासापुटं धूर्जटे॥ ११९॥

प्रणामव्याजेन स्मरहर भवत्पादरजसः शिरोमल्लक्रीडां सकृदपि करोतु प्रणयतः।
शिरःकृत्यं तावद्भवति खलु तेनैव तरसा न सा किं मोक्षश्रीरमणमपि मामेव कुरुते॥ १२०॥

कृत्यं न मे चरणयोरपि शङ्करान्यत् श्रीकाशिकानगरसंचरणालसौ तौ।
स्यातामतः परमुमारमणानुवारं कृत्यं तदेव न तयोरपि किं विशिष्य॥ १२१॥

शंभो फालतलं विभूतिविलसद्रेखाङ्कितं सर्वदा स्यादेतेन नवेन्दुखण्डललितं फालं भवेत् तावता।
तत्कृत्यं च समाप्तमेवमसकृत् तत् प्रार्थनीयं त्वया कर्तव्यं खलु पूर्णमेव भगवन् संपूर्णकाम प्रभो॥

अर्थिप्रार्थितमर्थजातमसकृद् दातुं समर्थो भवान्
शंभो शांभववत्सलातिकरुणान्येतस्य सर्वाण्यपि।
त्वन्नामस्मरणार्चनादिनिरतान्येवादरात् सन्तु मे
तान्येवास्मदभीष्टसिद्धिफलदानीति स्मरामि ध्रुवम्॥ १२३॥

अस्मत्सन्ततिरप्यनन्तविभवैर्भावैः प्रभूतैर्युता
लिङ्गाराधनसाधनोद्यतमतिः सा कालकालार्चनात् ।
कालाद्भीतिमपास्य मौनिनिकराशास्याशु पश्चास्य ते
तावत्पुण्यकथाः शृणोतु सततं सम्पत्प्रवृद्धाऽपि सा ॥ १२४ ॥

अस्माभिः शिवलिङ्गपूजनफलं प्राप्तं श्रुतेर्यच्छ्रुतं तन्नारायणवाक्पतिप्रभृतिभिर्देवैर्मुहुः सादरम् ।
धन्योऽयं शिवपूजकस्त्रिभुवनाराध्योऽयमित्युच्यते नित्यं मत्सदनाश्रितैरपि गृहव्यापारसारादरैः ॥

भूलोकोऽप्यधुना महेशकृपया कैलास एवाभवत् नन्दीशप्रमुखाश्च सन्ततमुमाकान्तार्चने सादरम् ।
मन्दं मन्दरमेत्य सुन्दरतरं वीरेश्वराराधको धन्यो धन्यतमोऽयमित्यनुदिनं मां प्रस्तुवन्तीत्यतः ॥

शिव शिव शिव शम्भो चन्द्रमौले कपर्दिन् अनलविमलकालावाललीलाविलास ।
वस वस वस वासे मन्मनस्येव लास्यं कुरु कुरु कुरु गौरीं सन्निवेश्याङ्कभागे ॥ १२७ ॥

उत्फुल्लं मम मानसांबुजवरं तत्कर्णिकायां शिवा-
मालिङ्ग्यान्वहमादरेण गिरिजाजाने शिवोमापते ।
पाहीति शृणु तत्कराम्बुजमहावीणां गृहीत्वा क्षणं
तन्त्रीवादनलालसः शिव शिवे कल्याणगौरीति च ॥ १२८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे चित्रकेतुनामकशैवराजचरित्रवर्णनं नाम

द्वात्रिंशोऽध्यायः ॥

---

## अथ त्रयोविंशोऽध्यायः ।

---

याज्ञवल्क्यः —

भूयः स भूमण्डलमण्डनत्वात् ततेन्दुखण्डाभरणार्चनेन ।
अखर्वशर्वार्चनजातपुण्याः सर्वे वरेण्याः सततं धरण्याम् ॥ १ ॥

उमाकान्तं शान्तं किमिति न भजामो मुहुरहो महाहारैर्दारैरुरुतरविहारैः सह सदा ।
महादेवध्यानप्रथितसुधया निर्मलधिया कथं न स्वान्तं वै कथमपि न विश्रान्तमधुना ॥ २ ॥

स्फुरद्रत्नागारव्यतिकरचलच्चारुचपलाविलासप्रासादप्रसरदुरुशीतांशुकिरणैः ।
स्रवन्नीरं हारं रुचिकरमुपस्पृश्य च मुहुः मुहुर्दातुं लिङ्गं करकमलसङ्गं न कलये ॥ ३ ॥

महादेवं विल्वीदलकमलकल्लोलकमलप्रवालव्यालालिप्रलयजलजानन्ददरसैः ।
समाराध्याराध्यं सदयमुदये सायमसकृत् मया नेयः सोयं समय इति बुद्धिः प्रसरति ॥ ४ ॥

न दैन्यं दैन्यारिस्मरहरपदाम्भोजरचनात् अदीनानां चित्तं कथमपि न चिन्ताकुलमतः ।
प्रसन्नं पश्यामः त्रिनयनमिहासन्नमसकृत् लसद्बिल्वीमूले नवविमलबिल्वार्चितपदम् ॥ ५ ॥

विपन्नाशस्यायं समय इति मन्ये मुहुरहं महादेवो यस्मादसकृदधुना स्मर्यत इति ।
अयं सोऽयं धन्यः समय इति मन्ये मुहुरहं महामोहो नाशं गत इति मुहुर्मोदसहितः ॥ ६ ॥

महोत्साहस्यायं समय इति मन्ये मुहुरयं मुहुर्मन्ये मन्ये मुहुरपि हि मन्ये मुहुरपि ।
यतश्चित्तांभोजे शिवचरणपङ्केरुहरजः प्रविष्टं कष्टानामपनयनमासीन्मुहुरहो ॥ ७ ॥

किं किं न दातुमभिवांछति चन्द्रमौलिः भक्त्या स्मृतोऽपि सकृदादरतः स्तुतोऽपि ।
भीत्या ततोऽपि स यतः प्रणतः स्तुतो वा भक्ताय भाग्यनिधये स्वपदं ददाति ॥ ८ ॥

वितरणगुणसिन्धुर्बन्धुरेव स्वभक्तान् अयमगपतिकन्याकान्त इत्येव मन्ये ।
अहमपि सकृदाशापाशनाशाय सायं शिव शिव शिव पाहीत्युच्चरामि स्मरामि ॥ ९ ॥

उच्चैरुच्चार्य नाम स्मरहर हर मां पाहि पाहीति शैवं
　　कृत्यं नृत्यन् शिवाग्रे सितभसिततनुस्थूलरुद्राक्षमालः ।
कैलासावासवार्तारुचिकरसुसुधापानपीनः कदा वा
　　दत्वा प्राणोपहारं शिव शिव शिव ते यामि कैलासवासम् ॥ १० ॥

कल्याणानां वासमेवेति मन्ये तं कैलासं सोऽपि कैलासवासः ।
या कल्याणी तत्पतेरर्चनाद्यैः इत्यस्माकं बुद्धिरेव प्रवृद्धा ॥ ११ ॥

शर्वाणीरमणार्चने यदि मनः पुण्यैः प्रवृत्तं तदा
　　कल्याणानि पदे पदेऽपि बहुधा संपत्प्रवाहोदयः ।
आपत्काननाश एव बहुधा पापाब्धिसंशोषणं
　　तेन स्यादिति बुद्धिरद्य समभूत् वेदान्तवाक्यैर्मुहुः ॥ १२ ॥

यद्यच्छोभनमित्यवैमि भुवने तत्तन्महेशार्चनात्
　　तावज्जातमिति स्मरामि करणं कार्यैः परं ज्ञायते ।
तत्कार्याणि विना न तेन करणाभावे क्व कार्याणि वा
　　संपन्नानि भवन्ति सन्ततमिति स्वान्तं वदत्येव मे ॥ १३ ॥

स्मृतोऽपि हरति व्यथाममितरोगजालोद्भवां अपारकरुणानिधिर्गिरिकुमारिकाकामुकः ।
स कालजनितव्यथामपि हरत्यकस्मात् स्तुतः सुरासुरशिरोमणिः स खलु शूलपाणिर्मणिः ॥ १४ ॥

अस्माकं कुलदैवतं शिव इति ज्ञातो गुरुः शांभवैः
संबन्धोऽपि स शांभवैः सह सहालापोऽपि शैवैः सह ।
प्रीतिस्तैः सह सर्वदाऽपि सह तैः वासोऽपि शैवान्वये
मागा आमरणं ततः परमपि प्रायो न सन्त्येव ते ॥ १५ ॥

अस्माकं सुकृतस्य नावधिरुमाकान्तार्चनाराधनध्यानासेवनकारणानि करणान्यत्यद्भुतान्येव तैः ।
कालो धिक्कृत एव कालसदनावासादिवार्ता कुतः क्वास्माकं जननादिकादपि भयं संसारजं वा भयम् ॥

सर्वत्राभयमेव नः शिवपदाम्भोजार्चनात् सर्वदा
सन्तोषाम्बुधिवृत्तिरेव सततं सर्वापदां विप्लवः ।
एतद्भाग्यमशांभवस्य न कदाऽप्यस्तीत्यतः शांभवे-
ष्वस्ति स्वस्तिमतिर्मतिः शिवतरध्यानानुकूला सती ॥ १७ ॥

शुद्धा शांभवतापि तावदधुना भाग्यान्यपाराण्यपि
प्राज्यं राज्यमसज्यमेव हि धनुर्वीराः कुमारा अपि ।
दारा अप्यमरीसहारकवरीभारप्रमाणादराः
शर्वाणीरमणांघ्रिपङ्कजरजोलेशप्रसादात् परम् ॥ १८ ॥

इत्युक्त्वा स नृपालशेखरमणिस्तं शूलपाणिं मुहुः
कृत्वा कालविलासजालमसकृत् निर्मूलराज्ये स्वके ।
दारैः शङ्करसादरैः शिवपरैर्वीरैः कुमारैरपि
प्राप्यापारसुखं शिवैकशरणः क्रीडावनान्तं ययौ ॥ १९ ॥

तद्वनं नागपुन्नागनारिकेलसमन्वितम् । रसालसालसरलकदलीपूगवेष्टितम् ॥ २० ॥
केतकीमाधवीजाजीमधूकवनमण्डितम् । हंसराजीसमाकीर्णसरोवरविराजितम् ॥ २१ ॥
तत्रातिसुन्दरं दृष्टं शाङ्करं रत्नमन्दिरम् । रत्नप्रासादसंयुक्तं नक्षत्रगणवेष्टितम् ॥ २२ ॥
मुक्ताहारा इवाभान्ति नक्षत्राणि विशेषतः । शिवालयस्य शिखरे प्रासादेष्वपि कोटिशः ॥ २३ ॥
शिखराभरणत्वेन चन्द्रः सूर्यश्च सर्वदा । भाति तत्र विशेषेण शिखरे शिवमन्दिरे ॥ २४ ॥
रत्नैर्विनिर्मितास्तत्र नन्दिकेश्वरविग्रहाः । गणानामपि सर्वेषां विभान्ति मणिविग्रहाः ॥ २५ ॥

चित्राण्यपि विचित्राणि मणिभित्तिषु कोटिशः । नाट्योत्सवोद्यतान्येव प्रदोषेषु विशेषतः ॥२६॥
परितो बिल्वतरवो नवपल्लवमण्डिताः । तेऽपि धन्या वयं तावदित्यन्योन्यं वदन्ति ते ॥ २७ ॥
शिवालयस्य निकटे जन्म जातं स्थितिः सदा । रुद्राभिषेकपानीयैः पालनं च प्रजायते ॥ २८ ॥
अस्माकं पल्लवैरेव शङ्करोऽयं प्रपूज्यते । इतः किमधिकं भाग्यं पुण्यं वा किमतोऽधिकम् ॥ २९ ॥
आकारयन्ति तरवः तरसा शाङ्करं परम् । मदीयाः पल्लवा रम्याः मदीयाः पल्लवा इति ॥ ३० ॥
आरक्ताः कोमला एव पल्लवाः कमलामलाः । आयान्तु शाङ्कराः सर्वे गृह्णन्त्विति वदन्ति ते ॥
अखण्डैरमलैरेतैः अनन्तैर्बिल्वपल्लवैः । पूजयन्त्विति नम्रास्ते भवन्ति तरवः स्वतः ॥ ३२ ॥
सरोजान्यपि सर्वाणि गृह्णन्त्विति विशेषतः । आकारयन्ति सहसा शाङ्करान् भूतिभूषितान् ॥
मधुकाद्याश्च सर्वेऽपि तरवः पुष्पसंकुलाः । हारानाकारयन्त्येव शिवपूजापरायणान् ॥ ३४ ॥
मदीयानि मनोज्ञानि पुष्पाणि विमलान्यपि । अद्य गृह्णन्तु गृह्णन्तु गृह्णन्त्विति वदन्ति ते ॥३५॥
दूरादाकारयन्त्यन्ये नत्वा शाखाभिरादरात् । अस्मदीयप्रसूनानि गृह्णन्त्विति विशेषतः ॥ ३६ ॥

दूरात् स्थितास्ते तरवो वदन्ति नासीत् कथं वा शिवसन्निधानम् ।
अस्माकमित्यार्तवचोभिरुच्चैः [1]प्रिया हि वार्ता दयिता विदेशे ॥ ३७ ॥

तादृशं वनमासाद्य स राजा विस्मयं गतः । किमेवं तरवो लोके वदन्ति मधुरां गिरम् ॥ ३८ ॥

इत्याश्चर्यसमाक्रान्तः स कुमारसमन्वितः । दारैरपि युतो राजा हारैश्चापि समावृतः ॥ ३९ ॥

ततः प्रविष्टः शिवमन्दिरान्तः संपूज्य विश्वेशमुमासहायम् ।
प्रदक्षिणीकृत्य पुनः प्रणम्य तत्रोपविष्टः शिवमेव पश्यन् ॥ ४० ॥

ततः परं तत्र मुनीन् ददर्श विभूतिपूतानतिपुण्यरूपान् ।
रुद्राक्षमालाभरणानपारान् हारानुदारान् धनपूतचित्तान् ॥ ४१ ॥

ततः परं तत्र चतुर्मुखोऽपि समागतः शङ्करपूजनाय ।
संपूजयामास शिवासहायं बिल्वैः प्रसूनैरपि पुण्यगन्धैः ॥ ४२ ॥

प्रदक्षिणीकृत्य मुहुः स नत्वा ध्यात्वा महादेवमुमासहायम् ।
तत्रोपविष्टः स ददर्श भूपं महेश्वरध्याननिविष्टचित्तः ॥ ४३ ॥

---

1 प्रियानिवार्तान् दयिता विदेशे C

राजा तदा मानसपूजनेन चकार हृष्टं गिरिजासहायम् ।
दाराः कुमाराश्च तथैव राज्ञः चक्रुः शिवाराधनमादरेण ॥ ४४ ॥

तं विलोक्य स चतुर्मुखस्तदा धन्य एव नृपतिर्विलोकितः ।
भूरिपुण्यविभवैरिति ब्रुवन् तुष्ट एव मनसा शिवार्चकः ॥ ४५ ॥

ततः परं ध्यानरतं कृतार्थं मत्वा स भूपं मनसा प्रणम्य ।
उच्चैः शिवां वाचमुदीर्य भक्त्या तत्रोपविष्टः शिव इत्युदारः ॥ ४६ ॥

तदुक्तशब्दध्वनिभिः प्रपूर्णं ब्रह्माण्डमेतत् सकलं स राजा ।
विलोक्य तीव्रं स्मयमाप सद्यः कोऽयं ध्वनिः कृत्य इति प्रहृष्टः ॥ ४७ ॥

ततः परं स राजापि विस्मयापन्न एव तम् । चतुर्मुखं विलोक्याह नत्वा हरधिया मुदा ॥ ४८ ॥

राजा —

दृष्टोऽसि बहुकालेन मददृष्टेन केवलम् । दृष्टादृष्टफलावाप्तिसाधनं वद सादरम् ॥ ४९ ॥

ब्रह्मा —

धन्योत्तमस्त्वं नृपशेखरस्त्वं भूमण्डलस्याभरणं त्वमेव ।
अतेन्दुखण्डाभरणार्चनेन प्राप्तं त्वया भाग्यमपारमेव ॥ ५० ॥

भूचक्राधिपतिस्त्वमेव नृपते त्वं शांभवाग्रेसरः
त्वच्चित्तं गिरिजामनोहरपदाम्भोजार्चनैः पावनम् ।
त्वं मान्योऽसि नरेषु कोऽपि भुवने न त्वादृशो दृश्यते
भाग्यं तावदपेक्षितं खलु भवेदेतादृशं सर्वथा ॥ ५१ ॥

उदारदारा अपि ते मनोहराः परं सहारा अपि ते च हाराः ।
हाराः कुमारा अपि ते सवीराः तेऽपि प्रवीरा अपि तेऽप्युदाराः ॥

अपारमेतत् खलु भाग्यमेव न संश्रुतः कोऽपि पुराऽपि भूपः ।
पुण्यस्वरूपोऽसि कृतार्थ एव धन्योऽस्म्यहं तावकदर्शनेन ॥ ५३ ॥

पुण्यश्लोकः कोऽपि लोके विशोको लोकालोकालोकनेनापि लभ्यः ।
पुण्यश्लोकस्तत्समानस्त्वमेव त्वत्तुल्योऽन्यो नेत्रपातं न नूनम् ॥ ५४ ॥

त्वं लोकानां भाग्यदानाय तावत् भूलोकेऽस्मिन् भूरिपुण्यावतीर्णः ।
त्वं वै साक्षाच्छ्रीविरूपाक्षभक्तो भक्तः को वा त्वादृशो भूतलेऽपि ॥ ५५ ॥

त्वयि शासति काननेऽपि राजन् मुनयो घातुकजन्तवोऽपि गावः ।
सह सन्ति चरन्ति सन्ति सन्तः कति तावद् भुवनेऽपि हन्त हन्त ॥ ५६ ॥

हन्त हन्त कथमीदृशभाग्यं दृष्टमद्य दुरदृष्टविनाशः ।
जात एव हि न संशयलेशोऽप्युक्तमेवमिदमद्य हि सत्यम् ॥ ५७ ॥

सत्यं सत्यं सत्यमेतत् त्रिसत्यं सत्यं सत्यं शांभवो भूतलेषु ।
त्वत्तुल्योऽन्यो नास्ति नास्त्येव नूनं सामान्यो वा शांभवो नास्ति लोके ॥ ५८ ॥

पश्य पश्य तरवोऽपि शाङ्कराः शङ्करालयगताः स्वभावतः ।
शङ्करस्मरणमेव सर्वदा सादरं मृगजनः करोत्ययम् ॥ ५९ ॥

नामानि हाराणि मनोहराणि वदन्ति तावत् तरवो मृगाश्च ।
रुद्राक्षमालाकृतकण्ठभागाः मृगाश्चरन्त्यत्र विभूतिफालाः ॥ ६० ॥

शिक्षिताश्च पतगाः शुकादयः शङ्कर स्मरहरेति वादिनः ।
सञ्चरन्ति कथमीदृशं महत् भाग्यमद्य सुकृतैरवाप्यते ॥ ६१ ॥

अशाङ्करगिरा पुरा जगदिदं विनष्टं ततः तपः खलु महत्तरं कृतमनेन विश्वेश्वरः ।
प्रसन्न इह जायते जगदपारहारावृतं किमद्भुतमिदं मुहुर्नयनगोचरं जायते ॥ ६२ ॥

अशांभवकथा गता त्वयि सतीह भूमण्डले महेश्वरकथासुधा प्रभवति प्रभावैर्मुहुः ।
अहो किमिदमद्भुतं भुवनमेव जातं सदा सुधामयमतः परं न तपसाऽपि कार्यं खलु ॥ ६३ ॥

कैलासः किमयं प्रभूतविभवः सोऽयं प्रभूतो महान्
भावो भावविलोकनेन भगवानालोकितः केवलम् ।
भावाकारमुपेत्य फालनयनो भूलोकरक्षामणिः
जातो धन्यमिदं जगत् जगदिदं कैलास एवाद्भुतः ॥ ६४ ॥

अपारमणिमन्दिरव्यतिकरोरुहारस्फुरन्महार्हमणिलिङ्गजामितमनोज्ञशोभाश्रयः ।
शिवप्रियशिवालयैरयमहो विभाति स्वतः प्रमोदसहितः सदा शिवजनोऽपि शर्वार्चकः ॥ ६५ ॥

सोऽयं भाति शिवालयः खलु सुखाम्भोधिप्रभावालयः
मुक्तिश्रीविभवालयः किमिति मे चित्ते विकल्पाः खलु ।
कैलासोऽयमतोऽन्य एव गिरिशावासः शिवासङ्गम-
व्यासङ्गाय विनिर्मितो गिरिजया यद्वा महेशेन वा ॥ ६६ ॥

भूपाल का ते महती तपस्या यया त्वदालोकनमात्रतोऽपि ।
मुक्तो भवत्येव जनो जनानां अदृष्टमेवं फलितं तपोभिः ॥ ६७ ॥

अतः परं नोग्रतपोविचारो धर्मान्तरस्यापि कुतो विचारः ।
त्वद्दर्शनेनाथ विपर्ययोऽपि मुक्तिश्च संभाव्यत एव सत्यम् ॥ ६८ ॥

नासत्यवार्ता न च पापवार्ता त्वयि स्थिते शास्तरि भूतलेऽस्मिन् ।
सर्वेऽपि शर्वश्रवणप्रमाणाः मन्त्रैस्तदन्तःकरणं प्रवीणम् ॥ ६९ ॥

मोहान्धकारप्रलयः किमिन्दुः किं भास्करो वा प्रलयानलो वा ।
तत्वं न जाने भुवने त्वमेकः समस्तपापादिकुलाशनिर्हि ॥ ७० ॥

त्वमेव तावत् सुरधेनुरत्र त्वमेव नः कल्पतरुस्त्वमेव ।
चिन्तामणिश्चेति मतिर्ममासीत् यतः शिवाचाररताग्रगण्यः ॥ ७१ ॥

शिवाचारः शीलं गतकलुषजालं तव कुलं बलं मूलं यस्मादनुदिनमुमाकान्तभजनम् ।
धनं ते धन्योऽतस्तव चरणफुल्लाम्बुजरजो जगज्जन्माकांक्षाविलयननिदानं ध्रुवमिदम् ॥ ७२ ॥

अहो भित्तिचित्रैर्विचित्रैः पवित्रैः कथं नेत्रपात्रैः कृतं लास्यमेव ।
हराग्रे हरानुग्रहार्थं तमुग्रं विलोक्यापि लोकोत्सवायायमेव ॥ ७३ ॥

प्रसूनैः सहायान्ति ते शाखिनोऽपि स्मरन्तो वदन्तः शिवं शङ्करेति ।
किमेतद्विचित्रं यया दृष्टमद्य प्रभूतप्रभाव प्रभावस्य भावी ॥ ७४ ॥

शिव शङ्कर शङ्करेति या शुकवाणी शरणं भवेति च ।
मुहुरादरतः श्रुता सती सकलापद्विनिवारणोद्यता ॥ ७५ ॥

संकोचेन समागताश्च तरवः शाखाभिरत्यादरात्
उत्फुल्लप्रसवान् क्षिपन्ति बहुधा तत्तुङ्गलिङ्गे मुदा ।
उच्चैरुच्चरणेन शङ्कर महादेवेति बिल्वीदला-
न्यानीतानि गृहाणि तानि विविधानीति ब्रुवन्तो मुहुः ॥ ७६ ॥

धन्यानि नेत्राणि तदीक्षणेन तदीयशब्दश्रवणोन्नतानि ।
श्रोत्राणि धन्यानि मनः पवित्रं तच्चिन्तनेनापि पुनः पुनर्मे ॥ ७७ ॥

इदं कथं कौतुकमेव सृष्टं दृष्टं महेशेन मुहुर्मुहुः किम् ।
त्वद्दर्शनात् स्यात् विरतं मनोऽपि तृप्तं न नेत्रं पुनरेव चित्रम् ॥ ७८ ॥

प्रदक्षिणीकृत्य शिवालयं ते प्रयान्ति तावत् तरवः प्रणम्य ।
अदृष्टपूर्वं खलु भाग्यमेतत् तवैव भाग्यं सकलं नृपेदम् ॥ ७९ ॥

शुकाङ्गनागानमिदं मनोज्ञं शिवे शिवे शङ्कर शङ्करेति ।
श्रुतं मुहुः सादरमेव तृप्तं न चित्तमेतस्य विशेषतोऽद्य ॥ ८० ॥

धन्यं वनं हारमिदं सहारं यस्मिन् वने ते तरवोऽपि हाराः ।
भृङ्गाः कुरङ्गा अपि ते तुरङ्गाः शाङ्गाः प्रसङ्गादपि तेऽद्य दृष्टाः ॥ ८१ ॥

नष्टं पातककाननं शिववनध्यानेन तद्दर्शनादापद्राशिलयोऽपि जात इति मे भाग्योदयो जायते ।
यस्मिन्नेव वने वसामि शिवसात् कृत्वा शरीरं परं यत्रावासमपेक्षते मुहुरहो दाक्षायणीवल्लभः ॥

तरवो गुरवो वनेऽधुनाऽस्मिन् शिवपञ्चाक्षरमक्षरं वदन्तः ।
इदमेव किलातिपावनं वनमीशानसमर्चनोद्यतम् ॥ ८३ ॥

अभूतपूर्वं खलु सर्वमेतत् वने विचित्रं चरितं पवित्रम् ।
चिरं चरित्रं खलु नेत्रपात्रं त्रिनेत्रचित्तं तदिदं पवित्रम् ॥ ८४ ॥

धन्यं जगत्त्रयमिदं जगदेति मुक्तिं भक्तं विलोक्य सकृदाशु भवन्तमेव ।
त्वं पुण्यमूर्तिरसि पुण्यवतां वरिष्ठो निष्ठा वसिष्ठमधुना कुरुते कनिष्ठम् ॥ ८५ ॥

शिवाचारनिष्ठो वरिष्ठो विशिष्टाद् वरिष्ठोपि निष्ठो शिवाचारपूतान् ।
समभ्यर्च्य मुक्तौ भविष्यत्यतस्त्वं गरिष्ठोऽसि गौरीपतेः पूजनेन ॥ ८६ ॥

मयस्करमयस्त्वयं सकल एव देशः कृतो यतस्त्वमसि भाग्यवानमितपुण्यपूर्णाम्बुधिः ।
त्वमेव सततं मम प्रियविधानदक्षक्षणं विलोचनविलोकनैरमित [1] पुण्यकीर्णैर्मम ॥ ८७ ॥

भूमण्डलं मण्डितमेव राजन् त्वया विचित्रं तदिदं न चित्रम् ।
यतस्त्रिनेत्रो हृदये पवित्रे तवास्ति नित्यं गिरिजासहायः ॥ ८८ ॥

इत्याकर्ण्य वचस्तस्य वाक्पतेर्भूपतिर्मुदा । शिवधर्मोत्तमः को वा तं वदाद्य विशेषतः ॥ ८९ ॥

शिवधर्मसुधाम्भोधिकल्लोलाकुलमालया । मम मानसहंसोऽपि विलासं समुपेक्षते ॥ ९० ॥

इति राजवचः श्रुत्वा पीयूषसदृशं प्रियम् । प्राह गम्भीरया वाचा शिवस्मरणपूर्वकम् ॥ ९१ ॥

---

1 पुण्यकीर्णं मम C

ब्रह्मा —

धर्मरत्नखनिरेव भूपते त्वं शिवार्चनरतो यतस्ततः ।
धर्मतत्वमसकृन्मया मितं त्वत्कृतामृतशिवार्चनादिभिः ॥ ९२ ॥

त्वया नोक्तो धर्मः कथमपि न यद्यप्यनुदिनं तथापि त्वद्वृत्तिः कथयति परं धर्ममधुना ।
गुरुः सा मे भूप प्रतिहतमहापापसुकृत प्रपारूपापारव्यसनपरिपाका हतकृपा ॥ ९३ ॥

धर्मास्ते यमशासका अपि यमस्तावद्बिभेत्यन्वहं
यैस्तल्लोकनिवासिनामपि मुहुर्लज्जा प्रवृद्धा पुरा ।
सन्तापोऽपि महीभृतां नृप मुहुस्ते तावदत्युत्तमाः
त्वत्पादाम्बुजदर्शनादपि भवन्त्येवेति मे निश्चयः ॥ ९४ ॥

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । शिवविद्याप्रभावं मे वदेत्याह विचक्षणः ॥ ९५ ॥

ब्रह्मा —

सर्वासामपि विद्यानां शिवविद्या शिरोमणिः । तत्प्रभावानुकथनं जायते पुण्यराशिभिः ॥ ९६ ॥
मादृशैस्त्वत्प्रभावोऽपि वर्णनीयः कथं मुहुः । तत्स्वरूपापरिज्ञाने तद्ध्यानमतिदुर्लभम् ॥ ९७ ॥
तद्ध्यानार्थं तपस्तप्तं मया नारायणेन च । तथापि सा न विज्ञाता शिवविद्या महत्तरा ॥ ९८ ॥
यद्विद्याभ्यसनेनैव महापातकपर्वताः । विनश्यन्ति न सन्देहस्तूलाग्निरिव वह्निना ॥ ९९ ॥
शिवविद्याप्रभावज्ञः शम्भुरेव न संशयः । यत्प्रभावपरिज्ञानमस्माकमतिदुर्लभम् ॥ १०० ॥
पुरा विद्याः समस्तास्ताः तुषारगिरिकन्दरे । तपः शिवप्रसादार्थं कर्तुमभ्युद्यतास्ततः ॥ १०१ ॥
प्रज्वाल्य पावकान् पश्चात् पुरस्तात् पार्श्वयोरपि । दृष्ट्वा भानुं प्रचण्डांशुं तपस्तेपुर्महीपते ॥
युगानामयुतं तत्र शान्तास्तास्तपसा ततः । ओंकाररूपस्तत्रेशः प्रसन्नो मुनिरूपभाक् ॥ १०३ ॥
तमागतं समालोक्य विद्यामूर्तिरुवाच तम् । कोऽसि कोऽसि मुनिश्रेष्ठ वदेति मुहुरादरात् ॥१०४॥

ओंकारः —

ओंकार इति मे नाम मया तप्तं तपः पुरा । शिवविद्याज्ञानसिद्धौ निराहारेण सन्ततम् ॥ १०५ ॥
अत्रोङ्काराभिधं लिङ्गं तुङ्गं मङ्गलदायकम् । तदर्चितं पुरा गौर्या स्वेष्टसिद्ध्यर्थमादरात् ॥ १०६ ॥
अत्रैव सा तपः कृत्वा तपसः फलमाप च । शिवार्धाङ्गप्राप्तिरूपं तत्तावदतिदुर्लभम् ॥ १०७ ॥
दुर्लभानि फलान्यत्र सिद्ध्यन्तीति विशेषतः । अत्रैव तप्तं बहुभिः तपः पूर्वं मुनीश्वरैः ॥ १०८ ॥

वसिष्ठाद्यैर्मुनिगणैः सिद्धैश्च कपिलादिभिः । नारदाद्यैश्च बहुभिः गन्धर्वैरपि किन्नरैः ॥ १०९ ॥

गणैश्च नन्दिकेशाद्यैः तपस्तप्तं महात्मभिः । हिमाद्रिणा तपस्तप्तं मेरुणा मन्दरेण च ॥ ११० ॥

विन्ध्येन गन्धमादेन श्रीशैलेन विशेषतः । शेषेणात्र तपस्तप्तं तथा कार्कोटकेन च ॥ १११ ॥

तप्तं नारायणेनापि तप्तं कमलया तपः । इन्द्रेणापि तपस्तप्तं शच्या तप्तं तपः पुरा ॥ ११२ ॥

ब्रह्मणापि तपस्तप्तं सरस्वत्या तपः कृतम् । शिवविद्याज्ञानसिद्ध्यै कल्पावधि महत्तरम् ॥ ११३ ॥

क्षीराब्धिप्रमुखैः सर्वैः सागरैश्च तपः कृतम् । धरयापि तपस्तप्तं तथा सुरगवा तपः ॥ ११४ ॥

कल्पवृक्षैश्च मणिना निधिभिश्च विशेषतः । तथापि तत्परिज्ञानं न जातं तदनन्तरम् ॥ ११५ ॥

पुनर्घोरतरं तप्तं तैः कल्पशतमादरात् । तेनापि तपसा शम्भुः न प्रसन्नस्ततः परम् ॥ ११६ ॥

परस्परविचारार्थं उपविष्टाः शिवालये ॥ ११७ ॥

संक्षीणास्तनवः कृतेन तपसा पञ्चाग्निमध्ये सदा
वैरूप्यं समभूत् तनुष्वतितरामन्नाद्यभावादिह ।
न प्राप्तं फलमल्पमप्यनुदिनं क्षीणं किलायुः पुनः
नायुः किं तपसा विनेयमधुना किं तेन कृत्यं च नः ॥ ११८ ॥

येनानन्दघनस्य तस्य परमा विद्या न लब्धा न वा
तद्धानं च विमुक्तिदं कथमपि प्राप्तं परानन्ददम् ।
तेन त्याज्यमिदं वपुः पुनरपि ज्ञानार्थमेवादरात्
यत्नः कार्य इति प्रधावति मनः सा दुर्लभा सर्वथा ॥ ११९ ॥

तपः शिवाराधनमित्यवैमि तद्दुर्लभं तेन कृतं फलं न ।
नाल्पं तपः तत्फलसाधनं च सा दुर्लभा तेन मनोऽपि नूनम् ॥ १२० ॥

सन्तुष्टं न मनः कृतेन तपसा लब्धं फलं नेत्यतः
किं तेनापि फलेन जीवनधनत्यागोपयुक्तेन वा ।
त्यक्तेऽपि प्रसभेन तेन पुनराकांक्षा न शान्ता ततः
सर्वं व्यर्थमभूत् तपः फलमिदं किं जायते तत्वतः ॥ १२१ ॥

तपःस्वरूपं शिवपूजनं चेत् तद् ज्ञानसिद्धिं न करोति तर्हि ।
किमस्ति तत्साधनमित्ययं च भूयो विचारः प्रकृतः प्रवृत्तः ॥ १२२ ॥

अलं विचारैरपि दुष्करैस्तैः तद्ध्यानसिद्धिः कथमद्य वा स्यात् ।
अपारपापानपहारकेण स्वप्नेन तावत्तपसाऽधुना किम् ॥ १२३ ॥

अतस्तपो घोरतरं विसृज्य तद्ध्यानवार्तामतिदूरतोऽपि ।
आशां विहायापि फलेषु तेषु शिवं स्मरामः शिवमर्चयामः ॥ १२४ ॥

अलभ्यलाभाय तपः कृतं चेत् किं तेन तत्सिद्धिरपेक्षिता स्यात् ।
किं चन्द्रमा दातुमपि प्रवृत्तः गृह्णाति तं कुब्जतरोऽतिबालः ॥ १२५ ॥

न बालवत् क्रीडनमेव किं ततस्तपोऽपि तद्ज्ञानफलस्य लाभः ।
कथं भविष्यत्यधुना कृपाब्धिः शंभुः परं तत्तपसा न तृप्तः ॥ १२६ ॥

संपूर्णकामोऽपि महेश्वरोऽसौ पुनः पुनर्वाञ्छति तत्फलानि ।
दातुं पुनः पूजनमेव लिङ्गे बिल्वादिभिर्भूतिविभूषणानाम् ॥ १२७ ॥

भक्तिर्याऽव्यभिचारिणी हृदि मुहुः सा वह्निकन्या मनः
सन्तापाय विनिर्मिता भगवता तद्भिन्नया केवलम् ।
भक्त्या प्रीतिरतः परं खलु सदा सा दुर्लभा देहिनां
सा चेन्मोक्षपदं ददाति गिरिशे सा याचनीया मुहुः ॥ १२८ ॥

प्राप्याप्यव्यभिचारिणीमतिदृढां भक्तिं मुहुः सादरं
यो लिङ्गार्चनतत्परो नवलसद्बिल्वीदलैः शङ्करे ।
न स्यात्तस्य गतिः कदापि न भवत्येवेति मन्ये ततः
शर्वाराधनमेव साधु विविधैर्बिल्वैर्विधेयं जनैः ॥ १२९ ॥

अनल्पकल्पेषु तपः कृतं चेत् पूतं मनः स्पन्दति पूतचित्तः ।
करोति बिल्वादिभिरादरेण महेशलिङ्गार्चनमेव मर्त्यः ॥ १३० ॥

किं किं लिङ्गसमर्चनेन न फलं प्राप्तव्यमित्यादरैः
हारैर्हारसमन्वितैर्मुहुरपि श्रीबिल्वपत्रादिभिः ।
भक्त्या पूजित एव तावदसकृत् यद्वा सकृत् तत्फलं
दास्यत्येव शिवापतिः करुणया कारुण्यपूर्णार्णवः ॥ १३१ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे राजचतुर्मुखसंवादे शिवधर्मवर्णनं नाम त्रयोविंशोऽध्यायः ॥

# अथ चतुर्विंशोऽध्यायः ।

याज्ञवल्क्यः —

इत्युक्त्वा पुनरिन्दुशेखरपदाम्भोजार्चनायादरात्
पूतास्तत्तपसा पुनः श्रुतिलसद्भूत्यापि पूताः परम् ।
लिङ्गाराधनमेव कृत्यमिति ते सर्वे प्रवृत्ताः परं
तल्लिङ्गार्चनसाधनेषु विलसद्बिल्वीदलैरन्वहम् ॥ १ ॥

शिवपूजनमेव केवलं सकलार्थप्रदमर्थसिद्धिभिः ।
तदपेक्षितमेव साधनं विविधं तावदशेषसिद्धिदम् ॥ २ ॥

मुनयोऽपि पुरा महेश्वरं नवबिल्वीदलगन्धचन्दनैः ।
अभिपूज्य निजेप्सितं मुहुः प्रतिपन्नाः खलु शांभवं पदम् ॥ ३ ॥

यं यं कामं ये मनस्येव कृत्वा बिल्वैरीशं पूजयन्त्यादरेण ।
ते तं प्राप्याविच्युतं प्राप्नुवन्तः कामानन्यान् मोक्षमन्ते प्रयान्ति ॥ ४ ॥

सन्तः परं शङ्करमर्चयन्तः कृतान्तवार्तामपि ते कदाऽपि ।
नाकर्णयन्त्येव न दुःखभाजो भवन्ति सर्वे गतदुःखभाराः ॥ ५ ॥

संसारसागरविशोषकमिन्दुमौलिपादारविन्दभजनं प्रवदन्ति सन्तः ।
तस्माद्विहाय सकलं विषयं विशिष्य गौरीपतिं सततमाशु वयं भजामः ॥ ६ ॥

दूर्वाङ्कुरैरभिनवैर्नवबिल्वपत्रैर्गङ्गाजलैरनिलशीतलपुष्पयुक्तैः ।
अभ्यर्च्य लिङ्गमिह शाङ्करमनङ्गशत्रुं गौरीपतिं सततमेव वयं भजामः ॥ ७ ॥

उद्धूल्य गात्रमसितेतरभूतिपूतभालत्रिपुण्ड्रललिताङ्गविशेषकान्ताः ।
रुद्राक्षभूषणविभूषितपूतदेहाः श्रीविश्वनाथचरणौ शरणं व्रजामः ॥ ८ ॥

[1] संसारदुःखविनिवारकमेकमेव सर्वे वदन्ति मुनयोऽपि तमेव शम्भुम् ।
उत्तुङ्गलिङ्गनिलयं वयमाशु भक्त्या नत्वा महेशचरणौ शरणं व्रजामः ॥ ९ ॥

अलं देवभावेन जन्मान्तरे वा मनुष्यत्वमासाद्य तत्र द्विजत्वम् ।
महाशांभवत्वं प्रपद्यांबिकेशं भजामो महाकालदुःखापनुत्त्यै ॥ १० ॥

---

1 अयं श्लोकः C कोशे नोपलभ्यते ।

यदा शङ्कराराधनासक्तमेतन्मनः स्यात् तदा कालभीतिः कुतः स्यात् ।
वयं शङ्कराराधनेनैव कालं नयामो नयामो नयामो नयामः ॥ ११ ॥

इदं चेद्वयः शङ्कराराधनेन क्षयं याति पुण्यैरगण्यैस्तदा किम् ।
स कालोऽपि भीतोऽतिनित्यं प्रपन्नः भवेदस्मदीयांस्तथाऽस्मान् विशिष्य ॥ १२ ॥

महाकालकालार्चनासक्तचित्तः क्षणं वा क्षणार्धं य एव प्रबुद्धः ।
तमाराधयत्येव कालोऽपि नूनं स भीतस्तदीयांस्तदाराधकांश्च ॥ १३ ॥

कः कालकालभजनानुरतो न लोके शोकापहारकरणोद्यतचित्तवृत्तिः ।
सर्वाघनाशक इति ग्रथितः स शोकं निर्मूलयिष्यति सदाशिव एव नित्यम् ॥ १४ ॥

विशोकत्वमाप्नोति शश्वन्महेशं समाराध्य पत्रैर्जलैर्वा पवित्रैः ।
ततः कालभीतिर्न जातु प्रजाता प्रणश्यन्ति पश्यन् पुनर्नैव मृत्युः ॥ १५ ॥

महामृत्युमृत्युं महादेवमेकं समाराध्य को वा न यात्येव मुक्तिम् ।
जराजन्मदुःखादिसंहारहेतुः वृषाधीशकेतुर्हताम्भोजकेतुः ॥ १६ ॥

जनिं प्राप्नुवन्त्येव भूयोऽपि मर्त्याः शिवाराधनाभावसंभावितास्ते ।
जरामृत्युमन्ते प्रपन्ना भवन्ति प्रपन्नाश्च यामं मुहुः सन्न दुःखैः ॥ १७ ॥

अविज्ञेयविश्वेशपूजाप्रभावाः तमेवादरादन्वहं मानगम्यम् ।
प्रभावं विदित्वा प्रयान्त्येव शंभुं तदज्ञानतो याति याम्यं पुरन्तु ॥ १८ ॥

इति निश्चित्य ते सर्वे भस्मोद्धूलितविग्रहाः । रुद्राक्षमालाप्रवणाः शङ्करप्रवणास्तदा ॥ १९ ॥
ततः परन्तु मुनयः सर्वेऽपि कृतनिश्चयाः । शाङ्करं शङ्करं ज्ञात्वा पूजयामासुरादरात् ॥ २० ॥
बिल्वपत्रैः समाराध्य जलैरपि विशेषतः । तैः कालयापनं तत्र कृतमेव प्रयत्नतः ॥ २१ ॥
अतः परं भवद्भिश्च त्याज्यो होमो विशेषतः । भजनीयो महादेवः सर्वसिद्धिप्रदायकः ॥ २२ ॥
सिद्धिप्रदे महादेवे तिष्ठत्यत्र विशेषतः । लिङ्गे तुङ्गे लिङ्गपूजा विधेया सादरं मुहुः ॥ २३ ॥
न तृप्तस्तपसा शम्भुः न दानैर्यजनैरपि । किन्तु लिङ्गार्चनेनैव प्रीतो भवति शङ्करः ॥ २४ ॥
[1] विधाय कलशाकारं शिवलिङ्गार्चनं परम् । कस्त्यक्त्वा तपसे यत्नं करोति तदिहाद्भुतम् ॥ २५॥
कः करस्थसुधातुल्यं शिवलिङ्गार्चनं जनः । त्यक्तुमिच्छति मूढात्मा स को वा तं न विद्महे ॥

1 अयं श्लोकः C कोशे नास्ति ।

सुधां मुखस्थितां त्यक्त्वा तृषितः पथिकः पथि ।
को वा रासभमूत्रादिपानाय यतते जडः ॥ २७ ॥

न जानीमो लोके कमपि गिरिजाकामुकपद-
प्रसादार्थं यत्नं कथमपि करोत्येव न मुदा ।
तमेकं हित्वा यः शुनकशुनकीयोगजनितो
मलाशी पापानामपि खलु स राशिर्भृशमपि ॥ २८ ॥

महेश्वरकथारसः सरसमानसे केवलं
सुखानि जनयत्यहो मुहुरपाररूपाण्यपि ।
क्षणार्धमपि शङ्करो यदि मुदा हृदम्भोजगः
कदा सुखमहोदधिः किमिति न प्रवृद्धो भवेत् ॥ २९ ॥

अपारसुखरूपतामुपगतोऽपि मुक्तो भवेत्
उमापतिपदाम्बुजस्मरणलालसे मानसे ।
कदापि न जनिर्भवेत् न च जराऽपि मृत्युर्भवेत्
इति स्मरहरं स्मर स्मर पुनः पुनः शङ्करम् ॥ ३० ॥

[1] निधानकलशाकारं शिवलिङ्गार्चनं परम् । कस्त्यक्त्वा तपसे यत्नं करोति तदिहाद्भुतम् ॥

नेयं वयः खलु सदाशिवचिन्तनेन लिङ्गार्चनेन च लसन्नवबिल्वपत्रैः ।
आशास्यमीशचरणस्मरणं क्षणं वा कृत्यं तदेतदिति मे मनसः प्रवृत्तिः ॥ ३२ ॥

क्लेशोऽप्यल्पो बिल्वपत्रार्चनादौ लिङ्गं तुङ्गं दुर्लभं नार्मदं च ।
रेवानीरैरीशलिङ्गार्चनेन प्राप्या मुक्तिर्दुर्लभाऽपीति मन्ये ॥ ३३ ॥

हा हन्त हन्त कथमेवमिदं विनीतं आयुः शिवार्चनविहीनजनिर्वृथा स्यात् ।
इत्यादिवेदशिखरोक्तिरपि श्रुता सा सर्वात्मना न गणिता न विचारिताऽपि ॥ ३४ ॥

दुःखेन केवलमतः परमस्ति कृत्यं किं नो वयोऽपि गलितं गलितं च पापम् ।
हा हन्त हन्त तव हन्त नितान्तमन्ये स्वान्तं शिवार्चनपरं कथमद्य जातम् ॥ ३५ ॥

श्रीकालकालकरुणा तरुणा किमासीत् अन्ते वयस्यबलमेव शरीरमस्य ।
कर्तुं न वाञ्छति ततोऽपि शिवार्चनानि बिल्वादिकानयनमस्य अशक्यमेव ॥ ३६ ॥

---

1 अयः श्लोकः C कोशेऽधिकः

अरण्ये संचारे बलवति शरीरे श्रमकथा कुतो वा बिल्वानां ग्रहणसमये स्या ⋯ म कथा ।
इदानीं दृष्टिर्वा प्रसरति न बिल्वेषु बहुधा किमस्माकं भाग्यं वयसि विगते यौवनवने ॥ ३७ ॥

महादेवास्माकं कथमपि भवत्पूजनमतिः न जाता जाता सा जठरपिठरीपूरणकरी ।
पुरा नानापारव्यसनकथनार्तेन मनसा तथा नीता सापि स्मरहर हतोऽहं मुहुरहो ॥ ३८ ॥

अहो मायामोहः कथमपि न नष्टः कथमपि स्मराराातिर्ध्यातो न खलु परमित्यादरभरैः ।
स्मरापस्मारार्तः स्मरशरविहाराकरपरं मनो दूनं नूनं स्मरहर हरोऽपीत्यपि हर ॥ ३९ ॥

न रेवातीरे वा स्मरहर विहारो मम कदा मुदा लिङ्गे तुङ्गे नवविमलबिल्वीदलयुते ।
मनोवृत्तिर्नेत्री कथमपि भविती शिवकथा धरित्री मद्गातं कथमपि न भाराय मनुते ॥ ४० ॥

कृतान्तोऽपि दूतैः प्रमत्तैः प्रवृत्तैः कथं वा न नेष्यत्यपाराघयुक्तम् ।
तदा मोचकः कोपि नास्त्येव लोके भवन्तं विना तावदर्धेन्दुमौले ॥ ४१ ॥

शिव श्रीमहादेव गौरीपते मां त्वदीयं नयापारसंसारपारम् ।
भवन्तं विना कोपि नास्त्येव लोके न माता पिता वा न दाता महेश ॥

अघोरा हि संसारवृत्तिस्त्वपारा हराचारहीनस्य हारानुकारः ।
कदाप्यस्य नेत्येव संसारपारं नयाशु प्रपश्येश पश्य प्रपश्य ॥ ४३ ॥

कदा वा मुदा वा महादेव देवेत्युपालम्भनेनापि कालो विनेयः ।
स्वकालोऽपि नेयः स कालोऽयमासीत् इति श्रीमहाकालकालानुवेलम् ॥ ४४ ॥

अयं पुण्यकालो महाकालकालः स्मृतो येन कालस्वभावोऽयमासीत् ।
अयं शोभनस्यापि कालो यतोऽभूत् महेशस्मृतिर्मुक्तिदानप्रवीणा ॥ ४५ ॥

स संसारमोहप्रवाहोऽपि नष्टः क्षणार्धादिहार्धेन्दुमौले कृपालो ।
अलं बाललीलाभिरित्येव कुर्मः शिवाराधनं बालबिल्वीदलाद्यैः ॥ ४६ ॥

संसारचण्डकरधीरकरप्रचारैः तप्तं शरीरमिदमेतदतः परं मे ।
गौरीमनोहरतरुप्रवरोपकण्ठच्छायामुपेत्य निवसामि खलु प्रकामम् ॥ ४७ ॥

दुर्वृत्तवृत्तशमनोपशमाय शर्वं शश्वत् समीहितसमर्पणकारणेषु ।
लिङ्गेषु फुल्लकमलैः कमलैश्च बिल्वैरभ्यर्चयामि सितभूतिविभूषिताङ्गः ॥ ४८ ॥

नातः परं कृत्यमुमासहायपादारविन्दभजनादपि किं वदान्यत् ।

कृत्यं विशिष्य सकलेप्सितदानदक्षदाक्षायणीरमणमक्षरमाश्रयामः ॥ ४९ ॥

गौरीमनोरमण ते चरणारविन्दमस्माकमस्तु शरणं तरुणेन्दुमौले ।
नक्षत्रमण्डलनिभामलगण्डमाला लीलाविलोकनविलोचनफाललोल ॥ ५० ॥

अद्याधुनापि यदि मानसमीशपादपद्मार्चने रतमतः परमस्मदीयम् ।
संसारदुःखमखिलं गतमेव जातं तज्जन्मकृत्यमपि तावदतः परं किम् ॥ ५१ ॥

जन्मोत्तरं यदि कदाचिदपि स्मरारिपादारविन्दमकरन्दरसाभिषेकः ।
चित्तभ्रमद्भ्रमरपुङ्गवमस्तकेऽस्याः स्यादेव तर्हि भवबन्धविमोचनं च ॥ ५२ ॥

यद्यप्यघौघविलयाय मनःप्रवृत्तिः नासीत्पुरा बहुतराघसमन्वयेन ।
किं तावताऽपि सकृदप्यधुनापि भक्त्या सद्यः स्मृतो हरति जन्मभयं महेशः ॥

कृपाब्धिपूरः स हरः स्मृतोऽपि कदाचिदप्यादरतोऽनुवारम् ।
कृतान्यपाराण्यपि पातकानि हरत्यवश्यं हर एव यस्मात् ॥ ५४ ॥

शिवार्चनाकारमहाग्निदग्धमपारपापोरुपतङ्गजातम् ।
भवत्यवश्यं तत एव नित्यं महेश्वराराधनमेव कुर्मः ॥ ५५ ॥

शिवपूजनरूपमौषधं हृदये यस्य निविष्टमेकदा । तदपारमहाभयापहं भवतीत्येव मतिर्ममाधुना ॥

करुणाकरता महेश्वरे विदिता यद्यपि सर्वथाऽपि सा ।
अनुकूलतया शिवार्चनेष्वनुवृत्ता न बभूव दुर्मतेः ॥ ५७ ॥

सुलभाऽपि शिवार्चने रतिः सुलभा नेति न चित्रमेव हि ।
सुलभं किमभाग्यसङ्गमे सुगमं भाग्यसमागमात् खलु ॥ ५८ ॥

अद्यापि शङ्करपदाम्बुजपूजनाय चित्तं प्रवृत्तमपि नैव कृतार्थमासीत् ।
प्रत्यूहकोटिसहिते मनसि प्रवृत्ते किं तेन तत्फलमविघ्नतयाशु सिद्धम् ॥ ५९ ॥

धन्यास्ते हृदि सन्ततं शिवपदाम्भोजं निधायादरात्
आनन्दामृतधारयाऽपि परया गम्भीरया सेचनम् ।
कुर्वन्तो विरतिं न यान्ति सुकृतैरप्यन्तहीनैर्मुहुः
तद्भाग्यं भुवनेषु दुर्लभतरं तद्भुक्तिमुक्तिप्रदम् ॥ ६० ॥

निधाय हृदि शङ्करं यदि विधाय पूजां मुहुः प्रनृत्यति महेश्वर स्मरहरेति हारः परम् ।
तदा परमवाप्नुयात् गिरिशपादुकाराधनप्रसादमतिदुर्लभं शुभदमद्भुतं सन्ततम् ॥ ६१ ॥

तिरस्करोत्येव यमं यमादिभिः विनापि तावत् सकृदादरेण ।
स्मृत्वा सकृद्वा शिवमादरेण प्रयाति दुःखौघमहाब्धिपारम् ॥ ६२ ॥

दुःखानि वै न गणयन्त्यपि पातकानि घोराण्यपारविविधार्णवलक्षणानि ।
स्मृत्वा सकृद्गिरिशपादरजः प्रसन्नं संसारशोकपरिहारकरं स्मरारिम् ॥ ६३ ॥

अपारपापौघलयाय सायं लिङ्गार्चनं कर्तुमपि प्रवृत्तम् ।
प्रबोधयत्येव शिवप्रभावः प्रभावमाशापरिपाकहीनम् ॥ ६४ ॥

मुक्त्यङ्गनावश्यकरं च लोके शिवार्चनं तावदिति स्मरामि ।
तदेव सर्वार्थदमित्यवैमि तदेव तावत् सुलभं पवित्रम् ॥ ६५ ॥

अनायासेनैव स्मरहर पदाम्भोजभजने विमुक्तिः स्यादेषा कथमपि न केनापि तपसा ।
अवश्यं तत्तावद्भजनमपि भावस्य भवतीत्यपारानन्दानां निधिरपि स एव स्मरहरः ॥ ६६ ॥

शिवध्यानसुधापानपीनाननमदुर्जनम् । जनं त्रिलोचनं मन्ये धन्यं मान्यं पुनः पुनः ॥ ६७ ॥

शिवनामसुधामुहुर्मुहुः यदि पीता सकृदेव वा तदा ।
सकलाघविपर्ययो भवेदपि मुक्तिश्च भवत्यपि ध्रुवम् ॥ ६८ ॥

यन्नामकीर्तनविनोदरसाभिषिक्ताः के तावदन्तकरिपुप्रमथाग्रगण्याः ।
सद्यो भवन्ति भवतापविहीनचित्ताः सन्तो विभूतिकृतपूतलसत्त्रिपुण्ड्राः ॥ ६९ ॥

अस्माकं किमिहास्ति दुष्करतरं लिङ्गेऽतितुङ्गे मुहुः
बिल्वीपल्लवमात्रमत्र निहितं हन्त्येव पापाचलान् ।
अन्ते दास्यति मुक्तिमेव किमितोऽप्यन्यत्फलं वांछितं
तुच्छं वांछति कः फलं विधिहतं ब्रह्मादिकानां [1] पदम् ॥ ७० ॥

वारं वारं शङ्करध्यानरूपं पीयूषं चेत् पीतमत्यादरेण ।
पापैर्भीतिं नोपयात्येव सत्यं मोक्षश्रीरप्यादरेणावृता स्यात् ॥ ७१ ॥

न कृतान्तकृतान्तपूजनं कृतमेवेति पुराकृतं कृतम् ।
कृतमद्य तदादरात् कृतं कुरुते तावदघौघविप्लवम् ॥ ७२ ॥

इत्युक्त्वा ते विचार्यान्ते कर्तव्यं शिवपूजनम् । इत्याशु विनिवृत्ताश्च तपसो देहशोषकात् ॥७३॥

---

1 हि तत् C

ततः परं तु ते सर्वे गत्वा तु सुरवाहिनीम् । गौरीरमणपादाब्जनिःसृतां ददृशुर्मुदा ॥ ७४ ॥

तत्र स्नात्वा प्रयत्नेन भस्मोद्धूलितविग्रहाः । त्रिपुण्ड्ररुद्राक्षधराः शिवनामजपोत्सुकाः ॥ ७५ ॥

ययुर्बिल्ववनं सर्वे सर्वाघौघविनाशकम् । महेश्वरप्रियकरं महेश्वरसमावृतम् ॥ ७६ ॥

उत्तुङ्गलिङ्गसङ्गेन मनोहरमहर्निशं । [1]मनोहराणि सर्वाणि तानि लिङ्गानि शाङ्करैः ॥ ७७ ॥

एकैकबिल्वमूलस्थं लिङ्गमेकैकपूजितम् । दृष्ट्वा ते प्रणताः सर्वे बिल्वाराधनतत्पराः ॥ ७८ ॥

तत्र दृष्टाः कश्यपाद्याः मुनयः शिवतत्पराः । लिङ्गाराधनमात्रेण सन्तुष्टा अग्निसन्निभाः ॥ ७९ ॥

केचिन्नृत्यन्ति तन्मूले शिवाराधनतत्पराः । हर शम्भो महेशेति जपन्तः परमं मनुम् ॥ ८० ॥

स्तुवन्ति केचिद्गिरिशासहायं नमन्ति केचिद्वृषभेशकेतुम् ।
जपन्ति केचिच्छिवनाम धन्याः समर्चयन्तो नवबिल्वपत्रैः ॥ ८१ ॥

समाराध्य गौरीशपादारविन्द नवैर्बिल्वपत्रैः पवित्रं पवित्राः ।
जपन्त्येव नामानि शैवानि नूनं प्रनृत्यन्ति हस्ताग्रसंघातनेन ॥ ८२ ॥

महादेव देवादिदेवादिदेव प्रसीद प्रसीद प्रसीद प्रसीद ।
प्रसीद प्रसीद प्रसीद प्रसीद प्रसीद प्रभो चन्द्रमौले प्रसीद ॥ ८३ ॥

अनाथैकनाथस्त्वमेको महेश स्मरारे पुरस्तादधस्ताच्च पश्चात् ।
त्वमेवासि पार्श्वेपि पश्य प्रसीद स्मरन्तं भवन्तं कृतान्तान्तकं त्वाम् ॥ ८४ ॥

भवन्तं विनान्यं न जाने न जाने मतिस्त्वं गतिस्त्वं पतिस्त्वं महेश ।
पितापि त्वमेवेन्दुमौले कमीडे भवन्तं विना कोऽपि नेड्योऽपि लोके ॥ ८५ ॥

मदङ्गं च तुङ्गेन लिङ्गेन सङ्गं भवन्तं परं प्राप्तुमेवेति मन्ये ।
इदं बिल्वपत्रावृतं लिङ्गमीश समस्तार्थदानोद्यतं सर्वदापि ॥ ८६ ॥

प्रपश्यामि तुङ्गानि लिङ्गान्यभङ्गान्यपाराणि तद्दर्शनेनैव मुक्तिः ।
भवित्री ममेशान नूनं न याचे न याचे न चान्यत्र वांछा कुतः स्यात् ॥

न चेन्द्रादिलोकेषु वांछा महेश स्मरारे भवत्पादपद्मे शपामि ।
निधिं प्राप्य को वा मुहुः काचखण्डं स्वतुण्डेन गृह्णाति चण्डालवृत्तिः ॥ ८८ ॥

दृढा भक्तिरीशानपादारविन्दे ममास्त्वस्तु नित्यं ममास्त्वस्तु सा मे ।

---

1 समर्चितानि C

समर्था हि धर्मार्थकामप्रदाने तथा मोक्षदाने समर्था महेश ॥ ८९ ॥

इति स्तुत्वा प्रहृष्टांस्तान् नत्वा देवास्ततः परम् । तानूचुः शिवपूजायाः स्वरूपं किमिति प्रिये ॥

मुनयः —

साधु पृष्टमिदं प्राज्ञाः शिवपूजनसाधनम् । शिवार्चनस्वरूपं च वेदोक्तमधुनोच्यते ॥ ९१ ॥

स्नात्वा जलैः समुद्धूल्य भस्मनाऽङ्गानि सादरम् ।
अग्निरित्यादिभिर्मन्त्रैः कृत्वा भस्माभिमन्त्रणम् ॥ ९२ ॥

त्रिपुण्ड्रधारणं कृत्वा कृत्वा रुद्राक्षधारणम् । बिल्वमूले सन्निविश्य जप्त्वा मन्त्रं षडक्षरम् ॥

बिल्ववृक्ष नमस्तेऽस्तु शिवपूजनसाधन । मूलतो भवरूपाय मध्यतो मृडरूपिणे ॥ ९४ ॥

अग्रतः शिवरूपाय पत्रैर्वेदस्वरूपिणे । स्कन्धे वेदान्तरूपाय तरुराजाय ते नमः ॥ ९५ ॥

नमस्ते बिल्वतरवे भानुसोदर ते नमः । शिवपूजोद्यताभीष्टसाधनाय नमो नमः ॥ ९६ ॥

इति संप्रार्थ्य तं बिल्वं नत्वा कृत्वा प्रदक्षिणम् । कृताञ्जलिपुटो भूत्वा प्रार्थयेत् पुनरादरात् ॥

वेदरूपाणि पत्राणि शिवपूजार्थमद्य ते । प्रार्थयामीति संप्रार्थ्य भवेत् तद्ग्रहणोद्यतः ॥ ९८ ॥

रुद्राध्यायं जपन्नेव स्मरन्नन्ते महेश्वरम् । गृहीत्वा बिल्वपत्राणि पूजयेद्गिरिजापतिम् ॥ ९९ ॥

सुबिल्वपत्रपृष्ठेन योजयेल्लिङ्गमस्तकम् । उत्तानैः पूजयेत् पत्रैः उत्तराग्रैर्जलान्वितैः ॥ १०० ॥

यथोत्पन्नेन पुष्पेण पूजयेत् गिरिजापतिम् । सर्वात्मना बृन्तहीनं बृहतीपुष्पमर्चयेत् ॥ १०१ ॥

बृन्तहीनानि पद्मानि कुमुदानि नवान्यपि । शिवपूजोपयुक्तानि नान्यानीत्यवधारितम् ॥ १०२ ॥

चम्पकामल्लिकाजाती करवीरादिकानि तु । यथेष्टमेव देयानि सितान्यप्यसितान्यपि ॥ १०३ ॥

अर्कं वा करवीरं वा वकं कनकमेव वा । दत्वा लिङ्गे शिवं स्मृत्वा भक्त्या पापैः प्रमुच्यते ॥

नवारुणैः बिल्वपत्रैः पूजयित्वा महेश्वरम् । ब्रह्महापि विमुक्तः स्यात् भूतिरुद्राक्षभूषणः ॥ १०५ ॥

उद्धूल्य भस्मनाङ्गानि धृत्वा तिर्यक् त्रिपुण्ड्रकम् । बिल्वपत्रैः समभ्यर्च्य मुक्तो भवति मानवः ॥

भक्त्या दत्वा महेशाय कोमलं बिल्वपल्लवम् । कैलासं समवाप्नोति गृहं गृहपतिर्यथा ॥ १०७ ॥

सन्ति पत्राण्यनेकानि प्रसूनान्यपि कोटिशः । बिल्वपत्रार्पणेनैव तुष्टो भवति शङ्करः ॥ १०८ ॥

एकस्य बिल्वपत्रस्य शिवलिङ्गे प्रदानतः । यत् पुण्यं समवाप्नोति तद्वदेद्गिरिजापतिः ॥ १०९ ॥

बिल्वपत्रप्रदानस्य फलमेतावदित्यपि । वेदैरपि न विज्ञातं अन्येषां तत्र का कथा ॥ ११० ॥

बिल्वे भस्मनि रुद्राक्षे शङ्करस्य यथा रुचिः । तथा रुचिर्भवान्यां तु तथाऽन्येषु रुचिर्न तु ॥

अखण्डानि सखण्डानि बिल्वपत्राणि तेष्वपि । अतिप्रीतिरखण्डेषु दुर्लभान्येव तानि तु ॥ ११२ ॥
लिङ्गानि दुर्लभान्येव बिल्वपत्राण्यपि स्वतः । सुलभानि भवन्त्येव क्वचित् भाग्यवतां नृणाम् ॥
नवानि बिल्वपत्राणि दुर्लभानि भवन्ति चेत् । अनवान्यपि संपाद्य पूजयेत् तैरुमापतिम् ॥
बिल्वपत्राणि देयानि शुष्काणि पतितान्यपि । भिन्नान्यपि नवाभावे छिद्राण्यपि कदाचन ॥
यावत्तद्रक्षणं शक्यं तावत् कृत्वैव सादरम् । देयं बिल्वं महेशाय तच्चूर्णमपि तत्प्रियम् ॥
दुर्लभं बिल्वचूर्णं चेत् बिल्वचन्दनमेव वा । दद्यान्नित्यं महेशाय तेन तुष्यति शङ्करः ॥ ११७ ॥
बिल्वपत्रैरनभ्यर्च्य तच्चूर्णैरपि चन्दनैः । न भोक्तव्यं न शेतव्यं कदापि द्विजजन्मना ॥
अपराणि सुगन्धीनि प्रसूनानि महेश्वरः । बिल्वाभावे न गृह्णाति तेन प्रीतः सदाशिवः ॥ ११९ ॥
सूर्याभावे यथा ध्वान्तं न नश्यति तथा सुराः । बिल्वपत्रार्चनाभावे न पापं याति सर्वथा ॥
बिल्वीतरुजवाते वा या प्रीतिर्गिरिजापतेः । सा प्रीतिः पुष्पवातेऽपि शङ्करस्य न जायते ॥
सूर्यः सृष्टो महेशेन ध्वान्तसंहरणाय सः । बिल्वः सृष्टः शिवेनैव पापनाशाय केवलम् ॥ १२२ ॥
आदित्यः समभूत् सोमात् सोमाद्बिल्वः प्रजायते । उमया सहितः सोमः स तयोर्जनको यतः ॥
नीलोत्पलकृतां मालां शङ्कराय समर्चयेत् । प्रफुल्लपद्ममालां च कुड्मलैर्नार्चयेत् शिवम् ॥ १२४ ॥
करवीरप्रसूनानि प्रक्षिप्य लिङ्गमस्तके । मुच्यते पातकैः सर्वैः ब्रह्महत्यादिभिः सुराः ॥ १२५ ॥
करवीरप्रसूनेन यो नार्चयति शङ्करम् । स दरिद्रो भवत्येव सर्वशः प्रतिजन्मनि ॥ १२६ ॥
मन्दारैः कनकैर्वापि यः सायं शिवमर्चयेत् । स मुक्तः पापकोटिभ्यो मुक्तो भवति मानवः ॥
बृहतीकुसुमैर्नित्यं योऽर्चयेत् गिरिजापतिम् । अस्थूलैरपि वा स्थूलैः मुच्यते पापबन्धनात् ॥
यः प्रयच्छति शर्वाय फुल्लां पङ्कजमालिकाम् । सायंकाले विशेषेण स याति शिवमन्दिरम् ॥
पुन्नागमालिकां दत्वा महेशाय निशामुखे । मुच्यते पापकोटिभ्यः सद्य एव न संशयः ॥ १३० ॥
शतपत्रप्रसूनानि यः प्रयच्छति शङ्करे । द्रोणपुष्पाणि वा नित्यं स याति शिवमन्दिरम् ॥ १३१ ॥
[[1] पारिजातप्रसूनानि यो ददाति महेश्वरे । वकुलान्यपि पूतात्मा स मुक्तो भवति ध्रुवम् ॥
यः पूजयेन्महादेवं कुन्दसुन्दरमालया । स गन्धर्वपतिर्भूत्वा प्रयाति शिवमन्दिरम्] ॥ १३३ ॥
अर्चयित्वा महादेवं केतकीकुसुमैर्निशि । अरातिभ्यः सर्वथापि न बिभेत्येव मानवः ॥ १३४ ॥
दूर्वाङ्कुरैर्नवैः शुद्धैरभिपूज्य सदाशिवम् । सर्वपुष्पार्चनफलं प्राप्नोत्येव न संशयः ॥ १३५ ॥

---

1 पारिजात ... शिवमन्दिरं इति कोष्ठान्तर्गतं श्लोकद्वयं C कोशे नोपलभ्यते ।

यवतण्डुलगोधूमैः चणकैर्द्विदलैरपि । सितासितैस्तिलैरीशं सर्षपैश्च समर्चयेत् ॥ १३६ ॥

प्रियंगुभिश्च नीवारैः श्यामाकैः शालिभिस्तथा । अणुभिश्च समाराध्य मुच्यते पापकोटिभिः ॥

दध्ना क्षीरैर्घृतेनापि मधुना सितयाऽपि च । समभ्यर्च्य महादेवं मुच्यते पापकोटिभिः ॥ १३८ ॥

हिमशीकरसङ्काशनीरधाराभिषेचनम् । महालिङ्गे प्रदोषेषु महापापैः प्रमुच्यते ॥ १३९ ॥

क्षीराज्यमधुधाराभिः योऽभिषिञ्चेदुमापतिम् । स एव हयमेधादियागकोटिफलं लभेत् ॥ १४० ॥

आकल्पार्जितपापनाशकमिति ज्ञेयं शिवाराधनं
सामान्येन तदप्यखण्डबिल्वीदलैश्चेत् कृतम् ।
तत् किं किं फलमातनोति बहुधा तन्नैव जाने निजं
दास्यत्येव पदं सदाशिव इति ज्ञातं तदन्यत् तथा ॥ १४१ ॥

मुक्तिप्रासादमार्गप्रथितमणिलसद्दीर्घसोपानपङ्क्तिः
भक्तिः श्रीपतिनेत्रपूजितशिवाकान्तांघ्रिपङ्केरुहे ।
सा भक्तिर्यदि बिल्वपल्लवलसन्मल्लीप्रसूनार्पणे
शार्ङ्गे लिङ्गवरे तदा जितमिदं तावज्जगज्जायते ॥ १४२ ॥

धन्यैर्जन्मसहस्रसाधितमहापुण्यार्णवैः केवलं
भक्तिः शङ्करपादपद्मभजने तावत् परं लभ्यते ।
सा लब्धा जननादिदुःखनिकरं हन्त्येव हन्त्यापदां
राशीनप्यमितान् करोति परमानन्दाश्रयं सर्वदा ॥ १४३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे देवमुनिसंवादे बिल्वपुष्पपञ्चामृतधान्यजलधारादि-
शिवपूजाफलवर्णनं नाम चतुर्विंशोऽध्यायः ॥

—:x:—

## पञ्चविंशोऽध्यायः ।

याज्ञ्यवल्क्यः —

इत्युक्तमुनिवाक्यानि श्रुत्वा सन्तुष्टमानसाः । शिवलिङ्गार्चनोद्योगं चक्रुः सर्वे सुरास्तदा ॥ १ ॥

भस्मनोद्धूल्य सर्वाङ्गं कोमलैर्बिल्वपत्रकैः । कमलैरमलैः काले पूजयामासुरीश्वरम् ॥ २ ॥

उत्फुल्लनीलोत्पलमालिकाभिः सहस्रपत्रैः शतपत्रपुष्पैः ।
प्रफुल्लमल्लीकरवीरजाजीप्रसूनवृन्दैरपि पूजितस्तैः ॥ ३ ॥

[1] द्रोणैरकैश्चम्पकैः कुन्दपुष्पैः मन्दाराद्यैर्बाणपुष्पैरपारैः ।
धुत्तूराद्यैरर्चितश्चन्द्रमौलिः बालोत्फुल्लैः केतकीपुष्पसङ्घैः ॥ ४ ॥

कस्तूरिकासंयुतचन्द्रभागपाटीरसारैरपि लिङ्गपूजा ।
कृता सुरैस्तैर्दवनेन पूजा कृता महेशस्य कृतान्तभीतैः ॥ ५ ॥

घनसारगिरिप्रभूतदीपैः मधुरान्नैरमितैः सिताभिषिक्तैः ।
दधिदुग्धविशेषसारयुक्तैः उपहारोपि शिवाय कल्पितस्तैः ॥ ६ ॥

सुधाधारा .... नवकुसुमगन्धोत्करयुता मुहुर्दत्ता दत्तं वसनमपि नीराजनमपि ।
महोदारैर्हारैर्हरहर गृहाणेति बहुधा प्रसूनानि क्षिप्तान्यमलमणियुक्तानि गिरिशे ॥ ७ ॥

सुवर्णरत्नाभरणान्यपाराण्यनेकलोकोत्तरपट्टकूलैः ।
संछाद्य दत्तान्यपि लिङ्गमूले तल्लिङ्गपार्श्वेषु विशेषतस्तु ॥ ८ ॥

सुरत्नदण्डाञ्चितचामरौघैः छत्रैरपारैर्विमलेन्दुतुल्यैः ।
समर्चयामासुरुमासहायं प्रणम्य नृत्यं च कृतं मुहुस्तैः ॥ ९ ॥

ततः परं तुष्टुवुरादरेण सुवर्णवर्णं गिरिजासहायम् ।
सायं निरस्ताखिलपापमायं स्वमायया सप्रियमप्रमेयम् ॥ १० ॥

देवाः —

अपारकरुणाकरस्मरहरामराधीश्वर परिस्फुरदुरःसरप्रवरहीरहाराकर ।
विचारय पुनः पुनः परमुदारगौरीकरप्रसारचतुरादरादुरुविहारहारं परम् ॥ ११ ॥

---

1 अयं श्लोकः C कोशे नोपलभ्यते ।

कदापि हर हारता मयि विचारिता न त्वया किमेवमुचिता मतिर्गिरिकुमारिकाकामुक ।
स्मरज्वरपुरःसरज्वरविकारसंहारक स्मर स्मर पुनः पुनः स्मर पुनः पुनर्हारिताम् ॥ १२ ॥

असह्यजनिदुर्दशां हर जरादिभारं हर प्रसह्य हर दुःसहं मरणकारणं संहर ।
यदेतदुपकारकं तदपि पापरूपं हर स्मर स्मर हरार्चनाप्रवणमेव मे मानसम् ॥ १३ ॥

अनाथजननाथता कथमुमासनाथाधुना तथापि कथयासकृत् जनिजराव्यथार्ताय मे ।
कदा विकथिता न सा मयि कदर्थना या मया किमर्थमतिधीर्व्यथां कथयतीश्वरार्थी मया ॥ १४ ॥

अतः परमपि प्रभो भवदवाब्धिपारं नय श्रिया सदय सा दया मयि न किं विधेया त्वया ।
न कोपि दयनीयतामुपगतोऽपि लोके मयि स्थिते सति सतीपतिव्रतविद्यमाने सदा ॥ १५ ॥

क्व ते वद दयार्द्रता क्व च महेशता वा क्व वा महाघलयहेतुता क्व सहमानता वा तव ।
अपारसुखहेतुताऽप्यमितभाग्यदत्वं तव क्व दीनजनबन्धुताप्यगकुमारिकावल्लभ ॥ १६ ॥

प्रभूतविभवे सति त्वयि महेश्वरे रक्षके क्षणार्धमपि मे कथं भवति दुःखलेशोऽपि वा ।
प्रपश्य दययाऽधुनाऽप्यहह हा कृपाम्भोनिधे निधिर्यदि वशे तदा वद दरिद्रता वा कुतः ॥ १७ ॥

कदापि न समर्पितं यदि मुदा न बिल्वीदलं नवं कमलमेव वा विमलशाङ्गलिङ्गे तदा ।
भवत्वहह दुःखमप्यभिनवाम्बुबिल्वीदलं यदर्पितमुमापते त्वयि तदादरेण स्मर ॥ १८ ॥

हर स्मरहरामरप्रवर शङ्करेत्युच्चकैः न वाग्मपि किं मया कृतमुमासहाय क्षणम् ।
स्मर स्मर पुनः स्मर स्मरहराशु वीरेश्वर प्रसीद दययाऽधुना हृदयनिर्दयत्वं त्यज ॥ १९ ॥

अपारकरुणादिकाखिलगुणौघपूर्णार्णव क्व तूर्णमपि कर्मणामपि न शर्मणाऽनुक्षणम् ।
अवारणमुमामनोरमण धारणे कारणे निवारणमिदं कथं कथय विश्वनाथाधुना ॥ २० ॥

भवोद्भव भवत्पुरप्रवरधीरदौवारिकैः पुरन्दरपुरःसरामरनिरादरं वारितः ।
दयाकर न कातरेऽप्यमरभावमाशास्महे भवत्पदसरोरुहभ्रमरभावभाजो वयम् ॥ २१ ॥

भयादिनियमैरलं सकलयागदानैरलं तपोभिरलमप्यलं कलिमलापहं केवलम् ।
सशूलयमलामलज्वलनफाललीलारसैः अनुक्षणभयं मया समय एव नेयं वयः ॥ २२ ॥

शरदिन्दुकरातिसुन्दरं गिरिजाधारमनोहरं हरम् ।
गिरिराजकुमारिकावरं कलये शङ्करमिन्दुशेखरम् ॥ २३ ॥

शरणागतवज्रपञ्जरं परमध्यात्मरतं परात्परम् । करुणारससारसागरं कलये शङ्करमिन्दुशेखरम् ॥

अमरप्रवरं महेश्वरं रुचिरोरुस्मरहारकन्धरम् ।
त्रिपुरासुरमारसंहरं कलये शङ्करमिन्दुशेखरम् ॥ २५ ॥

मनसा वचसापि कर्मणा शिवमस्मत्कुलदैवतं मुदा ।
कलये पुनरेव सादरं गिरिजावल्लभमिन्दुशेखरम् ॥ २६ ॥

न जनिर्न जरा मृतिव्यथा कथमप्यर्धशशाङ्कशेखरे ।
स्मृतिमार्गगते गतागतैः कलये शङ्करमिन्दुशेखरम् ॥ २७ ॥

करुणाकर शङ्करेति वा हर शंभो भगवन् शिवेति वा ।
वृषभेश्वरकेतनेति वा कलये शङ्करमिन्दुशेखरम् ॥ २८ ॥

त्रिदशाधिप भूतिभूषण त्रिपुरारे सुरवैरिपूजिताङ्घ्रे ।
कुरु मामकतामतिं क्षणं मयि नित्यं कलये महेश्वरम् ॥ २९ ॥

कलिकालभयापहं मुदा गिरिजाकामुकमेकमेकदा ।
कलये कलये पुनः पुनः कलये कौतुकहेतुकं शिवम् ॥ ३० ॥

[1] शिव इत्यनुवेलसादरात् अनुवारं गिरिजामनोहरम् ।
कलये खलु कालकाल मां दयया केवलया विलोकय ॥ ३१ ॥

दयनीयतमोऽस्मि ते दया मयि तावत् प्रसृता यदि क्षणम् ।
क तदा तव हानिरातुरे हर हारे कुरु सादरं दयाम् ॥ ३२ ॥

एकस्तावदहं कलौ कलिमलप्रध्वंसकं शङ्करं
कालस्यापि विनाशकं जनिजरारोगस्य कामान्तकम् ।
त्वां मत्वा शरणागतोऽस्मि शरणं चान्यं न जाने मनः
सर्वेभ्यो विनिवृत्तमेव तदिदं जानासि गौरीपते ॥ ३३ ॥

विश्वासोऽपि यथा भवेदतिदृढः त्वत्पादपद्मे तथा
मय्यार्ते शरणागते करुणया तावद्विधेया दया ।
सा सर्वाघकुलौघनाशनकरी सा मुक्तिदानक्षया
सा संपत्करणोद्यताऽपि भगवन् फालेक्षणानुक्षणम् ॥ ३४ ॥

1 नवकोमलबिल्वपल्लवैः कमलैरप्यमलैरनुक्षणम् । विषमेक्षणमर्चयाम्यहं कलये शङ्करमिन्दुशेखरम् ।
इति श्लोकः C कोशेऽधिकः ।

कदापि न शिवेतरामरकथासु नास्त्यादरो
 न तद्भजनकातरं न च तदर्जने सादरम् ।
मनो मम तदादराद्विदितमेव वीरेश्वर
 त्वया मयि दया कथं कथय सा विधेयाधुना ॥ ३५ ॥

यद्येतस्य मनः शिवेतरपदध्याने रतं तर्हि मे
 तद्विश्वासय मन्मनोहर हर त्वत्पादपद्मं प्रति ।
तेन त्वं हरतापि या त्वयि तदा सा रक्षिता स्यान्न चेत्
 विश्वासोऽपि न तत्र तेन हरता संपादनीया त्वया ॥ ३६ ॥

[1]एतस्यासु मनोहरत्वमधुना शक्यं न चेत् तर्हि ते
 घोरापारससारसागरमहासंसारसंहारकः ।
को वा स्यादिति चिन्तयैव मरणे संरक्षणीयस्त्वया
 कः स्यादित्यपि चिन्तया न मरणं किं हन्त गौरीपते ॥ ३७ ॥

कल्पान्ते यदि रक्षणे तव मतिः स्यात् तर्हि सा किं वृथा
 कल्पः केन विलोकितापि कलितः कालः स कल्पान्तरे ।
भूयः स्यादनवस्थितिः पुनरपि स्यादेवमार्तिः पुनः
 संसारे सति रक्षणं गतमिदं हा हन्त गौरीपते ॥ ३८ ॥

किं मे दुष्कृतमीदृशं विसदृशी सा दुर्दशा दुर्दशां
 न प्राप्नोति कथं कथञ्चिदधुना श्रीविश्वनाथे स्मृते ।
किं तद्दुष्कृतकार्यमप्यहह मे किं निर्दयो मय्यपि
 त्वय्येवास्तु मनस्तथापि शरणं त्वं चन्द्रमौले मम ॥ ३९ ॥

कदाचिदपि वा दया भवतु मय्युमाकान्त ते भवच्चरणपङ्कजस्मरणमेव मे जीवनम् ।
अनन्यशरणे मयि त्वयि दया विधेया न किं विधेय दयया तया किमयमेव नाकांक्षितः ॥ ४० ॥

आधेयं समपेक्षते खलु दया रत्नं तदाधारतां
 मय्येवास्तु निरस्तपातककुले भूमण्डलेऽप्यङ्कुरम् ।

---

1 एतस्याणु C

बीजं सञ्जनयत्यपास्तकुशले तप्तं न बीजं तथा
 किं मय्यप्युपपादितं तव दयारत्नं न मोक्षाङ्कुरम् ॥ ४१ ॥

हे वीरेश्वर हे कृपार्णव दयालेशोऽपि चेत् ते मयि
 प्रायः पातककाननानलशमोपायः स एवाधुना ।
सिद्धिं किं मदपेक्षितां न जनयेत् किं वा कृतार्थोऽस्म्यहं
 तेनैवेति न बुद्धिरद्भुततमा सिद्धा न किं मे वद ॥ ४२ ॥

अत्यार्ताय भिषक्तमोऽसि भगवन् आर्तिश्च संसारजा
 सा तावत् त्वदपेक्षणादपि लयं प्राप्नोति का तावता ।
हानिः स्यादधुनापि ते यदि दया न स्यात् तदा जीवनं
 न स्यादेव ततः परं न दयया कृत्यं न वा भेषजैः ॥ ४३ ॥

यावज्जीवति तावदेव भिषजां भैषज्यचिन्ता भवेत्
 निर्वृत्तं यदि जीवनं क्व भिषजां वार्तापि कार्तस्वरैः ।
कृत्यं तत्र कृतान्तदूतकृतमप्यार्तं शरीरं तदा
 तत्कार्तान्तविलोकनेन कथमप्यर्धेन्दुमौले वद ॥ ४४ ॥

दाता न त्वादृशोऽस्ति त्रिभुवनभुवने देयवस्त्वत्र भक्तिः
 त्वल्लेशो वा महेश प्रशमनसमये याचकस्ते किलाहम् ।
यद्वैमुख्यं सुमुख सहसा नोचितं ते यतस्ते
 देयं सर्वस्वमेतत् किमिति न च मतिः पूर्णकामस्य शम्भो ॥ ४५ ॥

त्वया यदि न दीयते मयि दयापि किं सा दया स्वयं मयि पतिष्यति प्रियतमे मुहुः सादरम् ।
ततः परमहो किमित्यपि न चिन्तया किन्तया स्वयं यदि न दीयते क्वचिदपेक्षिता स्याद्गतिः ॥

अनन्यशरणोयमित्यपि मतिर्न किं ते ततः तवापि परिपालने मतिरुदेति मय्याकुले ।
ललाटलिखिताक्षरं परिहरातिदुष्टं मुहुः ललाटनयनार्चनेऽप्यहह कष्टमेवं कथम् ॥ ४७ ॥

उपेन्द्रो नेत्राब्जं करचरणपङ्केरुहगतं चकारातिप्रीतिं शिव इति च विश्वस्य तु मया ।
मनस्त्वत्पादाब्जे निहितमिदमेवास्य हि धनं गृहीत्वा व्याकोचं किमिति कुरुषे शङ्कर फलम् ॥

किमुक्तैरव्यक्तैरहह वचनैरप्यलमलं महाकालव्यालं प्रबलतरकालं भज मनः ।
हितं ते तेनैव प्रभवति च सा भावितमपि प्रभुर्नान्याधीनः परमकरुणासागर इति ॥ ४९ ॥

इति स्तुतो महादेवः प्रसन्नः करुणादिभिः । ददौ सुरेभ्यः परमं सुखं तुष्टाश्च ते सुराः ॥ ५० ॥
ततः परं भवद्भिश्च विधेयं शिवपूजनम् । तेनैव तुष्टो भगवानभीष्टमपि दास्यति ॥ ५१ ॥

ब्रह्मा—

इत्युक्त्वा भगवांस्तत्र प्रणतानादरात् सुरान् । अदृश्यः समभूद् देवः ततस्ते चकिता भृशम् ॥
अहो कोऽयं दृष्टो नयनसुभगो वृद्धवपुषा महादेवः सोऽयं किमिति [1]विततो नेश्वर इति ।
अहो भाग्यं नासीद्गिरिवरसुताकान्तभजने न बिल्वं वा दत्तं शिवचरणपङ्केरुहदले ॥ ५३ ॥

अहो धिग् धिग् जन्म व्रजतु विलयं यातु निरयं महाकालाग्नौ वा पततु झडिति व्यक्तमधुना ।
कथं भस्मीभूतं न भवति शरीरं शिवपदं न दृष्टं कष्टानामपनयनशक्तं क्षणमपि ॥ ५४ ॥

उमाकान्तं शान्तं सकृदपि नमन्तो विधिमुखैः मुहुर्देवैः सर्वैरपि सततमर्च्याः सुरपदम् ।
अतीत्य प्राप्यान्ते शिवचरणपङ्केरुहरजः समासाद्यानन्दैरनुदिनमविश्रान्तहृदयाः ॥ ५५ ॥

स्तुतो वा यो भक्त्या सकृदपि स एवामरनतं करोति श्रीमन्तं पदमपि सुखस्याशु दयया ।
अनल्पानल्पान् वा गणयति न कारुण्यजलधिः महादेवो देवः कथमपि न दृष्टो मुहुरपि ॥

न यद्रूपं दृष्टं कथमपि विधीन्द्रादिभिरपि प्रपन्नानामार्तिं शमयति सकृद्वा श्रुतमपि ।
कथं वारंवारं नयनकमलैरर्चितमपि स्वतो नासीन्नासीन्मनसि शिवबुद्धिः कथमपि ॥ ५७ ॥

निधानकलशो गतः करगतोऽपि हा हा कथं तथा किमिति जीवनं मृतसमानमेवाधुना ।
महेशचरणाम्बुजस्मरणकारणेऽनुक्षणं कथं न कृतमेव सा मतिरभूत् कथं [2]तावता ॥ ५८ ॥

अपारपापाम्बुधिशोषकस्य महेश्वरस्यामितविक्रमस्य ।
पादारविन्दस्मरणं क्षणं वा क्षणार्धमप्याशु तनोति मुक्तिम् ॥ ५९ ॥

अहो भाग्यं लोके कथमपि कृतान्तान्तकपदप्रसादार्थं यत्नो न भवति सुराणामपि नृणाम् ।
कथं वा तद्भूयादिति मनसि चिन्तापि विरता महादेवैश्वर्यं कथमपि न [3]चिन्तोपशमनम् ॥

अपारं यस्य स्यादवितथमपारं सकृदपि प्रभूतं तद्भाग्यं श्रुतमपि न केनापि तपसा ।
तदैश्वर्येयत्ता श्रुतिगणविमृग्याऽपि न ततः तमीशानं को वा भजति गिरिशालिङ्गिततनुम् ॥ ६१ ॥

उपेन्द्राद्याः सर्वे मुहुरपि सदा व्यग्रहृदयाः तमेवोग्रं मत्वा कथमपि शिवध्याननिरताः ।
तदा को वा भावीत्यपि समय इत्येव शरणं प्रपन्नास्तं देवं शरणमनुवारं हरमहो ॥ ६२ ॥

---

1 विदिशो C  2 कुण्ठिता C  3 चिन्तावधि मितम् । C

महामायापाशैर्जगदिह स बद्ध्वा पशुपतिः विधिं विष्णुं वायुं हिमकरमुखानप्युरुबलान् ।
विलासे कल्पान्ते खलु करुणया मुञ्चति मुहुः पुनर्बद्ध्वा पाशैस्त्यजति विविधैः क्रीडति तथा ॥

कल्पान्ते निजमायया जगदिदं दग्ध्वा तदोदुम्बर-
प्रच्छन्नोरुशलाटुलीनमशकाकारान् विधीन्द्रादिकान् ।
दृष्ट्वोड्डीय गतान् महाप्रलयजापाराग्निदग्धान् मुदा
गौरीस्मेरविहारवीक्षणरतक्रीडां करोत्यादरात् ॥ ६४ ॥

रजोवृत्तिव्याजे सृजति पुनरित्येवमखिलं
जगज्जालं लीला किमपि स यथापूर्वमुमया ।
सह क्रीडां कुर्वन्नवति जगदेतत् स गिरिशः
कथं वा ध्येयः स्यादमितविभवोऽयं भव इति ॥ ६५ ॥

भवत्यस्माल्लोका इति भवति योऽयं भव इति स्वयं यस्माल्लोकान् हरति हर इत्येव भवति ।
अतः सेयं लीलाप्यनलनिटिलस्येति हृदयं वदत्येषा लीला कथयति कृतान्ताद्भुतभयम् ॥ ६६ ॥

यं नत्वा मुनयो न यान्ति मनसा तृप्तिं तमद्येश्वरं
द्रष्टुं भाग्यमहो न जातमधुनोपायैर्वयं वञ्चिताः ।
किं दुष्टं निटिलस्थलेऽपि लिखितं धिग् धिग् धिगेतद्यतो
गौरीकान्तपदारविन्दमसकृत् दृष्टं प्रकृष्टं न च ॥ ६७ ॥

अहो मायाजालं प्रलयमुपयातु क्षणमपि प्रयत्नेनापीह स्मरहरपदाम्भोजभजनम् ।
न जातं दुर्जन्म प्रलयमुपयातु प्रसभतः कथं नाशो नासीदघकुलमहापर्वतगणैः ॥ ६८ ॥

अलं काले काले कथमपि कृतं नेशभजनं महामृत्योर्भीतिः विलयमुपयात्येव सहसा ।
यतस्तत् किं भाग्यं भवति भगवान् फालनयनः प्रसन्नः किं न स्यादिति खलु मनो व्यग्रमधुना ॥

तमाहुस्ते धन्यं सततमपि लिङ्गार्चनरतं शिवध्यानानन्दामृतनिधिनिमग्नं मुनिवरम् ।
स धन्यो वन्द्यः स्यादनवरतमर्धाङ्गविलसत्तटित्कूलाटोपप्रतिभटशिवावल्लभरतः ॥ ७० ॥

लोके कोपि विनष्टपातकगिरिर्गौरीविहारोत्सव
व्यापारप्रवरं हरं परतरं मत्वैव वीरेश्वरम् ।
ध्यात्वा तिष्ठति तादृशं यदि भवेद्भाग्यं तदा शङ्कर
ध्यानानन्दरसप्रवाहनिवहव्याप्तं न चित्तं कुतः ॥ ७१ ॥

शरद्राकाकान्तं कलयति कलौ कोऽपि सुकृती तदीयं किं भाग्यं भवति सकलस्याप्यनुदिनम् ।
क्व वीरेशध्यानप्रवणमनसा कोऽपि तुलनां समारूढो रूढः स्मृतरुचिरगौरीपरिवृढः ॥ ७२ ॥

स्मृत्वा पुनः पुनरुमापतिदिव्यलीलां मत्वा कृतार्थमतिमप्यनुवारमेव ।
कृत्वा शिवार्चनमहं भृशमादरेण श्रुत्वाऽऽस्थितः शिवकथाकथनेन विद्याम् ॥ ७३ ॥

याज्ञवल्क्यः —

इति ब्रह्मवचः श्रुत्वा स राजा प्रीतमानसः । शिवार्चनरतस्तत्र चकार वसतिं नृप ॥ ७४ ॥

दारैरुदारैस्तैर्वीरैः कुमारैरपि सादरम् । सहैव शङ्करध्याननिरतो भूपतिर्नृप ॥ ७५ ॥

तस्य भूपस्य नाहारो दारेष्वपि रुचिस्ततः । कुमारेष्वपि न प्रीतिः स यतः शङ्करादरः ॥ ७६ ॥

स नृपः शङ्करागारसुधानिधिविलोकनात् । तल्लीलालोलकल्लोलमालिकासमलंकृतः ॥ ७७ ॥

यथा तथा शङ्करपूजने रतिः तस्य प्रवृद्धा बहुपुण्यराशेः ।
तथा तथा तस्य निवृत्तिरेव धनेषु दारेष्वपि तेऽपि हाराः ॥ ७८ ॥

महोदारदारादरानादरोऽसौ सुराधीश्वरो हारवीरप्रवीरम् ।
कुमारोऽपि हारत्वबुद्ध्या चकार स्वराकारनाद्यैः परां प्रीतिमारात् ॥ ७९ ॥

विभवस्तस्य भूपस्य सर्वोऽपि शिवपूजने । उपयुक्तः स्थितस्तस्य बुद्धिरप्यभवन्मुहुः ॥ ८० ॥

फाललोचन यद्भाग्यं पूजार्थमपि कल्पितम् । तेन भाग्येन भाग्यानां भाग्यत्वमिति निश्चितम् ॥

त एव लोके खलु भाग्यवन्तः ते पुण्यवन्तोऽपि य एव नित्यम् ।
ये शाङ्कराराधनसाधनेन स्वान्तेन हृष्टाः फलतः प्रकृष्टाः ॥ ८२ ॥

यावन्तः सन्ति लोके शिवभजनरतास्ते शिवं प्राप्य नित्यं
भूयस्तत्पुण्यपुण्यैः पुनरपि च शिवं प्राप्नुवन्त्येव धन्याः ।
ते तावत् सर्वमान्याः प्रतिदिनममिता मत्प्रणामाश्च तेभ्यः
पापाब्धिः शोषमेति प्रलयमुपगतः कोऽपि संसारराशिः ॥ ८३ ॥

ये पूताः शिवविद्यया शिवरताः शाङ्गेऽपि लिङ्गे मुहुः
बिल्वीपल्लवमात्रमेकममलं दत्वाऽपि नत्वा मुहुः ।
नृत्यन्ति प्रलयानलादपि भयं त्यक्त्वा त एवादरात्
पूज्याः पूज्यतमाश्च दुर्लभतमास्ते भूतले भूपते ॥ ८४ ॥

तं भूपालं द्रष्टुमायान्ति नित्यं देवाः सर्वे सादरा एव दारैः ।
साकं तस्याप्यङ्गनाः शाङ्गगानं कृत्वा कालं यापयन्ति प्रमोदैः ॥ ८५ ॥

न भूप शिवविद्यया सततमेव पूतः पुनः तया निजसुतानपि व्रतविशेषतः पावनान् ।
स्वदारनिकरानपि व्रतविशेषपूतान्मुहुः विलोक्य शिवपूजनप्रवणमानसोऽभून्नृपः ॥ ८६ ॥

स वन्द्यो गन्धर्वैर्भवति सततं किन्नरवरैः गणैः सिद्धैर्देवैरपि भवति पूज्यः शिवरतः ।
तदावासो जातः सततमपि कैलाससदृशः शिवः साम्बो नित्यं निवसति गृहे तस्य नृपते ॥ ८७ ॥

कैलासवासनिरतोऽपि महेश्वरोऽभूत् तद्रत्नसद्मनिलयो नियमेन नित्यम् ।
तत्पुण्यराशिरमितो ववृधे बुधानामाश्चर्यसाधनमभून्नृपवर्यचेष्टा ॥ ८८ ॥

तच्चेष्टयाऽपि स्मृतयेष्टलाभः सा कष्टनाशाय खलु स्मृता स्यात् ।
सा शांभवानामपि दुर्लभा स्यात् न तादृशः शांभवपुङ्गवोऽपि ॥ ८९ ॥

अमितविविधभाग्यैर्भर्गलिङ्गार्चकानां अनुनयकरणेनाप्यन्वहं याति कालः ।
कलयति खलु कालोऽप्यादरैः कालकाल स्मरणभजनपूतानद्भुतं जातमेतम् ॥ ९० ॥

जीवन्ति ते शङ्करपादपद्मपूजारता एव निरन्तरायम् ।
स कालभीतिं परिहृत्य हित्वा मोहं च संसारभयाम्बुराशिम् ॥ ९१ ॥

सोऽप्यन्तकोऽप्यन्तकतां विहाय उमासहायस्मरणानुरक्तान् ।
समर्चयन्त्येव विहाय दूतान् वेषान्तरेणैव निशावसाने ॥ ९२ ॥

शमनोपशमाय सोऽपि नित्यं कुरुते शङ्करपूजनं नृपालः ।
अमलः खलु लोकपावनः शिवपूजाफलमात्रजीवनम् ॥ ९३ ॥

नत्वाऽपि श्रुत एव भूपतिरुमाकान्ताङ्घ्रिपङ्केरुहध्यानाराधनजीवनो जनिजरामृत्युव्यथासाधनः ।
भूत्या पावन एव भूतिनिवहं विश्वेश्वराराधनं कुर्वन्नेव जगत्त्रयार्जितजयो जातः स कोऽपि ध्रुवः ॥

तस्यानन्दघनार्चनेन धनदो दत्वा निधीन् यात्यतः
तैरीशार्चनतत्परः पुनरपि प्राप्नोति भाग्यं नवम् ।
तेनाप्यर्धशशाङ्कमौलिचरणध्यानप्रवीणो नृपो
दृष्टः पापविनाशनाय बहुधा पुण्याब्धिसंवर्धकः ॥ ९५ ॥

सायं शङ्करपूजनाय यतते राजा यदा सादरं पुष्पाद्यैरमितैः प्रफुल्लवदनैः हारैश्च हारैः सदा ।
सर्वे तद्वनवासिनोऽपि मुनयः शार्दूलसर्पान्वितैः एणीगोकुलमण्डलैः सह समागत्यार्चयन्तीश्वरम् ॥

नृत्यं कुर्वन्ति केचिन्नृपवर विहितां शङ्करार्चां विलोक्य
प्राप्तं भाग्यं किमेतत् बहुविधमिति ते शाङ्गलिङ्गार्चनेन ।
नत्वा ध्यात्वापि केचित् गिरिवरतनयाकान्तलिङ्गानि दृष्ट्वा
हृष्टाः पुण्यैरपारैरति खलु विविधस्तोत्रवार्तानुरक्ताः ॥ ९७ ॥

अस्माकमिन्दुशकलाभरणार्चनेन भीतिः कदापि न यमादिति संवदन्तः ।
नृत्यन्ति शान्तमनसा शिवशङ्करेति स्वानन्दराशिसमलंकृतबाष्पपूराः ॥ ९८ ॥

हर शङ्कर शङ्करेति भूयः प्रवदन्तः खलु सन्त एव नित्यम् ।
निवसन्ति शिवालयेषु तेषां अभिवृद्धिः खलु सर्वदापि मोदैः ॥ ९९ ॥

रात्रिं न जानन्ति शिवार्चनेन दिनं न जानन्ति निशामुखं वा ।
ते सर्वदा शङ्करपूजनेन कालं नयन्तीति विशेषतस्तु ॥ १०० ॥

बालैरप्यनिशं शिवार्चनरतैर्दारैश्च कन्याकुलैः
सोत्साहैः शिवपूजनोद्यतलसत्स्वान्तैरनन्तैरपि ।
नीतः काल इति प्रबोधसमयः सर्वोऽप्यबोधः कदा
कस्य स्यादिति चिन्तयापि स यमः कालं नयत्येव हि ॥ १०१ ॥

विश्वेशार्चनजातपुण्यविभवैः भावैर्जगद् व्यापृतं
भूपाले प्रबलेऽपि शाम्भववरैस्तावद्धरामण्डलम् ।
सर्वं पावनमेव शाम्भववरापारश्रिया केवलं
तद्भाग्यं न कदापि जातमधुना तत्स्मर्यते शोभनम् ॥ १०२ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवपूजा-स्तुति-प्रसाद ब्रह्मादिपश्चात्तापवर्णनं नाम पञ्चविंशोऽध्यायः ॥

---

## अथ षड्विंशोऽध्यायः ।

याज्ञवल्क्यः —

स राजा शाम्भवं देशं पालयन्नखिलानपि । चकार शाम्भवानेव पावनान् शिवविद्यया ॥ १ ॥

स तावद्धन्यमात्मानममन्यत महीपतिः । शिवार्चनरतान् दृष्ट्वा सर्वानपि विशेषतः ॥ २ ॥

चतुर्मुखोऽपि स ययौ भूपालेनानुमोदितः । कृत्वा शिवार्चनं नत्वा पुनः पुनरुमापतिम् ॥ ३ ॥

तदानीमागतः शेषस्तं नृपं द्रष्टुमादरात् । शिवपूजारतं धीरं शिवव्रतपरायणम् ॥ ४ ॥

तं दृष्ट्वा प्रणतो भक्त्या राजानं शैवपुङ्गवम् । कृतार्थोऽस्मीति तं प्राह स शेषो भूतिभूषणः ॥

स भूपतिश्च तं दृष्ट्वा शेषं कृतशिवार्चनम् । शिवनामजपोद्युक्तं प्राह गम्भीरया गिरा ॥ ६ ॥

राजा —

कस्मादकस्मादद्याशु देशादिह समागतः । किं ते व्रतं कुलं किंवा कुलनारीव्रतं च किम् ॥ ७ ॥

शीलं च तव किं नित्यं महिलाशीलमेव च । केनाचारेण सततं क्रियते दिनयापनम् ॥ ८ ॥

इति तद्वचनं श्रुत्वा वपुषा मानुषेण सः । शेषः प्राहातिविनयात् प्रणम्य गिरिजापतिम् ॥ ९ ॥

शेषः —

पाताले वसतिः कुलं च नृपते मे पन्नगानां व्रतं
शर्वाराधनमेव मत्कुलसतीवृन्दस्य तावद्व्रतम् ।
शश्वल्लिङ्गसमर्चनं कुलसतीशीलं शिवाराधनं
तन्मे शीलमनाकुलं मम मनः श्रीकालकालार्चने ॥ १० ॥

अन्यः कोपि न पूज्यते हि न शिवादन्यः समाराध्यते
न ध्यातोऽपि न कीर्तितोऽपि न मनाक् दृष्टः स्मृतो वा मया ।
अन्यस्य त्रिदशेषु कस्यचिदपि ज्ञातं स्वरूपं शिवं
त्यक्त्वाऽन्यस्य कदापि सादरधिया नामापि न श्रूयते ॥ ११ ॥

अन्याराधनपूजनादिनिरतं न स्वान्तमस्मत्कुले
दाराणामपि सर्वथापि सुतरां पुंसां शिवान्यामरात् ।
नास्मद्दृष्टिपथं प्रयाति सहसा शैवत्वमासाद्य चेत्
आयाति प्रयतो विभूतिसहितस्तेनैव संभाव्यते ॥ १२ ॥

यः कश्चिद्भवतु त्रिलोचनरतो भूतिप्रभाभासुरो
रुद्राक्षोज्ज्वलमालिकातिरुचिरो लिङ्गार्चकाराधकः ।
लिङ्गाराधनतत्परः शिवकथापीयूषधाराधरः
तत्पानादपि पीन एव स मया संभाष्यते सादरम् ॥ १३ ॥

लिङ्गाराधनमन्तरेण न तृषा काले वसन्तेऽपि वा
ग्रीष्मे वा विपिनेऽपि नीरनिकटे नीरे करस्थेऽपि वा ।
तन्नीरं तु न पीयते फलकुलं न स्पृश्यते नेक्ष्यते
अन्नं वा दधिशर्करादिककथा दूरे धराधीश्वर । १४ ॥

तद्वस्त्रं परिधीयते नवमतिश्लाघ्यं शिवायार्पितं
तद्रत्नाभरणं तदन्नममलं क्षीरं जलं वा फलम् ।
तत्सर्वं [1] शिवभुक्तमित्यनुदिनं गृह्णाति सर्वं मुदा
तेनैवोदरपूरणादिकमपि प्राप्तेन मे जायते ॥ १५ ॥

कस्तूरीघनसारकुंकुमरजःपाटीरसारादिकं
भूत्या संयुतमेव सन्ततमुमाकान्ताय यद् दीयते ।
लिङ्गे तत् खलु दीयते सुकुसुमं बिल्वीदलं वा परं
निर्माल्यं शिरसा प्रगे परमुमाकान्तं समभ्यर्च्य तु ॥ १६ ॥

अस्माकं जनिकाल एव नियतः सङ्गोपि तत्सङ्गमः
शङ्ख्यानपुरःसरं सुखमपि ज्ञातं महेशार्चितम् ।
नारी भस्मविभूषिता परमपि स्पृष्टापि दृष्टाऽपि सा
रुद्राक्षाभरणा शिवार्चनरता वीरेशगानोत्सवा ॥ १७ ॥

स्वप्नेऽप्यन्यशिवव्रतागतकथा व्यर्था सुधासाधनं
पापाकारफलादिसाधनमिति ज्ञात्वैव न श्रूयते ।
अस्माभिः शिववीक्षणेन समयः सर्वः सदा नीयते
श्रीविश्वेशकथाविशेषकथनैर्दारैः कुमारैरपि ॥ १८ ॥

अस्माभिः स्मरवैरिपूजनरतैर्माराररिपूजारतो
यः कश्चिद्भुवनेषु नेत्रपदवीं प्राप्तः समालिङ्ग्यते ।

---

1 शिवभुक्तमित्यपि मितं भक्त्या परं गृह्यते C

अन्यः स्पृश्यत एव नापि विमलैर्दृष्टोऽपि दूरादपि
स्पृष्टो दूरनिराकृतोऽपि भवतीत्यत्युत्सवो जायते ॥ १९ ॥

अस्मद्बालकसेवकैरपि मुहुर्लिङ्गार्चनाभ्युद्यतैः
बिल्वाद्याहरणोत्सवैः शिवकथालापप्रवाहोत्सवैः ।
कालो नीयत एव कालजभयं त्यक्त्वैव तैर्बालकैः
लिङ्गाराधनमेव साधु विविधं ध्येयं विधेयं च नः ॥ २० ॥

अस्माकं खलु कालकालभजनात् कालोऽपि रङ्कायते
शङ्कातङ्कविवर्जितेन मनसा शङ्कः परं स्मर्यते ।
भूतिः शङ्करनिर्मिता सिततरा नित्यं परं धार्यते
दाराणामपि तद्व्रतं खलु सदा तल्लिङ्गपूजादिकम् ॥ २१ ॥

अस्मद्वंशसमुद्भवेन न शिवादन्यः समाराध्यते
तच्चिन्ताऽपि न तत्कथापि सुतरां स्वप्नेऽपि वा जायते ।
नाशैवैः सह सङ्गमोऽपि सहसा शैवी कथा श्रूयते
शैवेभ्यः शिवतत्परैः सह सभा शैवे सदा वेश्मनि ॥ २२ ॥

लिङ्गान्येव गृहेषु रत्नरचितश्रीनन्दिकेशान्वित-
श्रीभृङ्गीरिटिसंयुतानि तरवो बिल्वस्य तत्पल्लवैः ।
तन्मूले शिवपूजनं प्रतिदिनं शैवी कथा श्रूयते
तत्रैव प्रतिवासरं शिवजनैः साकं शिवः स्मर्यते ॥ २३ ॥

आराध्यं शिवलिङ्गमेव सततं ध्येयो महेशो मुहुः
जप्यं तावदहर्निशं शिवमयं पञ्चाक्षरं केवलम् ।
वादोऽपि प्रतिवासरं शिवकथातात्पर्यबोधाय नः
सर्वं भूप वयः शिवार्चनशिवध्यानैर्विनीतं मया ॥ २४ ॥

अस्माकं रसना महेश्वर शिव श्रीविश्वनाथाम्बिका-
कान्तानङ्गहरान्तकान्तक महादेवेति नामामृतम् ।
पीत्वा क्षीरसमन्वितामपि सितां नापेक्षते न स्पृहां
द्राक्षाणां कुरुते न भोजनरतिं नैवेक्षुकाण्डे रतिम् ॥ २५ ॥

हारं केवलमादराद्गुणविधिप्राप्तोपहारं परं गृह्णात्येव कदाचिदाशु रसना तृप्तैव नामामृतैः ।
चक्षुः पूजितशाङ्गलिङ्गनिकरालङ्कारसंवीक्षणैः प्रीतिर्नान्यविलोकनाय यतते निद्रावसानेष्वपि ॥

चित्तं शैलसुतासहायचरणाम्भोजाम्बुजध्यानतः
सन्तुष्टं करणान्तरप्रियतमव्यापारहीनं परम् ।
को वा स्वाभिमतं विहाय पुनरप्यन्यत्र यात्यादरा-
दश्रान्तः शिवपादपद्मभजनध्याने निधाने मम ॥ २७ ॥

श्रोत्रं शङ्करशङ्करामितकथापीयूषपूर्णार्णवे
तन्नामश्रवणोत्सुके शिवकथासञ्जीविनीसंयुते ।
श्रीविश्वेश्वरदिव्यनाममणयो मत्कर्णरूपां गुहां
[1]संप्राप्ताः स्वतमोनिवारकरुणां प्राप्ताः प्रसिद्धा अपि ॥ २८ ॥

अस्माकं कुलदैवतं शिव इति स्वप्नेऽपि तत्पूजना-
त्तद्ध्यानादपि तत्कथाश्रवणतो नित्यं शिवं जायते ।
नारीणामशिवाभिधानकथनं स्वप्नेऽपि वा दुर्लभं
स्वप्ने शङ्कर एव शैलतनयाकान्तो मया दृश्यते ॥ २९ ॥

स्वप्ने शङ्कर एव शश्वदुमया साकं प्रियं भाषणं कुर्वंस्तत्पदपङ्कजार्चितपदाम्भोजो मया दृश्यते ।
भाग्यैः शारदचन्द्रमण्डलनिभस्तारोरुहारावलीशोभालङ्कृत एव भाति हृदये सर्वेष्टदानोत्सुकः ॥

सुस्वप्ने वृषभध्वजः स्फुरति मे चित्ते पिनाकी शिवः
श्रीकण्ठो विषमाक्ष एव गिरिजाक्रीडाविनोदादरः ।
उत्पन्ने गरुडध्वजः स्फुरति मे चित्ते तदा ताड्यते
दण्डैरेव किमागतोऽसि गिरिजाक्रीडारते शङ्करे ॥ ३१ ॥

नित्यं मत्कुलकामिनीभिरनिशं गौरीपते शङ्कर
श्रीविश्वेश्वर चन्द्रचूड गिरिजाक्रीडाविनोदादर ।
त्राहि त्राहि सदेति गानकलनैः कालो मुदा नीयते
बालक्रीडनलालसाभिरभितो डोलाकुलान्दोलने ॥ ३२ ॥

का कार्तस्वरडोलया मणिगणश्रीव्याप्तया बालको
न क्रीडानिरतं करोति शिव इत्येवाद्य डोलान्वये ।

---

1 "प्राप्ताः पापतमोनिवारकतया प्राप्ताः प्रसिद्धिं मते" C

डोलेयं मृड ते मृडानि सततं क्रीडां कुरुष्वेत्यपि
व्याहारव्यवहारशीलनिरता न स्यात्कुले मे नृप ॥ ३३ ॥

डोलेयं गिरिजापतेरिति भवेदादौ तदान्दोलनं
बालस्य प्रसवे शिवे शिव शिवा दोलेति कन्योदये ।
एवं कौतुकमेव शङ्करकृपापाले कलत्रेऽपि मे
दारैः शङ्करपूजनेन समयः सर्वप्रियो नीयते ॥ ३४ ॥

अस्माभिरिन्दुशकलाभरणप्रसादात् गौरीपते शिव मृडेति महेश्वरेति ।
नामामृतं मुहुरपारमपि प्रपीतं पीनाश्च तेन तनवो विगताश्च रोगाः ॥ ३५ ॥

अस्माभिर्निजबालकैः सह सदा विश्वेश्वरः पूज्यते
तन्नामामृतमेव पूतहृदयैर्नित्यं मुहुः पीयते ।
तन्नामध्वनि जप्यते मुहुरुमाकान्तेति वा गीयते
सन्नन्यप्यभिभुज्यते गिरिसुताकान्तोपभुक्तं मुदा ॥ ३६ ॥

शृण्वन्तः शाङ्कलीलामपि सितभसितैरङ्गमुद्धूलयन्तः
पापानि ध्वंसयन्तः शिवभजनरताः प्रीतिमापादयन्तः ।
रुद्राक्षैः छादयन्तस्तनुमपि कुसुमैर्लिङ्गमभ्यर्चयन्तः
शंभुं संप्रार्थयन्तः कति कति भुवने शांभवाः सन्ति सन्तः ॥ ३७ ॥

लिङ्गाराधनसाधनैः बहुविधैर्भाग्यैर्वयं संवृताः
कल्पानोकहमूलरत्नविलसद्गेहान्तरेषु स्थितिः ।
अस्माकं न तृषादिकं न च जरा मृत्युस्तु दूरे ततो
रोगः श्रूयत एव नेति परमानन्दप्रवृद्धिः सदा ॥ ३८ ॥

एतद्भाग्यमुमासहायचरणाम्भोजार्चनात् केवलं
कालो दृश्यत एव नातिविमलैः श्रीकालकालार्चनैः ।
कः कालान्तकतत्परोऽपि भुवने मृत्युं प्रपश्यत्यतः
मृत्युर्दूरत एव याति बहुधा भीतः स्वदूतैः सह ॥ ३९ ॥

कान्ता पीनपयोधरस्तनतटक्रान्ताणुमध्या प्रगे नैवालिङ्गनमिच्छति प्रियतमे नालं तथोत्कण्ठया ।
कुर्वन्ती खलु नीलकण्ठभजनं तद्ध्यानधारामृतं पीत्वा सन्ततमन्तकान्तक महादेवेति संवादिनी ॥

अस्माभिः शिवपूजनोत्तरमिदं संप्रार्थ्यते शङ्कर
त्राहि त्वत्पदपद्मसद्मनि मनो मे संवसत्वन्वहम् ।
अन्यत् प्रार्थनया विनापि सकलं भाग्यं प्रलब्धं मया
मद्गेहाङ्गणमेत्य तिष्ठति सदा वृन्दारकाणां गणः ॥ ४१ ॥

मद्गेहद्वारि देवाः प्रतिदिनमभयं प्रार्थयन्ते नतांसाः
श्रीकण्ठाहारलेशैरनुदिनमसकृत् पुष्टदेहा विमोहाः ।
अस्माकं लिङ्गपूजाव्रतनियमरतिः स्यात् प्रसादात् तवेति
प्राज्यस्वाराज्यवांछाप्रतिदिनमसकृन्नम्रवक्त्रारविन्दाः ॥ ४२ ॥

अतः परमपारतो रतिरपारसंसारतो निवृत्तमुपयातु मे किमपि वांछितं तत्र न ।
भवत्करुणया परं चिरमपारभाग्योदयः प्रतिक्षणमभूदतस्त्वयि मनः स्थिरं जायते ॥

अतः परमुमापते जननकष्टमुत्कृष्टमप्यपास्यमिति मे मतिर्मम कुलेऽपि जन्मव्यथाम् ।
हरामरवरादरादपहरोरुजन्मव्यथां अनाथजननाथ मे कथय विश्वनाथाधुना ॥ ४४ ॥

अनन्यशरणोऽयमित्यपि मतिर्न किं ते ततः तवापि परिपालने मतिरुदेतु मय्यातुरे ।
अहो निटिललेखनं किमिति दुष्टमस्याभवत् ललाटनयनार्चनेऽप्यहह कष्टमेवं कथम् ॥ ४५ ॥

संसारे यदि पात्यते मुहुरयं भक्तस्त्वया किं ततः
स्वान्तं मे गिरिजासहायनिरतं नेतुं समर्थोऽस्ति कः ।
वह्निस्तावदधोनिपातित इति ज्वालां मदीयामधः
कः कर्तुं यतते मनागपि महाज्वालाप्ययो यात्यपि ॥ ४६ ॥

उत्फुल्लं नलिनं करोति मलिनं भानुः कृशानुः करो-
त्यागं पावनमम्बुराशिमखिलं रथ्याजलं केवलम् ।
दोषं किं गणयत्ययं खलमपि श्रीकालकालाधुना
मामीशान विलोकयाशु दयया त्वं तावकं मां कुरु ॥ ४७ ॥

अंकं किं न करोति कुत्सितमुमाकान्तार्भकस्तावता
तत्त्यागं कुरु तेन कोऽपि जनकः स त्वं पिता मामतः ।
त्वद्भक्तं कुरु निर्मलं गतभयं संसाररोगातुरं
कालव्याकुलमन्तकान्तक गताशेषाघराशिं कुरु ॥ ४८ ॥

संसारार्णवकर्णधार इति या सिद्धा प्रसिद्धिस्ततः
स्वामिंस्तामनुसृत्य वृत्तिरुचिता ते तावदेतस्य का ।
हानिः स्यान्न गतागतैरपि पुनर्जन्वव्यपाये कथं
कीर्तिः स्यात्तव सा तदैव महती चिन्ता निरन्ता मम ॥ ४९ ॥

इत्येवान्वहमीशपूजनरतैः संप्राप्यते सादरं
नान्यत्सर्वमयत्नलब्धमिति मे तत्प्रार्थनीयं परम् ।
यद्यत् स्यात् समुपेक्षितं तदखिलं सिद्धं न भूषादिषु
प्रीतिर्भूतिविभूषणस्य परमं तद्भूषणं मे यतः ॥ ५० ॥

हारो हारविभूषणाय न तथा केयूरहारप्रभा कोटीशमलरत्नकुण्डलगणच्छाया ... परम् ।
किन्तूद्धूलनफालभागविलसद्भस्मत्रिपुण्ड्रं तथा रुद्राक्षामलमालिका करतले लिङ्गं शिवाष्टाक्षरम् ॥

प्रायोऽन्तःकरणप्रियाभरणता विश्वेशपादाम्बुज ध्यानं शङ्करनामकीर्तनमणिर्जिह्वागणालंकृतिः ।
मत्कर्णाभरणं च शङ्करकथारत्नार्णवाकर्णनं श्रीचामीकरकङ्कणे करयुगस्येशाय बिल्वार्पणम् ॥५२॥

मन्नेत्राभरणं महेश्वरमहालिङ्गार्चनालोकनं मत्फालस्य विभूषणं सितलसद्भस्म त्रिपुण्ड्रं परम् ।
श्रीविश्वेशपदाम्बुजप्रणतयः तावच्छिरोभूषणं शैवक्षेत्रगतागतानि पदयोस्तावत् परं भूषणम् ॥५३॥

मत्कण्ठाभरणं प्रकृष्टममला रुद्राक्षमाला परं नासालङ्करणं शिवार्पितलसद्बिल्वीदलाघ्राणनम् ।
मद्वंशाभरणं शिवैकशरणं तत्पादुकाराधनध्यानाभ्यर्चनजातपुण्यविभवो भावः परं भावुकैः ॥

इत्याकर्ण्य विशिष्य शेषवचनं भूपः समुत्थाय तं
नत्वा सादरमादरेण बहुधा शाङ्गाङ्गमालिङ्ग्य च ।
धन्योऽयं शिवतत्परोऽयमधुना दृष्टः शिवो वीक्षितः
साक्षादक्षयपुण्यकोटिभिरयं किं शांभवो दुर्लभः ॥ ५५ ॥

इत्युक्त्वा स ददौ हारो हारान् हाराय सादरम् ।
हारैः कुमारैर्दारैश्च सह नत्वा पुनः पुनः ॥ ५६ ॥

संभावितः प्राह स भोगिराजस्तेनाम्बिकावल्लभपूजनाय ।
स्वर्लोकमत्यादरतस्तदीयां संभाव्य वृत्तिं बहुधा विशिष्य ॥ ५७ ॥

उषित्वा स कियत्कालं स्वालयं गन्तुमुद्यतम् । राजा तदानीमभ्यर्च्य शङ्करं बिल्वपल्लवैः ॥५८॥

तदानीमेव तं द्रष्टुं आगतो गरुडध्वजः । लक्ष्मीलालितवामाङ्गः सनकादिसमन्वितः ॥ ५९ ॥

शङ्खचक्रगदाशार्ङ्गकौस्तुभादिविभूषितः । तं दृष्ट्वा विस्मयं प्राप्ताः सर्वे दौवारिकास्तदा ॥ ६० ॥

त्वरया गरुडारूढः प्रवेष्टुं गिरिमन्दिरम् । समुद्यतो निषिद्धोऽपि हरिर्दौवारिकैरपि ॥ ६१ ॥

तद्दौवारिकदण्डमण्डलमयं दृष्ट्वापि नारायणो
भीतो दूरत एव कोऽयमभवत् कालः खलो दुर्दशाम् ।
मह्यं सञ्जनयत्यहो (?) महेशकरुणा दीनातिदीनोऽस्म्यहं
हा हा हन्त किमन्तका इव कथं तिष्ठन्ति दौवारिकाः ॥ ६२ ॥

नाभूदेव किमन्तकान्तककृपा येनाधुना शांभवो
भूपालो न विलोकितोऽपि न ततः संभावितो वा मुदा ।
यत्संभाषणमेव भूषणमिति ज्ञातं तदेव क्षणं
मोक्षस्यापि विलक्षणं करणमित्याहुर्मुदा शांभवाः ॥ ६३ ॥

विघ्ना एव भवन्ति तावदसकृन्नूनं खलु श्रेयसां
तद्दौवारिकबुद्धिरेवमभवत् मां पातु देवो मुहुः ।
उड्डीयापि न गन्तुमेवमुचितं दण्डाय भीतोऽधुना
स्तब्धोऽयं गरुडो दृढोऽपि झडिति व्यग्रं च चित्तं मम ॥ ६४ ॥

पुण्यान्यस्य बहूनि तावदधुना संपादनीयान्यपि
प्रायः पर्वतराजराजतनयाकान्ताङ्घ्रिपङ्केरुहम् ।
न ध्यातं मुहुरादरेण सदनात् तीव्रेण किं निर्गमे
तद् ध्यातं यदि सादरं मुहुरियं प्रत्यूहवार्ता कुतः ॥ ६५ ॥

सर्वाघौघविनाशकस्मरणतो गौरीपतेः सादरं
प्रत्यूहो विलयं प्रयाति बहुधा प्रत्यूहसङ्घक्षये ।
श्रीविश्वेश्वरपादपद्मभजनं तावत्परं साधनं
तस्मादप्यधिकं न साधनमिति ज्ञातं मुनीन्द्रैरपि ॥ ६६ ॥

संसारोऽपि लयं प्रयाति बहुधा विश्वेश्वराराधनात्
प्रत्यूहः स कथं न याति विलयं विश्वेश्वराराधने ।
तद्ध्यानं सुरभूरुहः सुरमणिः तद्देवगौरित्यपि
शान्तिस्तेन नवापि तेऽपि निधयः प्राप्ता भवन्त्येव हि ॥ ६७ ॥

ब्रह्माण्डं प्रलयं प्रयाति गिरिजाकान्तांघ्रिपङ्केरुह-
श्रीपूजाऋजुभावतः खलु सकृद्दज्वी(?) सकृत् स्याद्यदि ।
तर्हि स्यात् सकलोदयस्थितिरिति व्यक्ता ततस्तत्स्मृतेः
सर्वाभीष्टफलश्रियां समुदयः स्यादेव सर्वात्मना ॥ ६८ ॥

न जानीमस्तावद्गिरिशचरणांभोजभजनप्रभावं भावानामभिमतसमस्तार्थफलदम् ।
तदेवापाराघक्षयकरमपूर्वाणि तनुते न वा पूर्वे पक्षेऽप्यहह न विजानन्ति विधयः ॥६९॥

उमाकान्ते स्वान्तं यदि निहितमत्यादरभरैस्तदा तावल्लोको विजित इव मन्ये ध्रुवमिदम् ।
अपारैराकल्पं प्रतिदिनमहादानतपसां समूहैरेव स्यादिति मतिरभूदेव बहुधा ॥ ७० ॥

किमेवं प्रत्यूहः समभवदहो शांभवपदं मनाग्दृष्टं यन्मे सति तिमिररूपोऽयमधुना ।
अयं तावद्गौरीरमणचरणांभोजकलन प्रसादादेवाशु प्रशममुपयास्यत्यपि न किम् ॥ ७१ ॥

इदं च रजनीमुखं शिवपदाम्बुजाराधनप्रसादनिधिसाधनं शनियुतोऽपि [1] कामोऽधुना ।
शिवो यदि समर्चितः सकलसिद्धिरद्याशु मे भविष्यति न संशयः शिवकृपा यदि स्यान्मयि ॥

मृगैरपि महोत्सवैः सितविभूतिपूतैरहो प्रदोषसमये गतिः क्रियत एव दूर्वाङ्कुरैः ।
सुबिल्वदलसंयुतैरपि मनोहरैः सादरं महेशसदनं प्रति प्रियमयूरगोभिः सह ॥ ७३ ॥

प्रयान्ति तरवोऽप्यमी विविधपुष्पगुच्छावृताः कृताञ्जजलसेचनाः सितविभूतिपुण्ड्राङ्किताः ।
शिवालयममी शुकप्रभृतिपत्रिवर्गा अपि प्रभूतविभवो नृपः शिवपदाम्बुजाराधकः ॥ ७४ ॥

भाग्यं शङ्करपूजया च [2] नियुते कामे परं लभ्यते लिङ्गे बिल्वदलार्पणं च विविधश्रेयस्करं जायते ।
तत्किं विघ्नितमेव जातमधुना तेनैव भाग्यं महत्प्रायो धास्यति सायमीशभजनाभावे न सर्वात्मना ॥

इति व्याकुलचित्तस्य वचनानीन्दिरापतेः । श्रुत्वा सनन्दनः प्राह तमेव गरुडध्वजम् ॥ ७६ ॥

सनन्दनः —

अयं पुण्यतमः कालः कालकालसमर्चने । शनित्रयोदशी पुण्या प्रदोषोऽयं विशेषतः ॥ ७७ ॥
प्रदोषकाले संप्राप्ते कृत्वा स्नानादिकं ततः । पूजनीयो महादेवः शिवलिङ्गे शिवात्मके ॥ ७८ ॥
सशुक्लवाससा पूज्यो भस्मना भूषितेन च । रुद्राक्षाभरणेनापि ततः पीताम्बरं त्यज ॥ ७९ ॥
स्नानं कुरु प्रयत्नेन शिवतीर्थे शिवप्रिये । शिवपादाम्बुजोत्पन्नमिदं तीर्थमघापहम् ॥ ८० ॥

---

1 द्वारोऽधुना C 2 शनियुतेः कामः परं C

अत्र स्नानेन पापानि विनश्यन्ति न संशयः । अनेनैव जलेनेशः ससर्ज जगतां त्रयम् ॥ ८१ ॥
ससर्ज जलमीशानः प्रथमं तदनन्तरम् । अग्निं चन्द्रं च सूर्यं च भवन्तं विधिमेव च ॥ ८२ ॥
ततः सर्वानिमान् लोकान् ससर्जानेन केवलम् । इदं खलु महत् स्थानमुमाकान्तप्रियं हरे ॥८३॥
गौरीविनिर्मितमेवेदं लिङ्गं संपूजितं त्वया । समर्चय प्रयत्नेन भूतिरुद्राक्षभूषणः ॥ ८४ ॥
त्यज चक्रं गदां शङ्खं शार्ङ्गं च गरुडध्वजम् । अशाम्भवानि चिह्नानि सर्वाण्यपि परित्यज ॥
करवीरैश्च कनकैः लिङ्गमर्चय शाङ्करम् । प्रदोषकाले संप्राप्ते शुचिभूतेन भस्मना ॥८६ ॥
पूजनीयो महादेवो बिल्वपत्रादिसाधनैः । अदूरे बिल्वतरवः सन्ति तद्बिल्वपल्लवैः ॥ ८७ ॥
मुनयोऽपि प्रयत्नेन प्रदोषे गिरिशार्चनम् । कुर्वन्ति बिल्वपत्राद्यैः शिवपञ्चाक्षरोत्सवैः ॥ ८८ ॥
निवारितोऽसि प्रबलैः भूपदौवारिकैर्हरे । अशाम्भवत्वविज्ञानात् त्वयि तावदसंशयम् ॥ ८९ ॥
भस्मोद्धूलितसर्वाङ्गः त्रिपुण्ड्राङ्कितमस्तकः । रुद्राक्षमालाभरणः शाम्भवः शिवतत्परः ॥ ९० ॥
शाम्भवालोकनेनापि भीता दौवारिकाः परम् । शिवालयप्रवेशेषु न करिष्यन्ति वारणम् ॥ ९१ ॥
पश्य शार्दूलवृन्दानि भस्मपूतानि तान्यपि । एणीमुखान् मृगान् पश्य सर्वान् भस्मविभूषितान् ॥
मयूरादिपतङ्गांश्च पश्य भस्मविभूषितान् । रुद्राक्षमालाभरणान् शिवध्यानपरायणान् ॥ ९३ ॥
तरूनप्यत्र तरसा हाररूपधरान् परान् । विलोकय प्रयत्नेन शिवपूजनसाधनान् ॥ ९४ ॥
प्रदोषकाले संप्राप्ते शांभवं वेषमावह । अशांभवानां सहसा प्रवेशो नात्र सर्वथा ॥ ९५ ॥
भूतनाथार्चनपरो भूपतिर्भूतिभूषणः । स भूतिरहितं प्रायो न पश्यति विशेषतः ॥ ९६ ॥
भूमण्डलमिदं सर्वं मण्डितं शांभवैः परम् । अशांभवानां वार्तापि सर्वथाऽत्र न दृश्यते ॥ ९७ ॥
किञ्चाशांभववेषेण स्थितिरत्रोचिता न ते । प्रदोषेषु विशेषेण नाशांभवविलोकनम् ॥ ९८ ॥
अशांभवं प्रदोषेषु यः पश्यति विमोहतः । स याति नरकं घोरं कुयोनिमपि गच्छति ॥ ९९ ॥
अशांभवमुखं दृष्ट्वा प्रदोषे मोहतोऽपि वा । दरिद्रो जायते मर्त्यः पुना रासभतामियात् ॥ १०० ॥
धिगशांभवजन्मानि भूतिहीनानि सर्वदा । प्रदोषेषु विशेषेण भूतिहीनो निरर्थकः ॥ १०१ ॥
[1] त्रिपुण्ड्ररेखारहितं यदि फालं निशामुखे । तदा तं धिग्धिगित्येव न पश्यत्यपि पण्डितः ॥१०२॥
रुद्राक्षधारणं श्रौतं श्रौतं तद्भस्मधारणम् । तत् त्यक्तं येन सहसा स तावत् पतितो भवेत् ॥१०३॥

---

1 अयं श्लोकः C कोशे नोपलभ्यते ।

अस्माकमीशानपदार्चकानां विभूतिरुद्राक्षविभूषणानाम् ।
उद्‌धूलनेनास्तु पवित्रमेतत् गात्रं प्रदोषेषु विशेषतस्तु ॥ १०४ ॥

किं च पीतांबरधरं शङ्खचक्रगदाङ्कितम् । विलोक्य सायं मनुजो दरिद्रो भवति ध्रुवम् ॥ १०५ ॥

[1]युद्धैः किमेतैस्तत् कृत्यं वलक्षमत्र जनार्दन । किंचायुधैः किमेतैस्तैः कृतमत्र जनार्दन ॥१०६॥

किञ्चाशाम्भववेषभूषिततनुं दृष्ट्वैव दौवारिकाः
क्रुद्धा एव भवन्ति ते तु सहसा शान्ताः कदापि त्वयि ।
इन्द्रे वा न विधौ विधिप्रभृतिषु व्यग्राः स्वदण्डाहति-
व्यग्रान् कर्तुमपि स्वतोऽपि सहसा तावत् प्रवृत्ताः परम् ॥ १०७ ॥

कः शाम्भवेषु कुरुतेऽप्यभिमानवार्तां दुर्वेषदूषिततनुस्तु न तत्र याति ।
दैवाद्गतो यदि तदा न निवारितोऽपि तद्दण्डभीषणरवेण न [2]ताण्डवेन ॥ १०८ ॥

धन्यः शाम्भवपुङ्गवेषु विनतो भूतित्रिपुण्ड्राङ्कितो
रुद्राक्षाभरणो महेश्वर महादेवेति वा संवदन् ।
तैरप्यर्चित एव याति भवनं शंभोः परं शाम्भवः
तं को वा जगतीतले न नमति श्रीविश्वनाथप्रियम् ॥ १०९ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवराजसंवादे विष्णुसनन्दनसंवादे
शनिप्रदोषमहिमावर्णनं नाम षड्विंशोऽध्यायः ॥

—:x:—

## अथ सप्तविंशोऽध्यायः ।

याज्ञवल्क्यः —

इति तस्य वचः श्रुत्वा सोऽपि नारायणस्तदा । युक्तमुक्तमिति प्रीत्या तमाह पुनरादरात् ॥ १ ॥
नरसामान्यवेषेण गम्यते यदि तत्र मे । प्रवेशो दुर्लभो नूनं सायङ्काले विशेषतः ॥ २ ॥
सायं शनित्रयोदश्यां शांभवाः कोटिशः शिवम् । पूजयिष्यन्ति राजापि सामात्यः पूजयिष्यति ॥
राजदाराः कुमाराश्च राज्ञः प्रज्ञाबलान्विताः । तेषु सत्सु प्रवेशो मे कथं वा स्यात् शिवालये ॥

---

1 इदमर्धं C कोशे नोपलभ्यते । 2 ताडनेन C

केन रूपेण गन्तव्यमिति चिन्ता प्रजायते । मत्वा विलक्षणं रूपं शांभवाश्शङ्किता यदि ॥ ५ ॥
तदा खलु शिवद्रोहस्तेन स्यान्नरके स्थितिः । शिवद्रोहरताः पूर्वं नरके पतिताः खलु ॥ ६ ॥
तेषां निवृत्तिरद्यापि नरकेभ्यो न जायते । पापान्तराणि नश्यन्ति धर्मभेदे कदाचन ॥ ७ ॥
शिवद्रोहान्वितं पापं नश्यत्येव न सर्वथा । शिवार्चनस्य विघ्नश्चेत् क्रियते तेन मायया ॥ ८ ॥
अमानुषेण वेषेण गमने शिवमन्दिरे । नयिष्यति न सन्देहो घोरं रौरवमद्भुतम् ॥ ९ ॥
न रौरवान्निर्गमोऽपि कदाचिदपि सर्वथा । भविष्यत्यत एवाद्य सङ्कटं समुपागतम् ॥ १० ॥
शिवार्चनपरित्यागस्तद्विघातश्च सर्वथा । प्रायश्चित्तसहस्रैर्वा न शान्तिमुपयास्यति ॥ ११ ॥

मन्ये पातकपातकं बहुविधापारव्यथासाधनं
सायं शङ्करलिङ्गपूजनपरित्यागं तमत्यद्भुतम् ।
साक्षाद्रौरवहेतुभूतमसकृत् कालोऽपि तं पातकं
मत्वा विस्मयमेति तेन सहसा तस्मान्निवृत्तिश्च न ॥ १२ ॥

किं तेनेति वदन्ति चेदतिखलाः किं तावता तत्समं
तस्मादप्यधिकं च पातकवरं नैव प्रपश्याम्यतः ।
न स्यादेव महेश्वरार्चनपरित्यागे मतिः सर्वथा
सद्वंशप्रभवस्य सा भवति चेत् स्याज्जारजानां परम् ॥ १३ ॥

निधानमिदमेव नः शिवपदाम्बुजाराधनं तदेव सुरभूरुहः सुरमणिः सुराणामपि ।
तेनैवामरजीवनं सुरतरुं सूते तदेवाद्भुतं तच्चिन्तामणिमन्ततो नवनिधीनां देवतानां सुधाम् ॥

न शिवार्चनसामर्थ्यं जायते मनुजैः सुरैः । गन्धर्वैरपि तत्तावत् निधानमिति मे मतिः ॥ १५ ॥

सञ्जीवनी सा शिवलिङ्गपूजा लिङ्गार्चनाकारसुधानिधानम् ।
लोके परं दुर्लभमेव नूनं तद्येन लब्धं सुकृती कृतार्थः ॥ १६ ॥

वन्दे शङ्करपूजकांघ्रियुगलं वन्दे शिवाराधनं ध्यानाराधनसाधनानि बहुधा तत्पादुकाराधकान् ।
तत्पादाब्जरजोऽपि पावनतरं तत्सेव्यमत्यादरात् तस्मादीशपदाम्बुजार्चनपरो धन्योऽतिमान्यो मम ॥

जातिस्तत्र विचार्यते न च मया यः शङ्कराराधकः
सामान्येन स एव मे प्रियतमस्तत्र द्विजश्चेत् तदा ।
मान्यः स्यात् स मुदा द्विजो यदि भवेद्विप्रः शिवाराधकः
तं मन्ये गुरुमीश्वरं मम सैमं पूज्यं परं दैवतम् ॥ १८ ॥

को वा शङ्करपूजनेन सदृशो विप्रेण तुल्यो भवेत्
साक्षाद्ब्राह्मणरूपमेत्य भगवान् शंभुः शिवाराधनम् ।
कृत्वा दर्शयति प्रयोजनमिदं श्रेष्ठं नराणामिति
प्रायः सायमुमासहायभजनं कर्तव्यमित्यादरात् ॥ १९ ॥

न व्यग्राणि ममेन्द्रियाणि सकृदप्यभ्यर्चिते शाम्भवे
तत्संभावनया भवोऽपि स भवेत् संभावितः शाम्भवम् ।
रूपं दुर्लभमेव शंभुभवनं तद्रूपमित्येव मे
बुद्धिस्तत्पदपद्मरेणुतरणीमोहान्धकारापहा ॥ २० ॥

हन्त्यापत्कुलमेकदा शिवरतो दृष्टोऽतिभक्त्या नतः
संपद्वृद्धिकरः स पापनिकरध्वान्तप्रचण्डांशुमान् ।
तस्मात् तच्चरणाम्बुजार्चनरताः सन्तः क्वचित् सन्ति ते
शान्तास्ते तु कृतान्तभीतिरहितास्ते तावदत्युत्तमाः ॥ २१ ॥

इत्याकर्ण्य वचस्तस्य सनको हृष्टमानसः । गम्भीरया गिरा प्राह नारायणमनाकुलम् ॥ २२ ॥
सत्यमुक्तमिदं विष्णो तत्वज्ञोऽसि न संशयः । शिवप्रसादसंपन्नस्त्वमित्येव हि मे मतिः ॥ २३ ॥
जातकल्पः प्रदोषेपि स्नात्वा सत्वरमादरात् । उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैश्चाङ्कितो भव ॥ २४ ॥
दुकूले परिधायाशु गृहीत्वा विल्वपल्लवान् । चलातित्वरया पात्रे गृहीत्वा जलमुज्ज्वलम् ॥ २५ ॥
कमले विमले त्वं च भूतिरुद्राक्षभूषिता । तिलाक्षतान् गृहीत्वाशु चल नारायणान्विता ॥ २६ ॥
इत्युक्तः सोऽतिसन्तुष्टः तथेत्युक्त्वा हरिस्तदा । स ययौ पद्मया साकं सनकाद्यैश्च संयुतः ॥२७॥
ततः प्रविष्टो निर्विघ्नं विष्णुर्दौवारिकैरपि । अवारितो महादेवमन्दिरं सुन्दरं ययौ ॥ २८ ॥
कर्पूरदीपमालाभिरभितः परिवेष्टितम् । रत्नतोरणसङ्कीर्णरत्नद्वारविराजितम् ॥ २९ ॥
रत्नगोपुरसङ्कीर्णरत्ननन्दिगणान्वितम् । सुधाप्रवाहसंसिक्तं मन्दारकुसुमावृतम् ॥ ३० ॥
फलमालासमाकीर्णं गुच्छमालासमावृतम् । रत्नमालासमाकीर्णं शिवभक्तैः समावृतम् ॥ ३१ ॥
शुकैर्मयूरैर्हंसैश्च परितः कमलाकरैः । ध्यात्वा स्थितं तदा सर्वैर्भूतिरुद्राक्षभूषणैः ॥ ३२ ॥
शार्दूलादिमृगेन्द्रैश्च भूतिरुद्राक्षभूषितैः । सेवितं शङ्करस्थानं शिवध्यानपुरःसरम् ॥ ३३ ॥
शिवनामजपोद्युक्तैस्तरुभिश्च विराजितम् । प्रसूनमण्डलाकीर्णैर्भ्रमरैरपि शोभितैः ॥ ३४ ॥
सुधूपधूमरेखाभिरलंकृतमितस्ततः । उपहारगिरिश्रेष्ठैः षड्साख्यानसूचकैः ॥ ३५ ॥

विपुलापूपसङ्घैश्च घृतकुल्यादिभिर्युतम् । मणिमण्टपसङ्कीर्णनानाफलविराजितम् ॥ ३६ ॥
द्राक्षाम्ररसकुल्याभिरलंकृतमनेकधा । दधिसाराचलाकीर्णं दुग्धसाराब्धिसंकुलम् ॥ ३७ ॥
एतादृशं शिवस्थानं दिव्यनाट्याङ्गनावृतम् । ददर्श कमलाकान्तः स कैलासमिवापरम् ॥ ३८ ॥
कल्पवृक्षसमानीतफलपुष्पसमाकुलम् । कामधेनुप्रभूतोरुक्षीरधारासमावृतम् ॥ ३९ ॥
विस्मितो दूरतो दृष्ट्वा स कृतार्थममन्यत । स्वात्मानं कमलामाह पश्य पश्येति सादरम् ॥ ४० ॥

किं किं कृतं पुण्यमपूर्वमादौ दृष्टं शिवस्थानमिदं मनोज्ञम् ।
अतः परं जन्म कृतार्थमेव नेत्रे कृतार्थे चरणौ कृतार्थौ ॥ ४१ ॥

प्रदोषकाले गिरिशालयस्य विलोकनेनापि कृतार्थमेव ।
इदं परं जीवनमित्यवैमि जितं च लोकत्रयमेव तेन ॥ ४२ ॥

एतादृशं भाग्यमदृष्टसङ्घैर्विना न कस्याप्यतिदुर्लभः स्यात् ।
दृष्टं शिवाराधनसाधनं च तदप्यपूर्वं न च दृष्टपूर्वम् ॥ ४३ ॥

पञ्चामृताभिषेकाणां प्रवाहैर्व्याप्तं वनम् । एतादृशं न कुत्रापि दृष्टपूर्वं मया खलु ॥ ४४ ॥

अयं स राजा शिव एव साक्षात् भूमण्डलानुग्रहवांछयात्र ।
करोति लिङ्गार्चनमादरेण नरस्य किंवा मतिरीदृशी स्यात् ॥ ४५ ॥

सामग्री कथमीदृशी बहुविधा लिङ्गार्चनाया भवेद्-
देवानामपि दुर्लभा सुरसरित्तुल्याश्च कुल्या अमूः ।
क्षीरस्यापि घृतस्य तस्य मधुनो दध्नः स्थिताः पर्वताः
संपन्नाः स्वयमागतः कथमयं राजा शिवः केवलम् ॥ ४६ ॥

अतः परं नेत्रविशालतायाः कृत्यं च संपन्नमिदं विलोक्य ।
तृप्तं मनो मे जनिदुःखनाशः शिवालयस्यास्य विलोकनेन ॥ ४७ ॥

नक्षत्रमण्डलमतीत्य विभाति शृङ्गं तुङ्गं विलोकय विलोकय सावधानम् ।
एतन्निधानमिति मे मतिराविरासीत् कैलासतुङ्गनिभमेव शुभावहं मे ॥ ४८ ॥

शिवालयस्यास्य विहारतारामालासमेतस्य मनोहरस्य ।
तस्य प्रदीपावलिमण्डितस्य शृङ्गस्य शोभां परिपश्य पद्मे ॥ ४९ ॥

अमूल्यचूडामितदीपकान्तिविराजितं मन्दिरमीश्वरस्य ।

मुक्ताप्रवालप्रभयापि वीतं रत्नप्रभामण्डलमण्डितं च ॥ ५० ॥

इन्द्रनीलमणिकान्तिसमूहं पश्य पश्य शिवमन्दिरमूले ।
मौक्तिकादिसहितं गगनत्व(?) भ्रान्तिमद्य जनयत्यमितां मे ॥ ५१ ॥

पश्येह कार्तस्वरकान्तिरेषा तडित्प्रवाहभ्रममातनोति ।
सा चेन्द्रनीलप्रभया समेता करोति मे नीरदबुद्धिमेव ॥ ५२ ॥

सुधाकरः शङ्करमन्दिराग्रे वितानवत् तिष्ठति तस्य तानि ।
मुक्ताफलान्यश्चलचञ्चलानि शोभेयमेतस्य मनोहराणि ॥ ५३ ॥

हर हर रुचिरेयं निर्मिता कान्तिरेषा शिवजनहितहेतुर्धर्मकेतुः सुकेतुः ।
शिवपदविभवस्य स्वं पदं नेतुमेव तव शिव कथनीयं किं किमत्राद्भुतं स्यात् ॥ ५४ ॥

करुणा मयि तेऽनुवर्तते यदिदं दृष्टमघापहं मया ।
शिवशङ्कर[1] मन्दिरे महत् किमपूर्वं तदितो जगत्त्रये ॥ ५५ ॥

धन्यं मानसमीशपूजनरतध्यानानुरक्तं मुहुः
धन्यं मे नयनाम्बुजं च गिरिशस्थानार्चनावेक्षणैः ।
एतावन्मम सिद्धिदं पुनरिदं संप्रार्थनीयं मुदा
कस्येदं सुलभं पुरातनमहापुण्याब्धिलब्धं परम् ॥ ५६ ॥

क्वाहं कुत्र शिवार्चकान्वितशिवस्थानं तदालोकनं
तन्मध्यस्थितिरीशनामकथनं तत्सर्वमत्यद्भुतम् ।
ईशानुग्रहभेदलब्धमधुना धन्योऽस्म्यहं सर्वथा
धन्याग्रेसरशम्भुपूजकपदाम्भोजानुषक्तं मनः ॥ ५७ ॥

सायं शङ्करदर्शनेन विलयं प्राप्तानि पापान्यतः
सर्वापद्विलयोपि जात इति मे मुक्तिश्च संभाविता ।
लिङ्गं मङ्गलदं विलोकितमिदं विल्वीदलाभ्यर्चितं
किं तस्मादधिकं प्रदास्यति फलं तन्नैव जानेऽधुना ॥ ५८ ॥

सन्ध्यासन्ध्यविधानतः प्रतिपदं व्यग्राः शिवाराधकाः
सर्वे ते प्रणमन्ति भूतिविलसद्गात्राः पवित्राः परम् ।

---

1 मन्दिरं महो C

स्वेदस्यापनयेन भूतिमपि ते गृह्णन्ति काले पुन-
र्नृत्यन्ति प्रजपन्ति शङ्करमहादेवेति नामान्यपि ॥ ५९ ॥

आनन्दामृतसागरानपि मुहुः संपादयंत्येव ते
शब्दः शङ्कर चन्द्रशेखर महादेवेति वा यः श्रुतः ।
संपन्नं जनुषः फलं च विदुषां संप्रार्थनीयं च किं
तस्मादप्यधिकं तदेव सुकृताम्भोधिप्रवृद्ध्यै भवेत् ॥ ६० ॥

इत्युक्त्वा सनकादिभिः सह महाविष्णुः शिवाराधक
व्याप्तं शङ्करमन्दिरं नृपवधूव्याप्तं प्रवेष्टुं तदा ।
सायं शङ्कित एव तावदसकृद्गत्वा पुनर्निर्गतो
मत्वा तुङ्गमृदङ्गवादनरतोऽतिष्ठत्स नृत्याङ्गणे ॥ ६१ ॥

शङ्कर शङ्कर पश्य विनोदं दृश्यमवश्यं व्यवहर दुःखम् ।
हर हर हर हर कुरु कुरु कुरु कुरु कुरु कुरु कुरु कौतुकमनुवेलम् ॥ ६२ ॥

शिव शिव शिव शिव शिव शिव शिव शिव
शिव शिव शिव शिव शिव शिव शिव शिव ।
शिव शिव शिव शिव शिव शिव शिव शिव
शिव शिव शिव शिव शिव शिव शिव शिव ॥ ६३ ॥

शिव शिव शिव शिव शिव शिव शम्भो शिव शिव शिव शिव शिव शिव शम्भो ।
शिव शिव शिव शिव शिव शिव शम्भो शिव शिव शिव शिव शिव शिव शम्भो ॥ ६४ ॥

भव भव भव भव भूतिविभूषण भव भव भव भव भूतपते ।
भव भव भव भव भगवन्नमनं भव भव भव भव भवते भवतु ॥ ६५ ॥

शङ्कर शङ्कर शङ्कर शङ्कर शङ्कर शङ्कर शं कुरु मे ।
शङ्कर शङ्कर शङ्कर शङ्कर शङ्कर शङ्कर शं कुरु मे ॥ ६६ ॥

इति मद्दलवादनोत्सवं विनतं संहृतकण्ठमादरात् ।
परितो ददृशुः शिवार्चकाः शिवलिङ्गार्पितशुद्धमानसम् ॥ ६७ ॥

स राजा साधनैः शुद्धैः समभ्यर्च्य महेश्वरम् । शिवध्यानरतो भक्त्या गणतश्च मुहुर्मुहुः ॥ ६८ ॥

राजदारकुमाराश्च पूजयित्वा सदाशिवम् । सन्तुष्टाः शङ्करध्याननिरता एव सादरम् ॥ ६९ ॥

[1]कमला विमलां वीणां प्रवीणा शिवनामभिः । चकार गायनं मन्दं गृहीत्वा करपल्लवे ॥ ७० ॥

गन्धर्वाः किन्नराः सिद्धाः चारणा अपि सादरम् । दारैः कुमारैर्गानादि कर्तुमारभिरे मुदा ॥

प्रतिक्षणं पुष्पवृष्टिरष्टदिक्ष्वपि विश्रुता । पुनः पुनरभूदेव सा कल्पतरुसंभवा ॥ ७२ ॥

देवदुन्दुभयो नेदुः मन्दं मन्दानिला ववुः । शिवध्वनिसमाकीर्णं तदा ब्रह्माण्डमण्डलम् ॥ ७३ ॥

एवं शिवोत्सवेनैव सा नीता रात्रिरादरात् । अरुणस्योदयो वृत्तः ततः स्नातो नृपोऽपि सः ॥

स राजा पुनरादाय शिवपूजनसाधनम् । निर्माल्यं परिहृत्याशु पूजयामास शङ्करम् ॥ ७५ ॥

ततः परं राजदाराः कुमाराद्याश्च शङ्करम् । स्नात्वोद्धूल्य त्रिपुण्ड्राङ्काः ते रुद्राक्षाङ्किता अपि ॥

शिवलिङ्गार्चनं चक्रुः विल्वपत्रादिभिर्मुदा । गन्धर्वाद्याश्च ते चक्रुः सुराश्च शिवपूजनम् ॥ ७७ ॥

ततः प्रसन्नवदनः स राजा शिवतत्परः । सर्वान् संभावयामास शिवनैवेद्यदानतः ॥ ७८ ॥

राजप्रसादसंप्राप्तं शिवनैवेद्यमास्तिकाः । संप्राप्य सर्वे सन्तुष्टाः सन्तुष्टः कमलापतिः ॥ ७९ ॥

इन्दिरापतिरादाय शिवनैवेद्यमुत्तमम् । आनन्दाश्रुसमाकीर्णो ननर्त स शिवाङ्गणे ॥ ८० ॥

हारोपहारोपनयेन युक्तौ करौ वरौ पावनपावनौ मे ।
अयं प्रसादो गिरिशस्य साक्षात् नैवेद्यरूपेण समागतो माम् ॥ ८१ ॥

अपारपापप्रलयानलोऽयं हारोपहारोऽतिमनोहरो मे ।
हरत्यशेषापदुपाधिसिन्धून् आनन्दधाराम्बुधिवर्धकोऽयम् ॥ ८२ ॥

भाग्येन लब्धः स शिवोपहारः शिवोपहारार्हमिदं शरीरम् ।
अनेन तावन्मम मुक्तिरेव मुक्तिप्रदो हेतुरयं विशेषात् ॥ ८३ ॥

जिह्वाजाड्यविनाशकोऽयमधुना तद्भोजनाभाजनं
पुण्यानां भवतीति मे मतिरभूदत्यद्भुतं पावनम् ।
हारं किं न महोपहारमसकृत् संप्राप्य नन्दीश्वरो
गाणापत्यमवाप भाग्यमतुलं तद्भाग्यदानोद्यतम् ॥ ८४ ॥

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । तमाहूयाह कोऽसीति स विष्णुं प्राह भूपतिः ॥

तदा सनन्दनः प्राह राजानं शैवपुङ्गवः । अयं नारायणो राजन्नागतोऽत्र निशामुखे ॥ ८६ ॥

---

1 कमलेत्यारभ्यार्धत्रयं C कोशे नोपलभ्यते ।

इति तद्वचनं श्रुत्वा राजापि कमलापपिम् । शिवार्चनरतं प्राह कस्ते धर्म इति स्वतः ॥ ८७ ॥

विष्णुः —

धर्मः किमन्योऽपि नृपोऽस्ति लोके मन्ये शिवाराधनमेव धर्मः ।
अन्यत्र धर्मभ्रमतः प्रवृत्तिः जन्मानुवृत्तिर्मरणानुवृत्तिः ॥ ८८ ॥

धर्मः शङ्करपूजनं नवलसद्बिल्वीदलैः कोमलैः
भस्माङ्के निटिले विभूतिविलसद्रेखावली शोभना ।
रुद्राक्षामलमालिका शिरसि वा कर्णेपि वा कर्णयोः
श्रीपञ्चाक्षरमन्त्रराजजपनं मन्ये परं मुक्तिदम् ॥ ८९ ॥

धन्यानां शिवपूजने खलु मतिः प्राग्जन्मपुण्यार्णवैः
तूर्णं शङ्करपूजनेन न जनिः संसारवार्ता कुतः ।
भाग्यं नैव परं महेश्वरपदाम्भोजार्चने जायते
सा मे बुद्धिरियं विशुद्धमनसा मान्या न सिद्धिर्यतः ॥ ९० ॥

न जानन्त्येवान्ये शिवपदपदाम्भोजभजन-
प्रभावाभोगानां भवति परमा सा मतिरपि ।
अपारं तत्पुण्यं गणितमपि केनापि गणना-
मतीत्यास्ते वस्तु प्रकटमपि दृष्टं भवति किम् ॥ ९१ ॥

अखण्डभूमण्डलदानतोऽपि वामार्धजानिप्रवणं मनः किम् ।
परन्तु तत् स्याद्गिरिजासहायपादाम्बुजाराधनमात्रतः स्यात् ॥ ९२ ॥

कति कति भुवि सन्तः सन्ति ते स्वान्तरूपे कनककमलकोशे शङ्करं भावयन्तः ।
सितभसितविभूषाः शाङ्गलिङ्गाङ्गभागच्युतजललवपानैः पीनमानानुमोदाः ॥ ९३ ॥

ये ये शङ्करलिङ्गपूजनरतास्ते सर्वथा दुर्लभाः
शम्भुस्तुष्यति येन येन सततं धर्मेण लभ्यं सुखम् ।
लिङ्गाराधनमेव तावदसकृत् तत्पुण्यसंवर्धकं
ब्रह्मानन्ददमप्यतः परमपि प्रायः किमन्यद्भवेत् ॥ ९४ ॥

योगैर्वा तपसापि वा शिवपदाम्भोजप्रसादं विना
भाग्यं नैव तदेव भाग्यमसकृत् वृद्धं शिवाराधनैः ।

गौरीनाथपदारविन्दभजनात् किं किं न लभ्यं भवेत्
भाग्यानां निधिरेव शङ्करपदाम्भोजार्चनं सर्वदा ॥ ९५ ॥

यत्पादाम्बुजपूजया कृतमहापापक्षयः स्यात् ततः
संपद्वृद्धिरनुक्षणं प्रतिदिनं सन्तोषधारोदयः ।
धीरोदारकुमारदारविभवप्राप्तिश्च तं शैलजा-
कान्तस्वान्तमपेक्षते मम सदा संसेवितुं सर्वदा ॥ ९६ ॥

यत्पादाब्जरजःप्रभावमहिमा वेदैर्न विज्ञायते
वेदान्तैरपि सन्ततं मुनिजनस्वान्तैरनन्तैरपि ।
तं देवोत्तममामनन्ति गिरिशं वेदाश्च तत्पादुका-
ध्यानाराधनसाधनं मम मनो नूनं न जाने परम् ॥ ९७ ॥

स्मृतोऽपि यः सर्वसुरासुरेश्वरो ददाति मुक्तिं स शिवः कथं वा ।
नाराधनीयो न च सेवनीयः स एव तावत् सुरभूरुहो मे ॥ ९८ ॥

यन्नामस्मरणप्रवीणचरणाम्भोजार्चको वासुकिः
ब्रह्मेन्द्रादिमरुद्गणा अपि तथा गन्धर्वसिद्धादयः ।
तस्यैश्वर्यमपारमप्रतिममप्यार्तिप्रहाणोद्यतं
तं देवोत्तममन्तकान्तकमहं मन्ये सुराधीश्वरम् ॥ ९९ ॥

यल्लिङ्गार्चनमात्रलब्धमधुना वैकुण्ठरूपं परं
स्थानं मे तदपारदिव्यमहिमा विज्ञायते केन वा ।
तं नत्वा सकृदप्युमापतिमतर्क्यैश्वर्यसौभाग्यदं
प्राप्यैश्वर्यमपारमेव बहवः प्राप्ताश्च मुक्तिं पराम् ॥ १०० ॥

अस्माकं शिवलिङ्गमेव सततं पूज्यं तदभ्यर्चनात्
प्राप्तं भाग्यमतः परं पुनरपि प्राप्तव्यमेवासकृत् ।
सौभाग्यं सुखदानमात्रनिपुणः कारुण्यपूर्णार्णवः
तं गौरीरमणं क्षणेन शरणं प्राप्ताः सुराः सर्वदा ॥ १०१ ॥

चक्रं प्राप्तमुमासहायचरणाम्भोजार्चनेनादरात्
तेनैवामरवैरिशासनकरः सोऽहं तदाज्ञाकरः ।

तद्भृत्यैरपि नन्दिकेश्वरमुखैर्विज्ञायते मद्बलं
शर्वाराधनसाधितं तदपि मे वृद्धं शिवाराधनात् ॥ १०२ ॥

कंसः शङ्करपादपद्मभजनप्राप्ताद्बलात् संहृतः
चाणूरोऽपि मुरोऽपि तत्पदरजःपुञ्जप्रसादात्तथा ।
सर्वार्थप्रद एष शङ्कर इति ज्ञातस्तदाराधने
किं वा दुर्लभमित्यवैमि स विधिः साक्षान्निधीनां निधिः ॥ १०३ ॥

यन्नामामृतपानपीनमनसां सिद्धिः करस्था सदा
सर्वे ते निधयोऽपि तद्गृहगतास्तं देवदेवं भवम् ।
भक्ताभीप्सितदानलोलमनलज्वालालवालोल्लस-
त्फालं बालसुधाकरामलजटालीलाकलापं भजे ॥ १०४ ॥

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । ददौ हारानपारांश्च हरबुद्ध्या स विष्णवे ॥
कमला राजदाराणां निकटे शिवगायनैः । वीणां गृहीत्वा सन्तोषं जनयामास सादरम् ॥ १०६ ॥

तामिन्दिरामिन्दुकलावतंस गानानुरक्तां नृपवर्यदाराः ।
विलोक्य भाग्यं कमले तवेति तामूचुरत्यादरमब्धिकन्याम् ॥ १०७ ॥

राजदाराः —

वैकुण्ठभवने नित्यं किं ते कार्यं कथं त्वया । समयो नीयते पद्मे वद सादरमद्य नः ॥ १०८ ॥

लक्ष्मीः —

तत्रास्ति सदनं रम्यं हर्म्यस्याधो मनोहरम् । तत्र लिङ्गानि तिष्ठन्ति नार्मदान्येव केवलम् ॥
तानि लिङ्गानि मन्दारैः कोमलैर्बिल्वपल्लवैः । पूज्यन्ते परितस्तस्य मन्दाराः सन्ति कोटिशः ॥
तत्रैव बिल्वतरवः सन्ति तावत्सहस्रशः । अखण्डबिल्वपत्राणां आकरा एव सर्वदा ॥ १११ ॥
तत्पूजनार्थमुद्योगे कृते सन्त्येव शाखिनः । अवाङ्मुखा भवन्त्येव करग्राह्यास्तथोन्नताः ॥ ११२ ॥
उपविश्यैव तत्पत्रैः कुसुमैरपि शङ्करः । पूज्यते सावधानेन पञ्चाक्षरपुरःसरम् ॥ ११३ ॥
कर्पूरदीपमालाभिर्मण्डितं शिवमन्दिरम् । मुक्ताकलापसङ्कीर्णं मणिदीपविराजितम् ॥ ११४ ॥
तत्र हेममरालानां समूहाः सन्ति कोटिशः । ते तु हेमाम्बुजैर्नित्यं पूजयन्ति महेश्वरम् ॥ ११५ ॥
शिवं प्रदक्षिणीकृत्य शिवनामजपोत्सुकाः । नृत्यन्ति हंसाः सर्वेऽपि तस्मिन् शिवगृहाङ्गणे ॥

तेषां च कृत्यमन्यत्तु हंसानां नैव दृश्यते । तिर्यक्त्वं समवाप्यापि कुर्वन्ति शिवपूजनम् ॥ ११७ ॥

ते सुवर्णमृणालानां [1] नालं पानीयमादरात् । प्रयच्छन्ति महेशाय सूपभोज्यानि सर्वथा ॥

तेऽपि भूतिलिपुण्ड्राङ्काः स्थूलरुद्राक्षभूषणाः । तेषामालोकनेनापि भक्तिर्भवति शङ्करे ॥ ११९ ॥

तत्र ये ये विहङ्गाश्च ते सर्वे शिवपूजकाः । वदन्ति शिवनामानि तेऽपि तावन्मुहुर्मुहुः ॥ १२० ॥

पूजान्ते शिवनैवेद्यं तैः सहैव हि गृह्यते । तेऽपि शङ्करनैवेद्यभोजनासक्तमानसाः ॥ १२१ ॥

प्रतिग्रासं महादेव शङ्करेति वदन्ति ते । शिवनामानुसन्धानविरतास्ते न सर्वथा ॥ १२२ ॥

गौरीपते महादेव शङ्करामरनायक । पाहि मामिति सर्वेऽपि ते वदन्ति प्रतिक्षणम् ॥ १२३ ॥

शिवनामसुधाधारापीतं शङ्करमन्दिरम् । मदर्थमेव रचितं तत्तावदतिसुन्दरम् ॥ १२४ ॥

मम व्रतं महेशस्य पूजनं सर्वदा खलु । व्रतान्तरं न जानेऽहं शपथः शिवपादयोः ॥ १२५ ॥

कार्यान्तरेषु व्यासङ्गात् शाङ्गलिङ्गसमर्चनम् । विघ्नितं स्यादिति त्यक्तं मया कार्यान्तरं खलु ॥

अन्यद् द्रव्यं न मे किञ्चित् शिवलिङ्गावलोकनात् । भिन्नं न स्वप्नवार्तापि निद्रावार्तापि दूरतः ॥

इति तद्वचनं श्रुत्वा राजदाराः पुरःसरम् । विलोक्य विस्मयाविष्टाः कमलामूचुरादरात् ॥ १२८ ॥

राजदाराः —

कमले विमले भद्रे भद्रमस्त्वनृतं त्यज । रहस्यमेकं वद मे सन्देहस्तत्र तिष्ठति ॥ १२९ ॥

पतिव्रतासि सुभगे समये पतिसेवनं । कुरुते किं न जरती भर्तर्यपि विहारिणी ॥ १३० ॥

इति तद्वचनं श्रुत्वा लज्जानम्रानना तदा । प्राह सत्यव्रतरता कमला राजसुन्दरीम् ॥ १३१ ॥

अभिलाषोपनीतानि सुखान्यसुख (?) वैरिणाम् । अङ्गनालिङ्गनापेक्षा न तेषामिति मन्यताम् ॥

अमरीणां स्वभावेन न तु कालोऽपि सर्वथा । नवयौवनसंपन्नाः संपन्नाः सुखसाधनैः ॥ १३३ ॥

भर्ता नियामकत्वेन शङ्करेणापि कल्पितः । अमरीणां न पुरुषे वांछाऽपि खलु सर्वदा ॥ १३४ ॥

अतो न सुखापेक्षा परस्परमतः परम् । समयो नीयते नित्यं केवलं शिवपूजया ॥ १३५ ॥

इति तद्वचनं श्रुत्वा दत्वा भूषणमुत्तमम् । पुनस्तामाहुरमलां कमलां स्मितपूर्वकम् ॥ १३६ ॥

सौन्दर्यमेतत् तव तुङ्गशृङ्गसङ्काशवक्षोजपरातिशोभा ।
अणोरणीयोऽपि स मध्यभागः सुखाय कस्येति वदाधुना मे ॥ १३७ ॥

---

1 माल्यान्यानीय सादरम C

आस्यं स्यादरविन्दसुन्दरमिदं नेत्रारविन्दप्रभा
वेणीनीलफणिप्रभाविजयिनी पादप्रभाऽप्यब्जजे ।
कस्य स्याच्छुभभोगहेतुरियमप्यावर्तशोभा शुभा
हित्वा सोपि नपुंसको हरिरपि प्रायस्त्वदुक्तोक्तिभिः ॥ १३८ ॥

तरुणीं रमणीमवाप्य को वा विरतः स्यादतिरुद्धभोगयुक्तः ।
न पुमानिति निश्चितोऽत एव प्रतिभातीह विडम्बनेति नूनम् ॥ १३९ ॥

विनोदवार्ताभिरलं किलेदं वृत्तं परं तावदिदं तवापि ।
विचारितं सत्यमिदं वदेति श्रुत्वा वचस्तां पुनराह पद्मा ॥ १४० ॥

पतिव्रतानां परमः स्वधर्मः पतिप्रियालापनसाधनानाम् ।
संपादनं स्यात् तदिलागतानां तन्नामराणामिति निश्चयो मे ॥ १४१ ॥

[1]अस्माकमाराधितशङ्कराणां जन्मान्तरे जातमभूतपूर्वम् ।
सुखं सुरत्वे सति तन्निवृत्तं वैराग्यभाग्योदयसंभ्रमेण ॥ १४२ ॥

यावत्तत्वविचारतत्परमतिस्तावन्न नारीमुखं
द्रष्टुं वांछति मानवोऽपि नितरां देवस्य तत्वं यतः ।
जानातीति सतीयुतोऽपि न सतीसङ्गप्रभेदे मतिं
कर्तुं वांछति चित्तमेव न तथा नारीगतं जायते ॥ १४३ ॥

विषयिष्वपि निःस्पृहं मनो न कदापीति नरस्य तत् कथम् ।
त्रिदशस्य भविष्यतीत्यपि त्रिदशास्तत्वविबोधलालसाः ॥ १४४ ॥

शिवध्यानानन्दप्रवणमनसामल्पविषये न बुद्धिर्धीराणामपि खलु मनो न प्रसरति ।
अतो नारीसङ्गे विरतिरतिभाग्येन महतां सुराणां सा तावद् गिरिशचरणाम्भोजभजनात् ॥ १४५ ॥

प्रसादं चित्तस्य त्रिनयनपदाम्भोजभजनं करोतीति श्रान्तं न भवति मनो दुष्टविषये ।
अतः शर्वः सर्वैरनुदिनमनुध्येय इति मे सुधारूपा बुद्धिर्भवति भवतामप्यभिमता ॥ १४६ ॥

प्रसादं मन्येऽहं शिवचरणपङ्केरुहभवं सुराणामैश्वर्यं तदपि न मनो वाञ्छति यतः ।
शिवा कान्ता श्रान्ता प्रविततकथारूपसुधया मनस्तृप्तं तृप्तं कमपि विषयं वाञ्छति जनः ॥१४७॥

---

1 अयं श्लोकः C कोशे नास्ति ।

कस्तूरिकाकर्दमलेपनेन कर्पूरपाटीररसाभिषिक्तम् ।
सिक्तामिताङ्गाररजःप्रसारं किं वाञ्छतीति प्रतिभाति चित्रः ॥ १४८ ॥

अमत्तमन्तःकरणं ममेदं उमासहायाङ्घ्रिसरोजभृङ्गः ।
अतो न वाञ्छा विषयेऽतितुच्छे स्वभावतो वृश्चिकपुच्छतुल्ये ॥ १४९ ॥

अमन्दमधुरस्फुरद्गिरिशपादपद्मोल्लसन्मरन्दरसधारया खलु मनः परं क्रीडति ।
तथा च मृड शङ्कर स्मरहरामराधीश्वर प्रसादसुमुखो भवेत्यनुनयप्रवृत्तं मनः ॥ १५० ॥

शिवाकर शिवापते शिव शिवेति नामामृतं पिबत्यनुदिनं मनो मम विचार एवाधुना ।
अतः परमुमापतिर्गतिरिति प्रपन्नं मनः किमन्यदभिवांछतीत्यपि विचारलेशोऽपि न १५१ ॥

भाग्यस्यावधिरेव नेत्यपि मतिर्जाता भवद्दर्शनात्
नारीणां गिरिशार्चने यदि रतिः सा स्याद्भवानी खलु ।
नारीरूपमुपेत्य शङ्करपदांभोजार्चनात्यादरात्
सा गौरीति विनिश्चयो मम समुत्पन्नः शिवाराधनात् ॥ १५२ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे राजप्रदोषपूजावर्णनं विष्णुसंभाषणं राजदारलक्ष्मी संवादवर्णनं च नाम सप्तविंशोऽध्यायः ॥

---

## अथाष्टाविंशोऽध्यायः ।

---

याज्ञवल्क्यः —

इत्युक्तं कमलावचः शिवतराभीष्टप्रदं सादरं श्रुत्वा तामभिनन्द्य सुन्दरतरं हारं प्रकल्प्यादरात् ।
तत्कण्ठे कलकण्ठकण्ठनिनदामन्दप्रदानोद्यते तद्वीणामधुरध्वनिश्रवणजानन्देन पूर्णास्तदा ॥ १ ॥

सा सप्तस्वरसन्निबद्धमधुरैर्गानैः स्ववीणोद्भवैः
भो शम्भो भव सांब शङ्कर महादेवेति शब्दान्वितैः ।
कृत्वा शङ्करमन्दिरं प्रतिनवापूर्णं तु तूर्णं नृपं
पूर्णानन्दममुं चकार किमिति प्रोक्ते गिरीणां तदा ॥ २ ॥

तद्गानश्रवणादरेण स धराधीशोऽपि नीत्वा मुहुः
कालं कालभयापहारचतुरो धीरोऽतिहारः परम् ।

तत् किं किन्नरसुन्दरीरुचिकरं गानं किमन्यासुरी
गन्धर्वाधिपसुन्दरी रुचिकरं गानं [1]किमत्याहतम् ॥ ३ ॥

ततः परं तत्प्रतिहारनारी [2]विचार्य तद्दारसमूहमध्ये ।
निश्चित्य तावत्कमलाविलासगानं ययौ भूपतिसन्निधानम् ॥ ४ ॥

प्रतीहारनारी —

स्वामिन् पूर्वभवार्जितासितमहापुण्यप्रभावैरुमा-
कान्ताराधनतत्परा हरिवधूः सायं समभ्यागता ।
कृत्वा शङ्करपूजनं पुनरियं गानप्रियं सत्क्रियं
तं गौरीप्रियमादरात् शिवपर्ववर्णैः परं गायति ॥ ५ ॥

तद्गानैरमरीगणोऽपि विवशः चित्रार्पितत्वं मुहुः
प्रापापारशिवाभिधाननिनदैः दाराश्च ते तत्पराः ।
आहाराद्विरताः कदापि न तथा तद्गानधारादराः
चित्राणामपि चित्रतामुपगतास्तत्कौतुकं केवलम् ॥ ६ ॥

झङ्कारैर्विरताश्चरन्ति परितो भृङ्गाङ्गनानां गणाः
तद्गानश्रवणात् तथा परभृतां नारीगणस्तिष्ठति ।
अत्युन्मत्तमरालराजवनिताः पश्यन्ति तामादरात्
तद्गानश्रवणातिलज्जितमनोवृत्त्या निवृत्ताः स्वराः ॥ ७ ॥

श्रुत्वा तु गानं मृगनायकानां दाराश्च शार्दूलवराङ्गनाश्च ।
न यान्ति तावद्विपिनं सबालमेणीकुलं तिष्ठति गानलोलम् ॥ ८ ॥

सा सप्तस्वरबन्धमेव कुरुते नामैकमेकैकम-
प्यन्यानन्दसमन्विता स्फुटतरं तच्छ्रूयते शांभवम् ।
नामातः परमिन्दिराभिरुचितं गानं विहायापि सा
गन्तुं नेच्छति किङ्करानपि मुहुर्दारान्न ते पश्यति ॥ ९ ॥

इत्याकर्ण्य वचः स भूपतिरपि प्राह प्रकृष्टं वच-
स्तत्प्रत्यूहनिवारणेन समयो नेयः शिवाराधनैः ।

1 किमित्याह सः C      2 विचारयत् दारसमूहमध्ये C

इत्येवं स्थिरतां गतो हरिरपि स्वस्थस्तदाकर्णनैः
आनन्दाम्बुधिवर्धकैस्तदितरैरानन्दधारावृताः ॥ १० ॥

एवं तत्कमलाकृतामितमहावीणाप्रभूतं परं
गानं शङ्करनामचिन्हितमतिश्राव्यं स श्रृण्वन्नृपः ।
सन्तुष्टो विरतो न तच्छ्रवणतः कालोऽपि नीतस्ततो
मध्याह्ने शिवपूजनोद्यतमतिश्चक्रे शिवाराधनम् ॥ ११ ॥

ततः परं स भूपालो दापयामास भूषणम् । विविधं रत्नसंकीर्णं कमलायै मनोहरम् ॥ १२ ॥
ततः संप्रेषयामास नारायणमिलापतिः । कमलासहितः सोऽपि ययौ वैकुण्ठमन्दिरम् ॥ १३ ॥
ततः परं स भूपालः सायङ्कालेऽपि शङ्करम् । पूजयित्वा विधानेन ययौ स्वनगरं प्रति ॥ १४ ॥
ततो नक्तं महादेवनैवेद्यमुपभुज्य सः । सदारैश्च कुमारैश्च रेमे सुन्दरमन्दिरे ॥ १५ ॥
एतादृशस्य भूपस्य स्मरणेनापि सिद्धयः । सिद्ध्यन्ति शांभवश्रेष्ठः स भूपालः शुभावहः ॥ १६ ॥
तस्मिन् शासति तद्राष्ट्रे शिवविद्यामृताब्धयः । प्रवृद्धा एव सर्वत्र यैर्मुक्तिः सुलभा भवेत् ॥१७॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । तस्य श्रवणमात्रेण जायते गतकल्मषः ॥ १८ ॥
तद्राष्ट्रे कोऽपि विपिने संचरन् लिङ्गमुत्तमम् । ददर्श सरसस्तीरे चक्रे तस्यैव पूजनम् ॥ १९ ॥
प्रफुल्लहेमपद्माद्यैः नवबिल्वीदलैरपि । तत्र सायमुपित्वापि कुर्वन्नेव शिवार्चनम् ॥ २० ॥
ददर्श कालमुन्मत्तभूतप्रेतसमन्वितम् । नागपाशायुधधरं शूलादिसमलङ्कृतम् ॥ २१ ॥
ततः स तावद्भीतोऽपि तं दृष्ट्वा कालमद्भुतम् । तन्निवारकमत्रास्ति किमित्यतिभयातुरः ॥ २२ ॥
दूराद् दृष्ट्वापि तं कालं कम्पमानोऽपि भीषणम् । तत्पाशानवलोक्यापि तद्दूतानपि कोटिशः ॥
किं कर्तव्यं क्व गन्तव्यं गमनेऽपि बलं न मे । अकस्मादागतः कालः क्रूरदृष्ट्या स पश्यति ॥
शिवलिङ्गाराधनेन पापनाशो भविष्यति । इत्याशा भूयसी नासीत् किमित्येवातिविस्मितः ॥२५॥
जीवतापि मया दृष्टः कालोऽयमतिभीषणः । मरणान्तरं किं वा भविष्यति भयं मुहुः ॥ २६ ॥
भवार्चने भयं कालाज्जायते यदि जातुचित् । अशक्नुवन् भवत्येव किमित्यपि न मे मतिः ॥ २७ ॥
कालान्तकाराधनेपि कालभीतिर्भवेद्यदि । तदा तद्बीजनाशः स्यात् केन वा तन्न विद्महे ॥ २८ ॥
मह्यमप्यद्य भयदो यमो यदि तदा कथम् । अन्येषां जीवनं वा स्यात् अपराधोऽपि कः परः ॥
लिङ्गार्चनरतस्यापि विपिने सायमीदृशी । यदि कालाद्भवेद्भीतिः तदा श्रुतिकथा कुतः ॥ ३० ॥

मुनयः शिवपूजनाद्भयं न जनिर्वा भवतीति सन्ततम् ।
प्रवदन्ति वदन्ति तत्कथं मुनयोऽपीति विनिश्चयो मम ॥ ३१ ॥

हे कालान्तक हे महेश्वर महादेवावमां दुर्दशा-
मेनां संहर संहराशु विविधां कम्पायमानस्य मे ।
पश्याङ्गं परिपश्य गद्गदगिरा न स्तोतुमिच्छापि मे
गौरीकान्तपदारविन्दभजनध्यानेऽपि वा मन्मनः ॥ ३२ ॥

भो शंभो करुणा कदा मयि तव स्याद्वा विधेयोऽधुना
मृत्युः स्यान्निहतोऽतिभीषणवपुः काकोदरान् विक्षिपन् ।
आयात्यागत एव ते न करुणा किं मे न विश्वस्यते
पादाम्भोरुहमर्चितं सरसिजैः भीतिप्रभीतिं कुरु ॥ ३३ ॥

यद्यत् स्यान्मदपेक्षितं तदखिलं जातं शिवाराधनात्
तत्तावत् गिरिशार्चनाय सकलं जातं कुमारा अपि ।
वीरा एव जरा कपोलमखिलं प्राप्ताऽधुनास्तं वयः
कायः कल्पित एव पक्वकदलीतुल्यो महेशाय ते ॥ ३४ ॥

विद्याराशिरपूर्वरत्नजलधिप्रायः शिवायार्पितः तत्पादाम्बुरुहे मनोऽपि निहितं सर्वस्वमेतन्मम ।
आशास्यं च न किञ्चिदिन्दुशकलालङ्कारपादांबुज ध्यानानन्दरसान्यदित्यलमलं संसारवार्तारमैः ॥

युक्तं तावदतः परं मम शिवध्यानं शिवाराधनं भस्मोद्धूलितमादरेण सततं रुद्राक्षसन्धारणम् ।
लिङ्गे बिल्वदलार्पणं शिवपुरे पञ्चाक्षरावर्तनं हारापारकथासुधानिधिमहाकल्लोलमालाप्लवः ॥ ३६ ॥

मूको वाक्पतितामुपैति जनितः पङ्गुर्गिरेर्लङ्घनं
तावत् किं न करोति किं न धरणीनाथत्वमेत्यातुरः ।
मृत्युं वा परिचारकं धनपतिं वीरेश्वराराधनात्
तत्सामर्थ्यमशक्यमेव गदितं वेदान्तवृन्दैरपि ॥ ३७ ॥

किं चिन्तामणिकोटिभिः सुरतरुश्रेष्ठैरपारैः सुरा पारात्युत्तमगोकुलैर्निधिवरैर्वीरेश्वराराधने ।
सर्वाभीष्टफलोदये सति सतां स्वान्तं न संवर्तते तद्भिन्नेषु मरीचिकादिसदृशेष्वाशापि सर्वात्मना ॥

न कृतान्तकृतान्तपूजया यदि नेयः समयो मया तदा ।
नियमेन विनैव मायया समयो मे नियमं करिष्यति ॥ ३९ ॥

न योगयागव्रतदानसाधनप्रसाधनानामधुनास्ति कृत्यं
परन्तु काले खलु कालकाललिङ्गार्चनेनैव नयामि कालम् ॥ ४० ॥

रेवातीरनिगूढनीरजरजःपुञ्जप्रभामञ्जुले
नीलानीलमहोत्पलामलदलानीले शिलामण्डले ।
दत्वा बिल्वदलं सशीतलजलं भूमण्डलाखण्डलो
बालोऽपि प्रबलो भवत्यविकलः स्यात् कालकालप्रियः ॥ ४१ ॥

रेवातीरनवप्ररोहरुचिरैः दूर्वाङ्कुरैरादरात्
धीरोदारविहारदाररुचिरव्याहारहारान् परम् ।
त्यक्त्वा सायमिहादरेण सततं शार्ङ्गं न लिङ्गं कथं
निर्धूतव्यथमर्चितं सकृदपि ध्यातं विभूत्या सितम् ॥ ४२ ॥

श्रीवीरेश्वरलिङ्गपूजकपदाम्भोजार्चितं यद्रजः
तत्प्राप्यामरवाहिनी जगदिदं तावत् पुनाति स्वयम् ।
एतावन्महिमा शिवार्चनरतस्यातः कथं वा यमः
सोऽयं मे भयदो भवत्यवसरे प्राप्तेऽपि मृत्योः[1] पुरम् ॥ ४३ ॥

सत्सम्पन्नगरं मनोहरतरं द्वारं तदत्युन्नतं
प्राकारप्रवरादिरोहणमपि व्याकीर्णनिश्रोणिकम् ।
तद्द्वारार्गलकुञ्चिकातदनघश्रीकामिनीनीविका-
चोलीछेदनसाधनं च बहुधा श्रीकालकालार्चनम् ॥ ४४ ॥

मेरुः कल्पान्तवह्नि प्रतिहतशिखरो भस्मपूतोऽस्तु भूर्वा
पातालं यातु यातु त्रिदशनगरमप्यन्ततो भस्मतां किम् ।
कालोप्यायातु मृत्योरहमिह न महादेवभिन्नं प्रपन्नं
संपन्नं मे मनोऽपि त्रिनयनचरणाराधनेन प्रसन्नम् ॥ ४५ ॥

कोऽयं कालोऽपि रङ्कः कथमपि मरणे तूर्णमभ्यर्णगामी
मायारूपोऽपि वा मे मरणमपि न मे कालकालार्चकस्य ।
यस्याङ्के सा भवानी त्रिभुवनजननी तत्पदाराधकानां
शङ्कातङ्काविहीनस्फुरदरुमनसां कालभीतिः कुतो वा ॥ ४६ ॥

---

1 परं ख

कालश्चेदागतोऽयं प्रतिहतगतिरप्यस्तु यस्तु त्रिनेत्र-
ध्यानारूढो निरूढः परहितकरणासक्तचित्तं तमेकम् ।
हित्वान्यत्रैव यास्यत्ययमपि चतुरः कालकालात्यभीष्टे
भूतिं स्मृत्वापि भीतो भवति भवति वा भ्रान्तचित्तोऽतिमत्तः ॥ ४७ ॥

अस्माकं परमन्तकान्तकपदाम्भोर्चनाराधनैः
दैन्यं तावदपाकृतं गतमिदं कालाद्भयं निर्भयम् ।
लोके शांभव एव केवलमतः कालाद्बिभेतीति धीः
धीराणां कथमित्यतः कथमितो भीतिर्भवित्री मम ॥ ४८ ॥

हे कालान्तक शङ्करामरवरापारामराराधित स्वामिन् कालमपाकुरुष्व दरमप्यभ्येतु यातु स्वकम् ।
घोरं मन्दिरमेव रौरवमयं कः शाङ्कराणां भयं दातुं वा यतते कृते कृतमनेनापीह पापं खलु ॥

श्रीकालकाल यदि ते खलु कालनाशे शक्तिस्तदा जनिजरामरणादिनाशे ।
शक्तिः कथं भवति वाऽतिविनोदवार्ता सा तेऽपकीतिर.पि ते कथमिन्दुमौले ॥ ५० ॥

प्राणप्रयाणसमये परमिन्दुमौलि पादारविन्दमकरन्दरसाभिषेकम् ।
मच्चित्तभृङ्गवरमूर्ध्नि भवत्वितीश संप्रार्थितोऽसि मुहुरीश न विस्मृतोऽसि ॥ ५१ ॥

अद्यापि चेदिह दया न तवेन्दुमौले लीलायितं मम मनः कथमद्य न स्यात् ।
किं तस्य वारणमशक्यमुतातिशक्यं सर्वस्य तावदिति शैलसुतासहाय ॥ ५२ ॥

कालं परं [1] यवसकल्पमहं स्मरामि गौरीमनोहरपदाब्जरजःप्रसादात् ।
एतन्निवारणमशक्यमिहास्ति किं मे त्रैयम्बकेन मनुना मनसा स्मृतेन ॥ ५३ ॥

अद्यान्तकान्तक भयं यमवारणेन तावन्निवारय निवारय येन चित्तम् ।
स्वस्थं त्वदङ्घ्रिकमलामलपूजनादौ तद्विघ्नवारणमवश्यमपेक्षितं मे ॥ ५४ ॥

प्राणप्रयाणसमयेऽपि न लिङ्गपूजात्यागो मतो न भवतीति विधिः श्रुतोऽपि ।
किं तेन तावदधुना त्वननुष्ठितेन हा हन्त हन्त विधिरेव हतः कथं वा ॥ ५५ ॥

त्वत्पादपद्ममणिपञ्जरपिञ्जरं मे चित्रं भवत्यनिशमिन्दुकलावतंस ।
मे मानसं परमहंसकुलावतंसं मत्वा भवेच्चरणवासमिह प्रयच्छ ॥ ५६ ॥

---

1 वरद C ।

सोऽयं यमो यदि शरीरमिदं विनेतुमायाति तर्हि भयमस्य न मे मनश्चेत् ।
त्वत्पादपद्मनिहितं धनमस्मदीयं नेतुं न तस्य खलु शक्तिरुमासहाय ॥ ५७ ॥

धनं तावल्लोके मरणसमयेऽपि प्रियतमं न हातुं वांछा स्यादिति खलु भवेद्गोपनमिह ।
पुनः प्रत्याशायामिति मम मनोरूपधनमप्युमाकान्ते दत्तं भवति सततं रक्षितमपि ॥

प्रत्याशा यदि जीवने तव यम प्रायः प्रशान्ता तदा
तावन्मामुपयाहि निर्दयममुं मृत्युञ्जयं पश्य मे ।
त्रातायं भयतः पितापि स पुनर्दातापि मुक्तेः प्रभा
सामर्थ्यं कथमद्य विस्मृतमहो मोहस्तवायं कुतः ॥ ५९ ॥

तं मोहं परिहाय सायमसकृन्मृत्युञ्जयं पश्य मा-
मप्युग्रं कथमुग्रलिङ्गनिकटे पश्येयमस्याटनम् ।
उग्रानुग्रहभाजने मयि कथं भीतिर्यमात्स्यादहो
हाहन्तातिविमोहितोसि यम ते भ्रान्तं च चित्तं खलु । ६० ॥

हारेषु प्रणतोतिभीत इति ते कीर्तिः कृतान्तस्य वा
सा तावद्विगता विनाशसमयः प्रायस्तवायं यम ।
प्रायः कस्य कृतान्तभीतिरधुना कार्तान्तवार्तापि का
कः कालोऽपि न कालकालभजनासक्तं न जानासि किम् ॥ ६१ ॥

इति तद्वचनं श्रुत्वा यमः प्राह तमास्तिकम् । भयं मा कुरु मत्तस्ते न भयं जातु जायते ॥ ६२ ॥

धैर्यं विचार्यते तावद्गिरिशाराधकस्य ते । वरं वृणु प्रयच्छामि यदपेक्षितमास्तिक ॥ ६३ ॥

आस्तिकः —

महादेवे दातर्यतिविततभाग्ये सति हिते सति स्फीते भूते किमिति वरयेऽहं वरमपि ।
वरं दातुं शक्तो न जगति तथा विश्रुत इति त्वया ज्ञातो नातः परमिति वरं नैव वरये ॥ ६४ ॥

त्रिदशेशमहेशपादपद्म प्रवणान्तःकरणस्य दुर्लभं किम् ।
वरदेषु वरो हरः परो वरदत्वं तव केन निश्चितं वा ॥ ६५ ॥

यद्यत् स्यात्समपेक्षितं तव खलु प्राप्तव्यमेवाधुना
गौरीकान्तपदारविन्दभजने देयं त्वया किं मम ।

किं ते तिष्ठति निष्ठुरं मम मनः कष्टप्रदानोद्यतं
स्वस्थस्यापि यतो भवत्यतिभयं त्वत्तः परं निन्दया ॥ ६६ ॥

लिङ्गाराधनविघ्न एव जनितस्तावत् त्वया तेन ते
प्रायः स्यादपि शासनं खलु खल श्रीकालकालार्चकः ।
कस्माद्भीतिमुपैति कालविलयं कस्त्वं समर्थोऽप्ययं
कः कालान्तकपूजनेन कलयेत् कालाद्भयं निर्भयः ॥ ६७ ॥

न जानासि तत्वं शिवाचारनिष्टप्रभावं च कालाधुना कालकालः ।
हितप्राय एवेति ते दुर्मतिः स्यात् स संहारकः कोऽपि कालाग्निरूपः ॥ ६८ ॥

महादेवपादारविन्दे मनो मे प्रविष्टं यथेष्टं विनष्टाधसङ्गम् ।
वदत्येव ते निष्ठुरं कृत्यमेतत् ततः कष्टमेवाद्य ते भावि काल ॥ ६९ ॥

न रिक्तं मनो मे विरक्तं न गौरीसहायांघ्रिपङ्केरुहाराधनेषु ।
समस्तार्थदानप्रवीणेषु तेषु महेशप्रसादस्य शक्तिः प्रकृष्टा ॥ ७० ॥

नास्माकं भयमिन्दुशेखरपादाम्भोजार्चनात्यादरात्
संसारादपि कालतोऽपि न महापापौघतो वा यम ।
पापं न क्रियते कृतेपि न भयंपापांबुराशिः क्षणात्
नाशं यास्यति शङ्करस्मरणतस्त्वत्तो भयं दूरतः ॥ ७१ ॥

दृष्ट्वा हारपदाम्बुजाञ्चलरजोलेशप्रभूतानिलं
पापाब्धिः प्रशमं प्रयाति सहसा लोकस्य सर्वस्य च ।
नायं मामुपयाति तत्कथमपि प्रायः शिवाराधनं
नाशं याति पतङ्गवत् खलु महादेवार्चकं पावकम् ॥ ७२ ॥

पापेभ्यो न भयं यदा यम तदा त्वत्तोऽपि भीतिः कुतः
किं देयं तव वर्तते त्यज महावाचालतां सन्त्यज ।
वाचालत्वमुमासहायभजनासक्तेषु युक्तं कथं
शक्तिः शांभवपुङ्गवस्य सहसा ज्ञातापि नैव त्वया ॥ ७३ ॥

धाष्टर्येनागतमत्र भीतिरधुना संपादिता कापि सा
तुभ्यं दास्यति भीतिमेव सहसा सा वृद्धिमप्येष्यति ।

उप्तं यत्तदवाप्यते खलु खलैः खल्वाः समारोपिता
शालीनामुदयाय किं शिवजनद्रोहात् सुखं जायते ॥ ७४ ॥

यद्यद्यावधि शाङ्करेषु विनयः ते तर्हि सर्वात्मना
कः कालान्तकतोऽपि भीतिरिति ते चित्तं परं तिष्ठतु ।
अस्माकं तु भयं न शङ्कितमपि त्वत्तः शिवाराधने
नित्यं स्याच्छिवमेव तेन न भयं स्वप्नेऽपि संभावितम् ॥ ७५ ॥

अशांभयजनालयं प्रति गतिस्तव स्यात् सदा तदद्भुतभयप्रदस्त्वमसि तत्र तत्कष्टदः ।
तदीयगृहसङ्गमे तव न भीतिरप्यस्त्यतो यथेष्टगतिरस्तु ते शिवपराङ्मुखानां गृहे ॥ ७६ ॥

अस्मिन् पावनपावने यम वने सिंहादयः सर्वदा
त्यक्त्वा वैरमुदारगोकुलयुताः तिष्ठन्ति ते शांभवाः ।
तान् वा पश्य विशिष्य शान्तमनसः शान्तेन रूपेण ते
दृष्टाः कष्टविनाशका अपि भवन्त्येवेति शान्तो भव ॥ ७७ ॥

त्वत्तो भीतिरथापि मे न भवतीत्येवावधार्यादरात्
धैर्येणात्र शिवार्चनार्थमधुना तावत्परं स्थीयते ।
सायं पूजय शङ्करं तव कथं भीतिर्न शाङ्गाद्भवेत्
शाङ्गाराधनसाधनेन मनसा शाङ्गं परं संस्मर ॥ ७८ ॥

इति तद्वचनामृतं स कालः परमानन्ददमित्यभूतपूर्वम् ।
अवधार्य ययौ नतोऽतिभक्त्या तमभीतं वचनैः प्रसाद्य भूयः ॥ ७९ ॥

ततः परं विष्णुरवाप देशं तमेव तावद्गरुडध्वजः सन् ।
पीताम्बरालंकृतमूर्तिरिष्टं दातुं तदीयं कमलासमेतः ॥ ८० ॥

स दूरात् तं विलोक्यैव बिल्वैरवनताननम् । लिङ्गार्चनपरो जातः शिवध्यानपुरःसरम् ॥ ८१ ॥

सायङ्कालीनमौनेन पूजयन्तं महेश्वरम् । दृष्ट्वा विष्णुर्दूरतोऽपि शिवपूजारतोऽभवत् ॥ ८२ ॥

विष्णुः शिवाराधनसाधनानि संपाद्य लिङ्गार्चनसादरोभूत् ।
ततः समाप्याशु शिवार्चनं च स एव विष्णुस्तमुवाच गत्वा ॥ ८३ ॥

विष्णुः —

आस्तिकास्तिकवरोऽसि वरं ते दातुमिच्छति मनो वृणु मे तम् ।

किं तवेप्सितमहेशपदाब्जध्यानपूतहृदयोऽसि वरार्ह ॥ ८४ ॥

आस्तिकः —

वेदैर्वदान्योत्तममीशमेकं मत्वा महादेवमुपाश्रितोऽहम् ।
स एव मे सर्ववरप्रदाता दाता वराणां वरदोत्तमोऽयम् ॥ ८५ ॥

यं यं वांच्छति शांभवः प्रतिदिनं तं तं प्रयच्छत्युमा-
कान्तः सन्ततमन्तकान्तक इति ख्यातो य एव श्रुतौ ।
तस्मिन् मे वरदोत्तमे सति मनो दैन्यं न जानात्यतः
किं मे दुर्लभमस्ति शङ्करपदध्यानेन तन्मे मनः ॥ ८६ ॥

यो दाता जगतां तवापि कमलाकान्तामराधीश्वरो गौरीचारुपयोधराधरमहाहारावलीलया ।
लोकान् पालयति स्वभावविभवस्तद्वैभवस्यावधिर्नास्त्येवेति स एव मे वरद इत्यन्यं न मन्यामहे ॥

स्वप्ने वा गिरिजामनोहरपदाम्भोजार्चनान्मे मनो
नैवासीद्विरतं न चान्यभजनासक्तं प्रमत्तं च न ।
तेनैवेप्सितसिद्धिरित्यपि मतिर्वृद्धिं प्रयात्येव मे
दैत्यारातिरुमापतिः शरणमित्यन्यं न मन्यामहे ॥ ८८ ॥

यद्दौवारिकदण्डमण्डलकशाघातादिभीतो भवानादावेव चतुर्मुखोऽपि स शचीनाथोपि तं केवलम् ।
याचे याचककल्पभूरुहमहं मोहं विहायाधुना मोहध्वान्तविनाशके सति शिवेत्यन्यं न मन्यामहे ॥

अस्माकं गिरिजामनोहरहरापारादरात्यादरे शान्ते शान्ततरं निरन्तरमुमाकान्तानुरक्ते सति ।
अन्यस्मात् किमपेक्षितं किमपि न न्यूनं जगन्मण्डले पीयूषांशुकलावतंसभजनादन्यन्न मन्यामहे ॥

स्मृत्वा जनाजराभिघातनिहताः शर्वान्यसंसेवनात्
श्रान्तं मे मन एव तावदधुना तेभ्यो निवृत्तं ततः ।
भूयस्तत्पदसेवनं न कुरुते तुच्छत्वबुद्ध्या परं
तांस्त्यक्त्वा शिवपूजनं परमतोऽप्यन्यं न मन्यामहे ॥ ९१ ॥

मृत्युर्यस्य जरादिजन्मजनितं दुःखं न यस्याभवत्
तं मृत्युञ्जयमेकमेव शरणं प्राप्ताः सदा सादरम् ।
तस्मिन्नेव वदान्यनायकवरे गौरीविहारे परे
इत्थं क्रीडति तेन सिद्धिरभितोऽप्यन्यं न मन्यामहे ॥ ९२ ॥

यावद् भ्रान्तिरभूत् पुराऽतिविषमा तावत्पराराधने-
प्यासक्तं त्वयि जन्ममृत्युवशगे ज्ञाते निवृत्तं मनः ।
को वा जन्मजराविहीन इति तच्चित्तं विचार्याधुना
श्रीमृत्युञ्जयचिन्तने विरतमित्यन्यं न मन्यामहे ॥ ९३ ॥

को वा रत्नविशेषनिर्मितलसत्पात्रस्य दुग्धं शिवे
दत्तं शर्करया समेतमनघेनाज्येन युक्तं परम् ।
त्यक्त्वा क्षारजलं पिबत्यनुदिनं तस्माच्छिवान्यः सुरो
नोपास्योपि न तेन वाक्फलमतोऽप्यन्यं न मन्यामहे ॥ ९४ ॥

को वा मेरुशरासनं त्रिनयनं गौरीविहारादर-
व्याख्यानप्रवणप्रसाधनधनं कैलाससिंहासनम् ।
त्यक्त्वाऽन्यामरसेवनाय यतते भीतो यथा भीतितः
प्राप्नोत्येव विमोहितः प्रकृतितोऽप्यन्यं न मन्यामहे ॥ ९५ ॥

कः प्राप्यापि सुधाब्धितीरमसकृद्धीरः पिपासातुरः
तत्क्षीरं परिहाय दुर्मतियुतः क्षीराम्बुराशिं व्रजेत् ।
तस्माद्देवशिखामणिं सुरमणिं श्रीशूलपाणिं मनः
त्यक्त्वान्यं न भजत्यपि स्वयमतोऽप्यन्यं न मन्यामहे ॥ ९६ ॥

किं कष्टान्यपि विस्मृतानि भवता विश्वेश्वराराधन-
त्यागात् सायमिमं गतैव कमला सिन्धुं ततः पीडया ।
तन्निर्मन्थनकालकूटकलितज्वालाकुलः कृष्णतां
प्राप्तोसि स्मर तत्परं स्मृतमतोऽप्यन्यं न मन्यामहे ॥ ९७ ॥

त्वं घोरे विपिने वराहवपुषा लक्ष्मीविहीनस्तदा
तद्वन्याशनजीवनः शिवपदाम्भोजार्चनानादरात् ।
तत् किं विस्मृतमेव तत्स्मर पुनः तेनापि लज्जा न किं
ते तावद्वद तेन तावदधुना त्वन्यं न मन्यामहे ॥ ९८ ॥

स्वत्वं वस्तुषु भूतलेऽपि विदितं विश्वेश्वरस्येत्यतः
सर्वे तस्य स एव तावदसकृद् दाता वदान्योत्तमः ।

तस्मादेव समस्तवस्तुनिचयप्राप्तिस्तदन्यस्य किं
स्वत्वं वस्तुषु केष्वपीत्यपि मितेरन्यं न मन्यामहे ॥ ९९ ॥

[1]भक्ताभीप्सितवस्तुजातमसकृद्दत्वा पुनर्वांछितं
भक्तस्यास्ति किमित्यनुक्षणमुमाकान्तो विचार्यादरात् ।
दातृत्वव्यसनेन दातुमभितो वांछत्यपूर्वं फलं
लिङ्गाराधनतत्पराय सततोऽप्यन्यं (?) न मन्यामहे ॥ १०० ॥

वांछा यत्र न सर्वथा न विदितं नापि श्रुतं सर्वथा
तद्दातुं शिवपूजकाय यतते मृत्युञ्जयः सर्वथा ।
तं देवोत्तममप्रयासफलदं त्यक्त्वा तदन्यं मनो
गन्तुं वांच्छति तुछमित्यपि कदाप्यन्यं न मन्यामहे ॥ १०१ ॥

मातेवाशु शरीरपोषणरतो लिङ्गार्चकानां सदा
विश्वेशः स पिता पितेव विहिते भक्तिं नियुङ्क्ते पुनः ।
स्नेहाम्भोनिधिमालया परिवृतं भक्तं करोत्येव तं
त्यक्त्वा तावदुमासहायमधुना त्वन्यं न मन्यामहे ॥ १०२ ॥

अस्मत्पूर्वजपूर्वजार्चितमहापुण्याम्बुराशेः फलं
संवृत्तं फलमित्यवैमि बहुधा यस्मादुमावल्लभः ।
अस्माकं फलदैवतं परहितं कर्तुं समर्थः सदा
तस्मादेव हितार्थलाभकथनादन्यं न मन्यामहे ॥ १०३ ॥

धन्यानां शिव एव दैवतमिति ज्ञातं शिवप्रार्थनं
धन्या एव परं विहाय सकलं संसाररूपं फलम् ।
नित्यं निर्मलचेतसोऽप्यविकलं कुर्वन्त्युदाराः फलं
हारा एव हरात्परं परतरं त्वन्यं न मन्यामहे ॥ १०४ ॥

संप्राप्यापि शिवार्चनेन सकलं सर्वः शिवाराधनो-
पायः प्राप्त इति प्रभूतविभवाः कुर्वन्ति लिङ्गार्चनम् ।
तस्मादप्यमितं फलं पुनरुमाकान्तादवाप्यं ततः
शान्ता एव शिवं प्रयान्ति तमतोऽप्यन्यं न मन्यामहे ॥ १०५ ॥

---

1 अयं श्लोकः C कोशे नास्ति

यद्बिल्वदलमप्युमापतिरतिप्रीत्या गृहीत्वा नवं
जीर्णं वा त्रुटितं च नीरसमपि श्रेयस्करं केवलम् ।
मत्वा सर्वधराधिनाथविनतं दीनं करोत्यादरात्
अन्ते मुक्तिमपि प्रयच्छति ततोऽप्यन्यं न मन्यामहे ॥ १०६ ॥

श्रीकण्ठाद्गिरिराजराजतनयामेरुस्फुरच्छीकरात् हारश्रीपरिहारदक्षविलसद्वक्षोजवक्षःस्थलात् ।
इन्द्रादिप्रतिपक्षदक्षदलनात् फालानलाक्षात् परं स्वप्ने वा मरणेऽपि वा स्वकरणैरन्यं न मन्यामहे ॥

इति तद्वचनं श्रुत्वा विस्मितः कमलापतिः । धन्योऽसीति तमुक्त्वैव प्रणतः स कृताञ्जलिः ॥

ततः प्राह महाविष्णुरुपविश्यादरैः परम् । तं विलोक्य कृपापूर्णकटाक्षैरुपलक्षितम् ॥ १०९ ॥

विष्णुः —

सर्वामराधीश्वरविश्वनाथपादारविन्दे तव भक्तिरेवम् ।
अनेकजन्मार्जितपुण्यसङ्घैः जाता प्रवृद्धा च पुनः पुनः सा ॥ ११० ॥

अहो महद्भाग्यमभूत् तवेदं यतः शिवाराधनसक्तमेव ।
मनस्तदानन्दमित्यवैमि तेनैव तावत्परमापि मुक्तिः ॥ १११ ॥

न क्वापि दृष्टा दृढभक्तिरेवं मुक्तिप्रपासाधनमेव नूनम् ।
पुण्येन केनैवमभूत् तवेयं उमासहायांघ्रिसरोजमात्रे ॥ ११२ ॥

चित्तं पवित्रं तव गात्रमेतत् पवित्रमेवेति मतिर्ममासीत् ।
धन्यस्तदन्यो भुवि कोपि मान्यः सामान्यतस्त्वं मनुजो न नूनम् ॥ ११३ ॥

त्वमेव नन्दी किमुत प्रचण्डः तण्डी स भृङ्गी किमु वीरभद्रः ।
किं भैरवो वाऽथ षडाननो वा गजाननो वा वद तन्ममाद्य ॥ ११४ ॥

आशास्या भक्तिरेवं सकलसुरगणाधीश्वरो शङ्करे मे नित्यानन्दप्रदानव्रतनिरतमहाचार धीरेऽतिशूरे।
गौरीवक्षोजहारप्रतिभटचटलोद्दण्डदोर्दण्डभार व्यापारासारसारप्रभरदुरुतरे … …. ॥ ११५ ॥

दुस्तारापारपापप्रवरगिरिदरीद्वारगाठान्धकार
व्यापाराटोपकोपप्रतिभटनिटिलालोलकालानलश्रीः ।
स्मृत्यारूढापि पापप्रदहनशमनोपाय एवेति मन्ये
धन्याशास्या किमेषा न भवति महतां सापि संभावितापि ॥ ११६ ॥

यद्भाग्यपारपूरव्यतिकररुचिरस्फारगौरीकुचोरु
व्यापारोदारहारप्रसरदुरुतरासारकाश्मीरधाराम् ।
स्मृत्वा स्मृत्वाऽनुभूयाप्यनवरतहितस्वान्तसन्तानकान्तं
गौरीकान्तं नितान्तं कथमपि सततं स्वान्तमप्याश्रितं मे ॥ ११७ ॥

वारं वारं स्मरारे त्रिपुरहर हरापारसंसारघोर
व्यापारासारभीरुस्फुरदुरुखदिराङ्गार दारापसारम् ।
याचे याचे पुनस्त्वं पुनरपि च पुनस्त्वं न याचे न याचे
त्वत्पादाम्भोजरेणुप्रकरपरिकृतस्वान्तशान्तद्विरेफः ॥ ११८ ॥

त्वद्दर्शनं जातमिहाधुना मे प्रदोषकाले हृतपापजाले ।
श्रीकालकालार्चकदर्शनेन सम्पत्प्रवृद्धिश्च भविष्यतीह ॥ ११९ ॥

अयं पुण्यकालः शिवाराधनस्य स्वभावेन सर्वोऽपि कालस्तथापि ।
विशेषोऽधुना शङ्कराराधनेन प्रसन्नो भवत्येव गौरीसहायः ॥ १२० ॥

महादेवविद्याप्रभावोऽपि भाग्यैरपारैः कथञ्चिन्मया ज्ञात एव ।
त्वया साकमत्रापि संभाषणेन प्रभूतं च पुण्यं त्वया लब्धमेव ॥ १२१ ॥

महादेवविद्याविशेषाश्रयाणां यमावासवार्तापि दूरे तथा च ।
तया विद्यया सर्वसंपत्प्रवृद्धिर्भवत्येव मुक्तिश्च तस्याः प्रभावात् । १२२ ॥

महादेवविद्यां विना शङ्करार्चा कथं वा फलाय प्रवृत्ता तथा सा ।
फलान्याशु सूते फलप्राप्तिहेतुं वदन्त्येव तामेव सन्तः प्रशान्ताः ॥ १२३ ॥

न वेदान्तविद्यापि मोक्षप्रदाने समर्था यथा शर्वविद्या समर्था ।
तया विद्यया तावदुद्भूतरूपः त्वमेव स्फुरद्भानुरूपो विभासि ॥ १२४ ॥

त्वमत्रातिधन्यः शिवाराधनेन प्रसन्नः प्रसन्नं मनस्त्वं करोषि ।
त्वदीयं कुलं धन्यमेवेति मन्ये शिवाराधनासक्तचित्तोऽतिधन्यः ॥ १२५ ॥

महादेव एवाहमित्येव तावत् स्वभावोऽस्ति यद्वा महादेवभक्तः ।
भवामीति भक्तिर्भवत्वद्य मह्यं प्रसन्नो महेशो यदि स्वस्वपुण्यैः ॥ १२६ ॥

महादेवपादाम्बुजाराधनादौ न भक्तिर्महापापसङ्घानुषङ्गे ।
न तन्नाशहेतुः शिवाराधनान्यः ततस्तेन तन्नाशसिद्धिर्भवित्री ॥ १२७ ॥

महादेवपादाब्जसामर्थ्यमन्यैः न विज्ञातमेवेति मन्ये किमन्यैः ।
शिवाराधनेनैव मुक्तिर्यतः स्यात् ततस्तं महादेवमेकं भजामि ॥ १२८ ॥

न संसारदुःखापहर्तापि लोके शिवान्यस्तदन्यं न जाने न जाने ।
न जाने शिवान्यं न जाने शिवान्यं न जाने शिवान्यं सुखावाप्तिहेतुम् ॥ १२९ ॥

इत्युक्तवन्तं तं विष्णुमभिनन्द्यास्तिकोत्तमः । शिवपूजारतो जातो विष्णुः स्वं निलयं ययौ ॥

एवं शिवाराधनतत्पराणां धैर्यं त्वधैर्यं न कदापि तेषाम् ।
न दैन्यवार्ता न च दुःखवार्ता संसारवार्ता त्वतिदूरतः स्यात् ॥ १३१ ॥

यं देवदेवं सकृदानमन्तः संप्राप्नुवन्तः सकलार्थसिद्धिम् ।
तं शङ्करं कः प्रणतो न लोके मुक्तिं समाप्नोति सुखावसाने ॥ १३२ ॥

सिद्धाः प्रसिद्धा अपि योगसिद्ध्या यं वै न जानन्ति तमीशमीड्यम् ।
उमासहायं प्रणतो न को वा मुक्तिं समाप्नोति सुखावसाने ॥ १३३ ॥

[1][यं योगमार्गैकरतोऽपि योगी न पश्यति श्रीगिरिजासहायम् ।
उमासहायं प्रणतो न को वा मुक्तिं समाप्नोति सुखावसाने ॥]

[2]यत्पादपङ्केरुहभृङ्गभावं मन्मानसं वांछति तं महेशम् ।
उमासहायं प्रणतो न को वा मुक्तिं समाप्नोति सुखावसाने ॥ १३४ ॥

यत्पादुकाराधनसक्तचित्तः करोति वांछां विषयेषु तत् किम् ।
उमासहायं प्रणतो न कोवा मुक्तिं समाप्नोति सुखावसाने ॥ १३५ ॥

[[3]यन्नामसङ्कीर्तनपूतजिह्वाः स्मरन्ति संसारसुखं न तं वै ।
उमासहायं प्रणतो न कोवा मुक्तिं समाप्नोति सुखावसाने ॥]

विश्वेशनामामृतपानपीनाः क्वचिद्भवन्त्येव भवेऽपि धन्याः ।
तेषां पदाम्भोजरजःप्रसादं वांछां करोत्येव मनो ममापि ॥ १३६ ॥

---

1 अयं श्लोकः C कोशेऽधिकः ।

2 अयं श्लोकः C कोशे नास्ति ।

3 अयं श्लोकः C कोशेऽधिकः ।

यमभटगणवार्तामन्तकस्यापि वार्तामुरुतरसुखदुःखापारसंसारवार्ताम् ।
विषयविषयवार्तां न शृणोत्येव हारो हरचरणसरोजध्यानाधारानुरक्तः ॥ १३७ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवभक्तयमसंवादे शिवभक्तविष्णुसंवादकथनं नाम अष्टाविंशोऽध्यायः ॥

—:×:—

## अथ एकोनत्रिंशोध्यायः

याज्ञवल्क्यः —

तस्मान्न मुक्तिः शिवविद्यया विना नानन्दसिद्धिश्च भवत्यतोऽस्याः ।
तया विना मुक्तिरथापि दूरे किं मूर्छिताया इति मे विभाति ॥ १ ॥

इत्युक्त्वा सोऽपि भूपालः सत्यज्ञानपरायणः । परलोकः कथं तस्य स्यादित्यपि चिरं स्थितः ॥

ततः परं ददर्शायं तेजोमूर्तिं विलोक्य ताम् । किमित्याश्चर्यसंपन्नो विस्मितः समभूत् तदा ॥ ३ ॥

ततः परं तत्र सनातनोऽपि सनन्दनोपि स्मरवैरिवार्ताम् ।
कुर्वन् समभ्यागत एव दृष्ट्वा तं प्राह राजा विनयेन नम्रः ॥ ४ ॥

सत्यव्रतः —

सनन्दनापूर्वमिदं प्रपश्य ज्योतिः कदाचिन्न विलोकितं च ।
न वा श्रितं किञ्चिदिदं वदाशु लोकस्य तत्त्वं विदितं त्वया तु ॥ ५ ॥

सनन्दनः —

श्रीपञ्चाक्षरविद्यया स्थिरमतिर्नित्यं शिवाराधको
भस्मोद्धूलितविग्रहः श्रुतिलसद्भूतित्रिपुण्ड्राङ्कितः ।
त्यक्त्वा देहमुमासहायचरणध्यानातिपूतोऽधुना
गौरीनाथपदारविन्दभजनं कर्तुं प्रयाति ध्रुवम् ॥ ६ ॥

अयं पुण्यपुञ्जस्वरूपोप्यपापो विधूताधितापो विशेषेण दृष्टः ।
अदृष्टं समुद्भूतमेवाद्य सत्यं किमेतादृशालोकने शोकशूकम् ॥ ७ ॥

अपाररविमण्डलप्रकरमालिकासन्निभं प्रयाति शिवमन्दिरं सकललोकशोकापहम् ।
विलोकय विलोकय स्मरहरोरुविद्यानिधिं पुनर्नयनगोचरः किमयमद्य भूयो नृप ॥ ८ ॥

विभाति शिवविद्यया तरणिमण्डलस्याप्ययं निरोधकतया मितोप्यमितभानुमालायितः ।
इदं खलु महत्तरं भवति भाग्यमीशार्चनादयं भवति शङ्करप्रवणमानसः सर्वदा ॥ ९ ॥

शिवार्चनफलं परं भवति तावदेतादृशं प्रभूतबहुपुण्यवानयमुमासहायार्चकः ।
अयं गुरुरिति श्रुतः शिवपरायणानां परं प्रदर्शनमयं करोत्यनघशैवमार्गस्य किम् ॥ १० ॥

महान् खलु शिवार्चको भुवनमण्डलाखण्डलः प्रचण्डतरपातकप्रबलपर्वतानां पविः ।
किमेवमिदमद्भुतं शिवपदाम्बुजाराधनं महाघवनपावकं सकललोकसन्तोषदम् ॥ ११ ॥

स याति शिवमन्दिरं शिवपदाम्बुजाराधनादिहैतदवलोकनाद्भवति पुण्यराशिः स्थिता ।
सुखाम्बुनिधिरुत्थितः शिवजनेष्टचन्द्रोदयादहो भवति देहिनां शिवपदार्चनं पुण्यतः ॥ १२ ॥

स किं मम सखा पिता किमुत सोदरो वा हितस्त्वयापि शिवपूजकः सकृदवेक्षितो वा भृशम् ।
प्रयच्छति कथं सुरप्रवरशङ्कराराधकः कदम्बवनभूरुहो भवति दुर्लभो दुर्लभः ॥ १३ ॥

अनेन जननोत्तरं शिवपदाम्बुजाराधनादवाप्तमतुलं जगद्भवति भाग्यमानन्ददम् ।
प्रयच्छति कथं सुरप्रवरशङ्कराराधकः स तेन शिवपूजनं पुनरपारभाग्यप्रदम् ॥ १४ ॥

शिवव्रतरतः सदा शिवकथाविचारे रतः शिवप्रवणमानसः शिवकथानुमोदप्रियः ।
शिवं वदति सन्ततं शिवशिवेति नाम स्मरन् शिवं भवति भावितं सुकृतराशिभिः केवलम् ॥१५॥

शिवं सुखकरं परं वदति साधु वीरेश्वरं शिवं भवति चेतसा कमलकुन्दबिल्वीदलैः ।
समर्चयति सादरं गिरिकुमारिकावल्लभं परं स्वकुलदैवतं सततमेव मेने मुदा ॥ १६ ॥

शृणोति शिवविद्यया परमुदारकीर्तिं हरं महेश्वरमहेश्वरेत्यमरसार्वभौमं हृदि ।
विचिन्त्य पुनरादरात् कनककेतकीचम्पकैः करोति विकटार्चनं समभिपूज्य वीरेश्वरम् ॥ १७ ॥

अपारजलधारया शिरसि चैकवीरेश्वरं चकार सुमुखं मुहुः स खलु कालकालार्चने ।
चकार करणं वयो विरत एव संसारतो युवापि युवतीं वधूमपि विहाय तन्मातरि ॥ १८ ॥

यदेव धनमार्जितं विविधशास्त्रविद्यात्मकं तदप्यगसुतापतिस्मरणकारणं केवलम् ।
मनोपि शिवविद्यया परमपावनं तस्य वै प्रयाति शिवमन्दिरं सुरकृतार्यडिण्डीरवैः ॥ १९ ॥

न तेन सुखसाधनं शिवपदाम्बुजाराधनात् विभिन्नमपि निर्मितं नियमतोऽथवा निश्चितम् ।
तदेव सकलार्थदं परममुक्तिदानक्षमं न हातुमपि वांछितं प्रबलसङ्कटेऽपि ध्रुवम् ॥ २० ॥

इति तद्वचनं श्रुत्वा स राजा विस्मयं गतः । तमुवाच महात्मानं शङ्कराराधनप्रियम् ॥ २१ ॥

सत्यव्रतः —

दयालुरसि धर्मात्मा दीनवत्सल सन्ततम् । एनामुद्धर संसारान्मूर्छितां शिवविद्यया ॥ २२ ॥
पश्य भूतिप्रभायुक्तां रुद्राक्षसमलङ्कृताम् । शिवार्चनपरा सेयं अनुतापसमन्विता ॥ २३ ॥
इति तद्वचनं श्रुत्वा स तां पस्पर्श भस्मना । आलिङ्ग्याङ्गं पुनः सापि संज्ञां प्राप्य विशेषतः ॥
ततः प्रणम्य सा राज्ञी राजानं च सनन्दनम् । आनम्रवदना मन्दमुवाच चतुरं वचः ॥ २५ ॥

राज्ञी —

भवद्दर्शनमात्रेण कृतकृत्याऽस्मि यद्यपि । तथापि शिवविद्या मे देया सा मुक्तिसाधनम् ॥ २६ ॥
तयैव जीवनं धन्यं भविष्यति ममाधुना । सा विद्या परमा विद्या श्रुताप्यघविनाशिनी ॥ २७ ॥
कन्यकायां यथा प्रीतिं करोति जनकस्तदा । मयि प्रीतिं कुरु स्वामिन् अनाथजनरक्षक ॥ २८ ॥
इत्याकर्ण्य वचस्तस्य चित्तं शुद्धं विचार्य च । शिवविद्यां ददौ तस्यै स कृपालुः सनातनः ॥२९॥
ततस्तद्देहतः पापान्यपाराण्युरगाकृतिम् । गृहीत्वा निर्गतान्याशु सापि विस्मयमागता ॥ ३० ॥
ततः शिवार्चनं कृत्वा गत्वा नगरमात्मनः । राज्ञापि गुरुणा तेनाप्यादरादनुमोदिता ॥ ३१ ॥
ततः प्रविष्टा नगरं सा राज्ञी धनपर्वतान् । रत्नोच्छ्रयानपारांश्च दर्शयामास कोटिशः ॥ ३२ ॥
ततस्तेन धनेनैव कारयामास शाङ्करम् । मन्दिरं सुन्दरं रत्नैः भूषितं च विशेषतः ॥ ३३ ॥
रत्नप्रासादकरणैः स्वर्णगोपुरवर्धनैः । सुवर्णरथनिर्माणैः सा चकार शिवोत्सवम् ॥ ३४ ॥
प्रत्यहं शिवपूजायां निरता रत्नभूषणैः । पूजयामास गिरिशं नाट्येन च मुहुर्मुहुः ॥ ३५ ॥
तां विलोक्य स राजापि शिवपूजनतत्पराम् । सायङ्काले समभ्यर्च्य स शिवं रुद्रवीणया ॥ ३६ ॥
प्रीणयामास गानेन शिवपूजनतत्परः । पूजयामास गिरिशमहर्निशमतन्द्रितः ॥ ३७ ॥
पञ्चामृताभिषेकाद्यैरुपचारैर्मनोहरैः । अपाररत्नदीपैश्च पूजयामास शङ्करम् ॥ ३८ ॥
सन्तुष्टः प्राह स मुनिं शिवालोकनतत्परम् । पश्य पश्य मुनिश्रेष्ठ राज्ञीं शिवपरायणाम् ॥ ३९ ॥
स्त्रीणामेतादृशी बुद्धिर्दुर्लभा खलु वस्तुतः । कामातुरापि रमणी रमणं समुपेक्षते ॥ ४० ॥
सोपि तां रमणीं प्राप्य न मुञ्चति विशेषतः । रमणी निःस्पृहा सेयं निःस्पृहा भूषणेष्वपि ॥
आहारमात्रविरता करोति शिवपूजनम् । रत्नप्रासादवांछापि नास्याः शङ्करमन्दिरे ॥ ४२ ॥
नैवास्तरणतल्पेषु न सुगन्धिसुमेष्वपि । वांछा परं समुत्पन्ना शङ्कराराधनेष्वपि ॥ ४३ ॥
शिवप्रभावो विदितो न केनाप्येषापि विश्वेशपदार्चनेषु ।

आस्थामवाप्याशु करोति पूजां मुक्त्यर्थमेवेति मतिर्ममाभूत् ॥ ४४ ॥

केयं पूर्वभवे विद्वन् किमस्याः सुकृतं वद । केन पुण्यप्रभावेन शिवार्चनरता सती ॥ ४५ ॥
नाभ्यस्ता वेदविद्यापि वेदार्थो न श्रुतोऽपि हि । न श्रुतान्यपि शास्त्राणि कथं वा शङ्करे रतिः ॥
अधीत्य वेदान् वेदार्थान् शास्त्रैर्ज्ञात्वा विशेषतः । शिवार्चनरतो लोके कोपि पुण्यैः प्रजायते ॥
वेदभागाश्च विविधाः तत्तात्पर्यावधारणम् । साङ्गैः शास्त्रैर्भवेत् तेषां तदर्थत्वावधारणात् ॥ ४८ ॥
श्रुत्यादिभिः प्रमाणैस्तु वेदार्थेऽवधृते सति । पश्चात् स्यात् तदनुष्ठानं तावत् तत्स्यात् कथं वद ॥
न केवलेन लिङ्गेन श्रुत्यर्थस्यावधारणम् । न श्रुत्यापि न वा विद्वन् शुद्धप्रकरणेन वा ॥ ५० ॥
समाख्यया न वाक्येन स्थानेनापि विशेषतः । तेषां परस्पराकांक्षा श्रुत्यर्थस्यावधारणे ॥ ५१ ॥
[1] प्रमाणपरिपाटीत्वं प्रमाणस्येति निश्चितम् । तन्निरासोऽपि तैरेव श्रुत्याद्यैरवधार्यते ॥ ५२ ॥
मन्त्रोपि विविधानर्थान् प्रतिपादयितुं क्षमः । शब्दशक्त्या यतस्तस्य न यथेष्टा गतिः खलु ॥
श्रुत्याद्यैङ्कुशप्रायैः मन्त्रमत्तेभशिक्षणे । तन्मन्त्रार्थानुष्ठानेऽप्यक्षतिर्निर्णये सति ॥ ५४ ॥
किञ्च तन्निर्णयस्तावत् न फलं केवलं खलु । तदनुष्ठानपर्यन्तं व्यापारः खलु निश्चितः ॥ ५५ ॥
तन्मन्त्रैरेव नियतैस्तत्प्रमाणोपबृंहितैः । तदर्थस्फुरणे पश्चात् अनुष्ठानं फलाय तत् ॥ ५६ ॥
तत्फलं सूक्ष्मरूपेण तदानीमेव जायते । अपूर्वरूपं तद्रूपं उद्भूतिस्तदनन्तरम् ॥ ५७ ॥
कालान्तरोपभोग्यानि यानि कर्मफलान्यपि । तानि तावदनुष्ठानैः साङ्गैरिति विनिश्चयः ॥ ५८ ॥
तत्राधिकारविज्ञाने सति कर्मणि केवलम् । भवत्यधिकृतस्तेन विना तन्नोपजायते ॥ ५९ ॥
शास्त्राधीनमिदं सर्वं विना तेनाधुना कथम् । जायते फलमेतस्य कथं भवति तद्वद ॥ ६० ॥

सनन्दनः —

सत्यमुक्तं त्वया राजन् शास्त्रार्थः स तथाविधः । तस्य शास्त्रस्य च ज्ञानं कदाचित् समपेक्षितम् ॥

बहूनि जन्मानि गतानि येषां शास्त्रार्थविज्ञानविशारदानाम् ।
तेषामनुष्ठानविशेषलाभः कदापि नासीदिति नानुमेयः ॥ ६२ ॥
अभ्यस्तशास्त्रपरिपाकवशात् कृतेऽपि कर्मण्यवश्यमनुभूयत एव तेन ।
तत्तत् फलं कथमपीति न तेषु विघ्नः संभावितो यदि तदा भवतीति मन्ये ॥ ६३ ॥
प्रत्यूहमात्रपरिपन्थिविनाशनेन गौरीमनोरमणमूर्तिविचिन्तनेन ।
कर्माणि तानि सफलानि फलाय तेन मुक्तानि तानि विफलानि न संशयोऽत्र ॥ ६४ ॥

---

1 प्रमाणपरिपन्थित्वमप्रमाणस्य निश्चितम् C

कृतं शिवाराधनभक्तिसिद्ध्यै यत् कर्म तत् तस्य न विघ्नितं चेत् ।
फलं भवत्येव ततो विमुक्तं संसारबन्धेन विमुक्त एव ॥ ६५ ॥

कालान्तरे विघ्नविनाशतः स्यात् सा भक्तिरीशानपदारविन्दे ।
जाता तदभ्यर्चनसाधनं स्यात् ततः फलेन श्रुतिराहतापि ॥ ६६ ॥

उत्पन्नस्यापि मर्त्यस्य प्रतिबन्धकसंभवे । शङ्कराराधने भक्तिर्न भविष्यति सर्वथा ॥ ६७ ॥

बालकोऽस्तु युवा वाऽस्तु वृद्धो वाऽस्तु तथापि किम् । प्रतिबन्धकसद्भावे शिवे भक्तिर्न जायते ॥

अभाग्यसेतुप्रतिबद्धचित्ताः श्रीमन्महादेवसुधाम्बुराशिम् ।
न प्राप्नुवन्त्येव मनागतोऽपि भाग्यं न तेषां दुरदृष्टकष्टैः ॥ ६९ ॥

भाग्यं तस्य स एव भूरिविभवः पुण्यैरगण्यैर्युतो
भूलोकाभरणः स एव सुकृती तद्वंश एवोन्नतः ।
तन्मातैव पतिव्रता कुलसती तस्याङ्गना तत्पिता
धन्यो यस्य मतिः शिवार्चनपदाम्भोजार्चने सन्ततम् ॥ ७० ॥

भूमण्डले भूप विचिन्तनेपि स शांभवो दुर्लभ एव यः स्यात् ।
निरन्तरं शङ्करलिङ्गपूजानिविष्टचित्तः सितभूतिपूतः ॥ ७१ ॥

भूतिर्यस्य सदा ललाटफलके रुद्राक्षमाला गले लिङ्गं तुङ्गमनङ्गहर्तुरमलं रेवाजलासेचनैः ।
सर्वार्थप्रदमाशु बालविलसद्बिल्वीदलाभ्यर्चितं तं मन्ये कृतकृत्यवर्यममराराध्यं तमेवादरात् ॥

को वा नेत्रपथं प्रयाति गिरिजाकान्तांघ्रिपङ्केरुहध्यानासक्तमतिः प्रकृष्टसुकृताभावे भवाम्भोनिधेः ।
तेनैवाशु विशोषणं सुरसरिद्रूपः स एवेति मे तत्पादाम्बुजरेणुवायुरपि यः स स्याज्जगत्पावनः ॥

शिवनामसुधाशनो न कोपि प्रथितो भूतलमण्डलेऽखिलेऽपि ।
स पुनाति जगत्त्रयं स्वलीलागमनोत्पन्नरजोविशेषभोगैः ॥ ७४ ॥

नत्वापि नारी शिवपूजनेन वयो नयत्येव विनापि भोगैः ।
तथा नरोपीति शिवैकनिष्ठः साक्षाद्वसिष्ठोऽपि युतो वरिष्ठः ॥ ७५ ॥

शिवाराधनसक्तानां जीवानां जीवनं परम् । अन्येषां जीवनं तावन्मरणं मरणादपि ॥ ७६ ॥

यावच्छङ्करपूजने मतिरुमाकान्तांघ्रिपङ्केरुह-
ध्याने तावदिदं शरीरमसकृत्संरक्षणीयं बुधैः ।

तत्त्यागे पतितो भवत्यनुदिनं तज्जन्म तावद्वृथा
तन्माता व्यभिचारिणीति मतिरप्यद्याधुना जायते ॥ ७७ ॥

यो वा भूप शशाङ्कशेखरपदाम्भोजार्चनात्यादरो
भूत्या भूषितविग्रहः स्वहृदये गौरीसहायं परम् ।
ध्यात्वा तिष्ठति तत्कथापि न कदाप्याकर्णिता तं विदुः
साक्षादीश्वरमेव सर्वजगतां पूज्यः स एव ध्रुवम् ॥ ७८ ॥

यस्याभीप्सितधर्मसिद्धिरसकृत्पादाम्बुजाराधना-
द्भावेनापि तदीक्षणादपि भवेत् तं केवलं शाम्भवम् ।
मन्ये दुर्लभमेव शांभववरं सामान्यतः शांभवो
भूलोके खलु दुर्लभो भवति तं मन्ये परं पावनम् ॥ ७९ ॥

इयं पूर्वभवे राजन् विन्ध्याचलनिवासिनी। भिल्लकन्या सदा वन्यैरेतस्याः खलु जीवनम् ॥
इयं च युवती तत्र भिल्लैः क्रीडारता वने। सा तत्र सुरतान्ते तैः सह रेमे यथासुखम् ॥ ८१ ॥
ततः समभवद्वृष्टिः [1]कापि कष्टाय कल्पिता। तया वृष्ट्या कम्पमाना त्यक्ता च पुरुषैस्तदा ॥
ततस्तद्वृष्टिधाराभिः वात्याभिस्तरुकोटरे। विच्छिन्नं वसनं सर्वं छिन्नमेव पुरातनम् ॥ ८३ ॥
ततो वातनिघातेन पतितां नवपल्लवाम्। बिल्वशाखां समादाय विवेश शिवमन्दिरम् ॥ ८४ ॥
ततस्तज्जलधाराभिः सरन्ध्रं शिवमन्दिरम्। प्रविश्य चिन्तया व्याप्ता क्व वा गन्तव्यमित्यपि ॥
तदनन्तरमुत्कृष्टं नार्मदं लिङ्गमादरात्। विलोक्य सा जगादेदं धृत्वा तल्लिङ्गमादरात् ॥ ८६ ॥
जलधाराविशीर्णास्ते पाषाणाश्चानिलाहताः। लिङ्गमूर्ध्नि पतिष्यन्ति किं कर्तव्यमतः परम् ॥
प्रकृष्टवृष्टिधाराभिः सरन्ध्रं च भविष्यति। स्फुटितं च भवेदेव विशीर्णं वा भविष्यति ॥ ८८ ॥
लिङ्गरूपी महादेवस्तद्वृष्टिविनिवारणम्। कथं वा न करोत्यत्र किं कर्तव्यमतः परम् ॥ ८९ ॥
लिङ्गनाशनसामग्री वृष्टिरेषा महत्तरा। एतन्निवारणं कर्तुं यतते किं न शङ्करः ॥ ९० ॥
चिद्घनस्य महेशस्य लिङ्गेऽभिव्यक्तिरित्यपि। श्रुतो वाणीविशेषोऽयमशरीरसमुद्भवः ॥ ९१ ॥

वाणी —

यद्भावि तद्भावि न संशयोऽत्र भिन्नं यदेतद्यदि वृष्टिसेकैः ।
तदा तदालोकनमास्तिकेन कर्तुं न शक्यं खलु सर्वथापि ॥ ९२ ॥

---

1 सापि (C)

लिङ्गं तदेव रमणीयमवेक्षणीयं यच्चन्दनादिसमलङ्कृतमादरेण ।
कुन्दैश्च बिल्वविलसन्नवपल्लवैश्च संपूजितं भवति पापविनाशनाय ॥ ९३ ॥

भाग्येन मे कुसुमचन्दनपूजितस्य लिङ्गस्य तावदसकृत् समवेक्षणेऽपि ।
कल्याणदायकमिदं खलु लिङ्गमत्र रेवातरङ्गसमलङ्कृतमुष्णकाले ॥ ९४ ॥

एतस्य तावदसकृन्न कृतैव पूजा बिल्वेन वा झडिति चेत् स्फुटितं जलेन ।
व्यर्था भवत्यपि सपल्लवबिल्वशाखा शाखासमर्पणमपीह कथं मुदे स्यात् ॥ ९५ ॥

एकैकबिल्वदलसंग्रहणे न शक्तो हस्तोऽपि कम्पसहितोऽस्य तनुः सकम्पा ।
पापापनोदनसमर्थमिदं न लिङ्गं किं नार्मदं विमलपल्लवपूजितं चेत् ॥ ९६ ॥

इत्युक्त्वा सातिदुःखार्ता तस्य लिङ्गस्य मस्तकम् । सर्वतः छादयामास शुद्धया बिल्वशाखया ॥
पुनरानीय सा शाखां बिल्वस्य नवपल्लवाम् । छादयामास तल्लिङ्गं कम्पमानापि सा पुनः ॥

कम्पेन हस्तांगुलिचालनेन लिङ्गालये नाट्यवधूरिवाभूत् ।
या बिल्वशाखापि समर्पिता सा लिङ्गस्य तत्पूजनहेतुभूता ॥ ९९ ॥

पटहीना वधूटीव नाट्यवेगेन सा बभौ । तेन नाट्येन सुप्रीतो भगवानपि शङ्करः ॥ १०० ॥
ततो वृष्टिर्गता सापि सन्तुष्टा गिरिजापतिम् । तुष्टाव पाहि मामीश पाहि पाहीति शङ्करम् ॥१०१॥
शम्भो वसनहीनां मां नित्यं सवसनां कुरु । हर सर्वाणि पापानि जारसङ्गकृतान्यपि ॥ १०२ ॥
दाता त्वमेव भगवान् विश्वस्य सकलस्य च । पालको नाशकश्च त्वं जनकोपि न संशयः ॥१०३॥

भूमण्डलोत्पादनकारणाय तत्पालनस्याप्यथ कारणाय ।
तन्नाशकायापि नमो नमस्ते गौरीसहायाय महेश्वराय ॥ १०४ ॥

अपारसंसारविनाशकाय संसारदुःखप्रलयोद्यताय ।
नमोऽस्तु ते कारणकारणायाप्यकारणायापि नमो नमस्ते ॥ १०५ ॥

वेदान्तवेद्याय नमो नमस्ते वेदस्वरूपाय नमो नमस्ते ।
अपारकल्याणगुणार्णवाय नमो नमस्ते गिरिजासहाय ॥ १०६ ॥

नमो नमश्चन्द्रकलावतंस गौरीस्फुरन्मानसराजहंस ।
गौरीविहारोन्नतकन्धरांस नमो नमो बिल्ववरोत्तमांस ॥ १०७ ॥

कश्चन्द्रचूडचरणाम्बुरुहार्चनेन नाभीष्टसिद्धिमसकृत् समवाप रूपम् ।

शैवं समेत्य नवविल्वदलांकुरैर्वा लिङ्गार्चनेन विजये रजनीमुखे वा ॥ १०८ ॥

प्रदोषे विल्वं वा यदि नवजलेनापि सहितं प्रदद्याद्यो भक्त्या सितमसितलिङ्गेऽपि विमलम् ।
स तावत्सर्वेषामपि भवति पूज्यो जनिजराविनाशानां दुःखं परिहरति दृष्टोऽपि सहसा ॥

पुण्यानि तावन्न पुरा कृतानि यत्तत्स्मरारिस्मरणं न पूर्वम् ।
अद्यापि तावन्न कृतानि पुण्यान्यथापि लिङ्गं नयनातिथिर्मे ॥ ११० ॥

अलं पुण्यभारैरलं योगदानैः अलं सर्वभूमण्डलावर्तनैर्वा ।
यदा शर्वलिङ्गं नवैर्बिल्वपत्रैः पवित्रैः प्रसन्नं तदा तैश्च किं वा ॥ १११ ॥

अहो महद्भाग्यमिदं वनेऽस्मिन् वृष्टिप्रसङ्गादपि शाङ्गलिङ्गम् ।
दृष्टं मम प्राणवियोगकाले न भाविकालाद्भयमल्पतोऽपि ॥ ११२ ॥

सकृदप्यवलोकितो महेशः शिवलिङ्गेषु समर्चितोऽतिभक्त्या ।
कृतकृत्यवरं करोति मर्त्यं स कृतान्तोऽपि बिभेति तेन नूनम् ॥ ११३ ॥

कृतान्तान्तकं कः प्रपूज्यातिभक्त्या नवैर्बिल्पत्रैर्जलैर्वा फलैर्वा ।
स यातीशपादारविन्दद्विरेफस्वभावो भवाम्भोधिराशेश्च पारम् ॥

प्रपन्नार्तिनिर्वापणे शक्तमेकं महादेवमेकं प्रपद्ये महेशम् ।
विशेषेण माता पिता बन्धुरेव प्रकृष्टानि कष्टानि दूरीकरोति ॥ ११५ ॥

अनायासलभ्यैव मुक्तिर्महेशे श्रुतेऽपि स्मृतेऽपीति मन्ये तदन्यः ।
न कोप्यस्ति भक्तार्तिसंहारहेतुः स सेतुः सुखानां स केतुर्मखानाम् ॥ ११६ ॥

महेशं भजन्तः स्मरन्तः सकृद्वा न संसारभीतिं प्रपश्यन्ति कालम् ।
न पश्यन्ति दुःखानि कान्यप्यतो हि महेशं विनान्यं न जाने न जाने ॥

जनिस्तेन तावद्भवत्येव तेन स्थितिस्तेन संहारकाले समाप्तिः ।
समस्तस्य लोकस्य तस्याधुनाऽहं प्रपश्यामि लिङ्गं कृतानङ्गभङ्गम् ॥ ११८ ॥

ग्रहास्तावदद्याधुना मे प्रसन्नाः पुनस्तावदेकादशस्थानयुक्ताः ।
समस्ताश्च ते तेन घोरे वनेऽस्मिन् प्रकृष्टं हि लिङ्गं मया दृष्टमेव ॥ ११९ ॥

विनष्टानि कष्टानि दुःखप्रवाहः क्षणेनैव नष्टो गता वृष्टिरेषा ।
इदं लिङ्गमप्यम्बुना सिक्तमेवं नवं बिल्वपत्रं वहत्याशु दत्तम् ॥ १२० ॥

अनेनैव दत्तेन बिल्वेन पापं प्रणष्टं प्रकृष्टं सुखं दातुमेव ।
समर्थं न सन्देहवार्तापि धन्यं शरीरं ममेदं तथा जीवनं च ॥ १२१ ॥

बिल्वाङ्कुरेण गिरिजारमणः कथं वा प्रीतो भवत्यघविनाशकरः कथं वा ।
मुक्तिप्रयावितरणप्रवणः कथं वा वेदो न वेद तदयं शिवकौतुकानि ॥ १२२ ॥

धुत्तूरपुष्पमपि केतकपुष्पतुल्यं कृत्वा जपाकुसुममप्यपराधिनापि ।
गृह्णाति दत्तमसकृत् सकृदेव वाऽयं किं कौतुकं तदिदमित्यपि नैव विद्मः ॥ १२३ ॥

किं कण्टकारिकुसुमान्यपि कौतुकेन गृह्णाति किं कुशदलान्यपि किं शुभानि ।
भक्ताभितापहरणाय जलानि गृह्णात्यल्पानि तान्यभिनवान्यनवानि वाऽयम् ॥ १२४ ॥

कल्याणसागर इति प्रथितो हरोऽयं सर्वाघराशिहरणात् स हरो वरोऽयम् ।
तं तादृशं गिरिसुतापतिमाश्रयेऽहं भक्तेप्सितार्थदमपारसुखप्रवाहैः ॥ १२५ ॥

आलोच्य चैव चिरमेव मयापि लोके निर्णीतमीशचरणाम्बुजमादरेण ।
संसेवनीयमखिलाघविनाशनाय गौरीपतिं चिरमहं हृदि भावयामि ॥ १२६ ॥

गौरीकुचोरुगिरिशेखरचारुहीर हारस्फुरद्गिरिशपादसरोजभृङ्गैः ।
मन्मानसं भवतु तेन विमुक्तिरस्य संभाविताऽपि जगतामपि माननीयः ॥ १२७ ॥

मदीयसुकृतापारपारावारैर्महेश्वरः । कुलदैवतमस्माकं अकस्मादभवत् कथम् ॥ १२८ ॥

क्वाहं क्व वा वृष्टिरियं प्रभूता सन्तोषरूपा शिवदर्शनेन ।
अलं कृतार्थं मम मानसं मे कृत्यं च नातः परमस्ति लोके ॥ १२९ ॥

इति स्मृत्वा महादेवं सा स्थित्वा शिवमन्दिरे । तदानीमागता माता तस्यास्तां द्रष्टुमादरात् ॥
तां विवस्त्रां कम्पमानां विलोक्यातीव दुःखिता । पटखण्डं ददौ तस्यै सा न जग्राह तं पटम् ॥
तामाह जननी तस्याः कम्पमानां सुतां प्रति । गृहाण वसनं बाले नग्नासि किमिदं वद ॥ १३२ ॥
इति तद्वचनं श्रुत्वा त्यक्त्वा संभाषणं तदा । शिवमन्दिरमाश्रित्य स्थिता विह्वलमानसा ॥

ततः परं सायमुमासहायं नग्नैव बिल्वैर्गिरिमल्लिकाभिः ।
समर्चयामास तनुं स्वकीयामुद्धूल्य शम्भुस्मरणानुरक्ता ॥ १३४ ॥

रात्रिजागरणेनैव नीता नाथ्येन सा तया । पुनः प्रातः समुत्थाय शिवपूजां चकार सा ॥ १३५ ॥
अरुणोदयवेलायां कापि गन्धर्वकन्यका । तल्लिङ्गाराधनं कर्तुं आगता बहुसाधना ॥ १३६ ॥

सा समागत्य तीर्थेषु स्नात्वोद्धूल्यापि भस्मना। अर्चयामास विविधैर्लिङ्गं पुष्पादिसाधनैः॥
ततः परं सा चकार गानं गान्धर्वविद्यया। नाट्यं चकार बहुधा स्वसखीगणवेष्टिता॥ १३८॥
सौन्दर्यनिधिरूपां तां दृष्ट्वा गन्धर्वकन्यकाम्। शिवार्चनरतां दृष्ट्वा भिल्लकन्या मनोरमाम्॥
सापि गन्धर्वतनया तां दृष्ट्वा भिल्लकन्यकाम्। भस्मोद्धूलितसर्वाङ्गां नग्नामाह विचक्षणाम्॥

गन्धर्वकन्या —

कासि त्वं कस्य कन्यासि युवती नग्नतां गता। न दृष्टा हि वने क्वापि किं ते कुलमिदं वद॥
किंच पूता भस्मनेदं तनुरत्युत्तमा तव। केन वा शिक्षिता दीक्षा दत्ता केन महात्मना॥ १४२॥
लज्जामात्रं परित्यज्य वनेऽस्मिन् शिवमन्दिरे। एकाकिनी विचारेण विना तिष्ठसि निर्भया॥
एतैर्बिल्वदलैरीशः किं त्वया सायमर्चितः। धन्यासि तव भाग्यस्य नान्तः सर्वात्मना खलु॥
प्रायस्ते नाट्यवेगेन वसनं वायुना हृतम्। धन्यासि मम मान्यासि समायाहि मया सह॥१४५॥
इत्युक्त्वा तां गृहीत्वैव वस्त्राण्याभरणानि च। दत्वा ययौ स्वनगरं सापि गन्धर्वकन्यका॥१४६॥
ततः प्रत्यहमागत्य सह गन्धर्वकन्यका। पूजयामास गौरीशं सापि भिल्लस्य कन्यका॥ १४७॥
ततः कदाचिदागत्य बिल्वमारुह्य वेगतः। बिल्वपत्रार्थमेवातः पपातानिलकंपिता॥ १४८॥
ततो विसृज्य सा देहं विमानवरमाश्रिता। ब्रह्मलोकं ययौ तत्र ब्रह्मणा पूजिता नृप॥ १४९॥

ततश्चतुर्मुखः प्राह सभायां स सुरान् प्रति।

ब्रह्मा —

भाग्यमेतादृशं लोके लब्धं शङ्करपूजया॥ १५०॥

भिल्लस्य कन्यका सेयं वनेऽपि व्यभिचारिणी। जारालिङ्गनसन्तुष्टा शिवमन्दिरमाश्रिता॥ १५१॥
बिल्वैः शिवार्चनं तावत् चकारेयं मनोहरैः। तेन पुण्यप्रभावेन गन्धर्वनगरं गता॥ १५२॥
गन्धर्वनारीसहिता ताभिरप्यावृता सदा। कदाचिद्बिल्वमारुह्य पतिता भिल्लकन्यका॥ १५३॥
अभ्यासो भिल्लनारीणां तरोरारोहणे ततः। तेनाभ्यासेन सा तत्र बिल्वादानसमुद्यता॥ १५४॥
ततो महानिलाघातात्पतिता भूतले तदा। जहौ प्राणान् बिल्वपत्रं उत्सृज्यातीव विह्वला॥
त्यक्तप्राणा प्राप लोकं मम दुष्प्रापमेव सा। बिल्वपत्रैः समभ्यर्च्य यदि स्याद्गतचेतना॥ १५६॥
तदा मुक्तिर्भवेदेव शिवसारूप्यलक्षणा। अतो महेशमहिमा ज्ञायते न सुरैरपि॥ १५७॥
न वेदैरपि विज्ञातः स विज्ञेयः कथं सुरैः। अविज्ञेयस्वभावस्य शिवस्य परमात्मनः॥ १५८॥

स्वरूपं केन वा ज्ञेयं तद्विज्ञानमतिदुर्लभम् । कीर्तितश्चिद्घनत्वेन श्रुतिभिः स सदाशिवः ॥ १५९ ॥
अम्बिकारमणत्वेन कीर्तितोपि सदाशिवः । स एव हि महादेवो निर्गुणत्वेन कीर्तितः ॥ १६० ॥
शिवो निरञ्जनत्वेन कीर्तितो वेदराशिभिः ॥

शिवस्वरूपं सहसा न वेदैः विज्ञातमेवेति वदन्ति सिद्धाः ।
अस्माकमीशानपदारविन्दध्याने परं भक्तिरभूतपूर्वा ॥ १६१ ॥

वदन्ति वेदाः शिवमद्वयं तं सर्वामराधीश्वरमित्यपीति ।
वयं शिवाराधनमात्रसक्ताः यद्वास्तु तद्वास्तु शिवस्वरूपम् ॥ १६२ ॥

धन्याः शङ्करलिङ्गपूजनरताः प्राप्यान्तकाले शिवं
भस्मालंकृतविग्रहं गिरिसुताकान्तं मुहुः सन्ततम् ।
स्मृत्वा वा सकृदेव वा सुरवरैराराधितः सादरं
कैलासे खलु शैलजापतिपदाम्भोजप्रसादाश्रयः ॥ १६३ ॥

धन्यानां व्रतमिन्दुशेखरपदाम्भोजार्चनं तेन ते
कालेनापि समर्चिताः सुरगणैरभ्यर्चिताः किन्नरैः ।
गन्धर्वैरपि सर्वसौख्यसहिताः संपत्प्रवृद्धाः सदा
पुत्रैः पौत्रवरादिभिश्च सहिताः कुर्वन्ति ते मङ्गलम् ॥ १६४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे राजस्त्रीपूर्वजन्म-भिल्लस्त्रीशिवपूजन-ब्रह्मलोक प्राप्त्यादिवर्णनं नाम एकोनत्रिंशोऽध्यायः ॥

—:×:—

## अथ त्रिंशोऽध्यायः ।

याज्ञवल्क्यः —

इति ब्रह्मवचः श्रुत्वा सर्वे ते शिवपूजकाः । तमाहुर्विनयानम्राः शिवस्मरणपूर्वकम् ॥ १ ॥

सभासदः —

ब्रह्मन्नस्याः कियत्कालं ब्रह्मलोके स्थितिः पुनः । कदा स्यादवतारोऽपि भुवि तत्पुण्यकोटिभिः ॥
इत एव न कैलासयात्रा भवति सर्वथा । तत्प्राप्त्युपायभूतस्य तत्पुण्यस्य प्रदर्शनात् ॥ २ ॥

अत्राप्यस्याः कियत्कालमवस्थानमतिर्भवेत् । लोकान्तरविहारेच्छा किमस्या अपि भाविनी ॥

बहवः पूर्वमागत्य लोकेऽस्मिन्नपि सादरम् । हित्वा चरन्ति लोकेषु वैकुण्ठादिषु शाङ्कराः ॥ ५ ॥

अत्र स्थितिः शाङ्करपुङ्गवानां नातीव सन्तोषकरः कदाचित् ।
स्थित्वाऽपि यान्त्येव मनोहरेषु स्थानेषु हारेषु विशेषतस्तु ॥ ६ ॥

अस्माकमत्र स्थितिमिन्दुमौलिप्रसादलेशात् तदनुग्रहश्चेत् ।
विशेषतस्तर्हि भवेदवश्यं कैलासवासः स तु कामधेनुः ॥ ७ ॥

स एव तावत् खलु कल्पवृक्षः स एव चिन्तामणिरित्यवैमि ।
कैलासलोकादधिको न लोकः स एव लोकः खलु शङ्करस्य ॥ ८ ॥

आनन्दरूपस्य महेश्वरस्य कैलासवासेऽपि मतिः सदाऽभूत् ।
शिवाभिमानस्थलमेव मन्ये कैलासमानन्दसुधानिवासम् ॥ ९ ॥

कैलासमासाद्य शिवप्रसादान्मुक्तो भवत्येव शिवार्चकोऽतः ।
शिवार्चकानां सुलभैव मुक्तिः बिल्वार्पणेनापि महाघनाशे ॥ १० ॥

मनुष्यरूपेण गणाः शिवार्चां कुर्वन्ति तेषां सुलभैव मुक्तिः ।
अन्यस्य भक्तिर्न शिवार्चनेषु तपस्यथो वा विविधैश्च धर्मैः ॥ ११ ॥

धर्मस्तथा कोऽपि न दृश्यते च धर्मः परं शङ्करपूजनं नः ।
धर्मस्वरूपो भगवान् महेशः तल्लीलया मुक्तिसुखादिकानि ॥ १२ ॥

किं सृष्टमीशेन च तत्र विघ्नः शिवार्चनं येन सुखप्रवाहाः ।
भवन्ति तावद्बहुधा न तेषां प्रवृद्धिरित्येव विनिश्चयोऽपि ॥ १३ ॥

सकृन्नत्वा स्मृत्वा शिवचरणयुग्माम्बुजरजः सुराराध्यं तीर्त्वा विषममपि संसारजलधिम् ।
प्रयान्ति ब्रह्माण्डस्थितिजननाशादिकरणं महादेवं तस्मिन् दृढनिहितचित्ताः शिवजनाः ॥ १४ ॥

इति तद्वचनं श्रुत्वा सन्तुष्टः स चतुर्मुखः । तानुवाचातिहृष्टात्मा प्रभावं शाङ्करं स्मरन् ॥ १५ ॥

भिल्लभूपालमहिला सेयं बाला भविष्यति । [1]भुक्त्वा भोगान् यथाकामं शिवपूजां करिष्यति ॥

शिवविद्यामिमां प्राप्य सत्यव्रतनियन्त्रितात् । सनन्दनान्मुक्तिमन्ते लुब्ध्वा तुष्टा भविष्यति ॥

---

भुक्त्वेत्याद्यर्धद्वयं C कोशे नास्ति

इति ब्रह्मवचः श्रुत्वा तेपि हृष्टाः सभासदः । एवं भाग्यमिदं लब्धमनया शिवपूजया ॥ १८ ॥

याज्ञ्यवल्क्यः —

इति तद्वचनं श्रुत्वा सोऽपि सत्यव्रतो नृपः । सन्तुष्टः स्वपुरं प्राप्य स्मरन् शङ्करवैभवम् ॥ १९ ॥

पुनः शृणु प्रवक्ष्यामि श्रीमहादेववैभवम् । तत्प्रभावानुकथनाद्विरतं न मनो मम ॥ २० ॥

शिवार्चनप्रभावस्य कथनादपि मुच्यते । आपारपारकाकारसंसारादिति मे मतिः ॥ २१ ॥

पुरा ब्रह्मा सभासद्भिः शिवपूजनतत्परैः । पृष्टश्चतुर्मुखो भक्त्या कथां वद शिवामिति ॥ २२ ॥

ब्रह्मा —

राजा निषधदेशस्य नाम्ना परपुरञ्जयः । तस्य पद्मावती नाम महिला शङ्करप्रिया ॥ २३ ॥

सा लिङ्गपूजनरता रेवातीरे मनोरमे । कारयामास मणिभिर्मन्दिरं शाङ्करं परम् ॥ २४ ॥

तत्र नार्मदलिङ्गानि स्थापयित्वा विधानतः । पूजयामास विविधैरुपचारैर्मनोहरैः ॥ २५ ॥

तत्र शङ्करपूजायां निरता रजनीमुखे । विल्वादिभिर्महादेवं पूजयामास सादरम् ॥ २६ ॥

ततः परं सा चकार गानं गन्धर्वविद्यया । नाट्यं चकार यत्नेन निराहारेण भक्तितः ॥ २७ ॥

प्रदोषकालापगमे शिवनैवेद्यभोजनम् । कृत्वा शिवाचाररतं ददर्श रविमादरात् ॥ २८ ॥

रविरीशानमभ्यर्च्य कोमलैर्बिल्वपल्लवैः । जलैरप्यमलैरीशं रेवायां प्रीतमानसः ॥ २९ ॥

शिवमन्दिरमालोक्य दीपमालाविराजितम् । धूपदीपासमाक्रान्तं शिवभक्तजनाश्रितम् ॥ ३० ॥

दिव्योपहारसंपन्नं मणिमण्डलमण्डितम् । सन्तोषं परमं प्राप शिवपूजाविलोकनात् ॥ ३१ ॥

तादृशं रविमालोक्य भूतिभूषितविग्रहा । कृताञ्जलिपुटा प्राह स्मरन्ती शङ्करं मुहुः ॥ ३२ ॥

पद्मावती —

कोऽसि शङ्करभक्तोऽसि शङ्करार्चनतत्परः । शिवार्चनप्रभावं मे वद निश्चित्य सादरम् ॥ ३३ ॥

कथं वा श्रीमहादेवः प्रसन्नः पार्वतीपतिः । ध्येयः कथं वा पूजाऽपि कथं कार्या प्रयत्नतः ॥ ३४ ॥

कुत्र वा पूजितः शंभुः केन वा साधनेन सः । प्रसन्नः परमामृद्धिं प्रयच्छति कृपानिधिः ॥ ३५ ॥

भानुः —

धन्यासि कृतकृत्यासि पुण्यराशिरसि स्वतः । प्रश्नोऽयं तव कल्याणि तनुते मङ्गलानि मे ॥ ३६ ॥

यः सर्वमङ्गलाकान्तः तत्पदाम्भोजरेणुभिः । स्मृतः कल्याणराशीनामुदयो जायते मुहुः ॥ ३७ ॥

यस्य स्मरणमात्रेण शोभनानां परम्परा । भवत्येव स गौरीशः स्मृतः पुण्यवशादिह ॥ ३८ ॥

यत्कथा पावनत्वेन पावनेषु श्रुता शुभा । सा कथा संश्रुता श्राव्या श्रवणेनापि मुक्तिदा ॥ ३९ ॥

शिवकथामृतसागरकीर्तनश्रवणतोऽपि न तृप्तमिदं मनः ।
अखिलपातकनाशनसाधनं स्मृतमपि प्रयतेन विशेषतः ॥ ४० ॥

शिवकथामृतराशिरनेकधा श्रुत इति स्वत एव पुनः पुनः ।
श्रवणमिच्छति पापविनाशने करणमेकमिदं भुवि मुक्तिदम् ॥ ४१ ॥

यन्नामस्मरणेन पापविलयो यन्नामसङ्कीर्तनात् आपद्रूपजलार्णवौघविलयो यन्नामसङ्कीर्तनात् ।
सर्वाभीष्टसमृद्धिरेव तदहं वन्दे मुकुन्दार्चितं गौरीनाथपदारविन्दजरजःपुञ्जं निकुञ्जालयम् ॥ ४२ ॥

यत्पादाम्बुरुहार्चनाय यतते नारायणः सन्ततं तत्पादाम्बुरुहप्रभावमधुना स्मृत्वा मनः केवलम् ।
प्रापानन्दमनन्तजन्मजमहापुण्याब्धिपूरैरियं गौरीकान्तपदारविन्दभजनं जन्मापहं जायते ॥ ४३ ॥

धन्यं धन्यमिदं दिनं शिवपदध्यानेन नीतं पुनः
तत्पादाम्बुजसेव चित्तमसकृत् स्मृत्वापि तृप्तं पुनः ।
तृप्तिं यास्यति तत्प्रभावकथनात् तेनैव मुक्तिः परा
पापानां विलयोऽपि पावनमिदं तेनैव नूनं मनः ॥ ४४ ॥

लिङ्गाराधनजातपुण्यविभवो वेदैर्न विज्ञायते
किं देवैरपि किं मुनीश्वरगणैः नारायणेनापि किम् ।
किं वाणीरमणेन नागनिलयाधीशेन तद्वर्णनं
शक्यं कस्य भविष्यतीति बहुधा चित्तं मम व्याकुलम् ॥ ४५ ॥

यद्यप्यर्धशशाङ्कशेखरपदाम्भोजार्चने नादरः तज्ज्ञाने सति तत्प्रभावकथनं शक्यं कथञ्चिद्भवेत् ।
तन्नेत्येव खलु स्थगितमप्येतन्मनः सर्वथा सर्वाशास्यमिदं कथञ्चिदधुना तावन्मयाप्युच्यते ॥

पुरा ब्रह्माण्डविलये जगत्स्रष्टा महेश्वरः । क्रीडाविनोदसंपन्नां भवानीमाह सादरम् ॥ ४७ ॥

सदाशिवः —

ब्रह्माण्डानि विदग्धानि पश्य पश्य वरानने । एतेषां सृष्टिरधुना तव किं समपेक्षिता ॥ ४८ ॥

यद्वा नेति विचार्येदं वद सादरमम्बिके । सर्गेऽपि तव शक्तिः किं विद्यते गिरिकन्यके ॥ ४९ ॥

इति तद्वचनं श्रुत्वा गौरी ब्रह्माण्डमण्डलम् । दग्धं विलोक्य तं प्राह महादेवं त्रिलोचनम् ॥५०॥

गौरी —

भगवन् जनसंमर्दः सर्वदा सज्जने सति । एकान्तकालः सुलभो न कदापि प्रतीयते ॥ ५१ ॥

लोकसृष्ट्या किमस्माकं फलं व्यसनमेव तत् । किं तेन व्यसनेनापि कार्यमेतन्न किं तव ॥ ५२॥
नहि कार्यं विना लोके क्वचित् कश्चित् प्रवर्तते । कृतयापि तया सृष्ट्या किं तन्नाशेन वा फलम् ॥
अद्य यावत्कृतं कार्यं तत्कृतं कृतमित्यतः । लीलयाप्यलमेवालं विहरस्व यथासुखम् ॥ ५४ ॥
कस्यापि क्वापि सञ्चारो न तद्विलयनादिह । अतो विहारकालोऽयं अलं सृष्ट्या महेश्वर ॥५५॥
यत्र क्वाप्यस्तु सञ्चारः शयनं वा यथेच्छया । न कस्मादपि लज्जा स्याद्विहरस्व सदाशिव ॥५६॥
अत्र दिङ्मण्डलान्येव भवन्त्यावरणान्यपि । अतो यथासुखं शम्भो विहरस्व महेश्वर ॥ ५७ ॥
सुधाकरकराणां वा प्रवेशः क्वापि दृश्यते । नापि सूर्यकराणां वा सर्वेषां प्रलयादिह ॥ ५८ ॥
त्वया सह विहाराय तपश्चर्या कृता पुरा । विहारसमयः सोयं न सन्त्यत्र शरीरिणः ॥ ५९ ॥
न नक्षत्राणि पवनो भूधरा नाम्बुराशयः । न वा नारायणो नेन्द्रो न ब्रह्मा नापि मानवाः ॥
कैलासे मन्दरे नापि श्रीशैले वा सदाशिव । काश्यां वा वसतिस्तावत् पूर्वमासीज्जनान्वये ॥ ६१ ॥
अधुना यत्र कुत्रापि स्थातुं शक्यं तथा सति । विहारविघ्ननाशोपि जात एवेति मन्महे ॥ ६२ ॥
इति तद्वचनं श्रुत्वा शङ्करो हृष्टमानसः । गौरीविहारचतुरो बभूव भगवान् शिवः ॥ ६३ ॥
तयोर्विहारकालोपि यावान् वृत्तः पुरा तदा । स न ज्ञातोपि केनापि स कालस्तन्मनोहरः ।६४॥

गौरीविहाररससागरसेवनेन वृत्तास्त्रयोऽपि शिवयोः स तयोः क्रमेण ।
स्वेदाम्बुराशिरभवत् तत एव जाता सृष्टिश्च सर्वजगतां च यथाक्रमेण ॥ ६५ ॥

स्वेदः स एव जलधित्वमवाप कोपि गङ्गात्वमाप यमुनात्वमवाप कोपि ।
वाणीत्वमाप सरयूत्वमवाप कोपि क्षीराम्बुधित्वमपि कोपि स एव नूनम् ॥ ६६ ॥

स एव शोणभद्रत्वं नर्मदात्वमवाप सः । गोदावरीत्वं संप्राप कावेरीत्वमवाप सः ॥ ६७ ॥
संप्राप कृष्णवेणीत्वं स्वेदपूरस्तयोस्तदा । तेनैव स्वेदरूपेण ब्रह्माण्डं जलसंवृतम् ॥ ६८ ॥
तेन वायुः समुत्पन्नो जातं च गगनं ततः । अग्निरिन्द्रश्च सूर्यश्च यमो विष्णुश्चतुर्मुखः ॥ ६९ ॥
विन्ध्यश्च हिमवान् मेरुः मन्दरो गन्धमादनः । कुलाचलाश्च नागाश्च सर्पाश्च मणिभूषणाः ॥
शंखमुख्याश्च निधयो लोकाः स्वर्गादयस्तथा । वनान्यपि विचित्राणि धान्यान्यपि विशेषतः ॥
तेनैव स्वेदपूरेण वेदा अप्यागमा अपि । विद्याः समस्ताः संभूताः गन्धर्वाः किन्नरा अपि ॥
तत एव समुत्पन्नाः सर्वे ते मानवा अपि । मनवोऽपि समुत्पन्नाः पशुपक्षिमृगादयः ॥ ७३ ॥
एवमेतत् समुत्पन्नं जगद् दृष्ट्वा महेश्वरः । विस्मयं परमं प्राप सापि गौरी शिवप्रिया ॥ ७४ ॥

ततस्तामाह गिरिजां गिरिजारमणः प्रभुः। पश्य पश्य विलासोऽयं कथं परिणतः प्रिये॥ ७५॥
सृष्ट्यर्थोऽयं विलासस्ते विजनत्वावलोकनात्। जनावलोकने वृत्ते स तावत् शान्त एव ते॥
अतः परं विलासार्थं यदि स्थलमपेक्षितम्। तदा कैलासनिलयमायाहि गिरिकन्यके॥ ७७॥
तत्रोद्यानवने रम्ये सर्वपुष्पसमाकुले। भृङ्गाङ्गनागानवीते परभृद्गानसंकुले॥ ७८॥
सुधाप्रवाहसङ्कीर्णे मन्दमारुतसेविते। पुष्पशय्यासमाकीर्णे फलराजिविराजिते॥ ७९॥
रत्नमन्दिरसङ्कीर्णे रत्नसिंहासनाश्रिते। रत्नपर्यङ्कसङ्कीर्णे रत्नमालाविराजिते॥ ८०॥
इन्दुकन्दुकसंवीते पुष्पमालाविजृंभिते। मणिदीपसमाकीर्णे शरद्राकानिशाकरे॥ ८१॥
ब्रह्माण्डप्रलयेप्यस्य प्रलयो न प्रजायते। सर्वर्तुगुणसङ्कीर्णं सर्वदा तद्वनं मम॥ ८२॥
तत्र पक्कान्यपाराणि फलानि विविधान्यपि। तेभ्यः पीयूषधाराश्च प्रस्रवन्ति मुहुर्मुहुः॥ ८३॥
सरिद्वरापि परितस्तदुद्यानस्य शोभते। महादेव महादेव महादेवेति वादिनी॥ ८४॥
उत्फुल्लपुण्डरीकानां मालाभिः सा विराजिता। तत्तीरे सन्ति बहवो मरालाः स्वाङ्गनायुताः॥
ते सर्वदा वदन्त्येव हर शंभो शिवेत्यपि। मरालनारीगानानि श्राव्याणि विमलानने॥ ८६॥
तत्र गन्तव्यमधुना डोला तत्रास्ति काञ्चनी। डोलोत्सवोऽपि कर्तव्यः तत्र तावन्मनोहरः॥८७॥
इत्युक्त्वा स महादेवो भवानीकरसंपुटम्। गृहीत्वा गमनं तत्र सस्मारामरपुङ्गवः॥ ८८॥
ततः प्रविष्टो गिरिशो गिरिजाकरसंपुटम्। धृत्वा करेण त्वरया तदुद्यानं मनोहरम्॥ ८९॥
रत्नप्रासादमारुह्य तत्र रत्नासने स्थितः। शिवया पुष्पशय्यायां रेमे गणविवर्जितः॥ ९०॥
ततः परं स डोलायां आरुह्य शिवया सह। इन्दुकन्दुकलीलाभिः चकार दिनयापनम्॥ ९१॥
तस्मिन्नेव दिने जाताः कोटिशः प्रलया अपि। सर्गाश्च तावत् तेषां च संख्या कापि न दृश्यते॥
एवमेव महादेवः शिवया सह सर्वदा। क्रीडां करोति व्रीडां च त्यक्त्वा व्रीडापि तस्य न॥
चिद्घनः स महादेवः तस्य व्रीडा कुतो भवेत्। न तस्य सुरतेच्छापि तस्य ज्ञानघनस्य सा॥
ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम्। ऊर्ध्वरेतं विरूपाक्षं विश्वरूपं वदन्ति तम्॥ ९५॥
सत्यं ज्ञानमनन्तं च तद्ब्रह्म परमं विदुः। ततो भीतः स वातोऽपि वाति सूर्योऽप्युदेति सः॥
अग्निरिन्द्रश्च भीतश्च मृत्युर्धावति पञ्चमः। इयमानन्दमीमांसा तत्स्वरूपमगोचरम्॥ ९७॥
यस्य प्रसादलेशेन सर्वे नारायणादयः। सुराः कृतार्थास्तं देवं शरणं यामि शङ्करम्॥ ९८॥
संहारकाले संप्राप्ते ब्रह्मनारायणादिकान्। संहृत्य लीलां कुरुते यः सदैव सदाशिवः॥ ९९॥

यस्य प्रसादादशिवापहारो यस्य प्रसादाज्जननापहारः ।
यस्य प्रसादेन जरापहारः तमेव देवं शिवमाश्रयामः ॥ १०० ॥

शिव इत्युच्चरन् नाम मनुजः स्याच्छिवालयः । तस्य देवस्य महिमा वेदानामप्यगोचरः ॥१०१॥

सहस्रजिह्वोऽपि न यस्य तत्वं स्तोतुं समर्थश्चतुराननो वा ।
नारायणो वा तमुमासहायं आनन्दकन्दं हृदि भावयामः ॥ १०२ ॥

यमाहुरीशं परमं वरेण्यं सर्गस्थितीनामपि हेतुभूतम् ।
तमेव देवोत्तममिन्दुखण्डशोभासमालंकृतमाश्रयामः ॥ १०३ ॥

यल्लीलास्वेदराशिः सुरसरिदचलाधीशकन्या यदङ्के
यन्मौलौ चन्द्ररेखा विलसति सततं यज्जटाजूटमाला ।
ताराणामेव हारोऽप्युरसि नवलसद्बिल्वमाला विलोला
तत्पादाम्भोजभृङ्गो भवतु मम मनस्त्यक्तसंसारगन्धम् ॥ १०४ ॥

लोके भाग्यसुधाम्बुराशिरहितास्ते ये तदा शङ्कर
ध्यानानन्दविहीनहीनमनसः ते दुर्भगाः सर्वदा ।
कल्पान्तेऽपि न मुक्तिरित्यपि मिताः संसारिणस्ते सदा
सर्वे नारकिणोऽपि तत्कुलमिति स्यात् पुल्कसानां कुलम् ॥ १०५ ॥

यस्यान्तःकरणं महेश्वरपदाम्भोजार्चने सादरं
तन्नामस्मरणेऽपि तत्सुखकथावार्तानुरक्तं सदा ।
तं प्राहुर्गतकल्मषं मुनिजनाः सर्वेऽपि तं केवलं
वेद्यं प्राहुरमन्दपुण्यविभवं भावं भवाभ्यर्चकम् ॥ १०६ ॥

आकल्पं विजयी स एव स शुभारम्भैकभूर्भासुरः
स स्यादिन्दुकलावतंसचरणाम्भोजार्चकानां प्रियः ।
यः स्यादुत्तमसंपदामपि निधिः स स्यात् सुराणामपि
प्रायः सेव्य इति प्रभूतविभवो भावो न किं दुर्लभः ॥ १०७ ॥

स्वप्नेऽपि यस्य शिवलिङ्गविलोकनेच्छा स्वच्छा भविष्यति भवार्चनजातपुण्यैः ।
तत्पादपद्मजरजो मणिमञ्जरीव धन्योत्तमोरुशिरसि स्फुरतीह धीरे ॥ १०८ ॥

अज्ञात्वापि शिवप्रसादविभवं स्वं शङ्कराराधन-
ध्यानालङ्कृतिचित्तवृत्तिरसकृत् यद्वा सकृत् सादरम् ।

तं मुक्तं प्रवदन्ति पावनमिति प्राहुर्मुनीन्द्राः सुराः
　　तं रत्नं जगतीतलस्य सततं वन्दे मुहुः सादरम् ॥ १०९ ॥

यो भक्त्या रजनीमुखेषु गिरिशं संपूज्य विल्वादिभिः
　　नैवेद्यादिसमर्पणेन च मुहुर्नाब्यैः प्रणामैरपि ।
सन्तुष्टस्तमपास्तदुःखनिकरं मन्ये स रेवासरि-
　　त्तीरे लिङ्गमभङ्गविल्वकमलैराराध्य शङ्कं व्रजेत् ॥ ११० ॥

इत्याकर्ण्य वचस्तस्य तं प्रणम्याभिनन्द्य च । नित्यं शिवकथामेव वदेत्याह विचक्षणा ॥ १११ ॥

स सन्तुष्टस्तया साकं उषित्वा शिवमन्दिरे । कृत्वा जागरणं पश्चादुदयाचलमाप सः ॥ ११२ ॥

सापि राज्ञी प्रगे भक्त्या स्नात्वा रेवाजले ततः । परिधाय दुकूलानि भस्मरुद्राक्षभूषणा ॥ ११३ ॥

शिवाचाररतापारसखीजनसमावृता । विवेश मन्दिरं शंभोः शिवाराधनतत्परा ॥ ११४ ॥

रत्नकुंभसमानीतरेवानीरैर्मनोहरैः । पश्चामृतैश्चाभिषिच्य पूजयामास शङ्करम् ॥ ११५ ॥

ततः परमृतुं प्राप सा राज्ञी स्वगृहं गता । तत्र ध्यानरता साऽपि मध्याह्ने शिवपूजनम् ॥ ११६ ॥

न जातमिति चिन्तार्ता पूजयामास चेतसा । मानसं पूजनं कृत्वा महादेवस्य सादरम् ॥ ११७ ॥

निनाय कालं दुःखेन राज्ञी दिनचतुष्टयम् । ततः स्नात्वा महादेवमुपचारैरनेकधा ॥ ११८ ॥

सा चतुर्गुणितैश्चक्रे महादेवस्य पूजनम् । ततः परं विचारेण पर्णाहारं जहौ नृप ॥ ११९ ॥

ततः सायं रविं दृष्ट्वा शिवपूजोत्तरं नृप । सा राज्ञी तमुवाचापि सितभूतिविभूषणा ॥ १२० ॥

राज्ञी —

रवे गुरुर्मे जनकः त्वमेवासि शिवार्चकः । शिवपूजापरित्यागे का गतिः स्याद्वदाधुना ॥ १२१ ॥

भानुः —

त्यक्त्वा महादेवपदाम्बुजार्चां को वा सुखं प्राप्तुमपि प्रवृत्तः ।
सञ्जीवनी चेन्मरणोन्मुखेन त्यक्ता कथं वा वद जीवनं स्यात् ॥ १२२ ॥

शङ्कराराधनं त्यक्त्वा न मूढोऽप्यधितिष्ठति । शङ्कराराधनाभावे जीवनं मरणोपमम् ॥ १२३ ॥

वरं मरणमन्वहं वरमघौघकोट्यार्जनं
　　वरं च विषभोजनं वरमपारगोहिंसनम् ।
वरं द्विजवधोऽपि वा न वरमीशलिङ्गार्चन
　　व्यपाय इति मे मतिः किमिति तस्य वा जीवनम् ॥ १२४ ॥

न मातृगमनेन वा भवति तादृशं पातकं न यादृशमुपापतिप्रियसमर्चनत्यागतः ।
सुरादिमधुसेवनादपि तथाविधं पातकं द्विजोत्तमवधेन वा न हि तथाविधं पातकम् ॥ १२५ ॥

अनायासेन सिद्ध्यन्ति सर्वे धर्माः शिवार्चनात् । तत्परित्यागतः पापान्यनायासार्जितान्यपि ॥

शिवपूजनसामर्थ्यं न जानन्त्येव दुर्जनाः । अत एव न कुर्वन्ति शिवलिङ्गे शिवार्चनम् ॥ १२७ ॥

पापान्यपाराणि लयं प्रयान्ति शिवार्चनेनैव शिवार्चकानाम् ।
न तद्विनाशार्थमतिप्रयत्नः स्मृतोऽपि शङ्गे स महाघभङ्गः ॥ १२८ ॥

न कल्पकोट्यार्जितपातकेभ्यो बिभेति भावे भवपूजकश्चेत् ।
संसारदुःखानि हरत्यवश्यं हरः स्मृतो वाथ समर्चितो वा ॥ १२९ ॥

पापापारमहागिरेः पविः (खलु) महादेवार्चनं तद्यतः
तत्त्यागे पतितो भवत्यनुदिनं तस्मात्तदर्चा वरा ।
संसाराम्बुधिवाडबोऽपि तदिति ज्ञात्वा शिवाराधनं
कुर्वन्त्युत्तमवृत्तयः शिवपदाम्भोजार्चनं सर्वदा ॥ १३० ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । तस्य संश्रवणादेव सद्यो मुच्येत बन्धनात् ॥ १३१ ॥
पुरा हिमगिरेरेव कन्दरे रुचिरे वरे । चचार चारणः कोऽपि सर्वदा युवतीयुतः ॥ १३२ ॥
तेन नाराधितं लिङ्गमन्याराधितमेव वा । न दृष्टमतिसन्तोषात् दीपिकाभिर्विराजितम् ॥ १३३ ॥
न बिल्वतरुमूलानि शिवलिङ्गान्वितान्यपि । नाराधिताः शाङ्कराश्च न तैः सख्यं समार्जितम् ॥
सुरताचारनिरतः सदाचारादरैः सह । रतिं चकार दुष्टात्मा शिवपूजनवर्जितः ॥ १३५ ॥
अहोरात्रं स तरुणीं विहाय न तु तिष्ठति । तेनैव कश्चिद्विपिने दृष्टो बिल्वतरुर्महान् ॥ १३६ ॥
सच्छायं तरुसंछन्नं स बिल्वतरुमाश्रितः । तदा सह स्थितस्तत्र तरुण्या रजनीमुखे ॥ १३७ ॥
तदानीमागतः कश्चिच्छांभवः शिवपूजकः । तं दुरात्मानमालोक्य विस्मितो मौनमास्थितः ॥
अयं प्रदोषकालेऽत्र तरुणीरतिलालसः । बिल्वमूलं समाश्रित्य तिष्ठत्यघकुलार्जकः ॥ १३९ ॥
दृष्ट्वापि मामयं लज्जां न प्राप्तो विरतोपि वा । सुरतानुरतो भूयो भूयोपि मदनातुरः ॥ १४० ॥
मयाऽद्य दुरदृष्टेन दृष्टोऽयं जारिणीरतः । अतः परं क्व गन्तव्यं वने बिल्वोऽप्ययं महान् ॥१४१॥
तन्मूले लिङ्गमुत्तुङ्गं शाङ्कं तिष्ठति शोभनम् । तिष्ठन्ति बिल्वपत्राणि करप्राप्यानि कोटिशः ॥
इदं गङ्गाजलं रम्यमभिषेकार्थमुद्धृतम् । गङ्गातीरे लिङ्गपूजा शङ्करप्रियकरा खलु ॥ १४३ ॥

गङ्गातीरतरुः सोऽयं गङ्गापावनशीतलः । अत एव न तान्तानि तत्पत्राण्यपि सर्वथा ॥ १४४ ॥
एतैराराधिते लिङ्गे शङ्गो मङ्गलदो भवेत् । अदृष्टं प्रतिबन्धं मे किमेवं रजनीमुखे ॥ १४५ ॥
प्रायः पापं कृतं पूर्वं तेन लिङ्गार्चनोद्यमे । कृतेऽपि प्रतिबन्धोऽयं कथं वा समुपस्थितः ॥ १४६ ॥
श्रेयसां प्रतिबन्धोऽपि भूयानेवमुपास्थितः । शिवपूजनलाभोऽयं सुलभः किं भविष्यति ॥ १४७ ॥
भाग्यान्यभ्युदयोद्युक्तान्यपाराणि भवन्ति चेत् । भवत्येव न सन्देहो निष्प्रत्यूहशिवार्चनम् ॥
धिगिदं ब्रह्मलिखितं फालं धिगिदमीदृशम् । अस्मिन् काले यतो नाभूत् शाङ्करलिङ्गसमर्चनम् ॥
भूरिपुण्यप्रभावश्चेत् सायं गिरिशपूजनम् । तदा संसारबन्धोऽपि विच्छिन्नः स्यादसंशयम् ॥१५०॥

क्व तादृशं भाग्यमभाग्ययोगे सायं शिवाराधनसाधनेषु ।
सत्स्वेव लिङ्गार्चनमद्य तावत् न जातमेतत्प्रतिबन्धकेन ॥ १५१ ॥

अहो कथं वा प्रतिबन्धनाशो न जायते जातु कृतं न पुण्यम् ।
विनात्र तेनात्र कुतोऽधुना स्यात् सायं शिवाराधनवृद्धिसिद्धिः ॥ १५२ ॥

येषां विनष्टानि न पातकानि कृतानि जन्मान्तरसाधितानि ।
तेषां न सायं शिवपूजनेच्छा जाताऽपि सा स्यात् प्रतिबन्धरुद्धा ॥ १५३ ॥

असारसंसारविहाररक्ताः कुर्वन्ति नारीकुशरीरयोगम् ।
तेषां न तावद्गिरिशार्चनेच्छा ते दुर्भगा एव यतः स्वभावैः ॥ १५४ ॥

ज्ञात्वापि संसारविषं पिबन्ति पुनः पुनर्जन्मजरादिरूपम् ।
न तद्विनाशाय सुधां पिबन्ति महेशलिङ्गार्चनलक्षणां ताम् ॥ १५५ ॥

कथं निधानं सुलभं ममेश पूजास्वरूपं निधिरञ्जनेन ।
विना न लभ्यः खलु पापनाशः तत्राञ्जनं केवलमित्यवैमि ॥ १५६ ॥

पापराशिरधुनानुमितोऽपि विश्वनाथभजनप्रतिबन्धात् ।
किं विधेयमधुना मम सायं शङ्करलिङ्गमपि नेक्षितमेव ॥ १५७ ॥

यदि लिङ्गविलोकनाद्भुतं स्यात् इदमायुः क्षणमेव वा तदा मे ।
सफला जनिरप्युमासहायस्मरणं दुर्लभमेव देहिनाम् ॥ १५८ ॥

किं देहेन किमुत्तमैश्च नयनैः फुल्लारविन्दप्रभैः
किं हस्तैरपि पद्मपत्रसदृशैः किं जिह्वया वा तया ।

येनेशो न नतो न तैरपि मुहुर्दृष्टोऽपि नाराधितो
बिल्वैः संस्तुत एव वा गिरिसुताकान्तः कृतान्तान्तकः ॥ १५९ ॥

भक्त्या येन कृतान्तकान्तकपदध्यानाधिरूढं दृढं तं तावत्पुरुषाधम विदुरधःपाताय तज्जीवनम् ।
तं दृष्ट्वा यमकिङ्कराः स्फुटतरं कृत्वोपहासायतनं नेयः किं यममन्दिराय द्रुतमित्युच्चैर्वदन्त्येव तम् ॥

यमदूतरिपुः परं नरोऽयं गिरिशानर्चक एव तं नयन्ति ।
यममन्दिरमाशु शूलघातैः निहतं वृश्चिककोटिकोटिलग्नम् ॥ १६१ ॥

यमकिङ्करधीरधीवराणां सदृशं तावदशैवमत्स्यजालम् ।
पततीति किमद्भुतं तदीयं सफलं जीवनमेव तादृशं हि ॥ १६२ ॥

बने वनेनापि न फाललोचनं बिल्वीदलैर्वा कुसुमैर्बनैर्वा ।
किमर्चयन्तीति भटा वदन्ति हसन्ति कालस्य विनाशकाले ॥ १६३ ॥

जलं प्रक्षिपन्तोऽपि बिल्वीदलं वा प्रसूनं फलं वा महेशे मनुष्याः ।
तरन्त्येव संसारपापाहिनक्रप्रबुद्धाम्बुराशिं स्मरन्तोऽपि काशीम् ॥ १६४ ॥

अपारोरुपापाटवीपावकानां शिवाराधकानां फलं तावदेकम् ।
न किन्त्वद्भुतापारदुःखप्रणाशात् अपाराणि रम्याणि सौख्यानि नूनम् ॥ १६५ ॥

किं यागैरतितुच्छभोगफलदैः स्वर्गेऽपि किं वांछितं
तुच्छत्वेन निराकृतः शिवरतैः स्वर्गस्तु तेषां फलम् ।
सायं शङ्करसमर्चनेन सकलाभीष्टार्थसिद्धिप्रदो
मोक्षोऽप्यामलकायते करतले कालोऽपि रङ्कायते ॥ १६६ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे राज्ञीरविसंवादे शिवपूजनाकर्तुर्गतिवर्णनं नाम त्रिंशोऽध्यायः ॥

—:x:—

## अथ एकत्रिंशोऽध्यायः ।

याज्ञवल्क्यः —

इति स्थिरमतिः सोऽपि शाङ्करः शङ्करार्चनम् । कथं वा विघ्नितं न स्यादिति चिन्ताकुलोऽभवत् ॥
ततः सुरसरित्तीरभूरुहान् परितो मुहुः । पश्यन्नन्यं न संप्राप वने बिल्वतरुं परम् ॥ २ ॥
तद्बिल्वमूलविलसल्लिङ्गं मङ्गलदायकम् । दृष्ट्वा हृष्टापि कुपिता तं विलोक्यातिविस्मिता ॥ ३ ॥
चन्दनादिकमादाय रमणीभोगसाधनम् । ततः परं चारणोपि प्रायच्छत् समुपस्थितम् ॥ ४ ॥
किं विलम्बः कृतश्चेति कुपिता चटुलानना । नाधुनाप्यागता [1] साध्वीत्यनुवारं त्वमादरात् ॥
क्व चन्दनं क्व वा माल्यं क्व कर्पूरादिकर्दमः । कस्तूरी वा क्व वा रम्या क्व वा कुङ्कुमकेसरः ॥
कुत्रास्त्यगरुसारोपि क्षीरं वा घृतसंयुतम् । फलानि कुत्र पक्वानि कुत्र वा दीपमालिका ॥ ७ ॥
पानार्हमधुना कुत्र शीतलं विमलं जलम् । वितानं पुष्पशय्या वा ताम्बूलान्यपि कुत्र वा ॥ ८ ॥
क्व वा केयूरहारादि तदीयाभरणं नवम् । क्व दुकूलानि रम्याणि कान्तानि विमलान्यपि ॥ ९ ॥
इति तद्वचनं श्रुत्वा स्वामिन् सर्वमिहाहृतम् । गतागताभ्यां कालोपि कश्चिदद्य विलम्बितः ॥
अपराधोऽपि सोढव्य इत्युवाचातिविह्वला । सामग्रीमागतां पश्य सर्वामपि मनोहराम् ॥ ११ ॥
ततः सर्वं समादाय बिल्वमूले मनोहरे । स्थापयामास सा चेटी भोगसाधनमुत्तमम् ॥ १२ ॥
ततस्तद्रमणीं दृष्ट्वा विलम्बः किमभूदिति । भर्त्सयामास सा भीता दृष्ट्वा परुषभाषणम् ॥ १३ ॥
तरुणं रमणं दृष्ट्वा विषण्णं प्राह सत्वरम् । किमियं भोगसामग्री समानीता वनेऽधुना ॥ १४ ॥
दीपमालारचनया दर्शयेत्याह सत्वरम् । ततस्तयापि परितो दीपमालाः प्रकल्पिताः ॥ १५ ॥
तद्दीपकान्त्या कान्तानि वस्तूनि सकलान्यपि । ततस्तानि विलोक्यापि स्वल्पानीत्यतिकोपतः ॥
ततः परं समुत्थाय सा वेगेन वरानना । आदौ तज्जलमादाय लिङ्गे क्षिप्तवती रुषा ॥ १७ ॥
पश्चाच्चन्दनमादाय दिव्यगन्धसमुद्धृतम् । चन्दनं च विनिक्षिप्तं लिङ्गे तुङ्गे मनोहरे ॥ १८ ॥
पुष्पाण्यपि विचित्राणि पारिजातादिकान्यपि । तया क्षिप्तानि तल्लिङ्गे दुकूलान्यपि सत्वरम् ॥ १९ ॥
पश्चादन्नानि सर्वाणि त्यक्तानि विविधान्यपि । लिङ्गाङ्गणे मनोज्ञानि मधुराणि विशेषतः ॥ २० ॥

---

1 सापीत्यनुवारं C

ततः पपात सा कोपात् तस्मिन् लिङ्गाङ्गणे तदा ।
ततः परं चारणोऽपि तां विलोक्यातिविस्मितः ॥ २१ ॥

तत्सर्वं शांभवो दृष्ट्वा दूरादेव पुनः पुनः । विस्मयं परमं प्राप मानयन्नेव तामपि ॥ २२ ॥

शाङ्करः —

धन्येयं कृतकृत्येयं सर्वलक्षणसंयुता । पूजां चकार लिङ्गेस्मिन् बिल्वमूले मनोहरे ॥ २३ ॥

जन्मान्तरे कृतं किंवा तया पुण्यं निशामुखे । विविधैः सादरैरेवं चकार शिवपूजनम् ॥ २४ ॥

अमरी किमियं कापि किंवा गन्धर्वकन्यका । केन पुण्यप्रभावेण शरीरं प्राप्तमीदृशम् ॥ २५ ॥

एवं पूजा महेशस्य कर्तव्येति निशामुखे । लोकानां शिक्षणायैव शरीरं धृतमीदृशम् ॥ २६ ॥

दिव्यः कुङ्कुमकेसरादिसहितः पाटीरसारः परः
कर्पूरागरुसंयुतो मृगमदव्याप्तोपि दत्तः शिवे ।
माल्यान्यप्यमितानि तानि विमला सा पुष्पशय्या तया
शर्वायाद्य निवेद्य चन्दनयुता सा कल्पिता शङ्करे ॥ २७ ॥

कर्पूरसारपरिकल्पितदीपमाला सेयं शिवारमणसुन्दरलिङ्गकान्त्या ।
युक्ता महाघवनपावकतामवाप धन्ये ममाद्य नयने शिववीक्षणेन ॥ २८ ॥

अकल्पितः कोऽयममिहाद्य लाभः वृत्तः शिवाराधनदर्शनेन ।
एवं किमभ्यर्चितशङ्कलिङ्गं दृष्टं मया पूर्वभवे कदा वा ॥ २९ ॥

एतादृशं लिङ्गमनुत्तमं चेत् अभ्यर्चितं पूर्वभवे कदापि ।
मह्यं कथं वा जनिरीदृशी स्यात अतो न दृष्टं खलु पूर्वमेवम् ॥ ३० ॥

पुण्येन केनापि मयाद्य दृष्टं लिङ्गं समभ्यर्चितमादरेण ।
एतादृशं पुण्यमयत्नलब्धं धर्मार्थकामादिकसाधनं मे ॥ ३१ ॥

भूतापि सेयं शिवरात्रिरद्य सोमोपि पुण्यः खलु वासरोऽद्य ।
आर्द्रान्वितः सोऽयमघापहारं करिष्यतीत्यत्र न संशयो मे ॥ ३२ ॥

मया तु बिल्वीदलमात्रमद्य प्रदेयमित्येव समागतं च ।
अकल्पितः सोऽयमिहाद्य लाभः शैलात्मजावल्लभदर्शनेन ॥ ३३ ॥

पुष्पादिकाभ्यर्चितलिङ्गमद्य दृष्टं ततो नष्टमिहातिकष्टम् ।

महेश्वरानुग्रह एव वृत्तः सोऽयं शिवाराधनदर्शनेन ॥ ३४ ॥

धन्याः क्वचित्सन्ति शिवार्चकास्ते ज्ञेयाः कथं वा सुकृतैर्विनापि ।
अन्यादृशी बुद्धिरिहाभवन्मे तद्बुद्धिजं पापमिहाशु नष्टम् ॥ ३५ ॥

शैवस्वरूपाण्यतिपावनानि दृष्टानि पुण्यैरमितैः कदाचित् ।
अशेषपापौघविनाशनाय भवन्ति तावत्सुकृतैरपारैः ॥ ३६ ॥

अलमेतदवेक्षणेन पुण्यैरपि योगादिभिरप्यपारदानैः ।
शिव इत्यनुवारमेकदा वा वद जिह्वे प्रणतोऽस्मि तुभ्यमद्य ॥ ३७ ॥

अपराधिसहस्रकोटिकूटः प्रलयं याति कदाचिदादरेण ।
शिव इत्यभिधानमालतो वा वद जिह्वे शिवमेव ते नमोऽस्तु ॥ ३८ ॥

पूजाद्रव्यसमार्जनाय न धनं शक्तिश्च नातः परं
तद्द्रव्यार्चनसाधनं च न मितं यल्लोकितं तन्मया ।
त्वं तावत्समुपार्जितासि रसने पुण्यैरगण्यैरतः
शंभो शङ्कर चन्द्रशेखर महादेवेति वा संवद ॥ ३९ ॥

मा मा संवद संवदाशु रसने मोहात्प्रमादेन वा
भ्रंशेनापि शिवान्यनाम सततं शंभो शिवेत्यादरात् ।
त्वं तावद्वद शर्कराप्यतिसिता तुभ्यं मया दीयते
क्षीरं साज्यसमन्वितं शिवकथापीयूषतृप्ता ह्यसि ॥ ४० ॥

गौरीमनोरमणनामसुधां विहाय वांछापि ते खलु न सा रसने रसस्ते ।
कस्तादृशो भवति येन तवान्यवांछा स्यादित्यतः परमुमारमणं वदाशु ॥ ४१ ॥

पुण्यैरपारैर्बहुजन्मसिद्धैः योगैश्च यागैरपि साधिता त्वम् ।
अतो महादेव शिवेति नामपीयूषमेवादरतः पिबाशु ॥ ४२ ॥

तिक्ता सदा सोमरसावसिक्ता यतो विरक्ता त्वमिहानुरक्ता ।
महेश्वरापारसुधास्वरूपनाम्नोऽन्यलोके च रसेऽनुवेलम् ॥ ४३ ॥

विलोकयेदं नयनारविन्दं मन्दारकुन्दार्चितलिङ्गमद्य ।
इदं कदा वा सुलभं तव स्यादिहाधुना पुण्यवशेन लब्धम् ॥ ४४ ॥

यथा धनं नैव जहाति दीनः तथा प्रपश्याशु महेशलिङ्गम् ।
एतादृशस्ते कथमुत्सवः स्यात् कालान्तरे तेन विलोकयेदम् ॥ ४५ ॥

वन्ध्या लब्धकुमारवीक्षणरता कार्यान्तरासङ्गता
तद्वत् त्वं शिवलिङ्गमर्चितमिदं पश्याधुना सादरम् ।
स्वप्नेऽप्यद्भुतशङ्गलिङ्गरचिता पूजा यतो दुर्लभा
पश्येदं पुनरादरैः पुनरिदं पश्य प्रपश्यादरात् ॥ ४६ ॥

त्वं तावन्मम पुण्यसाधनमतः त्वं पुण्यवृन्दार्जितं
मेने शङ्गविलोकनेन तदिदं सर्वात्मना दुर्लभम् ।
आप्तत्वेन मयेदमुच्यत इति ज्ञेयं त्वया सर्वदा
मामाप्तं तव सर्वथापि नयने जानीहि जिह्वे तथा ॥ ४७ ॥

धन्यास्ते तरवोपि शङ्गविलसल्लिङ्गाङ्गणारोपिताः
सत्सेवानिरताः पुनःपुनरतिच्छायानिदानैरलम् ।
छत्रन्तीति न चित्रमत्र सुकृतं किं किं कृतं तैरपि
ज्ञातुं शक्यमतः परं न सहसा तत्सन्निधानात् सदा ॥ ४८ ॥

धन्यास्ते तरवः स्वपल्लवकुलैरभ्यर्चयन्त्येव ते
शाङ्गं लिङ्गमयत्नलब्धविभवास्ते पाण्डुपत्रैरपि ।
पक्वैरप्यमलैः फलैरनिलतस्तावत् स्वतः प्रच्युतैः
एतद्भाग्यगुणानुरञ्जितमिति प्रायोऽस्य पुण्या स्थितिः[1] ॥ ४९ ॥

तरुरप्युरुशाङ्गलिङ्गभागे स्थिर एवातितरां करोति सेवाम् ।
अयमत्र महानुभाव इत्यभिमानो मम सन्निधानमेव ॥ ५० ॥

इयमप्यधुना प्रदोषकाले शिवमभ्यर्च्य सकृत्प्रणाममुक्त्वा ।
सकृदप्यवलोकिता शुभानां निधिमेव प्रयता प्रदास्यतीति ॥ ५१ ॥

इयमालोकिता धन्या पुण्यैरेव मुहुर्मुहुः । शिवपूजनसन्तुष्टा कथमेवं मनोरमा ॥

अयं प्रदोषसमयः कथं ज्ञातस्त्वयाऽधुना । कथमभ्यर्चितं लिङ्गं शाङ्गं सायं विशेषतः ॥

कल्याणरूपः करुणानिधानं निधानरूपो गिरिजासहायः ।

---

1 पुण्याब्धिभिः C

तुष्टोऽधुना लिङ्गसमर्चनेन सायं न सन्देहविपर्ययौ मे ॥ ५४ ॥

किमप्येकं लिङ्गे यदि पतति पत्रं करगतं नवं वा शुष्कं वा क्षतमपि च लिङ्गे तदखिलम् ।
अघं तावद्दूरे सकृदपि करोतीति विदितं प्रसूनाद्यैर्लिङ्गं पुनरिह किमभ्यर्चितमिति ॥ ५५ ॥

अहो महादेवमुमासहायं दयासमुद्रं न स वेद वेदः ।
न देववृन्दैरपि तत्स्वरूपं विज्ञातमेवेति मतिर्ममाभूत् ॥ ५६ ॥

इत्युक्त्वा स महाशैवो महापूजासमन्वितम् । लिङ्गं दृष्ट्वा प्रहर्षेण प्रणतोऽपि मुहुर्मुहुः ॥ ५७ ॥
ततः परं समुत्थाय कोमलैर्बिल्वपल्लवैः । पूजयामास गिरिशं पञ्चाक्षरपुरस्सरम् ॥ ५८ ॥
तदा स्तुतो महादेवः प्रणतोपि मुहुर्मुहुः । विमानं प्रेषयामास गणैर्भृङ्गीश्वरादिभिः ॥ ५९ ॥
दृष्ट्वा तेषां समारम्भं मार्गे नारायणादयः । तैः सहैव तदा सर्वे तत्र तावत्समागताः ॥ ६० ॥
तं दृष्ट्वा लिङ्गमुत्कृष्टं पूजितं प्रणताः सुराः । विस्मयं परमं प्रापुर्गणानूचुः परस्परम् ॥ ६१ ॥

देवाः —

अहो गणोत्तमाः सर्वे यूयं शङ्करपूजकाः । अतीतानागतज्ञानसंपन्नाः शिवपूजया ॥ ६२ ॥
केनेदमर्चितं लिङ्गं बिल्वपत्रसमाश्रितम् । तस्य पुण्यप्रभावस्य नावधिर्दृश्यते परः ॥ ६३ ॥
अयं प्रदोषसमयः कामधेनुरिहागता । एतत्पूजकभाग्यानि क्षीराकाराणि दास्यति ॥ ६४ ॥
कथं वा महती पूजा कृता पुण्यप्रवर्धनी । एतत्पूजावीक्षणेनाप्यानन्दो वर्धते मुहुः ॥ ६५ ॥

पाटीरादिरसानुलिप्तमधुना कस्तूरिकाकर्दमैः कर्पूरागरुसारसारसुरसैः वन्यैः सुगन्धैर्युतम् ।
लिङ्गं मङ्गलदायकं खलु वने दृष्टं प्रकृष्टं मुहुः कष्टं नाशयितुं प्रवृत्तमधुना पुण्यैरपारैः खलु ॥

पाटीरगन्धेन किलाधुनेदं वनं सगन्धं भ्रमरावृतं च ।
एतादृशं चन्दनमद्य दत्तं केनात्र लिङ्गे रजनीमुखेऽस्मिन् ॥ ६७ ॥

यो लिङ्गे रजनीमुखेऽतिसुभगो दद्यान्मुदा चन्दनं
कस्तूरीसहितं स याति सदनं गन्धं प्रदत्तं मुदा ।
यानं रत्नसमेतमेत्य सहसा भाग्यैर्युतः शाम्भवः
तत्पुण्यावधिरेव नेति विदितं मानैरपारैरपि ॥ ६८ ॥

पुष्पोच्चयोऽयं कथमद्य दत्तो लिङ्गे महापातकनाशकोऽयम् ।
नानाविधापारनवप्रसूनैः अभ्यर्चितं लिङ्गमिदं मनोज्ञम् ॥ ६९ ॥

अभिनवमृगमदपूरो हरति विषादं स कोटिकोटीनाम् ।
समुदयमपहर्तुमेव भर्तुः गिरिवरराजविशेषकन्यकायाः ॥ ७० ॥

यत्र क्वापि समर्चितं यदि महालिङ्गं तदा सर्वथा
सर्वाघक्षय एव लिङ्गमधुना विल्वस्य मूले यदि ।
पुष्पाद्यैरपि पूजितो यदि तदा सायं जलैर्वा तदा
इष्टाम्भोधिसमर्पणाय यतते लिङ्गाश्रितः शङ्करः ॥ ७१ ॥

पुण्यान्यप्यमितानि तावदधुना तत्तत्फलायोन्मुखा-
न्येवेति प्रमितिः किलाभवदियं पुण्यैरपारैः खलु ।
धन्यं धन्यमिदं शरीरमधुना धन्ये च नेत्राम्बुजे
लिङ्गं दृष्टमभूतपूर्वमसकृद्बिल्वादिभिः पूजितम् ॥ ७२ ॥

इति देववचः श्रुत्वा भृङ्गी मङ्गलदं वचः । उवाच परमप्रीत्या तान् देवान् शिवपूजकान् ॥७३॥

भृङ्गी —

तदिदं कौतुकं दृष्टं महादेवविचेष्टितम् । स शङ्करः स्वभावेन नाम्नापि खलु शङ्करः ॥ ७४ ॥
दीनबन्धुरिति ख्यातः करुणासागरो हरः । एतदानयनायाद्य प्रेषयामास शङ्करः ॥ ७५ ॥
इयं तु जारिणी सोपि जारजो रतितत्परः । चकार वासमत्रापि विजने सवने वने ॥ ७६ ॥
आनीतं स्वोपभोगार्थं चन्दनादिकमुत्तमम् । एतदानयने कोऽपि विलम्बः समभूत् खलु ॥
एतस्यास्तद्विलम्बेन रोषः खलु महानभूत् । तेन रोषेण सा दुष्टा भर्त्सयामास तं पतिम् ॥ ७८ ॥
ततः परं दीपमाला तदानीतावलोकनम् । कर्तुं विरचिता रम्या स्थूलकर्पूरखण्डका ॥ ७९ ॥
ततः सर्वं विलोक्येयं चन्दनादिकमुत्तमम् । सुरत्नकलशानीतं जलमप्यतिशीतलम् ॥ ८० ॥
तल्लिङ्गे पातयामास दुग्धमादौ ततः परम् । दध्याज्यं मधुमिष्टं च शर्करा पातिता ततः ॥ ८१ ॥
पातितं च जलं पश्चात् चन्दनं च मनोहरम् । कर्पूरेणान्वितं लिङ्गं तथा मृगमदान्वितम् ॥ ८२ ॥
पातितान्यपि पुष्पाणि दिव्यानि विविधान्यपि । दुकूलानि मनोज्ञानि सुरत्नाभरणान्यपि ॥ ८३ ॥
पुष्पशय्यापि दत्तेयं शिवलिङ्गस्य मस्तके । दिव्यान्यन्नानि दत्तानि लिङ्गमूले तया ततः ॥ ८४ ॥
रोषेण पतिता सेयं प्रणतेव विभाति सा । भक्त्या न लिङ्गमनया पूजितं रजनीमुखे ॥ ८५ ॥
महेश्वरः कृपासिन्धुः तुष्टोऽनेनापि तेन च । चन्दनादिसमूहेन लिङ्गे तुङ्गे मनोहरे ॥ ८६ ॥

पवित्रो यदि भूत्याद्यैः भक्त्या लिङ्गसमर्चनं। करोति बिल्वपत्राद्यैः तद्देशः स्वपदप्रदः ॥ ८७ ॥

शिवाभिधानस्थलमेकमेव लिङ्गं तदुत्तुङ्गमनार्मदं वा ।
तन्नार्मदं वा शिवलिङ्गमात्रे गृह्णाति दत्तं स शिवो जलं वा ॥ ८८ ॥

कमलान्यमलानि बिल्वमालां नवदूर्वांकुरसंकुलां महेशः ।
शिवलिङ्गनिवेदनेन गृह्णात्यमिताघौघनिवारणाय शंभुः ॥ ८९ ॥

भक्त्या विनापि किल दत्तनवप्रसूनबिल्वीदलानि सकृदादरतो गृहीत्वा ।
मुक्तिं ददाति सुबहूनि सुखानि दत्वा लिङ्गार्चकाय गिरिशः शिवलिङ्गसङ्गः ॥ ९० ॥

[1]रोषेण दोषवशगेन विमोहितेन लिङ्गे निपातितमनर्घमघापहारि ।
गृह्णाति तावदुदकं सुखमेव लिङ्गं शङ्कस्य तावदिति मे मतिरित्यवैमि ॥ ९१ ॥

लिङ्गाराधनसाधनानि विविधान्यानीय भक्त्या मुदा
यो लिङ्गार्चनतत्परः शिवरतस्तस्मै महेशः स्वयम् ।
दातुं वांछति वांछितार्थमसकृत् नादेयमस्यास्त्यतः
तत्सर्वं खलु दुर्लभं च लभते विश्वेश्वरानुग्रहात् ॥ ९२ ॥

फलमपि सजलं वा शङ्करे भक्तियुक्तैर्निहितममललिङ्गे खण्डबिल्वीदलं वा ।
गिरिवरसुतयाऽयं साकमेवाशु गृह्णात्यपि पुनरपि मूर्ध्ना तद्विधत्ते महेशः ॥ ९३ ॥

स्नेहं करोति गिरिशो निजपादपद्मपूजारतेऽतिविरते विषयेषु काले ।
वृद्धोपि वा स खलु षण्मुखतुल्यमेव तं तावदाशु मनुते तनुते सुखानि ॥ ९४ ॥

भजनीयो यदि मुदा तदा मृत्युञ्जयः परम्। भजनीयस्तत्समानो दयालुर्न श्रुतः श्रुतौ ॥ ९५ ॥

आनन्दयत्यसकृदादरतः पितेव दत्वा सुखानि विविधानि विपद्विनाशम्।
कृत्वा विमुक्तिमपि तां स ददाति भक्त्या संपूजितः सकृदुमारमणोऽत्र लिङ्गे ॥ ९६ ॥

तस्यादेयं नास्ति लोकेषु नूनं भक्त्या तावद्विल्वदायापि मुक्तिम्।
दत्वा पश्यत्यादरेणानुरक्तो लिङ्गार्चायां लिङ्गपूजाप्रियोऽयम् ॥ ९७ ॥

लिङ्गे सन्निहितो यथा स गिरिशस्तद्वन्न कुत्राप्यतो
लिङ्गाराधनमेव साधनमिदं साक्षान्निधानं परम् ।

---

1 अयं श्लोकः C कोशे अधिकः ।

तत्तावद्दिनतोऽतिकाम्यमसकृन्मुक्तिं प्रयच्छत्यत-
स्तस्मादप्यधिकं किमस्ति भुवने तन्नैव जानीमहे ॥ ९८ ॥

लिङ्गादेव समस्तमेतदधुना जातं जगन्मण्डलं
येनाखण्डलकोटयोऽपि जनिताः पूर्वं [1]गतीनां विधिः ।
किं नारायणकोटयो न जनितास्तस्मात् तदत्युत्तमं
शाङ्गं लिङ्गमुमासहायनिलयं मन्ये तदभ्यर्च्यते ॥ ९९ ॥

दृष्टं (मृष्टं) तदेकं शिवलिङ्गरूपं निधानमीशाननिधानदाने ।
समर्थमेवेति मतिर्ममासीत् अतोऽपि लिङ्गार्चनमिष्टहेतुः ॥ १०० ॥

शाङ्गं लिङ्गमनुस्मरन् शिवशिवेत्यभ्युच्चरन् सञ्चरन्
काशीनाथपुरेऽपि भूतिकवचो रुद्राक्षभूषाश्रयः ।
श्रीविश्वेश्वरमर्चयन् अभिनवैर्बिल्वीदलैः कोमलै-
रुद्रस्यापि चकार नैव गणनां हारः प्रवीरः खलु ॥ १०१ ॥

हाराणामतिदुर्लभं न भुवने दृष्टं प्रकृष्टं धनं
हारत्वे सति दुर्लभं तदितरत् किं दुर्लभं भावयेत् ।
लब्धो येन विशेषतः सुरमणिस्तस्यापि किं दुर्लभः
काचस्तस्य न काचखण्डविषये वांछापि तुच्छा कथम् ॥ १०२ ॥

हारत्वं सुरभूरुहः सुरमणिस्तत्कामधेनुः परा
तस्मादप्यधिकं न वस्तुविषये दृष्टं श्रुतं वा सुराः ।
तत्प्राप्याशु महेशपूजनरतः प्राप्नोति साक्षाच्छिवं
संप्राप्यापि सुखाम्बुधीनपि ततो हारः स लोकोत्तरः ॥ १०३ ॥

इत्युक्तं तद्वचः श्रुत्वा सर्वेऽपि त्रिदशास्तदा । विस्मयं परमं चक्रुर्दृष्ट्वा तां पतितामपि ॥ १०४ ॥
पश्चाद्भृङ्गी समागत्य भूतिपूतां चकार ताम् । ततस्तामाह सुभगे धन्यासि वरवर्णिनी ॥ १०५ ॥
एहि रत्नविमानं ते समानीतमिहाधुना । प्रेषितं गिरिशेनेदं विचित्रमतिसुन्दरम् ॥ १०६ ॥
इत्युक्तस्तद्वचस्तावत् तया न श्रुतमेव सा । गाढनिद्रासमाक्रान्ता पश्यन्ती स्वप्नमुत्तमम् ॥ १०७ ॥
स्वप्ने ददर्श सा लिङ्गमुत्तुङ्गगिरिसन्निभम् । दृष्ट्वा तत्पूजनोद्युक्ता सा तावद्दिव्यसाधनैः ॥ १०८ ॥

1 निधीनां गणः C

पञ्चामृतप्रवाहाद्यैः अभिषिच्य महेश्वरम् । पूजयामास बिल्वाद्यैः पल्लवैरतिकोमलैः ॥ १०९ ॥
पुष्पोच्चयैरपारैश्च पाटीररसकर्दमैः । दिव्यैराभरणैर्दिव्यैर्दुकूलैरपि भक्तितः ॥ ११० ॥
धूपराशिसमुत्पन्नधूमराजिभिरुत्तमैः । दीपमालासमूहैश्च नैवेद्यगिरिभिर्मुहुः ॥ १११ ॥
चन्द्रमण्डलसङ्काशैर्वितानैरपि कोटिशः । रत्नच्छत्रैरपारैश्च ध्वजैरप्युरुचामरैः ॥ ११२ ॥
नाट्यैर्गानैश्च विविधैः पूजयन्ती सदाशिवम् । ददर्श शांभवं स्वप्ने शिवार्चनसमुद्यतम् ॥ ११३ ॥
स्वप्ने तमाह भगवन् कुतोऽद्य समुपागतम् । गन्तव्यं ते क्व वा विद्वन् इह संवस संवस ॥ ११४ ॥
समर्चय महादेवं साधनैर्विविधैरपि । अपेक्षितं च देयं ते मया धनमनुत्तमम् ॥ ११५ ॥
उत्तमोऽसि सभाग्योऽसि शांभवोऽसि द्विजोत्तम । शांभवाय धनं देयमद्य तावदुपार्जितम् ॥
दानपात्रं मया दृष्टं अद्यैव सुकृतैरिह । त्वत्तुल्यं दानपात्रं च न दृष्टं भुवनत्रये ॥ ११७ ॥
हारा मनोहराः सन्ति केयूरादीनि सन्ति मे । दिव्यान्याभरणान्येव रत्नानि विविधान्यपि ॥
गोधनानि विचित्राणि सन्ति मे रत्नमन्दिरम् । तिष्ठत्येकं गृहाण त्वं कृतार्थोऽसि यतोऽधुना ॥
किं चोपदेशं कुरु मे शैवमन्त्रस्य केवलम् । विचित्राः सन्तु मन्त्रास्ते तेषां कृत्यं न मे मुने ॥
शिवपञ्चाक्षरेणैव पूजनीयः सदाशिवः । स एव रोचते मह्यं देयः पुण्यदिने शुभे ॥ १२१ ॥
सर्वपापहरत्वेन श्रुतः पञ्चाक्षरो मया । अतस्त्वमेव मे देहि सर्वपापविनाशकम् ॥ १२२ ॥
मन्त्रराजतया ज्ञातः शिवपञ्चाक्षरः परः । तमेवोपदिशाद्याशु पुण्यकालोऽयमद्भुतः ॥ १२३ ॥
पञ्चाक्षरोऽपि विविधः संहितोपनिषद्गतः । तत्र यो रोचते मन्त्रः स देयस्तावदादरात् ॥ १२४ ॥
इति तद्वचनं श्रुत्वा सोऽपि शाम्भवपुङ्गवः । तामुवाच विरक्तोऽसौ सर्वसाधननिःस्पृहः ॥ १२५ ॥

शाम्भवः —

किं धनैर्नश्वरैर्भद्रे किमेतैर्मणिभूषणैः । न रत्नमन्दिरेणापि कृत्यमस्ति ममाधुना ॥ १२६ ॥
न चित्रवसनैः कृत्यं नैव गोमण्डलैरपि । किं च भूमण्डलेच्छापि न मे भवति सर्वथा ॥ १२७ ॥
न स्वर्गलोकवाञ्छा मे सत्यलोको न वाञ्छितः । वैकुण्ठलोकवाञ्छापि नास्ति सर्वात्मना मम ॥
सर्वे ते प्रलयं यान्ति महाप्रलयवह्निना । उदुम्बरफलोत्पन्ना मशका इव सन्ति ते ॥ १२९ ॥
न तन्मशकवांछास्ति लोके कस्यापि सुव्रते । शमितोदुम्बरफले स्वर्गे वा तुल्यधीर्मम ॥ १३० ॥
दुर्भगाः खलु वांछन्ति स्वर्गवासे तथा सति । तत्रापि वांछा नेत्यत्र वांछा तव धने कथम् ॥
यद्यस्ति धनमुत्कृष्टं तदा तैरधुना धनैः । पूजयस्व महादेवं विलम्बं कुरु मा वृथा ॥ १३२ ॥

पद्मपल्लवजलोपमं मनो जीवनं चपलमेव तच्चिरम् ।
नाधितिष्ठति ततस्त्वमीश्वरं पूजयस्व शिवलिङ्गमस्तके ॥ १३३ ॥

यदेव धनमुत्कृष्टं तत्सर्वं लिङ्गमस्तके । प्रयच्छेच्छा च विषये तुच्छा सा खलु सर्वथा ॥ १३४ ॥
प्रार्थनीयो महादेवः पुनः पुनरुमापतिः । विषयेच्छाविनिर्मुक्तं कुरु तामिति सादरम् ॥ १३५ ॥
विषयास्ते विषप्रायाः सर्वे त्याज्याः स्वभावतः । विषयेच्छानुरक्तानां सुखं स्वप्नेऽपि दुर्लभम् ॥
विहाय विषये वांछां कुरु शङ्करपूजनम् । शिवपूजनसामग्री संपन्ना खलु सर्वथा ॥ १३७ ॥
दुर्लभं मानुषं देहमासाद्य शिवपूजनम् । यदि न क्रियते मोहात् तदा जन्म निरर्थकम् ।१३८॥
भारभूतं शरीरं स्यात् अनीशार्चनसाधनम् । शरीरकृत्यमेतावत् सतां शङ्करपूजनम् ॥ १३९ ॥
अभाग्यैर्यौवनोन्मत्तैः सर्वदा मदनातुरैः । नाराध्यते महादेवस्ते यान्ति नरकं ध्रुवम् ॥ १४० ॥
तरुणीं रमणीं दृष्ट्वा प्रहसन्ति वदन्ति च । न वदन्ति महादेवं पाहि पाहीति सर्वदा ॥ १४१ ॥
बाले मामेहि मामेहि मामेहीति वदन्ति ते । उन्मत्तास्ते शिवं तावन्न वदन्ति कदाचन ।१४२॥
अमूल्यानि विचित्राणि दुकूलानि प्रिये त्वया । ग्राह्याणीति वदन्त्यज्ञाः शङ्करानर्पितान्यपि ॥
दिव्यं मृगमदोपेतं चन्दनं दातुमिच्छति । वधूभ्यो न महेशाय लिङ्गे सन्दातुमिच्छति ॥
हारानुदारानादाय युवतीस्तनमण्डले । ददाति न महालिङ्गे हारं दातुं स वांछति ॥ १४५ ॥
रत्नताटङ्कमानीय वनितायै प्रयच्छति । न शर्वलिङ्गे दातुं वा तस्य वांछा प्रजायते ॥ १४६ ॥
अभाग्यास्ते समुत्पन्नाः सर्वे भूभारतां गताः । न हारत्वमनुप्राप्य कुर्वन्ति शिवपूजनम् ॥ १४७ ॥
शिवं वांछति यो नित्यं स एव शिवपूजनम् । करोति तावदन्यस्तु न करोति शिवार्चनम् ॥
[1] दिव्यगन्धफलीमालां मूढो बालागले परम् । प्रयच्छति महालिङ्गे तां न दातुं स वांछति ॥

तस्याशिवं जन्मनि जन्मनीति मन्ये न यस्यास्ति शिवार्चनेच्छा ।
शिवार्चनेच्छा शिवहेतुभूता सा तावदत्युत्तमवाञ्छिता स्यात् ॥ १५० ॥

कल्पान्तेऽपि जहाति यो न मनसा विश्वेशलिङ्गार्चने
वाञ्छां तत्पदरेणुभिर्जगदिदं पूतं भवत्यन्वहम् ।
तं वन्दे मुहुरादरेण विरतं संसारवार्तारसात्
कंसारातिसमर्चिताङ्घ्रिकमलध्यानादरं सन्ततम् ॥ १५१ ॥

---

1 अयं श्लोकः C कोशेऽधिकः ।

सन्तः शङ्करपुङ्गवा इति मया ज्ञातास्तदाराधना-
दीशः पूजित एव तस्य सुकृताम्भोधेः पदाम्भोरुहम् ।
दृष्ट्वैव प्रलयं प्रयात्यघकुलं तस्मै नमस्तं परं
मन्ये शाम्भवपुङ्गवादपि परं किं भूतले तिष्ठति ॥ १५२ ॥

शिवं वदति यः सदा शिवमनुस्मरत्यन्वहं शिवार्चनरतः सदा शिवशिवेति वाचा वदन् ।
पुनाति भुवनत्रयं स शिव एव तं केवलं चरं परमलिङ्गमित्यपि वदन्ति धन्योत्तमाः ॥ १५३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे अज्ञानादपि विटस्त्रीकृतशिवपूजामहिमानुवर्णनं नाम एकत्रिंशोऽध्यायः ॥

---

## अथ द्वात्रिंशोऽध्यायः ।

---

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा चारणस्यापि भामिनी । तं प्रणम्यातिविनता प्राह भक्तिपुरःसरम् ॥ १ ॥

चारणाङ्गना —

यदुक्तमधुना विद्वन् तत्सत्यं नात्र संशयः । विषयेषु न वांछा मे तावदद्य प्रजायते ॥ २ ॥
शिवपूजनमात्रेच्छा तावदद्य प्रजायते । विषये विषरूपा धीः संजाताऽद्य विशेषतः ॥ ३ ॥

शिव एव सदा किलार्चनीयः शिवदानप्रवणो महेश्वरो मे ।
मतिरद्य कथञ्चिदेवमन्तःकरणं तत्र समर्पितं मयापि ॥ ४ ॥

येनान्तःकरणेन शङ्करपदध्यानं क्षणं वा मुहुः
जातं तत्सकलार्थदाननिपुणं मन्ये तदेवाधुना ।
दत्तं शङ्करपादपङ्कजरजःपुञ्जे तदप्यर्पितं
तेन क्रीडति तावताऽद्य जननं तावत् कृतार्थं मम ॥ ५ ॥

शाङ्कार्चने शङ्ककथासुधायां शाङ्केन सङ्गेऽपि शिवालयेऽपि ।
इच्छा प्रवृत्ता कथमद्य सेयं स्थिरा भविष्यत्यधुना वदेदम् ॥ ६ ॥

शाङ्करः —

धन्यासि नूनं सुभगे तवाद्य यतो मतिः शङ्करलिङ्गपूजाम् ।
कर्तुं प्रवृत्ता किमितोऽपि भाग्यं ततोऽधुना तां कुरु सावधानम् ॥ ७ ॥

पुरा कश्चिदभूद्राजा हिमवद्गिरिमण्डले । सर्वसौभाग्यसंपन्नः पुत्रपौत्रसमन्वितः ॥ ८ ॥
तस्य कन्याऽभवद्धन्या कमलामललोचना । सा तावद्बाल्यमारभ्य शिवार्चनपरायणा ॥ ९ ॥
शिवगानरता नित्यं शिवव्रतपरायणा । श्रुत्वा शिवकथामेव चकार दिनयापनम् ॥ १० ॥
सा हिमालयकूटस्थं ददर्श शिवमन्दिरम् । प्रासादवरमारुह्य वीणावादनतत्परा ॥ ११ ॥
शिवालयस्थूलशृङ्गात् कश्चिद्वायुरुपागतः । तेन वातेन संबद्धः सुगन्धोप्यागतः सह ॥ १२ ॥
तेन गन्धेन हर्म्याणि सुगन्धीनि प्रतिक्षणम् । ततः परं पुष्पमालाप्येका तावदुपागता ॥ १३ ॥
तां मालिकां विलोक्याशु भ्रमद्भ्रमरसंयुताम् । विस्मयं परमं प्राप केयं कस्मादुपागता ॥ १४ ॥
भूमण्डले न दृष्टानि पुष्पाण्येतादृशानि तु । एतत्प्रसूननामापि ज्ञायते न नरैः खलु ॥ १५ ॥
सुरमन्दारपुष्पाणां किमियं मालिकाऽथवा । लोकान्तरस्थमन्दारपुष्पमाला किमीदृशी ॥ १६ ॥
यद्वा किन्नरलोकस्थपुष्पमाला भविष्यति । नागलोकसमुत्पन्नमन्दारकुसुमोद्भवा ॥ १७ ॥
मालिकेयमुतान्येति चिन्ताव्याकुलमानसा । ततो विमानमारुह्य सा ययौ शिवमन्दिरम् ॥ १८ ॥
सा तत्र मन्दिरं दृष्ट्वा शङ्करस्यातिविस्मिता । रत्नगोपुरसंकीर्णं रत्नभित्तिविराजितम् ॥ १९ ॥
[[1]रत्नप्राकारसंयुक्तरत्नद्वारविराजितम् । तत्र लिङ्गं ददर्शाथ मणिमण्डनमण्डितम् ॥ २० ॥
दीपकान्तिसमाक्रान्तरत्नमालाविराजितम् ।] हारतोरणसंयुक्तं दिव्यपुष्पसमर्चितम् ॥ २१ ॥
हारकोटिसमाक्रान्तं स्तुतं वेदैरनेकधा । ददर्श कन्यकां तत्र नाट्यगानविशारदाम् ॥ २२ ॥
सौन्दर्यनिधिरूपां तां प्राह बालां मनोरमाम् । कासि कन्ये विशालाक्षि संपूर्णनवयौवने ॥ २३ ॥
कः पिता तव माता का क भर्ता तव तिष्ठति । गानविद्या समभ्यस्ता कुतो वा ते गुरुश्च कः ॥
इति पृष्टा मुदा प्राह सा तां गन्धर्वकन्यका ॥ २५ ॥

गन्धर्वकन्या —

गन्धर्वनगराधीशः पिता मम स शाम्भवः । स एव मे गुरुर्गानमभ्यस्तमतिसुन्दरम् ॥ २६ ॥
मम वृत्तमिदं नित्यं श्रीमहादेवपूजनम् । नित्यं गन्धर्वनारीणां सर्वासामपि तद्व्रतम् ॥ २७ ॥
पुरुषाणां विशेषेण व्रतं शङ्करपूजनम् । श्रीमहादेवपूजायां चित्तं मे निरतं सदा ॥ २८ ॥
अनेन जीवनं धन्यमस्माकं शिवपूजनम् । धन्यं धन्यं विधानं च जीवनं च फलं महत् ॥ २९ ॥
इति तद्वचनं श्रुत्वा सा बाला विस्मयं गता । तामुवाचातियत्नेन गृहीत्वा पुष्पमालिकाम् ॥

1 कोष्ठान्तर्गतमर्धद्वयं C कोशे नास्ति ।

एतानि कानि पुष्पाणि पुष्पनामानि किं प्रिये । कुत्रास्ति वनमेतासां तत्प्रदर्शय सादरम् ॥ ३१ ॥
इत्युक्तं तद्वचः श्रुत्वा नाट्यकालोऽयमीदृशः । गानस्यापीति तामाह सा तत्रोवास मन्दिरे ॥
आसायं नाट्यनिरता सायङ्काले मनोहरे । स्नानार्थं निर्गता तत्र स्नाता गङ्गाजले शुभे ॥ ३३ ॥
ततो गन्धर्वनगरादागतान् शिवपूजकान् । दृष्ट्वा तैः सहसा प्राप दिव्यं शङ्करमन्दिरम् ॥ ३४ ॥
तत्रोपचारैर्विविधैः पूजयामास शङ्करम् । पुष्पैरपारैर्विविधैः चन्दनाद्यैर्मनोहरैः ॥ ३५ ॥
ततो निवृत्तास्ते सर्वे पूजयित्वा महेश्वरम् । सा तत्र गाननिरता न ययौ मन्दिरं स्वकम् ॥३६॥
ततस्तद्रमणो दृष्ट्वा तामाह युवतीं मुदा । एहि भद्रे स्वनगरं समाप्तमपि पूजनम् ॥ ३७ ॥
प्रदोषकालोऽपि गतस्त्वरयेत्याह सादरम् । सा तमाह प्रियं लज्जां त्यक्त्वा भोगरतिं तथा ॥

गन्धर्वनारी —

गच्छ गच्छ यथेष्टं त्वं यत्र कुत्रापि रोचते । ममात्रैव स्थितिस्तावत् यावद्देहविसर्जनम् ॥ ३९ ॥
दुर्लभं खलु संप्राप्तमिदं शङ्करमन्दिरम् । अतः परं न गन्तव्यं कुत्रापि न रतिश्च मे ॥ ४० ॥
कालो नेयो मया सोयं श्रीमहादेवपूजया । अलं जीवनवार्ताभिर्भोगवार्ताभिरप्यलम् ॥ ४१ ॥
अपूर्वभोगो न क्वापि यो भुक्तो विषयः पुरा । तत्र तावन्न मे वांछा नाहारेऽपि मतिर्मम ॥ ४२॥
अत्र नाट्येन गानेन पूजनीयो महेश्वरः । प्रीणनीयो मया प्राप्यं कैलासस्थानमुत्तमम् ॥
अपारजनिदुःखानि विनश्यन्ति शिवार्चनात् । कैलासे तु विशेषेण श्रीमहादेवपूजया ॥ ४४ ॥
व्यर्थं जीवनमित्यवैमि गिरिजानभ्यर्चनात् केवलं तत्तावत्सफलं भविष्यति तदा विश्वेश्वराराधने ।
संसारे किमसारभूतविषये बुद्धिः सतां जायते किं तच्चर्वितचर्वणैरपि चिरं वार्तारसैरप्यलम् ।४५॥
इत्युक्त्वा विरता तेन वार्ताभिरपि सादरम् । गाननाट्यरता नारी शिवार्चनरतापि वा ॥ ४६ ॥
तां विलोक्य प्रहृष्टा सा राजकन्या मनोरमा । चकार वसतिं तत्र शिवार्चनपरायणा ॥ ४७ ॥
रात्रौ जागरणं कृत्वा नाट्यगानपुरःसरम् । अवाप परमां प्रीतिं पश्यन्मुक्ता तया सह ॥ ४८ ॥
एवं भाग्येन संप्राप्य जन्म शङ्करमन्दिरे । पूजयित्वा महादेवं प्राप्नुवन्ति परं सुखम् ॥ ४९ ॥
अतः संसारवार्ताभिरलं कमललोचने । पूजनीयो महादेवो विभवे सति साधनैः ॥ ५० ॥

तज्जीवनं व्यर्थमिति स्मरन्ति येनेशपादाम्बुजमर्चितं न ।
तज्जीवनं धन्यमिति स्मरन्ति येनार्चितं लिङ्गमपारपुण्यैः ॥ ५१ ॥
धन्यं मन्ये जीवनं तस्य लोके यस्येशानध्यानमेकं वरेण्यम् ।

आशास्यः स्यादन्यमाशास्यमस्मिन् लोके नास्तीत्येव मन्ये सतां तु ॥ ५२ ॥

विरताः सन्ततं क्षान्ताः पूजयन्ति सदाशिवम् । लिङ्गे बिल्वैर्जलैर्वापि पुष्पैरपि मुहुर्मुहुः ॥ ५३ ॥

को वा शिवमनाराध्य सुखं प्राप्नोति मानवः । क्षुधितो भोजनेनापि विना तृप्तोऽपि किं नरः ॥

सौभाग्यकामा अपि पूजयन्ति महेश्वरं पापविनाशकामाः ।
तं स्वर्गकामा अपि पूजयन्ति तं मोक्षकामा अपि पूजयन्ति ॥ ५५ ॥

स्वर्गापवर्गप्रदमेकमीशं मत्वा शिवाचाररताः प्रशान्ताः ।
लिङ्गे महादेवमुमासहायं समर्चयन्ति प्रमथाधिनाथम् ॥ ५६ ॥

अल्पायासेनैव संसारबन्धो विच्छिन्नः स्यादित्यतो लिङ्गपूजाम् ।
कुर्वन्तीति प्राणिनः प्राप्नुवन्तः स्वाभीष्टार्थास्ते पुनः पूजयन्ति ॥ ५७ ॥

कष्टानि नश्यन्त्यखिलानि तानि यैरिष्टलाभोऽपि न सर्वथापि ।
महेशलिङ्गार्चनमात्रतोऽतः शिवार्चनेनैव सुखानि नित्यम् ॥ ५८ ॥

शिवप्रसादोपि शिवार्चनेन भवत्यतस्ते महितार्थसिद्धिः ।
तान्येव तत्सिद्धिरिति स्मरामि नान्येन सा मुक्तिकथापि नूनम् ॥ ५९ ॥

संसारदावसंक्रान्ताः प्राणिनः परितापतः । शिवार्चनमहावृष्टिधारां वाञ्छन्ति सन्ततम् ॥ ६० ॥

पापानलमहाज्वालाजालविच्छेदसाधनम् । शिवार्चनसरित्पूराः पूरयन्त्यपि वाञ्छितम् ॥ ६१ ॥

संसारकष्टे दुष्टानां दुरदृष्टे मतिर्भवेत् । सा गतिः सहसा तावद्विनश्यति शिवार्चने ॥ ६२ ॥

शिवार्चनानलेनैव कष्टराशिर्विनश्यति । स किं जललवैः शान्तः कदाचिदपि जायते ॥ ६३ ॥

महाप्रलयकालाग्निस्वरूपाघकुलक्षयः । शिवार्चनमहावृष्टिप्रवाहैरुपजायते ॥ ६४ ॥

यावन्न संसारमहाग्नितापः तावच्छिवाराधनवृष्टिपूरः ।
संपादनीयस्त्वरया तदा तु तदर्जनं किं भवतीह शक्यम् ॥ ६५ ॥

संसारदुःखदवकोटिविनाशनाय लिङ्गार्चनाम्बुधितरङ्गपरंपराणाम् ।
सृष्टिः कृता खलु शिवेन कृपार्णवेन नान्येन तस्य विलयो भवतीति मन्ये ॥ ६६ ॥

जम्बूद्वीपनिवासिनां खलु महद्भाग्यं शिवाराधनादापत्पर्वतनाशने सति मुहुर्भाग्योदयो जायते ।
पश्चान्मुक्तिरपीति भाग्यमतुलं संप्राप्यते केवलं लिङ्गे शङ्करपूजनेन तदिदं साक्षान्निधानम् स्मृतम् ॥

न स्वर्गेऽपि तथाविधं सुखमिति ज्ञातं मया सर्वथा
कैलासेऽपि न सर्वथा भुवि यथा लिङ्गार्चनाल्लभ्यते।
लिङ्गाराधनपुण्यजातजनितः कैलासवासोऽप्यतः
तल्लिङ्गार्चनमेव तावदधिकं पुण्येषु पुण्योत्तमम् ॥ ६८ ॥

इति तद्वचनं श्रुत्वा सापि सन्तुष्टमानसा। शिवपूजारता जाता विविधैः साधनैर्मुहुः ॥ ६९ ॥
ततः प्रबोधं संप्राप्य गणैश्च वचनैस्तदा। समुत्थायातिचिन्तार्ता निमील्य नयनाम्बुजे ॥ ७० ॥
ततः परं गणैरुक्ता विमानमिदमुत्तमम्। आरुह्य याहि सुभगे कैलासभुवनं प्रति ॥ ७१ ॥
इति तद्वचनं श्रुत्वा सातु तानाह विस्मिता। रोषाक्रान्तापि तेष्वाशु हिताहितपुरःसरम् ॥ ७२ ॥

चारणनारी —

पुण्यसाधनभूतस्य शिवलिङ्गार्चनस्य यः। विघ्नं करोति का तस्य गतिर्भवति तद्वद ॥ ७३ ॥
इति तद्वचनं श्रुत्वा भृङ्गी प्राहातिविस्मितः। शिवज्ञानांकुरस्येयं भूरभूदिति सादरम् ॥ ७४ ॥

भृङ्गी —

समुत्पन्नमिदं भद्रे भद्रमस्तु तवाधुना। शिवार्चने कथं भक्तिस्तव जाता विमुक्तिदा ॥ ७५ ॥
धन्याऽसि कृतकृत्याऽसि मान्याऽसि मनुजेश्वरैः। अभूतपूर्वा ते बुद्धिरधुना समभूत् कथम् ॥
प्रश्नोत्तरस्य श्रवणादपि पापविनाशनम्। भवत्येव न सन्देहः प्रश्नोऽप्यघविनाशकः ॥ ७७ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम्। पूर्वमत्रैव सनकश्चकार शिवपूजनम् ॥ ७८ ॥
रम्यैः सुरसरित्तोयैः उत्फुल्लैः कनकाम्बुजैः। चन्दनाद्यैरपारैश्च कनकैरपि निर्मलैः ॥ ७९ ॥
बिल्वैर्द्रोणैर्जपापुष्पैः केतकीकुसुमैरपि। करवीरैरर्कपुष्पैः नवदूर्वाकुरैरपि ॥ ८० ॥
अर्कैर्मन्दारकुसुमैः देवकाञ्चनसंयुतैः। हेमगन्धफलीपुष्पैः पुन्नागैरनघैरपि ॥ ८१ ॥
कर्पूरदीपमालाभिः धूपधूमैर्मनोहरैः। क्षीरान्नैरपि पक्वान्नैः कदलीफलसंयुतैः ॥ ८२ ॥
द्राक्षारसालसंयुक्तैः जम्बूजम्बीरसंयुतैः। अन्यैरपि फलैर्युक्तैः पूजयामास शङ्करम् ॥ ८३ ॥
शिवार्चनप्रभावेन सकम्पमवनीतलम्। शिवार्चनतपोमूर्तिः किं कर्तुमभिवांछति ॥ ८४ ॥
इदं परं तपस्तस्मात् किं वा वांछति तत्फलम्। इति देवाश्च संक्षुब्धाः किमयं वांछतीत्यपि ॥
विचारेण परं श्रान्ताः सुरा अपि परस्परम्। गन्धर्वाः किन्नराः श्रान्ताः चारणाः कमलानने ॥

किं वा पदं वाञ्छति सोयमीशं लिङ्गं समभ्यर्च्य विशेषतोऽद्य।

वैकुण्ठवासादिपदाभिवाञ्छा न तस्य लिङ्गार्चनतत्परस्य ॥ ८७ ॥

यतोऽतितुच्छत्वमतिः प्रभूता वैकुण्ठलोकेऽपि विशेषतस्तु ।
स्वर्गादिलोकेऽपि न तस्य वाञ्छा [2]निधानवाञ्छा हितभाग्यवाञ्छा ॥ ८८ ॥

एवं शिवाराधनतत्परोऽसौ तदर्थमेवं कथमिन्दुमौलिः ।
संपूजितः स्यात् किमभीप्सितं वा तस्यास्ति न ज्ञायत एव सत्यम् ॥ ८९ ॥

अहर्निशं लिङ्गसमर्चनेन नयत्यतः कालमतः परं वा ।
न जायते तस्य रतिः प्रकृष्टा सा लिङ्गपूजा सकलार्थहेतुः ॥ ९० ॥

इति सर्वे विचार्यादौ रम्भामूचुः परस्परम् । तत्पूजायास्त्वया विघ्नः कर्तव्य इति सादरम् ॥ ९१ ॥
इत्याकर्ण्य वचस्तेषां रम्भापि भयविह्वला । तानुवाचातियत्नेन कृताञ्जलिपुटा तदा ॥ ९२ ॥

रम्भा —

तपोनिधिस्तत्र शिवार्चनेन कालं नयत्येव जितेन्द्रियोऽपि ।
तद्विघ्नमात्राचरणे प्रवृत्तिः कथं मम स्यादिति खिन्नचित्ता ॥ ९३ ॥

यामिनी वासरस्तस्य शिवार्चनरतस्य च । कथं प्रत्यूहलेशोऽपि प्रसरिष्यति वस्तुतः ॥ ९४ ॥
तत्र प्रत्यूहकरणे न मनोऽपि प्रवर्तते । स्वारस्येन ततस्तस्य कथं विघ्नो भविष्यति ॥ ९५ ॥
यः शिवार्चनविघ्नार्थं यतते मोहतस्तदा । प्रवृत्तस्यैव विघ्नः स्यात् प्रत्युतास्योपकारकः ॥ ९६ ॥

शिवार्चनेनाशु जिताघकोटिः यस्तत्र विघ्नावसरोऽपि को वा ।
सूर्योदयानन्तरमन्धकारः किं लेशतो वा भवति प्रवृत्तः ॥ ९७ ॥

महाघशैलक्षयहेतुभूतः शिवार्चनाकारपविः स विघ्नान् ।
तृणस्वरूपानपहर्तुमाशु कथं न शक्तो वद तद्विचार्य ॥ ९८ ॥

अस्माकं भाग्यहीनानां सर्वदा शिवपूजने । न बुद्धिस्तादृशं भाग्यं बहुपुण्यफलं खलु ॥ ९९ ॥
यः शिवार्चनविघ्नार्थं मोहाद्यत्नं करिष्यति । स तत्फलमवाप्यापि किं जीवति विशेषतः ॥ १०० ॥

यः शङ्कराराधनविघ्नहेतुः तज्जीवनं व्यर्थमिति स्मरामि ।
स एव तावन्नरकेऽपि वासं करोति कल्पावधि सर्वथापि ॥ १०१ ॥

मुदा शिवार्चकान् दृष्ट्वा ये नमन्ति प्रयत्नतः । तेऽपि यान्ति शिवं नूनं तैः सहैव शिवार्चकैः ॥

2 निधानभूतस्य स्वसंस्कृतेश्च C

शिवार्चकः किलापारपातालानल एव सः। विघ्नतूलांशभागस्य किं नैव स विनाशकः॥ १०३॥

पूजनीयोऽपि वन्द्योऽपि मान्योऽपि शिवपूजकः। तद्विघ्नाचरणेनैव कृतं स्यात् पातकार्जनम्॥

अहो दुर्बुद्धिरुत्पन्ना तद्विघ्नायातिमोहतः। पापं तादृशबुद्ध्यापि समुत्पन्नं न संशयः॥ १०५॥

देवत्वमेतद्भवतां वृथा स्यात् तद्विघ्नहेतुत्वविचारणेन।
को वा विषं वाञ्छति जीवनेच्छां कर्तुं प्रवृत्तोऽपि नराधमोऽपि॥ १०६॥

इति तद्वचनं श्रुत्वा रम्भामूचुर्दिवौकसः। सत्यमुक्तं त्वयाऽथापि तद्विघ्नो हृदि चिन्त्यते॥

शिवार्चनाकारतपः प्रवृत्तं प्रकम्पयत्येव सुरानतस्त्वम्।
तद्विघ्नमुत्पादय तावता नः स्वस्थं मनः स्यात् खलु नान्यथा तु॥ १०८॥

इत्युक्तं तद्वचः श्रुत्वा भावि भावीति निश्चयात्। सा ययौ तत्र यत्रास्ति स महादेवपूजकः॥

सा तत्र गत्वा स्वविलासहेतून् संपाद्य तेनापि विलोकितापि।
ततस्तदन्तःकरणं सकम्पं जातं स चिन्ताकुलचित्तवृत्तिः॥ ११०॥

स्थिरं मम मनः कथं सपदि जायते चञ्चलं शिवार्चनरतिर्न मे किमिदमद्भुतं दृश्यते।
अपूर्वमिदमीदृशं भवति नानुभूतं पुरा किमेतदिति चिन्तया विगतविश्वनाथार्चकः॥ १११॥

ततः परं समुत्पन्ना कापि वागशरीरिणी। सा श्रुता रम्भया वाणी तया विस्मयमागता॥ ११२॥

अयं जितेन्द्रियो रम्भे स्त्रीरूपज्ञो न सर्वथा। अत्र प्रवृत्तिर्विफला केवलं पापसाधनम्॥ ११३॥

संसारवासना यस्य तस्य नारीविलोकने। प्रीतिः स्यादस्य सहसा न प्रीतिस्त्वयि वस्तुतः॥ ११४॥

शिलानारीं दृष्ट्वा यदि भवति बुद्धिः कलुषिता तदा तावद्रूपं भवति तव दृश्यं यदि न सा।
तदा किं ते कृत्यं श्रममपि विहायात्र तरसा न तस्य स्वर्गेच्छा भवति खलु याहि स्वभवनम्॥

प्रस्तरो यदि तवावलोकनात् प्रीतिमावहति तर्हि तन्मनः।
त्वय्यपि प्रसरतीति मे मतिः का तवापि रमणीयता वद॥ ११६॥

स्थूलोपलालोकनतः सुखं चेत्तदा त्वदालोकनतः सुखं स्यात्।
कुचेऽपि तस्योपलबुद्धिरेव स वर्तुलप्रस्तर इत्यवैति॥ ११७॥

न लोहितं तस्य तथा शरीरे न मांसमज्जादिकवासनापि।
ततः कथं वा त्वयि चित्तमस्य वदानुरक्तं विरतं विशिष्य॥ ११८॥

संसारिणामेव हि बुद्धिरिष्टा नारीषु संसारविरक्तचित्ताः।

नारीं परं प्रस्तरमेव मत्वा तिष्ठन्ति विश्वेश्वरसक्तचित्ताः ॥ ११९ ॥

तद्देहचेष्टाकरणाय चित्तं यदि प्रवृत्तं तव मोहतः स्यात् ।
तदा न शापेन विनाशमेव करिष्यतीति प्रमितिर्ममासीत् ॥ १२० ॥

नायं ब्रह्मा नापि नारायणोऽसौ इन्द्रश्चन्द्रो भानुरग्निर्यमो वा ।
वायुर्वाऽयं किन्तु शैवाग्रगण्यः नार्यामस्य प्रस्तरे वा समा धीः ॥ १२१ ॥

भीतैर्देवगणैस्त्वमस्य तपसा संप्रेषिता किं ततो भीतिर्मास्तु न तत्पदेषु सहसा वांछां करोत्येव सः।
तुच्छत्वेन विनिश्चयादिति मतिं तूर्णं प्रयाहि प्रिये तस्येष्टं शिवपादपद्मभजनं कल्पावसानेष्वपि ॥

इति तद्वचनं श्रुत्वा सा रम्भापि ततो गता । तद्विघ्नाचरणोपायो भवतीत्यपि निश्चयात् ॥ १२३ ॥

पुरा तु बहुभिर्भ्रान्तैः शिवार्चनविघातकैः । संप्राप्तो नरके वासस्ते तेनैवातिदुःखिताः ॥ १२४ ॥

इति तद्वचनं श्रुत्वा सा तमाह गणेश्वरम् ।

रम्भा —

अयमर्थस्त्वया ज्ञातः सर्वज्ञत्वाभिमानतः ॥ १२५ ॥

अहं च खलु पूजार्थं स्वप्ने खलु समुद्यता । तद्विघ्नः किं कृतो ज्ञात्वा [1]कथं वा सुकरो भवेत् ॥

स्वप्ने जागरणे चापि शिवलिङ्गार्चनं समम् । तदर्चनेन पुण्यं स्यात् तत्तुल्यमुभयोरपि ॥ १२७ ॥

योगानन्देन पूजायां प्रवृत्ता लिङ्गमस्तके । तद्विघ्नाचरणे पापं कथं ते न भविष्यति ॥ १२८ ॥

उत्साहोऽपि महान् वृत्तः शिवलिङ्गार्चने मम । तदुत्साहविघातेन तव पापं भविष्यति ॥ १२९ ॥

शिवपूजनसामग्री या स्वप्ने सा कथं मया । प्राप्तव्या तादृशं भाग्यं न कृतं खलु सर्वथा ॥

तादृशं लिङ्गमुत्कृष्टं स्वप्ने दृष्टं मया तदा । तल्लिङ्गसदृशं लिङ्गं नास्ति ब्रह्माण्डमण्डले ॥ १३१ ॥

नक्षत्रलेढि तल्लिङ्गं शरच्चन्द्रसमं खलु । तादृशं कुत्र वा लिङ्गं वद ब्रह्माण्डमण्डले ॥ १३२ ॥

प्रलयानलसङ्काशदीपमालापि कुत्र सा । पुष्पोच्चयाश्च ते कुत्र पुष्पमालासमुच्चयाः ॥ १३३ ॥

कुतोपहारनिचयास्तादृशाः सन्ति तान् वद । क्व तान्याभरणान्यद्य चन्दनादीनि तानि वा ॥

क्व दिगन्तविश्रान्तदुकूलान्यपि कोटिशः । पञ्चामृतप्रवाहाश्च तादृशाः सन्ति कुत्र वा ॥ १३५ ॥

पुष्पवृष्टिश्च सा कुत्र पुनः पुनरनश्वरा । ब्रह्माण्डमण्डलव्याप्तरत्नछत्राणि कुत्र वा ॥ १३६ ॥

ईदृशं परमं भाग्यं दृष्ट्वा हृष्टासि सादरम् । तद्भाग्यस्यापि हरणं कृतमेव त्वया वद ॥ १३७ ॥

---

1 कथं वा ते भ्रमो भवेत् C

[1] दुष्टचेष्टा समाना ते चेष्टापि खलु सर्वथा । तदानन्दविघाताय प्रवृत्तिस्ते कथं वद ॥ १३८ ॥

हा हताऽहमधुना गतजीवा हा कथं धनमिदं गतमेव ।
हा कथं न करुणा गिरिशस्येत्यत्र दुष्कृतकृता तव वृत्तिः ॥ १३९ ॥

न यमोपि करोति लिङ्गपूजाजनितानन्दविघातमीदृशस्त्वम् ।
सुखपूरविनाशको यमेनाप्यधुना नेय इति स्वपापशान्त्यै ॥ १४० ॥

कृतपापविनाशहेतुभूता यमलोकस्थितिरेव ते न नूनम् ।
तव यातनया विना न मुक्तिः खलु पापस्य शिवार्चनापराधात् ॥ १४१ ॥

हा हा हताहं हतपुण्यराशिः तत्पुण्यराशिश्च कुतो मम स्यात् ।
इत्युच्चकैर्वाचमुदीर्य सैव पपात लिङ्गाङ्गणदत्तदेहा ॥ १४२ ॥

तां दृष्ट्वा शोकसन्तप्तां पतितामवनीतले । ते सर्वे विस्मयं प्राप्ताः किमासीदिति सत्वरम् ॥१४३॥
महेशकृपया सेयं शिवभक्तिपरायणा । जन्मान्तरार्जितं पुण्यं तस्याः खलु महत्तरम् ॥ १४४ ॥
अपारैः पुण्यगिरिभिर्भक्तिरेव प्रजायते । तत्पुण्यपरिपाकोऽपि भक्तिरूपेण वक्ष्यते ॥ १४५ ॥
कानि पुण्यानि चीर्णानि पुरा तेषां फलं कथम् । भक्तिरूपं समासाद्य संपन्नमधुना नवम् ॥
ईदृशी भक्तिरेतस्याः शङ्करानुग्रहात्परम् । समुत्पन्ना न सन्देहः सर्वपापविनाशिनी ॥ १४७ ॥
दुर्लभा भक्तिरस्माकमीदृशी खलु सर्वथा । त्यक्त्वा विषयवांछां सा भक्तिमाप कथं शिवे ॥
आशास्या भक्तिरस्माकमीदृशी खलु दुर्लभा । वांछयापि न तत्प्राप्तिर्मुनीनामपि दुर्लभा ॥१४९॥
तपो घोरतरं प्राप्तं वनेषु मुनिपुङ्गवैः । तथापि तादृशी भक्तिर्न प्राप्ता तत्तपस्यया ॥ १५० ॥
अपाराण्यपि दानानि कृतानि जगतीतले । भूपालैस्तादृशी भक्तिः न प्राप्ता शङ्करे खलु ॥
गोकोटीनां प्रदानेन तादृशी भक्तिरीश्वरे । न भवत्येव सहसा शङ्करानुग्रहं विना ॥ १५२ ॥

तुलाकोटिप्रदानैर्वा तादृशी भक्तिरीश्वरे । न ... विना ॥ १५३ ॥
रत्नराशिप्रदानेन .... विना ॥ १५४ ॥
रत्नाभरणदानैर्वा ... विना ॥ १५५ ॥
दुकूलगिरिदानैर्वा ... विना ॥ १५६ ॥
दिव्यचन्दनदानैर्वा ... विना ॥ १५७ ॥

---

1 मूढचेष्टा C

कर्पूरराशिदानैर्वा ... विना ॥ १५८ ॥

घृतकम्बलदानैर्वा ... विना ॥ १५९ ॥

कन्याकोटिप्रदानैर्वा ... विना ॥ १६० ॥

गजकोटिप्रदानैर्वा ... विना ॥ १६१ ॥

वाजिकोटिप्रदानैर्वा ... विना ॥ १६२ ॥

अन्नराशिप्रदानैर्वा ... विना ॥ १६३ ॥

केन स्वरूपेण महेश्वरोपि भक्तावनाशाय करोति यत्नम् ।
केनापि न ज्ञायत एव नूनं तज्ज्ञानमप्यक्षयपुण्यहेतुः ॥ १६४ ॥

धन्याः कृतार्थाश्च शिवार्चनेन भवन्ति मुक्ताश्च महाघबन्धात् ।
संसारबन्धोपि स नाशमेति महेशलिङ्गार्चनपुण्यलेशात् ॥ १६५ ॥

धर्मास्तु सन्त्येव सहस्रशोपि किं तैः फलं शङ्करपूजनेन ।
यद्यद्भवेत् तत्सममप्यनल्पं न पुण्यमित्यस्ति मतिस्वभावात् ॥ १६६ ॥

अहो महद्भाग्यफलप्रदाने समर्थमेतद्गिरिशार्चनं हि ।
इदं कथं पुण्यमहाब्धिपूरैर्विना भविष्यत्यतिदुर्लभत्वात् ॥ १६७ ॥

एतल्लिङ्गविलोकनेन बहुधा नष्टेषु पापेष्वियं
तल्लिङ्गे बहुपुण्यराशिरधुना क्षिप्तस्ततः शङ्करः ।
सन्तुष्टो गिरिशः स्वभावतः इति ज्ञेयः स लिङ्गार्चनात्
प्रीतः स्यादिति तस्य दिव्यमहिमा ज्ञेयः कथं मादृशैः ॥ १६८ ॥

अस्माभिरपि पुण्येन दृष्टं लिङ्गमिदं शुभम् । ददात्येव न सन्देहः शुभं लिङ्गमिदं यतः ॥ १६९ ॥

शुभप्रदानोद्यतमेव लिङ्गं शाङ्गं न लिङ्गं किमिदं प्रकृष्टम् ।
समर्चितं दिव्यमघौघनाशे वृत्तः परं कौतुकराशिहेतुः ॥ १७० ॥

अच्छेद्यसंसारमहाघपाशविनाशहेतुः शिवलिंगपूजा ।
दृष्ट्वा प्रहृष्टं च मनो निवृत्तः कष्टाम्बुराशिः स च पापराशिः ॥ १७१ ॥

प्रेरिताः स्मः कथं वाद्य महेशेन महात्मना । एतल्लिङ्गं दृष्टमेव प्रकृष्टाघविनाशकम् ॥ १७२ ॥

अस्मत्पुण्यमहाम्बुधिश्च ववृधे विश्वेश्वरानुग्रहात्
लिङ्गं दृष्टमिदं वनेऽपि वनजैरभ्यर्चितं पुण्यतः ।

एतस्मादधिको न लाभ इति मे तावत्प्रवृत्तं मनः
संसारोऽपि नचाधुना भवति नो लिङ्गार्चनालोकनात् ॥ १७३ ॥

नारीणामपि बुद्धिरद्भुततमा लिङ्गार्चनालोकनात्
अस्ता पामरतापि वानरगुणो नष्टोऽपि तुष्टः शिवः ।
तत्कष्टं विलयं गतं किमधुना लिङ्गं वने दृश्यते
कर्पूरागरुचन्दनादिविलसद्गन्धान्वितं शर्मदम् ॥ १७४ ॥

अस्माकं शिवलिङ्गमूर्तिरधुना विश्वेश्वरो दृश्यते
काशीप्राप्तिरनेन तावदधुना संभाविता सर्वथा ।
वीरेशो नवबिल्वपल्लवयुतैर्गंगाजलैरर्चित-
स्तत्पुण्येन किलेदृशं शिवमहाधिष्ठानमालोकितम् ॥ १७५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवपूजाविघ्नकारिणां पातकप्राप्तिवर्णनं नाम द्वात्रिंशोऽध्यायः ॥

---

## अथ त्रयस्त्रिंशोऽध्यायः ।

---

याज्ञवल्क्यः —

इति ते तावदुक्त्वापि गणास्त्रिदशसंयुताः । अतः परं विधेयं वा किमत्येत्यतिविस्मिताः ॥ १ ॥
अस्मद्वाक्याच्च संबद्धानस्मानेव चकार सः । अतः परं किमस्माभिः कर्तव्यं तन्न विद्महे ॥ २ ॥
कथं वा शाङ्कराज्ञायाः कर्तव्यं परिपालनम् । एतां नेतुं वयं तावदशक्ताः कुण्ठिता गतिः ॥ ३ ॥
कदाप्यकुण्ठिता शक्तिः कथमद्यातिकुण्ठिता । किमुत्तरं परं देयमुमाकान्ताय सादरम् ॥ ४ ॥
कथं नाकृतकार्याणामवज्ञा प्रभुसन्निधौ । सा सोढव्या कथं तत्र नन्दिकेशादिसन्निधौ ॥ ५ ॥
शिवाज्ञोल्लङ्घनादेव पापं तावदुपागतम् । तदुल्लङ्घनमात्रेण शङ्करः कुपितो भवेत् ॥ ६ ॥
कुपिते शङ्करे तस्य कोपज्वालाकुलं जगत् । क्षणाद्दग्धं भवत्येव किं कर्तव्यमतः परम् ॥ ७ ॥
अत्युग्रशासनं शम्भोर्यस्मादुग्र इति स्मृतः । उग्रोग्रफालज्वलनज्वालामालाकुलं जगत् ॥ ८ ॥
कोपि तत्कोपजज्वालाशामको नास्त्यतः परम् । किं कर्तव्यं क्व गन्तव्यं गमने वा कुतः सुखम् ॥
न शरण्योऽस्ति लोकेषु कुपिते परमेश्वरे । तत्कोपानलसन्दग्धं ब्रह्माण्डमखिलं पुरा ॥ १० ॥

ब्रह्माण्डमण्डलं दग्ध्वा लीलया परमेश्वरः । क्रीडां करोति शिवया कैलासे मणिमण्टपे ॥ ११ ॥
नायाति सहसा कोपः शङ्करस्य कृपाम्बुधेः । प्रयाति चेत् स कोपः स्यात् ब्रह्माण्डदहनक्षमः ॥
दग्धान्यनेकधा तानि ब्रह्माण्डान्यमितान्यपि । पश्चात् शिवकृपालेशादुत्पन्नान्येव तान्यपि ॥

अपारनारायणनाशकोऽयं अपारवाणीपविनाशकोयम् ।
अपारचन्द्रेन्द्रविनाशकोऽयं मृत्युञ्जयो मृत्युविनाशकोऽयम् ॥ १४ ॥

कल्याणरूपोऽयमुमासहायः कल्याणदाता करुणाकरोऽयम् ।
यद्यद्य दैवात् कुपितस्तदानीं न कोपि संरक्षक इत्यवैमि ॥ १५ ॥

नारायणाद्यमरकोटिविनाशकोऽभूत् यत्कोपजानलकणोपि स देवदेवः ।
अस्माकमद्य सुमुखः स भवेत् कथं वा स्वोक्तेष्टकार्यविलये सति चन्द्रचूडः ॥ १६ ॥

अस्माकं दुरदृष्टमेवमधुना जातं किमिष्टं मया
गन्तुं सत्वरमेव हस्तनिहता साप्यर्थिता कोपतः ।
तत्कोपादपि पापमार्जनमिदं तत्तुङ्गलिङ्गार्चनं
स्वप्ने कर्तुमिहोद्यता पुनरपि क्रीडा निरुद्धा न सा ॥ १७ ॥

ततः परं पुनः स्वप्ने सा ददर्श शिवार्चकम् । तमाह सा शिवरतं प्रणम्य विनयान्विता ॥ १८ ॥

जारिणी —

स्वामिन्नद्याधुना दृष्टं स्वप्ने शङ्करमन्दिरम् । तत्र लिङ्गं मया दृष्टं पूजितं तदनन्तरम् ॥ १९ ॥
मयापि पूजितं लिङ्गं पुष्पाद्यैश्च मनोहरैः । नर्तनं च कृतं तत्र शिवलिङ्गाङ्गणे मया ॥ २० ॥
तदानीं युवती कापि दृष्टा नर्तनलालसा । सखीसमूहसंयुक्ता नानाभरणभूषिता ॥ २१ ॥
तदानीमागतस्तत्र तद्भर्ता मदनातुरः । तामाह युवतीं सोऽपि धृत्वा तत्करमादरात् ॥ २२ ॥
एहि भद्रे गृहं रम्ये हर्म्ये पुष्पविराजिते । विलाससदने स्थित्वा नेया रात्रिर्यथासुखम् ॥ २३ ॥
इति तद्वचनं श्रुत्वा रमणी रमणं प्रति । याहि याहीत्युदासीनवचनैराह सत्वरम् ॥ २४ ॥
उदासीनवचः श्रुत्वा स युवा मदनातुरः । बलादारोप्य योगेन ययौ स्वनगरं प्रति ॥ २५ ॥
ततस्तन्नगरे दृष्टं तया शङ्करमन्दिरम् । ततस्तमाह सा बाला भर्तारं मदनातुरम् ॥ २६ ॥
दृष्टे शिवालये तत्र कर्तव्यं शिवपूजनम् । इदं व्रतं मया बाल्ये स्वीकृतं गुर्वनुज्ञया ॥ २७ ॥
एतद्व्रतपरित्यागे प्राणहानिर्भविष्यति । मर्तव्यं वा मया तत्र न त्याज्यं लिङ्गपूजनम् ॥ २८ ॥

प्राणप्रयाणसमये प्राप्तेऽपि शिवपूजनम् । न त्याज्यमिति मे भक्तिर्जाता बाल्यावधि प्रिया ॥
तद्विघ्नाचरणोद्योगस्त्वया यदि कृतस्तदा । तवापि नरकावासो भविष्यति न संशयः ॥ ३० ॥
शिवलिङ्गार्चने भक्तिर्न भाग्येन विना ततः । उत्पन्नापि शिवे भक्तिर्विघ्निता दुरदृष्टतः ॥ ३१ ॥
संसाररूपविघ्नो यः स तावदनुवर्तते । तत्रापि मध्ये विघ्नोऽयं भर्तृरूपः समागतः ॥ ३२ ॥
कालभेदपरिज्ञानं न ते मदनविह्वल । शिवार्चनस्य कालोऽयमस्तं याति दिवाकरः ॥ ३३ ॥
धिग् धिग्यौवनमेतत्ते धिगाशां युवतीजने । गच्छ गच्छ दुराचार मन्दिरं प्रति सत्वरम् ॥ ३४ ॥
बलान्मां नेतुमधुना यदीच्छसि तदा तव । हानिः संभाविता दग्धो रथोऽप्याशु भविष्यति ॥
यदि ते मन्मथावेशः तदा तां गर्दभीं मृताम् । अनुयाहि रतिं तत्र कुरु तावद्यथेच्छया ॥ ३६ ॥
संसारविरतां नारीं मृतामिव विलोकय । सुरतार्थे यतस्तस्याः सुरते न मतिर्मता ॥ ३७ ॥
मूढास्तत्वं न जानन्ति विरतिश्च न जायते । शङ्करानुग्रहाभावान्महादेवपराङ्मुखाः ॥ ३८ ॥
शङ्करानुग्रहे वृत्ते संसाराद्विरतिर्भवेत् । तदभावे रतिस्तत्र कल्पान्तेऽपि न शाम्यति ॥ ३९ ॥
वार्ताभिरलमेवालं सायङ्कालः प्रजायते । इति तद्वचनं श्रुत्वा सूतं याहीत्युवाच सः ॥ ४० ॥
ततः स ताडयामास हुंकारैः कशया वृषान् । ते न प्रचालिता एव बहुधा ताडिता अपि ॥ ४१ ॥
रथोऽपि भग्नः स तदा तद्भर्ता व्याकुलस्तदा । ततः प्रविष्टा त्वरया सा बाला शिवमन्दिरम् ॥
युवतीं चलितां दृष्ट्वाप्यनुगन्तुं स चोद्यतः । दण्डरुद्ध इवातीव क्रुद्धोऽभूत् प्रतिबन्धितः ॥ ४३ ॥
ततः सा सरसि स्नात्वा शिवालयगता मुदा । उद्धूल्य भस्मनाङ्गानि धृतरुद्राक्षमालिका ॥ ४४ ॥
दुकूलवसना दिव्यैर्हारैरेव महेश्वरम् । पूजयामास सा भक्त्या भस्मना च यथाविधि ॥ ४५ ॥
ततः सस्मार सा बाला पूजाद्रव्यमनुत्तमम् । तदप्राप्यातिदुःखेन प्राह वाचं मनोरमा ॥ ४६ ॥
अहो गौरीपते शम्भो पूजासाधनमुत्तमम् । न प्राप्तमीदृशं भाग्यं दुर्भगायाः कथं प्रभो ॥ ४७ ॥

क्षीरैरपारैर्घृतसंयुतैस्ते लिङ्गं न सिक्तं मधुना च दध्ना ।
न शर्करापर्वतराशिनीरैरिहाभिषिक्तं तव लिङ्गमद्य ॥ ४८ ॥

पुष्पैरनेकैर्घनसारयुक्तैः पाटीरसारैरपि नार्चितं ते ।
लिङ्गं न धूपोद्भवधूमपङ्क्त्या कर्पूरदीपप्रभयापि शम्भो ॥ ४९ ॥

दूर्वाङ्कुरैर्वा न समर्चितं ते लिङ्गं न बिल्वैरपि पूजितं च ।
अतः परं हारसमर्पणेन प्रीतो भवाद्याशु कृपानिधान ॥ ५० ॥

नवोपहारैर्मधुरैश्च पक्वैः फलैश्च नाभ्यर्चितमेव लिङ्गम् ।
तुङ्गं तदेवं भयभङ्गहेतुः संसारभङ्गः कथमद्य वा स्यात् ॥ ५१ ॥

संसारभङ्गाय शिवार्चनानि कुर्वन्ति सन्तः सततं महेशः ।
ददाति मुक्तिं सततं कृपाब्धिः स त्वं महामोहविनाशकोऽपि ॥ ५२ ॥

मोहेन संसाररतिस्ततः स्यात् ततश्च भूयान्नरकादिभोगः ।
ततश्च तन्नाशय मोहमादौ मोहान्धकारार्कसहस्रमूर्ते ॥ ५३ ॥

आर्तिर्नाशमुपैति शङ्करकृपया लिङ्गार्चनात् सन्ततं
लिङ्गाराधनमेव तावदधुना कर्तव्यमित्येव धीः ।
जाता सा कृपया तवैव बहुधा वृद्धिं प्रयाति प्रभो
तद्वृद्ध्या परमिन्दुशेखर न संसारे रतिर्जायते ॥ ५४ ॥

इति स्मृत्वा महादेवं प्रणतापि पुनः पुनः । न सन्तुष्टा शिवार्चायामप्राप्ये साधने सति ॥ ५५ ॥
तदानीमागतः कोऽपि किन्नरः शङ्करार्चकः । शिवार्चनस्य सामग्रीं गृहीत्वा विविधामपि ॥ ५६ ॥
भस्मोद्धूलितसर्वाङ्गं रुद्राक्षाभरणान्वितम् । तमागतं समालोक्य हृष्टा शाम्भवदर्शनात् ॥ ५७ ॥
ततः परं समागत्य लिङ्गपूजां चकार सः । पञ्चामृताद्यैरुत्कृष्टैश्चन्दनैः कुसुमैरपि ॥ ५८ ॥
उपहारादिकैः सम्यक् पूजयित्वा महेश्वरम् । ततः परं गानलोलो गानैः प्रीतं महेश्वरम् ॥ ५९ ॥
चकार गानविद्यायास्तदर्थाभ्यसनादपि । ननर्त नाट्यनिपुणः शिवलिङ्गाङ्गणे स्थितः ॥ ६० ॥
ततः परं समालोक्य बाला पूजितशङ्करम् । एतादृशं कथं भाग्यमिति चिन्तासमाकुला ॥ ६१ ॥
तदानीं व्याकुलां बालां स दृष्ट्वा किन्नरस्ततः । तामाह विनयेनैव किमम्ब व्याकुलेत्यपि ॥ ६२ ॥
खिन्नासि किमिहाम्ब त्वं सर्वखेदहरो हरः । नाराधितः किं खेदस्य वार्तामपि परित्यज ॥ ६३ ॥

संसारदुःखहरमीश्वरमाप दृष्ट्वा लिङ्गं च सायमसकृन्नवबिल्वपत्रैः ।
पुष्पैश्च गन्धसहितैरुपचारशैलैर्मुक्तो भवत्यसकृदेव सकृद्विलोक्य ॥ ६४ ॥

संसारार्णवशोषकं खलु महादेवार्चनं मेनिरे
धन्याः सन्ततमिन्दुशेखरपदाम्भोजार्चनात्यादराः ।
तल्लिङ्गानवलोकने सति भवेद्दुःखं तदालोकने
तद्वार्तापि न सर्वथेति विदितं तल्लिङ्गमालोकय ॥ ६५ ॥

शिवलिङ्गविलोकने रतिः यदि जाता बहुपुण्यपर्वतैः ।
अमितं सुखमश्नुते सदा न च संसाररतिश्च सर्वथा ॥ ६६ ॥

शरीरमासाद्य शिवार्चने चेत् करोति बुद्धिं विबुधः स्वसिद्धिम् ।
प्राप्नोति तत्रापि न संशयोऽत्र मुक्तो भवत्येव शरीरपाते ॥ ६७ ॥

जीवन्मुक्ताः शङ्कराराधकास्ते तेषां दुःखं स्वप्नकालेऽपि नातः ।
दुःखान्यन्तं प्राप्नुवन्त्येव नूनं वार्तां तावत्ते न कुर्वन्ति दुःखे ॥ ६८ ॥

शङ्करे सति च दुःखनाशके शाङ्करस्य कथमीदृशं वद ।
दौर्मनस्यमपि शङ्करो यतो नाशयत्यखिलदुःखसागरम् ॥ ६९ ॥

तत्तद्दुःखपरंपराऽतिमहती संभाविता सर्वथा
यावच्छङ्करलिङ्गपूजनरतिर्नोदेति चित्ते मुहुः ।
सा चेत् लक्षणमेव दुःखनिलयः संभावितः सर्वथा
तद्वार्तापि न जायते खलु सतां विश्वेश्वराराधने ॥ ७० ॥

विश्वेशः स्मृत एव नाद्य सहसा विश्वेश्वरे विस्मृते
न ध्यातं विकटापदाम्बुजयुगं सिद्धेश्वरी न स्मृता ।
चण्डीशोऽपि न विस्मृतः किमिति वा श्रीभैरवो न स्मृतो
दुःखाम्भोधिविनाशकः खलु महादेवः स्मृतो न क्षणम् ॥ ७१ ॥

इति तद्वचनं श्रुत्वा काशीसंस्मरणे सति । विलोकिता न काशीति सापि दुःखसमाकुला ॥ ७२ ॥
हा काशी न मया दृष्टा विश्वेशनिलयो मुहुः । संसारपाशसम्बन्धात् किं कर्तव्यमतः परम् ॥
विश्वेश्वराराधनाय न प्रवृत्तं मनो मम । संसारवार्ताविरतं न मनः पापसश्रितम् ॥ ७४ ॥

श्रीविश्वेश्वरलिङ्गपूजनरतिर्जाता न जन्मान्तरे तेनैवं जननं ममाभवदतो नष्टं वयो मे वृथा ।
हाहा किं हतजीवनेन जननीक्लेशप्रदानोद्यतं व्यर्थं जन्म शिवार्चनाविरहितं कष्टातिकष्टं वयः ॥

कर्पूरगौरचरणाम्बुजरेणुभिर्मे न क्रीडतीत्यपि मनो रमणं परं मे ।
किं जीवितेन शिवपूजनवर्जितेन धिग् धिक् किमेतदधुना किमिहास्ति कृत्यम् ॥ ७६ ॥

विश्वेश्वरो न नत एव न वीक्षितोऽपि बिल्वीदलैश्च कुसुमैरपि नार्चितोऽपि ।
व्यर्थं गतं जननमेतदतः परं किं दग्धे गृहे न फलमस्ति जलावसेकैः ॥ ७७ ॥

हाहा हन्त दुरात्मना कथमभूत् सङ्गोऽपि चित्तं यतः
स्वस्थं नाभवदिन्दुशेखरपदाम्भोजार्चनैः सर्वथा ।
तद् दग्धं भवतु त्रिलोचन पुनर्जन्मान्तरे वा भव-
त्पादाम्भोजरजःप्रसादनिरतं चित्तं ममास्तु प्रभो ॥ ७८ ॥

धिग् धिक्पातकसागराकरमिदं चित्तं धिगाशु प्रभो
त्वत्पादाम्बुरुहार्चनेन रहितं चेतस्तदद्याधुना ।
निर्मूलं भवतु त्वदीयकृपया चित्तान्तरेणान्वये
तेनात्राद्य महेशपूजनरतं चित्तं भवेत् सादरम् ॥ ७९ ॥

हर हर हर पापं पापनाशाय यस्मात् पदमपि शिव शम्भो शङ्करे न प्रवृत्तम् ।
यदि भवति मनस्ते घोरसंसारनाशो भवति भवतु दृष्टिः मय्यनाथे तवेश ॥ ८० ॥

इति तद्वचनं श्रुत्वा किन्नरो विस्मितस्तदा । शिवपूजनसामग्रीं ददौ तस्यै प्रणम्य च ॥ ८१ ॥
सामग्रीं तां समादाय प्रहृष्टा सापि शङ्करम् । पूजयामास यत्नेन पञ्चाक्षरपुरःसरम् ॥ ८२ ॥
ततः स किन्नरः प्राह तामेव नवयौवनाम् । शिवार्चनरतां दृष्ट्वा प्रहृष्टोऽतीव विस्मितः ॥ ८३ ॥

किंनरः —

किमम्बापेक्षितं लोके तद्वदाद्याधुना मम । तत् सर्वमपि दातुं मे शक्तिरस्ति शिवार्चनात् ॥८४॥
अम्ब मां पुत्रभावेन पश्य पश्यातिसादरम् । शिवभक्तासि मे माता त्वं तावदिति मे मतिः ॥
संसारविरतायास्ते शिवलिङ्गार्चने रतिः । समुत्पन्ना ततो नित्यं पूजयस्व महेश्वरम् ॥ ८६ ॥
मनुष्याः प्रायशः सर्वे मताः संसारिणस्ततः । तैः सहैवात्र संवासः पूजाविघ्नो भविष्यति ॥८७॥
विघ्निता यदि पूजा स्यात् पुनः संसारचेष्टया । न शिवार्चनमित्याहुः कर्तव्यं शिवपूजनम् ॥

श्रेयः परं विदुरतः शिवपूजनं तु विघ्नैर्विना भवति चेदभिवाञ्छितानि ।
सिद्ध्यन्ति तावदसकृत्सकृदेव वाऽस्तु तत् सिद्धिदायकमिति प्रवदन्ति शैवाः ॥ ८९ ॥

इति तद्वचनं श्रुत्वा प्रणतं किन्नरं मुहुः । शङ्करं प्राह सा साध्वी श्रीमहादेवसन्निधौ ॥ ९० ॥

राजकन्या —

सन्ति भाग्यान्यपाराणि तेषां संख्या न दृश्यते । शिवाराधनयुक्तानि न भवन्तीति दुःखिता ॥
तेन दुःखेन सततं खिन्नं मम मनस्ततः । तद्दुःखनाशनोपायः चिन्तनीयस्त्वयाऽधुना ॥ ९२ ॥

सन्ति रत्नान्यपाराणि तैरेकं शिवमन्दिरम् । कर्तव्यमिति मे बुद्धिस्तत् कथं स्याद्यदाधुना ॥ ९३ ॥
भर्ता किलातिक्रूरो मे सर्वदा मदनातुरः । स एव शिवपूजायां विघ्नमाचरति स्वतः ॥ ९४ ॥
न तस्य शिवपूजायां वांछा सर्वात्मना यतः । जन्मान्तरेऽपि संसारी स तद्वासनया युतः ॥ ९५ ॥
संसारवासना दुष्टा सा तावद्भूतसन्निधौ । पिशाचनिकराकारा शिवध्यानविरोधिनी ॥ ९६ ॥
पिशाचयोगे मन्त्रेण कदाचित्स्यान्निवारणम् । भविष्यति न संसारवासना विनिवर्तते ॥ ९७ ॥
संसारवासनोन्मत्तास्त्यक्तशंकरपूजनाः । चरन्ति मरणान्ते ते यास्यन्ति यममन्दिरम् ॥ ९८ ॥
शङ्करार्चनहीनेभ्यः कल्पितं यममन्दिरम् । अतस्तद्वासनाक्रान्तास्तत्र यान्ति न संशयः ॥ ९९ ॥
यतते कामिनीयोगं कर्तुं मर्त्यो यथा तथा । न करोति महादेवपूजने मतिमादरात् ॥ १०० ॥

अमृतं खलु तावदक्षरं शिवनामानुगतं तदादरात् ।
न मनः पिबतीति नाद्भुतं रसना तत्सहकारिणी तथा ॥ १०१ ॥

इति श्रुत्वा वचस्तस्याः किन्नरो हृष्टमानसः । तामाह राजतनयां शिवसंविष्टमानसाम् ॥ १०२ ॥
राजकन्या हि सुभगा सर्वलक्षणसंयुता । शिवपूजनसंयुक्ता जाता हि खलु भाग्यतः ॥ १०३ ॥
असंसारी न कोऽप्यस्ति महादेवं विना प्रभुम् । संसारिणो नरा देवाः किन्नराश्चारणा अपि ॥
गन्धर्वा अपि सिद्धाश्च मुनयोऽप्यन्ततस्ततः । असंसारी न दृष्टोऽस्ति सर्वे संसारसंकुलाः ॥ १०५ ॥
आजानिकोऽयं मार्गोऽतस्तन्मार्गस्य निरोधनम् । अशक्यमेव सहसा तत्प्रयत्नो न जायते ॥ १०६ ॥
शङ्करेणैव सृष्टोऽयं संसारः स तु सर्वथा । नापकाराय धन्यानामुपकारोऽपि जायते ॥ १०७ ॥
अभाग्यानां तु संसारे दुःखमेव प्रजायते । तदेकप्रवणानां तु विरतानां न सर्वथा ॥ १०८ ॥
विरतिश्च भवेदेव कालभेदे तथा सति । तेन दुःखेन सहसा विवेको न महात्मनाम् ॥ १०९ ॥
विवेकोऽपि भवेदेव शङ्करानुग्रहात् परम् । तेन संसारदुःखानि न भवन्त्येव सर्वथा ॥ ११० ॥
सन्तानार्थेऽपि संसारे प्रवर्तन्ते मुनीश्वराः । तेन सन्ततिवृद्धिश्चेत् सा सुखाय भविष्यति ॥ १११ ॥
न यस्य सन्ततिस्तस्य पितरो दुःखितास्ततः । तद्दुःखनाशः सन्तत्या भविष्यति न संशयः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । गन्धर्वनगरे कश्चिद्विश्वावसुरिति श्रुतः ॥ ११३ ॥
तस्यैश्वर्यं महत्तस्य कलत्राणि बहून्यपि । तेन संसारवार्तापि त्यक्ता परिणयोत्तरम् ॥ ११४ ॥
ततस्तस्य कलत्राणां संसारेच्छा महत्तरा । जाता तथापि तैः सर्वैः[1] तत्रास्था न कृता तदा ॥

1 सन्त्वासान कृता कथा (C)

तद्भर्तापि न संसारे करोति विरतिं ततः । अकुर्वन्नपि भार्याभिः सङ्गं तु न चकार सः ॥ ११६ ॥
शिवार्चनपरो नित्यं सर्वदा शिवमन्दिरे । चकार वसतिं तत्र शिवापनयनं ततः ॥ ११७ ॥
शिवध्यानानुरक्तस्य ध्यानच्छेदः कदापि न । तथा च तस्य नारीषु जाता न रतिधीरपि ॥ ११८ ॥
एवमेव विनीतोऽपि कालस्तस्य महात्मना । शिवार्चनान्न विरतिः कलत्राणां च तस्य तु ॥ ११९ ॥
तदानीं पितरस्तस्य द्विजवेषमवाप्य ते । समागताः शिवध्याननिरता भूतिभूषणाः ॥ १२० ॥
रुद्राक्षमालावलयास्त्रिपुण्ड्राङ्कितमस्तकाः । महादेव महेशेति वदन्तः सादरं मुदा ॥ १२१ ॥
तान् दृष्ट्वा शिवपूजान्ते प्रहृष्टहृदयस्तथा । आसनानि ददौ तेभ्यः पूजयामास सादरम् ॥ १२२ ॥
ततः परमुवाचापि तान् दृष्ट्वा विनयान्मुदा । कुतः समागतं कुत्र कृतं शङ्करपूजनम् ॥ १२३ ॥

पितरः —

सुमेरुशृङ्गादस्माभिरागतं शिवपूजनम् । कृतं कैलाससदने शिवलिङ्गे शिवात्मके ॥ १२४ ॥
शिवप्रसादसंपन्नाः सर्वदा शिवपूजकाः । नच साध्यं किलास्माकं भुवनेषु विशेषतः ॥ १२५ ॥

शिवप्रसादेन वयं सुराणां पूज्याः सदा प्राप्तसमस्तकामाः ।
सर्वेषु लोकेष्वपि संवसामः स्मृत्या परं तत्र गतिर्न नूनम् ॥ १२६ ॥

अस्माभिरागतं दैवात् स्वर्गलोकमयत्नतः । ततेन्द्रेणार्चिताः सर्वे वयं तावद्यथाविधि ॥ १२७ ॥
ततः परं गताः सर्वे ब्रह्मलोकमनामयम् । तत्रार्चिताश्च सर्वेऽपि ब्रह्मणापि वयं तदा ॥ १२८ ॥
तत्राद्भुतं तदा दृष्टं अस्माभिर्ब्रह्ममन्दिरे । तद्वृत्तान्तं प्रयत्नेन वक्ष्यामः शृणु सादरम् ॥ १२९ ॥
तत्र ब्रह्मसभामध्ये प्रहृष्टाः सर्वदा स्थिराः । प्रफुल्लवदनाम्भोजाः शिवध्यानपरायणाः ॥ १३० ॥
शिवतत्वज्ञानरूपसुधापानादिसुन्दराः । तेषां प्रभावः केनापि ज्ञातुमेव न शक्यते ॥ १३१ ॥
हृदि ध्यात्वा महादेवमानन्दरससंश्रयाः । शिवानन्दनिमग्नास्ते नान्यं पश्यन्ति सर्वथा ॥ १३२ ॥
न शृण्वन्ति कथामन्यां रहस्यं शैवमुत्तमम् । श्रुत्वा तत्र कथारूपसुधया हृष्टमानसाः ॥ १३३ ॥
पञ्चाक्षरजपासक्ताः श्रीरुद्राध्ययनप्रियाः । भस्मोद्धूलितसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः ॥ १३४ ॥
शिवलिङ्गानि दिव्यानि कोमलैर्बिल्वपल्लवैः । कुसुमैरपि मन्दारतरुजैः पूजयन्ति ते ॥ १३५ ॥
ते धन्याः कृतकृत्याश्च सर्वे वैक्लव्यवर्जिताः । शोकवार्तां न जानन्ति शोकस्तेषां न सर्वथा ॥
तत्र केचन विश्वेशं पूजयन्तोऽपि साधनैः । निस्तेजस्काः स्थितास्तेषां मनः शोकसमन्वितम् ॥
तद्वीक्षणेन स्वस्थाश्च खिन्नमेव हि नो मनः । तदा पृष्टो विधिः के ते खिन्ना इत्यस्मदादिभिः ॥

ब्रह्मा —

शृणुध्वं सावधानेन वक्ष्ये तत्क्लेशकारणम् । एतद्देशसमुत्पन्नः कश्चित् शिवपरायणः ॥ १३९ ॥
विश्वावसुरिति ख्यातः सर्वसौभाग्यसंयुतः । सदा शङ्करपूजायां निरतो भस्मभूषितः ॥ १४० ॥
क्षणार्धस्यापि न लयो विना शङ्करपूजया । नित्यं शिवार्चनेनैव वयस्तेन विनीयते ॥ १४१ ॥
न जहाति शिवध्यानं कामुकः कामिनीमिव । युवापि कामिनीसङ्गं न जानात्येव सर्वथा ॥१४२॥
शतं तस्य कलत्राणि तद्यौवनमनुत्तमम् । रूपं च तेषामुत्कृष्टं भाग्यमप्यविनश्वरम् ॥ १४३ ॥
मन्दिराण्यपि पुष्पाणां प्रासादाश्च विशेषतः । गृहशोभा न वचसां विषयः सर्वदा खलु ॥ १४४ ॥
वनक्रीडापि सदने तेषां यदि कदाचन । इच्छा चेत्तद्वनं सर्वं पुष्पवृन्दसमन्वितम् ॥ १४५ ॥
पुष्पाणि यानि यान्यत्र तानि पुष्पाणि तद्वने । तिष्ठन्तु पुष्पशून्यास्तु तरवस्तद्वने तु न ॥ १४६ ॥
मणिसोपानसम्बद्धदीर्घिकाः सन्ति कोटिशः । तस्मिन् वने सुरनदी कुल्यारूपेण वर्तते ॥ १४७ ॥
प्रतिपादपमूलेऽपि पूर्णा गङ्गा ततस्ततः । तद्वनाद्बहिरायाति दीर्घिकास्वपि तिष्ठति ॥ १४८ ॥
स्रग्रूपाण्यपि पुष्पाणि तस्मिन्नुद्यानमण्डले । रत्नन्दिगणाकीर्णं रत्नन्दिध्वजान्वितम् ॥ १४९ ॥
रत्नगोपुरसंयुक्तं रत्नप्राकारमण्डितम् । तत्रास्त्येकं शिवस्थानं रत्नमण्डलमण्डितम् ॥ १५० ॥
तस्मिन्नेव शिवस्थाने लिङ्गं मणिमयं महत् । तिष्ठत्येकं तदुत्पन्नं तद्देवैरपि पूज्यते ॥ १५१ ॥
नागलोकात् समागम्य शेषस्तल्लिङ्गपूजनम् । करोति प्रयतो भक्त्या रत्नैरेव मुहुर्मुहुः ॥ १५२ ॥
तत्र विश्वावसुर्नित्यं करोति शिवपूजनम् । अपारवनपुष्पैस्तैः स्रग्भिरन्वहं मुदा ॥ १५३ ॥
स्वतस्ते तरवः सर्वे पुष्पाण्यानीय कोटिशः । प्रयच्छन्ति प्रयत्नेन शिवलिङ्गार्चनाय ते ॥ १५४ ॥
स तैरभ्यर्चनं कृत्वा तत्फलैरमृतोपमैः । उपहारैश्च संपूज्य तिष्ठत्याहारवर्जितः ॥ १५५ ॥
न तस्य विषये वांछा कलत्राणि न पश्यति । पुत्रपौत्रादिवांछापि तस्य तावन्न जायते ॥ १५६ ॥
तस्यैते पितरः सर्वे तत्कृतेशार्चनादिभिः । तिष्ठन्ति ते तथा खिन्नाः तस्य सन्तत्यभावतः ॥
सन्तत्यभावे तद्वंशे निरुद्धं शिवपूजनम् । तस्मिन्निरुद्धे पातः स्यादस्माल्लोकादतः खलु ॥ १५८ ॥
अधःपातभयादेते खिन्नास्तिष्ठन्ति सर्वदा । न पिबन्ति सुधामेते तेनानन्दो न जायते ॥ १५९ ॥
शिवार्पिता सर्वसुधा तैरन्यस्मै प्रदीयते । किं तया सुधयेत्येव सुधाविच्छेददर्शनात् ॥ १६० ॥
गृहीतयापि सुधया कदाचिन्न सुखोदयः । तत्सन्ततिनिरोधेन दुःखितं तन्मनो यतः ॥ १६१ ॥
अमुमर्थं न जानाति स विश्वावसुरीश्वरम् । पूजयत्यनिशं तस्य नास्ति संसारवासना ॥ १६२ ॥

स शिवार्चनपीयूषपानपीनो निरन्तरम् । तेनाहाररसस्तावत् न ज्ञातोऽपि कदाचन ॥ १६३ ॥

आहारसेवनेनैव यदि पुष्टा भवेत् तनुः । तदा रतिः कलत्रेषु पुंसां भवति वस्तुतः । १६४ ॥

आहारोपि न रोचते खलु सदा विश्वेशपूजारते
चित्ते तुच्छमतिश्च भोगविषये नारीजने दुर्जने ।
धन्यानां शिवलिङ्गमात्रभजनैर्नित्यं वयोयापनं
तत्तावद्धनमित्यवैमि महतां विश्वेश्वराराधनम् ॥ १६५ ॥

इति शिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे विश्वावसुगन्धर्वचरित्रवर्णनं नाम त्रयस्त्रिंशोऽध्यायः ॥

—:x:—

## अथ चतुस्त्रिंशोऽध्यायः ।

—o—

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा वयमप्यतिदुःखिताः । ब्रह्मलोकोऽपि न सुखं किमेवमिति विस्मिताः ॥ १ ॥

अतः सन्ततिरत्यन्तं पावना शुद्धवंशजा । सा पालनीया यत्नेन विद्याविनयसंयुता ॥ २ ॥

शाम्भवी सन्ततिर्भाग्यैर्यदि तावद्भविष्यति । यथा शङ्करपूजायां तुष्टो भवति शङ्करः ॥ ३ ॥

शैवी न सन्ततिर्यस्य तद्वंशे न शिवार्चनम् । तदभावे पतन्त्येव पितरो नरके पुनः ॥ ४ ॥

श्रुतिर्या जायमानो वै ब्राह्मणस्त्रिभिरित्यपि । तथा पूजापि यत्नेन साधनीयेत्यपि श्रुतम् ॥ ५ ॥

तस्मादधीत्य स्नायादित्यपि वेदात् प्रजा परम् । संपादनीया यत्नेन सा सुखाय भविष्यति ॥ ६ ॥

यदिदं पूज्यते लिङ्गं त्वयैतस्य पुनः कथम् । पूजा भवति देहान्ते तव शून्यमिदं भवेत् ॥ ७ ॥

पूजाशून्यमिदं लिङ्गं यस्य तावद्भविष्यति । तद्वंशजा ब्रह्मलोकवासिनोऽपि च्यवन्ति हि ॥ ८ ॥

लिङ्गरूपो महादेवः पूजाभावविनिश्चयात् । तत्पूजकाय मुक्तिं च न प्रयच्छति सर्वथा ॥ ९ ॥

अविच्छिन्नां लिङ्गपूजां यः संपादयितुं क्षमः । तेन पुत्रान् समुत्पाद्य तेन तावन्न मुह्यति ॥ १० ॥

यदि शङ्करपूजायां विरतः सुरते रतः । स याति नरकं घोरमन्यथा सुखमश्नुते ॥ ११ ॥

पुत्राः संपादनीयाश्च शिवनामाङ्किताः प्रियाः । पूजा तैः स्यादविच्छिन्ना लिङ्गत्वात् पूज्यते सदा ॥

इदं लिङ्गं मणिमयं त्वया संपादितं खलु । एतत्पूजा त्वविच्छिन्ना कुले तव महामते ॥ १३ ॥

अतिप्रियमिदं लिङ्गं तवेदं सर्वकामदम् । संपादितं प्रयत्नेन पूजाहीनं कथं भवेत् ॥ १४ ॥

महती यदि पूजा स्यात् लिङ्गेऽस्मिन् बहुसाधनैः । तदा मुक्ते त्वयि स्नेहं करिष्यति सदाशिवः ॥
लिङ्गार्चनमविच्छिन्नं त्वया पुत्रैः कृतं ततः । धन्योऽसीति महादेवः त्वयि तुष्टो भविष्यति ॥
भाग्येन शांभवी तावत्सन्ततिर्भाविनी तव । संपन्ना तव सामग्री न तत्संपादनश्रमः ॥ १७ ॥
कलत्राणां च तारुण्यमधुनाप्यनुवर्तते । न याति यावत् तत्तावत् सुतान् संपादयापरान् ॥ १८ ॥
ते जाताः शिवविद्यां च संपाद्यातिप्रयत्नतः । शिवार्चनरतास्तावद्भविष्यन्ति न संशयः ॥ १९ ॥
तान् दृष्ट्वा तव सन्तोषो वृद्धिं यास्यत्यसंशयम् । शिवभक्तप्रियोऽसि त्वं शिवार्चनरतः सदा ॥
शिवार्चनरतानस्मान् दृष्ट्वा प्रीतिस्तु शांभव । शिवार्चकत्वं सन्तोषबीजमस्मासु दृश्यते ॥ २१ ॥
त्वया सह न संबन्धः कदापि खलु शाम्भव । तथापि शाम्भवत्वेन स्नेहः खलु विजृम्भते ॥
यः कश्चिदस्तु लोकेऽस्मिन् सामान्येनास्ति शाङ्करः । तत्रापि शाम्भवप्रीतिस्तव तावत्प्रजायते ॥
यः शाम्भवोत्तमः स्वीयः तस्मिन् प्रीतिस्तवाधुना । कथं प्रवृद्धा न भवेत् शाम्भवप्रवरे श्रुते ॥
शङ्कराराधकान् पुत्रानपारान् पश्य सादरम् । पौत्रान् प्रपौत्राननिशं स सन्तोषो महान् खलु ॥
यस्तु शाम्भवपुत्राणां सभां पश्यति मानवः । सोऽपि मुक्तो भवत्येव तत्पिता मुक्त एव हि ॥
धन्यस्तस्य पिता धन्या जननी तस्य सन्ततम् । यस्य भक्तिर्महादेवे तत्कुलं धन्यमुत्तमम् ॥ २७॥
यस्मिन् कुले न सञ्जातः शाम्भवाग्रेसरोत्तमः । तत्कुलं पतितं तावन्नरके नात्र संशयः ॥ २८ ॥
तव पुत्रा भविष्यन्ति शाम्भवा एव सर्वथा । न तत्र संशयः कार्यस्तद्बीजमधुनोच्यते ॥ २९ ॥
भूतिरुद्राक्षपूताङ्गीं अङ्गनां शिवतत्पराम् । ऋतुकाले शिवं ध्यात्वा सुरतैः प्रीणयस्व ताम् ॥ ३० ॥
तेन ते शाङ्करा एव कुमाराः कुशला अपि । भविष्यन्ति न सन्देहो यथा तव पितुर्भवान् ॥ ३१ ॥
एवं सति सुखं यत्ते संभवत्यधुना मुहुः । ततः सहस्रगुणितं सुखं तावद्भविष्यति ॥ ३२ ॥
इति तद्वचनं श्रुत्वा विश्वावसुरघापहम् । तथास्त्वित्याह तानादौ पूजयामास सादरम् ॥ ३३ ॥
तद्वागमृतधाराभिः तर्पिताः पितरस्ततः । ते ययुर्ब्रह्मसदनं सन्तोषपरिपूरिताः ॥ ३४ ॥
ततः सोऽपि कलत्रेषु पवित्रेष्वतिशाम्भवः । ऋतुकाले प्रवृत्तोऽभूत् पुत्रार्थं शङ्करं स्मरन् ॥ ३५ ॥
ततः पुत्राः समुत्पन्नाः शङ्करध्यानतत्पराः । जटामण्डलवीताङ्गाः शाङ्गलिङ्गार्चनप्रियाः ॥ ३६ ॥
भूतिरेखालसत्फालान् बालानालोक्य केवलम् । लब्धालकान् प्रहृष्टोऽयं शिवनामजपोत्सुकान् ॥
उमाकान्त महादेव नीलकण्ठ सदाशिव । त्रिपुरान्तक शर्वेति नाम तेषां चकार सः ॥ ३८ ॥
स तानध्यापयामास पुत्रान् शिवरतान् पिता । भूतिरुद्राक्षभूषाढ्यान् गौरीपरिबृंढोत्सुकान् ॥

आदावध्यापयामास रुद्राध्यायमघापहम् । रुद्रसूक्तान्यपाराणि रुद्रनामाङ्कितान्यपि ॥ ४० ॥
शिवस्तोत्राणि पुण्यानि पुण्याः शिवकथास्तथा । शिवधर्मांश्च विविधान् सर्वसिद्धिप्रदानपि ॥
ते सर्वे शिवनामाङ्कशिवभागावबोधनैः । शिवार्चनरता एव जाताः सर्वे सुताः खलु ॥ ४२ ॥
शिवपूजारतान् दृष्ट्वा तान् पुत्रानतिशांभवान् । प्रहृष्टः परमं प्राप सन्तोषं शिवतत्परः ॥ ४३ ॥
विलोक्य तान् मुनीन्द्रांश्च शिवपूजनतत्परः । सन्तोषं परमं प्राप तद्दर्शनविशेषतः ॥ ४४ ॥
कदाचित्स सुतान् दृष्ट्वा शिवपूजनतत्परान् । आलिङ्ग्य स्वसुतान् प्राह जीव जीवेति सादरम् ॥
ततस्तमाहुस्ते पुत्राः प्रणम्य शिरसा मुदा । कृताञ्जलिपुटा दृष्ट्वा सर्वे तातं शिवार्चकम् । ४६॥

कुमाराः —

प्रसीद वद नस्तात शिवधर्मान् सनातनान् । यद्धर्मश्रवणादेव शिवे भक्तिः प्रजायते ॥ ४७ ॥
सर्वारिष्टविनाशश्च पापनाशश्च जायते । जायते संपदां वृद्धिरनुवारमसंशयम् ॥ ४८ ॥
इति तद्वचनं श्रुत्वा पुत्राणां वेदसंमितम् । प्रहृष्टो धन्यमात्मानममन्यत शिवार्चकः ॥ ४९ ॥

विश्वावसुः —

ध्येयः परः शङ्कर एव धीरैः हरिरपरैरपि सेवितोऽयम् ।
अभीष्टदानोद्यत एव नित्यं हाराय धीराय विशारदाय ॥ ५० ॥

मत्तेभप्रगलन्मदोदकधुनीकल्लोलमालाकुला
नीलानीलशिलोच्चयोच्चपरिघासङ्घावृतैर्नीवृतैः ।
व्याप्तापारपुराणि तानि करणान्युत्सृज्य हाराः परं
हारापारविचारसादरमनोवृत्त्या निवृत्त्या चिरम् । ५१ ॥

ध्येयं शङ्करपादपङ्कजमजोपेन्द्रादिभिः सादरं
ध्येयं तत्सदृशं न वस्तु भुवने दृष्टं श्रुतं वा सुताः ।
तद्ध्यानेन सुखाम्बुराशिरसकृत् संवर्धते मानसात्
तस्मादेव भवन्ति तावदसकृच्छोकाः समस्ता अपि ॥ ५२ ॥

तत्पादाम्बुजपूजनेन सुकृताम्भोधिः प्रवृद्धो भवेत्
पापापारदवानलोऽपि सुतरां शान्तो भवेदन्ततः ।
संसारभ्रमराशिनाशकमिदं विश्वेश्वराराधनं
तत्पुत्राश्च निधानमेव निधयस्तेन प्रसूताः खलु ॥ ५३ ॥

देवो महादेव इति प्रसिद्धो देवेषु वेदेष्वपि तं महान्तम्।
आदित्यवर्णं तमसः परस्तात् वदन्ति वेदाश्च मुनीश्वराश्च ॥ ५४ ॥

पुत्रान्यदेवसदृशो न महेश्वरोऽयं देवोत्तमोऽयमिति ते मतिरस्तु नित्यम्।
तत्रान्यदेवसदृशत्वमतिर्यदि स्यात् सा नाशहेतुरिति वेदविदो वदन्ति ॥ ५५ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम्। अस्य श्रवणमात्रेण शिवे भक्तिर्दृढा भवेत् ॥ ५६ ॥
पुरा नारायणस्याभूत् कुमारो मदनाभिधः। तस्यान्यदेवतुल्यत्वमतिरासीन्महेश्वरे ॥ ५७ ॥
सैवाभवन्मतिस्तस्य प्रलयानलमालिका। तामालोक्यापि मदनो दूराद्विह्वलमानसः ॥ ५८ ॥
ययौ वैकुण्ठभवनं यत्र नारायणः पिता। तस्याग्रे कम्पमानोऽसौ नत्वा प्राहातिविस्मितः ॥

मदनः —

महाप्रलयकालोऽयमागतः प्रलयानलः। ततः परं क्व गन्तव्यं को वा स्वशरणं प्रभुः ॥ ६० ॥
पश्य पश्यानलज्वालां दीर्घां प्राप्य दिगन्तरम्। तन्निवारणसामर्थ्यं तव किं नाधुना वद ॥ ६१ ॥
चक्रं प्रेषय यत्नेन तेन वा तन्निवारणम्। गदा वा तद्विनाशाय नोचेज्जीवनमेव नो ॥ ६२ ॥
एतस्मिन्नन्तरे काले ब्रह्मापि समुपागतः। इन्द्रादिदेवैः सहितः सकलैर्वाग्गिरा सह ॥ ६३ ॥
स समागत्य तं प्राह कमलासहितं हरिम्। परिम्लानमुखाम्भोजो मुञ्चन्नयनजं जलम् ॥ ६४ ॥
मन्दं मन्दं गद्गदाभिर्वाग्भिः कम्पाकुलो विधिः। त्यक्त्वा विनयवार्तां हि किङ्करोऽसीति सत्वरम् ॥
पश्य पश्याधुना विष्णो प्रलयानलमागतम्। तत्तेजसा परं तावद्ब्रह्माण्डं नाशमेष्यति ॥ ६६ ॥
अतः परं क्व गन्तव्यमकस्मादयमुत्थितः। प्रलयाग्निः किमस्माभिरपराधः कृते शिवे ॥ ६७ ॥
मया शिवार्चनं कृत्वा स्थितं मत्सदने खलु। अद्यापराधो न कृतः कोपि रुद्राग्निकल्पकः ॥ ६८ ॥
रौद्र एवानलः सोयं सर्वसंहारसाधनम्। एतदुत्पत्तिबीजं किं चिन्तनीयमिहाधुना ॥ ६९ ॥
त्वया न शिवपूजायाः सङ्कोचोऽद्य कृतः खलु। शिवपूजासाधनं वा विस्मृतं न खलु त्वया ॥
म्लानपुष्पप्रदानं वा न कृतं खलु मोहतः। कीटादिदूषितैः पुष्पैर्नार्चितः खलु शङ्करः ॥ ७१ ॥
उद्धूलनं वा न कृतं किं वा शङ्करपूजने। त्रिपुण्ड्रधारणे मन्त्रो नान्यतः पठितः खलु ॥ ७२ ॥
स्वरहीनो न मन्त्रः किं प्रयुक्तः शङ्करार्चने। अक्षालितैर्बिल्वपत्रैरर्चितः किं महेश्वरः ॥ ७३ ॥
भूतिहीनं चन्दनं वा शङ्कराय समर्चितम्। धूपदीपप्रदानं वा नादरेण कृतं त्वया ॥ ७४ ॥
परिष्कारोऽद्य न कृतोऽप्यभिषिक्तो न किं शिवः। दत्तः किमुपहारोऽपि कीटकेशादिदूषितः ॥

शाकादिकं वा न कृतं शिवनैवेद्यसाधनम् । न दत्तं वा घृतं पात्रे पात्रस्य परिशोधकम् ॥ ७६ ॥
पञ्चाक्षरेण न कृतं किं नैवेद्यनिवेदितम् । ध्यानं न वा कृतं सम्यक् वेदमार्गेण शांभवम् ॥
प्रागेव न कृता पूजा महेशस्यातिसादरम् । महेशध्यानसमये नाम्ना ध्यातापि किं मुहुः ॥ ७८ ॥
अंबा नाराधिता भक्त्या तया कमलयाऽपि वा । सा शिवाराधनासक्ता न किमद्य प्रयत्नतः ॥
तया वा लिङ्गपूजायां विलंबः किं कृतो भवेत् । शिवार्चनोपचाराणां लोपः किं वा कृतस्तया ॥
प्रणतिर्विस्मृता किंतु तया ध्यानं कृतं न वा । सांबस्य परमेशस्य भक्त्याऽतिविनयेन च ॥
इति तद्वचनं श्रुत्वा विस्मितो विष्णुरादरात् । प्राह मन्दं स भीतोपि विधिं नारायणस्तदा ॥८२॥

प्राणप्रयाणेऽपि मया कथं वा त्याज्यं शिवाराधनमादरेण ।
त्याज्येषु तावन्न शिवार्चनस्य त्याज्यत्वमुक्तं प्रलयेऽपि नूनम् ॥ ८३ ॥

किं प्राणैर्यदि रक्षितैः यदि महादेवार्चने नादरो ।
देहेनापि किमस्ति कृत्यमधुना दारैर्धनैर्वा सुतैः ।
यस्मिन्नेव कृतं न शङ्भजनं काले तदा किं तनुः
पोष्या किन्तु विसर्जनेन परमं प्राणस्य सौख्यं भवेत् ॥ ८४ ॥

को वा न विहिते काले करोति शिवपूजनम् । आहारमपि सन्त्यक्त्वा विशुद्धजनकोदितः ॥
धिग्जन्म तस्य दौर्भाग्यं येन नाराधितः शिवः । सर्वदेवोत्तमत्वेन ज्ञातो गौरीमनोहरः ॥ ८६ ॥

त्यक्त्वा शङ्करपूजनं यदि मनः पातुं सुधां वा तदा
तत्तावज्ज्वलनप्रविष्टमथवा शस्त्रेण तत् छिद्यताम् ।
किं तेनापि न येन साधु मनसाप्याराधितः शङ्करो
न ध्यातोऽपि निरीक्षितोऽपि मुहुरप्यत्यादरेणेच्छति ॥ ८७ ॥

लब्धं तत्तपसा मनः खलु मया विश्वेश्वराराधनात्
ध्यानार्थं नियमेन तद्यदि शिवध्याने रतं तन्मनः ।
यास्यत्येव लयं न तेन फलमप्यस्यास्ति सर्वात्मना
तद्भारावहमेव शङ्करपदध्यानानुरक्तं न चेत् ॥ ८८ ॥

देहस्यापि विलक्षणेन महता यत्नेन संरक्षणं
तावत्कार्यमुपायकोटिभिरयं यावच्छिवाराधने ।

कर्तव्ये सति मध्ययो यदि भवेत् तत्रानुकूलं सदा
नोचेत् चक्रविघट्टनेन शतधा छिन्नो भवेदेव हि ॥ ८९ ॥

जिह्वा चेदशिवाभिधानमसकृत् कर्तुं प्रवृत्ता तदा
किं तत्कीर्तनमत्र सत्वरमतिक्रूरेण चक्रेण वा ।
शुद्धा सा शिवनामधेयसुधया साध्वी प्रवृत्ता तया
नार्यैवं खलु नाम गृह्यत इति ज्ञातं मुहुः सादरम् ॥ ९० ॥

मन्त्रः कोपि न विस्मृतः शिवपदाम्भोजार्चने सर्वथा
पूजासाधनमार्जितं च बहुधा किं भस्मनोद्धूलनम् ।
त्यक्तं विस्मृतमेव वा किमधुना फाले त्रिपुण्ड्रं विधे
पश्येदं विपुलं विभूतिविपुलश्रीजाललोलं मुहुः ॥ ९१ ॥

यद्यसद्विलयाय मोहतिमिराक्रान्तं भवन्मानसं
तर्हि स्यादशिवार्चनोद्यतमिदं भाग्येऽतिमन्दे सति ।
तद्वृन्दारकवृन्दवन्दितशिवाकान्तांघ्रिपङ्केरुह-
ध्यानानन्दरसाब्धिमग्नमसकृत् सत्यं त्रिसत्यं पुनः ॥ ९२ ॥

गौरीकान्तपदाम्बुजेऽपि शपथस्तावत्कृतः प्राङ्मया
यस्मिन्नेव दिने त्रिलोचनपदध्याने रतं मन्मनः ।
तस्मिन्नेव दिने शरीरमसकृत् छित्वापि कालानले
प्रक्षेप्तव्यमिति प्रबोधसहितः सेयं प्रतिज्ञा मम ॥ ९३ ॥

अन्यत् किं मम कृत्यमस्ति गिरिशध्यानं शिवापूजनं
त्यक्त्वा तौ पितरौ ममेति मुहुरप्यत्यादरादर्चितौ ।
तावेवान्वहमित्यवैत्यपि मनः कस्मै मया तत् पुनः
वक्तव्यं शिवपूजनं प्रतिदिनं कर्तव्यमित्यादरात् ॥ ९४ ॥

किञ्चान्यन्न च रोचते मम शिवध्यानं विना तत्परं
सर्वत्राप्यशिवानि हन्त्यनुदिनं संपत्प्रदानोन्मुखम् ।
सर्वस्यापि शिवं ददाति शिवदं यस्मात्स्वरूपं तथा
सिद्धं तस्य तथा सति प्रियतमं साम्बं परं धीमहि ॥ ९५ ॥

शिवध्यानं तावद्धनमिति मतिर्मे समुदभूत् अतः को वा लोके त्यजति धनमप्यर्जितमहो ।
धनं वा संपाद्यं शिवदशिवपादाम्बुजरजःप्रभावध्यानाख्यं धनमपि महत् दुस्त्यजमपि ॥ ९६ ॥

ब्रह्माण्डप्रलयोत्तरामितशिवक्रीडाश्रमस्वेदजा-
पाराम्भोधिनदीनदादिविलसत्कल्लोलमालाविलैः ।
सृष्टं येन जगत् पुनः पुनरुमाकान्तः स तावन्मया
मायातीत इति स्मृतोऽपि मुहुरप्याराधितः सादरम् ॥ ९७ ॥

इति तद्वचनं श्रुत्वा ब्रह्मा दृष्ट्वा शचीपतिम् । सूर्यादीनपि तानाह क्रोधसंकुलितेक्षणः ॥ ९८ ॥

ब्रह्मा —

भवद्भिस्तावदुन्मत्तैर्न कृतं शङ्करार्चनम् । अत एवागतः सोऽयं महाप्रलयपावकः ॥ ९९ ॥

मया समाराधित एव काले स कालकालो हरिणापि लक्ष्म्या ।
अतः परं तस्य भवद्भिरेव कृता न पूजेति विनिश्चयो मे ॥ १०० ॥

परिशेषत एव निश्चयोऽयं कृत इत्यत्र भवद्भिरेव पूजा ।
न कृता गिरिशस्य सर्वथा तत एवायमुपैति पावकः ॥ १०१ ॥

अहो दुराचाररतैः सुरैर्वा किं किन्नरैर्वा फलमस्ति संख्ये ।
अयं समायाति महानलोऽद्य श्रीकालकालामलफालजातः ॥ १०२ ॥

किं किं विधेयमधुना मधुसूदनाद्य सर्वानशाङ्करपरान् प्रलयानलोऽयम् ।
दग्ध्वा न शान्तिमुपयास्यति मां न मुञ्चेत्येवं भवन्तमपि सत्सुरसङ्गमेन ॥ १०३ ॥

हा हन्त हन्त विषमः खलु काल एव श्रीकालकालकलनारहितः किलायम् ।
गन्तव्यमप्यहह कुत्र किमद्भुतोऽग्निरायाति मृत्युगणसन्निभ एव नूनम् ॥ १०४ ॥

दारैः सहाद्य भुवनानि विसृज्य दूरे गन्तव्यमेव गमने प्रबलोपि दैवात् ।
नायाति चेदिह खलु प्रलयानलोऽपि स्याज्जीवनं खलु दिगन्तनिवासतो वा ॥ १०५ ॥

विश्वावसुः —

इत्युक्त्वा हरिणा साकं कुटुम्बेनान्वितेन सः । स्वपुत्रेण ययौ देवैः सपुत्रैर्विनयान्वितैः ॥ १०६ ॥

सकुटुम्बाः सुराः सर्वे सपुत्राः सानुगा अपि । ययुः पातालमेवाशु विनाशभयविह्वलाः ॥ १०७ ॥

तानागतान् फणिपतिर्दृष्ट्वा नारायणादिकान् । अतिखिन्नानुवाचेदं किमासीदिति सत्वरम् ॥

देवाः —

अस्मास्वेकेन केनापि प्रायशो न शिवोऽर्चितः । अतः प्रलयकालाग्निः सुरनाशार्थमुत्थितः ॥
यस्यां सभायामेको वा पातकी सा सभा परम् । निन्द्या तावद्बहिः कार्या तत्संयोगेन वस्तुतः ॥
एवमेव सुरः कोऽपि शङ्करानर्चको यदि । तदा सुराणां सर्वेषां विनाशः समुपस्थितः ॥ १११ ॥
अतो न शरणं लोके शङ्करानर्चकान्वयात् । अस्माकमित्यागतं च तद्भीत्या तव मन्दिरम् ॥
अमिता सा विपज्ज्वाला प्रलयानलनाशने । स्तम्भे नैव समर्थास्ते कुरु यत्नं तथा फणिन् ॥
प्रायः कृतोपि यत्नस्ते विफलोऽद्य भविष्यति । रुद्रकोपानलस्तम्भे कः समर्थो जगत्त्रये ॥ ११४ ॥
अस्माकं कुण्ठिता शक्तिः शिवानर्चकसङ्गमात् । अतः परं क्व गन्तव्यमत्राप्यायाति चेत् तथा ॥
कूर्मस्तिष्ठति यत्रैव तत्रापि गमने स तु । रुद्रकोपानलो देवान् न त्यक्ष्यति न संशयः ॥ ११६ ॥
अकाण्डप्रलयः कोऽयमद्य तावदुपागतः । इत्युक्त्वा कूर्मनिलयं प्रापुर्नारायणादयः ॥ ११७ ॥
स कूर्मः प्राह तान् भीतान् दृष्ट्वा नारायणादिकान् । किमत्रागतमित्युच्चैर्मेघगम्भीरया गिरा ॥
तमाह हरिरित्युच्चैः किं क्रुद्धः क्रूरकर्मणा । प्रलयानलभीतानां दृष्टमागमनं [1] किमु ॥ ११९ ॥
पृष्टं न कुशलं किंचित् किमेवमुचितं खलु । आर्तायार्तिप्रदानेन पुनरार्तिर्भविष्यति ॥ १२० ॥
तन्निवर्तनचिन्तापि कापि कार्या त्वया खलु । इत्युक्तः सोऽपि हरिणा कूर्मः प्राह पुनः सुरान् ॥

कूर्मः —

येन नाराधितो रुद्रः तन्नाशाय परं महान् । रुद्रकोपानलो जातः सर्वधर्मविनाशकः ॥ १२२ ॥
रुद्रकोपानलो वेद सर्वज्ञो रुद्रदूषकम् । स तं संहृत्य सहसा प्रयास्यति न संशयः ॥ १२३ ॥
सर्वेषामपि नाशाय न प्रवर्तति सर्वथा । स महाप्रलयः कालः सोऽयं येन भयं भवेत् ॥ १२४ ॥
इति तद्वचनं श्रुत्वा विस्मितो हरिराह तम् । सम्यगुक्तमिति प्रीतः स विचाररतोऽभवत् ॥ १२५ ॥
महेशानर्चनं येन कृतं वा शिवदूषणम् । तन्नाशाय समुत्पन्नः सोऽयमित्यवधारितः ॥ १२६ ॥
यन्नाशायायमायाति रुद्रकोपानलो महान् । स बहिष्कार्य एवास्ते तेन स्यात् सुखिनो वयम् ॥
एकार्थमद्य सर्वेषां नाशः सद्यः कथं भवेत् । अतः परं शिवद्रोही कः सुरेष्विति निश्चयः ॥ १२८ ॥
न दिव्येन विना तावत् तस्य तावद्विनिर्णयः । दिव्यं किमस्ति वा तीक्ष्णं इति चिन्ता प्रजायते ॥
इति तावद्विचारेण तप्ततैलनिमज्जनम् । परमं दिव्यमित्युक्त्वा सृष्टो नारायणस्तदा ॥ १३० ॥

---

1 न किं C

ततः परं समाहूय लक्ष्मीकान्तं शिवार्चकम् । चतुर्मुखं समालोक्य प्राह सन्तुष्टमानसः ॥ १३१ ॥

नारायणः —

दिव्येन निर्णयस्तावदशैवस्य भविष्यति । तेनैव तावत्तन्नाशो भवत्वलादरेण किम् ॥ १३२ ॥

अशैवादरमात्रेण सर्वनाशो भविष्यति । नरकेष्वपि चावासो भविष्यति न संशयः ॥ १३३ ॥

किमशैवादरेणापि कार्यमत्र विलक्षणम् । तन्निर्णयोत्तरं तस्य [1]आर्तनाशो भविष्यति ॥ १३४ ॥

अशैवनाशनायाहं सृष्टः शङ्करलिङ्गवान् । अतो मदीयकार्यस्य न कर्ताऽन्यो भविष्यति ॥ १३५ ॥

न शिवद्रोहिणां सङ्गो मङ्गलाय भविष्यति । अमङ्गलपरत्वेन तत्सङ्गो निश्चितो यतः ॥ १३६ ॥

अलं किलाशैवजनानुरञ्जनैः महाघसंपादनहेतुभूतैः ।
[2]तत्सङ्गमेनाखिलदुःखभोगो भविष्यतीत्येव विनिर्णयो मे ॥ १३७ ॥

अशैवसङ्गादपि [3]नाशयत्नः कृतो ध्रुवं चेन्नफलश्च यत्नः (?) ।
सुखाय तावद्भवतीति मन्ये धन्योऽपि तेनैव भवामि नूनम् ॥ १३८ ॥

अशैव एवाखिलपापरूपः तन्नाशनायाद्य कृतः प्रयत्नः ।
सुखप्रवाहान् जनयत्यवश्यं तन्नाशनोपायविनिश्चयोऽस्ति ॥ १३९ ॥

यत्राशैवाः सन्ति तत्रैव गत्वा चक्रं तावत्तच्छिरःकृन्तनानि ।
कृत्वा तावद्दूरमायाति गत्वा तस्याशक्तिः कुण्ठिता तत्र नूनम् ॥ १४० ॥

प्रबलारिविनाशनाय चक्रं गिरिशेनापि पुरा तथैव सृष्टम् ।
प्रबलारिरशाङ्करिस्ततः स्यात् खलु चक्रेण विनाश एव तस्य ॥ १४१ ॥

चक्रेणाशैवनाशे कथमपि न सुखाभाववृत्तिर्भवित्री
तेनानन्दप्रवृत्तिर्भवति च बहुधा तद्विनाशाय चक्रम् ।
उद्युक्तं चेति मन्ये सततमपि न तत्कृत्यमन्यत् किमेवं
दुःखं नो भावि रौद्रादपि दहनकुलादन्यतो वा यमाद्वा ॥ १४२ ॥

धन्यं जीवनमेव तावदधुना विश्वेश्वराराधन-
ध्यानैस्तद्विमुखं च साधनपरं चित्तं यतो जायते ।

---

1 मत्तो नाशो C  2 वशङ्गमेना C

3 नाशनाय यत्नः कृतश्चेत्सफलं न मत्यं C

[[1] पुण्यैरेवमुपार्जितं खलु मनस्तेनास्य तोषो महान्
वृद्धिं यास्यति संपदा सह तदा श्रीविश्वनाथेच्छया] ॥ १४३ ॥

इत्युक्त्या स हरिस्तत्र चतुर्मुखमुदीक्ष्य च । वृद्धिं यास्यति सद्यश्च संग्रहेण मयोदितम् ॥ १४४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे देवानां पातालगमनवर्णनं नाम चतुस्त्रिंशोऽध्यायः ॥

## अथ पञ्चत्रिंशोऽध्यायः ।

याज्ञ्यवल्क्यः —

इत्युक्त्वा स हरिस्तत्र चतुर्मुखमुखान् सुरान् । तत्रैव दिव्यसामग्रीसंपादनरतोऽभवत् ॥ १ ॥

ततः संपाद्य सामग्रीं दिव्यस्य स हरिस्तदा । तप्ततैलकटाहेषु प्रविष्टः स्वयमास्तिकः ॥ २ ॥

महेश्वरानर्चनदूषणाद्यैः जातानि पापानि लयं प्रयान्तु ।
अनेन दिव्येन ममेति मत्वा तेषु प्रविष्टः कमलान्वितोऽपि ॥ ३ ॥

पश्चाच्चतुर्मुखस्तत्र प्रविष्टस्तदनुज्ञया । सरस्वत्या सह प्रीत्या शिवपूजापरायणः ॥ ४ ॥

इन्द्रः पुलोमजायुक्तो जयन्तेन समन्वितः । तप्ततैलकटाहेषु प्रविष्टस्तदनुज्ञया ॥ ५ ॥

सूर्यादयः प्रविष्टास्ते स्वकुटुम्बसमन्विताः । स्वपुत्रैरपि संयुक्ताः स्वदायादसमन्विताः ॥ ६ ॥

तदा तेषु प्रविष्टांस्तान् कटाहेषु सुरान् मुहुः । पश्यन् खिन्नाननो जातो मदनः शिवदूषकः ॥

ततः सर्वे समुत्थाय कटाहेभ्यः प्रहर्षिताः । तान् दृष्ट्वा सुतरां खिन्नो मदनो विनताननः ॥ ८ ॥

ततस्तं मदनं दृष्ट्वा दुष्टं नारायणस्तदा । प्राह तं मदनं मत्तं शिवनिन्दानलाश्रयम् ॥ ९ ॥

नारायणः —

रे रे मदन दुर्वृत्त किं त्वया दूषितः शिवः । अयं प्रलयकालाग्निस्त्वदर्थं समुपागतः ॥ १० ॥

रे रे मार दुराचार दुष्ट शिष्टविदूषक । शिवः शिवप्रदानेन न ज्ञातो निन्दितः कथम् ॥ ११ ॥

सर्वामराधीश्वरमिन्दुखण्डकरप्रसादाकरशेखरं तम् ।
जानन्ति सर्वे मुनयः सुराश्च स निन्दितः किं स्वविनाशकाले ॥ १२ ॥

---

1 इदं पादद्वयं C कोशेऽधिकम् । अस्य स्थाने मूले समनन्तरानुष्टुप् पठ्यते मूले ।

अकालमृत्युः खलु कालकालनिन्दानलो नूनमुपैति दूरात् ।
तेनैव दाहो भविता तवेति हा तात किं दुष्कृतमीदृशं ते ॥ १३ ॥

मनोहरः सुन्दरविग्रहोऽसि सौन्दर्यराशिस्त्वमिह त्रिलोक्याम् ।
कथं तवासीत् गिरिशापराधः हा पुत्र हा पुत्र हतो हतोऽसि ॥ १४ ॥

इदं न विज्ञातमहो विचित्रं पुत्रोऽसि शत्रुत्वमुपागतोऽसि ।
त्रिणेत्रनिन्दाकरणेन तावत् चक्रप्रवृत्तिस्त्वयि नोचिता किम् ॥ १५ ॥

महेशनिन्दाकरणोद्यतानां नाशाय चक्रं खलु सृष्टमादौ ।
अतः परं चक्रमिदं शिरस्ते हत्वा शमं यास्यति वह्नितुल्यम् ॥ १६ ॥

को वा जीवितुमिच्छति त्रिनयनाहङ्कारशङ्काकरो
रङ्कानेव स पश्यति त्रिपुरभूतापानलो लीलया ।
सर्वानप्यमरानपारकुशलः श्रीकालकालोऽप्ययं
कस्तेनास्ति समः सुरेषु स शिवो देवाधिदेवो भवः ॥ १७ ॥

खद्योतानिव पश्यति त्रिनयनस्त्वस्मान् सुरान् सर्वथा
को वा तद्गणनीयतामुपगतो यद्भृत्यभृत्यैरपि ।
ब्रह्माण्डः प्रलयः कृतोपि बहुधा दग्धाः सुराः सोरगाः
पूर्वं शङ्करनिन्दया भ्रमवशात् तेनापि तुल्योऽस्ति कः ॥ १८ ॥

श्रीविश्वेश्वरसागरे वयममी नीराणवः केवलं
कः कालोपि पुरन्दरो विधिरपि व्यग्रस्तथैवास्म्यहम् ।
तत्कंपेन परं नयामि दिवसान् मां कालकालः कदा
कर्तुं वांछति कालपाशवशगं क्रोधानलेनेत्यपि ॥ १९ ॥

अन्धास्तावदमी वयं सुरगणाः सर्वेऽपि वेदास्तथा
गन्धर्वा अपि किन्नराश्च मुनयः सिद्धाश्च तद्वैभवम् ।
पारावार इवामरैरपि न विज्ञातोऽप्यतस्तत्त्वतः
तं देवं भवमप्रमेयविभवं गौरीधवं भावयेत् ॥ २० ॥

यत्फालानलकोटिकूटपटलासङ्गस्फुलिङ्गाङ्कज-
ज्वालाजाललवोऽपि लोकविलयं कर्तुं प्रवृत्तोऽधुना ।

तत्सामर्थ्यमपारवेदनिकरागम्यं च रम्यं महत्
काम्यं चेति न कामनाविषयतां प्राप्तः स देवः शिवः ॥ २१ ॥

वक्तुं कोऽपि सहस्रकोटिरसनाजालाश्रयो वा स्वयं
सामर्थ्यं गिरिशस्य शक्त इति वा बुद्धः प्रबुद्धो भवेत् ।
तं वेदान्तवचोविचारनिरतव्यापारसारं हरं
वन्दे शङ्करमिन्दुशेखरमुमाहारादरं सादरम् ॥ २२ ॥

धिग् धिग्जीवनमेव मार तव किं तन्निन्दया जीवनं
किं मेरोरपि निन्दकः परमणुर्हा हा कुबुद्धिः कथम् ।
वृत्तान्ते विलयाय केवलमियं सा मृत्युरित्येव ते
तन्निन्दामतिरित्यवैमि धिगिदं ते जीवनं दुर्मते ॥ २३ ॥

इति तद्भर्त्सनोद्युक्ते सति नारायणे तदा । विधिराह हरिं कोपाद् भ्रुकुटीकुटिलाननः ॥ २४ ॥

ब्रह्मा—

किं दृश्यते तच्छिवनिन्दकास्यं तवापि किं दुर्मतिरेवमासीत् ।
पापिष्ठवर्यः शिवनिन्दकोऽयं तद्दर्शनेनाप्यघकोटयः स्युः ॥ २५ ॥

लोके कोऽपि न दृष्ट एव बहुधा देवेषु चान्येषु वा
गौरीनायकनिन्दकोऽत्र सदनं त्यक्त्वा प्रमत्तं परम् ।
एतत्संहरणाय तावदधुना ब्रह्मास्त्रमप्यागतं
अन्यज्जीवनमस्य नेति विदितं तज्जीवनाशं त्यज ॥ २६ ॥

चक्रेण त्रिपुरारिनिन्दकमुखच्छेदेन तज्जिह्वया साकं तन्मुखमप्यमेध्यपतितं दृष्ट्वा प्रहृष्टा वयम् ।
यामो याम्यपदं प्रयातु मदनस्तद्दूतपादाहतः तत्तत्क्रूरनखाग्रदारितवपुः पापैः परं तिष्ठतु ॥ २७ ॥

इति तद्वचनं श्रुत्वा कमलाकुललोचना । कमला कमलाकान्तमशान्तं मन्दमाह सा ॥ २८ ॥

कमला—

अनेन यद्यप्यपराध एव कृतः शिवाकान्तविनिन्दकेन ।
एतद्विनाशाय कथं प्रवृत्तिः पितुस्तवापीति निवृत्तिरिष्टा ॥ २९ ॥

शिवार्चनायायमिह प्रवृत्तः कर्तव्य एवाशु विलम्बमात्रम् ।
विहाय सोऽयं ससहाय एव करोतु विश्वेश्वरपूजनञ्च ॥ ३० ॥

विश्वेश्वराराधनसक्तचित्तं कुमारमेनं कुरु मारमाशु ।
एतत्समः कुत्र सुतोऽस्ति लोके पश्यास्य सौन्दर्यमपारमेव ॥ ३१ ॥

कथं पुरा शिक्षित एव नायं त्वया विरूपाक्षसमर्चनाय ।
अशिक्षया तावदयं किलासीद् विश्वेशनिन्दानिरतोऽयमाशु ॥ ३२ ॥

पित्रा सुतः शिक्षित एव बाल्ये सदा सदाचाररतः परं स्यात् ।
दोषस्तवायं जनकस्य नूनं दुःखं कथं वा तव साधुना(?)पि ॥ ३३ ॥

पुत्रः शांभवविद्यया यदि भवेद् दैवात् पवित्रस्तदा
तत्पुत्रानवलोकनेन जनकः किं जीवनं वांछति ।
स्वस्यापीति कथं न ते मतिरभूत् पूर्वं सुतः शिक्षितः
तातानन्दसमृद्धिहेतुरिति किं न ज्ञात एवादरात् ॥ ३४ ॥

हाहा मारसमः कथं भुवि भवेत् पुत्रस्त्रिनेत्रार्चकः
सोयं चेदमृतोऽमृतामृतमयं भाग्यं ततः किं भवेत् ।
एतद्भाग्यसमं न भाग्यमिति मे भात्येव सा दुर्भगा
यत् पुत्रस्य न फाललोचनपदाम्भोजार्चनात्यादरः ॥ ३५ ॥

इति तद्वचनं श्रुत्वा हरिः खिन्नः पुनः पुनः । खेदाश्रुलोलनयनः कमलामाह दुःखिताम् ॥ ३६ ॥

शङ्करार्चनपरो भव मार प्रातरित्यपि मुहुर्मुहुरुक्तः ।
सुप्त एव बहुधा न करोति प्रातरिन्दुमुकुटाभरणार्चाम् ॥ ३७ ॥

शिक्षितोऽपि बहुधा मदनोऽयं नेशपूजनरतो रतिलोलः ।
दुर्भगोऽय मतएव लयोऽस्य प्राप्त एव दुरदृष्टवशेन ॥ ३८ ॥

शाङ्गलिङ्गकलनं मदनो मत्सङ्गमेऽपि न करोति कुशीलः ।
दुर्भगोऽयमतएव न सायं शङ्गलिङ्गभजनं न करोति ॥ ३९ ॥

किं करोमि कमले मम भाग्यं तादृशं खलु न जातमपारम् ।
येन मत्तनयतामुपयातो नाभवद्गिरिशपूजनशीलः ॥ ४० ॥

शङ्करार्चनपरो यदि मारः किं कुमारगणनापि मम स्यात् ।
किन्तु केवलमयं शिव एवेत्यादरो हरपदेऽपि शपामि ॥ ४१ ॥

[1]शूलपाणिचरणाम्बुजपूजाजीवनो यदि सुतोऽपि न जातः ।
दुर्भगः खलु स एव पिता स्यात् इत्यवैमि कमले स कुशीलः ॥ ४२ ॥

मारस्यापि यदि त्रिलोचनपदाम्भोजार्चनेऽत्यादरः
तर्हि स्यात् कुशली सदाप्यहमहो मे कालभीतिः कुतः ।
भीतिर्मे प्रलयानलादपि तथा भाग्यं कुतः स्यादिदं
भाग्यं शङ्करपूजनैरगणितैः स्यादित्यवैमि प्रिये ॥ ४३ ॥

एतद्रक्षणसाधनं न कमले विश्वेश्वराराधने
जातं पूर्वमतः परं किमधुना तन्नाशकाले सति ।
किं तत्पूजनयोग्यतापि दहनाक्रान्ते कथं मन्दिरे
कूपः स्यात् खनितो जलेन स कथं तच्छान्तिहेतुर्भवेत् ॥ ४४ ॥

इति तद्वचनं श्रुत्वा कमला व्याकुला मुहुः । विललाप तया साकं रती सुरतलालसा ॥ ४५ ॥
तद्विलापं परं श्रुत्वा विललाप पुलोमजा । वाणी च चुकुशुर्देवाः किन्नरा अपि चुक्रुशुः ॥४६॥
तद्रोदनध्वनियुताः सर्वेऽपि गिरिकन्दराः । प्रतिध्वनिसमाक्रान्ताः ते विलापाकुला इव ॥ ४७ ॥
चकम्पे वसुधा चेलुः शैला अपि कुलाचलाः । दिग्दन्तिनः सशेषास्ते सकूर्मा अपि सिन्धवः ॥
ध्वनिः श्रुतस्तदैवासीत् गौर्या कैलासमन्दिरे । सापि कम्पसमाक्रान्ता जयामाह विचक्षणाम् ॥

गौरी —

जये कोऽयं ध्वनिः कस्मादुत्पन्नः कम्पसाधनम् । किं कैलासाचलस्यापि वार्ताप्यन्यस्य का भवेत् ॥
सप्तपातालमूलानि भित्वा मूलानि केवलम् । कैलासस्यास्य तिष्ठन्ति कम्पः कस्मादभूद् वद ॥
रोदनध्वनिरेतावान् न शान्तो गिरिगह्वरे । कथमद्य समुत्पन्नः प्रलयः किमुपागतः ॥ ५२ ॥
महाप्रलयकालीनध्वनितुल्यो ध्वनिः खलु । समुत्पन्नोऽयमधुना किं भविष्यति तद्वद ॥ ५३ ॥
इति तद्वचनं श्रुत्वा जयाप्यत्यन्तविस्मिता । तामाह गिरिजे नाहं जानामीति विशेषतः ॥ ५४ ॥
ततः परं शनैराह गिरिजां विजये जये । गिरिशो वेद सर्वज्ञः प्रष्टव्य इति सादरम् ॥ ५५ ॥
ततस्तामाह विजया गिरिजे क्व महेश्वरः । क्वाहं साकं महेशेन वक्तुमिच्छामि वा कथम् ॥५६॥
अधुना शङ्करः प्रायः कुपितोऽप्यन्यथा कथम् । कैलासाचलकम्पोऽपि धराकम्पोऽपि वा शिवे ॥

---

1 अयं श्लोकः C कोशेधिकः ।

प्रायः सुरेषु यः कोपि दुरात्मा त्रिपुरान्तके। चकार सुरसामान्यमतिं स्वनिलयोद्यतः ॥ ५८ ॥

देवादिदेवो गिरिशे धवस्ते सर्वामराराध्यतमः ससोमः ।
अवाप्तकामोऽन्यसुरासमानस्त्रिलोचनोऽपीति वदन्ति वेदाः ॥ ५९ ॥

तं कालकालं विदुरिन्दुमौलिमतः स मृत्युञ्जय इत्यपारैः ।
वेदान्तवाक्यैः स्तुत एव तेन तुल्यो न कोऽप्यस्ति सुरेषु गौरि ॥ ६० ॥

सुराः परं शङ्करकिङ्करास्ते सर्वेप्युपेन्द्रेन्द्रचतुर्मुखाद्याः ।
तज्जन्मनाशस्थितिहेतुभूतः स भूतनाथः खलु विश्वनाथः ॥ ६१ ॥

यल्लीलया विष्णुचतुर्मुखाद्याः सर्वे सुराः स्थावरजङ्गमाद्याः ।
जन्म स्थितिं नाशमपि प्रयान्ति भवन्ति भूयो भवपूजकास्ते ॥ ६२ ॥

अपारमैश्वर्यमुमे शिवस्य महेशदृष्टिप्रसराश्रयो यः ।
स एव धन्यो जगतीतलेऽस्मिन् स देवगन्धर्वसमर्चितोऽपि ॥ ६३ ॥

अपारकल्याणगुणार्णवस्य महेश्वरस्यामितविक्रमस्य ।
को वा समः स्याद् भुवनेषु गौरि स सर्वदेवार्चितपादपद्मः ॥ ६४ ॥

क्षणेन नारायणपद्मजादीन् सुरान् समुत्पाद्य स पालनं च ।
कृत्वापि संहारवशान् करोति स्वलीलया केवलमिन्दुमौलिः ॥ ६५ ॥

उमे तपस्तावदपारमेतत् तवापि येनेन्दुकलावतंसः ।
भर्ता तवासीत् सकलापि दासीदासाः सुरास्ते हरिपद्मजाद्याः ॥ ६६ ॥

इदं महद्भाग्यमहो भवानि प्राप्तं त्वया शङ्करपूजनेन ।
इतोऽधिकं किं वद भाग्यमम्ब लम्बोदरस्ते सुसुतः कुमारः ॥ ६७ ॥

अम्बास्माकमिदं परं खलु महद्भाग्यं सभाग्या वयं
त्वत्पादाम्बुरुहावलोकनसमुत्पन्नोरुधर्माश्रयाः ।
धर्मा एव जगत्त्रयेऽपि बहुधा मान्यास्त्वदीया वयं
किं न स्यात् कृतकृत्यतामुपगतास्त्वत्पादुकाराधकाः ॥ ६८ ॥

आद्या शक्तिरुमे त्वमेव जननी लोकस्य शर्वप्रिया
त्वल्लीलेयमुमासहायचरणाम्भोजार्चकाः केवलम् ।

स्रष्टुं च प्रलयं च कर्तुमसकृच्छक्ताः स्थितिः सा परं
शक्तिः शङ्करलीलयैव भवतीत्यस्माकमासीन्मतिः ॥ ६९ ॥

भाग्यं ते गिरिराजराजतनये किं वर्णनीयं मया
यद्वेदान्तगणैरपि प्रथमतो न ज्ञेयमेवामरैः ।
गन्धर्वैरपि किन्नरैरपि तथा सिद्धैर्मुनीन्द्रैरपि
दुर्ज्ञेयं खलु तन्न पारसहितं तन्नाशवार्ताऽपि वा ॥ ७० ॥

एवं संभाषणेनैव युगास्तावद्गतास्ततः । शिवनिन्दानलज्वाला प्रविष्टा सुरमन्दिरम् ॥ ७१ ॥
वैकुण्ठलोकं संप्राप्ता सत्यलोकं ततः परम् । स्वर्गलोकं ततः प्राप दिगन्तानपि सत्वरम् ॥ ७२ ॥
ततः परं प्रविष्टा सा पातालं भोगिमन्दिरम् । कम्पयामास शेषेण प्रपलाय्यागतं ततः ॥ ७३ ॥

सा सप्तपातालविभेदनेन संप्राप कूर्मं स च कम्पमाप ।
ततः स कूर्मः प्रलयानलाम्भः प्राहातिमन्दं प्रणयातिनम्रः ॥ ७४ ॥

कूर्मः —

नमो नमस्ते प्रलयानलाय नदीनदाम्भोधिविशोषकाय ।
भूमण्डलाखण्डलनाशकाय शैलेन्द्रशृङ्गाग्रविनाशकाय ॥ ७५ ॥

नमो नमः फालविलोचनाग्निप्रभूतसूक्ष्मावयवाय तुभ्यम् ।
तवाहुतिः स्याज्जगदेव नूनं आपोशनायाब्धिजलं समस्तम् ॥ ७६ ॥

नारायणः स्यादुपदंश एव चतुर्मुखाधेयतया प्रसिद्धः ।
लेह्यस्तवेन्द्रः तव शक्तिरेवं नमो नमस्ते वरद प्रसीद ॥ ७७ ॥

कालानलत्वेन जगत्त्रयेऽपि नमः प्रसिद्धाय नमो नमस्ते ।
अथाधुनैव प्रणतार्तिनाशं कुरु प्रसीद प्रणतोऽस्मि नित्यम् ॥ ७८ ॥

आर्तार्तिनाशाय तव स्वरूपं सुकल्पितं फालविलोचनेन ।
स सत्यसङ्कल्प इति प्रसिद्धः तस्मै नमस्तेऽस्तु पुनर्नमस्ते ॥ ७९ ॥

येनापराधोऽस्ति कृतः स एव विनाशनीयः स न रक्षणीयः ।
तद्रक्षणे प्रत्युत नाश एव स्वस्यानुकूल्यं खलु तत्र नेष्टम् ॥ ८० ॥

सर्वस्वतन्त्रं तमुमासहायं मन्ये तदन्यं परतन्त्रमेव ।
त्वं विष्णुरिन्द्रोऽपि विधिर्यमोऽपि सूर्योपि चन्द्रोप्यहमेव नित्यम् ॥ ८१ ॥

अत्राप्यहं स्थापित एव पूर्वं महेश्वरेणैव यमान्तकेन ।
अतस्तवाज्ञावशगाय मह्यं दया विधेया गिरिशेन नूनम् ॥ ८२ ॥

त्वयापि तावन्न दया विधेया किमद्य मह्यं शिवपूजकाय ।
शिवार्चनं मे व्रतमिन्दुमौलिः पिता च माता च सखा च बन्धुः ॥ ८३ ॥

अत्रेदमत्यद्भुतशङ्करलिङ्गं पश्याधुना पश्य समर्चयाशु ।
कालानलाभं कमलासनाद्यैरिदं पुरा पूजितमेव लिङ्गम् ॥ ८४ ॥

इदं परं बिल्ववनं प्रपश्य सरांसि पश्यामृतसंकुलानि ।
नीलोत्पलान्यत्र विलोकयाशु तैरर्चयेशं गिरिजासहायम् ॥ ८५ ॥

दृष्ट्वापि लिङ्गं पुरतोऽपि शार्ङ्गं ये नार्चयित्वा प्रयताः प्रयान्ति ।
स याति नाशं नरकं च याति त्वयापि तत्वं विदितं शिवस्य ॥ ८६ ॥

इत्युक्तं तद्वचः श्रुत्वा स तदा प्रलयानलः । मूर्तिं धृत्वा विशेषेण पूजयामास शङ्करम् ॥ ८७ ॥
नीलोत्पलैर्बिल्वपत्रैः कमलैरमलैरपि । ततः प्रणम्य सन्तुष्टः कूर्ममाह स पावकः ॥ ८८ ॥

प्रलयानलः —

धन्योऽसि कूर्म सततं शिवपूजापरो भव । इदमत्यद्भुतं लिङ्गं उमाकान्तप्रियं खलु ॥ ८९ ॥
एतल्लिङ्गार्चने शक्तिः प्रवृद्धा ते भविष्यति । धन्योऽसि वनमेतच्च रक्षणीयं प्रयत्नतः ॥ ९० ॥
एतैर्बिल्वदलैर्नित्यं पूजयस्व महेश्वरम् । स एवाभीष्टदो लोके पूजितः शङ्करः खलु ॥ ९१ ॥
इति तद्वचनं श्रुत्वा स कूर्मः प्राह पावकम् । अतिश्रान्तोऽसि विश्रम्य कियत्कालं व्रजादरात ॥
मधुरा घृतकुल्येयं घृतं पीत्वा यदृच्छया । घृताहारस्य ते तावत् अपारं घृतमस्ति च ॥ ९३ ॥
युगाश्च बहवो जातास्तव पर्यटनादपि । गतं दिगन्तपर्यन्तं त्वयातिक्षुधया खलु ॥ ९४ ॥
अज्ञानं क्वापि न प्राप्तं तदङ्गेनापि नाशनम् । यस्मादुद्वासिता लोकाः प्रलयानलभीरुभिः ॥ ९५ ॥
इति तद्वचनं श्रुत्वा स श्रान्तः प्रलयानलः । पपौ युगान्तपर्याप्तमशनं शङ्करार्पितम् ॥ ९६ ॥
मधु पीत्वा सुधां साधु पीत्वा पीत्वा पुनः पुनः । प्रहृष्टः कूर्ममासाद्य तमुवाच कृताञ्जलिः ॥

प्रलयानलः —

पुष्टोऽस्मि घृतपानेन तुष्टोऽस्मि गिरिशार्चनात् । अतोऽत्र गतकष्टोऽस्मि शिष्टः प्राणैः किलाधुना ॥
युगानामयुतं जातं मम पर्यटनात् परम् । शिवलिङ्गानि दृष्टानि वैकुण्ठादिषु कोटिशः ॥ ९९ ॥

न दृष्टमीदृशं लिङ्गं कुत्रापि सुखदं परम् । भुक्तिमुक्तिप्रदं लिङ्गमिदमेवेति मे मतिः ॥ १०० ॥
शिवध्यानरतोऽसि त्वं शिवधर्मान् वदाधुना । यद्धर्मश्रवणादेव स्यादेव भ्रमविप्लवः ॥ १०१ ॥
दुःखान्यज्ञानमूलानि तन्नाशो येन जायते । तान् धर्मान् वद निश्चित्य सखाऽसि त्वं यतो मम ॥
शिवार्चकः सखा भ्राता पिता माता च जीवनम् । शिवार्चकात् परः को वा हितवक्ता जगत्त्रये ॥
इति तद्वचनं श्रुत्वा कूर्मो भस्मविभूषितः । रुद्राक्षमालाभरणः स्मृत्वा प्राह महेश्वरम् ॥ १०४ ॥

कूर्मः —

ऋतं सत्यं परं ब्रह्म पुरुषं कृष्णपिङ्गलम् । ऊर्ध्वरेतं विरूपाक्षं विश्वरूपाय वै नमः ॥ १०५ ॥
एतादृशं महादेवं ज्ञात्वा यः पूजयेत् सदा । स तरत्येव संसारपातकं सागराकरम् ॥ १०६ ॥
संसारप्रलयानलेन सहसा तप्ताः परं शङ्करं निश्चित्यैव पुनः पुनर्जनिजरानाशान् प्रयान्त्येव ते ।
तेषां शाङ्करपूजने न रतिरित्यज्ञानगर्ते परं मग्ना एव भवन्ति मग्नमनसो भग्नाश्च संसारतः ॥१०७॥

अहो न जानाति महेशशक्तिं संसारबन्धप्रलयप्रवृत्ताम् ।
सा शक्तिरीशस्य परं समग्रा ज्ञातुं न शक्ता विषयेन वाचाम् ॥ १०८ ॥

यथाकथञ्चित् गिरिशार्चनेन कालोऽपि नेयः खलु सावधानम् ।
विना न तेनास्ति च जीवनं च तदेव तावत्खलु जीवनं च ॥ १०९ ॥

अस्माभिः शिवलिङ्गपूजनविधिः ज्ञातो न सर्वात्मना
ब्रह्माद्यैरपि केवलं श्रुतिमता भूतिर्ललाटे परम् ।
काचिद्भात्यतिभाग्यतः ससलिलं बिल्वीदलं दीयते
लिङ्गे मङ्गलदायके शिवशिवेत्युक्त्वा नमोन्तं मनुम् ॥ ११० ॥

अस्माभिर्मत एव तावदधुना लिङ्गे प्रदेयं मुदा
तेनैवादरतो महेश्वरपदाम्भोजार्चनं सिद्ध्यति ।
सिद्ध्यन्त्येव फलानि तावदसकृत् रम्याण्यपाराण्यतः
चित्तं स्वस्थमिदं भविष्यति परा मुक्तिर्भवित्री ततः ॥ १११ ॥

महेशलिङ्गार्चनरूपमेकं लब्धं निधानं निधयोपि तेन ।
नवापि तावत् प्रभवन्ति सत्यं ते किं पुनः सापि न तेन मुक्तिः ॥ ११२ ॥

लिङ्गात्मकं साधनमेकमेव दृष्टं महेशेन विशेषतस्तु ।

तन्मुक्तिबीजं सुखबीजमेकं सर्वार्थसंपत्करमेकमेव ॥ ११३ ॥

किं किं पुरा पुण्यमपारमादौ कृतं शिवाराधनबुद्धिहेतुः ।
इदं परं जीवनमेव पुण्यं धन्यं शिवाराधनसाधनं मे ॥ ११४ ॥

ते साधवस्ते कृतपुण्यरूपाः ते पुण्यमूलैस्तु परं प्रवृद्धाः ।
ते शाङ्करलिङ्गार्चनधूतपापाः पूताः प्रहृष्टाश्च तथापि तुष्टाः ॥ ११५ ॥

लोके दुर्लभ एव साधुरिति मे बुद्धिः स साधुः परं
शङ्काराधनतत्परः सितलसद्भूतित्रिपुण्ड्राङ्कितः ।
तेनैवेन्दुकलावतंसभजनानन्दः प्रवृद्धो भवेत्
प्रीतिर्बुद्धिमुपैति तेन सह मे सङ्गः सदा वांछितः ॥ ११६ ॥

शिवार्चकालोकनमेव लोके संसारदावानलजालरूपम् ।
मन्ये ततस्तेन सहास्तु सङ्गः स मङ्गलानायकलीलया स्यात् ॥ ११७ ॥

अस्माभिरर्धेन्दुकलावतंसप्रभावविज्ञानविशेषशून्यैः ।
शाङ्काङ्गसङ्गेन विनेय एव कालः कथञ्चित् कलिनाशहेतुः ॥ ११८ ॥

अभूतपूर्वं फलमेकमेव यच्छाङ्गलिङ्गार्चनलक्षणं मे ।
अनेन तावत्प्रभवन्ति लोकाः कीलालमात्रार्पणतोऽपि स स्यात् ॥ ११९ ॥

कीलालेनापि येनापि कालकालः समर्चितः । ददाति भुक्तिं मुक्तिं च किं पुनः कुसुमार्चितः ॥
जीवनेनार्चितो जीवान् जीवयत्येव शङ्करः । अतो जीवनमात्रेणाप्यर्चनीयः सदाशिवः ॥ १२१ ॥
यदि स्याज्जीवनापेक्षा जीवानां जातु जीवनैः । पूजनीयः सकृद्वापि जीवने सति शङ्करः ॥
करोति कौतुकं लोके स गौरीकामुकः खलु । छिन्नपत्रार्पणेनापि तुष्टो मुक्तिं प्रयच्छति ॥ १२३ ॥

कैवल्यकान्तारमणं करोति करोति भूमण्डलनायकं च ।
सकृत् स्मृतो वा प्रणतोऽपि भक्त्या समर्चितो वा गिरिजासहायः ॥ १२४ ॥

एतादृशोऽयं गिरिजासहायः कृपाम्बुराशिः सुकृतातिपुण्यैः ।
नित्यं समाराधित एव तेभ्यो ददाति भुक्तिं प्रददाति मुक्तिम् ॥ १२५ ॥

अज्ञाः परं शङ्करपादपद्मप्रणामपूजानिरता न नूनम् ।
तेषां कृतान्तालयपूरणाय निर्माणमित्येव मतिर्ममाभूत् ॥ १२६ ॥

लोके कोऽपि न शङ्करार्चनपरो दुःखालयो जायते
संसारानभिभूत एव स परान् भुक्त्वापि भोगान् बहून् ।
मुक्तः शङ्करकिङ्करैः सह सदा कुर्वन् शिवाराधनं
कैलासाचलमन्दिरान्तरमहोद्याने परं क्रीडति ॥ १२७ ॥

उन्मादेन विना शिवार्चनपरो भूतित्रिपुण्ड्राङ्कितो रुद्राक्षाभरणो रमापतिलसन्नेत्रारविन्दार्चितम् ।
स्मृत्वा शङ्करपादपद्मपनिशं बिल्वीदलैरर्चयन् लिङ्गे शङ्करमिन्दुमौलिभजनासक्तः कृतार्थो भुवि ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे प्रलयानलं प्रति कूर्मेण शिवधर्मनिरूपणं नाम पञ्चत्रिंशोऽध्यायः ॥

---

## अथ षट्त्रिंशोऽध्यायः ।

—o—

याज्ञवल्क्यः —

इति तद्वचनं श्रुत्वा फाललोचनपावकः । कूर्ममाहातिहृष्टात्मा सन्तोषं जनयन् परम् ॥ १ ॥

प्रलयानल उवाच —

धन्योऽसि शङ्कराचारतत्पर शाङ्कर । त्वद्दर्शनेन सन्तोषः समभूदथ मे ध्रुवम् ॥ २ ॥

फाललोचनसङ्गेन यत्सुखं समभूत् पुरा । तत् तद्वियोगतो नष्टं तेन दुःखमभून्मम ॥ ३ ॥

तद्दुःखापगमो वृत्तो लिङ्गस्यास्यावलोकनात् । एतल्लिङ्गार्चनेनापि श्रमोऽपि विगतोऽधुना ॥ ४ ॥

शिवोपहारभूतस्य घृतस्यास्याशनादपि । शिवोपहारलाभोऽयमपूर्वः खलु देहिनाम् ॥ ५ ॥

हरत्यघान्यपाराणि दर्शनादपि वस्तुतः । हारोपहारतत्पानभोजनैर्मुक्तिराप्यते ॥ ६ ॥

हारोपहारमाघ्राय मुक्ताः पूर्वं मुनीश्वराः । स तावन्मुक्तिकरणं यथा शङ्करपूजनम् ॥ ७ ॥

हारोपहाराशनवीतपापाः शिवस्वरूपाः सुकृतानुरूपाः ।
विध्वस्तसंसारविशेषतापाः प्रणष्टकोपाश्च गताततापाः ॥ ८ ॥

किंच त्वया भूरितरोऽपि भारो धृतः कथं वा विधृतोऽतियत्नैः ।
विना न तद्धारणमित्यवैमि धैर्यं कथं वा तव जातमेवम् ॥ ९ ॥

इति तद्वचनं श्रुत्वा कूर्मः प्राहातिहर्षितः । तस्यापि जनयन् तोषं स्वरूपकथनादपि ॥ १० ॥

कूर्मः —

धृता मही शङ्करलीलयैव निमित्तमेवाहमिह प्रयत्नः ।
न कोपि मे पावकः तावको वा लोकस्य कस्यापि विशेषकार्ये ॥ ११ ॥

कर्माणि तावद्बहुधा भवन्ति महेशलीलाप्रसरादवश्यम् ।
स एव कर्ताऽपि स रक्षकोऽपि स एव हन्ता निजलीलयापि ॥ १२ ॥

यल्लीलाप्रसराद्भवन्ति भुवनान्यत्यद्भुतानि प्रभोः
शंभोस्तस्य किमस्त्यशक्यमधुना भूधारणादीत्यपि ।
[1] सद्यस्तत्करुणालवप्रसरतस्तावद्भवन्तीति मे
वृद्धिः सिद्धिमपि प्रयच्छति निधीनानन्दसिन्धूनपि ॥ १३ ॥

यत्पादाम्बुजरेणुरेणुकलनात् संसारभारो महान् नाशं याति तदङ्घ्रिपङ्कजरजःसंसेवने किं भयम् ।
तं प्राहुर्निगमाः परं शिवमिति व्यक्तैरगर्द्वैर्वाक्यैरिन्दुकलावतंसमगजाकान्तं प्रशान्तं मुहुः ॥

तं देवोत्तममप्रमेयविभवं यः पूजयेदादरात् आनन्दोदय एव तस्य हृदये संसारपीडा कुतः ।
तं जानन्ति परं परात्परतरं ते शाङ्कराः शङ्करं ध्यानाराधनपूजनादिकथनास्ते मानहीनाः परम् ॥

धन्यं तं विदुरिन्दुशेखरपदाम्भोजार्चकं तं परं संसारार्णवकर्णधारगिरिशश्रीपादपद्मार्चकम् ।
लोके दुर्लभमेव तेन बहुधा संपत्प्रवृद्धिर्भवेत् इष्टावाप्तिरनिष्टनाशनमपि व्यक्तं मदीयं वचः ॥१६॥

भ्रान्ताः केचन कार्यमेतदधुना तावन्मया साधितं
सन्धानेन परेण तावदिति ते तावज्जगद्रक्षकाः ।
कर्ता शङ्कर इत्यवैति विमलो मानाभिमानैर्विना
तत्वज्ञः स इति त्वयापि विदितो लोकैर्मयापि ध्रुवम् ॥ १७ ॥

अत्युच्चोपलमध्यसंस्थितमहामण्डूकनीरप्रदः
को वा तिष्ठति भूतलेऽतिचतुरः स्वर्गेऽपि सत्येऽपि वा ।
वैकुण्ठेऽप्यतिकुण्ठिताः सुरगणाः स्वाज्ञानुयोगोचिते
तस्मादम्बरचुम्बिसुन्दरजटाजूटोऽर्चितो धूर्जटिः ॥ १८ ॥

नारीदुर्भरगर्भधारणगुणव्यापारपारङ्गतो नोपेन्द्रो जननीकठोरजठरावासप्रयासालसः ।
इन्द्रो वा न चतुर्मुखोऽपि न तथाभूतस्तदन्यस्तथा तस्मादम्बरचुंबिसुन्दरजटाजूटोऽर्चितो धूर्जटिः ॥

1. इदमर्धं C कोशे नोपलभ्यते ।

आरक्तांबुदगर्जितान्वितवरासारांकुरोत्पादन-
व्यापारप्रवरोदयो न [1] चतुरो ह्यन्धो लिखन्ते परम् ।
को वा स्यादधुना शिवेतरसुरेष्वन्येषु वा भूतले
तस्मादम्बरचुम्बिसुन्दरजटाजूटोऽर्चितो धूर्जटिः ॥ २० ॥

तत्तावद्वदितं जगत्त्रयहिते तावत्प्रवृत्तं परं
संसाराम्बुधितारकं विदुरुमाकान्तं प्रशान्ताशयम् ।
ते तावत्त्वदनुग्रहेण हृदये संभावयन्तः परं
गौरीकान्तमनन्तशोकविलयं कर्तुं प्रवृत्ताश्चिरम् ॥ २१ ॥

त्वयापि तावद्गिरिशप्रसादः कुत्रागतः किं किमिहागतोऽपि ।
नात्रापि मारः समभन्ततस्ते महेशलीलेयमिति स्मरामि ॥ २२ ॥

तमेव तावन्महतो महान्तं महेश्वरं प्राहुरुमापतिं तम् ।
भजामि तावत् त्वदनुग्रहेण तमेव लिङ्गेऽत्र समर्चयामि ॥ २३ ॥

भूभारलेशोऽपि मयाऽधुना किं लिङ्गार्चकस्यास्य महाभिभक्तिः ।
महेशलीला परमित्यवैमि नो चेद्गतं जीवनमेव नूनम् ॥ २४ ॥

कालस्तावद्गतो भूयानेवं संभाषणात् तयोः । तदानीमद्भुतं तेजस्ताभ्यां दृष्टं भयावहम् ॥ २५ ॥
तं दृष्ट्वा पावकः प्राह तं कूर्ममतिभीषणम् । किमेतदित्य[2] विज्ञानकृतान्त इव सादरम् ॥ २६ ॥

कूर्मः —

देवाः समागतास्तावत् सर्वे नारायणादयः । त्वदीयेन भयेनैव व्याकुलाः खलु सत्वरम् ॥ २७ ॥
शासनीयोऽपि निर्णीतस्तैरेव बहुधा ततः । तच्छासनाय शस्त्राणि प्रयुक्तानि बहून्यपि ॥ २८ ॥
नारायणास्त्रं चक्रं च तद्विनाशाय केवलम् । प्रयुक्तं विष्णुना ताभ्यामाहतो मदनोऽधुना ॥
ब्रह्मास्त्रं ब्रह्मणा तेन प्रयुक्तं तद्विनाशकम् । वज्रं प्रयुक्तमिन्द्रेण तेजोमण्डलसन्निभम् ॥ ३० ॥
अन्यैरपि सुरैः सर्वैः स्वस्वशस्त्राणि कोटिशः । प्रयुक्तान्येव तन्नाशस्तावतापि न जायते ॥ ३१ ॥
तेन शङ्करनिन्दा चेन्न कृता तर्हि तत्समः । को वा स्वर्गादिलोकेषु स तावद्भूरिविक्रमः ॥
यस्य स्मरणमात्रेण मुनयोऽपि तपः परम् । त्यक्त्वा दारादरा एव भवन्ति प्रतिवासरम् ॥ ३३ ॥
शस्त्राणि तस्य पुष्पाणि कोमलान्यमलान्यपि । तानि मौनिमनःशैलान् भिन्दन्तीत्येतदद्भुतम् ॥

---

1 ऽति चतुरः कोवा महेशादृते C

1 त्वमद्भुतस्य वृत्तान्तं वद सादरम् (C)

सौन्दर्यराशिरेवायं मदनो मदविह्वलान् । मुनीन् करोति सहसा स दुर्जेयो न संशयः ॥ ३५ ॥
महादेवप्रसादेन लब्धः कमलया पुरा । स मारस्तस्य संहारश्चक्राद्यैर्न प्रजायते ॥ ३६ ॥
शस्त्रं प्रयोक्तुं मदनः शक्तः स्वस्यापि सत्वरम् । येन स्वाहालिङ्गनेन नेयः कालो महानपि ॥
दैवात् स तावदधुना शस्त्रमण्डलसंवृतः । भवन्तं न विजानाति स्वनाशाय समागतः ॥ ३८ ॥
मदनो यदि धीरत्वं दैवात् पश्यति ते तदा । अङ्गनालिङ्गनासक्तिर्भविष्यति न संशयः ॥ ३९ ॥
तदा ते कार्यहानिः स्यात् स्वामिद्रोहः परं भवेत् । स्वामिकार्यार्थमागत्य तद्विरोधप्रवर्तनात् ॥
किञ्च स्मारं स्वरूपं त्वं मा मा स्मर विशेषतः । तस्य स्मरणमात्रेण मनः स्यान्मानिनीवशम् ॥
अकस्माद्याहि तं मूर्ध्नि पतित्वा भस्मसात् कुरु । तावता तव कीर्तिः स्यादपकीर्तिः किलान्यथा ॥
तद्दृष्टिरधुना तावन्नोर्ध्वदेशं गता ततः । अधुनाऽवसरस्तस्य मूर्ध्नि ते पतने खलु ॥ ४३ ॥

तत्सौन्दर्यविलोकनाय यदि वा चित्तं प्रवृत्तं तदा
दैवादद्भुतमित्युपेक्ष्य सहसा कार्यं महेशस्य वा ।
तर्हि स्यात्तव हानिरेव विजयस्तस्याद्भुतः स्यादतः
सर्वं कार्यमनाकुलं भवति किं शंभोः प्रभोः केवलम् ॥ ४४ ॥

किंवान्यच्छिवनिन्दकस्य सहसा दृश्या न दृश्या तनुः
तापाविष्टविलोकनादपि भवेत्सा यातना ते यया ।
विस्तारो न भवेदतः परमपि त्याज्यो भ्रमः सर्वथा
पापिष्ठानवलोकनेन समयो नेयः कियान् वा त्वया ॥ ४५ ॥

किञ्चाहत्य त्वया तावन्न गन्तव्यं प्रयत्नतः । तत्सन्निधानादपि ते पातकं स्यादसंशयः ॥ ४६ ॥
शिवनिन्दकमालोक्य दूरादपि विवेकिनः । प्रायश्चित्तार्थमुद्योगं कुर्वन्त्येव विशेषतः ॥ ४७ ॥
लयं प्रयान्ति पापानि प्रायश्चित्तशतैरपि । शिवनिन्दातिरिक्तानि सा तावद्यातनावहा ॥ ४८ ॥
तव शङ्करभक्तस्य शिवनिन्दकसङ्गमः । अयुक्त एव सहसा न स कार्यो महात्मना ॥ ४९ ॥

महानुभावाः शिवनिन्दकानामिच्छन्ति नाशं स्वत एव नाशः ।
तदिच्छया केवलयाऽपि किन्तु ततो न तत्सङ्गतिरिष्टहेतुः ॥ ५० ॥

तेजःस्वरूपस्य तवोग्रतेजो यत्तस्य लेशोऽप्यणुतोऽप्यणुः स्यात् ।
स एव तन्नाशकतामुपेत्य करोतु कार्यं तव सावधानम् ॥ ५१ ॥

इति तद्वचनं श्रुत्वा स्वहिते मुक्तिसाधनम् । सन्तुष्टं प्राह तं कूर्मं फाललोचनपावकः ॥ ५२ ॥
कृतकृत्योऽसि कूर्म त्वं कर्मणा महताधुना । हितोपदेशकस्त्वं मे त्वत्तुल्यो न सखा मम ॥५३॥

पापलेशरहितोऽपि सर्वथा कूर्म ते मतिरुमापतिं परम् ।
वाञ्छतीति तव भाग्यमीदृशं दुर्लभं जगति देहिनामिदम् ॥ ५४ ॥

जन्मान्तराराधितशङ्कराणां सा शाङ्करी भक्तिरुदेति या स्यात् ।
आनन्दहेतुः सुकृतोऽब्धिसेतुः सा तावदत्यद्भुतधर्मकेतुः ॥ ५५ ॥

इत्युक्त्वा वचने तस्य कृत्वा विश्वासमास्तिकः । हरफालानलस्तेजः ससर्जात्युत्तरं तदा ॥ ५६ ॥
त्यक्तं तदैव तत्तेजः प्रवृद्धं भुवनत्रयम् । दग्धुं समर्थमभवत् तेन भीताः सुरा अपि ॥ ५७ ॥
किमद्भुतमिहायाति तेजोमण्डलमुन्नतम् । ब्रह्माण्डमण्डलं सर्वं दग्धुमिच्छति लीलया ॥ ५८ ॥
क्व गन्तव्यमिहास्माभिर्न मार्गे गमनेऽधुना । सर्वान् लोकानिदं व्याप्य तिष्ठतीति भयाकुलः ॥
स कूर्मोऽपि विलोक्याशु तत्तेजो भयविह्वलः । शिवप्रभावं सस्मार सर्वोपद्रवनाशकम् ॥ ६० ॥
ततस्तत्पावकोत्पन्नपावकांशोऽतिभीषणम् । प्राह तं पावकं कृत्यं वद मह्यमिति स्वकम् ॥ ६१ ॥
ब्रह्माण्डान्येकदा दग्धुं सृष्टः किमयमीदृशः । यद्वा क्रमेण तद्दाहः कर्तव्यो वद सत्वरम् ॥ ६२ ॥
मत्तेजःप्रभवा एव कणाः सन्त्यत्र कोटिशः । तत्कणानां प्रभावोऽपि वर्णनाविषयो न मे ॥ ६३ ॥
तत्राप्यल्पकणो यस्तु सोऽपि ब्रह्माण्डमण्डलम् । दग्धुं समर्थ एवेति प्रधावति पुनः पुनः ॥ ६४ ॥
को वा मम रिपुर्भूयात् इन्द्रोपेन्द्रादिषु स्वतः । अन्यथा सर्वविलयः कर्तव्य इति सत्वरम् ॥६५॥
जगत्संहरणे तावदायासोऽपि न मे ततः । समर्थ एव सृष्टिर्मे किमर्थं वा कृता वद ॥ ६६ ॥
न मत्प्रसारविषयः कोऽपि दृष्टो जगत्त्रये । सर्जनं च कृतं केन हेतुना वद सादरम् ॥ ६७ ॥
को वा फलमनुद्दिश्य विवेकेन प्रवर्तते । मत्सर्जनस्य किं कार्यमद्भुतं तद्वदाधुना ॥ ६८ ॥
इति तद्वचनं श्रुत्वा कूर्मो विस्मितमानसः । फालानलोऽपि तं दृष्ट्वा प्राह गम्भीरया गिरा ॥

फालानलः —

मारश्चकार सोन्मादो निन्दां गौरीपतेस्तदा । संज्वालयातियत्नेन गत्वा तन्मस्तकाश्रितः ॥ ७० ॥
अन्यदेवसमत्वेन ज्ञातस्तेन महेश्वरः । इयं महेशनिन्दा च तद्विनाशाय केवलम् ॥ ७१ ॥
इति तद्वचनं श्रुत्वा स कोपेनाह तं ततः । किमेतदर्थं युक्ता ते मम सृष्टिर्विशेषतः ॥ ७२ ॥
मदीयकणलेशेनाप्यमराद्यन्वितं जगत् । दग्धं तावद्भवत्येव शिवलीलापि तादृशी ॥ ७३ ॥

भवेद्गुरुतरं कार्यं यदि तस्य तु तर्जनम् । ममाप्यत्यल्पकार्येषु सृष्टिरेव कथं मता ॥ ७४ ॥

नखच्छेद्ये वस्तुन्यपि कुलिशमादाय यतते पुमान्लोके को वा लवमपि किमित्यल्पविषये ।
गरिम्णा वा लोकाचलकुलिशमादाय मशकं निहन्तुं शक्तो वा भवति यतमानोऽपि सुमतिः ॥

हन्तव्यः शिवनिन्दको विधिरपि श्रीमान् हरिर्वा मया
किञ्चेन्द्रादिमरुद्गणोऽपि गिरिशस्मृत्या परं लीलया ।
हन्तुं शङ्कर एव तावदधुना नूनं प्रवृत्तः परं
लोके शङ्करनिन्दकोऽपि स पुनः किं जीवतीति भ्रमः ॥ ७६ ॥

इति तद्वचनं श्रुत्वाप्यभिनन्द्यापि सादरम् । मारनाशं कुरुष्वेति प्राह कालानलस्तदा ॥ ७७ ॥

ततस्तदाकर्ण्य स पावको वचो हितावहं स्वामिततेजसः कणम् ।
तं प्रेरयामास रतेः पतिस्तदा स नाशनीयो भवतीति वेगात् ॥ ७८ ॥

तत्प्रेरितः सोऽग्निकणः प्रवृद्धो विवेश पञ्चायुधमूर्ध्नि तेन ।
नारायणास्त्रादिकमस्त्रजालं खद्योतसङ्काशमभूत् पुरस्तात् ॥ ७९ ॥

ततः स भस्मसाज्जातो मदनः शिवनिन्दकः । तं दग्ध्वा स गतो वह्निः शान्तकोलाहलोपि सः ॥

हतोऽधुनायं शिवनिन्दकोऽत्र मारः प्रमत्तः शिवलीलयेति ।
गताः सुराः स्वस्वकलत्रयुक्ताः स्वकं परं वा समवाप्तमोदाः ॥ ८१ ॥

ततः परं स्वस्वपदाश्रयास्ते शंसन्त एवाद्भुतवीर्यमैशम् ।
कम्पायमानाः शिवपादपद्मं स्मृत्वा स्थितास्ते परमादरेण ॥ ८२ ॥

ततः परं शङ्करपूजनाय नेयः कियान् काल इति प्रबुद्धाः ।
बुधाः शिवाराधनतत्परास्ते विश्वासमाधाय हृदि प्रधानम् ॥ ८३ ॥

विश्वावसुः —

रे रे कुमाराः सुरवृन्दवन्द्यो गौरीसहायः स सुराग्रगण्यः ।
न तत्समः कोऽपि सुरेषु दृष्टो नारायणादिष्वपि सत्यमेव ॥ ८४ ॥

शिवं सर्वोत्तमं मत्वा भजध्वमतियत्नतः । अन्यथा मदनावस्था भविष्यति न संशयः ॥ ८५ ॥

शङ्करे सर्वदा प्रीतिर्विधेया स दयार्णवः । अपर्णारमणः प्रीतिः प्रणतो मुक्तिदायकः ॥ ८६ ॥

प्रीतश्चेत् स ददाति शैलतनयाकान्तः प्रभुत्वं परं लोकानामविनश्वरं सततमप्यन्ते तु मुक्तिं पराम् ।
तं तावन्निगमान्तवाक्यविनुतं सन्तः कृतार्थाः परं संसाराद्विरताः प्रयान्ति शरणं देवाग्रगण्यं मुहुः ॥

यावत्पूजा सावधानं क्रियते गिरिजापतेः । तावन्न हानिवार्तापि हानिर्दूरतरा यतः ॥ ८८ ॥
शङ्कराराधनोद्युक्ते सिद्धयस्तु पदे पदे । ततो न दुःखवार्तापि भो पुत्राः शंभुपूजकाः ॥ ८९ ॥
शिवपूजासाधनानि कुसुमानि वने वने । अतिरम्याणि तिष्ठन्ति पूजयध्वं सदाशिवम् ॥ ९० ॥
अरुणोदयवेलायां कुरुध्वं शिवचिन्तनम् । ध्येयः साम्बो महादेवः सर्वमङ्गलविग्रहः ॥ ९१ ॥
ततः स्नात्वा भस्मनापि सम्यगुद्धूल्य सादरम् । त्रिपुण्ड्रधारणं कार्यं कार्यं रुद्राक्षधारणम् ॥

ततः परं शङ्करमन्दिरेषु सम्यक् शिवाराधनसाधनानि ।
संपाद्य [1]पूजापि विधे विधेया कार्या प्रयत्नेन च शाङ्गलिङ्गे ॥ ९३ ॥

शिवलिङ्गार्चनं काले काले कार्यं निरन्तरम् । तेनैव पापनाशः स्यात् सुखं मुक्तिश्च जायते ॥
यद्यप्यत्यन्तसुलभं शाम्भवानां शिवार्चनम् । तथापि दुर्लभं मन्ये प्रमादे सति सर्वथा ॥ ९५ ॥
अप्रमादेन कर्तव्यं श्रीमहादेवपूजनम् । स्वप्नेऽप्यन्यसुरार्चायां आदरस्त्याज्य एव हि ॥ ९६ ॥
त्याज्यं सर्वात्मना त्याज्यं शिवान्यसुरपूजनम् । स्वप्नेऽपि शिवपूजैव कर्तव्यातिप्रयत्नतः ॥ ७७ ॥
अशिवानि भविष्यन्ति शिवान्यसुरपूजनात् । अतस्तन्नैव कर्तव्यं न कर्तव्यं कदाचन ॥ ९८ ॥
वाञ्छितं शिवमस्माकं अतः कार्यं शिवार्चनम् । यतः स्वयं शिवः क्षीरं कामधेनुः शिवार्चनम् ॥
शिवार्चनस्य महिमा न ज्ञातो ब्रह्मणाप्यतः । तज्ज्ञानविरहेऽप्याशु कर्तव्यं शिवपूजनम् ॥
कालान्तरे मया कार्यं शिवपूजनमित्यपि । आलस्यं नैव कर्तव्यं कालो हि कठिनो यतः ॥१०१॥
क्व तावदायुरस्माकमित्येवाद्भुतचिन्तया । कर्तव्यमिति यत्नेन सत्वरं शिवपूजनम् ॥ १०२ ॥
विषमप्यमृतं भूयादालस्येन ततः सुताः । कर्तव्यमतियत्नेन लिङ्गे शङ्कार्चनं मुदा ॥ १०३ ॥
शाङ्गलिङ्गार्चनं लोके सर्वदा दुर्लभं सुताः । विघ्नानपि निराकृत्य कुर्वन्तु शिवपूजनम् ॥१०४॥
शिवार्चनस्य समये यदि विघ्नो भविष्यति । तदा तन्नाश्ययत्नेन कर्तव्यं शिवपूजनम् ॥ १०५ ॥
शिवार्चनं खलु श्रेयः श्रेयसां विघ्नसंभवः । संभावितस्ततस्तस्य नाशोऽपि शिवपूजया ॥ १०६ ॥
शिवार्चनं परं तावत् सर्वारिष्टविनाशनम् । सर्वेष्टदायकं चेति कर्तव्यं शिवपूजनम् ॥ १०७ ॥
शिवार्चनात् परं लोके किंवा पुण्यं भविष्यति । तत् पुण्योत्तममित्येव ज्ञातव्यं सर्वथा बुधैः ॥
येन केनापि वा भक्त्या कृतं यदि शिवार्चनम् । तदा ददाति गौरीशस्तस्मै मुक्तिमसंशयम् ॥

---

1 पूजा विविधैर्विधानैः C

अपारसुकृताम्बुधिर्यदि भवेत् प्रवृद्धस्तदा शिवार्चनरतिर्भवेदिति मतिः प्रवृद्धा ततः ।
अवश्यमसकृत्स्मृतः प्रणत एव वा पूजितो ददाति परमं पदं गिरिश इत्यवैमि ध्रुवम् ॥ ११० ॥

विनाशयति पातकामितमहागिरीनेकदा स्मृतोपि गिरिशः सुताः सकृदपारपुण्यप्रदः ।
स एव सुरपुङ्गवैर्मनसि सर्वदा पूज्यते स एव मुनिपुङ्गवैरपि समाधिनिष्ठैरपि ॥ १११ ॥

अपूर्वमीशार्चनमेकमेव लोके प्रसिद्धं सकलार्थहेतुः ।
तत्तुल्यमन्यन्न मयापि दृष्टं वेदैर्न दृष्टं सुरपुङ्गवैर्वा ॥ ११२ ॥

न यागदानाध्ययनादिभिर्वा लिङ्गार्चनात्यादरपुण्यतुल्यम् ।
पुण्यं भविष्यत्यत एव तावत् तत्पुण्यपुण्यं विदुरास्तिकास्ते ॥ ११३ ॥

[1]आचारमन्यद्वक्ष्यामि शृणुध्वमतिसादरम् । श्रुते तस्मिन् शिवाचारे भक्तिवृद्धिर्भविष्यति ॥ ११४ ॥
या शिवार्चनसामग्री सर्वा सा भूतिपावना । कर्तव्या मूलमन्त्रेण तया तुष्टो भवेत् शिवः ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । विजयानगरे कश्चित् स्थितः शाम्भवपुङ्गवः ॥ ११६ ॥
स समाराधयन्नेव भावलिङ्गं शिवात्मकम् । भस्मोद्धूलितसर्वाङ्गो ददर्श स्वप्नमेकदा ॥ ११७ ॥
तेन तीर्थेश्वरो दृष्टः स्वप्ने सर्वसुरेश्वरः । दृष्टाश्च शांभवास्तत्र शिवध्यानपरायणाः । ११८ ॥
भस्मोद्धूलितरुद्राक्षत्रिपुण्ड्राङ्कितमस्तकाः । शिवलिङ्गार्चनेनैव सन्तुष्टाः सततं मुदा । ११९ ॥
तल्लिङ्गपूजनं दृष्ट्वा विमलैर्बिल्वपल्लवैः । नीलोत्पलैः पुण्डरीकैः कुन्दैश्च कुमुदैरपि ॥ १२० ॥
रत्नाभरणसंयुक्तं दुकूलपरिवेष्टितम् । दिव्योपहारसंहारफलराजिविराजितम् ॥ १२१ ॥
धूपधूमसमाक्रान्तं पुष्पगन्धविराजितम् । कर्पूरदीपमालाभिः परितः परिवेष्टितम् ॥ १२२ ॥
वेदमूर्तिधरैरेव स्तुतं सर्वार्थसिद्धिदम् । सर्वमङ्गलदं नित्यं स्मरणेनापि तत्परम् ॥ १२३ ॥
गीतनाट्यसमारंभतत्तद्ध्वनिविराजितम् । देवदुन्दुभिनिर्घोषप्रतिध्वनिविजृंभितम् ॥ १२४ ॥
देवगन्धर्वनारीणां समूहैश्च विराजितम् । गौरीपूजनसंसक्तसुरनारीसमन्वितम् ॥ १२५ ॥
तादृशं मन्दिरं दृष्ट्वा तीर्थेशस्य स शांभवः । पूजां तीर्थेशलिङ्गस्य चकारातीव भक्तितः ॥
पञ्चामृताभिषेकाद्यैः चन्दनैश्च मनोहरैः । दुकूलैः कुसुमैर्दिव्यैः मन्दाराद्यैर्विशेषतः ॥ १२७ ॥
धूपदीपादिभिर्दिव्यैः नैवेद्यैरपि सादरम् । नीराजनैश्च विविधैः दिव्यकर्पूरसंभवैः ॥ १२८ ॥
प्रदक्षिणनमस्कारान् कृत्वा भक्तिपुरःसरम् । उपविष्टः शिवं पश्यन् जपन् पञ्चाक्षरं मनुम् ॥

1 रहस्यमन्यद् C

तावन्नियममासाद्य तृषितेन जलान्यपि। न पीतान्येव तेनातः पिपासा वृद्धिमाप सा ॥ १३० ॥
ततः परं समानीतं पानीयमतिशोभनम्। कृत्वा शिवार्पणं पातुं स चकार मतिं ततः ॥ १३१ ॥
तदानीमागतः कोऽपि तस्मिन् गिरिशमन्दिरे। भूतिरुद्राक्षवीताङ्गः शिवनामजपोत्सुकः ॥ १३२ ॥
समागत्य स तं प्राह शांभवाग्रेसरं प्रियम्। मामा पिब जलं विप्र तदीशानर्पितं यतः ॥ १३३ ॥
शिवभक्तोऽसि धन्योऽसि तदीशानार्पितं जलम्। पातुमिच्छसि किं तत्तु गिरिशाय समर्पय ॥
तज्जलं भूतिसंयुक्तं कुरु भस्मविवर्जितम्। न गृह्णाति जलं शम्भुर्गाङ्गं वा किमुतेतरत् ॥ १३५ ॥
यज्जलं भूतिसंयुक्तं न भविष्यति तज्जलम्। अदेयं शङ्करायेति न ज्ञातं किं त्वया परम् ॥ १३६ ॥
यद्यद् देयं महेशाय तद्भस्मरहितं यदि। न गृह्णाति महादेवस्ततो मा पिब तज्जलम् ॥ १३७ ॥
ततः परं विभूतिर्वा कास्तीत्युक्तः स शाङ्करः। प्राह भूतिं गृहाणेति शाम्भवाय महात्मने ॥
ततो गृहीत्वा तां भूतिं भूतिदामतिभक्तितः। प्रक्षिप्य जलमध्ये तु मूलमन्त्रेण सादरम् ॥ १३९ ॥
ततस्तेनैव मन्त्रेण तत्कृत्वा शङ्करार्पणम्। पपौ शिवं स्मरन्नेव कृतार्थोऽस्मीति सादरम् ॥ १४० ॥
तत्र स्थित्वा कियत्कालं शिवधर्मान् विशेषतः। स तस्मादेव शुश्राव सर्वपापविनाशकान् ॥ १४१ ॥
धर्मोपदेशके तस्मिन् तस्याभूद्गिरिशत्वधीः। तेन धर्मेषु विश्वासः तदुक्तेष्वभवत् तदा ॥ १४२ ॥
ततः परं समुत्थाय तं प्रणम्यातिभक्तितः। तमेव गुरुरित्युक्त्वा त्यक्तनिद्रोऽभवत् ततः ॥ १४३ ॥
तस्मात् कुमाराः सर्वाणि पुष्पादीनि विशेषतः। भूतियुक्तानि देयानि मूलमन्त्रेण शम्भवे ॥
अपूतमपि पूतं स्यात् भस्मना संयुतं यदि। तस्माद्भस्मयुतं देयं लिङ्गे बिल्वादिकं सुताः ॥ १४५ ॥
यदि स्याद्भस्मरहितं पीयूषमपि तत्परम्। विषमित्येव मन्तव्यं यतो नेशार्पणं हि तत् ॥ १४६ ॥
हारेष्वपि दुकूलेषु सुवर्णाभरणेष्वपि। भूतिर्देया प्रयत्नेन महेशविनिवेदने ॥ १४७ ॥
शिवनैवेद्यपाकार्थं प्रवृत्तैर्भूतिसंयुतैः। पाकागार प्रवेशोऽपि कर्तव्यो यत्नपूर्वकम् ॥ १४८ ॥
तेन कीटादिसंबन्धदोषोपि स विनश्यति। भूतिर्नैवेद्यपात्रेपि प्रदेया जलसंयुता ॥ १४९ ॥
भूतिरुद्राक्षपूताङ्गैर्नैवेद्यमपि यत् कृतम्। तद्गृह्णाति महादेवः तदेव हि सुधामयम् ॥ १५० ॥
किं तया सुधया पुत्राः किञ्चिद्भस्मान्वितं यदि। जलमप्यर्पितं भक्त्या तदीशाय सुधां विदुः ॥
पूजनं च महेशस्य भूतिरुद्राक्षभूषितैः। कर्तव्यमतियत्नेन मूलमन्त्रेण भक्तितः ॥ १५२ ॥

यः पञ्चाक्षरमुच्चरन् अतिसितां भूतिं वहन् मस्तके
फाले वक्षसि बाहुदण्डयुगले रुद्राक्षमालामपि।

शर्वाराधनतत्परो जललवैर्बिल्वैश्च दूर्वाङ्कुरैः
पुष्पैर्वा स शिवं प्रयाति स परं धन्योत्तमो वस्तुतः ॥ १५३ ॥

त्यज त्यज तटिन्नटीविधिवधूटिकाचेटिका
विकारकरमिन्दिरारुचिरभूविहारं परम् ।
भजाशु भज धूर्जटिं पद्धकपीटयोनिस्फुर-
ल्ललाटपटलोल्लसत्समभिभूतभानुप्रभम् ॥ १५४ ॥

इति शिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे विश्वावसुपुत्रसंवादे मन्मथदहन-पूजोपकरण भस्मसंयोजनमहिमवर्णनं नाम षट्त्रिंशोऽध्यायः ॥

—:x:—

## अथ सप्तत्रिंशोऽध्यायः ।

याज्ञवल्क्यः —

इति पित्रा कृतां शिक्षां गृहीत्वा शिरसा सुताः । प्रणम्योचुः परं तातं शिवभक्तिरतं मुदा ॥ १ ॥

कुमाराः —

धन्याः स्मः कृतकृत्याः स्मो यस्मादस्माकमास्तिकः । जनको गिरिजाकान्तपादुकाराधनोत्सुकः ॥
भवन्ति कर्मपाकेन बहवो जनका अपि । शाङ्करो जनको लोके भवत्यत्यन्तदुर्लभः ॥ ३ ॥
अनादिभूते संसारे सर्वदुःखाकरोऽपि सः । जनकाश्चाभवन् पूर्वमीदृशो जनकः कुतः ॥ ४ ॥
यदि स्याच्छाङ्करस्तातः पूर्वपूर्वभवे ततः । जनिरेव ततो न स्याद् देहयोगोऽपि दुःसहः ॥ ५ ॥
तपः फलितमस्माकं त्वत्पुत्रत्वप्रभावतः । अतः परं हि दुःखानि न पितः संभवन्त्यपि ॥ ६ ॥
अभ्यस्ता शाम्भवी विद्या त्वत्तः करुणया मया । विद्यया केवलं दुःखप्राप्तिसंभावनापि न ॥
अतः परमनेनैव जन्मना मुक्तिरेव नः । भविष्यति न सन्देहः शिवभक्तसुतत्वतः ॥ ८ ॥
ये शाङ्करकुमारास्ते कुमारेण सहादरात् । क्रीडां कुर्वन्ति ते तावद् धन्यधन्या इति स्मृताः ॥

हारोपहाररसपुष्टशरीरयोगात् जातं शरीरमिति जन्मजराविनाशाः ।
नैव स्पृशन्ति सकृदप्यत एव धन्याः सर्वेऽपि शाङ्करवराः प्रवशः कुमाराः ॥ १० ॥

भस्माभिरिन्दुसकलाभरणार्चनेन नेयः कियानपि खलः खलु काल एव ।

तं कालकालकलनेन नयन्ति कालं तेनैव कालजनितापि न भीतिरेव ॥ ११ ॥

संसारदुःखविनिवारकमिन्दुमौलिमाखण्डलादिसुरवन्दितपादमूलम् ।
आजानुदीर्घकरपद्मधृतोर्ध्वशूलं वन्दामहे गलतलस्थितनीलजालम् ॥ १२ ॥

देवाधिदेव इति शङ्कर एव वेदैः वृन्दारकैरपि तथा मुनिसिद्धवृन्दैः ।
यः संस्तुतो मुहुरपारगुणप्रवाहस्तं तावदादरभरैः वयमाश्रयामः ॥ १३ ॥

यः फाललोचन इति प्रथितः सुरेषु यश्चन्द्रखण्डललितोन्नतदीर्घमौलिः ।
यः सर्वदेवमुनिकिन्नरसिद्धसेव्यः तं शैलराजतनयापतिमाश्रयामः ॥ १४ ॥

यः सृष्टिपालनविनाशकरोऽतिशूरो गौरीविहारचतुरो मुहुरादरेण ।
यः कालजातभयजातनिवारकोऽपि तं नीलकण्ठमनिशं शरणं व्रजामः ॥ १५ ॥

अस्माभिरीश्वरपदाम्बुजरेणुगौरगौरीकराननविलोचनचिन्तनेन ।
नेयं वयो न वयमन्यदुपाश्रयामः प्राणप्रयाणसमयेऽपि शिवे शयामः ॥ १६ ॥

गौरीमनोरमणचारुभुजान्तरालकाश्मीरसारघनसाररसातिगौरम् ।
हारातिधीरमरुणारुणरेणुवाणीपूरातिशोणचरणाम्बुरुहं भजामः ॥ १७ ॥

[1] गौरीमनोरमणचारुकरांघ्रिपद्मसङ्गानुधावननिधानमनःप्रसादैः ।
अस्तावसादगिरयो गिरिराजकन्याविन्यस्तहस्तमनिशं शरणं व्रजामः ॥ १८ ॥

इति पुत्रवचोवीचीप्रपञ्च चतुरादरः । हारो विश्वावसुः प्रीतः कुमारानाह ॥ १९ ॥

विश्वावसुः —

धन्यं ममापि भवतामपि सङ्गमेन जन्मेदमुत्तमकुलप्रभवस्य भावैः ।
संभावितः समागममित्युपेन्द्रो ब्रह्मापि वेद तदिदं सफलं शरीरम् ॥ २० ॥

एतच्छरीरमनिशं शिवपूजनेन तावत्पवित्रमधुना शिवपूजकानाम् ।
युष्माकमप्यभिनवामितहारवार्तापीयूषपानपरिपुष्टमतिप्रकृष्टम् ॥ २१ ॥

श्रीविश्वनाथभजनस्य फलं न जाने किं किं भवत्यनुपमं परिमाणशून्यम् ।
एषातिशाम्भवसभा मुहुरादरेण दृश्या दृशामनुपमामृतमित्यवैमि ॥ २२ ॥

कालोऽपि शांभवसभाभिनवाभिमानवार्तानिवृत्तनिजदूतसमूहवृत्तिम् ।

---

1 अयं श्लोकः C कोशेऽधिकः ।

श्रुत्वातितप्तहृदयो निलये स्वकीये वार्ता करिष्यति मुहुर्मुहुरिन्दुमौलेः ॥ २३ ॥

अस्माभिः शिवलिङ्गपूजनरतैरेकत्र नित्यं सदा स्थातव्यं नियमेन शङ्करकथालापो विनेयो मुहुः । कालः कालभयावहः सहि महादेवार्चकात्यादरो दूरे तिष्ठति निष्ठुरोऽपि स शिवाचारव्रतात्यादरः ॥

ये संसारपराभवाय बहवो भावाः प्रवृत्ताः पुरा
ते तावद्गिरिशार्चनेन गिरिशध्यानामृतैः केवलम् ।
सन्तुष्टाः प्रचरन्ति सन्ततमुमाकान्तं नितान्तं हृदि
ध्यात्वा त्यक्तशिवेतरामरकथावार्ताः कृतार्थाः परम् ॥ २५ ॥

एवं पुत्रैश्च पौत्रैश्च प्रपौत्रैश्चित्रकर्मभिः । शांभवैरन्वितो रेजे विश्वावसुरिनो यथा ॥ २६ ॥

तस्मादम्ब त्वया तावत् चिरं शङ्करपूजया । कालो नेयः कुमारास्ते भविष्यन्त्येव शाङ्कराः ॥

इति संसारवार्ताभिः सदा मग्नं मनस्तदा । नरकावास एवेति शङ्करं तावदर्चय ॥ २८ ॥

इति गन्धर्ववाक्यानि श्रुत्वा सा राजकन्यका । तमाह हारं गन्धर्वं सगर्वं शर्वपूजया ॥ २९ ॥

राजकन्या —

सत्यमुक्तं त्वया तावदितिहासं पुरातनम् । श्रुतं पापहरं पुण्यं संपद्वृद्धेश्च साधनम् ॥ ३० ॥

क्क विश्वावसुभाग्येन समं भाग्यं भविष्यति । शाङ्कराग्रेसराराध्यः शिवाराधनलालसः ॥ ३१ ॥

यत् पुण्यमर्जितं तेन शङ्कराराधनैर्मुहुः । तत्पुण्येनैव तत्पुत्रास्तादृशाः शाङ्कराः खलु ॥ ३२ ॥

[1]तत्कलत्रैश्च बहुधा त्रिनेत्राराधनं कृतम् । तेनापि पुण्यपुञ्जेन कुमाराः शाङ्कराः खलु ॥ ३३ ॥

अत्युत्कृष्टं बीजमासाद्य काले भूरुत्कृष्टाकृष्टपच्यान् मनोज्ञान् ।
सूते किं नैवांकुरान् तत्र दृष्टैः बीजैस्तेषां जन्म वा किं वदाशु ॥ ३४ ॥

कुमाराः शाङ्करास्तावद्वस्तुतः पुण्यमूर्तयः । त एव पावनास्तेषां दर्शनादघसंक्षयः ॥ ३५ ॥

पुण्यमाकारमासाद्य शङ्करं शङ्करार्चनम् । करोतीति मतिस्तावत् सतामेवोपजायते ॥ ३६ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । शृणु तस्य श्रवणतः शाङ्करो जायते नरः ॥ ३७ ॥

तत्कथाकथनेनापि मुहुरानन्दराशयः । उद्वेला एव सहसा भविष्यन्ति न संशयः ॥ ३८ ॥

भाग्यं किल ममाद्यापि शाङ्कराः शङ्करालये । हृष्टाः प्रहृष्टास्तेनैव शाङ्करः खलु शाङ्करः ॥ ३९ ॥

इतिहासो वक्ष्यमाणो ब्रह्मलोकादभिश्रुतः । स मया संश्रुतः पूर्वं कदाचित् पापनाशकः ॥ ४० ॥

1 अयं श्लोकः C कोशेऽधिकः

पिता मम महादेवपूजनासक्तमानसः । तेनार्जितं बहु धनं रत्नराशिसमन्वितम् ॥ ४१ ॥

कुबेरः स्वयमागत्य मत्पितुः सदने मुदा । सदा सख्यं चकाराथो जातो धनपतिस्तदा ॥ ४२ ॥

धर्मधेनुरिति ख्यातो मत्पिता भुवनत्रये । स तु शाङ्करधर्माणां उत्पत्तिस्थानमेव हि ॥ ४३ ॥

तादृशस्य पितुर्गेहे ममास्ति शिवमन्दिरम् । अपाररत्नरचितं रत्नच्छायाविजृम्भितम् ॥ ४४ ॥

रत्नप्राकारपरिधशोभाराजिविराजितम् । तत्प्राकारावृते देशे वनमेकमशोकभूः ॥ ४५ ॥

रसालतालहिन्तालतमालपरिवेष्टितम् । तत्रोरुबिल्वतरवो बालबिल्वमहीरुहाः ॥ ४६ ॥

नागपुन्नागतरवः सपूगतरवः परम् । केतकीमालतीजाजीमाधवीमाल्लिकावृतम् ॥ ४७ ॥

सुवर्णचंपकाक्रान्तं शतपत्रतरुश्रितम् । धुत्तूरद्रोणसङ्कीर्णभृङ्गराजविराजितम् ॥ ४८ ॥

उत्फुल्लहेमामलपद्मरेणुकिञ्जल्कसंवीतसरोवराणि ।
रम्याण्यपाराणि मरालराजिविराजमानानि वसन्ति तत्र ॥ ४९ ॥

ते तावत्तरवः स्वतः शिव महादेवेति नामामृतं पीत्वा वृद्धिमुपेत्य गूढनिवहैः तारापतिस्पर्धया ।

तत्रार्धेन्दुकलावतंसभजनं फुल्लप्रसूनैर्नवैः प्रीत्यैवानुदिनं प्रगावधि मुहुः कुर्वन्ति नृत्यन्ति च ॥

तस्मिन्नेव वने मनोहरवरे धीरः परं शाङ्करः शाङ्गं लिङ्गमुपेत्य सत्यहृदयः सत्याश्रयं शङ्करम् ।

ध्यात्वा याति न मानसं प्रति न वा गङ्गातटं चोत्कटं वैकुण्ठादिकवाटपाटनधुनीधाटीवराटावृतम् ॥

मत्तातस्तदपारपुष्पविलसन्मालाकुलात्याकुला नीलानीलविलोलबालविलसल्लीलालिमालाप्रभाः ।

यास्ताभिः शिवमन्दिरान्तविलसन्नीलप्रभास्पर्धया तावद्भिः स चकार तत्र यमुनागङ्गाप्रवाहभ्रमम् ॥

तैरेव प्रसवैर्महेशसदनान्यापूर्य तूर्यध्वनिव्यापारप्रवरान्वितान्यपि करोत्यत्यादरो हारभूः ।

तद्भाग्याम्बुधयः प्रवृद्धिमगमंस्तत्पूजया केवलं तत्तुल्यो न जगत्त्रयेपि गिरिशश्रीपादुकाराधकः ॥

तस्मिन्नेव वने तातः शाङ्करैः सह सर्वदा । करोति पूजनं शम्भोः शृणोत्यपि कथां प्रभोः ॥ ५४ ॥

तत्र तावत् कथा कापि श्रुता साऽतीव पावना । नारदोक्तविशेषेण शिवभक्तिरसाश्रया ॥ ५५ ॥

नारदः —

पुरा पुण्यवतां लोके पुण्यान्येव परस्परम् । सुमेरुशिखरे स्थित्वा मूर्तिं धृत्वा जगुः शिवम् ॥

तत्राप्यद्भुतपुण्यमूर्तिरसकृत स्मृत्वा महेशं परं स्तुत्वा शङ्करपूजनाय च तथा तत्साधनानीत्यपि ।

तत्प्राप्त्यर्थमतः परं किमधुना कर्तव्यमित्याह तान् पुण्याकारवरानपारगिरिशध्यानोल्लसत्सागरान् ॥

पुण्यमूर्तिः —

अस्माभिर्गिरिशार्चनाय न तथा प्राप्तानि रत्नादिका-
न्युत्कृष्टान्यपि साधनानि बहुधा प्राप्यानि कैः साधनैः ।
शङ्काराधनसाधनैरपि विना किं जीवनेनाप्यहो
व्यर्थं जन्म महेशलिङ्गभजनाभावे भवे भावजम् ॥ ५८ ॥

रत्नाकरे सन्ति मनोहराणि रत्नानि तावत् खलु नूतनानि ।
तैरेव लिङ्गार्चनमद्य कार्यं प्रीतः शिवो रत्नसमर्पणेन ॥ ५९ ॥

यद्वा वने कोमलबिल्वमालाः संपादनीयाः शिवपूजनाय ।
यद्वा सुपर्णामलपद्ममाला संपादनीया कनकादिमाला ॥ ६० ॥

उत्फुल्लनीलोत्पलमालया वा समर्चनीयो गिरिजासहायः ।
मन्दारकुन्दादिभिरर्चनीयः किमद्य सद्यः स मुदेन्दुमौलिः ॥ ६१ ॥

मृगमदरसधारासारकर्पूरधारापरिवृतघनसारापारपाटीरधारा ।
शिवशिरसि विधेया तुङ्गलिङ्गस्वरूपे सकृदपि सुकृताम्भोराशिसंजीवनाय ॥ ६२ ॥

इत्यालोच्य ययुः सर्वे स्मृत्वा शङ्करपादुके । रत्नाकराय रत्नानि प्राप्तुमत्युत्तमान्यपि ॥ ६३ ॥

ततः सागरतीरे ते हाटकेश्वरमन्दिरे । दृष्ट्वा प्रहृष्टास्तत्पूजां चक्रुः पुष्पादिभिर्नवैः ॥ ६४ ॥

ततस्तल्लिङ्गपूजार्थं सागरोऽपि समागतः । चकार रत्नैर्विविधैः भूतिपूतैः शिवार्चनम् ॥ ६५ ॥

कृत्वा बिल्वदलैः पूजामखण्डैरतिकोमलैः । तथा पञ्चामृताद्यैश्च बहुभिर्यत्नपूर्वकम् ॥ ६६ ॥

स पूजान्ते प्रणम्येशं कृत्वा नाट्यं प्रयत्नतः । दध्यौ चन्द्रकलाचूडं पञ्चाक्षरपुरःसरम् ॥ ६७ ॥

ततस्तुष्टाव स मुदा सागरः शङ्करं परम् । रुद्राध्यायेन सूक्तैश्च रौद्रैर्भद्रप्रदैर्मुदा ॥ ६८ ॥

एवं संपूज्य तल्लिङ्गं शाङ्गमालिङ्ग्य सादरम् । प्राह प्रसीद भगवन् इति कुर्वन् तदा स्तुतिम् ॥

रत्नाकरः —

क्व महेश्वरता क्व शंभुता क्व कृपासागरता क्व चाज्ञता ।
क्व निरन्तरदीनबन्धुता क्व शिवाद्याप्यकृपैव मय्यपि ॥ ७० ॥

क्व चतुर्दशलोकनाथता त्रिदशाधीश्वरता दयार्द्रता । क्व विलक्षणदक्षतापि ते क्व शिवा...मय्यपि ॥

क्व ललाटकृपीठयोनिता क्व जटाजूटतटेन्दुखण्डता । क्व तटित्तटिनीवधूटिता क्व शिवा...मय्यपि ॥

क्व तवामितवेदवेद्यता क्व तवापारगुणाम्बुराशिता । क्व विपद्गणशैलवज्रता क्व शिवाद्याप्य...मय्यपि ॥

क्व तवाद्भुतभूतिहेतुता क्व विभूतिव्रतपूतता तथा। क्व तवामितपुण्यकीर्तिता क्व शिवाद्या...मय्यपि॥
क्व सुरासुरवर्गवन्द्यता क्व महाशैवमहार्हणार्थता । क्व महोत्सवदानलोलता क्व शिवा...मय्यपि ॥
क्व तव त्रिपुरप्रहारिता क्व महाशूलविराजमानता । क्व सुमेरुपिनाकपाणिता क्व शिवा...मय्यपि॥
क्व तवामरसुन्दरीकरप्रकरापारसरोजपूज्यता । क्व सुमेरुशरासनज्यता क्व शिवा ... मय्यपि ॥
क्व भवाम्बुधिकर्णधारता क्व महामृत्युभयापहारिता । क्व शिवार्चककल्पवृक्षता क्व ... मय्यपि ॥
क्व तवामितकालकालता क्व च हालाहलनीलकण्ठता । क्व दिगम्बरतापि सांबता क्व...मय्यपि ॥
क्व परात्परतापि मित्रता क्व वरोरःसरराजहारता । क्व तवोन्नतपञ्चवक्त्रता क्व ...मय्यपि ॥ ८० ॥

क्व शिवार्चकजीवनार्थिता क्व महापापवनाग्नितापि ते ।
क्व शिवव्रतचित्तसङ्गिता क्व शिवाद्याप्यकृपैव मय्यपि ॥ ८१ ॥

किं त्वत्कारुणिकत्वमप्यघकुलारण्यानलत्वं च ते
किं तद्भुक्तिदमोक्षदत्वमपि ते नीतं गतं वा स्वतः ।
तच्चेदस्ति वशे तवापि किमिति त्वत्पादुकाराधकं
मामप्येवमुपेक्ष्य तिष्ठसि कथं श्रीनीलकण्ठाधुना ॥ ८२ ॥

विश्वस्येन्दुकलावतंसमसकृद्बिल्वीदलैः कोमलैः गङ्गातुङ्गतरङ्गशीतलजलैर्वीरेशलिङ्गं मुदा ।
प्राणाद्यैरुपहारताम्रुपगतैरभ्यर्चितं किं मया श्रीविश्वेश न दुर्दशा परिहृता संसारजातार्जिता ॥

इति स्तुत्वा महादेवं प्रणम्य च पुनः पुनः । गन्तुमभ्युद्यतस्तत्र स ददर्श शिवार्चकान् ॥ ८४ ॥
भस्मोद्धूलितसर्वाङ्गान् त्रिपुण्ड्राङ्कितमस्तकान् । रुद्राक्षमालाभरणान् शिवलिङ्गार्चनप्रियान् ॥
शिवनामसुधाधारापानपीनान् मनोहरान् । शिवध्यानसुधाराशिकल्लोलालोलमानसान् ॥ ८६ ॥
अपूर्वानमितान् दृष्ट्वा सागरः प्रणतो मुहुः । तानुवाच महाभागान् के यूयमिति सादरम् ॥

पुण्यविग्रहाः —

शिवार्चनध्यानविधूतपापाः पुण्यप्रपारूपकृपास्वरूपाः ।
ये त्वत्पदाराधनसक्तचित्ताः तद्भृत्यभृत्या इति संस्मरास्मान् ॥ ८८ ॥

अस्माकमिष्टं शिवधर्मधर्मधर्माङ्घ्रिपद्मार्चनमादरेण ।
त्वत्सङ्गतिस्तावदपेक्षिताऽतो दृष्टस्त्वमस्माभिरुदारहारः ॥ ८९ ॥

इदं दिनं धन्यमभूदिदानीमतः परं धन्यमिदं शरीरम् ।

धन्ये च नेत्रे गिरिशार्चकांघ्रिसरोजसन्दर्शनमात्रतोऽपि ॥ ९० ॥

अतः परं शाङ्करपुङ्गवत्वमंभोनिधे शङ्करधर्मतत्त्वम् ।
तदधुना येन वयं पुनीताः (?) कुलं च धन्यं मम मानसं च ॥ ९१ ॥

देव त्वदभ्यागमनं किलासीदर्धेन्दुखण्डाभरणार्चनाय ।
अस्माभिरप्यागतमेव चात्र योगो घृतक्षीरसितान्वयाभः ॥ ९२ ॥

कृत्यस्त्वं गिरिशार्चकोत्तमतमः कृत्याः परं वा वयं
त्वत्सङ्गोऽयमपूर्व एव किमयं योगो न मुक्तिप्रदः ।
वांछा शाङ्करराङ्गसङ्गविषयं प्राप्याधुना स्वर्धुनी-
स्पर्धामेव करोति साधु बहुधाप्यर्धेन्दुखण्डालये ॥ ९३ ॥

संसारापारपाशव्यतिकरविलयोपाय एवायमासीत्
[1]शाङ्काङ्गात सङ्ग एव स्वयमपि न यमायामपीडादरः किम् ।
अस्माकं वांछितं वा किमपि तदितरन्नेति मन्ये तदन्यत्
किं वा लोकेऽपि शोकव्यपनयनियतः स्वाचराचारमेकम् ॥ ९४ ॥

इति तद्वचनं श्रुत्वा हृष्टो रत्नाकरस्तदा । अभिनन्द्यातियत्नेन शाङ्करानाह तान् मुदा ॥ ९५ ॥

रत्नाकरः —

अपूर्वमिदमद्भुतं खलु शिवार्चकालोकनं ददाति मुदमादरात् प्रतिपदं विनोदावहम् ।
मुहुर्मुहुरपेक्षितं भवति दुस्त्यजं सर्वथा कृतार्थमधुना मनः किमिति वर्णनीयं मया ॥ ९६ ॥

इति तद्वचनं श्रुत्वा ते तं शङ्करपूजकम् । प्राहुर्लिङ्गस्य माहात्म्यं किमस्येति मुहुर्मुहुः ॥ ९७ ॥

तद्वाक्यामृतपानपीनमनसा तेनापि सद्यः स्मृतः
तस्याभून्महिमा स एव निगमैः सर्वैः स्तुतः सन्ततम् ।
तं वक्तुं सितभूतिभूषितवपुः स्पृष्ट्वा च लिङ्गं मुहुः
हृष्टः प्राह शिवाभिधानसुधया पीनोऽतिपूतोऽबुधिः ॥ ९८ ॥

एतन्नामानि रम्याणि लिङ्गस्यास्य विशेषतः । श्रोतव्यानि प्रयत्नेन पापनाशकराण्यपि ॥ ९९ ॥

हाटकं जातमेतस्मात् तटित्कूटमनोहरम् । तेनेदं हाटकेशाख्यं लिङ्गमित्युच्यते बुधैः ॥ १०० ॥

---

1 श्रीशाङ्गासङ्ग एव C

एतस्माद्यदभूत् हेम तेनाभून्मेरुरुत्तमः। सर्वामरालयो जातः स तावदतिसुन्दरः ॥ १०१ ॥

स भूमण्डलमध्यस्थभूसद्मस्तंभसन्निभः। तत्रामराणां सर्वेषां तिष्ठन्ति सदनान्यपि ॥ १०२ ॥

तस्यैव सागराः सर्वे परिखात्वमुपागताः। तन्मूलभागनिलया सप्तद्वीपा वसुन्धरा ॥ १०३ ॥

सुमेरुसानुनिलयः कश्चिदस्ति यमालयः। यमालयस्य मूले तु तिष्ठत्यङ्गारवाहिनी ॥ १०४ ॥

विषज्वालासमाक्रान्ता कापि सर्पतरङ्गिणी। महापर्वतसंकाशवृश्चिकानां तरङ्गिणी ॥ १०५ ॥

कुलिशानां च तीक्ष्णानां तिष्ठत्येका तरङ्गिणी। कण्टकानां च तीक्ष्णानां परितः सन्ति पर्वताः ॥

तत्तत्तरङ्गिणीतीरे पिशाचाः सन्ति कोटिशः। तदालोकनमात्रेण भीतिर्भवति दुःसहा ॥ १०७ ॥

तस्मिन् यमालये सन्ति रम्याणि भवनान्यपि। मणिमुक्तामयान्येव स्वर्णयुक्तानि कोटिशः ॥

तत्रोद्यानानि सन्त्येव तानि कल्पतरुव्रजैः। समाक्रान्तान्यपाराणि दिव्यपुष्पयुतान्यपि ॥ १०९ ॥

तेष्वेव विल्वतरवः कोटिशः सन्ति शोभनाः। तेषां प्रभावः केनापि वक्तुमेव व शक्यते ॥

तत्रैव तावच्छिवसन्दिराणि तिष्ठन्ति रम्याणि मणिप्रभाभिः।
छन्नानि दिव्यप्रसवैरपारैः सुधासमुद्रैश्च समावृतानि ॥ १११ ॥

तत्रापि शाङ्कराः सन्ति शिवाराधनतत्पराः। तस्माद्विनिर्गमस्तेषां कदाचिज्जायते मुदा ॥ ११२ ॥

रम्याणि दृष्ट्वा शिवमन्दिराणि न जायते जातु मनो निवृत्तम्।
तत्रैव तावन्नियमेव नित्यं यमः शिवाराधनतत्परोऽभूत् ॥ ११३ ॥

यमः स तत्रैव शिवार्चनेन कालं नयत्येव शिवार्चकश्च।
तत्रैव तिष्ठन्ति शिवार्चकेभ्यः शुभानि संप्राप्य शिवानि नित्यम् ॥ ११४ ॥

यमो यत्रास्ति सन्तुष्टः शाङ्करे रत्नमन्दिरे। तत्राद्भुतं लिङ्गमेकं रम्यं मणिमयं यतः ॥ ११५ ॥

तत्पूजनेन सन्तुष्टो यमः प्रतिदिनं मुहुः। तत्पूजानन्तरं कार्यं करोत्यन्यत् शिवाज्ञया ॥ ११६ ॥

तल्लिङ्गदर्शनादेव कार्याकार्यविनिर्णयः। चित्रगुप्तादिकानां च यमस्यापि विशेषतः ॥ ११७ ॥

तदधोधोऽन्धकारान्धुसिन्धुबन्धुरकोटयः। तिष्ठन्ति तप्तशैलाश्च प्रलयानलसन्निभाः ॥ ११८ ॥

विषज्वालान्धवः केचित् केचिद् वृश्चिककोटयः। अमेध्यान्धुगणाः केचित् केचिन्मूत्रान्धवस्ततः॥

तप्तलोहितपूयातिसिन्धवः सन्ति कोटिशः। क्रिमिकीटान्धवः सन्ति वज्रदन्ताब्धिकोटयः ॥

सन्तप्तभिण्डिपालादिकोटयः सन्ति भीषणाः। सन्तप्तशस्त्रगिरयः सन्ति तत्रातिभीषणाः ॥१२१॥

[1] सन्तप्तवालुकाः सन्ति कोटिशस्तत्र दुःसहाः । सन्ति तत्रैव सन्तप्तशरपञ्जरकोटयः ॥ १२२ ॥

अशांभवानां सर्वेषां ते तावद्भयदाः सदा । तदर्थमेव निर्माणं तेषामिति विनिश्चयः ॥ १२३ ॥

तन्निर्माणेन सन्तुष्टः कालकालाज्ञया यमः । तद्रक्षकाः कालदूताः कोटिशो गणनायकाः ॥

अशांभवान् समानीय पातयन्ति प्रयत्नतः । तेषु तेषु प्रदेशेषु कोटिशः क्रोधपूर्वकम् ॥ १२५ ॥

अशांभवमुखे दृष्टे यमदूतमुखान्यपि । अग्निकल्पानि जायन्ते सर्वदा यमशासनात् ॥ १२६ ॥

यमशासनवार्तापि स्वदूतान् प्रति या पुरा । वृत्ता सापि पुरा श्राव्या तेन भक्तिर्भवे भवेत् ॥

यैः सन्त्यक्तं फालभागे त्रिपुण्ड्रं रुद्राक्षाणां धारणं सर्वदापि ।
तैस्ते देशाः सर्वथा व्याप्तृतास्ते दुःखापाराम्भोधिमग्नाश्च सन्ति ॥ १२८ ॥

यैरुद्धूलनमादरेण न कृतं फाले त्रिपुण्ड्रं मुदा
रुद्राक्षाभरणं च कर्णयुगले कण्ठे च बाहुद्वये ।
ते संप्राप्य तथाविधस्थलकुलव्यापारहीनाः परं
तिष्ठन्त्येव तदर्थमेव रचना तेषां यतः संमता ॥ १२९ ॥

यैर्लिङ्गार्चनमादरेण न कृतं प्रायः प्रदोषेषु वा
तैरेवामितपातकौघनिलये दुःखालये सन्ततम् ।
तत्तद्दुःसहयातनास्थलकुलव्यापारदुःखैः परं
दुर्ज्ञेयः समयो विनेय इति ते तेभ्यो न निर्यान्त्यपि ॥ १३० ॥

ये पञ्चाक्षरमन्त्रराजजपतः पूता न ते सर्वथा
ते तेष्वग्निमहाग्निसिन्धुषु सदा तिष्ठन्ति विष्ठाशनाः ।
तेभ्यस्तैश्च निवारिता अपि न कैरत्यद्भुता यातना
प्राप्तव्या खलु कल्पकोटिगणना नास्त्येव सर्वात्मना ॥ १३१ ॥

नीतो यैर्न दुरात्मभिः खलनिभः कालः क्षणं वा मुदा
श्रीमृत्युञ्जयपूजनेन सुकृताम्भोधिप्रवृद्ध्यै सदा ।
ते तावन्निरयं प्रयान्ति सहसा तन्निर्गमो दुर्लभ-
स्ते किं दुर्भगदुर्भगा अपि [2] न ते ... दुःखालयाः ॥ १३२ ॥

श्रीकाशीनगरादिशाङ्करपुरीवासप्रभावप्रभाबोधापारकथासुधानिधिलसत्कर्णार्णवास्तूर्णतः ।

1 तप्तलोहाङ्गनाः (C)   2 न ते दुःखालयाप्तानलाः C

आनन्दामृतधारया शिवकथासारप्रथाजातया तुष्टास्तत्र नयन्ति शङ्कररतास्ते यान्ति तं शङ्करम् ॥

ये ये शङ्करपूजकाः कतिपयग्रामाश्रया सन्ततं लिङ्गाराधनतत्पराः शिवकथासङ्गोत्सवाः सन्ततम् ।
ते दृष्ट्वा यममेव सुन्दरतमं धीरं प्रसन्नं परं हृष्टास्तेन समर्चिताः शिवपदं यान्तीति सम्यग्वचः ॥

शाङ्करान् प्रति यमो न यमोऽसौ धर्म एव परमः स तु तेषाम् ।
सेवकः स खलु तत्पदपद्माराधनातिनिपुणः स गुणी च ॥ १३५ ॥

शूलपाणिचरणस्मरणं चेत् पापिनोऽपि यदि दैववशेन ।
शैवसङ्गतिमवाप्य कृतार्थस्तर्हि संसदि महार्हसमः स्यात् ॥ १३६ ॥

यमोऽपि साक्षान्न यमान्तकांघ्रिपरायणान् निष्ठुरदृष्टिपातैः ।
न पश्यतीति स्फुटमेतदुक्तं श्रीनीलकण्ठार्चनभक्तिलेशात् ॥ १३७ ॥

लिङ्गाराधनतत्परस्य महिमा न ज्ञायते सर्वथा
तावत्साधु यमो न वेद न विधिर्नारायणो वा ततः ।
तत्सामर्थ्यविशेषलेशकलनात् कालोऽपि तत्पूजन-
व्यासक्तो भवतीति केवलमहं जाने न जाने कथम् ॥ १३८ ॥

यः शर्वं सकृदप्यखर्वहृदयानन्देन संपूजयेत् तत्पादार्चनतत्परं यदि मनस्तर्हि प्रसन्नाः शिवम् ।
आसन्नस्मरणेन केवलमुमाकान्तं स शान्तस्ततः सन्तस्तत्पदपङ्कजं हृदि मुहुर्ध्यात्वा वसन्ति ध्रुवम् ॥

यो बिल्वाङ्कुरपूजयापि सकृदप्यार्तिं हरत्यन्वहं प्रीत्या सन्ततमन्तकार्चनपदाम्भोजार्चनात्यादरः ।
संसारादघसागरादपि तरत्यत्यद्भुतं केवलं तत्पादस्मरणेन मुक्तिरिति मे बुद्धिः प्रवृद्धा खलु ॥

संसारार्णवभेदिपातककुलात् कालानलव्यालत-
स्तद्दूतामितविक्रमादपि महादेवार्चकः केवलम् ।
कालेनापि समर्चितो भवति तं कः कालकालार्चकं
भक्त्या नार्चयति प्रसन्नहृदयं त्यक्त्वा परं दुर्जनम् ॥ १४१ ॥

महोत्सवपदं परं शिवपदाम्बुजाराधनं तदेव धनमुत्तमं जनिजरादिदुःखापहम् ।
तदुत्तमकुलोद्भवैः कृतमघौघतूलानलं सुधापि तदिति स्मृतं परमदुःखहान्युन्मुखम् ॥ १४२ ॥

अहो खलजनः परं शिवपदाम्बुजाराधनप्रसादविभवं परं न च विचारयत्येव सः ।
अतः पतितदुष्कृतप्रबलनक्रवक्त्राकरे स शोककुलसागरे सपदि सान्धकारे मुहुः ॥ १४३ ॥

सन्तप्तायसभिण्डिपाललगुडव्यालस्फुरन्मण्डले
चण्डालाः खलु चन्द्रखण्डविमलालङ्कारनिन्दारताः ।
तिष्ठन्त्येव मुहुर्मुहुर्न भसितं यैर्वा ललाटे धृतं
रुद्राक्षोऽपि न कण्ठबाहुयुगले जप्तो न पञ्चाक्षरः ॥ १४४ ॥

भजन्ति विमलाशयाः शिवमुमासहायं परं स एव समये मुहुर्मम सहाय इत्यादरात् ।
तमन्तकरिपुं मुहुः स्मरति यः प्रयाणक्षणे स तावदपराजितो हितहितं प्रयाति ध्रुवम् ॥ १४५ ॥

पर्याप्ता खलु कामनापि सततं कामारिपादाम्बुज-
ध्यानादेव भवत्यपारमहिमा कामारिरित्यादरात् ।
वेदो वेद विधिर्न वेद स तथा नारायणोऽपि ध्रुवं
कामारिस्मरणप्रवीणमनसा ज्ञेयं कथञ्चित् खलु ॥ १४६ ॥

अद्यार्धेन्दुकलावतंसचरणध्यानामृतास्वादनात्
तृप्तो मानसराजहंस इति चेच्चिन्ता कृतान्तात् कुतः ।
संसारादपि भिन्नमेव न महाव्याधिप्रवाहादपि
व्यालेभ्योऽपि न दुष्कृतैरपि कृतैर्भूतैरनन्तैरपि ॥ १४७ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे सागरशिवभक्तसंवादे हाटकेशमाहात्म्ये यमपुरीवर्णनं नाम सप्तत्रिंशोऽध्यायः ॥

—:x:—

## अथाष्टत्रिंशोऽध्यायः ।

---

**याज्ञवल्क्यः —**

यत्सानुभागे यममन्दिराणि तदूर्ध्वभागे पवनस्य गेहाः ।
तदूर्ध्वभागेष्वनलस्य गेहाः तदूर्ध्वभागे वरुणस्य गेहाः ॥ १ ॥

तदूर्ध्वभागे खलु निर्ऋतेश्च तदूर्ध्वभागे धनदस्य गेहाः ।
तदूर्ध्वभागे तु शचीपतेश्च तदूर्ध्वभागे खलु सत्यलोकः ॥ २ ॥

वैकुण्ठलोकोऽपि तदूर्ध्वभागे सूर्यस्य लोकोऽपि तदूर्ध्वभागे ।
नक्षत्रलोकोऽपि तदूर्ध्वभागे सुधांशुलोकोऽपि तदूर्ध्वभागे ॥ ३ ॥

ईशानगेहोऽपि तदूर्ध्वभागे त्रिशूलगेहोऽपि तदूर्ध्वभागे ।
तदूर्ध्वभागेष्वनलाम्बुराशिः सुमेरुशृङ्गप्रतिभाभिभूतः ॥ ४ ॥

सुमेरुशृङ्गाग्रविराजमानः कैलासलोकः स वरो वरिष्ठः ।
सुमेरुशृङ्गस्य मितानि तेषु सर्वाणि कार्तस्वरमन्दिराणि ॥ ५ ॥

तान्येव तावत् खलु सुन्दराणि रम्याणि हर्म्याण्यपि तत्र तानि ।
संख्याविहीनानि विचित्रचित्रव्याप्तानि चित्रप्रतिमान्वितानि ॥ ६ ॥

तत्रोद्यानवनानि सन्ति विपुलान्यन्तो न तेषां श्रुतो
दृष्टो वा तरवोऽपि तत्र बहवो नान्यत्र ये सर्वथा ।
ते तावत् सततं फलैरभिनवैः पुष्पोच्चयैः संकुलाः
सर्वर्तुप्रसवाः प्रभूतविभवास्ते तावदत्युन्नताः ॥ ७ ॥

ते तावद्विनता भवन्ति बहुधा विश्वेश्वराराधने
कर्तव्ये सति सञ्चरन्ति बहवो लिङ्गेषु तुङ्गेषु ते ।
छत्रात्यच्छसगुच्छरञ्जितनिजच्छायाच्छदिव्यावृता-
न्यालिङ्ग्य प्रसवार्चितानि सततं कुर्वन्ति ते ते स्वतः ॥ ८ ॥

तत्रापारमनन्तसुन्दरसुधाकुल्यामृतान्धुप्रभासाधुव्रातविराजमानवनजैरभ्यर्चितः शङ्करः ।
तत्तीरे शिवलिङ्गसुन्दरलसन्मन्दारवाटीतटे पाटीरद्रववाहिनीमृगमदापारप्रवाहान्विते ॥ ९ ॥

तत्रैकत्र मणिप्रभाविरचिताः प्रासाददेशाः परं तेषां तावदपारकान्तिसरितां सङ्गोऽतितुङ्गेष्वपि ।
लिङ्गेषु प्रथितेषु तेषु गिरिजा पूजां करोत्यादरात् सौवर्णैः कमलैस्तथा मणिमयैरुत्फुल्लपुष्पैरपि ॥

मणिप्रसवपूजितो भवति शङ्करः सर्वथा विहारसदनालयो गिरिजया समेतः सदा ।
जहाति न पदं मुदा तदिदमुत्तमं सर्वदा मणिप्रवररञ्जितं कुसुमवृष्टिसङ्घायुतम् ॥ ११ ॥

मणिप्रभामण्डलमण्डितानि हर्म्याणि तेषां गणना कुतः स्यात् ।
आयाममौन्नत्यमपि प्रभाभिर्न ज्ञायते वृद्धिमपि प्रयान्ति ॥ १२ ॥

न तत्र चण्डांशुकरप्रचारः सुधाकरांशुप्रसरोऽपि नातः ।
विद्युद्गणानां च न तत्र वार्ता तारागणानां च न तत्र वार्ता ॥ १३ ॥

महेश्वरापारशरीरकान्त्या दीप्तानि तावत्खलु मन्दिराणि ।
रम्याण्यपाराण्यपि सुन्दराणि द्वाराणि द्वारप्रवरावृतानि ॥ १४ ॥

यत्रैवायुतयोजनोन्नतमणिस्तम्भार्बुदान्यर्बुदश्रीसिंहासनमञ्चकोटिघटितं यत् सुन्दरं मन्दिरम् ।
तत्तावद्धनरत्नकान्तिविलसत्तल्पावृतं कल्पजापारात्युत्तमगन्धसिन्धुसहितं तत्राम्बिका क्रीडति ॥

सम्पूर्णामृतशारदांबुदसुधाराशिप्रभामण्डलव्यापाराः खगतारका इव सदा तिष्ठन्ति यत्कान्तिभिः ।
तत्तावद्गिरिराजराजतनयाकान्तं श्रितं सन्ततं स्वान्तं मे स तनोति सन्ततमतस्तच्चिन्तयामि स्वतः ॥

वैकुण्ठाधिकरत्नकान्तिभवनावासाः सुरास्तं शिवं ध्यात्वा सांबमहर्निशं शिवकथालापैः परं चेतसि ।
स्वस्वास्तत्पदचिन्तनेन विगतक्लेशाः शिवाराधनं कृत्वा सन्ततचन्द्रचूडचरणध्यानांबुराशिं स्मृताः ॥

नित्यं सुराणामपि मन्दिरेषु लिङ्गानि यान्यप्रतिमानि तेषु ।
कुर्वन्ति पूजाममराः प्रभाते सायं विशेषेण विशिष्य वृत्त्या ॥ १८ ॥

देवानामपि भाग्यमिन्दुशकलालङ्कारपादाम्बुजध्यानादेव तदर्चनादनिरतं सौख्यं सुराणामपि ।
देवानामधिदैवतं शिव इति प्राहुर्मुनीन्द्राः सुराः सर्वे ते निगमाश्च तद्भजनतो मुक्तिः परा जायते ॥

तस्मिन्नेव सुमेरुशृङ्गनिलये स्थित्वा शिवासंयुतो लोकोत्पादनपालनादिकमुमाकान्तः स्वलीलालवैः ।
कृत्वा तिष्ठति तं परात्परमिति प्राहुस्तदन्ये सुराः तल्लिङ्गार्चनतत्पराः शिवरतास्तेन स्वतन्त्राः स्वतः ॥

स्वतन्त्रस्त्रिनेत्रस्तथा तत्कलत्रं पवित्रं स्वतन्त्रं विचित्रं तदेव ।
जगज्जालनिर्माणनिर्वाणदाने समर्थं तदेवेन्दुमौलिप्रसादात् ॥ २१ ॥

भजन्त्यन्यमज्ञाः शिवान्यं सुरं ते न ते गर्भवासादिदुःखानि तस्य ।
स्मरन्तीति मन्ये महामोहपाशप्रबद्धाः सुचित्ताः प्रमत्तास्ततस्ते ॥ २२ ॥

यो जन्मादिकदुःखभाजनतया ज्ञातोऽस्ति गर्भाश्रित-
स्तद्योनिव्रणपूयपूरिततनुस्तद्योनिमार्गागतः ।
कंसादिप्रबलातिशत्रुनिहतः किं पूजितो दुर्दशां
स्वीयां स्तान्न ददाति तिष्ठति शिवे नान्यं भजामो वयम् ॥ २३ ॥

नत्वा मृत्युञ्जयं मर्त्यो न मृत्युमुपयास्यति । मर्त्यलोकमनुप्राप्य तेन मृत्युञ्जयो भवेत् ॥ २४ ॥

मृत्युञ्जयं सन्ततमाश्रयामो मृत्युर्बिभेत्येव यतः स्वतोऽपि ।
त्यक्त्वा न मृत्युञ्जयमन्यदेवं स्वप्नेऽपि पश्यामि शृणोमि नाहम् ॥ २५ ॥

दृश्यन्ते बहवः शिवेतरसुरावज्ञामकृत्वा मुहु-
र्मोहेनैव समर्चयन्ति बहुधा योनिप्रवेशेच्छया ।

ते किं नारकिणो न दुःखनिलयाः तेषां शिवावज्ञया
दुर्ज्ञाने सति दुःखमेव सततं तद्दुर्भगाणां न किम् ॥ २६ ॥

न जानन्त्येव बहवः प्रभावं शांभवं भुवि । अतः पतन्ति नरके योनिमार्गविनिर्गताः ॥ २७ ॥

यो योनिमार्गपरिमार्गणसक्तचित्तो मत्तः प्रमत्तपरिसेवितचित्तवृत्तिः ।
नीचानुवृत्तिनिरतः स कथं महेशं जानाति जन्तुरशिवार्चनपापरूपः ॥ २८ ॥

[1]कोपेनापि महेश्वरं यदि नरः स्मृत्वा गृहान्निर्गतः
स्वर्गद्वारमुपेत्य धीरहृदयस्तत्तत्कवाटान्यपि ।
भित्वा स्वर्गपुरं समेत्य च शचीनाथार्चितः सन्ततं
सत्यादिष्वपि संस्थितः शिवपदं यात्येव सत्यं वचः ॥ २९ ॥

न जानन्ति शिवं मूढाः शिवापरिवृढं दृढम् । नरके भिण्डिपालेषु तप्तेषु प्रपतन्ति ते ॥ ३० ॥

यमकिङ्करपादघातशङ्का न भवत्येव हि शङ्करार्चकानाम् ।
अत एव भजामहे महेशं मुहुरर्धेन्दुकलावतंसमीशम् ॥ ३१ ॥

अस्माभिरेवमनिशं शिवनामधेयपीयूषपाननिरता रसनापि लब्धा ।
दुग्धं न वांछति घृतेन युतं न जिह्वा सा शर्करामपि सितामपि तेन तृप्ता ॥ ३२ ॥

येनाशु पीतमसकृद् घृतदुग्धजालं तेनारनालकलनं क्रियते कथं वा ।
तस्मादुमापतिपदाम्बुजचिन्तनेन नेयं दिनं तदितरामरहानपूर्वम् ॥ ३३ ॥

महादेवः परो देवो महादेवः परात्परः । महादेवः परं ज्ञानं महादेवो महानतः ॥ ३४ ॥

महादेवरतस्तावन्महात्मा महतामपि । सेवनीयः प्रयत्नेन महादेवमनोहरः ॥ ३५ ॥

महादेवविहाराणां स्थलं शाम्भवमानसम् । अतः स पूज्यः सततं शांभवः शिवतत्परः ॥ ३६ ॥

शिवाभिमानस्थलमेकमेव तदेतदेकान्तशिवार्चकस्य ।
शिवार्चकादप्यधि कोऽस्ति लोके यतः स एवाप्रतिमप्रभावः ॥ ३७ ॥

तं भावमेवाप्रतिमप्रभावं मन्ये सुराणामपि सेवनीयम् ।
स एव मृत्युञ्जयपूजनेन धन्योऽपि मान्योऽपि महानुभावः ॥ ३८ ॥

---

1 अयं श्लोकः C कोशे नोपलभ्यते ।

यो यस्तिष्ठति शाङ्करो भुवि स मे पूज्यः स पूजार्हतां
प्राप्तः शङ्करपूजया सुरगणास्तत्पूजनैः पावनाः ।
तत्पादप्रणतास्तदंघ्रिजरजोलेशप्रसादं परं
वांछत्येव सुधां सुधामपि मुहुस्त्यक्त्वा वृथेत्यादरात् ॥ ३९ ॥

कालाद्भीतिः कालकालार्चनेन नाभूद्भीतः प्रत्युतास्माद्यमोऽपि ।
तस्मात् को वा कालकालान्यदेवं मोहाद्ध्यातुं पूजितुं वा प्रमत्तः ॥ ४० ॥

प्रवृत्तिरीशान्यसुरार्चनेषु न स्याच्छिवाराधनतत्पराणाम् ।
यस्माच्छिवान्यामररूपबुद्धिः हानाय तावद्भवतीति मन्ये ॥ ४१ ॥

असद्वस्तुहानाय ते वस्तुबुद्धिः प्रवृद्धापि तत्कार्यहेतुः स्वतः स्यात् ।
उपादानमप्यस्ति सद्दानवृद्ध्या सदित्येव बुद्धिः शिवब्रह्मणीति ॥ ४२ ॥

यद्ब्रह्म तत्तावदुमासहायस्वरूपमासाद्य हृदि प्रविष्टम् ।
कष्टानि दुष्टानि निराकरोति तत्कष्टनाशाय यतः प्रवृत्तम् ॥ ४३ ॥

अशिवार्चनभावनानिवृत्तिर्यदि जाता बहुपुण्यसञ्चयैः ।
शिव एव सदा विचिन्तनीयो मनसः सृष्टिरपीश पूजनीया ॥ ४४ ॥

मनो महेशेन यदा प्रकृष्टं सृष्टं तदा तस्य शिवार्चनेन ।
गता भवत्येव स कालवार्ता किं कालकालप्रवणस्य तस्य ॥ ४५ ॥

कालान्तकाराधकपादुकार्चाचर्चापि वर्चश्चिरमातनोति ।
तेनैव पापौघलयोऽपि तेन स्वर्गोऽपि मुक्तिश्च भवत्यवश्यम् ॥ ४६ ॥

अहो वदन्ति प्रमथाधिनाथाः कृत्वा कथञ्चिद्गिरिशार्चनानि ।
धन्याः परं शङ्करपूजनेन नयन्ति तावद्दिवसानपीति ॥ ४७ ॥

इदं परं भाग्यमिति स्मरन्तः संसारवार्तामपि विस्मरन्तः ।
महेशनामानि सदा जपन्तः शिवालयेषु प्रचरन्ति सन्तः ॥ ४८ ॥

सन्तस्तावत्सन्ततं साम्बमीशं स्मृत्वा स्मृत्वा देवदेवं च मत्वा ।
दत्वा चित्तं शङ्करे साधु नत्वा कृत्वा पूजां यान्ति साम्बं महेशम् ॥ ४९ ॥

अपर्णारमणं मत्वा कृपार्णवमनामयम् । महामृत्युञ्जयं शैवाः पूजयन्ति प्रयत्नतः ॥ ५० ॥

कः शाम्भवेन सदृशस्तत्वज्ञो न भविष्यति । तेन तत्वं यथा ज्ञातं तथाऽन्येन न बुद्धयते ॥

शिवं शिवङ्करत्वेन ज्ञात्वा केवलमव्ययम् । सर्वमन्यत् परित्यज्य निरातङ्कोऽधितिष्ठति ॥ ५२ ॥

महद्भाग्यमिति ज्ञातं शाम्भवं जन्म केवलम् । जन्मनामुत्तमं जन्म शांभवं तत्किलोत्तमम् ॥ ५३ ॥

शाम्भवं जन्म संप्राप्य शम्भुपूजां करोति यः । स एव धन्यः श्रेष्ठश्च वरिष्ठोऽपि विशेषतः ॥

सर्वकष्टविनाशाय शिपिविष्टार्चने रताः । भवन्ति बहवो लोके मुक्तास्ते सर्वथा ध्रुवम् ॥ ५५ ॥

शिवस्मरणमात्रेण जीवन्मुक्तो भवेन्नरः । शिवशब्दोच्चारणेन देवपूज्यो भविष्यति ॥ ५६ ॥

शिवनामामृतासक्तजिह्वालोलमनाकुलम् । प्रणमन्ति सुराः सर्वे मुहुर्दृष्ट्वापि दूरतः ॥ ५७ ॥

इन्द्रादिदेवपूज्यत्वं यो वाञ्छति नरोऽपि सन् । स पूजयति गौरीशं लिङ्गरूपमनामयम् ॥ ५८ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । शृणुध्वं सावधानेन शिवध्यानपुरःसरम् ॥ ५९ ॥

पुरा रेवासरित्तीरे द्विजः कोपि स शङ्करः । सकुटुम्बः साम्बपूजां चकार शिवतत्परः ॥ ६० ॥

दूर्वाङ्कुरैरभिनवैर्धुत्तूरप्रसवैरपि । पूजयामास गिरिशं नवबिल्वदलैरपि ॥ ६१ ॥

एवं कालं नयन्नेव कालकालार्चनैर्मुदा । आहारमपि सन्त्यक्त्वा स्थितः शर्वमनुस्मरन् ॥ ६२ ॥

तादृशं शाम्भवं दृष्ट्वा तत् कुटुम्बमुवाच तम् । प्रणिपत्य प्रयत्नेन कृताञ्जलिपुटं मुहुः ॥ ६३ ॥

द्विजभार्या —

स्वामिन् मां प्रणतां दृष्ट्वा दीनवत्सलवत्सल । विज्ञप्तिरेषा श्रोतव्या नैष्ठुर्यं त्यज मय्यपि ॥

शिवाचाराः श्रुतिप्रोक्ताः सन्त्येव विविधा अपि । तेषु कस्य परित्यागे पापमाप्नोति मानवः ॥

इदं वक्तव्यमधुना पुण्यपापविवेचनैः । पुण्यापुण्यविवेकेन प्रवृत्तिश्च निवर्तनम् ॥ ६६ ॥

पुण्यकर्मणि पुण्यात्मा प्रवृत्तः पुण्यकर्मणा । पापकर्मणि पापात्मा प्रवृत्तः स्याद्विवेकतः ॥ ६७ ॥

इदं पुण्यमिति ज्ञात्वा पुण्यैः पुण्येच्छया पुमान् । पुण्यं करोति तेनैव पुण्यराशिः प्रवर्धते ॥ ६८ ॥

परदाराभिगमनं पापमित्यवधारणम् । पुनः कामातुरस्तस्मान्निवृत्तो न प्रजायते ॥ ६९ ॥

एवं सति विवेको यः स्यात् पापापापगोचरः । स तावदुपयुक्तः स्यात् प्रवर्तकतया मतः ॥ ७० ॥

इति तस्य वचः श्रुत्वा स विप्रः सत्यतत्परः । तामाह युवतीं भार्यां स्मरन्नेव महेश्वरम् ॥ ७१ ॥

सत्यव्रतः —

सन्ति धर्माः श्रुतिप्रोक्ताः पुराणोक्ताश्च कोटिशः । तेषु धर्मेषु सर्वेषु धर्माः पञ्च मनोहराः ॥

विभूतिधारणं धर्मः तथा रुद्राक्षधारणम् । रुद्राध्यायजपो लिङ्गे बिल्वैः शाङ्करपूजनम् ॥ ७३ ॥

पञ्चमं शिवनैवेद्यभोजनं तैः परं नरः । कृतैर्मुक्तो भवत्येव महापातककोटिभिः ॥ ७४ ॥

नारीणां च नराणां च धर्मोऽयं तुल्य इत्यतः । अविशेषेण कर्तव्यः सर्वेषामपि सर्वथा ॥ ७५ ॥

रुद्राध्यायजपे शक्तिः स्त्रीणां यदि न सर्वथा । तदा पञ्चाक्षरो जप्यः वेदसारतया स्मृतः ॥

दधिमन्थनसंप्राप्तनवनीतनिभं विदुः । पञ्चाक्षरमहामन्त्रं वेदराशिविनिर्गतम् ॥ ७७ ॥

अयं मन्त्रः परो मन्त्रः सर्वमन्त्रोत्तमोत्तमः । मन्त्रराजाधिराजोऽयं मन्त्ररत्नमिति स्मृतः ॥

वेदैः परमयं मन्त्रो जप्तः पञ्चाक्षरः परः । महेश्वरेण जप्तोऽयं जप्तोऽप्यम्बिकया मुदा ॥ ७९ ॥

कुमारेणापि जप्तोऽयं गणेशेनापि सादरम् । श्रीकालभैरवेणापि जप्तः पञ्चाक्षरः परम् ॥ ८० ॥

वीरभद्रेण जप्तोऽयं नन्दिकेशेन सादरम् । सभृङ्गिप्रमुखैः सर्वैः गणैर्जप्तः स किन्नरैः ॥ ८१ ॥

गन्धर्वैः परिजप्तोऽयं सकलैश्च पन्नगैः । नारायणेन जप्तोऽयं जप्तोऽयं रमया मुदा ॥ ८२ ॥

ब्रह्मणापि सरस्वत्या जप्तोऽयं परमो मनुः । इन्द्रेण जप्तः शच्या च चन्द्रेणापि प्रयत्नतः ॥ ८३ ॥

अग्निनापि प्रजप्तोऽयं स्वाहयापि प्रयत्नतः । वायुनापि प्रजप्तोऽयं भूम्या जप्तो विशेषतः ॥८४॥

यमेनापि प्रजप्तोऽयमन्यैश्चापि सुरैस्तथा । दधीचिप्रमुखैः सर्वैः जप्तोऽयं मुनिभिः सदा ॥ ८५ ॥

अयमेव परो मन्त्रः सर्वेषां मोक्षदायकः । सूर्येण वायुना जप्तश्चन्द्रेणापि प्रयत्नतः ॥ ८६ ॥

पञ्चाक्षराकारसुधासमुद्रं कृत्वा महारुद्रमिवापरं तम् ।
को वा न तन्मन्त्रजपानुरक्तः त्यक्त्वा पशुत्वं कृतपापराशिम् ॥ ८७ ॥

इतोऽधिकः कोपि न वेदमध्ये मन्त्रोऽस्ति मन्त्राधिप एव सोऽयम् ।
अयं स्मृतश्चेन्मरणावसाने मुक्तिः परं किं न करप्रपन्ना ॥ ८८ ॥

मन्त्रेष्वयं शाम्भवमन्त्रराजराजाधिराजः खलु शैवमन्त्रः ।
अतः स एवामितपुण्यहेतुः स एव मोक्षाय विनिर्मितोऽपि ॥ ८९ ॥

इति तद्वचनं श्रुत्वा प्राह सत्यव्रतं सती । अयं महेश्वरेणापि मन्त्रो जप्तः कथं वद ॥ ९० ॥

मोक्षाय जप्यते मन्त्रो मुमुक्षुभिरयं ततः । किमस्ति कृत्यमीशस्य तज्जपेन विशेषतः ॥ ९१ ॥

चतुर्थ्यन्तं पदं प्राह शङ्करं लोकशङ्करम् । तस्मै नमःपदेनापि पूजा तावद्विधीयते ॥ ९२ ॥

पूजापि विविधा सा तु [1] कृता स्यान्नमसा क्रिया । कापि पूजा तया मर्त्यो मुच्यते पापबन्धनैः ॥

1 तस्य सा स्यान्नमस्क्रिया C

सत्यव्रतः —

सत्यमुक्तं त्वया बाले तत्रोत्तरमिदं शृणु । येन स्यात् संशयोच्छेदः पापराशिलयोऽपि ते ॥ ९४ ॥

वेदाः सृष्टाः शङ्करेण तेषु वेदेषु कः परः । वेदभाग इति प्रीत्या शङ्करेण विशेषतः ॥ ९५ ॥

बहुकालविचारेण रुद्राध्यायः परः स्मृतः । स मन्त्ररत्नकलशस्तत्तुल्योऽपि स एव हि ॥ ९६ ॥

लोके न तादृशं वस्तु दृश्यते मुक्तिसाधनम् । तथा च तत्समं वस्तु तदेवेत्यवधारितम् ॥ ९७ ॥

तत्रापि मन्त्राः सन्त्येव बहवः शाम्भवाः शुभाः । मन्त्ररत्नस्वरूपास्ते तेषां शक्तिर्विलक्षणा ॥

मन्त्रेषु तेषु सर्वेषु कः श्रेष्ठतम इत्यपि । विचारितो महेशेन गौर्या सह विशेषतः ॥ ९९ ॥

देवि देवि वरारोहे रुद्राध्यायगतेष्वपि । मन्त्रेष्वेकः प्रियस्तावन्मन्त्रस्तव वदाधुना ॥ १०० ॥

इत्युक्तं तद्वचः श्रुत्वा शङ्करस्य महात्मनः । अतिसन्तुष्टहृदया प्राह शङ्करमादरात् ॥ १०१ ॥

गौरी —

देवोत्तम महादेव प्रश्नो यस्ते तदुत्तरम् । त्वरया नैव पश्यामि क्षमा तत्रास्तु मय्यपि ॥ १०२ ॥

भूर्जत्वग्भेदमादाय रुद्राध्यायो निजाक्षरैः । लेखनीयः प्रयत्नेन सुलोचनमनोहरः ॥ १०३ ॥

ततः परं पृथक् तेषां मन्त्राणामभिवीक्षणे । तदर्थाकलनेनैव तत्त्वं ज्ञेयं न चान्यथा ॥ १०४ ॥

यस्य मन्त्रस्य सामर्थ्यं यावानर्थोऽपि यादृशः । तद्बोधस्तावदधुना कृपया तव जायते ॥ १०५ ॥

ततः परं विशेषेण ज्ञेयो भवति शङ्करः । अन्यथा तस्य सामर्थ्यं दुर्ज्ञेयमिति मे मतिः ॥ १०६ ॥

इति तद्वचनं श्रुत्वा शङ्करो हृष्टमानसः । तामालिङ्ग्याह गिरिजां सम्यगुक्तं त्वयेत्यपि ॥ १०७ ॥

ततः परं महादेवो लिखित्वा पुस्तके शुभे । ददौ तस्यै पुस्तकं च सा दधार स्वमस्तके ॥ १०८ ॥

नत्वा ददर्श तान् मन्त्रानगाधार्थाननेकधा । तन्मन्त्रालोकनेनापि परमानन्दमाप सा ॥ १०९ ॥

ततः परं महादेवः सर्वविद्यानिधिस्ततः । तद्व्याख्यानं मुदा तावत् चकारातिमनोहरम् ॥ ११० ॥

तद्व्याख्यानेन कालोऽपि गतो यावान् वरानने । तावांस्ताभ्यां च विदितः शिवाभ्यामपि केवलम् ॥

प्रकृत्यर्थप्रत्ययार्थभावनायां विचारणैः । एकैकस्यापि मन्त्रस्य भूयान् कालो गतः खलु ॥ ११२ ॥

संपूर्णमुक्त्वा मन्त्रार्थं दार्ढ्यार्थं स पुनः पुनः । [[1] तदर्थख्यापनं कृत्वा स्थितस्तन्मन्त्रमुच्चरन् ॥

य एव मन्त्रो व्याख्यातः स एव पुनरादरात् । जप्तोऽप्यर्थानुसन्धानपूर्वकं पुनरादरात् ॥ ११४ ॥

एकैकमन्त्रमुच्चार्य तदर्थं च पुनः पुनः । ] वक्तुमिच्छति गौरीशो विरतो न प्रजायते ॥ ११५ ॥

---

1 कोष्ठान्तर्गतमर्धचतुष्टयं C कोशेऽधिकमुपलभ्यते ।

एकैकमन्त्रव्याख्यानैरसंख्यातैरनेकधा । कल्पवृत्तिरभूदेव न कल्पेष्वपि तन्मनः ॥ ११६ ॥
अङ्गषट्काभिधानेन निष्पन्नार्थो मनुर्यदा । तदापि न जहात्येव पुनर्जपति तं मनुम् ॥ ११७ ॥
पीतापि या सुधाधारा तां पुनः पातुमिच्छति । यथा तथा महादेवो मनुं तं वक्तुमिच्छति ॥
अम्बा पृच्छति तत्वज्ञं सा पुनः पुनरादरात् । तथापि विरता प्रश्नादुत्तराद्विरतो न सः ॥ ११९ ॥
समग्रमहिमा ज्ञातः शिवाभ्यामेव केवलम् । ज्ञातो मधुरिमा तस्य ताभ्यामेव न चेतरैः ॥ १२० ॥
द्राक्षाफलरसाभिज्ञा तं पुनः पुनरिच्छति । यथा तथा तन्महिमा ताभ्यां ज्ञातः पुनः पुनः ॥
मन्त्रार्थज्ञानधारा या सा विच्छिन्ना न जायते । तन्मन्त्रार्थानुसन्धानधारा या सा सुखावहा ॥
एवं प्रत्येकमन्त्राणां व्याख्यानेन महेश्वरः । सन्तोषधारया क्रान्तस्तया गिरिजया सह ॥
ततः परं वकारान्तं शिकाराद्यमतः परम् । दृष्ट्वा सन्तोषमापन्नो न तस्माद्विरतः शिवः ॥ १२४ ॥
तदर्थाः कोटिशः प्रोक्ताः शङ्करेण महात्मना । श्रुताश्च शिवया भक्त्या त्यक्त्वा मन्त्रान्तरं तदा ॥
गुणबोधकमन्त्रेषु तदन्येषु तथा रुचिः । न यथा स्वस्वरूपावबोधके तादृशे मनौ ॥ १२६ ॥
मनवः सन्तु बहवः किं तैरत्यन्तदुर्लभम् । अयमेवेति विज्ञातः श्रीयुतो वान्वितो मुहुः ॥ १२७ ॥
तमेव मन्त्रमुच्चार्य कालेष्वेवं गतेष्वपि । विरतिर्नाभवत् तस्य तन्माधुर्यावसेवनात् ॥ १२८ ॥
ततः परं महादेवः तन्मन्त्रावर्तनोत्सुकम् । दृष्ट्वा गौरी प्रयत्नेन प्रणम्याह कृताञ्जलिः ॥ १२९ ॥

गौरी —

कृतार्थाऽस्मि महादेव रुद्राध्यायावलोकनात् । तावत्तैव प्रहृष्टाऽहं स एवानन्दसाधनम् ॥ १३० ॥
तत्र ये मनवः शैवास्तद्वाक्यश्रवणादपि । स एव परमानन्दः पुनरुक्त इव स्थितः ॥ १३१ ॥
तत्राप्ययं शिकाराद्यो मन्त्रो मन्त्रमणिः श्रुतः । इतोऽधिको न कोऽप्यत्र मन्त्र इत्येव मे मतिः ॥
यद्व्याख्यानेन कल्पानामयुतानि गतान्यपि । तद्व्याख्यानान्न विरतिस्तवाद्यापि प्रजायते ॥ १३३ ॥
अयं धन्यतमः कालो यद्व्याख्यानेन नीयते । एतद्व्याख्यानतः सन्तु सन्ततं कल्पकोटयः ॥ १३४ ॥
तद्व्याख्यानश्रवणतो विरतिर्मास्तु मे प्रभो । [ [1]अयमेव वरो देयः कृपया परयाधुना ॥ १३५ ॥
अयं वरो वरमणिर्वराणामपि केवलम् । अयं निधानं निधयः सर्वस्वमपि मे प्रभो ] ॥ १३६ ॥
पुनः पुनर्मधुरिमा तेनाभिनव एव मे । संपादितोऽयं व्याख्यानैरपारैरकलङ्कितैः ॥ १३७ ॥
पुनः पुनर्वर्धनीयः सोऽयं मधुरिमा प्रभो । एतद्वृद्धिं सुधां मन्ये सुधाया अपि सर्वथा ॥ १३८ ॥

---

1 कोष्ठान्तर्गमर्धत्रयं C कोशेऽधिकम् ।

इति तद्वचनं श्रुत्वा शङ्करो लोकशङ्करः । तद्व्याख्यानरतो नित्यं कुमारं प्राह सादरम् ॥ १३९ ॥

शङ्करः —

कुमार शृणु मे वाक्यमशक्यमपि सर्वथा । कुमारकृत्यमेतत्ते कर्तव्यमधुना खलु ॥ १४० ॥

अधुना मन्त्रराजार्थव्याख्याननिरतोऽस्त्यतः । कार्यान्तरे न मे प्रीतिरम्बिकायाश्च सर्वथा ॥

यद्यत् कार्यं मया तावदवधानपुरःसरम् । कृतं तत्तावदधुना त्वया कार्यं षडानन ॥ १४२ ॥

कदा वा मन्त्रराजस्य व्याख्या पूर्णा भविष्यति । स कालोऽप्यधुना तावद्गणनागोचरो न मे ॥

[1]सृष्टिपालनसंहारान् कुरु यत्नपुरःसरम् । अद्यावधि विशेषेण न तत्रास्था मम ध्रुवम् ॥ १४४ ॥

सृष्टिर्यथा यथा यस्य तस्य सृष्टिस्तथा तथा । संपादनीया यत्नेन नास्ति तस्य विपर्ययः ॥ १४५ ॥

सृष्टिं च पालनं प्रीत्या कुरु यत्नपुरःसरम् । संहारं च कुरु प्राज्ञ सर्वदापि मदाज्ञया ॥ १४६ ॥

नोल्लङ्घनीया सहसा मदाज्ञापि तवाधुना । मदाज्ञापालनेनैव तवानन्दः प्रवर्धताम् ॥ १४७ ॥

गणाश्च कोटिशः सन्ति सहायास्तव तैः सह । त्वया सर्गादिकार्याणि कर्तव्यानि यथा तथा ॥

मध्ये मध्ये समागत्य कुरु कार्यं निवेदितम् । तदेव कार्यं यत्नेन विरतं मे ततो मनः ॥ १४९ ॥

इति शङ्करवाक्यानि श्रुत्वा वाक्यविशारदः । तमाह गिरिशं नत्वा षण्मुखः स कृताञ्जलिः ॥

कुमारः —

स्वामिन् ममापि मन्त्रार्थः साकल्येन श्रुतो न सः । तन्मन्त्रार्थश्रवणतो विरतं च न मे मनः ॥

तदर्थाः कति तेषां च तात्पर्यं कुत्र वा विभो । तज्ज्ञानेन विना तावदानन्दो न प्रवर्धते ॥

अम्बिकासन्निधानेन तदर्थश्रवणे सति । पुनरर्थान्तराकांक्षा मम तावत् प्रजायते ॥ १५३ ॥

कालान्तरेषु तत्प्रश्नः कर्तुमेव न शक्यते । अर्थप्रवाहकल्लोलमालाकुलविजृम्भणात् ॥ १५४ ॥

अशक्यमेव सहसा तत्तदर्थावधारणम् । पुनः प्रश्ने नावकाशः सर्वथा मम जायते ॥ १५५ ॥

यं यमर्थं महादेवी पृच्छत्यादरपूर्वकम् । तदर्थाकलने शक्तिर्मम तावन्न जायते ॥ १५६ ॥

त्वत्तश्चेदियमभ्यस्ता विद्या भवति शङ्कर । तदा धन्यं वरं मन्ये स्वात्मानं नान्यथा खलु ॥

मनसा शिवमन्त्रार्थव्याख्या पीयूषवाहिनी । केन त्याज्या महादेव कृपया सा भवेत् तव ॥

व्याख्याप्रवाहाश्चलिताः कथं वा ते मन्त्रराजस्य महेश ते कैः ।
ग्राह्याः कथं कर्णमहासमुद्रात् त्वया परं तात विनिर्मिताश्च ॥ १५९ ॥

---

1 अयं श्लोकः C कोशेऽधिकः

मत्कर्णार्णवपूर्णवर्णतटिनीनिर्माणदक्षोऽधुना त्र्यक्षापेक्षविवर्जितेन मनसा तावत् त्वया तत् कृतम् । अन्येनापि भवेन्न तद्गिरिजया तेनाऽधुना मे मनो भूयस्तच्छ्रवणाय सन्ततमुमाकान्ताश्रितं वांछति ॥

एतन्मन्त्रमहोल्लसन्मधुरिमा राशिः समुज्जृम्भते
तत्कल्लोलपरंपरातरलिमा भूमापि सीमापि कः ।
कामं काममयं स्वयं वितनुते तत्तावदभ्यर्थितं
देवाज्जायत इत्यवैमि किमितोप्याशास्यमन्यत् प्रभो ॥ १६१ ॥

इति शिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे सत्यव्रततत्पत्नीसंवादे श्रीरुद्रमन्त्रव्याख्यानवर्णनं नाम अष्टत्रिंशोऽध्यायः ॥

—:x:—

# अथैकोनचत्वारिंशोऽध्यायः ।

याज्ञ्यवल्क्यः —

इत्याकर्ण्य कुमारचारुवचनं हारावलीसन्निभं तत्पीयूपतरङ्गसन्निभमुमापीयूषकर्णार्णवैः । पेयं वक्तुमुमापतिःप्रियमिति प्रायः स्वयं वांछया पातुं कर्णमणिं चकार दययाप्युत्कण्ठया केवलम् ॥

शङ्करः —

कुमार साधूक्तमिदं तवाद्य पञ्चाक्षरार्थावगमाय यत्नः ।
कृतः स तावत् परमार्थतस्तु सर्वोपकाराय न संशयोऽत्र ॥ २ ॥
लम्बोदरेण सह सादरमत्र नित्यं स्थित्वा विचार्य पुनरर्थविशेषवार्ताम् ।
सम्यङ्निधाय हृदयेऽपि विनेय एव कालः कियानपि विशेषमयूखतुल्यः ॥ ३ ॥

इति तद्वचनं श्रुत्वा कुमारो गणपोऽपि सः । आनन्दसागरापारतरङ्गासङ्गलीलया ॥ ४ ॥
ततः परं कुमारोऽपि स्कन्दोऽपि शिवयोर्मुहुः । प्रणम्य च पदाम्भोजे स्थितः शङ्करसन्निधौ ॥५॥
महाप्रलयकालीनभयापहरणक्षमाम् । मुहुः पञ्चाक्षरव्याख्यां शुश्राव च षडाननः ॥ ६ ॥
ततः परं ददर्शायं कोटिशः शिवविग्रहान् । स्कन्दः पञ्चाक्षरव्याख्याविशेषकथनोद्यतः ॥ ७ ॥
पञ्चाक्षरार्थव्याख्यानविग्रहानपि कोटिशः । शङ्कराभिमुखान् सर्वान् भूतिरुद्राक्षभूषणान् ॥ ८ ॥
प्रहर्षस्मेरवदनान् जटामण्डलमण्डितान् । तत्तदर्थावबोधादि सुधापानविजृम्भितान् ॥ ९ ॥

दृष्ट्वा तान् शङ्करासक्तान् शाङ्करानपि कोटिशः । विचित्रमाल्याभरणान् नवचन्द्रविभूषणान् ॥
सोमसूर्याग्निनयनानुमालिङ्गितविग्रहान् । त्रिशूलहस्तान् वरदान् नीलकण्ठान् मनोहरान् ॥ ११ ॥
दृष्ट्वा तान् विस्मयापन्नो लम्बोदरमुवाच सः । किमिदं दृश्यते भ्रातः सहस्राणि सहस्रशः ॥
उग्राणामुग्रवीर्याणामपाराणां महात्मनाम् । घनगम्भीरवचसामधुनाऽप्रतिमौजसाम् ॥ १३ ॥
दिङ्मण्डलानि व्याप्तानि तैरेवामितविक्रमैः । प्रतिक्षणं वृद्धिरेषा तेषामाशु प्रजायते ॥ १४ ॥
इति तद्वचनं श्रुत्वा स्कन्दमाह गणेश्वरः । धैर्यमावह ते सर्वे शङ्करस्यैव विग्रहाः ॥ १५ ॥
पञ्चाक्षरार्थव्याख्यानमूर्तयः समुपस्थिताः । कोटिशः कोटिशस्तेषां मुखानि रसना अपि ॥ १६ ॥
रसनाकोटिभिर्वा स्यात् [1] तदर्थख्यापिनी कथा । रुद्राणां कोटिभिर्वापि ततो वृद्धिः प्रजायते॥

अपारकल्पापगमेऽप्यपारजिह्वाभिरानन्दकरेन्दुमौलिः ।
पञ्चाक्षरार्थानखिलान् स वक्तुं शक्तः कथं वा गिरिशापि शक्ता ॥ १८ ॥

तस्य पञ्चाक्षरस्यैव यानर्थानाह शङ्करः । तदर्थविग्रहान् पश्य कोटिशः समुपस्थितान् ॥ १९ ॥
एतेषां गणना तावत् कर्तुमेव न शक्यते । पुनः पुनर्भवन्त्येव कोटिशस्ते क्षणे क्षणे ॥ २० ॥
दृष्टः किलायमानन्दः तदालोकनमात्रतः । आनन्दविग्रहान् पश्य शङ्करस्य महात्मनः ॥ २१ ॥
तदिदं कौतुकं लोके न केनाप्यवलोकितम् । शङ्करानुग्रहेणैव मया दृष्टं त्वयापि तत् ॥ २२ ॥
अपूर्वा खलु सा दृष्टिरष्टमूर्तिकृपा यतः । विलक्षणैव लोकेभ्यः सर्वेभ्योऽपीति निश्चितम् ॥
भाग्यानां परिपाकोऽयं पुण्यानामपि कोटिशः । किमितोऽप्यधिकं भाग्यं भाग्योत्तममिति स्मृतम् ॥
इति तद्वचनं श्रुत्वा स्कन्दः सन्तुष्टमानसः । दृष्ट्वा पुनः पुनः साम्बं प्रापानन्दमहोदधिम् ॥२५॥
ब्रह्मकल्पेष्वपारेषु गतेषु तदनन्तरम् । नन्दीशः स्कन्दपादाब्जं सस्मार प्रीतिपूर्वकम् ॥ २६ ॥
स भक्तवत्सलः स्कन्दो नन्दिकेशेन संस्मृतः । स च तेन सहोवाच किमित्याश्चर्यमावहत् ॥२७॥
स्मृतः किमधुना किं वा किं कार्यं समुपस्थितम् । आनन्दाम्भोधिकल्लोललोलस्वान्त वदाधुना ॥

नन्दिकेश्वरः —

अतीतब्रह्मकल्पानां गणनापि न सर्वथा । न जातमेव सहसा त्वत्पादाम्भोजदर्शनम् ॥ २९ ॥
व्यर्थः सर्वोत्तमः कालो न श्रुता शांभवी कथा । ततस्त्वन्मुखमालोक्य जीवतैव स्थितं मया ॥
त्वन्मुखालोकनाभावे मृतकल्पमिदं वपुः । जीवनं मे कथं वा स्यात् किं न ज्ञातमिदं त्वया ॥

---

1 तदर्थख्यापनं कथम् C

भक्तवत्सलता त्वद्य तव मय्यपि या स्थिता । स्नेहप्रवाहः स गतः किं विधेयमतःपरम् ॥ ३२ ॥

महेश्वरादयो लोकाः प्रभवन्ति पुनः पुनः । स्थितं प्राप्य विनश्यन्ति स्वस्वकाले यथाक्रमम् ॥

शिवलीलाप्रसारो यः स सृष्ट्यादीन् करोत्यतः । न तत्र हानिः कस्यापि न विचारो हि तत्र हि ॥

गणानामपि सर्वेषां त्वद्दर्शनमपेक्षितम् । महेशदर्शनाकांक्षा जातापि विफलापि सा ॥ ३५ ॥

क्व महेशपदाम्भोजालोकनं सुकृतैर्विना । क्व तादृशानि पुण्यानि राशिभूतानि कोटिशः ॥ ३६ ॥

तथापि दर्शनं तावदस्माकमतिदुर्लभम् । अद्य स्नेहवशादेव कारितं तु षडानन ॥ ३७ ॥

इति तद्वचनं श्रुत्वा धनगम्भीरया गिरा । प्राह स्कन्दस्तमेवादौ कृत्यमस्तीति सत्वरम् ॥ ३८ ॥

पञ्चाक्षरार्थकथनेन मम प्रवृत्ताः स्वार्थाङ्गभागविनिविष्ट इवासहायः ।
धृत्वाप्यपारशिवविग्रहकोटिकोटिजिह्वागणो गणनयापि विना तदर्थान् ॥ ३९ ॥

तद्दर्शनान्न विरतं च मनोऽधुनापि नूनं तदर्थकथनामृतदृष्टिपूरः ।
पूर्णं तथापि समुपागतमेव तावत् चित्तं च तेन किमिति स्फुटमेवमद्य ॥ ४० ॥

तदर्थास्त्वपारास्तदर्थावबोधाः ततश्चित्तमेतन्निवृत्तं कथं वा ।
त्वया कोपि विघ्नः कृतः सोपि सद्यो न कालोपि वार्ताविशेषोऽपि नन्दिन् ॥ ४१ ॥

सुधाप्रवाहाश्चलिताः प्रयान्ति तद्रूपरूपाः सहसा निरुद्धाः ।
न ते भवन्त्येव तथाविधास्ते ते नूतना एव पुनः पुनर्हि ॥ ४२ ॥

आनन्दाब्धितरङ्गसङ्गतमिदं चित्तं कथं वा भवेदित्येवं प्रतिकल्पमीश्वरपदाम्भोजैर्विना जीवनम् ।
नीतं तैरधुना फलाय विविधान्यायुः प्रजातान्यहो जायन्त्येव पुनः पुनर्नवकथापीयूषधाराप्लुताः ॥

शृणु शृणु शृणु तावत् तां ध्वनिं सावधानं शिववचनविलासः सोऽयमत्यद्भुतोऽभूत् ।
परिहरति स गङ्गातुङ्गकल्लोलमालाविलसितमपि नूनं किं वदामो विचित्रम् ॥ ४४ ॥

पञ्चाक्षरार्थपयसा परिपूतमेव दिङ्मण्डलं विपुलमाशु निशा न सन्ध्या ।
ज्ञानेन तद्वदधुना दिनधीरपीति धैर्यं प्रवृद्धमसकृत् कथया तथा मे ॥ ४५ ॥

पञ्चाक्षरार्थश्रवणेन तावत् गात्रं पवित्रं श्रवणानि तानि ।
धूतानि सद्यः सुधयापि सक्तान्यतः परं किं वद कार्यमस्ति ॥ ४६ ॥

वक्ता शङ्कर एव सापि गिरिजा श्रोतुं प्रवृत्ता मुदा तद्व्याख्यानसुधारसैरभिनवैः तृप्तश्च विघ्नेश्वरः ।
तृप्ता सा गिरिराजतनया श्रोतुं पुनर्वाञ्छया शंभुं प्रेरयतीति नाद्भुतमिदं व्याख्यैव सा तादृशी ॥

या पूर्वं कथिता शिवेन बहुभिर्यतैः कथा सा कथा
भिन्ना सा मुहुरेव तत्कथनतो नेशो निवृत्तः खलु ।
को वा तत्र रसः शिवस्य बहुधा वृत्तस्तदर्थैरपि
प्राप्तैस्तैर्मुखरैः कृतः करुणया सोयं विलासः प्रभोः ॥ ४८ ॥

पुनः पुनर्नूतनमर्थमुक्त्वा हृष्टो भवत्येव सदाशिवोऽपि ।
तदर्थमूर्तिं च पुनः स दृष्ट्वा प्रदर्शयत्येव सदाशिवायै ॥ ४९ ॥

अतः परं शङ्करसन्निधाने स्वयं सदा सादरमित्युदीर्य ।
स्कन्दो गतोऽतित्वरया तदानीं नन्दी परं विस्मयमाप नूनम् ॥ ५० ॥

ततः परं नन्दिकेशो भृङ्गिप्रभृतिभिर्गणैः । सहैकत्र सभां कृत्वा कैलासद्वारमागतः ॥ ५१ ॥

ततः पञ्चाक्षरस्यैव मुहुर्व्याख्यानकौशलम् । व्याजहार महेशस्य जहार च रुजं स्थिराम् ॥ ५२ ॥

ततः समागतास्तत्र ब्रह्मनारायणादयः । अगस्त्यो नन्दिकेशं तं प्रणताः सन्नताननाः ॥ ५३ ॥

तानागतान् समालोच्य नन्दिकेशः शिवव्रतान् । नारायणादीनाहादौ किमागतमिहेत्यपि ॥५४॥

नारायणः —

कल्पान्ते सृष्टिराद्यासीदस्माकं शिवलीलया । किं नः कार्यमकार्यं वा तत् सर्वं वद तत्वतः ॥

महेश्वराज्ञया लोकाः सृष्टाः सर्वे स्थिता अपि । अस्माकमस्ति किं कृत्यं स्थातव्यं कुत्र वा वद ॥

अस्माकं शिवसन्निधानमधुना संभावितं किं न वा
ढुंढेर्वा गणनायकस्य समयः स्कन्दस्य वा कः प्रियः ।
अत्राद्यागमनं निवेदयति यः कृत्यं च यस्माद्भवेत्
तं वा प्रेरय नन्दिकेश्वर परं कृत्यैर्विलासैरलम् ॥ ५७ ॥

त्वत्तः कोऽपि महेश्वरस्य परमो भक्तोऽपि नाप्तस्तथा
देवानां च नियामकोऽपि बहुधा तत्कार्यकर्ताऽपि न ।
सर्वज्ञत्वमुमासहायचरणाम्भोजार्चनाद्यैस्त्वया
प्राप्तं भाग्यमितोऽपि नाधिकमिति ज्ञातं फलैः केवलम् ॥ ५८ ॥

इति तद्वचनं श्रुत्वा यथापूर्वं प्रकल्पितान् । नारायणादिकान् दृष्ट्वा प्राह नन्दी स विस्मितः ॥

नन्दिकेशः —

किं किं पुण्यं पुरा चीर्णं भवद्भिरमराः परम् । तद्वदध्वं विचारेण कुतो वा समुपागतम् ॥ ६० ॥

देवाः —

स्थितमस्माभिरनिशं श्रीशैलापरकन्दरे । तत्कन्दरेऽतिविस्तीर्णे मनोज्ञे कदलीवने ॥ ६१ ॥
तिष्ठन्त्यंबुजवीतानि सन्त्यपारसरांसि च । न तत्र सूर्यसंचारः चन्द्रस्यापि न रश्मयः ॥ ६२ ॥
अत्युच्चबिल्वतरवः सन्ति तत्र मनोहराः । मन्दाराद्याश्च तरवः सन्ति तत्र मनोहराः ॥ ६३ ॥
तत्र सर्वर्तुपुष्पाणि सर्वदा सन्ति कोटिशः । तत्रैवामृतकुल्याश्च सन्ति रम्याः सहस्रशः ॥ ६४ ॥
तत्रास्ते लिङ्गमुत्कृष्टं त्रिपुरान्तकनामकम् । तत्रास्ति रत्नप्रासादो रत्नमन्दिरमण्डितः ॥ ६५ ॥
तद्रत्नकान्तिभिः सर्वं तदालोकसमन्वितम् । न वा लोकान्तरापेक्षा तत्रत्यानां महात्मनाम् ॥
तेषां प्रभावः केनापि वक्तुमेव न शक्यते । भस्मोद्धूलितसर्वाङ्गाः त्रिपुण्ड्राङ्कितमस्तकाः ॥ ६७ ॥
रुद्राक्षमालाभरणाः शिवपूजापरायणाः । तत्र प्रलयवार्तापि सर्वथा न श्रुता खलु ॥ ६८ ॥
न तत्र यमसंचारः पापवार्तापि दूरतः । शिवलिङ्गार्चनेनैव तत्र स्यात् कालयापनम् ॥ ६९ ॥
नित्यं श्रीशैलनाथस्य विहारस्तत्र जायते । स विहारोप्यनुमितो दिव्यैः परिमलादिभिः ॥ ७० ॥
श्रूयन्ते दिव्यगानानां ध्वनयस्तत्र केवलम् । गायकास्तु न दृश्यन्ते न च वीणादयस्तथा ॥
पुष्पासारः सदा तत्र सर्वदा मणिदीपिकाः । चन्द्रमण्डलसङ्काशाः तल्लिङ्गमतिकोमलैः ॥ ७२ ॥
बिल्वमन्दारपुष्पाद्यैः क्रियते तस्य पूजनम् । तत्र कल्पितदीपानां प्रभाः सन्ति सहस्रशः ॥७३॥
तत्प्रभाकन्दलव्याप्ता कोटिसूर्यसमा प्रभा । तत्तत्प्रभानिभा कापि प्रभावस्तत्र दृश्यते ॥ ७४ ॥
तत्र ये शांभवाः सन्ति शिवपूजापरायणाः । तद्भृत्यभृत्यभृत्याश्च वयं तत्सेवकाः खलु ॥७५॥
हारोपहारशेषेण तद्भक्तोर्वरितेन च । अस्मदीयशरीराणां पोषणं प्रतिवासरम् ॥ ७६ ॥
कल्पवृक्षसमानीतैरुपहारः प्रकल्प्यते । फलाद्यैर्विविधैर्भक्ष्यैः शङ्करायानुवासरम् ॥ ७७ ॥
तद्भक्तभुक्तशेषाणां फलांशानां विशेषतः । भक्षणेनैव पुष्टाश्च देहास्त्वस्माकमन्वहम् ॥ ७८ ॥
तैर्यदा पूज्यते लिङ्गं त्रिपुरान्तकसंज्ञकम् । अस्माभिर्दृश्यते दूरात् तावद्गमनमेव न ॥ ७९ ॥
प्रज्वलत्पर्वताकारं तल्लिङ्गमतिशोभनम् । महासिद्धगणास्तत्र सर्वदा समुपस्थिताः ॥ ८० ॥
तत्र वत्सरपर्यन्तमेकैकं कदलीफलैः । तृप्तिर्भवति सर्वेषां दिव्यैः शिवसमर्पितैः ॥ ८१ ॥
सुवर्णवर्णमुत्कृष्टं तन्महत् कदलीफलम् । सहस्रतृप्तिरेकेन फलेनैव प्रजायते ॥ ८२ ॥
द्राक्षाफलानि रम्याणि तादृशान्येव तान्यपि । कपित्थान्यपि तुल्यानि अपराणि वने वने ॥
तादृशं भाग्यमन्यत्र भूलोकेऽपि न दृश्यते । तद्विहारस्थलं रम्यमपूर्वं परिकल्पितम् ॥ ८४ ॥

तस्मिन्नेव गिरौ रम्याण्यपाराणि स्थले स्थले। तिष्ठन्त्यालोकनादेव सर्वपापहराणि च ॥ ८५ ॥
तानि स्वयंभुलिङ्गानि वह्निकल्पानि कोटिशः। कोटिशः सन्ति कुण्डानि सर्वसिद्धिकराणि च ॥
तत्रैव मत्तमातङ्गाः कोटिशः सन्ति तैरपि। ऐरावतावतारैस्तैर्व्याप्तं तद्गिरिकाननम् ॥ ८७ ॥
पातालवासिनी गङ्गा तत्र तिष्ठति शोभना। तद्विलोकनमात्रेण पापनाशः प्रजायते ॥ ८८ ॥
तत्र स्नात्वा महादेवं पूजयेद्बिल्वपल्लवैः। अभीप्सितार्थान् लभते तत्किलात्यन्तदुर्लभम् ॥ ८९ ॥
तत्रत्याः सिकताः सर्वाः शिवलिङ्गानि केवलम्। गुल्मानि तरवः पत्राण्यमितान्यपराण्यपि ॥
भ्रमराम्बा विशालाक्षी सा भवानी शिवा शुभा। तत्रास्ति तत्पदाम्भोजपूजया भाग्यमश्नुते ॥
यस्तामसितभूतायां समभ्यर्च्य महानिशि। कुर्यात् प्रदक्षिणं तस्याः स सिद्धिं प्राप्नुयान्नरः ॥
अस्माभिरेकदा देवी भूतायां निशि वीक्षिता। प्रदक्षिणीकृता सैव शतवारं प्रयत्नतः ॥ ९३ ॥
नग्ना विभूतिकवचा जटामण्डलमण्डिताः। तदानीमागतास्तत्र कोटिशो भैरवास्तदा ॥ ९४ ॥
एकैकः पर्वताकारो ज्वलत्येव समस्तकः। हस्तैरपारैर्धृत्वैव वह्निरूपान् नगोत्तमान् ॥ ९५ ॥
सिंहाः समागतास्तत्र ते हिमाचलसन्निभाः। व्याघ्राः समागतास्तत्र कालकूटाचलोपमाः ॥ ९६ ॥
सहस्रशीर्षाः सर्पाश्च कोटिशः समुपागताः। तद्दर्शनात् सकम्पोऽपि समभूदचलस्तदा ॥ ९७ ॥
तस्यानुवृत्तिरद्यापि शरीरेष्वनुवर्तते। तदा तद्दर्शनादेव धैर्यमाशु विनिर्गतम् ॥ ९८ ॥
ते कोटियोजनायामरसनाव्याप्तविग्रहाः। ज्वालामालासमाकीर्णाः पर्वता इव संस्थिताः ॥ ९९ ॥
ततः परं कृतं धैर्यं मरणात् किं भयं भवेत्। एतेभ्य इति निश्चित्य ततस्ते निर्गता अपि ॥ १०० ॥
ततः परं भवानी सा दिव्यसुन्दरविग्रहा। प्रसन्ना प्राह विमला कमलामललोचना ॥ १०१ ॥
यत्सौन्दर्यं तदा दृष्टमम्बायास्तत् परं भुवि। न दृष्टं क्वापि तत्तावत् प्रसन्नमतिशोभनम् ॥ १०२ ॥
तदुद्वीक्षणमस्माकमशक्यमभवत् तदा। तत्पादाम्बुरुहे दत्तं सचित्तं नयनाम्बुजम् ॥ १०३ ॥
ततः काप्यभवद्वाणी नभोमण्डलमध्यतः। सा श्रुता दुःखनाशाय सर्वसौभाग्यदायिनी ॥ १०४ ॥

अशरीरवाक् —

किमपेक्षितमस्त्यत्र भवतां तद्वदन्तु वः। तद्भविष्यति सन्देहो न कार्यः सर्वथा खलु ॥ १०५ ॥
तदानीमुक्तमस्माभिः सुरत्वं समपेक्षितम्। नान्यदित्येव तेनैव तथाऽस्त्वित्युक्तमादरात् ॥ १०६ ॥
परं न सा शुभा दृष्टा भवानी भववल्लभा। वयं च विस्मयाविष्टाः सर्वेऽपि समुपागताः ॥ १०७ ॥
कार्यमस्ति किमस्माकं तत्सर्वं वद सादरम्। कस्मिन् कर्मणि योग्यत्वमस्माकमवधारितम् ॥ १०८ ॥

इति तद्वचनं श्रुत्वा नन्दीशो हृष्टमानसः । तैरपारैः सुरैः साकं वैकुण्ठमगमत् तदा ॥ १०९ ॥
पूर्वशोभासमाक्रान्तं दृष्ट्वा वैकुण्ठमादरात् । स्मृत्वा महेशपादाब्जं तेष्वेकं प्राह सादरम् ॥ ११० ॥
आयाहि पुण्यरूप त्वं वैकुण्ठमिदमुत्तमम् । भवनं देवदेवेन महेशेन विनिर्मितम् ॥ १११ ॥
एतस्य भवनस्यैव कर्तव्यं रक्षणं त्वया । अप्रमादेन कर्तव्यमत्र शङ्करपूजनम् ॥ ११२ ॥
इमानि खलु लिङ्गानि शिवरूपाणि कोटिशः । पश्य पश्य विशेषेण रम्यान् बिल्वतरूनपि ॥
मणिमण्डलसंक्रान्तबिल्वमूलेषु पूजया । शिवलिङ्गानि यत्नेन कोमलैर्बिल्वपल्लवैः ॥ ११४ ॥
एतेषु शिवलिङ्गेषु सर्वदा बिल्वपल्लवाः । अपाराण्यपि पुष्पाणि सफलानि विशेषतः ॥ ११५ ॥
पुष्पशून्यानि लिङ्गानि भविष्यन्ति यदा तदा । अधिकारप्रच्युतस्ते भविष्यति न संशयः ॥
एतल्लिङ्गार्चनायास्ति निर्माणं तव वस्तुतः । धन्योऽसि कृतकृत्योऽसि शिवार्चनपरो भव ॥
तवात्र नामकरणं करोमि शिवलीलया । नारायणोसि विष्णुश्च वैकुण्ठोऽसि जनार्दनः ॥ ११८ ॥
त्वमेव कमलाकान्तो वैकुण्ठो गरुडध्वजः । चक्रलाभे च चक्रीति नाम ते भावि वस्तुतः ॥
तवास्ति कृत्यमग्रेऽपि तत्कालेन भविष्यति । पञ्चाक्षरजपं प्रीत्या कुरु सन्ततमास्तिक ॥ १२० ॥
उद्धूलनं त्रिपुण्ड्राख्यं रुद्राक्षैरपि संस्कृतम् । पूजयस्व महादेवं प्रमादो मास्तु सर्वथा ॥ १२१ ॥
इत्युक्त्वा स्थापयित्वा च वैकुण्ठे तं जनार्दनम् । सत्यलोकं ययौ नन्दी तं दृष्ट्वा सुन्दरं शुभम् ॥
सत्यलोकेऽपि दृष्टानि शिवलिङ्गानि कोटिशः । तानि दृष्ट्वा प्रहृष्टात्मा पूजयामास सादरम् ॥
ततः परं समाहूय तेष्वेकं शिवपूजकम् । तमाह सादरं भक्त्या स्मृत्वा शङ्करपादुके ॥ १२४ ॥
सुभगोऽसि शिवाचारैरत्र लिङ्गानि पूजय । अस्य लोकस्य कर्तव्यं सत्यस्य परिपालनम् ॥ १२५ ॥
सत्यलोक इति ख्यातः सोऽयं शङ्करसंमतः । अस्य बिल्ववनस्यापि कर्तव्यं रक्षणं त्वया ॥१२६॥
एतत्पालनपुण्येन नाधिकारविपर्ययः । अन्यथा सदनादस्मात् प्रच्युतस्ते भविष्यति ॥ १२७ ॥
तव नामानि वक्ष्यामि महादेवाज्ञयाऽधुना । चतुर्मुखो विधिर्ब्रह्मा वाणीरमण इत्यपि ॥ १२८ ॥
इत्युक्त्वा स्थापयित्वा तं सत्यलोके मनोहरे । स्वर्गलोकं ययौ पश्चात् तैर्देवैः सह सादरम् ॥
तत्र तेष्वेकमाहूय नन्दी प्राह शिवं स्मरन् । स्वर्गलोकः सुखायायं शिवेन परिकल्पितः ॥ १३० ॥
एतस्य पालनं कार्यं त्वया सादरमन्वहम् । इमानि शिवलिङ्गानि पूजनीयानि यत्नतः ॥ १३१ ॥
इदं खलु शिवोद्यानमेतद्वनसमुद्भवैः । पुष्पैरपारैरनिशं महेश्वरमिहार्चय ॥ १३२ ॥
महेश्वरार्चने विघ्नो यदि संभावितस्तदा । तदा तवाधिकारोऽपि गत इत्यवधारय ॥ १३३ ॥

तुभ्यं नामानि दास्यामि श्रीमहेश्वरलीलया । इन्द्रः शतक्रतुर्वज्री शक्रो वृत्रारिरित्यपि ॥ १३४ ॥
ततः परं च तेष्वेकं समाहूय तमाह सः । तदिदं सुरकान्तारं पालनीयं त्वयाऽधुना ॥ १३५ ॥
सन्त्यत्र शिवलिङ्गानि पूजनीयानि यत्नतः । एतदुद्यानवनजैः पुष्पैरर्च्चय शङ्करम् ॥ १३६ ॥
एतल्लिङ्गार्चनाभावो यदि ज्ञातस्तदा तव । अधिकार[1]प्रच्यवोऽपि जात इत्यवधारय ॥ १३७ ॥
एतल्लिङ्गार्चनं कर्तुं स्थापितस्य च सर्वदा । लिङ्गार्चनपरित्यागो न कार्यः सर्वथा त्वया ॥१३८॥
महामृत्युञ्जयं जप्त्वा महादेवं प्रयत्नतः । पूजय स्वामिनं भक्त्या विहाय प्रमादरात् ॥ १३९ ॥
एतस्मिन् सुरकान्तारे शङ्करागमनं यदि । तदानीमतियत्नेन पूजयस्व विधानतः ॥ १४० ॥
अनेनैव हि मार्गेण कैलासगमनोत्सुकाः । यदि स्युः शाङ्करास्तर्हि तानभ्यर्चय सादरम् ॥ १४१ ॥
[2]अशाङ्कराणां निलयाः कल्पिताः सन्ति कोटिशः । तेषु[3] तान् पातयित्वैव घातयित्वाऽतिदारुणम् ॥
विदारयस्व क्रकचैः तच्छरीराणि कोटिशः । पातयित्वैव नरके घातयस्वातिदारुणम् ॥ १४३ ॥
कोटिशश्चाग्निकुण्डेषु तान् पातय निघातय । अग्निकुल्यासु सर्वासु तानाप्लावय दुर्जनान् ॥ १४४ ॥
अशैवानां तप्तशैलेष्वारोहणमनेकधा । भवत्वशैवदुःखाय तेषामस्त्वनिवर्तनम् ॥ १४५ ॥
अशैवार्थं कल्पिताश्च ते ते वृश्चिकसागराः । विषज्वालासागराश्च दन्तशूकसमाश्रयाः ॥ १४६ ॥
अशाङ्करविनाशाय कल्पिताः सन्ति कोटिशः । प्रतप्ताश्चण्डगिरयः प्रतप्तायसपर्वताः ॥ १४७ ॥
अशांभवाभितापाय कल्पिताः सन्ति कोटिशः । कोटिशः सन्ति चान्ये च तप्तपूयान्धुसिन्धवः ॥
तेष्वस्तु मज्जनं तेषामशैवानां दुरात्मनाम् । तत्रैव यातनास्थानान्यपाराण्यपि सन्त्यतः ॥ १४९ ॥
तान्यशैवसुदुःखाय कल्पितानि विलोकय । अशांभवस्वरूपाणि वदामि शृणु सादरम् ॥ १५० ॥
अशांभवाचारयुतमशांभवमिति स्मर । भस्मत्रिपुण्ड्ररहितानशैवानिति संस्मर ॥ १५१ ॥
उद्धूलनविहीना ये तानशैवानिति स्मर । पञ्चाक्षरविहीना ये तानशैवानिति स्मर ॥ १५२ ॥
शिवार्चनविहीना ये तानशैवानिति स्मर । श्रीरुद्रजपहीना ये तानशैवानिति स्मर ॥ १५३ ॥

शिवार्चनध्यानविहीनचित्तान् त्रिपुण्ड्ररुद्राक्षविहीनदेहान् ।
दृष्ट्वानशैवानिति पातयात्र तानेव घोरे निरये यथेच्छम् ॥ १५४ ॥

दूतास्तु लोके विचरन्तु तावत् ते कोटिशः शैवगृहान् विहाय ।

---

1 प्रागभावो C 2 अयं श्लोकः (C) कोशेऽधिकः अपेक्षितश्च ।

3 अशाङ्करानित्यर्थः कैलासगमनोत्सुकान् स्वर्गागतान् इति शेषः ।

अशैववेश्मस्वतिघोररूपाः तेषां विनाशाय पुनः पुनश्च ॥ १५५ ॥

तव कृत्यमिदं नित्यं शिवपूजनपूर्वकम्। शिवार्चनपरित्यागो न कार्यः सर्वथा त्वया ॥ १५६ ॥

तव नामानि देयानि मया शङ्करलीलया। यमः कालो महामृत्युस्तथा शमन इत्यपि ॥ १५७ ॥

एवमुक्तः स तं नत्वा नन्दिकेशं कृताञ्जलिः। तथेत्युक्त्वा तदाज्ञां च दधार शिरसा परम् ॥

ततः परं चकारान्यान् दिक्पालान् नन्दिकेश्वरः। तेषामपि ददौ नामान्युमाकान्तस्य लीलया ॥

नक्षत्ररूपानन्यांश्च स चकार ग्रहानपि। चकार मुनिनिर्माणं गिरिनिर्माणमादरात् ॥ १६० ॥

गन्धर्वाणां च निर्माणं किन्नराणां विशेषतः। समुद्राणां च निर्माणं नदीनां च विशेषतः ॥

चारणानां च निर्माणं मनुष्याणां विशेषतः। सर्पाणामपि निर्माणं वृश्चिकानां विशेषतः ॥

सरसामपि निर्माणमोषधीनां विशेषतः। वनानामपि निर्माणं सिंहानां च विशेषतः ॥ १६३ ॥

तथा व्याघ्रादिजन्तूनां पतङ्गानां च कोटिशः। पशूनामपि निर्माणं कीटानां च विशेषतः ॥

एवं कृत्वा स निर्माणं सर्वेषां नन्दिकेश्वरः। ययौ कैलासनगरं पूजितः सकलैः सुरैः ॥ १६५ ॥

तत्रापारगणैर्युक्तः श्रीमत्कैलासपत्तने। प्रभावं देवदेवस्य सस्मार गिरिजापतेः ॥ १६६ ॥

ततः पञ्चाक्षरीव्याख्याध्वनिं श्रुत्वा निरन्तरम्। उवास नन्दिकेशोऽपि भृङ्गितण्डुसमन्वितः ॥

इति सत्यव्रतस्यैव श्रुत्वा वचनमादरात्। तत्पत्नी शुकवाणी तु सन्तुष्टा पुनराह तम् ॥ १६८ ॥

शुकवाणी —

पञ्चाक्षरार्थव्याख्यानात् कदाचिद्विरतः शिवः। विरता सा भवानी च तदर्थश्रवणाद्भवेत् ॥

तयोः कार्यान्तरापेक्षा शिवयोः किं न जायते। षण्मुखस्य गणेशस्य किन्तु कार्यान्तरं वद ॥

इति तद्वचनं श्रुत्वा शुकवाणीमुवाच सः। संस्मरन् गिरिजाकान्तं मुहुर्मुहुरनामयम् ॥ १७१ ॥

सत्यव्रतः —

शृणु सत्यमिदं वाक्यं सावधानं वरानने। देवदेवस्य महिमा मनोवाग्विषयोऽपि न ॥ १७२ ॥

शङ्करः करुणासिन्धुर्यत् कार्यं कर्तुमिच्छति। तत्र नायासलेशोपि महादेवस्य शूलिनः ॥ १७३ ॥

तदिच्छया परं कार्यं भवत्येव सहस्रधा। इच्छामात्रेण सिद्धार्थस्तत एव शिवः प्रभुः ॥ १७४ ॥

अन्येन कल्पपर्यन्तं कृते यत्नेपि सर्वथा। कार्यलेशोऽपि सहसा न सुरेण प्रजायते ॥ १७५ ॥

अभ्रकूपादिनिर्माणं क्षणेनैव महात्मना। स्वेच्छालेशेन तेनैव गौरीकान्तेन लीलया ॥ १७६ ॥

घृतसागरनिर्माणं शङ्करेणेच्छया कृतम्। इक्षुसागरनिर्माणं शङ्करेण कृतं खलु ॥ १७७ ॥

अन्येषां सागराणां च निर्माणं लीलया कृतम् । भूनिर्माणं च तेनैव लीलया खलु तत् कृतम् ॥
भूधारणार्थाः शैलाश्च निर्मितास्तेन लीलया । भूमश्चकस्तम्भरूपास्ते शैलाः सप्त सुन्दरि ।१७९॥
पातालरूपो लोकोपि सृष्टस्तेन स्वलीलया । लोकः करण्डकाकारः काकोदरवराश्रयः ॥ १८० ॥
तस्मिन् लोके शिवस्थानमेकमस्ति वरानने । तल्लिङ्गं काञ्चनाकारं शेषभूषणनामकम् ॥ १८१ ॥
तत्रापि निर्मितं रम्यं मन्दिरं रत्नसुन्दरम् । रत्नप्रासादशृङ्गाग्रकोटीकोटिविराजितम् ॥ १८२ ॥
तस्य शृङ्गस्य रत्नानि विविधान्यपि कोटिशः । तत्प्रभाभिः स लोकोऽपि भासुरः सर्वथा खलु ॥
तत्र शेषादयो नागाः पूजयन्ति महेश्वरम् । तदुद्यानवनोत्पन्नप्रसूनस्रग्भिरादरात् ॥ १८४ ॥
अखण्डबिल्वपत्राणि सुवर्णकमलान्यपि । तत्रामितानि तैः पूजां कुर्वन्ति मुनिपुङ्गवाः ॥ १८५ ॥
तत्र शेषोऽपि रत्नौघैरपारैर्गिरिजापतिम् । पूजयन्ननिशं शंभुं बिल्वैश्च कनकांबुजैः ॥ १८६ ॥
तत्र केतकपुष्पैश्च मन्दारैरतिशोभनैः । सुवर्णचम्पकाकारप्रसूनैः पूजयन्ति तम् ॥ १८७ ॥
नागकन्यासहस्राणि पूजयित्वा महेश्वरम् । नृत्यं कुर्वन्ति यत्नेन तस्मिन् शङ्करमन्दिरे ॥ १८८ ॥
सकुटुम्बः फणिपतिः सपुत्रोऽपि महेश्वरम् । पूजयित्वा प्रसूनाद्यैः कालं नयति सादरम् ॥१८९॥
कोटिशस्तत्कुटुम्बानि तत्पुत्रा अपि कोटिशः । पूजयन्ति महादेवमतियत्नेन सन्ततम् ॥ १९० ॥
तेषां शिवार्चनं कार्यं नास्ति कार्यान्तरं तथा । विद्यमानानि कार्याणि सन्त्यक्तान्येव सर्वदा ॥
शिवपूजनमस्माकं परमं कार्यमित्यपि । तिष्ठन्ति नागलोकस्थाः सर्वे काकोदरा अपि ॥ १९२ ॥
शिवपूजाविनिर्मुक्तः कोऽपि काकोदरोऽपि न । अन्येषां तत्र का वार्ता तेषां कार्यं शिवार्चनम् ॥
तेषां तथाविधा भक्तिः शिवेनोत्पादिता ततः । तथैव तेऽपि कुर्वन्ति लीलया शिवपूजनम् ॥

लीलामात्रकृतामिताखिलजगज्जालाय तस्मै नमः
तस्मै कारणकारणाय करुणापूर्णार्णवायासकृत् ।
तस्मै सृष्टिलयस्थितिक्षयपरव्यापारलीलारस-
व्याप्तायापि नमो नमः पुनरिदं साम्बाय तस्मै नमः ॥ १९५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे पञ्चाक्षरव्याख्या-विग्रहकोटिवर्णनं नन्दीशकृत सृष्टिवर्णनं नागलोकशिवपूजावर्णनं च नाम एकोनत्रिंशोऽध्यायः ॥

—:x:—

# अथ चत्वारिंशोऽध्यायः ।

रत्नाकरः —

इति सत्यव्रतोक्तानि वचनानि विशेषतः । श्रुत्वा तमाह भर्तारं हर्तारं पापकर्मणाम् ॥ १ ॥

शुकवाणी —

यदुक्तमधुना विद्वन् तत्सर्वं पापनाशकम् । पुनः प्रश्नान्तरं कार्यं तत्र देहि ममोत्तरम् ॥ २ ॥

कृपालुत्वेन विज्ञातः सर्वैरपि तथा सति । दया विधेया दयया पालनीयाऽस्मि सर्वथा ॥ ३ ॥

गौरीमनोविलासानां अपाराणां महेश्वरः । कथमासीदालयोऽयं वद सर्वं विशेषतः ॥ ४ ॥

एतादृशं कृतं पुण्यं किं वा गिरिजया वद । येन सर्वामराधीशो महेशस्तत्पतिः प्रभुः ॥ ५ ॥

महेश्वरः पतिर्यस्मादम्बिकायास्ततः सुराः । नारायणादयो दासास्तस्या दास्यः सुराङ्गनाः ॥ ६ ॥

गन्धर्वाः किन्नराः सिद्धाः चारणा अपि सेवकाः । गौर्यास्तदङ्गनाः सर्वास्तच्चेटीचेटिकाः खलु ॥

इदं खलु महद्भाग्यं प्राप्तं गौर्या तया कथम् । किंवा व्रतं पुरा चीर्णं येन भाग्यं महत्तरम् ॥ ८ ॥

किञ्च मृत्युञ्जयो भर्ता तया प्राप्तो महेश्वरः । सा सर्वमङ्गला जाता वैधव्यं नैव पश्यति ॥ ९ ॥

तदिदं कौतुकं श्रोतुं इच्छा जाता ममाधुना । वद सर्वं विशेषेण यथा ज्ञातं तथा मुने ॥ १० ॥

इति तद्वचनं श्रुत्वा हृष्टः सत्यव्रतस्तदा । तामुवाचातिविशदां कृताञ्जलिपुटां मुनिः ॥ ११ ॥

सत्यव्रतः —

शृणु भद्रे कौतुकानि माहात्म्यं गिरिशस्य च । पापराशिहरं तस्य माहात्म्यश्रवणादपि ॥ १२ ॥

देवासुरमभूद्युद्धं पूर्णं शतयुगावधि । तत्र दैत्येश्वरः कोऽपि जातश्चण्डपितामहः ॥ १३ ॥

अग्निचक्राकुलं नाम नगरं तस्य शोभने । तदेव नगरं तावदग्निप्राकारवेष्टनम् ॥ १४ ॥

प्रचण्डनामा दैत्येशः कामरूपोऽतिभीषणः । सूर्यमण्डलपर्यन्तं तस्य कायः प्रवर्धते ॥ १५ ॥

शिरांसि कोटिशस्तस्य करास्तस्यैव कोटिशः । नेत्राणि कोटिशस्तस्य चरणा अपि कोटिशः ॥

एकैकस्मिन् मुखे तस्य रसना अपि कोटिशः । न दन्तानां तु गणना दन्ताः कुलिशसन्निभाः ॥

ज्वालाजालसमाकीर्णाः तद्दन्ता अपि कोटिशः । तस्य मन्दानि वाक्यानि गर्जतुल्यानि कोटिशः ॥

तच्छरीरप्रभापूरैः पूरितं सकलं जगत् । तन्निवासकुलोद्भूलाः समुद्राः सप्तसागराः ॥ १९ ॥

स गिरीनखिलानुग्रः सिकता इव पश्यति । तत्क्रूरदृष्टिपातेन भस्मीभूता भवन्ति ते ॥ २० ॥

तमुत्पन्नं महादैत्यं देवा नारायणादयः। श्रुत्वा पातालमगमन् तप्तास्तत्तेजसा परम् ॥ २१ ॥
ते पाताले भयग्रस्ताः किं कर्तव्यमिहेत्यपि। चिन्तया परया ग्रस्ताः स्थिताः शेषादिभिस्तदा ॥
युगानामयुतं तत्र स्थित्वा दुःखातुरास्ततः। विचारनिरता जाताः कार्याकार्यविवेकतः ॥ २३ ॥
तदा नारायणं प्राह ब्रह्मा म्लानमुखाम्बुजः। इन्द्रेण प्रेरितो देवैः तदन्यैरपि दुःखितः ॥ २४ ॥

ब्रह्मा —

नारायण कियत्कालं अत्र स्थेयमतः परम्। मरणं वा वरं नूनं न चान्यसदने स्थितिः ॥ २५ ॥
अन्याधीनतया नेयः कियान् कालो वदाधुना। स चेदायाति संक्रुद्धो दैत्यः किंवा तदा वद ॥
स समागत्य ससुतान् सकुटुम्बान् सुरानपि। दग्ध्वा याति तदा कोवा वद तस्य निवारकः ॥
अस्माभिरेव गन्तव्यं सन्नद्धैः शस्त्रपाणिभिः। जयोऽस्तु मरणं वास्तु किं तया चिन्तया वद ॥
कुटुम्बान्यत्र तिष्ठन्तु सुता अप्यतिबालकाः। प्रौढाश्च पुत्रास्तिष्ठन्तु कामधेनुश्च तिष्ठतु ॥ २९ ॥
तिष्ठन्तु कल्पतरवः शिवलिङ्गानि कोटिशः। अधुना तत्र गन्तव्यं भावि सर्वं भविष्यति ॥ ३० ॥
अथास्माकमदृष्टेन जयो यदि भविष्यति। तदा तत्र कुटुम्बानि समायान्तु सुतैः सह ॥ ३१ ॥
इति तद्वचनं श्रुत्वा चक्रमादाय केशवः। युद्धाय निर्गतस्तीव्रं ब्रह्मादिसुरसंयुतः ॥ ३२ ॥
ततस्तन्नगरं प्रापुरग्निमण्डलसन्निभम्। ततस्ते मूर्छिता एव तत्पुराद्भुततेजसा ॥ ३३ ॥
गतेषु तेषु युद्धार्थं कमलाद्याः सुराङ्गनाः। मूर्च्छितान् पतितान् दृष्ट्वा चुक्रुशुर्भयविह्वलाः ॥
ततस्ताः शेषमखिलाः प्राहुः खिन्नाननास्त्वया। गन्तव्यं देवकार्यार्थमसहायाः सुराः खलु ॥
इति तद्वचनं श्रुत्वा सशोकः खिन्नमानसः। चुक्रोशोच्चैर्हा हतोऽभूत् गोविन्दोऽपीति सत्वरः ॥
ततः परं कियान् कालो विनीतो रोदनैः परम्। सुरदारा विसंज्ञास्ते युगानामयुतं ययुः ॥ ३७ ॥
उत्थिताः कमलाद्यास्ताः सर्वा वैधव्यविह्वलाः। कपिलं प्राहुरत्यर्थं शिवपूजापरायणम् ॥ ३८ ॥

देवाङ्गनाः —

मुनिप्रवर देवानां दुर्दशा किं न संश्रुता। प्रचण्डेन हताः सर्वे दैत्यानामधिपेन ते ॥ ३९ ॥
अतः परं किमस्माभिः कर्तव्यं तद्वदाधुना। कार्याकार्यविवेकोऽपि नास्माकमधुना खलु ॥ ४० ॥
इति तद्वचनं श्रुत्वा कपिलः सिद्धसेवितः। कमलाभिमुखो भूत्वा प्राह स्मृत्वा महेश्वरम् ॥ ४१ ॥

कपिलः —

इन्दिरे शरणं याहि शङ्करं लोकशङ्करम्। स सर्वमङ्गलाकान्तो मङ्गलानि प्रयच्छति ॥ ४२ ॥

स सर्वमङ्गलाकारः सर्वमङ्गलदायकः। मङ्गलानां स जनकोऽप्यमङ्गलहरो हरः ॥ ४३ ॥

अमङ्गलहरे सति त्रिपुरकाननध्वंसके प्रचण्डतरपावके मदनमर्दके संस्मृते।
अमङ्गलसरिद्वरप्रलय एव तावद्भवेत् समुद्रतनये सदा शुभनदीसमूहोदये ॥ ४४ ॥

न कोऽपि जानाति शिवप्रभावमतो न तस्य स्मरणे प्रवृत्तः।
अतो विनाशो भवतीति मन्ये सदा महादेवपराङ्मुखानाम् ॥ ४५ ॥

केनापि दृष्टं न महेशरूपं शुभप्रवाहात्मकमप्रमेयम्।
स्मृते शिवे चेतसि मङ्गलानि पदे पदे शोभनदानि नित्यम् ॥ ४६ ॥

अहो कथं कौतुकमेतदासीत् अनर्चितेशानपदाम्बुजानाम्।
नाशः सुराणामभवत् किमत्राप्यत्यद्भुतं किञ्चिदगम्यमस्ति ॥ ४७ ॥

देवैरहंकारविमूढचित्तैः प्रचण्डयुद्धाय गतं प्रमत्तैः।
वेगादकृत्वैव शिवार्चनानि ततः प्रणष्टा अपि सत्वरं ते ॥ ४८ ॥

संरक्षके तिष्ठति देवदेवे महेश्वरे देवगणस्य तस्मिन्।
तत्पूजनार्थं न कृतः प्रयत्नः ततः प्रणष्टाः किमिहास्ति चित्रम् ॥ ४९ ॥

भ्रष्टास्तावन्नष्टराज्यस्य लोके नष्टात्मानः शैवधर्मैर्विहीनाः।
तस्मान्नाशो नामराणां च चित्रं विश्वेशार्चात्यागजं तत्कुलं हि ॥ ५० ॥

उमासहायांघ्रिसरोजपूजापराङ्मुखस्यापि सुखं यदि स्यात्।
तदा विषाणादपि नीरधारा स्यादम्बुवाहादिव वृष्टिकाले ॥ ५१ ॥

इत्युदीर्य स्थितस्तत्र कपिलस्तावदागतः। गरुडः शोकसन्तप्तः सुरनाशेन सत्वरम् ॥ ५२ ॥

स समागत्य कपिलं भस्मोद्धूलितविग्रहम्। त्रिपुण्ड्ररुद्राक्षधरं नत्वा प्राह कृताञ्जलिः ॥ ५३ ॥

गरुडः —

प्रचण्डासुरतेजोभिः सन्तप्ताः त्रिदशाः परम्। पेतुः पृथिव्यां निःसंज्ञाः किं कर्तव्यमतः परम् ॥

इति तद्वचनं श्रुत्वा कपिलः प्राह सादरम्। वृत्तान्तमखिलं तावद्वदस्वेति विशेषतः ॥ ५५ ॥

गरुडः —

पातालाद्गतमस्माभिः देवैर्दैत्यजयेच्छया। दिव्यशस्त्रौघसंकीर्णैः गन्धर्वादिसमन्वितैः ॥ ५६ ॥

शार्ङ्गशङ्खध्वनिव्याप्तं तदाभून्मण्डलं मुने। देवदुन्दुभिनिर्घोषैः सुरकोलाहलैरपि ॥ ५७ ॥

प्रतिध्वनिसमाकीर्णाः सर्वेऽपि गिरयस्तथा । चक्रस्फुरणसंभूतैः स्फुलिङ्गैरावृतं जगत् ॥ ५८ ॥
तदानीं तद्ध्वनिं श्रुत्वा प्रचण्डाख्यो महासुरः । स्वप्रधानं महोग्राख्यं बिडालं प्राह सत्वरम् ॥

प्रचण्डः —

कोऽयं कोलाहलः क्रूरः कठोरः श्रूयते मुहुः । स्फुलिङ्गाश्च समायान्ति शतशोऽथ सहस्रशः ॥
अभूतपूर्वमेतावदत्यद्भुतमिदं खलु । प्रविष्टो हृदयाकाशे सर्वदा भयदोऽधुना ॥ ६१ ॥
केन सृष्टो ध्वनिः सोऽयं कस्यैवेदं विजृम्भणम् । मही सकम्पा सकला गिरिकाननसंवृता ॥
लोके प्रतिभटः कोपि समुत्पन्नो ममाधुना । केन स्यात् तादृशोत्पत्तिः शक्तिः कस्यापि कीदृशी ॥
इदं विचार्य सकलं वद यत्नपुरःसरम् । आहारेऽपि न मे बुद्धिरधुनापि प्रजायते ॥ ६४ ॥
इति तद्वचनं श्रुत्वा क्रूरः प्राह महासुरः । विचारः कोऽयमधुना किमाहारो न रोचते ॥ ६५ ॥
प्रबलस्य तवाप्येवं कथं बुद्धिः प्रजायते । लोकत्रयेपि दृष्टोऽस्ति न ते प्रतिभटः खलु ॥ ६६ ॥
यदप्रतिममैश्वर्यं तव तन्न विनश्यति । अतश्चिन्ता न काप्यस्ति भयं त्यज महासुर ॥ ६७ ॥
देवैः सर्वैः सगन्धर्वैः किन्नरैः सह दुःखितैः । सकुटुम्बैः सपुत्रैश्च गतं पातालमण्डलम् ॥ ६८ ॥
अतः परं न कोप्यस्ति भूलोके तादृशो रिपुः । स्वर्गलोकोऽधुना शून्यः सत्यलोकोऽपि सर्वथा ॥
वैकुण्ठेऽपि न कोऽप्यस्ति न वा नक्षत्रमण्डले । नच गन्धर्वलोकेषु यमलोकेऽपि सर्वथा॥ ७० ॥
कैलासवासी भगवानेकस्तिष्ठति शङ्करः । तत्पूजकानामस्माकं भयं संभावितं च न ॥ ७१ ॥
पूजयस्व महादेवं लिङ्गरूपिणमव्ययम् । अपारैरुपचारैस्तं भयं संत्यज संत्यज ॥ ७२ ॥
यदा मोहेन नास्माकं शिवे भक्तिर्भविष्यति । तदा भयं भवत्येव दुःखधारा पदे पदे ॥ ७३ ॥
येन स्मृतो महादेवः संसारात् स विमुच्यते । भयानां तत्र का वार्ता भयलेशोऽपि वा कथम् ॥
अस्माकं बलमेतावत् प्रचण्ड रिपुसंक्षये । महादेवार्चनं तत्र शपथः शिवपादयोः ॥ ७५ ॥
अस्मासु सत्सु का भीतिः शाङ्करेषु तवाधुना । प्रलयावधि नास्माकं दुःखवार्तापि लेशतः ॥
इति तद्वचनं श्रुत्वा प्रचण्डो भीमविक्रमः । महोग्राख्यमुवाचेदं वचनं विस्मयावहम् ॥ ७७ ॥

प्रचण्डः —

सत्यमुक्तं त्वया चात्र सर्वथा न विपर्ययः । [[1] तथापि हृदि मे दुःखं अधुनाप्यनिवर्तते ॥७८॥
मयि शासति भूलोकं कोयं कोलाहलः श्रुतः । अत्युद्वेगकरः क्रूरः कठोराशनिसन्निभः] ॥७९॥

1 कोष्ठान्तर्गतमर्धत्रयं C कोशे नोपलभ्यते ।

अयं कोलाहलः शान्तो भविष्यति यदा तदा । भोक्तव्यमन्यथा तत्र न रुचिर्मम जायते ॥८०॥
उग्रज्वालं समाहूय प्रेषयन्तु रणाय तम् । यान्तु तेन सहान्येपि दैत्याः शस्त्रबलान्विताः ॥ ८१ ॥
इति तद्वचनं श्रुत्वा [1] ज्वाला स्यात् कारणं तथा । प्रधानः प्रेषयामास दैत्यकोटिसमावृतः ॥८२॥
तदा तमाह ज्वालास्यं तत्कोलाहलकारिणः । हन्तव्या एव बहुधा नात्र कार्या विचारणा ॥८३॥
इति तद्वचनं श्रुत्वा सोपि वीर्यबलोद्धतः । जगाम दैत्यप्रवरैः संवृतो रथसंस्थितः ॥ ८४ ॥
[2] अभ्रकेशं रथं दृष्ट्वा पताकार्बुदसंयुतम् । ज्वालाकुलसमाकीर्णं भयमापुस्तदा सुराः ॥ ८५ ॥
तदा नारायणः प्राह चतुर्मुखमुखान् सुरान् । ज्वलत्पर्वतसङ्काशो रथो दृष्टो न वेत्यपि ॥ ८६ ॥
अत्याश्चर्यकरः सोऽयं रथो वह्निगणाकुलः । किमतः परमस्माभिः कर्तव्यं तद्वदन्तु वः ॥ ८७ ॥
आयात्येवातिवेगेन वातवेगोऽनिवारितः । तद्रथज्वालया स्थातुं अशक्यमिति भाति मे ॥ ८८ ॥
अतः परं क गन्तव्यं दिगन्तव्याप्त एव सः । रथो महाग्निसंकाशः श्रुतपूर्वोपि न ध्रुवम् ॥ ८९ ॥
पश्य पश्य रथे दैत्यं रथस्थमपि सत्वरम् । चतुर्मुखाधुना पश्य रथवाजिरयं परम् ॥ ९० ॥
अतः परं न पाताले गन्तुकामोऽपि वर्तते । गमनेपि सुखं तत्र कथं संभावितं वद ॥ ९१ ॥
इति तद्वचनं श्रुत्वा प्राह नारायणं विधिः । चक्रं गृहाण का भीतिः कुरु युद्धमिहेत्यपि ॥ ९२ ॥
ततः परमभूद्युद्धं युगानामयुतं तयोः । परस्परपरिक्षिप्तशस्त्रौघैर्मुनिपुङ्गव ॥ ९३ ॥
ततो नष्टरथः सोऽभून्नष्टाश्वो नष्टसैनिकः । ततः परं गदायुद्धं जातं युगचतुष्टयम् ॥ ९४ ॥
ततः परं खमाश्रित्य स चकारासुरो रवम् । तत्रापि स गतो विष्णुस्तत्र युद्धमभूत् तयोः ॥९५॥
ततः पपात भूपृष्ठे हतो नारायणस्तदा । संज्ञां प्राप्य ततो भूयो युद्धाय कृतनिश्चयः ॥ ९६ ॥
मुष्टियुद्धमभूत् तत्र युगानामयुतं तयोः । ततः स दैत्यस्तेनैव निहतो हरिणा तदा ॥ ९७ ॥
ततः सैन्यं हतं सर्वं चक्रिणा तेन दुःसहम् । ततः क्षणार्धं सुखिनः सुराः सर्वे तदा स्थिताः ॥
ज्वालास्यं निहतं श्रुत्वा प्रचण्डस्तप्तमानसः । किं कर्तव्यमिति प्राह प्रधानं चोरुविक्रमम् ॥

प्रधानः —

अपारेष्वसुरेष्वेकः कश्चिज्ज्वालास्यनामकः । मृतः का तावता हानिः स तावदतिदुर्बलः ॥१००॥
वह्निकूट इति ख्यातः कश्चिदस्ति महासुरः । स युद्धनिपुणः सोऽपि युद्धाय कृतनिश्चयः ॥ १०१ ॥

---

1 "ज्वालास्यं वाहयत् तदा । प्रेषयामास धर्मात्मा" इति C कोशे पाठः ।

2 अभ्रङ्कषं C

तेनैव सह निर्यान्तु कोटिशोऽप्यसुरा अपि। युद्धदर्पसमाक्रान्ताः तेऽपि तेऽपि महाबलाः ॥
गजानामयुतं यातु न्यर्बुदं वाजिनामपि। रथानामर्बुदं यातु जन्यायातिप्रयत्नतः ॥ १०३ ॥
इत्युक्तः सोपि संक्रुद्धं वह्निकूटं व्यवस्थितम्। याहि युद्धाय वेगेन विलम्बं संत्यजेत्यपि ॥ १०४ ॥
इत्युक्तः स ययौ तेन बलैस्तैः प्रबलैर्युतः। नारायणादयो यत्र ते सुरास्तत्र सत्वरम् ॥ १०५ ॥
ततः परं सुरैः साकं युद्धं घोरमभूत् तदा। चक्री चक्रं समादाय चिच्छेदासुरपुङ्गवान् ॥ १०६ ॥
तदा शोणितवाहिन्यः समुत्पन्नास्ततः सुराः। ते रक्तवाहिनीनीताः सर्वेपि भयविह्वलाः ॥ १०७ ॥
ततः परं गताः सर्वे समुद्रे पतिताः सुराः। रक्तप्रवाहवेगेन तत्तरङ्गाहता अपि ॥ १०८ ॥
ततः परं कियत्कालं स्थित्वा तीरे सरित्पतेः। पुनर्युद्धोन्मुखा जाताः क्रूरैरसुरपुङ्गवैः ॥ १०९ ॥
पश्चाद्द्वायुतं जातं युद्धं घोरतमं मुने। ततस्ते निहताः सर्वे राक्षसाः सुरपुङ्गवैः ॥ ११० ॥
अग्निकूटं मृतं श्रुत्वा प्रचण्डो भयसंकुलः। प्राह प्रधानं हा हा हा किमभूदिति सत्वरम् ॥ १११ ॥
तं पुनर्वचनैर्धीरैराह क्रूरो विचक्षणः। धैर्यं हृदि निधायैव महादेवमनुस्मरन् ॥ ११२ ॥

क्रूरः —

युद्धकालेषु मरणं भटानां किं न जायते। अधैर्यं तत्र सहसा न कर्तव्यं त्वयाऽधुना ॥ ११३ ॥
अस्मद्भटानां गणना कर्तुमेव न शक्यते। तत्र केचिद्गता युद्धे तावता भीतिरत्र का ॥ ११४ ॥
पुनः पुनः प्रेषणीयाः सुरास्ते प्रबलाः खलु। कल्पावसानपर्यन्तं युद्धे सैन्यं न नश्यति ॥ ११५ ॥
अपारसेनापतयः सन्त्यपाराः किलाधुना। प्रेषणीयास्त्वया तत्र चिन्ता कार्या न सर्वथा ॥ ११६ ॥
इत्युक्त्वा प्रेषयामास क्रूरो दैत्यान् स कोटिशः। तैः पुनर्युद्धमभवत् देवानामपि दुःसहम् ॥
चक्रेणैकेन निर्भिन्नाः कोटिशोऽप्यसुरास्तदा। तदा वज्रेण निर्भिन्नाः दैत्यानां कोटिकोटयः ॥
तदा तान्निहतान् दृष्ट्वा प्रचण्डश्चण्डविक्रमः। पुनः क्रूरमुवाचेदं ज्वलन्निव महागिरिः ॥ ११९ ॥

प्रचण्डः —

प्रेषितैरैरसंख्यातैरसंख्यातबलोद्धतैः। मृता दैत्याः सुरास्त्वोघैः किं कर्तव्यमतः परम् ॥ १२० ॥
प्रबला एव निहताः ते सर्वे राक्षसाः खलु। तादृशास्तावदत्यल्पाः केचित् तिष्ठन्तु तैरलम् ॥
अतः परं किमस्माकं बलं क्व विजयोन्मुखम्। केनोपायेन जेतव्याः सुरास्ते दैत्यपुङ्गव ॥ १२२ ॥

क्रूरः —

न केवलं राक्षसानां बलेन विजयो भवेत्। शङ्करानुग्रहाभावे जयवार्तापि दूरतः ॥ १२३ ॥

त्वयाऽतित्वरया कार्यं त्रिपुरान्तकपूजनम् । अपारैरुपचारैस्तैर्येन तुष्यति शङ्करः ॥ १२४ ॥

मृत्युञ्जयाभ्यर्चनेन जयः खलु पदे पदे । अतो जयार्थं यत्नेन यजेन्मृत्युञ्जयं प्रभुम् ॥ १२५ ॥

भूषणाय परं सेना न जयाय कदाचन । जयः शिवार्चनेनैव केवलेन भविष्यति ॥ १२६ ॥

इति तद्वचनं श्रुत्वा तथुक्त्वा सम्यगित्यपि । स शिवाराधनोद्युक्तः प्रचण्डो भूरिसाधनैः ॥

यावदर्जितमैश्वर्यं तावदर्पितमीश्वरे । अभिषेकादिभिर्दैत्यः पूजयामास शङ्करम् ॥ १२८ ॥

ततः परं सुरैः सर्वैः दैत्यास्ते निहता इति । प्रचण्डासुरनाशाय जग्मुस्ते नगरं प्रति ॥ १२९ ॥

ततस्तन्नगरापारवरप्राकारतेजसा । हतास्ते मूर्छिताः सर्वे संज्ञा तेषां न दृश्यते ॥ १३० ॥

अतः परं विधेयं किं मया कमलयाऽपि वा । शच्या [1]वाऽदितिना वाऽपि छाययापि विशेषतः ॥

इति तद्वचनं श्रुत्वा कपिलः सिद्धपुङ्गवः । प्राह गम्भीरवचनैर्लक्ष्मीमभिमुखं तदा ॥ १३२ ॥

दैत्योऽपि शङ्करपदाम्बुरुहार्चनेषु विश्वस्य शङ्करपदाम्बुजपूजनानि ।
कृत्वाधितिष्ठति जयोऽपि स तेन लब्धः तैरेव पुण्यमधिकं खलु तस्य नूनम् ॥ १३३ ॥

न ध्यातो गिरिशो मुदा यदि तदा दुःखार्णवे मज्जनं
किं न स्यादिति निश्चयोपि हृदये नारायणस्याभवत् ।
इन्द्रस्यापि विधेरपीति बहुधा हा कष्टमासीदतो
दुष्टं चित्तमभूत् कथं सुरगणस्याद्योपरोधो महान् ॥ १३४ ॥

शिवार्चनपरित्यागस्वरूपादपराधतः । जातमेवमभूत् कष्टं त्रिदशानां विशेषतः ॥ १३५ ॥

नरोपि गिरिशार्चनप्रवणमानसः सर्वदा सुखेन खलु तिष्ठतीत्यवगतं न देवैरपि ।
अहो बत ममाधुना बहुविधोऽपि मोहो महान् शिवार्चनपराङ्मुखानपि करोति देवानहो ॥

इति तद्वचनं श्रुत्वा कपिलं मुनिपुङ्गवम् । नत्वाश्रुपूर्णनयना प्राह गद्गदया गिरा ॥ १३७ ॥

लक्ष्मीः —

न मोहरहितः कोपि सुरेषु मुनिपुङ्गव । मोहप्रवाहसंवीतो नाराधयति शङ्करम् ॥ १३८ ॥

पुनः पुनरिदं ज्ञातं शङ्कराराधनं विना । सुखं नेति विशेषेण ज्ञातमत्र न संशयः ॥ १३९ ॥

अतः परं स्यादसुरादिजीवनं कथं विसंज्ञत्वविनाशनं च ।
अस्मासु वैधव्यविनाशनं च सौभाग्यवृद्धिश्च कथं मुनीश ॥ १४० ॥

---

1 वाण्यापि भगवन् शाधि नस्त्वं विशेषतः C

न महाप्रळयेऽपि येन नाशो विनिवार्यो न तथा च तेन वा स्यात्।
पुनरागमनं वदाशु तेषां पुनरुज्जीवनमप्यपारभाग्यम् ॥ १४१ ॥

सर्वज्ञेन ज्ञायते धर्मतत्त्वं योगाभ्यासात् शङ्कराराधनेन।
एतत्सर्वं निश्चयेनाशु तावत् वक्तव्यं मे येन दुःखापहारः ॥ १४२ ॥

इति तद्वचनं श्रुत्वा कमलां व्याकुलां तदा। कपिलः प्राह निश्चित्य व्रतं सञ्जीवनं तथा ॥

कपिलः —

रहस्यं व्रतमस्त्येकं कमले विमले शृणु। गोपनीयं प्रयत्नेन शङ्करोक्तमिदं व्रतम् ॥ १४४ ॥

व्रतानामपि सर्वेषामिदमेवोत्तमं व्रतम्। यद्व्रताचरणेनैव सर्वसौभाग्यसंपदः ॥ १४५ ॥

पुरा कैलासशिखरे रत्नशृङ्गविराजिते। रत्नगोपुरसंकीर्णे रत्नप्राकारसंवृते ॥ १४६ ॥

दिव्योद्यानसमाकीर्णे दिव्यपुष्पसमाकुले। सुधाकुल्यासमाकीर्णे सरोवरविराजिते ॥ १४७ ॥

भ्रमद्भ्रमरसङ्घोषप्रतिध्वनिविराजिते। मरालराजिसङ्कीर्णे वरटापरिवेष्टिते ॥ १४८ ॥

तत्रैकरत्नप्रासादः कोटियोजनमुन्नतः। तत्र सिंहासनं दिव्यं रत्नकान्तिविराजितम् ॥ १४९ ॥

पुष्पशय्यासमाक्रान्तनानामणिसमन्वितम्। चन्द्रमण्डलमालाभिः परितः परिवेष्टितम् ॥ १५० ॥

तत्र शङ्करमासीनं प्रसन्नवदनं नवम्। प्रतिक्षणं सुखाम्भोधितरङ्गपरिवेष्टितम् ॥ १५१ ॥

रत्नहारसमाक्रान्तं किरीटकटकावृतम्। रत्नाङ्गुलीयकापारकान्तिपुञ्जविराजितम् ॥ १५२ ॥

सुवर्णकटिसूत्रस्थमणिमण्डलमण्डितम्। कस्तूरीघनसाराख्यपाटीररसरूषितम् ॥ १५३ ॥

स्फुरन्मणिगणाकीर्णं कर्णभूषणराजितम्। नवरत्नसमाकीर्णस्फुरन्मणिसुपादुकम् ॥ १५४ ॥

क्षीरसागरसङ्काशवसनैः परिवेष्टितम्। अभयप्रदमीशानवरदं गणसेवितम् ॥ १५५ ॥

सोमसूर्याग्निनयनं सोमार्धकृतशेखरम्। त्रिशूलमूलहस्तं तं रत्नसानुशरासनम् ॥ १५६ ॥

स्फुरद्वह्निप्रभायुक्तकर्पूरगिरिसन्निभम्। प्रासादाभिमुखं देवमुमा प्राहातिशोभना ॥ १५७ ॥

गौरी —

महादेव महेशान करुणासागर प्रभो। शंभो प्रसीद भगवन् दयां कुरु सदा मयि ॥ १५८ ॥

किमन्यत् करुणापात्रं तव चन्द्रकलाधर। मदन्यदपि लोकेषु सर्वेष्वपि सदाशिव ॥ १५९ ॥

कृपामूर्तिस्त्वमीशानः त्वया करुणया मयि। स्नेहोऽपि क्रियते नूनं स्नेहपात्रमहं यतः ॥ १६० ॥

अद्यैकं द्रष्टुमिच्छामि सर्वलोकहितावहम्। व्रतं महेशतस्तावत् वद स्नेहपुरःसरम् ॥ १६१ ॥

इत्थं विकावचनरूपसुधां महेशः पीत्वा प्रहृष्टहृदयः सदयस्वभावैः ।
आलिङ्ग्य शैलतनयां मुहुरानताङ्गीं अङ्गीकृताखिलशिवानुनयोऽभ्युवाच ॥ १६२ ॥

श्रीशिवः —

किं व्रतं श्रोतुमिच्छा ते गौरि स्मेरवरानने । तद्गोपनीयमप्यैव वक्ष्ये विद्यामये शिवे ॥ १६३ ॥

तवापि किंवा वद गोपनीयं तवैव सर्वं गिरिराजकन्ये ।
इदं महद्भाग्यमपारमेतत् तवैव तस्येदृशभाग्यमस्ति ॥ १६४ ॥

इत्याकर्ण्य महेशसादरवचोवीचीमुवाचाम्बिका त्वत्पादाम्बुरुहावलोकनरता धन्यास्मि धन्योत्तम ।
अर्धाङ्गे विनिवेशितास्मि किमितो भाग्यं भवेदित्यहं सानन्दं सततं कृपैवमनिशं [1] संपादनीया मम ॥

सौभाग्यवृद्धिदं किं वा व्रतं मङ्गलदायकम् । पुत्रपौत्रादिसंपत्तिसाधनं च वदाशु मे ॥ १६६ ॥

यद्व्रताचरणेनैव न नारी विधवा भवेत् । जन्मान्तरेऽपि सुभगा सुपुत्रा भवति प्रभो ॥ १६७ ॥

यद्व्रताचरणाभावे विधवा स्याच्च दुर्भगा । अपुत्रा मृतभर्त्री च हीनबन्धुजना सदा ॥ १६८ ॥

एतादृशं व्रतं किञ्चित् व्रतं नारीमनोहरम् । यद्व्रतश्रवणेनापि मुच्यते पापकोटिभिः ॥ १६९ ॥

इति तद्वचनं श्रुत्वा शिवामालिङ्ग्य शङ्करः । प्राह व्रतोत्तमं धन्यमम्बिकायै मनोहरम् ॥ १७० ॥

श्रीसदाशिवः —

अस्ति व्रतोत्तमं देवि नारीणामेव केवलम् । तद्व्रताचरणेनैव नारी सुखमवाप्नुयात् ॥ १७१ ॥

सत्कुले जन्म संप्राप्य सौन्दर्यमतिशोभनम् । भाग्यं च प्राप्नुयान्नारी तद्व्रताचरणात् शिवे ॥

न प्रपश्यति वैधव्यं तद्व्रताचरणोत्सुका । अपुत्रा न भवत्येव दुर्भगापि न सर्वथा ॥ १७३ ॥

रूपलावण्यसंपन्ना सम्पत्कीर्तिसमन्विता । बन्धुपोषणसंसक्ता नारी तस्माद्व्रताद्भवेत् ॥ १७४ ॥

न तद्व्रतसमं लोके नारीणां व्रतमस्त्यपि । अतस्तद्व्रतमत्यन्तं भक्त्या कार्यं प्रयत्नतः ॥ १७५ ॥

मासि भाद्रपदे शुक्ले पक्षे हस्तर्क्षसंयुते । या तृतीया भवेत् तस्यां तद्व्रताचरणं भवेत् ॥ १७६ ॥

सायङ्कालात् पूर्वमेव पूजासाधनमुत्तमम् । संपादनीयं यत्नेन फलपुष्पादिकं नवम् ॥ १७७ ॥

मनोहराणि पुष्पाणि यावन्ति वरवर्णिनि । तानि संपादनीयानि परिपक्वफलान्यपि ॥ १७८ ॥

पुष्पाण्यपि विशेषेण फलान्यपि तथा शिवे । तानि संपादनीयानि यानि वक्ष्ये शिवप्रिये ॥

कुन्दमन्दारकमलनीलोत्पलकुलान्यपि । द्रोणापमार्गकल्हारकेतकीकुसुमान्यपि ॥ १८० ॥

---

1 संप्रार्थनीया मया C

बकुलानि मनोज्ञानि कनकान्यपि शोभने। विविधानि प्रफुल्लानि करवीराणि शोभने ॥ १८१ ॥
जपाचम्पककुसुमानि पुन्नागकुसुमान्यपि। फुल्लार्जुनप्रसूनानि शतपत्राणि शोभने ॥ १८२ ॥
कण्टकारिप्रसूतानि श्वेतार्ककुसुमान्यपि। तथा बिल्वप्रसूनानि साधनीयानि यत्नतः ॥ १८३ ॥
तथा कदम्बपुष्पाणि तथा दमनकान्यपि। आम्रामलकपत्राणि बिल्वपत्राणि शोभने ॥ १८४ ॥
अन्यान्यपि सुगन्धीनि साधनीयानि सादरम्। फलानि नारिकेलाम्रबीजपूरादिकान्यपि ॥१८५॥
शक्तिर्या फलपुष्पादिसाधने सा गुणावहा। अतः प्रयत्नैर्विविधैः साधनीयानि तान्यपि ॥१८६॥
सुन्दरं मन्दिरं कार्यं सुसुधालेपनादिभिः। अलंकृतं च कर्तव्यं वितानैर्ध्वजमण्टपैः ॥ १८७ ॥
विचित्रवसनैः कार्यं विचित्रं शिवमन्दिरम्। तोरणालङ्कृतं कार्यं हारराजिविराजितम् ॥ १८८ ॥
पुष्पगुच्छसमाकीर्णं पुष्पमालासमावृतम्। तूर्यध्वनिसमाकीर्णं शिवगानविजृम्भितम् ॥ १८९ ॥
रम्भास्तम्भसमाकीर्णं पूर्णकुंभसमावृतम्। पुण्याहवाचनोपेतं द्विजमण्डलमण्डितम् ॥ १९० ॥
एवं कृत्वा शिवागारं दीपमालाविजृंभितम्। सुगन्धद्रव्यसंलिप्तं रङ्गवल्लीसमावृतम् ॥ १९१ ॥
एतादृशशिवागारे प्रविश्य तु शुचिव्रता। पूजयेदुत्तमं लिङ्गं हेमरूप्यादिभूषितम् ॥ १९२ ॥
अथवा सैकतं लिङ्गं पूजनीयं प्रयत्नतः। अत्रैव सैकते लिङ्गे ध्यायेन्मामव्ययं प्रभुम् ॥ १९३ ॥

ध्यायेदिन्दुकलावतंसमसकृद्वामाङ्गभागे लसद्गौरीचारुतराननाधरसुधासारैः समुद्वीक्षणम्।
तत्पीनोरुपयोधराग्रविलसत्काश्मीरधाराङ्कितं धीरं शङ्करमिन्दुसुन्दररजःकर्पूरगौरं हरम् ॥ १९४ ॥

रत्नापारकिरीटकोटिघटितं कण्ठस्फुरन्मौक्तिकं सग्रैवेयकमिन्दुमण्डलसुधाव्यापारभारान्वितम्।
हारापारविहारराजिरुचिरं रत्नाङ्गदालंकृतं सौवर्णामितकङ्कणाङ्गुलिलसद्भूषासमेतं शिवम् ॥

गौरीनीलकुलाचलार्भकबरीभारस्फुरन्नीलिमाधारालङ्कृतकम्बुकण्ठविलसन्मूलं त्रिशूलामलम्।
हस्ताम्भोरुहफुल्लपङ्कजमृगस्फाराङ्गसङ्गं मुदा ध्यायेन्मामगजाम्बुजपदाम्भोजं चिरं सादरम् ॥

हस्तन्यस्तसमस्तगन्धविलसत्कस्तूरिकाकर्दमं प्रत्यक्षाभिमुखाम्बिकाकुचतटालङ्कारशङ्काकरम्।
शङ्कातङ्ककलङ्कपङ्करहितं शान्तं प्रसन्नाननं सव्यासव्यपदाम्बुजातिसुषमासञ्जातगङ्गाजलम् ।१९७॥

एवं ध्यात्वा महादेवं मामद्रितनयान्वितम्। तस्मिन्नावाहयेल्लिङ्गे सर्वदा मङ्गलावहे ॥ १९८ ॥
उमाकान्त महादेव लिङ्गे सन्निहितो भव। सैकतेऽस्मिन् प्रसीद त्वं वाञ्छितार्थान् प्रयच्छ मे ॥
नवरत्नगणोपेतं सत्सुवर्णविराजितम्। गङ्गाजलं निर्मलं च शीतवातातिशीतलम् ॥ २०० ॥
गृहाणाचमनीयं च रत्नपात्रसमन्वितम्। आनीतं रत्नपात्रेण मुक्तापात्रविराजितम् ॥ २०१ ॥

ततः पञ्चामृतैः शुद्धैरभिषेकं पृथक् पृथक् । समर्पणीयमीशाय मह्यं पूजापुरःसरम् ॥ २०२ ॥

क्षीराभिषेकोत्तरमादरेण जलाभिषेकोऽपि समर्पणीयः ।
वस्त्रे हि देये तदनन्तरं तु यज्ञोपवीते नवचन्दनं च ॥ २०३ ॥

पुष्पाणि देयानि ततः परं च सुगन्धिवस्त्राणि विशेषतश्च ।
धूपप्रधूमोऽपि ततश्च दीपो घृतेन गव्येन समन्वितोऽपि ॥ २०४ ॥

तत्र प्रदेया खलु वर्तिका स्यात् एकादशावर्तिततन्तुयुक्ता ।
तथाविधाष्टांगुलवर्तिकाभिः तास्तावदेकादशवर्तिकाः स्युः ॥ २०५ ॥

देयं गोक्षीरपक्वान्नं मह्यं दध्योदनादिकम् । पश्चादाचमनीयं च करस्योद्वर्तनं तथा ॥ २०६ ॥
ताम्बूलं व्यजनं छत्रं चामरं दर्पणं तथा । पुनर्धूपश्च दीपश्च पश्चात्पूजासमर्पणम् ॥ २०७ ॥
एवं पञ्चाभिषेकेषु पृथगभ्यर्चनं भवेत् । पश्चान्महाभिषेकश्च रुद्रसूक्तादिभिः परम् ॥ २०८ ॥
रत्नकुम्भसमानीतं स्नानाय जलमीश्वर । गृहाण विमलं देव प्रसीदेति समर्पयेत् ॥ २०९ ॥
पश्चादुद्वर्तनं दद्याद्बिल्वपत्रैर्मनोहरैः । फलगन्धोदकैः पश्चादभिषेकं समर्पयेत् ॥ २१० ॥
पश्चादाचमनीयं च पश्चाद्वस्त्रसमर्पणम् । पश्चात् स्यात् केशसंस्कारसमर्पणमघापहम् ॥ २११ ॥
क्षीरसागरसंकाशे दुकूले गिरिजापते । गृहाणेति प्रयत्नेन देयं वस्त्रद्वयं मुदा ॥ २१२ ॥
उपवीते समानीते गृहाणातिसिते प्रभो । शम्भो ताभ्यां पवित्रत्वं गृहीताभ्यां प्रयच्छ मे ॥२१३॥

मृगमदरससारासारपाटीरसारद्रवरसनवसारापारकाश्मीरपूरान् ।
कनककमलगन्धामन्दसिन्दूरधारापरिवृतबहुगन्धान् साम्ब शम्भो गृहाण ॥ २१४ ॥

अपाररत्नाभरणानि शम्भो किरीटहारप्रमुखानि साम्ब ।
गृहाण तैराभरणे गृहीते अपारभाग्यानि मम प्रयच्छ ॥ २१५ ॥

मन्दारकुन्दनवकुंकुमकेसराणि नीलोत्पलानि कमलानि मनोहराणि ।
श्रीकेतकीकनकचम्पकपारिजातमल्लीप्रसूनसहितानि गृहाण शम्भो ॥ २१६ ॥

जाजीप्रसूनकरवीरवरप्रसूनपुन्नागनागनदकोकनदानि शंभो ।
ग्राह्याणि तानि कुसुमैरभिसंयुतानि द्रोणाग्रपुष्पसहितानि मनोहराणि ॥ २१७ ॥

दमनकनकबिल्वीपल्लवैरर्चये त्वामभिनवसितदूर्वास्वर्णपुष्पादिभिश्च ।
बहुविधबहुपुष्पैः शङ्कराभ्यर्चये त्वां विविधरुचिरगन्धैः शैलजाजानिमीशम् ॥ २१८ ॥

धूपधूमं गृहाणात्र उमाकान्त मनोहरम् । धूपधूमप्रदानेन हर पापानि संहर ॥ २१९ ॥
कपिलाघृतसंयुक्तवर्तिकाललितान् बहून् । दीपान् गृहाण भूतेश प्रसीद करुणानिधे ॥ २२० ॥
नैवेद्यं परमान्नराशिसहितं गोक्षीरफेनप्रभं लड्डूकैर्वटकैरपूपसहितैर्भक्ष्यैरपारैरपि ।
शाकैरप्यमितैः फलैरपि युतं द्राक्षारसालादिभिः साज्यं शर्करया समेतमसकृत्तुभ्यं भवानीपते ॥

दध्यन्नानि गृहाण तानि विमलं पानीयमानीय ते
ताम्बूलानि गृहाण तानि विमलान्येलालवङ्गादिकान् ।
कर्पूरामितदीपजालघटितं नीराजनं दीयते
तुभ्यं शङ्कर तद्गृहाण गिरिजाकान्तातिकान्तं मुदा ॥ २२२ ॥

पुष्पाञ्जलिं गृहाणेश प्रसीद गिरिजापते । प्रयच्छ मह्यं सौभाग्यान्यपाराणि महाप्रभो ॥ २२३ ॥
अङ्गपूजा ततः कार्या पुष्पैः पादनखावधि । जटामण्डलपर्यन्तं सांबध्यानपुरःसरम् ॥ २२४ ॥
सुरासुरशिरःकोटिकोटीरमणिकान्तिभिः । अर्चितांस्ते नखान् शंभो पूजयामि प्रसीद मे ॥ २२५ ॥
तत्पादांगुलिजापारसुषमापरिवेष्टितः । अरुणोऽरुणतां प्राप तानीशाभ्यर्चयाम्यहम् ॥ २२६ ॥
विष्णुनेत्रारविन्देन यत्पादतलमर्चितम् । तदर्चयामि गौरीश स्वर्णवर्णैर्मनोहरैः ॥ २२७ ॥
इन्दुकन्दुकसंयुक्तं यज्जानुयुगलं प्रभो । तदद्य गिरिजाजाने पूजयामि प्रसीद मे ॥ २२८ ॥
यदूरुभागसौन्दर्यमृदुलत्वादयो गुणाः । ज्ञाता भवान्या तं पुष्पैः पूजयामि प्रसीद मे ॥ २२९ ॥
तडित्कूटनिभं यत्ते शम्भो कटितटं प्रभो । तदर्चयामि प्रसवैरुत्फुल्लैः कोमलैरपि ॥ २३० ॥

यल्लिङ्गादभवन्नुपेन्द्रविधयः सेन्द्राः सुराणां गणाः
गन्धर्वोरगकिन्नरा अपि मुहुस्तैरर्चितं यन्मुदा ।
तत्तावत् कुसुमैः सुगन्धसलिलैरभ्यर्चयामि प्रभो
लिङ्गं मङ्गलदायकं गिरिश मे पुत्रान् प्रयच्छोत्तमान् ॥ २३१ ॥

यन्नाभिदेशं सरसीरुहाक्षी विलोक्य गौरी पुनरादरेण ।
आवर्तशोभेयमिति प्रसन्ना तन्नाभिदेशं तव पूजयामि ॥ २३२ ॥

यद्वक्षःस्थलमम्बिकाकुचतटापारस्फुरत्कान्तिभिः तत्पाटीररसाभिषिक्तविलसत्कस्तूरिकाकर्दमैः ।
व्याप्तं तत्तव पूजया च भगवन्नानन्दपारङ्गतः श्रीकण्ठाव कृपानिधान सततं दीनार्तिसंहारक ॥

गौरीचारुकुचोरुमेरुशिखरस्फारप्रभासंभ्रमव्यापारव्यवहारसारनिकराभिख्याघृतौ ते करौ ।

उत्फुल्लामलकेतकीदलयुतापारप्रसूनान्वितौ गौरीकङ्कणसुन्दराङ्गदमणिव्यातौ समभ्यर्चये ॥ २३४ ॥

यद्बाहुमण्डलतडित्सटमण्डलेन गौरीशरीरसुषमाप्यतिमण्डिताऽभूत् ।
तद्बाहुमण्डलमपारमणिप्रभाढ्यं पुष्पप्रभाढ्यमधुना करवाणि शम्भो ॥ २३५ ॥

गौरीमनोहरविहारवरावसादस्वेदोदकामितमनोहरमौक्तिकाभ्याम् ।
श्रीकण्ठकण्ठमनिशं शिव पूजयामि सोत्कण्ठमाशु कुसुमैरसमैः शिवाद्य ॥ २३६ ॥

लोकत्रयामितविशेषफलप्रभूततत्तादृशाभिमुखमीशमुखप्रसूनैः ।
अभ्यर्चयामि रसनामपि नासिकां च गन्धप्रवाहसहितं शिव ते प्रसूनैः ॥ २३७ ॥

नेत्राणि सोमरविवह्निमयानि शंभो कर्णद्वयं च विलसन्मणिकुण्डलाढ्यम् ।
अभ्यर्चयामि कुसुमैरव मां महेश मोहं विनाशय विधेहि परां श्रियं मे ॥ २३८ ॥

उद्धूलनोद्धतसरिद्वरसागरादिनीरप्रवाहनिकरोऽप्यणुकल्प एव ।
यन्मौलिदेशतुहिनांशुकराभिभूतं तन्मौलिमाशु कुसुमैः शिव पूजयामि ॥ २३९ ॥

इत्यङ्गपूजां विधिवत् कृत्वा कृत्वा प्रदक्षिणम् । नत्वा स्तोत्रैश्च सन्तुष्टः कर्तव्योऽहं मुहुर्मुहुः ॥

स्वर्णाकारजटाधराय भगवन् तुभ्यं नमस्ते नमः शंभो भर्ग भवाम्बुराशिजभवापारव्यथां नाशय ।
दीनानाथशरण्य पुण्यविभवप्राप्याम्बिकावल्लभ स्वामिन् शोभनदानमद्य कुरु मे गौरीविनोदप्रद ॥

यत्पादाम्बुजपूजनानि सकलश्रेयोनिदानानि मे पापापारतरङ्गिणीदिनकराकाराण्यतुल्यान्यपि ।
दुःखापारवनानलानि सकृदप्यालोकितानि प्रभो शंभो तानि करोति तावदधुना संपत्प्रदानाय मे ॥

यल्लिङ्गार्चनवीक्षणेन सकृदप्यानन्दसिन्धुर्मुहुः
संपद्रूपतरङ्गसङ्कुलललितः प्राप्तो भवत्यन्वहम् ।
तल्लिङ्गार्चनमेव सन्ततमहं कर्तुं प्रवृत्तः फलं
तन्मे वांछितमिच्छयापि तनुते दृष्टं सकृद्धानतम् ॥ २४३ ॥

इन्द्रोपेन्द्रपुरःसरैरपि सुरैर्लिङ्गं यदाराधितं
गन्धर्वैरपि किन्नरैरपि मुनिश्रेष्ठैश्च सिद्धैरपि ।
त्वत्पूजां करवाणि शूलविलसत्पाणे क्षणं वा रणे
निर्वाणे मरणेऽपि वा सकरुण प्राणप्रयाणेऽपि वा ॥ २४४ ॥

प्रीत्या सन्ततमन्तकान्तकपदाम्भोजार्चनात्यादराः
ते शूराः सुरपूजितांघ्रिकमलाः कल्याणलीलालयाः ।

तत्सर्वं कमलाविलासनिलयापाराङ्गनात्युन्नता-
नन्तोन्मत्तमतङ्गजावृतपुरद्वारा नराधीश्वर ॥ २४५ ॥

यल्लीलालव एव सृष्टिकरणोपायोऽनपायः प्रिये
देवानामपि तं भजामि सकृदप्याराधितो यः शिवः ।
इत्युक्तः सकलेप्सितान्यपि मुहुर्दातुं ततः शङ्करं
न त्यक्ष्यामि समर्चयामि मनसा बिल्वैः प्रसूनैरपि ॥ २४६ ॥

यल्लिङ्गार्चनतो भवन्ति बहवः पुत्राश्च पौत्रादयो वृद्धिं सन्ततिरेति सम्पदपि सा वृद्धिं प्रयात्यन्ततः ।
लिङ्गाराधनमेव मे सुखदमस्त्यन्यद् विहायादरात् कर्तव्यं करुणाकरः स भगवानिष्टार्थदस्तेन मे ॥
इति स्तुत्वा महादेवं प्रणम्य च पुनः पुनः । पुनः पूजा यथाकामं कर्तव्या कुसुमादिभिः ॥
मत्कथाश्रवणेनैव रात्रौ जागरणं शिवे । कर्तव्यमतियत्नेन तूर्यादिभिरपि प्रिये ॥ २४९ ॥
कार्यं नाट्यं च नारीभिः सिकतालिङ्गसन्निधौ । दिव्याभरणयुक्ताभिः भूपिताभिश्च भूतिभिः ॥
त्रिपुण्ड्ररेखाविलसन्निटिलामलकान्तिभिः । रुद्राक्षकङ्कणाभिश्च रात्रौ जागरणं निशि ॥ २५१ ॥
अरुणोदयवेलायां पुनः पूजां विधाय मे । सूर्योदयोत्तरं पश्चात् विधेयं पूजनं मम ॥ २५२ ॥
प्रातः शुक्लतिलैः स्नात्वा मध्याह्ने गणनायकम् । दूर्वाङ्कुरादिभिः सम्यक् नैवेद्यैश्चैव पूजयेत् ॥
तत्रापि प्रतिमां कृत्वा हेमरूपां मनोरमाम् । पूजयेद्बिल्वपत्राद्यैः सिकतालिङ्गसन्निधौ ॥ २५४ ॥
पश्चादुपायनं दद्यात्फलापूपादिभिर्युतम् । शैवेभ्यः सकुटुम्बेभ्यो दक्षिणादानपूर्वकम् ॥ २५५ ॥
दक्षिणा लक्षमात्रं स्यात् सुवर्णानां वरानने । सा यथाविभवं वा स्यात् वित्तशाठ्यं न कारयेत् ॥
सौवर्णं राजतं वा स्यात् वैणवं शूर्पमुत्तमम् । तत् फलैः पूरितं कार्यं अपूपाद्यैर्विशेषतः ॥ २५७ ॥
दुकूलवेष्टितं कार्यं स्वर्णलिङ्गसमन्वितम् । [1]भूमिदेवाय दातव्यं शिवध्यानपुरःसरम् ॥ २५८ ॥
उपायनं गृहाणेदमम्बिकारमण प्रभो । अभीप्सितार्थद स्वामिन् शोभनानि प्रयच्छ मे ॥ २५९ ॥
इति मन्त्रं समुच्चार्य दत्वोपायनमादरात् । भोजनीयाः प्रयत्नेन शाम्भवाः स्वादुभोजनैः ॥ २६० ॥
एवं करोति या नारी व्रतमेतद्वरानने । सा पुत्रपौत्रसंयुक्ता सर्वसंपद्युता भवेत् ॥ २६१ ॥
सा न प्राप्नोति वैधव्यं दुःखं प्राप्नोति सर्वथा । कीर्तियुक्ता भवेन्नित्यमपकीर्तिविवर्जिता ॥ २६२ ॥
इदं व्रतोत्तमं देवि सर्वसम्पत्करं परम् । इतोपि नाधिकं शास्त्रे व्रतं दृष्टं मया शिवे ॥ २६३ ॥

---

1 तच्छाम्भवाय C

कपिलः —

इतीशवचनं श्रुत्वा गौरी शङ्करवल्लभा । सन्तोषं परमं प्राप व्रतमाहात्म्यकीर्तनात् ॥ २६४ ॥
सोमवासरसंयुक्ता तृतीया श्वः स्वभावतः । अयं खलु महायोगः शिवयोगः शिवप्रदः ॥ २६५ ॥
अतस्त्वयापि कर्तव्यमिन्दिरे व्रतमुत्तमम् । शांभवं शुभदं मन्ये व्रतमेतद्व्रतोत्तमम् ॥ २६६ ॥
अयं भाद्रपदो मासस्तृतीयापि च शोभने । हस्तनक्षत्रसंयुक्ता शुक्लपक्षः शुभावहः ॥ २६७ ॥
तव भाग्यमिदं प्रायः संपन्नं कमलेऽधुना । शिवातृतीया संप्राप्ता सेयं व्रततिथिः खलु ॥ २६८ ॥
सिद्धैव सर्वा सामग्री तया पूजय शङ्करम् । अत्रैवातिप्रयत्नेन कपिलेशस्य सन्निधौ ॥ २६९ ॥
गरुडः शिवभक्तोऽयमानयिष्यति साधनम् । सर्वामराङ्गनायुक्तं कुरु शङ्करपूजनम् ॥ २७० ॥
विसंज्ञो मूर्छितो वापि मृतो वा दैवयोगतः । आयास्यत्येव ते भर्ता तद्व्रताचरणात् ध्रुवम् ॥
[[1] संशयोऽत्र न कर्तव्यः कमले विमले त्वया । शाम्भवं व्रतमेवेदं मृतसञ्जीवनं खलु ॥ २७२ ॥
सर्वलोकोपकाराय शिवायै गिरिशोदितम् । अवश्यमेव कर्तव्यं वैधव्यविनिवारकम् ] ॥ २७३ ॥
वैधव्याशनिरूपमेव कमले शैवव्रतं सादरं श्वः कर्तव्यमनेन ते पतिरिहायास्यत्यवश्यं सुरैः ।
सत्यं पश्य मदीयमेव वचनं विश्वस्य सत्यं मया प्रोक्तं शङ्करपादयोरपि शपाम्यत्रार्थवादोऽपि न ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । शृणु पद्मे प्रवक्ष्यामि सर्वदुःखविनाशकम् ॥ २७५ ॥
पुरा त्रिपुरसंहारं कर्तुमभ्युद्यतः शिवः । प्राह गौरीं प्रयत्नेन समालिङ्ग्य पुनः पुनः ॥ २७६ ॥

शङ्करः —

त्रिपुरासुर इत्येको दैत्यानामधिपः शुभे । स सुरासुरनाशाय प्रवृत्तः सुमहान् खलु ॥ २७७ ॥
तच्छरीरं गिरिसुते कोटिपर्वतसन्निभम् । ज्वलद्वह्निगणाकारमाकाशे चरति स्वयम् ॥ २७८ ॥
पुराणि तस्य विमले त्रीण्यम्बरचराण्यपि । तेषु तेषामवस्थानमसुराणां दुरात्मनाम् ॥ २७९ ॥
तारक्षो मकराक्षश्च विद्युन्माली च ते त्रयः । ते जगत्त्रयसंहारं कर्तुमद्य समुद्यताः ॥ २८० ॥
नारायणादयः सर्वे तद्भीत्यैव दिगन्तरम् । प्राप्ताः कुटुम्बसहिताः पुत्रैरपि समन्विताः ॥ २८१ ॥
तेषां प्रतिभटो लोके न कोऽप्यस्ति वरानने । तत्संहारोऽपि कर्तव्यः प्रयत्नैर्बहुभिर्मया ॥ २८२ ॥
त्वया सह न गन्तव्यं विलम्बोऽपि भविष्यति । युद्धप्रवेशे नारीणां उचितं गमनं तु न ॥ २८३ ॥
संभावितः प्रयासोऽपि तत्र युद्धे महासुरैः । कुमारो गणनाथश्च रक्षणीयस्त्वया शिवे ॥ २८४ ॥

---

1 इदं श्लोकद्वयं C कोशेऽधिकम् ।

भाद्रशुक्लतृतीयायां यत्सौमङ्गल्यदं व्रतम् । तत्कर्तव्यं त्वया गौरि यन्मयोक्तं पुरा मुदा ॥ २८५ ॥
वैधव्यनाशकत्वेन तद्व्रतं परिकीर्तितम् । तदवश्यं त्वया कार्यं प्रमादं मा कुरु प्रिये ॥ २८६ ॥
पुरानेनासुरेणाशु मुनयो निहताः प्रिये । ऋषिपत्न्यस्तदा सर्वाः प्रमादव्याकुला अपि ॥ २८७ ॥
दृष्ट्वा तास्तत्र संप्राप्तो नन्दिकेशो गणान्वितः । उवाच तासां दुःखानि निवारयितुमादरात् ॥

नन्दिकेश्वरः —

अरुन्धतीमुखाः सर्वाः किमेवं दुःखसागरे । निमग्नाः शङ्करध्यानं कर्तव्यमतियत्नतः ॥ २८९ ॥
किंच वैधव्यनाशाय तृतीयाव्रतमीरितम् । तत्कर्तव्यं प्रयत्नेन सौमङ्गल्यं भविष्यति ॥ २९० ॥
मृतो यमान्तिकं नीतोऽप्यायात्येव व्रते कृते । तस्मादवश्यं कर्तव्यमवश्यं पापनाशनम् ॥ २९१ ॥
इति तद्वचनं श्रुत्वा सर्वाः संहृष्टमानसाः । यथोक्तविधिना चक्रुस्तृतीयाया व्रतं शिवे ॥ २९२ ॥
समागताश्च मुनयस्तद्व्रताचरणोत्तरम् । तान् दृष्ट्वा विस्मिताः सर्वाः पुलकाञ्चितविग्रहाः ॥ २९३ ॥
आनन्दाश्रुसमाकीर्णाः प्रणेमुस्तत्पदाम्बुजम् । तेऽपि प्रहृष्टा मुनयः ताः प्रोचुः प्रीतिपूर्वकम् ॥

मुनयः —

किमुत्तमं व्रतं चीर्णं अस्माभिः समुपागतम् । सर्वैर्दुःखविनिर्मुक्तैरसुरोदरसंस्थितैः ॥ २९५ ॥
कलत्रकृत्यमधुना कृतमेव महत्तरम् । एतादृशकलत्राणां लाभः पुण्यैर्महत्तरैः ॥ २९६ ॥
कथं वा तद्व्रतं चीर्णं तत्र केन महाव्रतम् । कानि वा साधनानीति वक्तव्यमतिसादरम् ॥
ततस्तद्वचनं श्रुत्वा ऋषिपत्न्यः प्रणम्य तान् । नन्दिकेशोक्तमित्याहुर्व्रतं शाम्भवमुत्तमम् ॥ २९८ ॥
ततः परं प्रहृष्टास्ते गताः स्वास्वाश्रमं प्रति । तदाप्रभृति तैः सैवः तद्व्रताचरणं कृतम् ॥ २९९ ॥
तेनैव सुखमासाद्य स्थिताः सर्वे निरन्तरम् । ततः कुरु प्रयत्नेव गिरिशे तद्व्रतं मुदा ॥ ३०० ॥
इत्युक्त्वा स महादेवो ययौ युद्धाय सादरम् । तया च तद्व्रतं चीर्णं शिवयाऽप्यब्धिकन्यके ॥
ततस्त्रिपुरसंहारं कृत्वा गौरीमनोहरः । समागतो गिरिजया सह रेमे महेश्वरः ॥ ३०२ ॥
अंबिका तं महादेवं दृष्ट्वा त्रिपुरनाशकम् । तद्व्रतस्यैव महिमा भूयानिति शशंस सा ॥ ३०३
तस्मात् त्वयापि यत्नेन कर्तव्यं तद्व्रतं मुदा । अविश्वासो न कर्तव्यो दुःखं त्यज विशेषतः ॥
इति तद्वचनं श्रुत्वा सुरदारास्ततः परम् । चक्रुस्तद्व्रतमत्यन्तं सन्तुष्टहृदया मुदा ॥ ३०५ ॥
गरुडेन समानीता सामग्री विधिचोदिता । तया सम्यग्व्रतं चीर्णं कपिलेशस्य सन्निधौ ॥ ३०६ ॥
ततः परं मुनिवरं दृष्ट्वा कपिलनामकम् । प्राह नारायणसती शच्यादिकसमन्विता ॥ ३०७ ॥

लक्ष्मीः —

व्रतं चीर्णं प्रयत्नेन विष्णुक्तैरेव साधनैः । नाङ्गलोपोऽपि संवृत्तो विभवोऽपि स्थितस्तथा ॥
अद्यापि नागता एव देवास्तेऽपि मुनीश्वर । अतः परं व्रते तस्मिन् विश्वासोऽपि कथं वद ॥३०९॥
व्यङ्गं चेत् क्रियते कर्म तदा न फलसंभवः । साङ्गेऽपि तत्फलाभावः कथं वा वद सत्वरम् ॥
नार्थवादोऽपि तत्रेति शपथोऽपि कृतस्त्वया । अतः परं किं विधेयमिति चिन्तासमाकुला ॥
ततः परमुवाचेत्थं कमलां कपिलाभिधः । मुनिस्तत्त्वविदां श्रेष्ठो वरिष्ठः शाङ्करेष्वपि ॥ ३१२ ॥
इन्दिरे सुरसंवीतः समायास्यति ते पतिः । विषादो नैव कर्तव्यो विश्वासं कुरु तद्व्रते ॥ ३१३ ॥
तत्तादृशं व्रतं नैव येनेष्टं न फलं भवेत् । तस्य व्रतस्य महिमा द्रष्टव्यश्च त्वयाऽधुना ॥ ३१४ ॥
एतस्मिन्नन्तरे काले दुन्दुभिध्वनिरुत्थितः । श्रुतस्तया कमलया सुरदारैश्च तैरपि ॥ ३१५ ॥
ततः परं प्रहृष्टा सा विलोक्य गरुडं मुहुः । कुत्योऽयं ध्वनिरित्याह कमला विमलानना ॥
सोऽपि श्रुत्वा ध्वनिं तस्याः तच्छ्रुत्वा वचनं मुदा । तामाह प्रणतो भक्त्या दुन्दुभिध्वनिरित्यपि ॥
ततः स नत्वा कमलां कपिलं कपिलेश्वरम् । तद्ध्वनाभिमुखो भूत्वा गरुडः प्रययौ तदा ॥ ३१८ ॥
ततो दूराद्विनिश्चित्य सुरागमनमादरात् । आगतानमरानाह लक्ष्मीं कुशलपूर्वकम् ॥ ३१९ ॥
ततः प्रसन्नवदना कमला कपिलेश्वरम् । नत्वा तं कपिलं प्राह कृताञ्जलिपुटा तदा ॥ ३२० ॥

लक्ष्मीः —

व्रतोत्तमोपदेशेन धन्यस्त्वं मुनिपुङ्गव । अविश्वासलयो जातो विश्वासो मे प्रवर्धते ॥ ३२१ ॥
देवाः समागताः सर्वे जीविताः शिवपूजया । धन्यं व्रतमिदं धन्यं धन्यं धन्यं व्रतोत्तमम् ॥

न जाने न जाने न जाने न जाने शिवान्यं न जाने न जाने न जाने ।
शिवाराधनेनैव सौख्यप्रवृद्धिः शिवाराधनेनैव संपत्प्रवृद्धिः ॥ ३२३ ॥
शिवाराधनेनैव देवाः सजीवाः शिवाराधनं तत्र सञ्जीवनी च ।
व्रतस्यास्य माहात्म्यमत्यद्भुतं च प्रकृष्टं फलं जातमेकं कथं वा ॥ ३२४ ॥
व्रतानामिदं तावदत्युत्तमं हि व्रतं श्रेष्ठमेतत् कृतं दैवयोगात् ।
मृता येन देवाः पुनः सर्व एव कथं वा प्रजाताः कथं वाऽस्य शक्तिः ॥ ३२५ ॥
अहो न जानन्ति विमूढचित्ताः शिवप्रभावं शिवपूजनस्य ।
सामर्थ्यमेवं मृतजीवनाय व्रतं च तेनोक्तमिदं प्रकृष्टम् ॥ ३२६ ॥

इत्यानन्दवचोवीचिसुधापानरता तदा । कमलापि तदा देवाः सर्वे ते समुपागताः ॥ ३२७ ॥

अथागत्य सुराः सर्वे नत्वा तं कपिलेश्वरम् । पुष्पाद्यैः पूजयामासुः जीविताः स्म त्वयेत्यपि ॥

ततः परं मुनिं गत्वा कपिलं भस्मभूषणम् । रुद्राक्षभूषणं शैवं प्राहुः शाम्भवसंयुतम् ॥ ३२९ ॥

देवाः —

शाम्भवाय नमस्तुभ्यं शम्भुपूजापराय च । भूतिभूषितदेहाय रुद्राक्षाभरणाय च ॥ ३३० ॥

तत्वज्ञस्त्वादृशो लोके न दृष्टो न श्रुतोऽथवा । व्रतमुक्तं त्वया शैवमस्मज्जीवनसाधनम् ॥ ३३१ ॥

त्वदुक्तं तद्व्रतं चीर्णं सुरदारैर्विशेषतः । तेनैव जीवनं जातं आगतं च मुदाऽधुना ॥ ३३२ ॥

दीर्घनिद्राप्रविष्टानां जीवनाय समीरितम् । शाम्भवं व्रतमेतावत् व्रतानामुत्तमं व्रतम् ॥ ३३३ ॥

शेषेण तावदस्मभ्यमुक्तमेतद् व्रतं कृतम् । सुरदारैस्त्वया प्रोक्तमिति पीयूषसन्निभम् ॥ ३३४ ॥

अकस्मादेतदुत्थानं यदा समभवत् तदा । किं कृतं व्रतमित्येव दारैरिति विचारितम् ॥ ३३५ ॥

मृत्युञ्जयव्रतेनैव मृत्युं जयति सर्वथा । नान्यथेत्यपि निर्णीतं तत् तथैवाभवन्मुने ॥ ३३६ ॥

अतः परं जीवनं तु जातमेव शिवाज्ञया । कथञ्च स्वालयप्राप्तिर्भविष्यति वदाधुना ॥ ३३७ ॥

इति तद्वचनं श्रुत्वा कपिलो मुनिपुङ्गवः । प्राह गंभीरया वाचा वाणीपतिमुखान् सुरान् ॥ ३३८ ॥

कपिलः —

शिवाराधनसामर्थ्यं न ज्ञातं निगमैरपि । अतः कथं तदन्येन ज्ञेयं भवति तत्वतः ॥ ३३९ ॥

महादेवः कृपासिन्धुर्यदा जीवनमिच्छति । सुराणामसुराणां च तदा भवति जीवनम् ॥ ३४० ॥

उपायमपि वक्ष्यामि दैत्यानां विजये सुराः । स्वदारसहितास्तावत् तिष्ठन्तु सुखिनोऽधुना ॥ ३४१ ॥

इति तद्वचनं श्रुत्वा पूजयित्वा महेश्वरम् । नत्वा तं मुनिशार्दूलं स्वकलत्रैः समन्विताः ॥ ३४२ ॥

स्वस्वाङ्गनाङ्गसङ्गेन तत्तदालिङ्गनैरपि । सुधापानैश्च सन्तुष्टाः सर्वे नारायणादयः ॥ ३४३ ॥

ततः सन्तुष्टहृदयाः कृतकृत्याश्च ते सुराः । नत्वा तं कपिलं प्राहुः कृताञ्जलिपुटाः पुनः ॥ ३४४ ॥

देवाः —

प्रचण्डनगरापारज्वालामालासमाकुलाः । मुने वयं सुराः सर्वे जीवनं च गतं खलु ॥ ३४५ ॥

शिवव्रतप्रभावेन पुनर्जातं च जीवनम् । अतः परं कथं तस्य बलहानिर्भविष्यति ॥ ३४६ ॥

मुनिः —

सुराः शृण्वन्तु मद्वाक्यं प्रचण्डः प्रबलो महान् । ततः परं जयस्तस्य कथं संभावितो वद ॥

अपारं तस्य तत्सैन्यं सोपि शूरवरः परः। शाङ्कराग्रेसरस्तस्य कदापि न पराजयः ॥ ३४८ ॥

स्वप्नेऽपि शाङ्करः साकं शङ्कराराधनप्रियः। अत एव बलं तस्य वर्धते च प्रतिक्षणम् ॥ ३४९ ॥

अत्युत्कृष्टशिवार्चनस्य फलमित्येवं मया निश्चितं
तत्सामर्थ्यमखण्डितं खलु सदा संपत्समृद्धोऽपि सः।
तत् को वा भुवनत्रयेपि वद मे जेतुं समर्थः सुरः
गौरीकान्तपदारविन्दभजनासक्तः सदा [1]रक्षा माम् ॥ ३५० ॥

प्रचण्डऋषिशार्दूलः स तावत् ककुलाभिधः। पूर्वपूर्वभवे तेन शङ्कराराधनं कृतम् ॥ ३५१ ॥

तेनार्चितानि लिङ्गानि प्रत्यहं कोटिशः सुराः। अमलैः कमलैः पुष्पैः नवबिल्वदलैरपि ॥ ३५२ ॥

उत्फुल्लापारकनकप्रसूनैरपि पूजितः। द्रोणपुष्पैरपामार्गैः शिवस्तेन समर्चितः ॥ ३५३ ॥

लिङ्गानि स्थापितान्येव कोटिशस्तेन सादरम्। सुवर्णमन्दिरेष्वेव पूजितान्येव कोटिशः ॥ ३५४ ॥

स तु शाम्भवविद्यायां प्रवीणो निपुणो बली। शाङ्करा एव तद्दारास्तद्भृत्या अपि कोटिशः ॥

तं तादृशं शिवरतं दृष्ट्वा कम्पमुपागताः। भवन्तः पूर्वममराः तद्विघ्नाचरणोद्यताः ॥ ३५६ ॥

भवद्भिर्यतिरूपेण गतं पूर्वं तदाश्रमम्। अशैवरूपमासाद्य तदा तत्कोपवर्धकम् ॥ ३५७ ॥

तदा प्राह स दैत्येन्द्रो दृष्ट्वा देवानशाम्भवान्। हन्तव्या एव सर्वेऽपि सुरा इति पुनः पुनः ॥

अशाम्भवेभ्योऽपि महेश्वरेण दत्तं किमैश्वर्यमतिप्रकृष्टम्।
एते वधार्हा इति मन्महे हि स एव तावत् प्रबलो महात्मा ॥ ३५९ ॥

ततः परं स तेनैव शरीरेणातिदारुणः। ववृधे सुरसंहारं कर्तुमेवातिकोपनः ॥ ३६० ॥

तस्याभवत् तथा रूपं शिवपूजाप्रसादतः। यद्द्रष्टुमपि शक्यं न सर्वथा भवदादिभिः ॥ ३६१ ॥

स जन्मना न दैत्योऽपि मुनिरेव शिवार्चकः। दैत्यकर्मकरत्वेन दैत्य इत्यभिधीयते ॥ ३६२ ॥

गतः शिवाराधनकाल एव भवद्भिरित्याकुलमानसोऽभूत्।
अशैवबुद्ध्यैव भवत्सविघ्नो वृतोऽपि विश्वेशपदार्चनेषु ॥ ३६३ ॥

अतस्तेनैव कोपेन तपोऽपि समभून्महत्। तेनाग्निकल्प एवासीत् स एव मुनिपुङ्गवः ॥ ३६४ ॥

अतः परमयं ज्ञातो भवतां तु पराभवः। तेन शान्तः स कोपोऽपि स तु तावन्महामुनिः ॥

अधुना शिवपूजायां प्रवृत्तः स्वसुतैः परम्। सकलत्रः ससैन्यश्च यास्यत्येव शिवं प्रभुम् ॥ ३६६ ॥

---

1 राक्षसाः C

तस्य तावत् कलत्राणि शिवविद्यात्मकानि हि । शिवविद्यामूर्तिपङ्क्तिद्वाराकारमुपाश्रिता ॥ ३६७ ॥
तत्सैन्यं तस्य शिष्यास्ते हारा वीराः प्रकीर्तिताः । तस्य तन्नगरं तावदाश्रमस्तस्य पावनः ॥
आश्रमास्तरणान्येव कुशानां केवलं खलु । अग्निप्राकाररूपाणि जातानि विमलान्यपि ॥ ३६९ ॥
अद्य सायं महादेवं प्रयास्यति महोत्सवैः । कैलासनिलयं प्राप्य स्थास्यत्येव गणैः सह ॥ ३७० ॥
पराभवार्थं भवतां तेन रूपं धृतं तथा । कृते पराभवे तस्य कोपः शान्तोऽपि सर्वथा ॥ ३७१ ॥
कैलासभिन्नभवनेष्वशेषेष्वपि सर्वथा । तृणकल्पमतिस्तस्य स यतः शाङ्करः परः ॥ ३७२ ॥
एतस्मिन्नन्तरे काले संभूताप्यशरीरिवाक् । प्रचण्डः शङ्करं प्राप(?) समित्रमिति सा श्रुता ॥
ततः सन्तोषमापन्नाः सर्वे नारायणादयः । कपिलेश्वरमभ्यर्च्य नत्वा प्राहुर्मुनीश्वरम् ॥ ३७४ ॥

सुराः —

व्रतप्रसादात् परमाप्तजीवाः सर्वे वयं त्वत्कृपयाऽधुना नः ।
स्वस्यालये किं गमनं न युक्तमित्यूचुरुच्चैः स्वकलत्रयुक्ताः ॥ ३७५ ॥

ततस्तानाह स मुनिस्तथास्त्विति ततः परम् । प्रययुस्ते सुराः सर्वे सकुटुम्बाः सुतैः सह ॥ ३७६ ॥
गत्वा ते स्वस्वनिलयं यथापूर्वमवस्थिताः । परमानन्दसंपन्नाः स्वस्वदारैः समन्विताः ॥ ३७७ ॥

शिवप्रसादेन निजालयेषु स्थित्वा शिवाराधनमादरेण ।
कृत्वा शिवाराधनसाधनानि संपाद्य नित्यं सुखमापुरार्ये ॥ ३७८ ॥

किं किं फलं वा न शिवार्चनेन भविष्यतीति प्रवदामि बाले ।
शिवव्रतस्यास्य फलं प्रकृष्टं दृष्टं मया देवगणैश्च दृष्टम् ॥ ३७९ ॥

कर्ता शङ्कर एव सर्वजगतां देवाधिदेवो भवो भर्तापीति सुनिश्चितो मुनिवरैर्देवैश्च वेदैरपि ।
दातापि त्रिपुरान्तको गिरिकुलश्रेष्ठात्मजाकामुकः संहर्तापि सुरासुरानतशिरोरत्नस्फुरत्पादुकः ॥

जानन्त्येव न वेदराशिविभवास्तद्वैभवं शांभवं
तं को वा वद विस्तरेण गदितुं शक्नोति शक्रोऽपि वा ।
कोवा तिष्ठति भूतलेऽपि सुतरां स्वर्गेऽपि सत्येऽपि वा
वैकुण्ठेऽपि सुरासुरार्चितपदाम्भोजः स मृत्युञ्जयः ॥ ३८१ ॥

यत्सामर्थ्यमपारवेदनिकरैर्न ज्ञायते सर्वथा
यत्पादाम्बुजपूजया जडमतिर्वागीश्वरीवल्लभः ।

स्याल्लक्ष्मीरमणः शचीपतिरपि स्यादिन्दुरग्निस्तथा
भानुश्चेति तमीश्वरं गिरिसुताकान्तं भजे सन्ततम् ॥ ३८२ ॥

यं भक्तामरभूरुहं सुरकुलाराध्यं च सिद्धार्चितं गन्धर्वादिसमर्चितं च परमं प्राहुस्तमेकं शिवम् ।
ध्यात्वा चित्तमनन्तपातककुलापाराटवीकोटरापाराग्नि सुखरूपमेत्य सततं तच्चिन्तनाभ्युद्धृतम् ॥

तं वन्दे मुहुरादरेण गिरिजावक्षोजकाश्मीरजापारश्रीरसरञ्जितं प्रविलसत्कस्तूरिकाचित्रितम् ।
तत्पाटीररसाभिरूषितमपि व्याप्तं दुकूलोत्तमैः हारापारविराजमानवपुषं जोषं प्रदोषेष्वपि ॥ ३८४ ॥

यल्लिङ्गादभवत् समस्तमसकृद्भूमण्डलं कुण्डली
यत्कर्णोत्तमकुण्डलं मणिगणश्रीमण्डलालंकृतम् ।
तं हारोत्तममानसाम्बुजवसं श्रीकर्णिकासंश्रितं
श्रीकान्तार्चितपादुकं भज मनः शैलात्मजाकामुकम् ॥ ३८५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे सत्यव्रतशुकवाणीसंवादे प्रचण्डदैत्येतिहासे देवासुरयुवतिवैधव्यपरिहारशिवव्रतकथनं नाम चत्वारिंशोऽध्यायः ॥

—:×:—

## अथ एकचत्वारिंशोऽध्यायः ।

रत्नाकरः —

इति तद्वचनं श्रुत्वा शुकवाणी विचक्षणा । मुहुः प्रणम्य भर्तारं प्राह सत्यव्रतं पुनः ॥ १ ॥

शुकवाणी —

भगवन् गिरिशं प्राप गिरिराजसुता कथम् । आविर्भूता कथमुमा श्रीगिरीश्वरमन्दिरे ॥ २ ॥
तेन वा किं तपस्तप्तं येन गौरीविलोकनम् । तद्बाल्यलीलाकलनं जातं पीयूषसन्निभम् ॥ ३ ॥
इदं सर्वं विशेषेण वद कारुणिकोत्तम । इति तद्वचनं श्रुत्वा प्राह सत्यव्रतः सतीम् ॥ ४ ॥

सत्यव्रतः —

पुरा हिमाचलः सृष्टः शङ्करेण कुलाचलः । भूधारणार्थमेतस्य सृष्टिरासीद्वरानने ॥ ५ ॥
धृतस्तेन धराभारः सुमेरुप्रमुखैः सह । तेन तावद्गतं पूर्वमतलं प्रति निर्मलम् ॥ ६ ॥
तत्रैकस्याप्यसंचारः केवलं स स्वयं परम् । शिवप्रसादलेशेन कूर्माधारतया स्थितः ॥ ७ ॥
तन्मूलसानुनिलयः कूर्मस्तत्सानुसङ्गमात् । न भूभारभयं प्राप तत्सङ्गः खलु तादृशः ॥ ८ ॥

महावायुसमाक्रान्तमतलं तत्र निर्मितम् । लिङ्गमेकं महेशेन निर्मितं रत्नमन्दिरम् ॥ ९ ॥

तस्मिन्नेव महादेवो मन्दिरे सुन्दरे स्थितः । गौर्या सह विलासेन तदेकान्तस्थलं यतः ॥ १० ॥

तस्मिन् लिङ्गे स गौरीशं करोति शिवपूजनम् । कमलैरुत्पलैः फुल्लैः कोमलैर्बिल्वपल्लवैः ॥ ११ ॥

दूर्वाङ्कुरैरभिनवैः कनकैर्दमनैरपि । चम्पकैः केतकीपुष्पैर्जपापुष्पैश्च कोटिशः ॥ १२ ॥

तत्र सायं महादेवं ददर्श गिरिजापतिम् । नित्योत्सवेन सन्तुष्टमम्बिकावीक्षणप्रियम् ॥ १३ ॥

यदा तेन शिवा दृष्टा तदा सा शिववल्लभा । क्रीडारता बालिकेव यौवनेनापि संयुता ॥ १४ ॥

युवतीत्वेन दृष्टा सा यदा शङ्करवल्लभा । तदा पर्वतमालोक्य शङ्करः प्राह तं गिरिम् ॥ १५ ॥

तेनार्चितोऽतिसन्तुष्टस्तस्मिन् लिङ्गे मनोहरे । किं त्वया दृश्यते मूर्तिः कापि सा शोभनेत्यपि ॥

हिमवान् —

भगवन् दृश्यते लीला कापि बालोचिता मया । कानु सद्यः समुत्पन्ना कन्यकेव विराजते ॥

अपूर्वमिदमत्रेदं जननी नात्र दृश्यते । स्तन्यपानोन्मुखी सेयं क्व वा तज्जननी शिव ॥ १८ ॥

श्रीसदाशिवः —

शैलेश्वर प्रसन्नोऽस्मि सद्यस्त्वत्कृतपूजया । अपूजितमिदं लिङ्गं पूज्यते सादरं त्वया ॥ १९ ॥

नात्रामराणां सञ्चारः किन्नराणां विशेषतः । गन्धर्वाणां च सञ्चारः सिद्धादीनां च सर्वथा ॥

अत एव परं लिङ्गं इदं संपूज्यते मया । तवाप्येतत् किलाधारं धराधारत्वसाधनम् ॥ २१ ॥

इदं दृष्टं त्वया रूपमपारतपसा गिरे । धन्योऽसि कृतकृत्योऽसि मत्पूजाफलमीदृशम् ॥ २२ ॥

इयं बाला पालनीया लालनीयापि सादरम् । मन्दिरं प्रति नेयापि विनयाभिनयैः परम् ॥ २३ ॥

एतदालोकनायापि यावदागमनं मया । तावत्पालनमेतस्याः कर्तव्यमतियत्नतः ॥ २४ ॥

इत्युक्त्वान्तर्दधे साम्बस्तस्मिन् लिङ्गे मनोहरे । स गौर्याः कामरूपाणि स्मरंस्तद्वैभवार्णवम् ॥

ततः परं स शैलेन्द्रो विस्मयं परमं गतः । कथमेतत्पालनं स्यादिति चिन्ताकुलस्तदा ॥ २६ ॥

ततः सस्मार मेनां तां पातुमेनां सुतामिव । साप्यागता तदा मेना तां दृष्ट्वा विस्मयं ययौ ॥

मेना —

केयं बालातिविमला बाला विद्युल्लता इव । केन भाग्येन दृष्टेयमपूर्वा मूर्तिरीदृशी ॥ २८ ॥

एतत्सन्दर्शनादेव ममानन्दः प्रवर्धते । आनन्दमूर्तिरेवेयं आनन्दं दातुमिच्छति ॥ २९ ॥

इति तद्वचनं श्रुत्वा प्राह मेनां स तत्पतिः । विशिष्य पूर्ववृत्तान्तं स्मृत्वा श्रुत्वा यथाक्रमम् ॥

ततस्तदुक्तमाकर्ण्य सापि मेनातिविस्मिता । शिवसङ्कल्पजातेयं शिवा नूनं शिवप्रदा ॥ ३१ ॥

इत्युक्त्वा सातिसन्तोषैर्दुन्दुभिध्वनिपूर्वकम् । तामादाय ययौ मन्दं सुन्दरं निजमन्दिरम् ॥

यदा प्रविष्टा गिरिराजकान्ता स्वराजधानीमुरगेन्द्रनार्यः ।
तदैव पद्मादिसुराङ्गनाश्च समागतास्तत्पदसेवनाय ॥ ३३ ॥

देवदुन्दुभिनिर्घोषतूर्यध्वनिविराजितम् । तदा तन्मन्दिरं जातं सुरनारीसमावृतम् ॥ ३४ ॥

अन्तकान्तकमनोहरकान्ता सेयमित्यभिनवैरुपचारैः ।
तामपारसुरकिन्नरदाराः चामरैरभिसिषेवुरपारैः ॥ ३५ ॥

सुरदारानपारांस्तान् तदाराधनतत्परान् । विलोक्य परमं प्राप सन्तोषं गिरिनायकः ॥ ३६ ॥

सुराङ्गनानां च सुमङ्गलानि गानादिडोलात्मकपूर्वकानि ।
तस्याः प्रदत्तानि सुमङ्गले त्वां संप्राप्तदीप्ताखिलमङ्गलेति ॥ ३७ ॥

श्रीसर्वमङ्गले डोला तवेयमुडुमण्डलैः । अलंकृता पश्य पश्येत्यान्दोलनपराः सुराः ॥ ३८ ॥

हिमवानपि तान् दृष्ट्वा स्वदारसहितान् सुरान् । सन्तोषं परमं प्राप मङ्गलं जातमित्यपि ॥ ३९ ॥

तदाप्रभृति ते दाराः सुराणां शैलमन्दिरे । तत्सेवार्थं निवासं च चक्रुरानन्दसंवृताः ॥ ४० ॥

सा बालिका शारदशुक्लपक्षनवेन्दुरेखेव सुखाय तेषाम् ।
शनैः शनैर्वृद्धिमवाप सापि मनोज्ञरूपापि कृपास्वरूपा ॥ ४१ ॥

सुरदारकृतोपचारमारादनिवार्यैव विनोददानशीला ।
महिलेति शिवस्य तैरुदारैरनुवारं परिसेवितापि बाला ॥ ४२ ॥

रूपयौवनसंपन्नां मेनां मेना मुहुर्मुहुः । विलोक्य परमानन्दं प्राप दुष्प्रापमन्वहम् ॥ ४३ ॥

ततः परं किन्नरसिद्धयक्षगन्धर्वनारीपरिसेविता सा ।
चचार शैलेन्द्रगृहे मनोज्ञा विद्युल्लतेवामितमूर्तिरूपा ॥ ४४ ॥

श्रुत्वातो मूर्तिसौन्दर्यवाहिनी सेयमित्यपि । मेना वचनधाराभिरानन्दं प्राप शैलराट् ॥ ४५ ॥

ततः परं परिणयः कथं भावीति चिन्तया । मेनया सह शैलेन्द्रो विचारं च चकार सः ॥ ४६ ॥

शैलेन्द्रः —

त्वदुक्तिभिस्तावदियं ममापि ज्ञातैव संपूर्णवयःप्रमाणा ।
अतः परं किं समयोऽपि वृत्तः पाणिग्रहस्यापि शुभग्रहेषु ॥ ४७ ॥

को वा भविष्यति पतिर्भाग्यवानमितप्रभः । न जाने स पतिः प्रायः प्रियमेतादृशं वसु ॥ ४८ ॥

विद्युल्लतानामपि कोटयो ये ते तत्स्वरूपस्मरणेऽपि दूरम् ।
प्रायः प्रयान्त्येव न लज्जया किं कस्तत्समानः पतिरस्ति लोके ॥ ४९ ॥

सा सर्वदेवासुरदारवन्द्या प्रायः [1] शिवानीति मतिर्ममापि ।
जाता विवाहो भविता कथं वा क्वाहं शिवः कामरवन्द्यपादः ॥ ५० ॥

इत्येवं चिन्तया नित्यं गिरिराहारवर्जितः । विचारसागरे मग्नः पुनः पुनरुदारधीः ॥ ५१ ॥

या सर्वमङ्गला सापि शङ्करार्धाङ्गभागिनी । स्वस्वरूपमनुप्राप्य चचार गिरिमन्दिरे ॥ ५२ ॥

तेन स्वरूपेण पुनर्महेशं प्राप्तं भवानी शिवपूजनेन ।
मतिं चकारातिमनोज्ञरूपा शिवव्रतेनापि पुनः स्मृतेन ॥ ५३ ॥

सा गौरी विजयायुक्ता जययापि समन्विता । तृतीयाव्रतकालं च प्राप्य प्राह वचो मुदा ॥

जये सुरसरित्तीरे नीरजातिमनोहरे । स्थित्वा नेयः कियान् कालो मयेत्याहातिशोभना ॥ ५५ ॥

ततः परं सा चतुरङ्गयाने स्थित्वा सखीवृन्दनिवारितापि ।
ययौ सरित्तीरमुदारसम्भ्रा शनैः शनैरम्बुरुहातिधीरम् ॥ ५६ ॥

ददाति सा सरित्तीरे मुनिनारीगणं निशि । सा तृतीयाव्रतं कर्तुमुद्यता सर्वसाधनैः ॥ ५७ ॥

व्रतं चकार स देवी यदुक्तं पुरवैरिणा । तदेवैतदिति स्मृत्वा सन्तोषं परमं ययौ ॥ ५८ ॥

ततः परं जयामाह ताभिः किं क्रियते जये । व्रतं विचारयाद्येति सा चाज्ञापि शिवप्रिया ॥

ततः प्रणम्य तां गौरीं गत्वा मुनिवराङ्गनाः । प्राह किं वा व्रतं कर्तुमारब्धमिति सादरम् ॥

मुनिपत्न्यः —

इदं तृतीयाव्रतमेतदेव सौभाग्यसंपत्तिकरं मनोज्ञम् ।
सन्तानवृद्धिप्रदमेतदेव सौभाग्यमारोग्यदमेतदेव ॥ ६१ ॥

इदं पुरा शङ्करवल्लभायै शिवोक्तमेतद् व्रतमादरेण ।
अस्माभिरप्यद्य शिवप्रसादलाभाय तावत् क्रियते निशायाम् ॥ ६२ ॥

कन्यकापि व्रतं कृत्वा पतिमाप्नोति सुन्दरम् । धीरान् मनोहरान् वीरान् कुमारानपि सुन्दरान् ॥

एतद्व्रताचरणमेव निधानभूतं एतद्व्रतं सुरतरुः किल कामधेनुः ।
एतेन तावदखिलेप्सितवृद्धिरेवं माङ्गल्यदायकमिति प्रवदन्ति वेदाः ॥ ६४ ॥

---

1 शिवानी भवानीति यावत् ।

अथोत्सवेन निशि जागरणेन पूजा कार्या शिवस्य कुसुमादिभिरादरेण।
लिङ्गं मनोज्ञसिकतामयमेतदस्मिन् अभ्यर्चितो दिशति भाग्यमपारमीशः ॥ ६५ ॥

इति तद्वचनं श्रुत्वा जया तामाह शाम्भवीम्। प्रहृष्टा हृष्टवदनां व्रतस्याचरणादिकम् ॥ ६६ ॥
व्रतं हि श्रीमहादेवपूजनं सुमनोहरम्। लिङ्गं च सिकतारूपं कृतं ताभिस्सुलक्षणम् ॥ ६७ ॥
वितानाद्यैर्मण्टपानि मनोज्ञानि कृतान्यपि। अर्चनार्थं समुद्युक्तं मुनिदारैर्मनोरमैः ॥ ६८ ॥
शिवव्रतमिदं गौरि कर्तव्यमधुना त्वया। संपादनीया सामग्री क्षणेनेत्याह सा जया ॥ ६९ ॥
अम्बिकापि तदुक्तानि श्रुत्वा वाक्यानि सादरम्। तथास्त्विति मुदा प्राह सा ययौ गिरिमन्दिरम् ॥
सा नत्वा मेनकां प्राह मातः सा सर्वमङ्गला। शिवव्रतं मुदा कर्तुं अद्य तावत् समुद्यता ॥ ७१ ॥
त्वयापि तद्व्रतं कार्यं अंबया सह सादरम्। तद्व्रतं च ममाप्युक्तं मुनिदारैर्विशेषतः ॥ ७२ ॥
अम्बा सुरसरित्तीरे तिष्ठति प्रीतमानसा। तयापि तद्व्रतं कार्यं तद्व्रतं मङ्गलावहम् ॥ ७३ ॥
इति तद्वचनं श्रुत्वा निवेद्य गिरये तदा। प्रजासमूहसंयुक्ता सरित्तीरं ययौ मुदा ॥ ७४ ॥
तत्र कारयामास रत्नमण्डलमण्डितम्। सुन्दरं मन्दिरं भक्त्या वितानादिसमन्वितम् ॥ ७५ ॥
अपारैरुपचारैः सा भवान्या सह सादरम्। पूजयामास गिरिशं गिरिणापि समन्विता ॥ ७६ ॥
निशि सा जागरं कृत्वा प्रातः संपूज्य शङ्करम्। सा ददौ मुनिभार्याभ्यो मुनिभ्योऽप्यन्नमादरात् ॥
सुवर्णशूर्पसंपूर्णफलोपायनकोटिभिः। चकार मुनिशार्दूलान् प्रहृष्टान् वनितायुतान् ॥ ७८ ॥
ततः प्राप स्वभवनं सर्वमङ्गलया सह। ततः स्वप्नस्तया दृष्टो मेनयाप्यम्बया शुभः ॥ ७९ ॥

अत्युच्चरत्नप्रतिभासमेतत् सिंहासनारूढ उमासहायः।
दृष्टस्तया मेनकया विवाहं महोत्सवोऽप्युत्सवराशिहेतुः ॥ ८० ॥
अम्बा शिवाङ्कमधिरुह्य शिवेन साकं स्मेराधरा हरमनोहरबाहुवीता।
भूयो विलोक्य मुहुरन्तरतः प्रहृष्टां स्वां सा ददर्श तदनन्तरमूर्छितापि ॥ ८१ ॥

ततः परं समारम्भो महानेवाभवत् तदा। जातकल्पो विवाहोऽपीत्यपि हृष्टापि मेनका ॥ ८२ ॥
निवेदितः स शैलाय स्वप्नो मेनकया ततः। तेन स्वप्नेन सन्तुष्टो गिरिराजो विशेषतः ॥ ८३ ॥
ततः शर्वमेनकापि शिवायै प्राह सादरम्। सुस्वप्नमादरेणैव जनयन्ती सुखाम्बुधिम् ॥ ८४ ॥
ततः परं शिवा प्राह स स्वप्नोऽपीति सा मुहुः। दृष्ट्वा मन्दं सलज्जैव स्मेराधरविराजिता ॥ ८५ ॥
ततः परं महादेवः प्रसन्नः समुपागतः। गणकोटिसमाकीर्णः सर्वदेवसमावृतः ॥ ८६ ॥

अपारमङ्गलाकारः सर्वमङ्गलकारकः। स सर्वमङ्गलाकान्तः छत्रार्बुदविराजितः॥ ८७॥
चामरार्बुदसंकीर्णस्तूर्यध्वनिविराजितः। अपारविभवोपेतस्तं ददर्श गिरिस्ततः॥ ८८॥
ततः प्रणम्य बहुधा हिमवांस्तं महेश्वरम्। शङ्करं प्राह विनतः कृतार्थोऽस्मीति सादरम्॥ ८९॥
ततो महोत्सवेनैव मन्दिरे समलंकृते। प्रविष्टः शङ्करः स्मृत्वा तत्प्रवेशवचो मुदा॥ ९०॥
ततः समागतं श्रुत्वा गौरी शङ्करमादरात्। प्रहृष्टा शोभनस्यायं समयोऽयमिति प्रियः॥ ९१॥
मधुपर्कादिकं कृत्वा शङ्कराय महात्मने। ददावपाररत्नौघसंवीताभरणान्यपि॥ ९२॥
ततस्तां भूषितां कृत्वा गौरीममरवन्दिताम्। आहूय मेनका प्राह परमानन्दसागरा॥ ९३॥

मेनका —

अम्बाम्बापारविभवैः भूषितस्तव वल्लभः। भविता भूरिभाग्यैस्त्वं भवित्री भववल्लभा॥ ९४॥
सौभाग्यनिधयः प्राप्ताः तद्व्रताचरणात् त्वया। एतादृशं महद्भाग्यं तव स्याद्भुवि शांभवि॥

व्रतं कथं शाम्भवमम्ब तेन शम्भुः प्रसन्नः शुभदो भवानि।
यद्वाञ्छितं तत्तदभूदिदानीं विधानमस्य व्रतमेव नूनम्॥ ९६॥

इतोऽधिकं न व्रतमित्यवैमि व्रतं व्रतानां न शिरोमणिः किम्।
इदं परं शाम्भवमम्ब तेन शम्भुः प्रसन्नस्तव चास्ति लोके॥ ९७॥

कस्तूरीघनसारपङ्कललिते किं शङ्कराङ्काङ्कितोऽप्यङ्कोलामलमालिकाकुलयुते निश्शङ्कपङ्केरुहे।
निःशङ्केन शशाङ्कमण्डलकुलव्यक्तोल्लसत्कन्दुकैरानन्दाम्बुधिवर्धकैर्मृडदृढक्रीडा मृडानि त्वया॥
इति मेनावचोमाध्वीधारां धीरा मनोहराम्। स्वकर्णरत्नचषकपरिपूर्णां पपौ शिवा॥ ९९॥
सा गौरी रमणाङ्कमङ्कनिहिता संप्राप शङ्काङ्किता सा कीर्तिः सुमुहूर्तकीर्तिरपरा रेजे निजं वल्लभम्।
संप्राप्यामितभोगयोग्यनिलया सानन्दधारालया शैलेनापि समर्पिता शिवकरव्यापारसन्तर्पिता॥
ततो महोत्सवो वृत्तः स महान् गिरिमन्दिरे। सुरलोकेपि संवृत्तो गन्धर्वनगरेष्वपि॥ १०१॥
देवदुन्दुभिनिर्घोषव्याप्तं भूमण्डलं तदा। शोभनं सूचयन्नेव शिवयोरुभयोस्ततः॥ १०२॥

सा शङ्कराङ्कनिलया रुरुचे भवानी विद्युल्लतेव शरदम्बरकन्धराङ्का।
तेनोत्सवेन गिरिशोपि सुखाम्बुराशिकल्लोललोलहृदयः सुतरां स रेजे॥ १०३॥

इति तद्वचनं श्रुत्वा शुकवाणी शुचिस्मिता। किमुद्यापनमस्येति सत्यव्रतमुवाच सा॥ १०४॥

सत्यव्रतः —

शृणु भद्रे प्रवक्ष्यामि तद्व्रतोद्यापनं मुदा । उद्यापनश्रवणतोऽप्यभिवृद्धं सुखं भवेत् ॥ १०५ ॥

अस्मिन् व्रते षोडशवत्सराणां अन्ते कृतान्तान्तकपूजनेन ।

महोत्सवोद्यापनतोऽपि पूर्णं व्रतं भवत्येव कृतं च [1] शाङ्गम् ॥ १०६ ॥

षोडशे वत्सरे प्राप्ते तद्व्रतोद्यापनोत्सवः । कर्तव्योऽप्यतियत्नेन बहुभिः साधनैर्मुदा ॥ १०७ ॥

शङ्करोक्तप्रकारेण व्रताचारं समाप्य तम् । उद्यापनव्रतस्यापि कार्यं साधनकल्पनम् ॥ १०८ ॥

पूर्वोक्तैरेव विविधैः फलैरपि समन्वितैः । अर्घ्यैः षोडशसंख्याकैः गन्धपुष्पसमन्वितैः ॥ १०९ ॥

फलैः षोडशसंख्याकैः विविधैः स्वर्णसंयुतैः । पूरणीयानि शूर्पाणि रत्नैर्मुक्ताफलैरपि ॥ ११० ॥

तानि शैवकुटुम्बेभ्यो देयानि प्रीतिपूर्वकम् । दुकूलचेलियुक्तानि षोडशत्वप्रकल्पनात् ॥ १११ ॥

ततश्च सकुटुम्बेभ्यः शाम्भवेभ्यो धनान्यपि । अन्नान्यपि प्रदेयानि धेनवोऽपि गृहाण्यपि ॥

भूषणान्यपि देयानि यथाविभवमास्तिकैः । विभवे सति तत्रापि वित्तशाठ्यं न कारयेत् ॥ ११३ ॥

एवं कृतोद्यापनानामङ्गनानां पदे पदे । भवन्त्येव सुखानीति वेदडिण्डीरवः श्रुतः ॥ ११४ ॥

एवं कृते व्रते पूर्णे मृतोऽपि पतिरेष्यति । अतः सौभाग्यदं मन्ये व्रतमेतदसंशयम् ॥ ११५ ॥

व्रतमेतत् कन्यकापि कृत्वा प्रियतमं पतिम् । प्राप्नोति नात्र सन्देहः तद्व्रतं तादृशं यतः ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । यस्य श्रवणमात्रेण सौभाग्यं वृद्धिमेष्यति ॥ ११७ ॥

इदमुद्यापनं पूर्वं पृष्टो गिरिशया शिवः । प्राह प्रसन्नवदनः सर्वदेवशिखामणिः ॥ ११८ ॥

पुरा कश्चिदभूद्राजा ब्रह्मावर्ते वरानने । तस्य भाग्यं वरारोहे विनाशरहितं सदा ॥ ११९ ॥

स शांभववरस्तस्य वयश्च शिवपूजया । जातं परिणतं तेन तोषिताः शाङ्करा अपि ॥ १२० ॥

कृतान्यपि च लिङ्गानि राज्ञा तेनैव कोटिशः । कृतानि तेन बहुधा शिवोद्यानवनान्यपि ॥१२१॥

शिवमन्दिरनिर्माणं रत्नैस्तेनैव कारितम् । स्थापितान्यपि लिङ्गानि चित्ररत्नमयान्यपि ॥ १२२ ॥

तेषु पूजा कृता तेन यथा तुष्यति शङ्करः । तस्य भाग्यस्य नेयत्ता स महान् सुरवन्दितः ॥

तस्य पुत्राः शतं तेषां शिवभक्तिर्दृढा सदा । तैश्च शूरैरपारैश्च रिपवो विजिता अपि ॥ १२४ ॥

तेषां रिपुजये शक्तिः केवलं शिवपूजया । सैन्यमन्यत्परं तेषां सामान्यपरिसेवने ॥ १२५ ॥

तस्य राज्ञः प्रिया कन्या कापि शोभनवर्धना । तया बाल्यं समारभ्य कृतं शङ्करपूजनम् ॥

तन्माता विमला नाम सापि शङ्करपूजने । सर्वदापि समुद्युक्ता कन्यामाह कदाचन ॥ १२७ ॥

---

1 साङ्ग C

विमला —

कल्याणि तव कल्याणं भावि शङ्करमर्चय। शिवार्चनैव भर्तापि तव स्यादेव भाग्यवान् ॥ १२८॥
किञ्च नित्यं शिवाचारनिरतापि शिवार्चनम्। सौमङ्गल्यव्रतं नित्यं कुरु तावद् विशेषतः ॥
अयं तु श्रावणो मासः पूर्णकल्पस्ततः परम्। सौमङ्गल्यव्रतस्यापि समयः स्यादुपस्थितः ॥ १३० ॥
भाद्रशुक्लतृतीयायां हस्तर्क्षे सोमवासरे। तद्व्रतं सर्वथा कार्यं नारीभिः पुरुषैरपि ॥ १३१ ॥
सोद्यापनं व्रतं कृत्वा भाग्यं प्राप्नोति मानवः। व्रतरत्नमिति प्रोक्तं तद्व्रतं कमलानने ॥ १३२ ॥
मयापि क्रियते बाले त्वयापि क्रियतां च तत्। अवश्यमेव कर्तव्यं तेन स्यादक्षयं सुखम् ॥
इति तद्वचनं श्रुत्वा सा सन्तुष्टा कुमारिका। व्रतकालमनुप्राप्य चकार व्रतमादरात् ॥ १३४ ॥
पश्चात्परिणतोत्साहसमेता सा कुमारिका। भर्ता मे शाङ्करश्रेष्ठो वीरश्चास्त्विति सादरात् ॥ १३५ ॥
ततः परं स राजापि सर्वसौभाग्यसंयुतः। वरो दुर्लभ इत्येव चिन्तया प्राह कन्यकाम् ॥ १३६ ॥

राजा —

बाले भूमण्डले कोऽपि पञ्चरेफसमन्वितः। न लभ्यते वरः किं वा कर्तव्यमधुना वद ॥ १३७ ॥
उदारः शाङ्करो वीरः सुन्दरः श्रीकरोपि यः। वरोऽतिदुर्लभो लोके किं कर्तव्यमतः परम् ॥१३८॥
क्वचित् कश्चिद्गुणः कश्चित् क्वचित् कश्चिदतस्तथा। न पञ्चरेफसंयुक्तो वरो दृष्टिपथं गतः ॥
इति तद्वचनं श्रुत्वा सा कन्या खिन्नमानसा। व्रतस्य महिमा को वा तस्येत्याह स्वमातरम् ॥

विमला —

बालेऽद्य तस्य महिमा भूयानेवाधितिष्ठति। तत्साङ्गं यदि तर्हि स्यात् फलं सर्वमपेक्षितम् ॥
यतः साङ्गानि सर्वाणि कर्माणि फलदान्यतः। अङ्गहीनेन न फलं कर्मणेत्यवधारय ॥ १४२ ॥
तत्र तावत् प्रसूनानि विविधानि फलान्युत। भक्त्या संपादनीयानि सहस्राणि विशेषतः ॥ १४३ ॥
अशक्यमिदमेतावत् भक्त्या जागरणादिकम्। अतः कथं वा सफलं कर्म तत् स्याद्वदाधुना ॥
विध्युक्तकर्मणा तावत् फलं भवति सर्वथा। तत्र वैगुण्यशङ्कापि यदि स्यात् किं फलं तदा ॥
इति तद्वचनं श्रुत्वा सापि बाला मनोरमा। को वा गुरुर्मया प्राप्यः केन साङ्गं व्रतं भवेत् ॥
कथं स्यात् तत्फलावाप्तिरिति चिन्तासमन्विता। ययौ सुरसरित्तीरं सखीनिकरसंवृता ॥ १४७ ॥
तत्र स्नात्वा महादेवं प्रयागेश्वरपूजनम्। चकार भूतिनिटिला रुद्राक्षकरकङ्कणा ॥ १४८ ॥
तदा तल्लिङ्गपूजार्थं गङ्गास्नानादिपावनः। भृगुः समागतस्तत्र भूतिरुद्राक्षभूषणः ॥ १४९ ॥

स समागत्य तं देवं बिल्वपत्रादिभिर्मुदा । पूजयित्वा प्रणम्याथोपविष्टः स कुशासने ॥ १५० ॥
तमुवाच प्रणम्याथ भृगुं राजकुमारिका । प्रसन्नवदनं शान्तं शिवनामजपोत्सुकम् ॥ १५१ ॥
केन वांछितसिद्धिः स्यात् भृगो शांभवपुङ्गव । तन्मे वद विचार्याद्य येन स्यात् सुखमक्षयम् ॥

भृगुः —

सौभाग्यदं व्रतं लोके नारीणां प्रथितं खलु । तद्व्रताचरणेनैव सर्वसिद्धिर्भविष्यति ॥ १५३ ॥
तदम्बया कृतं पूर्वं शङ्करोक्तविधानतः । सा सर्वमङ्गला जाता तद्व्रताचरणात् शिवा ॥ १५४ ॥
तद्व्रताचरणेनैव दग्धं त्रिपुरकाननम् । महेश्वरेण तेनैव कृतस्तद्विजयस्ततः ॥ १५५ ॥
नारायणादयः सर्वे प्रचण्डनगराग्निना । दग्धा अपि समुत्पन्नाः कमलाकृततद्व्रतात् ॥ १५६ ॥
ऋषयोऽपि समुत्पन्नास्तद्व्रताचरणात् परम् । आसुरोदरसंक्रान्तास्तद्व्रताचरणात् परम् ॥ १५७ ॥
अन्येऽपि ये मृताः पूर्वं ते तद्व्रतविशेषतः । संप्राप्तजीवनाः सर्वे तद्व्रतं हि महत्तरम् ॥ १५८ ॥
सर्वसौभाग्यदं पुण्यं तदेव व्रतमुत्तमम् । तेन वांछितसिद्धिः स्यात् नात्र कार्या विचारणा ॥१५९॥
व्रतं सौभाग्यदत्वेन प्रसिद्धं तद्वरानने । साङ्गं कुरु विधानेन तेन सिद्धिर्भविष्यति ॥ १६० ॥
परश्वो हस्तनक्षत्रतृतीयासोमवासरे । शुक्ले भाद्रपदस्य स्यात् तद्व्रतं शुभदायकम् ॥ १६१ ॥
इति तद्वचनं श्रुत्वा सापि सन्तुष्टमानसा । तेनोपदिष्टा गुरुणा भृगुणा करुणालुना ॥ १६२ ॥
ततस्तदुक्तमार्गेण तेनैव नृपकन्यका । साङ्गं व्रतं चकाराशु सोद्यापनमनामयम् ॥ १६३ ॥
ततः परं ययौ सोऽपि मुदा जनकमन्दिरम् । सन्तुष्टां तामुवाचाथ राजा राजकुमारिकाम् ॥

राजा —

किं वा व्रतं त्वया चीर्णमद्य येन तवाधुना । प्रहृष्टं हृदयं वत्से वदेति प्रीतमानसः ॥ १६५ ॥

कन्यका —

भृगुणा तावदद्योक्तं सौमङ्गल्यं व्रतं मम । तत् कृतं तेन सन्तुष्टा वाञ्छितं मे भविष्यति ॥१६६॥
इति तद्वचनं श्रुत्वा सोऽपि सन्तुष्टमानसः । तद्दारा अपि सन्तुष्टाः तथास्त्विति सुता अपि ॥
तदानीं तद्व्रतेनैव सन्तुष्टः शङ्करो वरम् । विचार्य प्रेषयामास किन्नरं सर्वसुन्दरम् ॥ १६८ ॥
ततः स सर्वसौभाग्यैः संयुतः प्रययौ मुदा । प्रयागमेव बहुभिः किन्नरैरभिसंवृतः ॥ १६९ ॥
ततः स्नात्वा स गङ्गायां प्रयागेश्वरपूजनम् । कृत्वा बिल्वादिभिः सम्यक् गङ्गातीरे चचार सः ॥
तदानीं सा वरारोहा रत्नप्रसादमण्टपे । आरुह्य स्वसखीयुक्ता तं ददर्श च किन्नरम् ॥ १७१ ॥

धावन्तमपि धैर्येण किन्नरं वरमुत्तमम् । दिव्यं तुरङ्गमारुह्य प्रेंखन्तमतिसुन्दरम् ॥ १७२ ॥
तं विलोक्याथ सुभगा कोऽयमत्यद्भुतो मया । दृष्टो नरस्य किं रूपं ईदृशं न सुरस्य वा । १७३॥
एतादृशो यदि वरो वृतः स्याद्भाग्यमुत्तमम् । पञ्चरेफाकरः सोयं वरो लक्षणसंयुतः ॥ १७४ ॥
अयं सुरो नु गन्धर्वः किन्नरो वा विचार्यताम् । यद्वा पञ्चशरः सोयं सर्वसौभाग्यसंयुतः ॥१७५॥
एवं विचार्य सा चित्ते प्राह मातरमादरात् । पश्याम्ब तं भाग्यवन्तं स को वा तं विचारय ॥
इति तद्वचनं श्रुत्वा सा तामाह विचक्षणा । अयि बाले नरो नायं सुरश्चरति किन्नरः ॥ १७७ ॥
यद्वा गन्धर्व एवायं गङ्गातीरे मनोहरे । ईदृशोऽपि नरः कोऽपि न दृष्टो न श्रुतः खलु ॥ १७८॥
अथापि तावदधुना चारद्वारा विचार्यताम् । कोऽयमित्यधुना राज्ञो निवेदय वरं वरम् ॥ १७९ ॥
इति तद्वचनं श्रुत्वा सा तामाह विचक्षणा । राजा त्वयैव वक्तव्यः कोऽयमित्यपि सादरम् ॥
इति तद्वचनं श्रुत्वा सा राजनिकटं ययौ । तमाह तस्य वृत्तान्तं स तामाह ततः परम् ॥ १८१ ॥
मया विचार्यते बाले तादृशः किन्नरो भवेत् । विशिष्य वा सुरो वा स्यात् स कथं वा वरो भवेत् ॥
इत्युक्त्वा प्रेषयामास चारान् बहुविधान् स्वकान् । तद्वृत्तान्तविचारार्थं निपुणानतिकोविदान् ॥
ते गतास्तस्य निकटे तदा सोऽपि विलोक्य ताम् । प्रासादशृङ्गमध्यस्थां न ददर्शान्यमागतम् ॥
स किन्नरो विलोक्याथ तामेव मदनातुरः । तत्सङ्गमोपायचिन्तां चकार विततामपि ॥ १८५ ॥
कथं वा सा समायाति तुङ्गप्रासादसंस्थिता । मया वा तत्र गन्तव्यं कथं वा राजमन्दिरे ।।१८६॥
प्रेरितः शङ्करेणाहं तत्परिग्रहवांछया । तत्परिग्रहणं केन साधनेन भविष्यति ॥ १८७ ॥
एवं चिन्तासमाक्रान्तं तं विलोक्यातिविस्मिताः । तेऽपि चाराः परं भूपं सविचाराः समागताः ॥
ततस्ते तस्य चिन्हानि निवेद्याशु यथार्थतः । सन्तुष्टं तं नृपं चक्रुः वरः प्राप्तोऽयमित्यपि ॥
ततः सापि वरारोहा दृष्टकिन्नरविग्रहा । तद्विलोकनसंसक्ता नान्यालोकनतत्परा ॥ १९० ॥
तदानीमागतो राजा स्वकन्यानिकटं तदा । किन्नरालोकनोद्युक्ता जनकं न ददर्श सा ॥ १९१ ॥
तामायताक्षीं विमलां तदालोकनतत्पराम् । दृष्ट्वा सरित्तटं प्राप मितैः परिजनैः सह ॥ १९२ ॥
बालाविलोकनरतं दृष्ट्वा किन्नरमादरात् । प्राह कोऽसीति तं राजा प्रहृष्टहृदयस्तदा ॥ १९३ ॥

किन्नरः —

किन्नरः शङ्करेणाहं प्रेषितोऽत्रागतोऽधुना । मया समर्चितः पूर्वं सौमङ्गल्यव्रतेन सः ॥ १९४ ॥
इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । किं त्वया दृष्टमधुना तद्वदेत्याह सादरम् ॥ १९५ ॥

किन्नरः —

विद्युल्लता कापि मयात्र दृष्टा प्रासादशृङ्गोज्ज्वलमण्डपस्था ।
तद्दर्शनासक्तमिदं मनो मे सा दृष्टपूर्वा न मया कदापि ॥ १९६ ॥

सापि प्रपश्यत्यधुना मनोज्ञा मामेव योगो भविताऽपि नूनम् ।
महेश्वराराधनजं विचित्रं फलं यतः स्यादिति निश्चयो मे ॥ १९७ ॥

इति तद्वचनं श्रुत्वा तथास्त्विति स भूपतिः । सा तस्मै कन्यका दत्ता वरश्रेष्ठाय धीमते ॥

तत्पाणिग्रहणेन सोऽपि परमानन्दाम्बुराशिस्थितो
राजाप्युत्सवसंयुतो नृपसती तत्कन्यकापि प्रियम् ।
संप्राप्य प्रमुदान्विताः शिवपदाम्भोजार्चनस्येदृशं
सौभाग्यं महदित्यपूर्वविभवं सस्मार सा तद्व्रतम् ॥ १९९ ॥

सौमङ्गल्यविवर्धकं व्रतमिदं सौभाग्यवृद्धिप्रदं
श्रोतॄणामभिवाञ्छितार्थदमिदं ज्ञात्वैव कुर्वन्ति ये ।
ते तावद्भुवि भूरिभाग्यमतुलं संप्राप्य जन्मान्तरे-
प्यत्युत्कृष्टशिवाश्रयाः शिवपदं यान्त्येव देवार्चितम् ॥ २०० ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे सौभाग्यदशिवव्रतोद्यापनकथनं नामैकचत्वारिंशोऽध्यायः ॥

—:×:—

## अथ द्विचत्वारिंशोऽध्यायः ।

रत्नाकरः —

इति तद्वचनं श्रुत्वा सापि सन्तुष्टमानसा । सत्यव्रतमुवाचेदं वचनं प्रीतमानसा ॥ १ ॥

पञ्चाक्षरार्थकथनप्रभवप्रसङ्गादेतादृशं व्रतमुदीरितमिष्टसिद्ध्यै ।
नित्यव्रतं वद विशेषत एव मह्यं तद्वत्सरे खलु सकृत् क्रियते विशिष्य ॥ २ ॥

इति तद्वचनं श्रुत्वा विलोक्य स्वसतीं द्विजः । धन्यासीत्यादरेणोक्त्वा प्राह नित्यव्रतान्तरम् ॥

नारीणां च नराणां च नित्यं व्रतमिहोच्यते । तच्छृणुष्व वरारोहे सर्वपापहरं परम् ॥ ४ ॥

लिङ्गे शिवार्चनं नित्यमचरे वा चरेऽपि वा । कर्तव्यं बिल्वपत्राद्यैर्जलैर्वा विमलैर्नवैः ॥ ५ ॥

तत्राधिकारोऽपि विभूतिधारणे भवत्यवश्यं न विनापि तेन ।
रुद्राक्षमालाभरणेऽपि ताभ्यां शिवार्चनार्थे कृतमेव नूनम् ॥ ६ ॥

शिवार्चनं पापहरं प्रशस्तं तद्येन वा तेन न बिल्वपत्रैः ।
कृतं भवेन्नीरलवैश्च तेन कृतानि पुण्यान्यमितानि नूनम् ॥ ७ ॥

अवश्यमेषा शिवलिङ्गपूजा कार्या मया बिल्वदलैर्जलैर्वा ।
तथा मया पापकुलानि नूनं विनाशनीयान्यनिशं सकृद्वा ॥ ८ ॥

इति निश्चित्य यो नित्यं करोति शिवपूजनम् । सर्वपापानि नश्यन्ति कृतान्यपि विशेषतः ॥ ९ ॥
कृत्वा शिवार्चनारम्भं कर्तव्यं तत्समापनम् । यतः समापनाभावे तस्य तेन फलं च न ॥ १० ॥
नारम्भमात्रं शास्त्रार्थः किन्त्वारब्धस्य कर्मणः । समापनेन तावत्तु फलमित्यवधारितम् ॥ ११ ॥
कृते शिवार्चनोद्योगे यदि विघ्नकरो भवेत् । तदा तद्वारणं कार्यं तेन पूजाफलं भवेत् ॥ १२ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । शृणु भद्र प्रवक्ष्यामि तं पापाशनिसन्निभम् ॥ १३ ॥
रेवातीरे पुरा कश्चित् राजा परमधार्मिकः । शिवार्चनरतो नित्यं शिवपूजकपूजकः ॥ १४ ॥
स कृत्वा पूजनं शम्भोर्नर्मदातीरमाश्रितः । अपारैरुपचारैस्तैरेतावदतिदुर्लभः ॥ १५ ॥
ततः स राजा पूजान्ते शिवनैवेद्यमादरात् । गृहीत्वा तत्सरित्तीरे चाचर निजलीलया ॥ १६ ॥
तदा दूरान्महादेवपूजानिरतमास्तिकम् । ददर्श नर्मदातीरे तरुगुल्मसमावृते ॥ १७ ॥
तदानीमागतः क्रूरः शार्दूलोऽपि पिपासया । तं ददर्शातिदूरेण व्याकुलः समभूत् ततः ॥ १८ ॥

अयं करोत्यत्र महेशपूजामेतस्य विघ्नो भविता द्विजोऽयम् ।
संरक्षणीयः खलु राजधर्मो यतो नराणां परिपालनं स्यात् ॥ १९ ॥

मनुष्यमात्रस्य विघातकानि निवारणीयानि शिवार्चनाय ।
निवारणीयानि विशेषतोऽत्र पूजापरोऽयं गिरिशस्य नूनम् ॥ २० ॥

शिवपूजकदुःखवारणानां फलमीशार्चनमेव तेन दुःखम् ।
न भवत्यत एव दुःखनाशः प्रयतस्तावदहं भवामि नूनम् ॥ २१ ॥

अयं तु पर्वताकारः शार्दूलोऽपि निवारकम् । दृष्ट्वा मां पादघातेन हनिष्यति न संशयः ॥ २२ ॥
पिपासया पीडितस्य कथं कार्यं निवारणम् । तदेव संकटं तावदनिकार्यमुपागतम् ॥ २३ ॥
तत्पिपासावारणाय शैवसंरक्षणाय च । रक्षणाय ममाप्यत्र साधनं दुर्लभं खलु ॥ २४ ॥

एवं व्याकुलचित्तस्य तस्य राज्ञोपि भामिनी । प्रासादवरमारुह्य तं ददर्श पतिं च सा ॥ २५ ॥
व्याघ्रं च दूरादालोक्य शाङ्करं शिवपूजकम् । राजानं च स्वभर्तारं जाता संकुलमानसा ॥ २६ ॥
त्रयाणां रक्षणोपायः को वा तावत् स दुर्लभः । अतः परं विधेयं किं मयेत्यपि समागता ॥ २७॥
प्रासादादवरुह्याशु सखीगणसमावृता । रथमारुह्य बहुभिर्भटैरपि समावृता ॥ २८ ॥
सा समागत्य राजानं प्राहातिविनयान्मुहुः । प्रणम्यातिप्रयत्नेन कृताञ्जलिपुटा शुभा ॥ २९ ॥

राजपत्नी —

कथमत्रागतं राजन् सङ्कटं समुपागतम् । त्रयाणां रक्षणं केन साधनेन वदाधुना ॥ ३० ॥
अयं तु शांभवश्रेष्ठः शिवपूजापरायणः । रक्षणीयः प्रयत्नेन तदुपेक्षा तु नोचिता ॥ ३१ ॥
तृषार्तोऽपि स शार्दूलः प्रतप्तो भानुभानुभिः । अधुना तस्य हनने पापमेव प्रजायते ॥ ३२ ॥
एक एव स शार्दूलः सकुटुम्बः समागतः । शिशुभिः सह तृष्णार्ताः शिशवस्तृषया नृप ॥ ३३ ॥
नच मार्गान्तरं पश्य गिरिः सानुसमाकुलः । अशक्य एव मार्गोऽन्यो न परावृत्य यान्ति ते ॥
अयं च युवतीयुक्तः शांभवः शिवपूजकः । प्रायशः शैवपत्नी सा गुर्विणी चरणाक्षमा ॥ ३५ ॥
तवाप्येतत् व्रतं राजन् दीनानां परिरक्षणम् । न कोऽपि रक्षणोपायो दृश्यते किं करोम्यहम् ॥
एवमुक्त्वा स्थिता तत्र सा राज्ञी भूपतिस्तदा । तदा सानौ च सुषुवे कुमारं शैवभामिनी ॥ ३७॥
सकुटुम्बः स शार्दूलः तत्तीरं समुपागतः । बालकस्य ध्वनिं रम्यं शुश्रावापूर्वमादरात् ॥ ३८ ॥
श्रुत्वा तं ध्वनिमप्याह शार्दूलः स्वसतीं प्रति । अयमश्रुतपूर्वोऽत्र शब्दस्तावदिह श्रुतः ॥ ३९ ॥
इति तद्वचनं श्रुत्वा साप्याह स्वपतिं तदा । मनुष्यनारी सा तावदधुना सुषुवे सुतम् ॥ ४० ॥
तत्र तावन्न गन्तव्यमस्मद्दर्शनमात्रतः । भीतास्तावद्भविष्यन्ति मनुष्याः स्वस्वभावतः ॥ ४१ ॥
अस्मद्दर्शनमात्रेण तदिच्छा प्रपलायने । भविष्यति न सामर्थ्यमधुनास्याः पलायने ॥ ४२ ॥
तद्व्रतार्थमनुद्योगो यद्यप्यस्माकमास्तिक । तथापि भयदं रूपं दृष्ट्वा भीता भवन्ति ते ॥ ४३ ॥
मार्गान्तरं च नास्माकं जलार्थं गमनेऽधुना । आर्तिश्च तृषया तावद्बालानामपि जायते ॥ ४४ ॥
अहो महदिदं कष्टं प्राप्तं देहविसर्जनम् । कर्तुमायान्ति ते सन्तः तावदेकान्तमित्यपि ॥ ४५ ॥
शिवपूजार्थमुद्युक्ते नारी भर्तरि सादरा । उपचारप्रदानाय प्रायशः समुपागता ॥ ४६ ॥
अतः पतिव्रता सापि शैवस्य महिला ततः । तद्दुःखदानमात्रेण नरकं स्यादसंशयम् ॥ ४७ ॥
हरदुःखप्रदानेन व्याघ्ररूपमुपागतम् । पुनस्तद्दुःखदानेन नरकान्निर्गमः कथम् ॥ ४८ ॥

मरणं वा भवेत्तत्र तृषया परया परम् । न शांभवाय दुःखानि देयानीत्यवधारय ॥ ४९ ॥
प्रायः शिवार्चनस्यापि कालोयं शांभवो यतः । मध्याह्नेपि प्रयत्नेन करोति शिवपूजनम् ॥ ५० ॥
शिवपूजासमारंभे विघ्नाचरणमागतम् । तद्विघ्नाचरणापारपापनाशः कथं भवेत् ॥ ५१ ॥

न ब्रह्महत्यादिकपातकेभ्यस्तथा भयं भावि यथा भयं स्यात् ।
महेश्वराराधनविघ्नतोऽतस्तद्विघ्नपातान्नरके स्थितिः स्यात् ॥ ५२ ॥

महेश्वराराधनतत्परेभ्यो नैवोपकारः कृत एव तेन ।
कुयोनिमार्गागमनं प्रसक्तं अतो न तेषां भयदत्वमिष्टम् ॥ ५३ ॥

भक्त्या यो वचनैर्जलैरपि शिवाचाराय तोषप्रदो
मुक्तो दोषगणैर्भवत्यगणितैर्मुक्त्यङ्गनावल्लभः ।
स्यादेवेति मुहुः श्रुतं मुनिवरैरुक्तं वचोऽस्मिन् मुने
किं न स्मर्यत एव संस्मर पुनः संस्कारमावर्तय ॥ ५४ ॥

अलं देहेनालं विमलकुलशार्दूलवपुषाप्यलं दुःखं येन प्रभवति मुहुर्मोहमधुना ।
विहायाङ्गत्यागं कुरु मतिमतो भूतिमधुना दवोत्पन्नां काले कुरु कुरु महापातकहराम् ॥ ५५ ॥

इति तद्वचनं श्रुत्वा शाङ्करो द्विजपुङ्गवः । विस्मयं परमं प्राप तद्भार्यापि नवप्रसूः ॥ ५६ ॥
शुश्राव वचनं राजा स शार्दूलाङ्गनोदितम् । शुश्राव राजपत्नी च विस्मयावहमुत्तमम् ॥ ५७ ॥
ततः परं तृषाक्रान्ताः शार्दूलास्ते परस्परं । प्रोचुर्विनाशकालोऽयमस्माकमिति निश्चयात् ॥ ५८ ॥
सम्यगेवाधुना जातं शरीरं दवभस्मना । पावनं पावनं प्राप्तं रेवातीरं मनोहरम् ॥ ५९ ॥
रेवातीरे तनुत्यागो यदि दैवाद्भविष्यति । तदा परं कृतार्थाः स्मः किमितोप्यधिकं फलम् ॥

रेवातीरे यः शरीरव्ययार्थं पूतो भूत्वा तिष्ठति प्रीतचित्तः ।
देवैरादावर्चितः स्यात् तदा स्यात् गौरीकान्ताराधकः स्यान्नरोपि ॥ ६१ ॥

पुण्यैरपारैः खलु शांभवत्वं तत्रापि रेवातटसंश्रितत्वम् ।
तत्रापि तल्लिङ्गसमर्चकत्वं तत्रापि तद्देहविसर्जकत्वम् ॥ ६२ ॥

वदत्युच्चैरेवं भव भव भवाम्भोधितरणप्रवीणं कृत्वा मामव भव भवानीरमण मे ।
क्षणैः प्राणाहारं हर हर हरापारकरुणारसाकारासारं हर हर स संसारनिकटम् ॥ ६३ ॥

अतः परं जन्मशतान्तरे वा रेवासरित्तीरतरुप्ररोहः ।

भ्रमामि संसारभयानलार्तः कृतान्तवार्ताधृतमानसार्तः ॥ ६४ ॥

जन्मावसानसमयोऽपि सभागतोऽयं कायव्ययोत्तरमतः परमिन्दुमौले ।
रेवासरित्स्विलवातविधूतपापानस्मान् स्वपादकमलालिकुलान् करोतु ॥ ६५ ॥

न रेवातीरेऽस्मिन् किमिति तनुनाशोऽपि भवतीत्युमाकान्तं स्मृत्वा पुनरपि महादेव हर माम् ।
हरेत्युक्त्वात्युच्चैस्त्यज तनुमिमां भूतिललितां कथं जन्मापाये भसिततनुयोगोऽपि सुलभः ॥ ६६ ॥

इति तद्वचनं श्रुत्वा सञ्चरन् गगनान्तरे । नारदस्तानुपागत्य शार्दूलान् प्रणतो मुदा ॥ ६७ ॥
ततस्तानाह स मुनिर्विस्मयं परसंगतः । शार्दूलान् मरणोद्युक्तान् कम्पमानान् वरानने ॥ ६८ ॥

नारदः —

पूर्वजन्मनि के यूयं परमज्ञानसंयुताः । केन पापेन संप्राप्तं शार्दूलवपुरीदृशम् ॥ ६९ ॥
अतिपुण्यवतामेव रेवातीरे समागमः । तत्रापि शिवभक्तिर्या सा पुण्यगिरिकोटिभिः ॥ ७० ॥
येन पुण्यान्यपाराणि कृतान्यमितजन्मभिः । तेनैव प्राप्यते भक्तिः सुराधीशे महेश्वरे ॥ ७१ ॥
कुर्वन्त्यत्र तपश्चर्यां शिवे भक्त्यर्थमादरात् । कोटिशो नर्मदातीरे निराहाराः परं सुराः ॥ ७२ ॥
शिवभक्तिसुधालभो दुर्लभः खलु देहिनाम् । अपारजन्मसुकृतैः शिवभक्तो भवेद्भुवि ॥ ७३ ॥
शाङ्कराचारनिरताः शाङ्कराः शङ्करप्रियाः । अतो म तत्समो लोके कोपि दृष्टः श्रुतोऽपि वा ॥
तृणीकृत्य शरीराणि स्थितं मरणकांक्षया । रेवातीरे भवद्भिस्तु भवत्तुल्यः सुरोऽपि किम् ॥ ७५ ॥
दवभस्माङ्कितं कृत्वा शरीरमधुना कथम् । अकस्मात् कर्तुमुद्युक्तं भवद्भिर्भयविह्वलैः ॥ ७६ ॥
इति नारदवाक्यानि श्रुत्वा दूरेण भूपतिः । समागतः सतीयुक्तो कौतुकालोकनोत्सुकः ॥ ७७ ॥
तत्रोपविष्टास्ते सर्वे छायायामतिविस्मिताः । ततः परं स शैवोऽपि त्वरया समुपागतः ॥ ७८ ॥
प्रणम्य तानुवाचादौ तृषार्तान् सदयो द्विजः । भस्मोद्धूलितसर्वाङ्गान् शार्दूलान् मरणोन्मुखान् ॥

शाम्भवः —

अयं मध्याह्नसमयो रेवायां शिवपूजनम् । कर्तव्यमादौ वार्ताऽपि पश्चात् संभाविता खलु ॥ ८० ॥
पिपासवो बालकाश्च ते शुष्करसना अपि । अत्राभ्यागमने कालो भूयानेवाभवत् खलु ॥ ८१ ॥
इति तद्वचनं श्रुत्वा नारदेनापि संयुताः । रेवायां गन्तुमुद्युक्ताः तदाहुः शैवपुङ्गवम् ॥ ८२ ॥

शार्दूलः —

नवप्रसूता महिषी तव शांभवपुङ्गव । तस्याः स्याद्भयमस्माकं दर्शनादिति सत्वरम् ॥ ८३ ॥

ततस्तानाह शैवोऽपि तत्रैव प्रेषितोस्म्यहम्। तमालकुञ्जसंवीता प्रस्तरद्वारवेष्टिता ॥ ८४ ॥
शृणोति मधुराण्येव वचनान्यतिसादरम्। भवतां नयनाप्राप्या सा कुञ्जापिहिता यतः ॥ ८५ ॥
किञ्च नापिहिता वास्तु मास्तु वा किं ततः फलम्। घातुकत्वमतिस्तावन्न भवत्सु प्रजायते ॥
इति तद्वचनं श्रुत्वा रेवां गत्वापि सादरम्। निमज्य भस्मनाङ्गानि चक्रुर्लिप्तानि सादरम् ॥८७॥
ततः परं प्रयत्नेन रेवालिङ्गेषु सादरम्। दत्तं जलं बिल्वपत्रं समेतमतिभक्तितः ॥ ८८ ॥
ततः प्रदक्षिणीकृत्य प्रणम्य च पुनः पुनः। जलग्रहणमाकण्ठं कृतमेवातितृष्णया ॥ ८९ ॥
तान् विलोक्य स राजापि नारदोऽपि स शांभवः। परमाश्चर्यसंयुक्तः किमेतदिति निश्चयात् ॥
ततः परं स राजापि तत्तीरे शिवमन्दिरम्। ययौ शार्दूलसंयुक्तो नारदेनापि संयुतः ॥ ९१ ॥
तत्रोपविष्टस्तानाह नत्वा शाङ्करमादरात्। के यूयमिति यत्नेन शङ्करध्यानपूर्वकम् ॥ ९२ ॥

शार्दूलः —

अहं पूर्वभवे राजन् तुषारगिरिसंस्थितः। तस्य देशस्य राजाहं महदैश्वर्यसंयुतः ॥ ९३ ॥
शिवपूजारतो नित्यं कदाचिद्रजनीमुखे। दृष्ट्वा स्नानोद्यतां भार्यां सम्पूर्णनवयौवनाम् ॥ ९४ ॥
तदा पञ्चशरावेशात् तदालोकनसम्भ्रमे। मामाह सातियुवती शिवाराधनतत्परम् ॥ ९५ ॥
अहो नृपवराद्यायं प्रदोषः सोमवासरः। भूता कामान्विता पातः शिवनक्षत्रसंयुतः ॥ ९६ ॥
माघमासो ह्ययं तावदसितः पक्ष इत्यपि। ज्ञातं किं न त्वया तावत् राजसोऽसि न संशयः ॥
अहो महदिदं पापं कर्तुमभ्युद्यतं त्वया। सुधामयोऽयं कालोऽतः कालकालं समर्चय ॥ ९८ ॥
दुर्लभः खलु देहोऽयं कालोऽयमतिदुर्लभः। बहुपुण्यप्रभावेन समयोऽयं च लभ्यते ॥ ९९ ॥
किं किं पुण्यं कृतं पूर्वं पूर्वपूर्वभवे मुहुः। न जाने समयः प्राप्तः सोऽयमीशार्चनाय च ॥ १०० ॥
वाञ्छन्ति मुनयस्तावत् कालमेतादृशं सुराः। गन्धर्वाः किन्नराः सिद्धाश्चारणा अपि सर्वथा ॥
इतोऽधिकः पुण्यकालो न भविष्यति सर्वथा। एतत्समोऽपि नास्त्येव पुण्यकाल इति श्रुतः ॥
किं वा तैर्ग्रहणार्बुदैरपि तथा किं तै [2]रपारैर्धनैः एतत्कालसमो न काल इति मे धीरागमैर्जायते।
तस्मादर्चय शङ्करं बहुविधैर्द्रव्यैरपारैरयं कामो दुर्लभ एव तावदधुना कायोऽप्यय दुर्लभः ॥१०३॥

कल्पास्ते बहवो गता अपि तथा कल्पेषु तेषु प्रियः
कालोऽयं शिवपूजनस्य न गतो यस्मिन् समभ्यर्चितः।

---

2 रपारायनै C

दास्यत्येव पदं निजं गिरिजया साकं क्वचिद्यास्यति
श्रीमृत्युञ्जय इत्यवैमि समयस्तस्मादयं दुर्लभः ॥ १०४ ॥

संभाषणे वापि रुचिः कुतः स्यात् अयं शिवाराधनकाल एव ।
प्रयाहि गेहात् परतः प्रयाहि चेटीं कुटीं वा विटवाटिकां वा ॥ १०५ ॥

इत्युक्त्वा विरता सापि संभाषणपराङ्मुखा । मह्यं शापस्तया दत्तः शार्दूलस्त्वं भवेत्यपि ॥

ततः कामातुरेणैव चेटी संसेविता मया । नाराधितो महादेवो नार्चितो नावलोकितः ॥ १०७ ॥

चेटीगर्भे समुत्पन्ना सुता अपि मदन्वयात् । स एवाहं महापापी शिवपूजापराङ्मुखः ॥ १०८ ॥

शार्दूलदेहमापन्ना सेयं चेटी मम प्रिया । एते बालाः समुत्पन्नाः शार्दूलत्वमुपागताः ॥ १०९ ॥

मोहेन पापाचरणात् दुष्टयोनिमुपागताः । दुःखं च तेन पापेन प्राप्यते सत्यमुच्यते ॥ ११० ॥

तद्देहविगमे जाते यमदूताः समागताः । आगताः पादघातेन ते सर्वे ताडनोत्सुकाः ॥ १११ ॥

रे रे त्वया शिवदिने शिवपूजनानि त्यक्तानि तानि शिवदान्यपि मुक्तिदानि ।
तत्त्यागजातफलमेतदिति ब्रुवन्तः पादाभिघातनिकरं परितः क्षिपन्ति ॥ ११२ ॥

तत्पादजापारनखांकुशानां सङ्घैः शरीरं च विदीर्णमेव ।
ततः परं नीतमघोरमध्ये निक्षिप्तमाशु ज्वलनैश्च तप्तम् ॥ ११३ ॥

ततः परं कालमुपागतोऽहं तैरेव नीतः कुलिशाभिघातैः ।
कशाभिघातैरतिपीडितं मां ददर्श कालः कुपितोऽतितीव्रम् ॥ ११४ ॥

ततः परं चित्रगुप्तं मत्प्रासङ्गिकया गिरा । प्राह पातकमेतेन किंवाचरितमित्यपि ॥ ११५ ॥

चित्रगुप्तः —

अनेन माघासितभूतरात्रिः नीता च चेटीषड्चुम्बनाद्यैः ।
तिरस्कृतोऽयं रजनीमुखेऽपि स्वभार्यया शङ्करचर्ययाऽयम् ॥ ११६ ॥

यस्मिन् काले विश्वनाथार्चनाद्यैः आनन्दाब्धिर्वर्धितः पुण्यसङ्घैः ।
साकं तस्मिन् पापराशिः प्रवृद्धः चेटीवोटीवाटिकास्फोटनाद्यैः ॥ ११७ ॥

अनेन पुण्यानि पुरा कृतानि यावन्ति तावन्ति लयं गतानि ।
भूतव्रतत्यागत एव पश्चात् प्राप्तान्यपाराण्यपि पातकानि ॥ ११८ ॥

अहो कृतं पुण्यमनेन तावत् यावन्न केनापि कृतं तथापि ।
तावद्विनष्टं शिवरात्रिकालशिवार्चनत्यागत एव नित्यम् ॥ ११९ ॥

अहो शिवार्चनत्यागं पुण्याद्रिकुलिशं विदुः । पुण्यारण्यानलं प्राहुर्वेदवेदान्तपारगाः ॥ १२० ॥

नवनीतगिरिर्यथाग्निना प्रलयं याति तथैव सर्वथा ।
सुकृतादिलयोऽपि जायते शिवपूजाविरहे विशेषतः ॥ १२१ ॥

सिकतामितपर्वतक्षयः सरितां काल यथा तथा परम् ।
सुकृतादिलयोपि जायते शिवपूजाविरहे विशेषतः ॥ १२२ ॥

द्रुतपोतलये यथा जनाः प्रलयं यान्ति नदीरयैस्तथा ।
सुकृतादिलयोपि जायते शिवपूजाविरहे विशेषतः ॥ १२३ ॥

प्रलयानलसङ्गमाद्यथा विलयं याति धरा तथा परम् ।
सुकृतादिलयोपि जायते शिवपूजाविरहे विशेषतः ॥ १२४ ॥

शुष्यन्त्यघाम्भोनिधयः क्षणेन नश्यन्त्यपारापदकालमेघाः ।
भूतानिशायां शिवपूजनेन तत्केन पुण्येन समं वदामि ॥ १२५ ॥

भूतायां निशि बिल्वपल्लवमुमाकान्ताय लिङ्गे मुदा
दातुं वांछति यः स एव सुकृताम्भोधिः स पुण्याकृतिः ।
तं देवाः प्रणमन्ति भूतिविलसत्फालं मुहुः शांभवं
रुद्राक्षावृतकण्ठकर्णविवरं तं किन्नरं वा नरम् ॥ १२६ ॥

भूता यावदुपैति तावदभयं पापाम्बुराशेर्भवेत्
सा चेदन्तिकमेति कम्पमतुलं प्राप्नोति पापार्णवम् ।
किं कर्तव्यमतः परं न निलयः कोपीति वेगात् परं
यात्येवाशिवपूजकं शिवरते जाते स्वचित्ते सति ॥ १२७ ॥

नूनं भूतशिवार्चनस्य न फलं वक्तुं समर्थो भवेत्
वेदोऽपीति चतुर्मुखोपि बहुधा नारायणो वा यम ।
शेषो वा गुरुरेव वास्य महिमा वाचां किलागोचरः
शङ्कामेव स शङ्करोपि स शिवो वक्तुं करोति ध्रुवम् ॥ १२८ ॥

किं वर्णयामि यम भूतनिशाशिवार्चापुण्याब्धिशक्तिमिह भुक्तिमयं ददाति ।
मुक्तिं च देहविलये सति देयमन्यन्नास्तीति सा बहुविचाररतापि नूनम् ॥ १२९ ॥

एवं ब्रुवन्तमसकृत् स यमोऽपि दृष्ट्वा तं चित्रगुप्तमसितेतरभूतिभूषम् ।
रुद्राक्षकङ्कणकरं शिवलिङ्गहस्तं आनन्दजाश्रुनयनं प्रणतो बभाषे ॥ १३० ॥

यमः —

धन्या कृता सभा सेयं त्वया धन्येन केवलम् । अहं धन्यः कृतो मान्यः शिवाराधनवाग्रसैः ॥

भो चित्रगुप्त शिवपूजनपुण्यशक्तिवार्ताविशेषकथनेन सुधा न तुल्या ।
सा तृप्तिमात्रकरणं तदघादिनाशं कृत्वा करोति खलु मुक्तिमपि स्वहस्ते ॥ १३२ ॥

धन्योऽसि त्वमुमासहायचरणाम्भोजार्चनात्यादरो हारो हारविहारकल्पनरतो हारोपहारादरः ।
व्याहारैरपि हारकीर्तिकथनाविष्टैः प्रकृष्टैर्मुहुः तुष्टोऽहं शिपिविष्टकीर्तिसुधया पुष्टोऽपि कष्टक्षये ॥

एवमुक्त्वा स्थिते तत्र यमे केचिदुपागताः । मेचकाचलसङ्काशाः प्रतप्तायससंहताः ॥ १३४ ॥
प्रदग्धबाहुदण्डाश्च दग्धमुण्डाश्च कोटिशः । सन्दग्धकरपादाश्च रक्तधारासमावृताः ॥ १३५ ॥
पूयप्रवाहसंवीताः कुर्वन्तो रोदनं मुहुः । पिबन्तोऽप्यश्रुसंवीतां पूयधारां क्रिमिश्रिताम् ॥ १३६ ॥
तान् दृष्ट्वा स भयग्रस्तो यमः प्राहातिविस्मितः । चित्रगुप्तं विलोक्यापि के ते वद ममेत्यपि ॥

चित्रगुप्तः —

माघासितचतुर्दश्यामेतैर्भुक्तं दुरात्मभिः । अशिवाराधकैरेतैः नाराधि गिरिजापतिः ॥ १३८ ॥
न लिङ्गं शिवभूतायां अर्चितं बिल्वपल्लवैः । एतैः पापरतैर्दूतनिहतैः समुपागतम् ॥ १३९ ॥
अशिवाचारनिरतास्ते सर्वेऽपि मयाऽधुना । पातनीयाः प्रयत्नेन तप्तपूयसरिद्वरे ॥ १४० ॥
सन्तप्तशोणिताम्भोधिरेतदर्थं विनिर्मितः । सन्तप्तमूत्रकूपाश्च दीर्घिकाश्च विनिर्मिताः ॥ १४१ ॥
सन्तप्तमलवाहिन्यस्तदर्थं किं न निर्मिताः । सन्तप्तशस्त्रगिरयस्तत्रापारा विनिर्मिताः ॥ १४२ ॥

कल्पान्तकालेऽपि न मुक्तिरेषां दोषाकराणामशिवार्चकानाम् ।
सृष्टिश्च तावन्नरकार्णवानां प्रपूरणायेति मतिर्ममैषा ॥ १४३ ॥

कष्टान्यपाराणि भवन्ति तेषां येषां प्रदोषे न शिवार्चनेच्छा ।
तत्रापि भूता यदि सा सितान्या माघे सपाताषि शिवोडुयुक्ता ॥ १४४ ॥

सा मान्या वा यापि भूता सितान्या माघे तस्यां योपि मोहेन भुङ्क्ते ।
तस्यापारा यातना स्यादवश्यं सत्यं सत्यं विश्वनाथे शपामि ॥ १४५ ॥

इति तद्वचनं श्रुत्वा स यमः प्राह किङ्करान् । एते नेयास्त्वया दूरे अघोरेषु पतन्तु ते ॥ १४६ ॥

इति तद्वचनं श्रुत्वा क्रूरास्ते यमकिङ्कराः । नीत्वा तान् पातयामासुः तप्तामेध्यह्रदादिषु ॥

ततः परं तत्र भृगुः समागतो भूतव्रताचारविशुद्धचित्तः ।
विभूतिपूतो भसितत्रिपुण्ड्ररुद्राक्षमालाकलितः सहारः ॥ १४८ ॥

तं दृष्ट्वा शांभवश्रेष्ठं भृगुं भूतिविभूषितम् । रुद्राक्षमालाभरणं प्रणतः स यमो मुदा ॥ १४९ ॥

शिव शङ्कर पार्वतीपते गिरिशेशान महेश पाहि माम् ।
इति नाम सुधारसं मुहुः कलयन्तं तमुवाच चारु कालः ॥ १५० ॥

यमः —

भृगो तत्वविदां श्रेष्ठ सर्वतत्व विशारद । शिवध्यानसुधापानपीनमानस ते नमः ॥ १५१ ॥

धन्यस्त्वदभ्यागमनेन नूनं स्थलं पवित्रं कृतमेतदद्य ।
गात्रं पवित्रं मम जातमेव श्रोत्रं सनेत्रं मम तृप्तमद्य ॥ १५२ ॥

अपारपुण्यामरभूरुहास्ते फलोन्मुखा एव न संशयोऽत्र ।
यतः शिवाचाररतस्य तावत् तवाधुनाद्यागमनं प्रसक्तत् ॥ १५३ ॥

अतः परं तावदिदं विचार्य धर्मस्वरूपं वद सावधानम् ।
निर्मथ्य वेदार्णवमद्य तूर्णं स्मृत्वाप्यपर्णारमणं क्षणेन ॥ १५४ ॥

धर्माधर्मज्ञानशून्यस्य लोके नानन्दांशोऽपीति मन्ये किमन्यैः ।
धर्मैः कृत्यं येन धर्मेण मुक्तिः धर्मं तं मे सावधानं वदाशु ॥ १५५ ॥

इति तद्वचनं श्रुत्वा स भृगुः शांभवोत्तमः । प्राहात्युच्चैर्महादेव महादेवेति संवदन् ॥ १५६ ॥

भृगुः —

सन्त्येवान्ये कालसामान्यधर्माः किं तैर्धर्मैर्धर्मरत्नं वदामि ।
तद्रत्नं ते कर्णभूषाऽस्तु नित्यं तेनैवोमाकान्तपूर्णप्रसादः ॥ १५७ ॥

शिवधर्मसमानधर्ममन्यं न विजानामि न वेदबोधितोपि ।
स तु धर्मवरः स एव धर्मः स सुराणामपि सेवनीय एव ॥ १५८ ॥

सुरैरपारैः शिवधर्मधर्मो नारायणाद्यैः कृत एव सर्वैः ।
मुनीश्वरैरप्युरगेश्वरैश्च सिद्धैश्च गन्धर्ववरैश्च नित्यम् ॥ १५९ ॥

यं सर्वदेवोत्तममामनन्ति सोमावतंसं गिरिजावृतांसम् ।

तं दारितापारनृसिंहमांसं वन्दे शिवामानसराजहंसम् ॥ १६० ॥

यत्पादुकाराधकसेवकानां पादारविन्दान्यरविन्दजातः ।
गोविन्दवृन्दारकवृन्दमौलिमूलानि चक्रे तमहं भजामि ॥ १६१ ॥

यस्यैश्वर्यं मानगम्यं न नूनं यं वेदान्ता नैव जानन्ति सर्वे ।
तं देवेशं पूजयामि प्रभाते मध्याह्ने वा सायमभ्यन्तरे वा ॥ १६२ ॥

यल्लिङ्गाग्रादिन्दिराकान्तमुख्याः सर्वे देवास्तावदुत्पत्तिमापुः ।
तं त्यक्त्वाऽन्यं कं व्रजामः शरण्यं तं देवानामग्रगण्यं भजामि ॥ १६३ ॥

यत्पादाङ्गुल्यग्ररेखाभिजातं चक्रं विष्णोर्भूषणं तं वरेण्यम् ।
वन्दे गौरीकान्तमेकं नितान्तं स्वान्ते शान्ते सन्ततं संवसन्तम् ॥ १६४ ॥

न भजामि शिवान्यमन्यवार्तां न करोम्येव न धीरहारकण्ठः ।
स कपर्दकपालिकासमेतो भवति प्रीतिविशिष्टमानसोपि ॥ १६५ ॥

न स्वप्नेपि शिवान्यनामकथने प्रीतिः सुधाधारया
प्रीतः काञ्जिरमिच्छतीति कुमतिः को वा जगन्मण्डले ।
नेन्द्रोपेन्द्रविरिञ्चिनामकथने तत्पूजने वा मतिः
स्वप्नेऽपीति शपामि काल शिवयोः पादारविन्दे मुदा ॥ १६६ ॥

पूज्यः शङ्कर एव शङ्करकथा श्राव्या सदा श्रूयते
शर्वाराधनमेव साधनवरैः बिल्वादिभिः साध्यते ।
नेयं स्यादनिशं वयोऽपि सततं तुङ्गाङ्गलिङ्गार्चनैः
लिङ्गाराधनमेव मे धनमिति ज्ञेयं निधानं परम् ॥ १६७ ॥

भस्मोद्धूलनपूर्वकं सितलसद्भूत्या त्रिपुण्ड्रं मुहुः धृत्वा फालतले कपोलयुगले रुद्राक्षमालामपि ।
तं पञ्चाक्षरमन्त्रमेव सततं जप्त्वा शिवाराधनं कृत्वा बिल्वदलैर्वसामि भुवने जीवामि यावद्यम ॥

यल्लोचनाञ्चलविलोचनगात्रपातं तावत् पवित्रमपि मुक्तिपवित्रगात्रम् ।
तं चित्रभानुनयनं शरणं व्रजामि माहेश्वरामरतरुं परमेकमेव ॥ १६९ ॥

या जिह्वा मधुराणि वाञ्छति मुहुः सा सर्वदा नार्मदं
सर्वं वाञ्छति वक्तुमिच्छति परं तन्नाममात्रं परम् ।

किं चित्रं तदिदं सुधारससरित्पानोद्यता वा कथं
वाञ्छत्यप्यतितुच्छकाञ्जिकरसं सा स्वस्वभावादपि ॥ १७० ॥

मृत्युर्वा समुपैतु कालकलितो हालाहलं वा मुहुः व्याधिर्वा समुपैतु वज्रमथवा ब्रह्मास्त्रमभ्येतु वा।
चक्रं वा किमनेन यद्यगसुताकान्ताङ्घ्रिपूजार्चनध्यानानन्दरसप्रवाहरसिको भीतः कुतो वाभवेत् ॥

जन्मान्यप्यमितानि तानि विविधान्यायान्तु किं ते भयं
यद्यन्तःकरणं क्षणार्धमपि वा मुग्धेन्दुमौलिं व्रजेत् ।
तान्यप्यस्य सुधामधूनि सततं मन्येऽतिधन्यान्यपि
न्यस्तान्यामरपूजनस्य गिरिजाकान्तार्चकस्याधुना ॥ १७२ ॥

कल्याणं कथयामि तावदधुना कामान्तकाराधनात्
कः कामान्तकपूजने न कमपि प्राप्नोति कामं यम ।
कामप्रापकमेवमेव जगतां कामान्तकं मेनिरे
सर्वे ते मुनयः सुरासुरगणाः सिद्धा मुनीन्द्रा अपि ॥ १७३ ॥

यत्र स्याद्गमनं विधेर्विधिबलात् तत्रान्तकस्यान्ततो
बिल्वीकोमलपल्लवैर्जललवैर्लिङ्गार्चनं जायते ।
एतस्मादधिकं किमस्ति सुकृतं तन्नैव जाने परं
तेनैवामृततामुपैमि शिवतां प्राप्नोमि सत्यं यम ॥ १७४ ॥

एतस्मात् किमिहास्त्यपूर्वममराधीशो महेशो मुहुः
भाग्यैः स्मर्यत एव दुःखविलयः सञ्जायते तावता ।
मुक्तिः सा करपङ्कजामलकतां प्राप्नोति यान्त्याधयो
दूरादेव लयं प्रयात्यघकुलं निर्मूलमापत्कुलम् ॥ १७५ ॥

धन्यं तावदिदं दिनं यम सुधातुल्यं विशल्यं गतो
मारारिस्मरणादिना गतमतः पापातिभीतिः कुतः ।
तत्तावद्विपुलातपत्रममलं धृत्वा कलत्रं हरे-
रीशाराधकसेवकाननुपदं प्रीत्यानुधावत्यपि ॥ १७६ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे श्रीगुरुपयोर्नित्यव्रतशिवरात्रिव्रतमहिमा-यमभृगु-
संवादवर्णनं नाम द्विचत्वारिंशोऽध्यायः ॥

## अथ त्रिचत्वारिंशोऽध्यायः ।

सत्यव्रतः —

इति तद्वचनं श्रुत्वा यमो विगतकल्मषः । विभूतिभूषणं प्राह भृगुं शिवपरायणम् ॥ १ ॥

यमः —

मन्येऽहं त्रिपुराराातिस्मृतिमेवातिपावनीम् । तां पुण्यवाहिनीं प्राहुः सा सुधावाहिनी न किम् ॥

तिरस्करोति सा तावत् स्मृताप्यमरवाहिनीम् । चतुर्वर्गफलाकारकल्लोलाकुलसंकुला ॥ ३ ॥

पुनः पुनर्वद मुदा त्रिपुराशतिपूजने । यत् फलं तत् फलं श्रोतुं प्रवृत्तमधुना मनः ॥ ४ ॥

शिवमाहात्म्यपीयूषपानपीनं मनोऽपि मे । अतृप्तमेव विरतिं पुनः कर्तुं न वांछति ॥ ५ ॥

इति तद्वचनं श्रुत्वा भृगुः शिवमनुस्मरन् । महादेवकथासिन्धुं संस्मरन् प्रीतमानसः ॥ ६ ॥

भृगुः —

महेश्वरापारकथानिधीनामन्तो न दृष्टोऽस्ति न मध्यभागः ।
आदिश्च नैवावधृतो मया तु वेदैरपारैरपि सेतिहासैः ॥ ७ ॥

कैलासवासनिरताः प्रमथाः प्रभातमारभ्य शङ्करकथासुधया दिनानि ।
नीत्वा वसन्ति गिरिशोऽपि नयत्यपारान् कल्पान् तथापि न समाप्तिकथा कदापि ॥ ८ ॥

पुरा कैलासशिखरे रत्नप्रासादमण्टपे । कल्पद्रुमसमुत्पन्नकुसुमासारसंवृते ॥ ९ ॥

रत्नसिंहासनासीनं प्रसन्नवदनं मुदा । संपूर्णपूर्णकामं तं ददर्श गिरिजा शिवम् ॥ १० ॥

अपाररत्नाभरणं प्रभाराशिविराजितं । स्मेरधारापरिक्रान्तं दिव्याधाराविराजितम् ॥ ११ ॥

राजीवराजिकल्लोलमालया समलंकृतम् । सरस्तीरे लिङ्गमेकं पश्यन्तं मुहुरादरात् ॥ १२ ॥

सच्छत्रमण्डलाकारमणिकान्तिविराजितम् । चामराकारकाश्मीरप्रभामण्डलमण्डितम् ॥ १३ ॥

सुमेरुशिखरस्पर्धिगौरीकुचसमप्रभम् । तदङ्गालिङ्गनासक्तं बभाषे वचनं शिवा ॥ १४ ॥

गौरी —

स्वामिन् महेश कृपया त्वया शिवकथासुधा । निर्मिता सा मुहुः प्रीता न तृप्तिरुपजायते ॥

ब्रह्मकल्पाश्च बहवः कथाकथनलीलया । नीतास्तद्गणनास्तावत् न कर्तुमिह शक्यते ॥ १६ ॥

कथासुधाराशिरपूर्व एव दिने दिने नूतनकौतुकानि ।
करोति नान्तोऽपि न मध्यभागः तस्यादिभागो न च चन्द्रमौले ॥ १७ ॥

शिवकथामृतराशिविवेचने चतुरमेव मनोऽपि ममाधुना ।
किमिदमेतदिति स्मयसंयुतं कथय तत्वमिहाशु सदाशिव ॥ १८ ॥

इत्यम्बिकावचनरत्नमनोज्ञहारं कर्णावतंसमसकृद्गिरिशोऽनुभूय ।
स्मृत्वा पुनः पुनरुमावचनामृतेन तृप्तोऽप्युवाच वचनैरभिनन्द्य गौरीम् ॥ १९ ॥

श्रीसदाशिवः —

गिरिराजकुमारिके वचः परमं तावदिदं शृणु प्रिये ।
प्रियमेव वदामि सावधानं धनमेतन्मम सत्यमेव नूनम् ॥ २० ॥

वेदास्तावदनन्तास्ते सर्वे शिवकथामयाः । अतस्तदादिमध्यान्ताः श्रुता अपि न सर्वथा ॥ २१ ॥
कथासुधासमुद्रेषु सूक्ष्मा विन्दुसमा कथा । श्रुता कल्पेष्वपारेषु गतेषु विविधेष्वपि ॥ २२ ॥
मत्कथाकथने गौरि ममापि सहसा तथा । न शक्तिरिति विद्धि त्वं तत्पारादर्शनादपि ॥ २३ ॥
मत्कथापारगामित्वं न ममापि तथा सति । को वा तत्पारगो भूयात् गिरिजे तं वदाधुना ॥

नास्माकं प्रलयादिभीतिरगजे कल्पाः प्रयान्ति प्रिये
ते तावद्यदि कोटिशोऽपि विलयं यास्यन्ति का तावता ।
हानिः स्यादसकृत् कथाकथनतो नेयं दिनं कोटिशः
कल्पाश्चेत् दिनकोटिभाग इति मे सर्वामराणामपि ॥ २५ ॥

निगमैरपि विज्ञेयो विभवो न ममाम्बिके । तस्मादाद्यन्तरहितो विभवो मम सर्वथा ॥ २६ ॥
उक्ता नोक्ता कथा गौरि मया तावत् पुनः पुनः । सिद्धैव नूतना प्रोक्ता कापि कापि कथासुधा ॥

लिङ्गार्चनस्य महिमा हिमशैलकन्ये नान्तं प्रयाति न तदादिकथा तथा च ।
तन्मध्यभागकथनावसरः कदा वा भावी भविष्यति कथं कथयाशु मह्यम् ॥ २८ ॥

एवमुक्ता भवानी सा महादेवेन सादरम् । आनन्दसागरेणाशु सम्यगालिङ्गिता मुहुः ॥ २९ ॥

अतः कथं वा तव शङ्करस्य कथां कथञ्चित् प्रवदामि यस्याम् ।
स्मरामि शुद्धं हृदयं करोमि जिह्वां तथेमां मधुरां करोमि ॥ ३० ॥

अहो शिवकथासुधानिधिरपारपुण्यैरयं स्मृतोपि तनुते मुदं किमिदमत्र चित्रं कृतम् ।
शिवेन च दयालुना शिवजनैकसञ्जीविनी कृता शिवकथात्मिका मधुरवाहिनी सा कथम् ॥ ३१ ॥

मन्ये शिवाराधनमेव शुद्धं शुद्धं करोति प्रवरं च सिद्धम् ।

तत्तुल्यमन्यन्न मया श्रुतं च वेदान्तवाक्यैरपि कोटिशोऽपि ॥ ३२ ॥

शिवार्चनं धनं काल निधयोपि शिवार्चनम् । शिवार्चनं सुधा नूनं मोक्षोऽपि शिवपूजनम् ॥

शिवार्चनेनैव कृताः कृतार्थाः शिवार्चनेनैव सुखांबुराशिः ।
उद्वेलतामेति न संशयोऽत्र तस्य प्रभावं शिव एव वेद ॥ ३४ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । तं सुधासागराकारं शृणु शङ्करमर्चय ॥ ३५ ॥

पुरा गोदावरीतीरे गौतमं मुनिपुङ्गवम् । त्रियम्बकार्चकं दृष्ट्वा प्राह नारायणः स्वयम् ॥ ३६ ॥

पूजयित्वा महादेवमुपचारैरनेकधा । प्रणम्य बहुधा श्रान्तं स्वेदधारासमावृतम् ॥ ३७ ॥

नारायणः —

कुतः समागतं विद्वन् श्रमोऽपि त्वयि दृश्यते । शिवा तीर्थाटनेनैव सदा कालः प्रयाति हि ॥

किं किमद्य शिवस्थानं त्वया दृष्टं महामुने । किं किं लिङ्गं पूजितं च बहुभिः साधनैर्मुदा ॥

क्वापूर्वं वा त्वया दृष्टं यदुत्साहकरं परम् । वद निश्चित्य मनसा स्मृत्वा स्मृत्वा पुनः पुनः ॥

गौतमः —

शिवभक्ताय वक्तव्यं कौतुकं यदहेतुकम् । तदिदानीं शृणु प्रीत्या भक्तोऽसि कमलापते ॥ ४१ ॥

नेत्रारविन्देन शिवांघ्रिपद्मं त्वया समभ्यर्चितमादरेण ।
एतादृशस्त्वं शिवभक्तभक्तो मुक्तिप्रपारूपकथां शृणुष्व ॥ ४२ ॥

पूर्वेद्युरद्भुतं दृष्टं दुरदृष्टविनाशकम् । अस्मिन् गिरिवरे रम्ये चत्वारो वानराः स्थिताः ॥ ४३ ॥

तैरानीतानि रम्यणि विल्वपत्राण्यनेकशः । कृतं लिङ्गार्चनं भक्त्या रसैर्जलफलैरपि ॥ ४४ ॥

ततः प्रदक्षिणीकृत्य नमस्कृत्य महेश्वरम् । उपविष्टाः शिवध्यानं कृत्वा भस्मविभूषणम् ॥ ४५ ॥

तन्मध्ये कश्चिदाहान्यान् शिवलिङ्गावलोकनम् । कृत्वा भस्म ललाटादौ धृत्वा स्मृत्वा महेश्वरम् ॥

वानरः —

मया निमीलिताक्षेण स्वप्ने दृष्टो महानिह । कश्चिदत्रागतः शैवः शिवनामजपोत्सुकः ॥ ४७ ॥

भूतिरुद्राक्षपूताङ्गः लिङ्गं दृष्ट्वा समर्चितम् । तेन विल्वदलैर्दत्तं कोमलं लिङ्गमस्तके ॥ ४८ ॥

एतादृशं विल्वपत्रं माघासितचतुर्दशीं । प्राप्य रात्रौ शाङ्गलिङ्गं नत्वा मुक्तो भवेत् ध्रुवम् ॥ ४९ ॥

कुतः केन समानीतोऽप्यारक्तो विल्वपल्लवः । तस्यै नमः पुनस्तस्मै सविल्वतरवे नमः ॥ ५० ॥

अद्यैव गत्वा द्रष्टव्यो विपिने विल्वभूरुहः । जलादिभिः पोषणीयो यथायोषं प्रयत्नतः ॥ ५१ ॥

अतः परं समायाति मासि मासि चतुर्दशी । तैरीशपूजा कर्तव्या तत्र विल्वदलैर्नवैः ॥ ५२ ॥
तदिदं नार्मदं लिङ्गं नेयं तत्र वने मुदा । विल्वमूले स्थापनीयं स्थातव्यं तत्र सर्वदा ॥ ५३ ॥
अतः परं भाविनी वा कदा भूता विभूतिदा । तावच्छरीरमेतन्मे रक्षणीयं प्रयत्नतः ॥ ५४ ॥

कथं तावद्भाग्यं भवति बहुपुण्याम्बुधिकृतम् तथा भूता भूता नवविमलविल्वीदलकुलम् ।
तथा शार्ङ्गं लिङ्गं तदिदमतितुङ्गं तनुरियं चतुर्णां योगोऽयं शिवकरुणया जायत इति ॥ ५५ ॥

यदि प्रपश्याम्यमितैरपूर्वैः पुण्यैः सदा विल्वदलैः स्वलिङ्गम् ।
तदा जितो मृत्युरघाद्रिनाशो जातोऽपि जातिस्मरतापि मुक्तिः ॥ ५६ ॥

तत् साधनीयं बहुभिः प्रयत्नैः नो चेदिदं जन्म वृथा जनानाम् ।
तस्मादवश्यं शिवलिङ्गविल्वैः तद् दुर्लभं जन्मनि जन्मनीति ॥ ५७ ॥

कश्चित्पूर्वभवार्जितैः बहुविधैः पुण्यैः शिवाराधनं कृत्वा मृत्युतिरस्क्रियामपि मुहुर्जन्मादिदुःखक्षयम् ।
पश्यत्येव महानिधिं त्रिनयनं संपूज्य विल्वीदलैः भूतायां धृतभूतिपूतहृदयः शुद्धोऽसितायां मुहुः ॥

महेश्वरानुग्रहभाजनानां तत्पुण्यलाभो भवतीति मन्ये ।
अतः कथं तादृशमस्ति पुण्यं कथं तदन्वेषणचिन्तनं वा ॥ ५९ ॥

एवमुक्तो महादेवं नत्वा भूयः प्रयत्नतः । क्व विल्वतरुरस्तीति निर्गतः शिवमन्दिरात् ॥ ६० ॥
एवं स्वप्ने मया दृष्टं शरीरं पुलकाङ्कितम् । आनन्दोपि प्रवृद्धो मे तत्कथाश्रवणादिह ॥ ६१ ॥
इत्युक्तं तद्वचस्तावत् श्रुतमेव मया हरे । तदानीमागतः कश्चित् भिल्लो जालकरः खरः ॥ ६२ ॥
स तानागत्य जालेन गृहीत्वा गन्तुमुद्यतः । तमाह वानरः कश्चित् कुशलो भिल्लमास्तिकः ॥

वानरः —

किमस्माकं कृत्यं वद वद मुदा भिल्ल वचनैः शिशूनां क्रीडार्थं मृडसदननिर्माल्यमधुना ।
विनेतुं जातं मे गमनमधुना तेऽपि शिशवः प्रतीक्षां कुर्वन्ति प्रतिलवमहो मातृनिकटे ॥ ६४ ॥
इदं निर्माल्यमादाय धृत्वा शिरसि केवलम् । धृत्वा भूतिं स्तन्यपानं कर्तुमिच्छन्ति बालकाः ॥
वनिता गुर्विणी साधो सा साध्वी विल्वपल्लवम् । जग्ध्वा शिवार्चितं पुत्रान् सुषुवे तत्तदौषधम् ॥
पुत्राः शिवरता एव भवन्त्विति विशेषतः । सा तावच्छिवनिर्माल्यभोजनप्रवणा सती ॥ ६७ ॥
मया गृहीत्वा निर्माल्यं तत्र गन्तव्यमादरात् । देयं तेभ्यस्ततस्ते स्युः स्तन्यायाभ्युद्यता अपि ॥
स्तन्याभावे शिशूनां तु न जीवनमिति स्मर । अतस्त्यजाधुना तेषु कृपा यदि भवेत् तदा ॥

इति तद्वचनं श्रुत्वा कौतुकं स धनुर्धरः। स्थितो जालांश्च विच्छिद्य तन्मध्ये ते विनिर्गताः॥
त्वरया ते वनं गत्वा बिल्वानारुह्य भूरुहान्। विचारनिरता जाताः ते सर्वेऽपि परस्परम्॥

वानराः —

अहो कथं स्वप्नकथा श्रुता सा तत्रापि भूतानिशि बिल्वपूजा।
सा दुर्लभेत्युक्तमघापहारो शक्त्यापि मुक्त्यै भवतीति सत्यम्॥ ७२॥

संभाविता एव भवन्ति विघ्नाः शिवार्चनेनैव स विघ्ननाशः।
अपेक्षितः स्यादिति चिन्त्यतेऽपि कथं भविष्यत्यधुना वदैवम्॥ ७३॥

इत्युक्त्वा ते स्थितास्तत्र निहताश्च शनैस्ततः। क्व गताः स विचारोऽपि कर्तव्य इति भाति मे॥

भृगुः —

इति तद्वचनं श्रुत्वा स विष्णुः प्रीतमानसः। इदं कौतुकमित्युक्त्वा गौतमेनान्वितो ययौ॥
यत्र ते शरघातेन पीडितास्तरुकोटरे। पातितांस्तान् विलोक्यायं गौतमः प्राह माधवत्॥ ७६॥

गौतमः —

एषां शरकृता पीडा यथा न स्यात् तथा त्वया। कर्तव्यं पालनं धर्मः सोऽयमत्यन्तदुर्लभः॥

ये पूजयन्ति शिवमादरपूर्वकं ते वन्द्या भवन्ति सततं परिपालनीयाः।
जातिर्न तावदधुना तु विचारणीया किं जातिभेदविषयेण विचिन्तनेन॥ ७८॥

इति तद्वचनं श्रुत्वा चकार परिपालनम्। सोऽपि नारायणस्तेषां गौतमेन सहादरात्॥ ७९॥
ततः कालेन भूतापि सा माघी समुपागता। तदानीं वानराः सर्वे सन्तुष्टाः शिवतत्पराः॥ ८०॥
सेयमभ्यागता पूता पुण्यभूता शिवप्रदा। शिवरात्रिमिमां दृष्ट्वा धन्याः स्मो नात्र संशयः॥
इत्युक्त्वा सायमभ्येत्य वृद्धगङ्गाजलं मुदा। स्नात्वा चक्रुर्ललाटादौ दवभस्मत्रिपुण्ड्रकम्॥ ८२॥
ततः परं बिल्वपत्राण्यादाय विमलान्यपि। आगताः शिवपूजार्थं तस्मिन्नेव त्रियंबके॥ ८३॥
तदा शिवालये कश्चित् पुलस्त्य इति विश्रुतः। कृत्वा द्वारनिरोधानि चकार शिवपूजनम्॥ ८४॥
पूजां कृत्वा मुनिश्रेष्ठः कृत्वा यामत्रयावधि। प्रणामान् कर्तुमीशाय द्वारमुद्घाट्य निर्गतः॥८५॥
तदा तान् वानरान् दृष्ट्वा शिवपूजोद्यतानपि। स्वाज्ञागतांश्चुकोपाथ तेन क्रोधाग्निरुत्थितः॥
क्रोधाग्निना समाक्रान्ताः ते सर्वे वानरास्तदा। [1]तत्रापीह न नाकार्यं इत्यूचुस्ते ततो मृताः॥

---

1 तत्रापि दहनं कार्यं C

ततः परं विमानानि समारुह्यातिपामराः । वानरा अपि ते प्रापुर्ब्रह्मलोकमनामयम् ॥ ८८ ॥
ब्रह्मा तानागतान् दृष्ट्वा दूरादुत्थाय सादरम् । पूजयामास यत्नेन स्वासने विनिवेश्य च ॥८९॥
तत्पूजितान् विलोक्याथ चतुर्मुखसभासदः । तमूचुः कृतकृत्यं ते विधिं शिवपदार्चकम् ॥ ९० ॥

सभासदः —

किं पुण्यमेतैः कृतमत्र येन त्वदर्चितैर्भावि किमस्ति भव्यम् ।
इदं विशिष्याद्य वदाशु येन स्यादस्मदीयं च मनः प्रहृष्टम् ॥ ९१ ॥

ब्रह्मा —

भूतायां शिवपूजनार्थमसकृद्यत्नः कृतो वानरैः
एतैरेव हि पामरैरपि तदा यत्नो वृथैवाभवत् ।
तद्यत्नात् परमागताः खलु मया सम्यक् समाराधिताः
तं यत्नं प्रवदन्ति सन्ततमहो वेदाः सुधामित्यपि ॥ ९२ ॥

एते तावदहो पुनः स बहुलक्रोधाग्नितप्तास्तदा
तं तावद्विनिहन्तुमेव बहुधा चक्रुः प्रयत्नं ततः ।
सन्दग्धाः समुपागताः पुनरमी तन्नाशनायोद्यताः
तन्नाशे सति लिङ्गपूजनरतैः प्राप्तव्यमैशं पदम् ॥ ९३ ॥

स यतिः शिवपूजान्ते पुलस्त्यः क्रोधसंकुलः । रावणो भविता भाग्यैरमितैर्लोकरावणः ॥ ९४ ॥
शिवपूजाप्रभावेन स सर्वामरदण्डनम् । करिष्यति न सन्देहो महदैश्वर्यसंयुतः ॥ ९५ ॥
अजेयो भविता लोके सुरावध्यः स रावणः । नरान्न गणयत्येव वानरांस्तु विशेषतः ॥ ९६ ॥
नारायणोऽपि भविता नरो नन्दीशशापतः । स रावणस्य हन्ता स्यात् वानरैरीदृशैः सह ॥ ९७ ॥
अयं हनुमान् भविता सुग्रीवोऽप्यङ्गदोप्ययम् । वाली सोऽयममी मुख्याः तत्सहायार्थमुद्यताः ॥
उपकारः कृतः पूर्वं तेन नारायणेन यः । वानराणां वने तेन सहायस्तस्य संस्मृतः ॥ ९९ ॥
इति तद्वचनं श्रुत्वा सर्वे विस्मितमानसाः । कथं शप्त इति प्राहुर्नन्दिकेशेन केशवः ॥ १०० ॥

ब्रह्मा —

पुरा शिवप्रसादेन वैकुण्ठं प्राप्य माधवः । रमया रममाणः सन् नररूपेण संस्थितः ॥ १०१ ॥

प्रदोषकालीनशिवार्चनानि नारायणोऽसौ रममाण एव ।
लक्ष्मीं विहाय स्थित एव दृष्टो नन्दीशभृत्यैरनिवृत्य लोके ॥ १०२ ॥

ततः कदाचित् कैलासे स्थित्वा नन्दी स्वकिङ्करान् ।
कुत्र को वा सुरः को वा किं करोतीत्याह सादरम् ॥ १०३ ॥

तत्रार्बुदाक्षः कोप्याह नन्दिकेशस्य किङ्करः । प्रणम्य दण्डवत् सम्यक् नन्दिकेशं कृताञ्जलिः ॥

अर्बुदाक्षः —

सञ्चारः क्रियते नित्यं सर्वेषु भुवनेष्वपि । दृश्यन्ते मानवाः सर्वे किन्नराश्च सुरा अपि ॥ १०५ ॥
ते तावदधुना सर्वे स्वस्वाचाररता नराः । गन्धर्वाः किन्नराः सिद्धाः मुनयोऽपि विशेषतः ॥
सुरेषु केवलं हित्वा लक्ष्मीरमणमास्तिकाः । सुराश्चाचारनिरताः शङ्कराराधनोत्सुकाः ॥ १०७ ॥
तदा तावन्मया स्वामिन् गतं वैकुण्ठमन्दिरम् । तदा स नररूपेण स्थितो नारायणो मुदा ॥
रमामालिङ्ग्य सायाह्ने शिवपूजापराङ्मुखः । स्थितो दृष्टो मया पृष्टः कोऽसीति स जगाद माम् ॥
त्वं कोऽसीत्यतिवेगेन त्यक्त्वा लज्जां तया सह । नग्नया रमया धूर्तस्तदालिङ्गनतत्परः ॥ ११० ॥
ततः परं स विज्ञातोऽप्ययं दुर्जन इत्यपि । जनार्दनः स संत्यक्तः शक्रेनापि प्रपातने ॥ १११ ॥
इदमेतादृशं दृष्टं अपूर्वममरेष्वपि । का गतिर्भाविनी तस्य वद मह्यं विशेषतः ॥ ११२ ॥
इत्युक्तं तद्वचः श्रुत्वा नन्दिकेशोऽपि विस्मितः । प्राहार्बुदाक्षमक्षीणवचनेन विचक्षणः ॥ ११३ ॥

नन्दिकेशः —

स नरो भविता लोके रामो नाम भविष्यति । असुराहृतभार्योऽपि भविष्यति न संशयः ॥
पुनः पुनः स जन्मापि संप्राप्यातीव दुःखितः । अनुतप्तो लिङ्गपूजां करिष्यति विशेषतः ॥११५ ॥

भृगुः —

इति तद्वचनं श्रुत्वा स्मृत्वा शङ्करमव्ययम् । प्रभावं शाङ्करं स्मृत्वा प्रहृष्टः काल सादरम् ॥

को वा न जानाति महेशशक्तिं तदर्चकानां च शिवार्चनं च ।
महेश्वरो वेद शिवोऽपि वेद स्कन्दो गणेशोऽपि स नन्दिकेशः ॥ ११७ ॥

शिवप्रसादलेशेन सुखं संप्राप्यते सुराः । शाङ्करावज्ञया तावन्नरकं प्राप्नुवन्ति ते ॥ ११८ ॥

ते ते नराः शङ्करपूजनेन नित्यं कृतार्थाः कृतकृत्यवन्द्याः ।
सुरासुराणामपि तेऽतिपूज्याः पूज्या भवन्त्येव मुनीश्वरैश्च ॥ ११९ ॥

अहो महद्भाग्यमुमासहायः सहायभूतोऽपि नरेषु यस्य ।
तस्यांघ्रिपद्मं त्रिदशादिवन्द्यं विशेषतः किञ्च मुकुन्दवन्द्यम् ॥ १२० ॥

शार्दूलः —

इति तद्वचनं श्रुत्वा प्रणम्य च भृगुं यमः । मामङ्गुल्या विनिर्दिश्य प्राह भूतामनुस्मरन् ॥

यमः —

का गतिर्भाविनी तस्य भार्यया भर्त्सितस्य च । चेटीकटितटाघातपीडितस्य दुरात्मनः ॥ १२२ ॥

कस्मिन् वा नरके तस्य प्रवेशः स यतो भवेत् । गतिर्नरकभोगान्ते का भविष्यति तद्वद ॥ १२३ ॥

भृगुः —

भूतात्रतत्यागत एव क्रूरो यद्यप्ययं पातकसंधराशिः ।
तथाप्यनेन श्रुतमेवमद्य माहात्म्यमीशानपदार्चकानाम् ॥ १२४ ॥

किंचास्य भार्या शिवपूजनान्ते सस्मार भर्तारममुं कथं वा ।
नाराधितोऽयं गिरिजासहायः तेनेत्यतिस्नेहवशेन दैवात् ॥ १२५ ॥

तत्कृतस्मरणगोचरो नृपः पापराशिकलितोऽपि यातनाम् ।
नैव यास्यति परन्तु दुर्दशां व्याघ्रयोनिमभियास्यति ध्रुवम् ॥ १२६ ॥

जातिस्मरोऽयं भविता यमातः शार्दूलदेहोपि शिवार्चनेन ।
कृत्वा प्रयास्यत्यमराभिवन्द्यः कैलासनाथं गिरिजासहायम् ॥ १२७ ॥

तच्चेटिकालिङ्गननिन्दनं च चकार भार्याङ्गविचिन्तनेन ।
तदङ्गसङ्गेन च चेटिकापि जातिस्मरत्वं समुपैष्यतीति ॥ १२८ ॥

तदुत्पन्नाः सुराः सर्वे तदङ्गालिङ्गनादिभिः । जातिस्मरत्वमभ्येत्य करिष्यन्ति शिवार्चनम् ॥

शांभवी तस्य या भार्या तस्याः शापेन केवलम् । शार्दूलो भविता सोऽयं रेवातीरवने यम ॥

रेवाजलस्नानकृतार्थदेहः तल्लिङ्गपूजानिरतोऽपि नित्यम् ।
तत्तीरसंत्यक्ततनुर्यमान्ते मुक्तो भविष्यत्यपि नात्र चित्रम् ॥ १३१ ॥

इति तद्वचनं श्रुत्वा मामाहूयान्तिकं यमः । प्राह गम्भीरया वाचा सन्तोषं जनयन् मुहुः ॥

यमः —

भृगुमुनिवचनेन मोचितस्त्वं पटुभटदण्डविघट्टनातिदूनः ।
परिहर हरचिन्तनेन दुःखं भज भज शङ्करमेव सावधानम् ॥ १३३ ॥

प्राप्याप्यपारैः सुकृतैर्नरत्वं अव्याहतैश्वर्यमनामयत्वम् ।

हारत्वमप्यर्धशशाङ्कमौलिं पुण्यस्वरूपाः परमर्चयन्ति ॥ १३४ ॥

यं प्राप्यापि नरत्वमास्तिकवरो माहेश्वरः केवलं
न स्यादिन्दुकलावतंसभजनासक्तोपि शक्तः परम् ।
तं तावन्नररासभं विदुरहो दुर्वीर्यमाहुर्जनं
दुर्जातं नरकालयं च स पुनः स्याद्रासभो भूरिशः ॥ १३५ ॥

इति मामाह स यमः पुण्यापुण्यनियामकः । अन्यदप्याह मामेव तद्वक्तुं नैव शक्यते ॥ १३६ ॥
एवं संभाषणेनैव कालो भूयान् गतस्तदा । दूराद् दृष्टं यमेनापि विमानमतिसुन्दरम् ॥ १३७ ॥
कोटिसूर्यप्रतीकाशं प्रभामण्डलमण्डितम् । रत्नछत्रपताकाढ्यं मुक्तामालाविराजितम् ॥ १३८ ॥
रत्नद्वारैरपारैश्च रुचिरैरभिमण्डितम् । चन्द्रमण्डलसङ्काशं दर्पणैः परिवेष्टितम् ॥ १३९ ॥
चन्द्रमण्डलमालाभिस्तारामालाभिरावृतम् । पुष्पसारसमाक्रान्तं नवमेव प्रतिक्षणम् ॥ १४० ॥
रुद्रवीणागानविद्याविशारदवरैरपि । समलङ्कृतमुत्कृष्टनाट्यनारीगणैरपि ॥ १४१ ॥
तादृशं तद्विलोक्याशु स भृगुं प्राह विस्मितः । कृतान्तः किमिदं दृष्टं अपूर्वं पुष्पकं मुने ॥
विमानमीदृशं पूर्वं न मन्नयनगोचरम् । किमिदं रत्नराशीनां नभोमण्डलमण्डनम् ॥ १४३ ॥
यस्य प्रभाभिर्भानुश्च खद्योतनिभ एव सः । तस्य प्रभा समुत्पन्ना तावद् दिङ्मण्डलेष्वपि ॥
नच नारायणस्येदं विधेरिन्द्रस्य वा भृगो । नागानां चैव नान्येषामिदं शांभवमेव किम् ॥
अशांभवविमानस्य किमेवं कान्तिरद्भुता । एवं विचारसंपन्ने तद्विमानमुपागतम् ॥ १४६ ॥
गणकोटिमहादेवध्वनयोऽपि श्रुतास्तदा । तानि तूर्याण्यपाराणि दृष्टानि विमलान्यपि ॥ १४७ ॥
तद्ध्वनिश्रवणादेव ब्रह्मा नारायणादयः । समागताः संभ्रमेण किमेतदिति विस्मिताः ॥ १४८ ॥
नारदाद्याश्च मुनयो गन्धर्वा अपि किन्नराः । समागताः संभ्रमेण तदालोकनकौतुकाः ॥ १४९ ॥
तदा दिव्यविमानस्था शिवार्चनपरायणा । दृष्टा सा राजमहिषी कालकालानुनादिनी ॥ १५० ॥
तदा तां प्रणताः सर्वे सुरा नारायणादयः । तैः स्तुता च सदा सर्वैः शिवपूजनतत्परा ॥ १५१ ॥

देवाः—

धन्याऽसि धन्यवरपूजितपादुकासि भूतामहानिशि महेश्वरपूजनेन ।
घोरं तपः खलु महेश्वरलिङ्गपूजा बिल्वीदलादिभिरपारनवप्रसूनैः ॥ १५२ ॥

हस्तौ ते शिवलिङ्गपूजनपरौ धन्यौ च मान्यौ मुहुः
नेत्रे ते शिववीक्षणेन विमले धन्यं मनस्ते यतः ।

त्वं मान्यासि जगत्त्रयेपि धरणी त्राता त्वया पावना
त्वत्पादाम्बुजवीक्षणेन वयमप्यद्यापि धन्याः खलु ॥ १५३ ॥

इति सा संस्तुता देवैर्यमेनाभ्यर्चिता तदा । इन्द्रलोकं ययौ पश्चादिन्द्रेणापि समर्चिता ॥ १५४ ॥

ब्रह्मलोकं ययौ पश्चात् ब्रह्मणा पूजिता मुदा । ययौ वैकुण्ठभवनं नारायणसमर्चिता ॥ १५५ ॥

ततः परं हरं प्राप त्वरया हरमन्दिरे । गिरिजानिकटे स्थित्वा चकार शिवपूजनम् ॥ १५६ ॥

परमानन्दमग्ना सा तदा गिरिजया सह । वासं चकार कैलासे शिवावासे सुधारसे ॥ १५७ ॥

इन्द्रलोकादिगमनं तत्कृताभ्यर्चनादिकम् । शुश्राव स यमस्तत्राप्यशरीरवचःस्तवैः ॥ १५८ ॥

तं विस्मयावहं दृष्ट्वा यमोऽप्युत्सवमादरात् । भृगुमाह विनीताङ्गो विस्मयाविष्टमानसः ॥ १५९ ॥

यमः —

केयं स्तुता नता देवैर्ब्रह्मनारायणादिभिः । किं तया वा कृतं पुण्यमीदृशोत्सवसाधनम् ॥ १६० ॥

भृगुः —

किं वक्तव्यमतः परं यम मया सा पुण्यराशिः परं
नेयत्ता खलु तत्कृतामितमहापुण्याम्बुराशेरपि ।
सा भूतानिशि लिङ्गपूजनरता तत्पुण्यमेतादृशं
येनोपेन्द्रपुरःसरा अपि पुरा तत्पादुकाराधकाः ॥ १६१ ॥

अस्यैव राज्ञो महिला सा बभूव शिवार्चनैः । भूतानिशि महेशाय तया देहः समर्पितः ॥ १६२ ॥

इति तद्वचनं श्रुत्वा यमः प्राहातिहर्षितः । कथं देहस्तया दत्तो महेशायेति सादरम् ॥ १६३ ॥

भृगुः —

रत्नानि सर्वाणि समर्पितानि तया महेशाय शिवार्चनेन ।
नीतं वयः सर्वमनाकुलेन चित्तेन तत्पुण्यसमार्जितेन ॥ १६४ ॥

यावन्ति रत्नजातानि सुवर्णाभरणान्यपि । विविधानि विचित्राणि तानि दत्तानि शम्भवे ॥

प्राज्यं राज्यं तया दत्तं शिवपूजार्थमादरात् । मातङ्गाश्च तुरङ्गाश्च दासा दास्यश्च कोटिशः ॥१६६॥

पुत्राश्च दत्ताः शर्वाय शिवपूजार्थमादरात् । नानाविधानि धान्यानि दत्तान्येव तया यम ॥

दत्तान्यमन्दगोवृन्दान्यपारा महिषीगणाः । भक्त्या शङ्करपूजार्थं तया रत्नगृहाण्यपि ॥ १६८ ॥

ततः परं स्वदेहोऽपि शङ्कराय समर्पितः । भूतामहानिशि प्रीत्या बिल्वपल्लवसन्निभः ॥ १६९ ॥

ततः प्रीतो महादेवः साम्बस्तत्कृतपूजया । विमानं प्रेषयामास गणकोटिसमन्वितम् ॥ १७० ॥

तेनैव सशरीरैव विमानवरमाश्रिता । ययौ कैलासनगरं सुराणामपि दुर्लभम् ॥ १७१ ॥
एतादृशं महद्भाग्यं शङ्कराराधनं विना । दुर्लभं देहिनां मन्ये संसारभयनाशकम् ॥ १७२ ॥
संसाराङ्गारलहरीपरिवेष्टितविग्रहाः । नाराधयन्ति गिरिशं तदिदं महदद्भुतम् ॥ १७३ ॥
एकेन जन्मना पुण्यं यत् कृतं जननावधि । तेनामरणमीशाने भक्त्यंशः कोऽपि लभ्यते ॥
तादृशान्येव जन्मानि यद्यपाराणि मानवः । प्राप्नोति तर्हि गिरिशे भक्तिः कापि प्रवर्धते ॥
तया भक्त्या महादेवं नवबिल्वदलैरपि । द्वित्रैः समर्चयन्नेव मुक्तो भवति मानवः ॥ १७६ ॥

रत्नैर्वा मणिभूषणैरपि मणिछत्रैर्वितानादिभिः
मुक्तालंकृतचामरैरगणितैः स्रग्भिस्तथा चन्दनैः ।
तृप्तो न त्रिपुरान्तकः खलु नवैर्बिल्वीदलैः कोमलैः
नीरैर्हारसमर्पितैः परमयं तुच्छैर्भवानीपतिः ॥ १७७ ॥

आनन्दाम्बुधिरेव शङ्कर इति ज्ञातं ततः किं नरैः
तस्मै देयमदेयमेव सकलं देयं तदीयं यतः ।
स्वत्वं कस्य धनेषु तिष्ठति धनं कस्यापि लोकत्रये
गौरीनायक एव काल धनिकः कालान्तकः केवलम् ॥ १७८ ॥

अपारमैश्वर्यमुमासहायपादारविन्दार्चनलभ्यमेव ।
ऐश्वर्यदानेन कथं स देवः तुष्टो भवेद्भक्तिलवं विनापि ॥ १७९ ॥

भक्त्या दत्तं काल बिल्वीदलं वा मूर्ध्ना धत्ते शङ्करः शङ्करोऽयम् ।
एतत्तुल्यः कोऽपि देवेषु देवो नास्तीत्येव प्राह वेदोऽपि नूनम् ॥ १८० ॥

फालाक्षे सति कोऽन्यदेवभजनासक्तो भवेद्भूतले
त्यक्त्वा जारजमेव केवलमजोपेन्द्रादिदेवार्चिते ।
रत्नं किं परिहृत्य काचशकले वांछन् जनो जीवनं
धन्यं किं मनुते जनैरभिनुतः किं तादृशो जायते ॥ १८१ ॥

जायन्ते जननादिदुःखनिधयस्त्यक्त्वा शिवाराधनं
दुःखाम्भोधिपराभवाय बहुधा भावः प्रवृत्तो मुहुः ।
धीरेशं नवबिल्वकोमलदलैरभ्यर्चयेत् सादरं
द्वारा हारविशेषभूषितवपुः प्राप्तुः समर्था अपि ॥ १८२ ॥

लक्ष्मीकान्तचतुर्मुखादिकसुरान् वीरेश्वराराधकः
प्रायः कारुणिकः करोति यवसप्रायान् यमानामयः ।
तत्तुल्यस्तु स एव तेन विदितं तत्वं कथञ्चित् प्रभोः
शम्भोर्यत्तदपारदिव्यमहिमा पारं गतो भूतले ॥ १८३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे भृगुयमसंवादे शिवरात्रिमहिमवर्णनं नाम त्रिचत्वारिंशोऽध्यायः ॥

## अथ चतुश्चत्वारिंशोऽध्यायः ।

— :×: —

सत्यव्रतः —

इति कालो भृगोर्वाक्यं आकर्ण्य स सुधामयम् । अवाप परमानन्दं आनदाश्रुसमाकुलः ॥ १ ॥

यमः —

भूतं भव्यं भविष्यच्च केन ज्ञातं त्वया भृगो । शिवतत्वं विशेषेण तन्मे ब्रूहि विशेषतः ॥ २ ॥
रहस्यमपि तन्मह्यं वद सादरमास्तिक । तत् कौतुकानां निलयं सर्वथेत्यवगम्यते ॥ ३ ॥

भृगुः —

गोपनीयं प्रयत्नेन यदेतदधुनोच्यते । अभक्ताय न वक्तव्यं अश्रद्धानिलयाय च ॥ ४ ॥
शाङ्करायातिशुद्धाय भूतिरुद्राक्षधारिणे । वक्तव्यं तद्रहस्येषु शिवस्थानेषु केवलम् ॥ ५ ॥
यस्माल्लिङ्गात् समुत्पन्नाः सर्वे देवाः पिनाकिनः । वेदाश्च यज्ञा ऋषयो गन्धर्वाः किन्नरा अपि ॥
पृष्टः कूटेन किं तेन कोटिशः प्रभवन्त्यपि । तस्मादेव विलीयन्ते तस्मिन्नारायणादयः ॥ ७ ॥
यस्माल्लिङ्गात् समुत्पन्नं ब्रह्मनारायणादिकम् । चराचरात्मकं विश्वं तत्पूजा सर्वसिद्धिदा ॥

लिङ्गाराधनमेव केवलमुमाकान्तप्रियं तत् सुरैः गन्धर्वैरपि किन्नरैरपि कृतं सिद्धैर्मुनीन्द्रैरपि ।
तस्त्यागात् पतिता भवन्ति तदविज्ञातं न हारैर्विना तद्भिन्नैस्तदपारपुण्यविभवैः तावत् परं गृह्यते ॥

व्रतं शिवाराधनमेव येषां तेषां न संसारभयानि काल ।
तेन व्रतेनैव विमुक्तिरन्ते भुक्तेषु भोगेष्वखिलेषु तेषु ॥ १० ॥

अन्यो धर्मो न स्फुरत्येव नूनं वेदैर्धर्मैः शङ्करः केवलो यः ।
तेनैव स्यान्मुक्तिरित्येव मन्ये कोऽन्यो धर्मस्तादृशो वेदवेद्यः ॥ ११ ॥

रहस्यमन्यत् प्रवदामि काल यः कालकालार्चनतत्परो न ।
तं जारजं विद्धि विशेषतस्त्वं सत्यं मयोक्तं शपथः शिवेऽपि ॥ १२ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । कौतुकं शृणु वक्ष्यामि कालकालान्तक प्रिय ॥ १३ ॥
आर्यावर्ते पुरा कश्चित् वेदवेदान्तपारगः । सर्वशास्त्रार्थतत्त्वज्ञः शिवध्यानपरायणः ॥ १४ ॥
सत्यमूर्तिरिति ख्यातः सत्यप्रवणमानसः । ऋतं सत्यमिति ज्ञातं तेन तत्त्वं शिवात्मकम् ॥ १५ ॥
वेदार्थनिश्चयस्तेन शास्त्रैरादौ कृतो मुहुः । ततः परं शिवस्तेन सर्वाराध्य इति स्मृतः ॥ १६ ॥
सर्वेऽप्याराधका एव शङ्करस्यामराः परम् । समाराध्यः स एवेति सर्वथाप्यवधारितः ॥ १७ ॥
अध्यापितानि शास्त्राणि शाङ्कराणि मनीषिणा । तेनैव शिवविद्यायां निपुणेन महात्मना ॥ १८ ॥
तस्य पुत्राः समुत्पन्नाः शतं तेष्वेकमन्तितम् । पुत्रं विहाय ते सर्वे पुत्राः शिवपरायणाः ॥ १९ ॥
भूतिरुद्राक्षवीताङ्गाः शिवलिङ्गार्चनप्रियाः । शिवशास्त्रप्रवीणाश्च शिवव्रतपरायणाः ॥ २० ॥
सर्वे भूतव्रतप्रीताः सर्वे भूतिविभूषणाः । शङ्कराराधनं तेषां व्रतं नान्यद्व्रतं यम ॥ २१ ॥
नियमः शिवपूजायां तेषामाजन्म निश्चितः । निरता एव ते सर्वे शिवधर्मे विलक्षणे ॥ २२ ॥
शिवव्रतं व्रतं तेषां तन्नारीणां विशेषतः । कालः शिवार्चनेनैव नीयते ताभिरादरात् ॥ २३ ॥
स विप्रस्तान् सुतान् दृष्ट्वा शिवनामाङ्कितान् मुहुः । सन्तोषं परमं प्राप मुक्तितुल्यमनामयम् ॥
शिवलिङ्गार्चनोद्युक्तान् भूतिरुद्राक्षभूषणान् । पुत्रानालोक्य सन्तुष्टो नर्तनं स करोत्यपि ॥ २५ ॥
मत्तुल्यो भुवि को वा स्यात् कुमाराः शाङ्कराः परम् । तद्द्वारा अपि ते नित्यं शिवध्यानपरायणाः ॥
स कदाचित् समाहूय पुत्रानालिङ्ग्य सादरम् । प्राह सन्तुष्टहृदयः सन्तोषं जनयन् परम् ॥ २७ ॥

सत्यमूर्तिः —

मत्प्रार्थितं चिन्तितमेव नूनं महेश्वराराधनमेव धर्मः ।
धर्मान्तरत्यागमतिर्ममाभूत् यतोऽस्मि धन्यो भुवनत्रयेऽपि ॥ २८ ॥

धर्मो ममायं परिपालनीयो भवद्भिरत्रादरपूर्वकं मे ।
श्रोतव्यमेतद्वचनं ममान्यत् न प्रार्थनीयं भुवनत्रयेऽपि ॥ २९ ॥

शिवार्चनेनैव सदा विनेयः कालः सदा तेन स कालकालः ।
तुष्टो भवत्येव स मुक्तिदाता भोगप्रदातापि स एव पुत्राः ॥ ३० ॥

नान्यः शरण्यो जगतां कुमाराः शिवः शरण्येषु वरेण्य एव ।

केऽमुं विहायान्यमुपाश्रयन्ति तान्नैव जाने जगतीतलेऽस्मिन् ॥ ३१ ॥

शिवार्थमेव प्रयता भवन्ति शिवार्चनेनैव तदाप्तिरिष्टा ।
शिवप्रदाता न शिवेतरः स्यात् अतः शिवाराधनमेव कार्यम् ॥ ३२ ॥

कोवा न स्यात् शांभवो भूरिपुण्यैः तेषां तावत् तत्फलं शांभवत्वम् ।
तच्चेन्न स्यात् तेषु पुण्येषु तावत् तत् पुण्यत्वं दुर्लभं सर्वथापि ॥ ३३ ॥

को वा शिवाराधनकेन तुल्यो वेदेष्वशेषेष्वपि धर्मवर्यः ।
य एव तेनैव भवन्त्यभीष्टाः तस्मात्तमेवोत्तममामनन्ति ॥ ३४ ॥

त्यक्त्वा जारजमेकमेव कुमतिं सर्वे परं शाङ्कराः
तत्वज्ञाश्च शिवार्चकाश्च सततं लिङ्गार्चनात्युत्सुकाः ।
एतत्पुण्यसमं न पुण्यमिति मे पुण्येन पुण्यात्मना
जाता बुद्धिरतः परं शिवपरैः स्थेयं गृहे सादरम् ॥ ३५ ॥

शरीरमेतत् खलु जातमेव जीर्णानि तूर्णं गिरिजासहायः ।
अनुग्रहं मे न करोति शक्तिः शिवार्चनादिष्वधुनातिदूरम् ॥ ३६ ॥

अतः परं यन्मदनान्तकस्य पुरं पुराणां प्रवरं तदेव ।
संसेवनीयं सुरवाहिनी सा यत्रोत्तरं सा प्रवहत्यपारा ॥ ३७ ॥

तत्रैव नित्यं मणिकर्णिकायां स्नानं नवैर्बिल्वदलैर्नवैर्वा ।
विश्वेश्वराभ्यर्चनमद्य कार्यं कार्यान्तरं नास्य विशेषतस्तु ॥ ३८ ॥

शिवप्रसादेन कुमाररूपं भाग्यं तदन्यच्च विशेषतस्तु ।
प्राप्तं किमन्यन्मम साध्यमेकं काशीपुराधीशमुपाश्रयामि ॥ ३९ ॥

तामन्नपूर्णां शरणागतार्तिप्रहाणदक्षां शरणं व्रजामि ।
तं ढुण्ढिराजं शरणं व्रजामि तं चाविमुक्तं शरणं व्रजामि ॥ ४० ॥

वीरेश्वरं तं शरणं व्रजामि बिल्वीदलैः सादरमर्चयामि ।
नृत्यं करोमि प्रणतः शिवाग्रे स्मराधुना मां स्मर शङ्करेति ॥ ४१ ॥

[1] व्रजामि विकटागौरीचरणाम्बुरुहं मुदा । भजामि सङ्कटां गौरीं वन्दे सिद्धेश्वरीमपि ॥ ४२ ॥

---

1 भजामि ।

श्रीकालभैरवं वन्दे सर्वाभीष्टदमादरात् । वन्दे मुहुर्मुहुर्वन्दे वक्रतुण्डं विनायकम् ॥ ४३ ॥
कृत्तिवासेश्वरादीनि यानि लिङ्गानि कोटिशः । काश्यां तानि प्रपश्यामि कृत्यमन्यन्न मे सुताः ॥

या रम्या गिरिराजराजतनयाकान्तप्रिया सा पुरी
काशी सा प्रथिता तथैव कथिता वेदैरपारैरपि ।
श्रोतव्या पुनरादरेण बहुधा संसेवनीया मया
नेयं स्यादवशिष्टमस्य च वयः कायव्ययायास्तु सा ॥ ४५ ॥

किं काशीनगरीविलोकनरतो न स्यात् तपस्याफलं
काशीवासमिति ब्रुवन्ति मुनयो वेदाश्च सिद्धा अपि ।
तं वा संप्रवदन्ति वासवमुखाः प्राप्यं तमीडे परं
कर्तव्यं च न दृश्यते खलु मया संसारविच्छेदकम् ॥ ४६ ॥

ज्ञातः शङ्करपूजनेन बहुधा संसारदुःखक्षयः कालान्मे न भयं शिवार्चनरतः किं कालभीतो भवेत् ।
यद्यप्येवमथापि मे शिवपुरी मल्लोचनागोचरा जातायाः कथमित्यपारविविधक्लेशास्पदं मानसम् ॥

भृगुः —

इत्युक्तं तद्वचः श्रुत्वा कुमारास्तातमादरात् । प्रणेमुर्दण्डवद्भूमौ ऊचुरानतकन्धराः ॥ ४८ ॥

कुमाराः —

अस्माकं किमिहास्ति कृत्यमधुना काशीपुरीनायका-
लोकालोकनलोलमानसयुतैर्नेत्रैः पवित्रैः परम् ।
द्रष्टव्या खलु काशिकापि कमलैर्बिल्वीदलैः कोमलैः
काशीनायकपूजनं प्रतिदिनं कर्तव्यमत्यादरात् ॥ ४९ ॥

इत्युक्त्वा प्रस्थिताः सर्वे पुत्राः काशीपुरीं प्रति । पित्रा मात्रापि संयुक्ताः ते युक्ताः पुण्यकोटिभिः ॥
तदानीं यः कनिष्ठोऽभूत् तत्पुत्रः स तु दुर्जनः । न गन्तुमुद्यतः साकं तैः सहातीव दुष्टधीः ॥
न शिवाराधनासक्तः स शक्तोऽप्यतिदुष्टधीः । तं विलोक्य पिता प्राह दूरादाहूय दुःखितः ॥

सत्यमूर्तिः —

रेरे बालक दुष्टात्मन् का गतिर्भाविनी तव । सर्वथा विमुखस्त्वं तु भवानीरमणार्चने ॥ ५३ ॥

यः शाङ्करलिङ्गार्चनतत्परः स्यात् स एव धन्यश्च स एव मान्यः ।
मन्ये तदन्यं खलु जारजं वा श्वपाकजं वा शपथः शिवेऽपि ॥ ५४ ॥

इत्युक्तं तद्वचः श्रुत्वा सोऽपि निर्विण्णमानसः । प्राह तं पितरं नत्वा खिन्नचित्तः कृताञ्जलिः ॥

पुत्रः —

न रतिर्जायते नूनं शङ्कराराधने मम । न काशीनगरं गन्तुं तद्बीजं वद मेऽधुना ॥ ५६ ॥

शाङ्कराग्रेसरस्यापि पुत्रः खल्वस्मि ते तथा । भ्रातरः शाङ्करा एव दौर्भाग्यं मे किमीदृशम् ॥५७॥

किमेतेन शरीरेण किं कुलेन धनेन वा । किं विद्ययापि तपसा यदि भक्तिर्न शङ्करे ॥ ५८ ॥

रुद्राध्याये नाधुनाऽप्यस्य भक्तिः तेनैवेशाराधने नास्य शक्तिः ।
किं कर्तव्यं किं न कर्तव्यमेवं का वा का वा भाविनी मे गतिर्वा ॥ ५९ ॥

चिन्ता नैतज्जीवने तावदस्मिन् काये वा मे कायनाशोत्तरं मे ।
का वा का वा यातना दुर्दशा स्यादित्येवार्तं मानसं किं करोमि ॥ ६० ॥

इत्युक्तं तद्वचः श्रुत्वा सत्यमूर्तिः सुदुःखितः । पत्नीमाहूय तामाह रहस्ये सत्यभाषिणीम् ॥ ६१ ॥

जारजं प्राह वेदोऽपि मृत्युञ्जयपराङ्मुखम् । शिवाचाररतं प्राहुरजारजमिति प्रिये ॥ ६२ ॥

सदा न वासो मम मन्दिरेषु दुष्टं च नारीहृदयं विशिष्य ।
त्वदीयपापानि न वेदितानि ज्ञेयानि तावत् खलु कार्यहेतौ ॥ ६३ ॥

इदं वदाम्याशु विनिर्णयोऽस्य पापस्य काशीगमनं ममास्तु ।
चिन्ता ममेयं महती प्रवृत्ता प्राणप्रयाणावधि सर्वथापि ॥ ६४ ॥

इत्याकर्ण्य वचस्तस्य सापि पापानुतापतः । कम्पिता तं पतिं प्राह संपन्नं शिवविद्यया ॥ ६५ ॥

शारदा —

न यत्नेन कृतं पापं सत्यमद्योच्यते मया । स्वप्ने कोपि समालिङ्ग्य स्थितो मां दुष्टधीः पुरा ॥

ततः पुरुषकृत्यं च स्वप्ने वृत्तं ममाद्भुतम् । स स्वप्नो लज्जया नोक्तः तेन गर्भोऽप्यभून्मम ॥

ततः परमयं जातः सुतः शिवपराङ्मुखः । इतोऽन्यन्नाधिकं पापं स्मर्यते न कृतं मया ॥ ६८ ॥

इत्युक्तं तद्वचः श्रुत्वा सत्यमूर्तिः सुदुःखितः । अशक्यमथ विज्ञाय किं कर्तव्यमथेत्यपि ॥ ६९ ॥

ततः परं समाहूय तं सुतं शिवविद्यया । पूतं चकार सोऽप्यासीत् तया सप्रतिभस्तदा ॥ ७० ॥

एवं संशिक्षयन् पुत्रान् सत्यमूर्तिर्महामुनिः । उवास सुचिरं गेहे शिवपूजापरायणः ॥ ७१ ॥

ततः कदाचित् तत्पुत्रः शिवपूजापरायणः । आमध्याह्नं वने स्थित्वा गृहं गन्तुं समुद्यतः ॥ ७२ ॥

तदानीमुद्गतः कोपि पतङ्गः समुपागतः । पतङ्गमण्डलं हित्वा पतङ्गाच्छादनक्षमः ॥ ७३ ॥

पतङ्गमस्तङ्गतमेव मेने प्रदोषकालोऽयमिति भ्रमेण ।
सङ्कल्पपूजां स चकार तीव्रं गतः गेहं व्रतिशिववर्यः ॥ ७४ ॥

तस्मिन् गते समुत्थाय नासनं प्रददौ सती । तस्मै मध्याह्नपूजायां निरता तस्य भामिनी ॥ ७५ ॥
तदानीं तां विलोक्याह सायङ्कालोऽयमागतः । विधेयं पूजनं शम्भोः संपादय जलादिकम् ॥
इति तद्वचनं श्रुत्वा सा शिवार्चनतत्परा । नोत्थिता न बभाषे च विभूतिपरिभूषिता ॥ ७७ ॥
तदानीमाह तां क्रुद्धः शापं दास्यामि सत्वरम् । गृहाणेति तदा प्राह तत्पिता तं विलोकयन् ॥

सत्यमूर्तिः —

इयं मध्याह्नसमये शिवार्चनपरा सती । त्यक्त्वा शिवार्चनं तुभ्यमभ्युत्थानरता [1] कथम् ॥ ७९ ॥
न सायङ्कालपूजायाः समयोऽयमुपागतः । भ्रान्त्या समागतं तावदधुना तव विभ्रमः ॥ ८० ॥
इयं शिवार्चनोद्युक्ता तद्विघ्नाचरणेऽद्य मे । पापं प्रत्युत ते भावि शापशक्तिः क्व ते वद ॥
शिवार्चनात् परो धर्मो नास्ति न श्रूयतेऽपि च । तदर्चनपराः सर्वे माननीया विशेषतः ॥ ८२ ॥
पतिपूजाव्रतं तस्याः पतिर्विश्वपतिस्ततः । पतिव्रता व्रतत्यागं कथं वा कर्तुमिच्छति ॥ ८३ ॥
पतिव्रतायां शापोऽपि दत्तः स्याद्विफलः स्मृतः । स शापः स्वापकाराय दत्तः स्याद्धि न संशयः ॥
इति तद्वचनं श्रुत्वा तं प्रणम्य गुरुं सुतः । सायंकालः कथं नायमित्याहान्यदपि स्मरन् ॥ ८५ ॥
पतङ्गोऽयं पतङ्गस्य छायया परसावृतः । पश्य पश्य पतङ्गं तं येनाभूत् तव विभ्रमः ॥ ८६ ॥
एतावदपि न ज्ञातं त्वया पुत्र भ्रमादिह । कथं नु शापदानार्थमुद्यतोऽस्यविवेकतः ॥ ८७ ॥
इति तद्वचनं श्रुत्वा साश्चर्यं पितरं सुतः । कः पतङ्गोऽयमित्याह स तमाह पुनर्द्विजः ॥ ८८ ॥
अयं पूर्वभवे राजा सर्वभूमण्डलाधिपः । महदैश्वर्यसंपन्नः सर्वसौभाग्यसंयुतः ॥ ८९ ॥
कलत्राणां सहस्रेण सोऽयं संसेवितो नृपः । शिवार्चनरतास्तस्य सर्वे दाराः प्रयत्नतः ॥ ९० ॥
नृपः कामातुरो नित्यं कामभोगार्थमुद्यतः । सतु धर्ममधर्मं वा न जानाति विशेषतः ॥ ९१ ॥
तदानीं मुद्गलो नाम कश्चिदभ्यागतो मुनिः । तं दृष्ट्वा स नृपस्तूर्णं स्थितः शिवपराङ्मुखः ॥
ततस्तस्य कलत्राणि तं दृष्ट्वा मुनिपुङ्गवम् । शाम्भवं तं विदित्वापि प्रणताः शिवतत्पराः ॥ ९३ ॥
राजदारान् विलोक्यायं हारान् हारविभूषणान् । रुद्राक्षभूतिसंभूतान् प्रणतः परया मुदा ॥ ९४ ॥
अहो भाग्यमिदं दृष्ट्वा नारीणामपि शङ्करः । कथं प्रीतिरुमाकान्ताराधनायोद्यता अमी ॥ ९५ ॥

---

1 रतापि न C

इति तद्वचनं श्रुत्वा तं मुनिं ता नृपाङ्गनाः। अर्घ्यपाद्यादिभिस्तुष्टं चक्रुरादरपूर्वकम् ॥ ९६ ॥

ततस्तमूचुस्ताः सर्वाः शिवपूजापरायणाः। धर्मः को वा वदास्मभ्यमिति वेदविनिश्चितम् ॥ ९७ ॥

मुद्गलः —

पतिपूजा परो धर्मो नारीणां तु विशेषतः। पुरुषाणां तु सर्वेषां पतिर्विश्वपतिः शिवः ॥ ९८ ॥

तं विश्वपतिमेवेशं पतिं मत्वा पतिव्रताः। पूजयन्ति प्रयत्नेन प्रस्तुवन्त्यनिशं मुदा ॥ ९९ ॥

शिवपूजा परो धर्मस्तत्त्यागादेव सर्वथा। बहुपापालयो भूत्वा नरो नरकमश्नुते ॥ १०० ॥

योऽयं पतिव्रताधर्मो महेशार्चनलक्षणः। तत्त्यागान्नरके वासो भवत्येव न संशयः ॥ १०१ ॥

शिवः पतिः पिता भर्ता माता बन्धुः सखा सुहृत्। अतस्तत्पूजनं धर्मः परमः परिकीर्तितः ॥

ये ये पतिव्रताधर्माः श्रुतास्ते शांभवाः परम्। यतः परः पतिः शम्भुस्तद्व्रतं शिवपूजनम् ॥

केचित् कान्तं पतिं प्राहुः स तावदतिलौकिकः। न तस्य सेवया मुक्तिः स यतः पामरो नरः ॥

न पामरनरप्रीत्या परलोको भविष्यति। परन्तु पुत्रसंपत्तिमात्रसामान्यकारणम् ॥ १०५ ॥

पुत्रोत्पादकताशक्तिरपि तस्य न सर्वथा। सा शक्तिः शङ्करस्यैव ततः स पतिरुच्यते ॥ १०६ ॥

तदुत्पादकसामान्यं पतिं यदि वदन्ति ते। तद्योनिस्तत्पतिः किं च तद्गर्भोऽपि पतिर्न किम् ॥

तस्मात्पुत्रोत्पादकः शङ्करोऽतः भर्ता सोऽयं विश्वभर्ता महेशः।
तत्पादाब्जाराधनं तद्व्रतं स्यात्पातिव्रत्यं तेन सिद्धं व्रतेन ॥ १०८ ॥

इदं तत्वमविज्ञाय या नराधमसेवनम्। करोति पतिबुद्ध्या सा नाप्नुते सुखमक्षयम् ॥ १०९ ॥

अक्षयस्य सुखस्याशु दाता शङ्कर एव सः। तस्मात्तदर्चनं कार्यं तद्व्रतं परमं व्रतम् ॥ ११० ॥

तेनैव हि व्रतेनाशु संसारविषशोषणम्। अतस्तद्व्रतमुत्कृष्टं नारीणां च विशेषतः ॥ १११ ॥

इति तद्वचनं श्रुत्वा राजदाराः परं मुनिम्। पूजयामासुरर्घ्याद्यैः सुवर्णैरपि कोटिशः ॥ ११२ ॥

ततः परं पतिः सोऽपि पतिव्रतपरायणान्। दारान् दृष्ट्वा प्रहृष्टः सन् प्रययावाश्रमं स्वकम् ॥

ततः परं स राजापि तं गतं मुनिपुङ्गवम्। श्रुत्वा समागतो गेहं दारानाह स शाङ्करान् ॥ ११४ ॥

राजा —

किमनेन कृतं प्रीत्या मुनिना परिभाषणम्। तस्मै किमर्थं रत्नानि दत्तानि विविधान्यपि ॥ ११५ ॥

एतादृशाः समायान्ति बहवोऽपि धनात् परम्। तेभ्यः किं रत्नकोशोऽपि देय एव निजेच्छया ॥

गतः सुव्रतकालोऽपि भवद्भिर्लिङ्गपूजया। कालो विनीयते सर्वः किमेवमुचितं प्रियाः ॥ ११७ ॥

इति तद्वचनं श्रुत्वा ते सर्वेऽप्येकदा परम् । दारास्तमूचुर्धिक् धिक् ते जन्म शर्वपराङ्मुखम् ॥
मध्याह्नसमयः सोऽयमधुना शिवपूजनम् । कर्तव्यमतियत्नेन किं तेन सुरतेन नः ॥ ११९ ॥
पतङ्गोऽपि न मध्याह्ने करोति सुरतं खलु । ततोऽप्यधम एव त्वं को वा तत्र रसस्तव ॥ १२० ॥
गच्छ गच्छ पतङ्गत्वं प्राप्य क्वापि यथेच्छया । इति शप्तो नृपो दारैः पतङ्गत्वमुपागतः ॥ १२१ ॥
स सञ्चरति सर्वत्र लोकानां मोहमावहन् । सायंकालभ्रमो वृत्तः तदीयच्छायया तव ॥ १२२ ॥
अस्मिन् मध्याह्नसमये शिवपूजां पतिव्रता । करोत्येषा क्व ते शापो लगत्यस्यां विशेषतः ॥
पतिव्रतां व्रतोद्युक्तां यदि शप्तुं समुद्यतः । तदा तवैव शापोऽसौ वृथा भवति पुत्रक ॥ १२४ ॥

पतिव्रतानां व्रतसाधनानि संपादनीयानि मनोहराणि ।
देयानि तैरेव पतिः पतीनां प्रीतो भवेद्विश्वपतिः प्रभूतः ॥ १२५ ॥

अतो न जानाति विमूढचित्तः पतिं पतीनां परमेश्वरं तम् ।
अज्ञातवेदान्तविचारराशिः स पापराशिः खलु दुःखराशिः ॥ १२६ ॥

अपतिं च पतित्वेन मत्वा काश्चिद्व्रजन्ति ताः । न तेन सुखवार्तापि परलोके विशेषतः ॥ १२७ ॥

भूलोकेऽपि सुखानि तावदनिशं दास्यत्युमावल्लभो
भक्त्या पूजित एव भूतिनिटिलैर्भावैः परं भावितः ।
भर्गं भाग्यदमाहुरन्तकरिपुर्मोक्षप्रदाता ततः
सर्वेषां पतिरित्यवैमि स पतिः सर्वज्ञचूडामणिः ॥ १२८ ॥

निमित्तसामान्यमिदं वपुस्ते भर्ता परं शङ्कर एव सत्यम् ।
त्वत्तः सुखांशोऽपि न तावदस्याः संभावितः सत्यमिदं वदामि ॥ १२९ ॥

एवं सत्यपि नारीणामस्वातन्त्र्यं प्रकल्पितम् । एकाधीनतया स्थैर्यं इतीशेन महात्मना ॥ १३० ॥
तदप्यलौकिकं नैव किन्तु लौकिकमित्यतः । सुखं वस न शापस्ते तस्यां लगति सर्वथा ॥

विश्वेश्वराज्ञाविरहे कथं वा प्रवृत्तिलेशोऽपि तवाधुना स्यात् ।
ततस्तमीशं शरणं प्रयाहि विहाय मोहं मुहुरादरेण ॥ १३२ ॥

शिवव्रतघ्नो नरकं प्रयाति तथा च सा तद्व्रतमात्रनिष्ठा ।
श्रेष्ठेति मत्वा विहितं च कृत्वा वसाधुना शङ्करमन्दिरेऽस्मिन् ॥ १३३ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । वेददिण्डीरसंवादं कुमार शृणु सादरम् ॥ १३४ ॥

पुरा निषधदेशेषु कुण्डिनं नाम पट्टनम् । तद्विप्रजनसङ्कीर्णं राजमण्डलमण्डितम् ॥ १३५ ॥

निषधेशस्य ये दाराः तेषु केचन शाङ्कराः । ते शाङ्कराराधनेन नयन्ति समयं मुहुः ॥ १३६ ॥

यावदेव स्वभोगार्थे वसनान्नादिकं नवम् । तत्सर्वमीशपूजार्थं कुर्वन्त्यत्यन्तयत्नतः ॥ १३७ ॥

तदर्पितं महेशाय तद्भुक्त्वा केवलं सुखम् । संप्राप्य कालनयनं कुर्वन्ति शिवपूजया ॥ १३८ ॥

सुरते न रतिस्तेषां यथा शङ्करपूजने । भोगान्तरेऽपि न रतिस्तद्रतिः शिवपूजने ॥ १३९ ॥

पुष्पाण्यपाराण्यपि चन्दनानि समर्पितान्येव महेश्वराय ।
गृह्णन्ति निर्माल्यधिया गृहीत्वा धृत्वा शिरस्येव वसन्ति नित्यम् ॥ १४० ॥

तेषां न कार्यान्तरमस्ति किंचित् प्रातः समारभ्य शिवार्चनेन ।
कालोऽपि नीतः स निशावसानं यावत्पुनः शङ्करपूजनं स्यात् ॥ १४१ ॥

एवं शिवाचाररतान् विलोक्य दारान् स राजाऽप्यतिविस्मयेन ।
तच्चित्तवृत्त्या परिवर्तमानो ददौ स सर्वस्वमुदारबुद्धिः ॥ १४२ ॥

यद्यल्लब्धं तेन राज्ञा प्रसूनं तत्तद्दिव्यं भूषणं वा दुकूलम् ।
तत्तद् दत्तं शङ्करायातिभक्त्या दत्तं ताभिः शांभवेभ्यो विशेषात् ॥ १४३ ॥

तद्दत्तानि वसूनि यानि विविधान्यासाद्य ते शाङ्कराः
सर्वे यान्ति गृहान् यदा स नृपतिः दृष्ट्वातिहृष्टस्तदा ।
भङ्ग्याग्र्यं तदिदं महत्तरमिति ज्ञात्वा ददात्यादरात्
दारेभ्यः स वसूनि शङ्करपदाम्भोजार्चकेभ्यः परम् ॥ १४४ ॥

अशाङ्कराश्च तद्दाराः केचित् तत्सेवया परम् । सुरतादिप्रदानेन नयन्ति समयं मुहुः ॥ १४५ ॥

एतत्सुरतदानेन पादसंवाहनादिना । नेयः काल इति ज्ञात्वा तिष्ठन्त्येवातिपामराः ॥ १४६ ॥

वर्जयन्त्यपि ते तावद्भर्तारं शङ्करार्चकैः । दारैः प्रीतिर्न कार्येति धनव्ययभिया परम् ॥ १४७ ॥

यद्दत्तं धनमस्मभ्यं तदगारेषु तिष्ठति । हारदारधनं सर्वं हारैर्नीतं परं नृप ॥ १४८ ॥

इति तद्वचनं श्रुत्वा स राजा परिवर्जयन् । तान् तथैव न वक्तव्यमिति तावदुदारधीः ॥ १४९ ॥

भवतां किं प्रियं तावद्वक्तव्यं निर्विशेषतः । तत्सर्वमपि कर्तव्यमत्र नान्यविडम्बना ॥ १५० ॥

एवं नीतः कियान् कालस्तेन राज्ञा कदाचन । हारदारानुपागत्य प्राह मन्दं विनोदतः ॥ १५१ ॥

राजा —

प्रष्टव्यमेतदधुना प्रियास्तावद्वदन्तु मे । सङ्गोपनं विना सर्वं भक्तिश्चास्तु भवत्सु मे ॥ १५२ ॥
भवतां किं प्रियं तावद्वक्तव्यं निर्विशेषतः । तत्सर्वमपि कर्तव्यमत्र नास्ति विडम्बना ॥ १५३ ॥
यदेव शिवपूजार्थं यदा स्यात् समपेक्षितम् । तत् सर्वमपि दातव्यं दुर्लभं वा भवेद्भुवि ॥ १५४ ॥
न स्वर्गलोकपर्यन्तं अप्राप्यं मम सर्वथा । यदेवापेक्षितं वस्तु तदत्रानीय दीयते ॥ १५५ ॥
विनीत एव कालोऽपि भूयान् शङ्करपूजया । विरतिर्न कदाप्यत्र भवतामुपजायते ॥ १५६ ॥
दाराणां प्रायशः पुत्रेष्वपेक्षा भवतीत्यपि । श्रूयते बहुधा सा किं भवतां नोपजायते ॥ १५७ ॥
किञ्चाङ्गेष्वतिरम्येषु शिवनिर्माल्यचन्दनम् । शिवार्पितं भूषणं वा न कदापि हि दृश्यते ॥ १५८ ॥
न पुष्पमालिका दृष्टा शिवलिङ्गसमर्पिता । कण्ठे कुचतटे हारो न रत्नमणिमण्डितः ॥ १५९ ॥
भूत्या परं भूषितानि दिव्यान्यङ्गानि सर्वदा । रुद्राक्षमालिकाभिश्च किमेवमुचितं भवेत् ॥ १६० ॥
चन्दने दीयते भूतिः शिवलिङ्गसमर्पणे । तेनाङ्गानि न लिप्तानि कथञ्चिद्दूषणं तथा ॥ १६१ ॥
न शिवार्चनकालेषु युक्तं चन्दनलेपनम् । पूजान्ते लेपने दोषो न श्रुतः श्रुतिभिः खलु ॥ १६२ ॥
न रत्नाभरणानां च धारणे दूषणं स्मृतम् । शिवार्पितानि धार्याणि भूषणान्यर्पितानि किम् ॥
भुज्यते शिवनैवेद्यं इति बुद्ध्या शिवार्पितम् । इडानिभं तदिच्छामि प्रायशो न भविष्यति ॥१६४॥

दत्तं महद्भाग्यमिदं शिवेन कस्योपभोगाय मदीयमेवम् ।
कर्तुं कथं स्यादुचितं कदा वा भोगे भवेद्रत्नविभूषणानाम् ॥ १६५ ॥

इति तद्वचनं श्रुत्वा मन्दहासपुरःसरम् । मन्दमाह विचार्यैव विनोदैरलमित्यपि ॥ १६६ ॥

जन्म प्राप्तं भूरिपुण्यैर्भवेऽपि भक्तिर्जाता कापि भाग्यानि सन्ति ।
नूनं किंवा शङ्कराराधनेन नेयस्तावत् काल इत्येव मन्ये ॥ १६७ ॥

किं रत्नाभरणैर्विचित्रवसनैः किं चन्दनैर्वा फलं
स्रग्भिर्वा शिवपूजनेन तु परं स्वान्तं प्रशान्तं मुहुः ।
सन्तुष्टं खलु सन्ततं शिवपदाम्भोजार्चनैः केवलं
नेयं मे वय इत्यवैमि न सुतैः कृत्यं क्वचित् दृश्यते ॥ १६८ ॥

असाकं परलोकसाधनमिदं भूतिः परं भूषणं रुद्राक्षामलकङ्कणादिकलिता तावत् तनुस्तावता ।
श्रीपञ्चाक्षरकीर्तनेन रसना पीयूषवाञ्छामपि त्यक्त्वा तिष्ठति निष्ठुरं च हृदयं शाङ्कान्यदेवेष्वपि॥

अस्माभिः पतिरिन्दुशेखर इति ज्ञातं पतीनां पतिः देवानामपि देव एव स महादेवोऽथवा माधवः ।
पूज्यः स्यादनिशं शिवार्चनमिदं तावद्व्रतं देहिनां अस्माभिश्च पतिव्रताभिरधुना शर्वः पतिः पूज्यते ॥

अतः परं नास्त्यपि जन्मवार्ता कृतन्तवार्ताप्यतिदूरतः स्यात् ।
कायव्यपायेऽपि शिवार्चनेन संभावनीयो नियमेन नूनम् ॥ १७१ ॥

भ्रान्तिं मा कुरु सर्वथापि महिलादेहेषु गेहेषु वा
दोषानेव विचिन्त्य सन्ततमुमाकान्तं प्रशान्तं भज ।
तत्पादाम्बुजचिन्तनेन तु सुखं प्राप्तव्यमेवाक्षयं
द्राक्षां क्षीरमवाप्य न क्षणमपि क्षारं जलं वांछति ॥ १७२ ॥

धन्यस्त्वं रिपुमौलिलालितपदाम्भोजोऽपि ह्यरोऽस्यतः
शम्भुः पूर्वभवेषु तावदसकृत् तावत् त्वयाराधितः ।
जन्म प्राप्तमिदं समस्तविभवप्राप्त्यै परं कारणं
प्राप्यार्धेन्दुशिखामणिं भज निजोपायैरपायं विना ॥ १७३ ॥

आश्चर्यं यदिहास्ति तेन गिरिशं भक्त्या समभ्यर्चय प्रीत्या शङ्करपूजनं कुरु धनैरीशार्पितैः केवलम् ।
शम्भुः शांभवरूपमेत्य सकलं गृह्णाति रत्नादिकं विद्धि त्वं चरलिङ्गमित्यपि परं तं शांभवं शाङ्करम् ॥

उत्पन्नास्तव ते सुता अपि तथा तिष्ठन्तु किं तैः फलं
यावत्ते सुदृढं शरीरमसकृत् तावच्छिवाराधनम् ।
कर्तव्यं तव राज्यभारविगमोपायोपि शर्वार्चनं
तत्सर्वार्थदमित्यवैमि बहुधा सत्यं हितं चोदितम् ॥ १७५ ॥

शरीरमपि नायाति मरणानन्तरं परम् । शिवार्चनार्जितं पुण्यं सहायास्यति केवलम् ॥ १७६ ॥

न पुत्रैर्वा कलत्रैर्वा तव कृत्यं नराधिप । परलोकहितं तावत् सततं चिन्तयाधुना ॥ १७७ ॥

[1] मृत्युञ्जयाराधनमेव कार्यं अतः परं मृत्युजयाय राजन् ।
जन्मान्यतीतानि बहूनि तावत् हितो न मृत्युः स कदापि नूनम् ॥ १७८ ॥

शौर्यं च तावत् सफलं तव स्यात् मृत्युर्यदि स्यात् स जितस्त्वयापि ।
ज्ञेयः स शूरो न जितोऽपि लोके केनापि तेनापि समो न लोके ॥ १७९ ॥

---

1 अयं श्लोकः C कोशे नास्ति ।

द्रष्टव्यं तव शौर्यमप्यतितरां शूरः स मृत्युर्यतो
दुर्जेयो यदि वा जितस्तव तदा शौर्योत्सवो दृश्यते ।
किं शौर्यं मशकक्षयेण सफलं सिंहोरुदेहक्षये
शक्तं चेत् सफलं तदित्यभिमतं नो चेद्वृथा तत् खलु ॥ १८० ॥

मृत्योरप्यधुना जयाय विमलं बिल्वीदलं साधनं
गङ्गातुङ्गतरङ्गभङ्गकमलं दूर्वाङ्कुरैर्वा मृदा ।
शङ्कायापि समर्पितं निशि महाभूतापि जाताधुना
भोक्तव्यं तदनन्तरं खलु महामृत्युः स भूतो भवेत् ॥ १८१ ॥

पुण्यैरेव समागता शिवतिथिः नेयं जलं वा त्वया,
पेयं नाद्य शिवार्चनं कुरु मुहुः हारैः परं संवृतः ।
भाग्यं ते बहुदेयमद्य धनमप्यश्वादिकं सर्वथा
हारेभ्यस्तव तावदुक्तमधुना सर्वं हितं केवलम् ॥ १८२ ॥

एतस्मिन्नवरत्नमण्डलगृहे लिङ्गेऽतितुङ्गे मुदा
रत्नैः पूजय नूतनैरगणितैर्हारैरपारैरपि ।
रत्नालङ्कृतभूषणैरपि तथा कस्तूरिकाकर्दमैः
पाटीरद्रवसागरैरपि मुहुः पुष्पैरपारैरपि ॥ १८३ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे निषधराजतत्कलत्रसंवादे शिवरात्रिपूजामहिमवर्णनं नाम चतुश्चत्वारिंशोऽध्यायः ॥

---

## अथ पञ्चचत्वारिंशोऽध्यायः ।

—:o:—

[1] सत्यव्रतः —

इत्यपारनिजोदारदारवाक्यसुधां मुहुः । पीत्वा प्रीतिं परां प्राप प्रपामिव पिपासितः ॥ १ ॥
ततः परं स भूतायां भूतिरुद्राक्षभूषणः । चकार पूजनं शंभोर्बिल्वैर्बहुविधैर्धनैः ॥ २ ॥
यावत् तेनार्जितं द्रव्यं तावत् सर्वं समर्पितम् । लिङ्गे तच्छांभवेभ्यश्च दत्तं बहुविधं धनम् ॥
अपारैः शिवनैवेद्यैरपाराः शाङ्करा अपि । भोजितास्तेन भूपेन तोषिताश्चन्दनादिभिः ॥ ४ ॥

---

1 भृगुः C

ततः परं दारहारमन्दिरे सुन्दरे नृपः । शिवोपहारैरुदरं पूरयामास सादरम् ॥ ५ ॥
हारदारैश्च तैर्भुक्तं शिवनैवेद्यमादरात् । शिवार्पितं बिल्वपत्रं भक्षितं पुण्यसाधनम् ॥ ६ ॥
तदानीं तद्व्रतं दृष्ट्वा हारदारान्वितं नृपम् । नन्दिकेशं समाहूय प्राह गौरीमनोहरः ॥ ७ ॥

शिवः —

नन्दिन् निषधदेशेशो महादेवव्रतादरः । सदारः स समानेयो विमानेनापि सत्वरम् ॥ ८ ॥
इत्युक्ते शङ्करापारव्याहारकलनान्मुदा । जगाम सत्वरं नन्दी विमानवरमास्थितः ॥ ९ ॥
गत्वा स नन्दी भूपालनगरं सुमनोहरम् । विवेश मन्दिरं तस्य रत्नमण्डपमण्डितम् ॥ १० ॥
लिङ्गकोटिसमाकीर्णं रत्नतोरणमण्डितम् । हारदारसमाकीर्णं राज्ञापि समलङ्कृतम् ॥ ११ ॥
ततः परं स लिङ्गानि पूजयित्वा प्रयत्नतः । पश्यन् लिङ्गान्यपूर्वाणि स्थितः संपूजितानि सः ॥
ततः परं स राजापि हारदारसमावृतः । प्रणतोपि कृतार्थोऽस्मि धन्योस्मीति वदन् मुहुः ॥ १३ ॥
ततः परं रत्नरम्ये स्वर्णसिंहासने नृपः । उपविष्टं नन्दिकेशं पूजयामास सादरम् ॥ १४ ॥
नन्दी तत्कृतपूजयातिमुदितो राजानमाहादरात् एतद्रत्नविमानमद्य भवते शङ्केन संप्रेषितम् ।
आरूढो भव हारदारसहितस्तुष्टस्त्वदभ्यर्चितो भूतायां गिरिराजराजतनयाकान्तो नितान्तं नृप ॥

इत्याकर्ण्य स हारदारसहितो राजातितुष्टस्तदा
तत्रारुह्य ययौ तदा समभवन्मन्दारवृष्टिर्मुहुः ।
तूर्याणां ध्वनयोऽपि तावदसकृद्वृत्ताः प्रवृद्धाः सुरैः
उत्साहोऽपि कृतो हि दुन्दुभिरवैर्देवाङ्गनानर्तनैः ॥ १६ ॥

तं प्रस्थितं समालोक्य विमानवरसंस्थितम् । अशैवदारास्तं प्राहुः तस्यैवातिमनोहराः ॥ १७ ॥

अशैवदाराः —

सेवा कृता बहुविधा विधिवत् तव सादरम् । अतः परं गतिः का वा वदास्मभ्यं नृपोत्तम ॥१८॥

पतिव्रतानां पतिरेव दैवतं तत्सेवया सर्वनिवाससिद्धिः ।
इति श्रुतं तेन शिवार्चने नः प्रीतिर्न जाता विफलं च जन्म ॥ १९ ॥

पतिः पतीनां गिरिजापतिर्यः स नार्चितो नानुविलोकितोऽपि ।
नाकर्णिता वा न कथा श्रुता वा त्वत्सेवनात्यादरतोऽपि मोहात् ॥ २० ॥

प्रतारिताः स्मो द्विजभामिनीभिः भ्रान्ताभिरीशानपराङ्मुखीभिः ।

[1]भर्तुर्नरस्यष्टमसेवयेति हा हा हताः स्मः किमतः परं वा ॥ २१ ॥

एवं प्रलपमानासु महिलासु स भूपतिः । जहौ रत्नमयीं रज्जुं तदाकर्षणतत्परः ॥ २२ ॥

रज्जुं तां समुपादाय महिलास्तास्ततस्ततः । बद्ध्वा कण्ठे दृढं वातैर्निहतास्ता ययुस्ततः ॥ २३ ॥

दृष्ट्वा तद्रज्जुसंबद्धाः चलिताश्चातिवाततः । यमो विलोक्य दूरेण चित्रगुप्तमुवाच सः ॥ २४ ॥

यमः —

यदन्तराले चलिताः सूक्ष्मरज्जुसमाश्रिताः । तासां किमस्ति वृत्तान्तमिति प्राहातिविस्मितः ॥२५॥

चित्रगुप्तः —

यः पारिभाषिको भर्ता नरस्तस्य परं कृता । सेवा ताभिर्विश्वभर्ता न कदाप्यर्चितो यम ॥ २६ ॥

हाराश्च दारा बहवो नृपस्य तैरन्वितो याति विमानमध्यम् ।
आराधितः शङ्करलिङ्गपूजाप्रभावतः शङ्करमन्दिराय ॥ २७ ॥

इति तद्वचनं श्रुत्वा प्रेषयामास किन्नरान् । यमस्तद्वारणायाशु त्रासनायापि बाडवान् ॥ २८ ॥

ततः परं तु तैरूर्ध्वं गतं वेगेन वाडवैः । भिन्ना रज्जुर्निपतिताः ताः सर्वा यममन्दिरे ॥ २९ ॥

अतिप्रलपमानास्ताः सर्वाः खिन्नाननास्तदा । यमकोपाग्निना तावन्मेचका इव संस्थिताः ॥

तद्दुर्दशां विलोक्यैव हारदारसमन्वितः । नन्दिकेशमुवाचेदं वचनं भूपतिस्तदा ॥ ३१ ॥

निषधेशः —

पश्य पश्य मदीयास्ते यमदूतेन वारिताः । विच्छिन्नरज्जुबन्धाः किं यमान्तिकमुपागताः ॥ ३२ ॥

नन्दिकेशः —

विश्वभर्ता महादेवो यदि नाराधितस्तदा । कथं वा सुखलेशोपि वद राजन् विचार्यताम् ॥ ३३ ॥

तवापि नात्रागमनं प्रसक्तं तद्योगतो यद्यपि सर्वथापि ।
तथापि भूतात्रततत्परत्वात् अभ्यागतोऽसि त्रिपुरारिमार्गम् ॥ ३४ ॥

एतैः शुद्धैः हारदारैः समेतो दैवादेतत्साधुसंभाषणेन ।
भूता नीता शङ्कराराधनार्थैरेतैरासीदुत्तमा ते गतिश्च ॥ ३५ ॥

अशाङ्कराभ्यागमनं कदापि कैलासमार्गे नृप भर्गमार्गः ।
स्वर्गापवर्गावतिदुर्गरूपौ यतः सुराणामपि दुर्गमोऽयम् ॥ ३६ ॥

---

1 भर्तुर्नरश्रेष्ठमसेवितेति C

नान्यैर्धर्मैर्याति कैलासमार्गं धर्माभासैस्तैरिदं भाग्यमेव ।
किं प्राप्तव्यं शङ्कराराधनेन प्राप्यं भाग्यं केवलं दुर्लभत्वात् ॥ ३७ ॥

रज्जुर्दत्ता या त्वया तन्निरासं कर्तुं तावन्नाभवद्बुद्धिरस्य ।
द्रष्टव्यं किं कौतुकं भावि तावन्मार्गे तस्मिन्नित्यवेहि त्वमादौ ॥ ३८ ॥

तत् किं दृष्टं कौतुकं पश्य पश्य त्वद्भार्याणां दुर्भगाणां विशिष्य ।
कालक्रोधान्मेचकाकारतान्ताः प्राप्ताः सर्वाः शर्वपूजाविहीनाः ॥ ३९ ॥

ये नार्चयन्ति भगवन्तमशान्तचित्ताः स्वान्ते निधाय विधिना गिरिजासहायम् ।
मृत्युञ्जयं सदयमागमवृन्दमेयं तेषां कथं भवति शोभनसौख्यवार्ता ॥ ४० ॥

ममापि शक्तिः कथमिन्दुमौलिप्रसादलेशेन तथापि तासाम् ।
श्रीभर्गमार्गेष्ववलोकने वा वार्तापि तावत्सह दूरतः स्यात् ॥ ४१ ॥

तासां न तावन्नयनं विमानवरेण नूनं कुपितः प्रभुः स्यात् ।
शम्भुः स्वतन्त्रो न भवामि ताभिः कार्यं न किञ्चित् तव वा ममापि ॥ ४२ ॥

अपारजन्मार्जितपुण्यराशिर्य एव लोके स परं महेशम् ।
प्राप्नोति नान्यः खलु ताभिरीशो नाराधितोऽतो नयनं कथं वा ॥ ४३ ॥

कदापि नाराधितमेव लिङ्गं दृष्टं च भक्त्या न नतं च ताभिः ।
अतः कथं वा नयनं च तासां कैलासदेशेषु विनातिदेशैः ॥ ४४ ॥

शिवातिदेशेन विना न कार्यं कृतं कदाचित् त्वरया मयापि ।
अतः परं सा न मतापि वार्ता नेतुं प्रयत्नोऽपि वृथा तदा स्यात् ॥ ४५ ॥

यमोऽपि तावत्कठिनो वचो मे दूरान्निराकृत्य निजाधिकारैः ।
तद्यातनामेव करिष्यतीति न तेन वक्तव्यमतिप्रियं वा ॥ ४६ ॥

प्रियोक्तिभिः किं स वशीकृतः स्यात् महेश्वराज्ञापरिपालनेन ।
यमो न कस्यापि वशे वशी च तस्मादशैवाशनिरेव कालः ॥ ४७ ॥

इति तद्वचनं श्रुत्वा स राजाप्यतिविस्मितः । तं प्रणम्य मुहुर्भक्त्या नन्दिकेशमुवाच ह ॥ ४८ ॥

राजा —

आहूय कालो वक्तव्यस्तासां मास्त्विति यातना । इति तद्वचनं श्रुत्वा नन्दी स तमुवाच ह ॥

त्वत्प्रार्थमाभिर्वक्तव्यस्तथा कालस्तथापि किम् । तथा करिष्यति व्यर्था कथा तेन ममाऽधुना ॥
यद्यप्येवं तथा युक्तिस्त्वदीया श्रूयते मया । आहूयते यमः पश्य तदुक्तिं शृणु सादरम् ॥ ५१ ॥

सत्यमूर्तिः —

इत्युक्त्वा प्रेषयामास नन्दिकेशः स्वकिङ्करम् । स कृतान्तान्तिकं कालः समानेय इति स्फुटम् ॥
स गत्वा प्राह तं कालं कालागमनमिच्छति । नन्दिकेशो विमानस्थः पश्य पश्याधुना यम ॥
इति तद्वचनं श्रुत्वा यमोऽप्युत्थाय वेगतः चित्रगुप्तादिभिः सार्कं नन्दिकेशान्तिकं ययौ ॥ ५४ ॥
गत्वा प्रणम्य तं भक्त्या यमः प्राह कृताञ्जलिः । आज्ञापयाशु मां स्वामिन् बहु कार्यं ममेत्यपि ॥

नन्दिकेशः —

राज्ञः किलास्य महिलास्तास्त्वत्क्रोधानलाहताः । तासामतः परं मास्तु यातना मयि चेत् कृपा ॥
इति तद्वचनं श्रुत्वा यमः क्रोधाकुलोऽपि तम् । प्राहातिविस्मयापन्नो वचनं विस्मयावहम् ॥

यमः —

किमेवमाज्ञाप्युचिता तवाद्य कालान्तकाराधनमन्तरा किम् ।
संभावितं स्यात् सुखमन्तरायः तस्येशपूजाविरहो महान् हि ॥ ५८ ॥

इन्द्रादिकानां गणना न यस्य यमस्य मे शङ्करभक्तवर्य ।
न कोपि लोके गणनीय एव विना शिवाचाररतं प्रकृष्टम् ॥ ५९ ॥

महेश्वराज्ञावचनैस्तदुक्तैः वेदस्वरूपैरमितैः स्मृतिर्मे ।
अशैवलोके प्रलयानलस्य किमस्त्यकार्यं वद मे विचार्य ॥ ६० ॥

कल्पावसानेऽपि न मुक्तिरेव लिङ्गार्चनत्यागविदूषितानाम् ।
तदर्थमेवाशनिसृष्टिरादौ वह्निप्रवाहोदकदुष्टसृष्टिः ॥ ६१ ॥

कष्टानि सृष्टानि बहूनि नूनं अशैवभोगाय महेश्वरेण ।
तेष्वेव तावत् खलु पातनीयाः ते शङ्कराज्ञाविमुखाः सुदुःखाः ॥ ६२ ॥

कः शम्भुपूजाविमुखोऽपि लोके सुखी स शोकादर एव घोरः ।
घोराण्यघोराण्यपि यातनानां स्थलानि यात्येव सुदुष्टबुद्धिः ॥ ६३ ॥

एताभिर्न शिवार्चनं कृतमुमाकान्तार्चकाराधनं तद्भक्ताङ्घ्रिनिषेवणं च न कृतं तत्पादुकाराधनम् ।
तत्तन्मन्दिरमार्जनं च न कृतं तच्चेटिकासेवनं तद्दासीपतिसेवनं च न कृतं तद्दाससंसेवनम् ॥ ६४ ॥

नालोकितं शङ्करकिङ्कराणां पादारविन्दप्रभवं रजोऽपि ।
यैर्नादरात् तस्य कथं सुखं स्यात् स्वप्नेऽपि तन्मे वद सावधानम् ॥ ६५ ॥

न भूतले कोऽपि विलोकितोऽपि पराङ्मुखः शङ्करपूजनेऽपि ।
सुखी विषाशी सुखमेव किं वा नरो विशेषेण महोरगार्तः ॥ ६६ ॥

वदन्ति तावद्गिरिशार्चनेन हीनं विहीनं क्व मलाशनानाम् ।
कस्तूरिकाचन्दनवासनापि तस्मादशैवस्य कुतः सुखं स्यात् ॥ ६७ ॥

आज्ञापनीयो न तथा त्वयाऽहं न धर्महानिश्च तवातिसह्या ।
विशेषतः शङ्करपूजनस्याप्यशैववार्तासु रुचिः कथं वा ॥ ६८ ॥

वाक्येनैकेनैव तावत् त्वयोक्तं शैवाः सर्वे पूजनीयास्त्वयेति ।
अन्ये घोरे पातनीयाः प्रयत्नैः कुम्भीपाके सर्वथेति स्मृतं किम् ॥ ६९ ॥

मा कौतुकेनापि महेश्वरोऽपि कदाचिदीशानपराङ्मुखानाम् ।
न यातना स्यादिति तद्वचोऽपि श्रीनन्दिकेशार्य न रोचते मे ॥ ७० ॥

सत्यमूर्तिः —

इत्युक्त्वा नन्दिकेशाय नत्वा विनयपूर्वकम् । यमोऽपि स्वालयं प्राप चित्रगुप्तादिभिः सह ॥
ततः परं स नन्दीशः कैलासभवनं ययौ । प्रहृष्टो यमवाक्यानि स्मृत्वा विस्मितमानसः ॥ ७२ ॥
अतः कुमार नारीणां मुख्यो विश्वपतिः पतिः । तत्पूजनादभीष्टार्थाः सिद्ध्यन्तीत्यवधारय ॥ ७३ ॥
पतिर्यो लौकिकः सोऽपि शाङ्करत्वेन निश्चितः । यदि तर्हि प्रयत्नेन कर्तव्यं तस्य पूजनम् ॥ ७४ ॥
तत्सेवनेन सुप्रीतो भवत्येव महेश्वरः । अतस्तस्यापि कर्तव्यं शैवत्वेनैव पूजनम् ॥ ७५ ॥
अशैवो यदि भर्ता स्यात् तं त्यजेन्मद्यपं यथा । न मद्यपाराधनार्थमुद्यतापि पतिव्रता ॥ ७६ ॥

ब्रह्मस्वहर्ता गुरुदारगामी यो ब्रह्महा मद्यप एव वा स्यात् ।
यस्मादशैवोपि स दूरतोऽपि त्याज्यः कुलस्त्रीभिरिति स्मरामि ॥ ७७ ॥

दैवान्महादेवपरायणः स्यात् पतिस्तदाराधनतः सुखानि ।
प्राप्नोति नारी निरयं न याति सा तेन साकं शिवमेति नूनम् ॥ ७८ ॥

अशैवपतिकार्याणि न कार्याणि कदाचन । अशैवभर्तृत्यागेन स्वर्गमेति सती परम् ॥ ७९ ॥
मद्यं पिबति चेद्भर्ता तेन साकं कथं सती । स्थास्यत्यतः शिवाचारवर्जितो वर्ज्यतामगात् ॥ ८० ॥

न भाग्येन विना नारी भर्गभक्तं पतिं व्रजेत् । सर्वभाग्यप्रदो नूनं भर्गभक्तो विशेषतः ॥ ८१ ॥

भर्ता भर्गार्चको यः स्यात् तदाज्ञोल्लङ्घनादपि । नरकं याति सा नारी यावदाभूतसंप्लवम् ॥ ८२ ॥

भृगुः —

इति तद्वचनं श्रुत्वा स्थित्वा दूरे स शाङ्करः । पित्रा सह स्थितः श्रुत्वा शिवधर्मान् विशेषतः ॥

शारदा नाम तन्नारी समाप्य शिवपूजनम् । पतिशुश्रूषणोद्युक्ता सोऽपि शाङ्कर इत्यपि ॥ ८४ ॥

शङ्कराराधनं कृत्वा शाङ्करस्यापि सेवनम् । कर्तव्यमिति बुद्ध्या सा चकार पतिसेवनम् ॥ ८५ ॥

सोऽपि तं प्रीणयत्येव शिवाचाररतेति सा । न निष्ठुरं वदत्येव स तां प्रति विशेषतः ॥ ८६ ॥

शार्दूलः —

इत्युक्तं भृगुवाग्बृन्दममन्दानन्ददं मुदा । हृष्टः शिवकथामेव पुनः श्रुत्वा स्थितो यमः ॥ ८७ ॥

सत्यव्रतः —

तत्तत्कथापावनवर्णनेन कालो विनीतस्तदनन्तरं मे ।
वने जनिर्व्याघ्रकुले किलासीम् जातिस्मरत्वं च सतीप्रसादात् ॥ ८८ ॥

इति व्याघ्रवचः श्रुत्वा स राजा शैवपुङ्गवः । ब्राह्मणश्चातिसन्तुष्टः शिवाराधनतत्परः ॥ ८९ ॥

ततः परं नारदोऽपि तदुक्तं वचनाम्बुधिम् । श्रुत्वा पीत्वा प्रहृष्टोऽभूत् सत्ययुक्तमिति प्रिये ॥९०॥

सा राज्ञी परमं प्राप सुखं शैवः पतिर्मम । अतो मम महद्भाग्यं भर्गदत्तमिति प्रिया ॥ ९१ ॥

एवं स्वं स्थानं ततः प्रापुस्ते सर्वे शिवपूजकाः । शिवार्चनप्रभावानां कुर्वन्तस्ते प्रशंसनम् ॥९२॥

इयं पुण्यकथा तावत् तुभ्यमद्य समीरिता । सर्वपापहरा नित्यं श्रवणात् सर्वकामदा ॥ ९३ ॥

अतस्त्वयापि यत्नेन कर्तव्यं शिवपूजनम् । शिवार्चनं परो धर्मो नारीणामपि सर्वथा ॥ ९४ ॥

रत्नाकरः —

इति तद्वचनं श्रुत्वा सा चकार शिवार्चनम् । भर्ता तेन शिवाचारनिरतेन सहादरात् ॥ ९५ ॥

तस्याः पुत्राः समुत्पन्नाः शांभवा एव ते सदा । शिवार्चनपराः सर्वे गुरुशुश्रूषणे रताः ॥ ७६ ॥

शैवः पितायमस्माकं जननी शिवतत्परा । वयं च शांभवास्तेन भाग्यमित्यूचुरादरात् ॥ ९७ ॥

ते सर्वे नर्मदातीरे कृत्वा बिल्ववनं नवम् । सन्तुष्टास्तत्र लिङ्गानि स्थापयित्वापि कोटिशः ॥

तस्मिन्नेव वने स्थिताः शिवपरैः कृत्वा शिवाराधनं भस्मोद्धूलितविग्रहैरपि तथा रुद्राक्षमालावृतैः ।
तैरेवामलबिल्वकोमलदलैरभ्यर्चयन्तो मुहुः तत्रोवास महेश्वरोऽपि सततं तत्पूजनालालसः ॥९९॥

तन्माता स्वसुतान् विलोक्य परया प्रीत्या शिवाराधकान्
तत्पुत्रानपि शाङ्करानपि मुदा तत्पुत्रपौत्रानपि ।
शर्वाराधनतत्परानपि लसद्भूतित्रिपुण्ड्राङ्कितान्
मेने धन्यतमं कुलं कुलमिदं श्रीशूलपाणेरिति ॥ १०० ॥

एवं शिवाराधनतत्परं तं सत्यव्रतं बिल्ववने सपुत्रम् ।
दृष्ट्वा प्रहृष्टा मुनयोऽपि चित्रां तत्सन्ततेर्वृद्धिमतिप्रसिद्धाम् ॥ १०१ ॥

इन्द्रादयोऽप्यादरतस्तमेत्य महेश्वराराधनसक्तचित्तम् ।
नमन्ति गन्धर्ववराश्च सिद्धाः नित्यं शिवाराधनतुष्टचित्रम् ॥ १०२ ॥

तद्देशराजा तं दृष्ट्वा महारथ इति स्मृतः । रेवातीरे चरन् पश्यन् लिङ्गान्यपि विशेषतः ॥ १०३ ॥

तत्पुत्रपौत्रादिसमर्चितानि लिङ्गानि रेवाजलबिल्वपत्रैः ।
कुन्दादिभिश्चादरतोऽतिभक्त्या सत्यव्रतं प्राह स भूपतिस्तम् ॥ १०४ ॥

महारथः —

मुनीन्द्र पुत्रपौत्रादिसन्ततिर्महती तव । शङ्कराराधनोद्युक्ता वृद्धिमेति पुनः पुनः ॥ १०५ ॥

स्तनन्धयोऽपि त्रिपुरान्तकं तं समर्चयत्यत्र कथं प्रसक्तिः ।
अनेन नाधीतमपि श्रुतं वा माहात्म्यमीशस्य किमत्र चित्रम् ॥ १०६ ॥

अच्छिन्ननाभिनालोऽपि जटामण्डलमण्डितः । उद्धूलनत्रिपुण्ड्राभ्यां रुद्राक्षैरप्यलङ्कृतः ॥ १०७ ॥
अयं को वा तव प्रीतिः तस्मिन्नतितरां खलु । इदं न कौतुकं क्वापि श्रुतं दृष्टं च न ध्रुवम् ॥
तत्रापि खलु तारुण्यं तरुणस्यापि सन्ततिः । कथमेवं प्रवृद्धा ते किं वा तद्वृद्धिकारणम् ॥
किं च सर्वेऽपि पुष्टाङ्गाः सुन्दराश्च विशेषतः । शङ्कराराधनोद्युक्ताः सर्वेऽपि खलु सर्वदा ॥ ११० ॥
त्वत्पुत्रपौत्रपौत्रादिदारा अपि विशेषतः । शिवार्चनानि कुर्वन्ति गृहकृत्यविवर्जिताः ॥ १११ ॥
न चास्मिन्नाश्रमे दृष्टं अन्नं क्षीरघृतादिकम् । एवं च कथमेतेषां जीवनं प्रत्यहं मुने ॥ ११२ ॥
इति तद्वचनं श्रुत्वा मुनिः सत्यव्रतस्तदा । तमाह संस्मरन् भक्त्या देवदेवं महेश्वरम् ॥ ११३ ॥

सत्यव्रतः —

अस्माकमस्त्यन्नपतिप्रसादादन्नं दधिक्षीरघृतादिकं च ।
ब्रह्मादयः कर्मकराश्च गेहे पूर्णं गृहं मे सुरगोकुलेन ॥ ११४ ॥

तिष्ठन्त्यपाराः सुरभूरुहाश्च चिन्तामणिस्तिष्ठति गेहमध्ये ।
महेश्वराराधनलब्धमेव संपूर्णमैश्वर्यमिदं ममेह ॥ ११५ ॥

मत्सन्ततिस्तिष्ठति कोटिशोऽत्र रेवातटं पुण्यमिति प्रसिद्ध्या ।
न स्वर्गलोकेऽपि ममास्ति वांछा न सत्यलोके च न विष्णुलोके ॥ ११६ ॥

मया स्तुतः प्राङ् नमकेन शंभुः ततः परं मे चमकोक्तमर्थम् ।
ददावुदारः स हरः परं मे किमस्ति दुष्प्रापमपीह लोके ॥ ११७ ॥

यद्यन्ममास्मिन् समपेक्षितं स्यात् तत्प्राप्तमीशांघ्रिरजःप्रसादात् ।
किमस्त्यशक्यं जगतीतलेऽस्मिन् त्रिलोचनश्चेन्मम सुप्रसन्नः ॥ ११८ ॥

त्रिलोचनाकारमचिन्त्यमेकं ध्यात्वापि धैर्येण विभूतिपूतः ।
प्राप्नोति सौभाग्यसमृद्धिमादौ मुक्तो भवत्येव परान्तकाले ॥ ११९ ॥

न जानन्ति महादेवस्वरूपमतिदुर्भगाः । क्लेशसागरमग्नास्ते पुनः पुनरनेकधा ॥ १२० ॥
यस्त्वेकान्तमुमाकान्तं स्वान्ते सन्ततमर्चयेत् । तस्य भाग्यस्य नेयत्ता स एव सुभगोत्तमः ॥
येन नाराधितं लिङ्गं शाङ्कं मङ्गलदायकम् । स दरिद्रो दुर्भगश्च जायते प्रतिजन्मनि ॥ १२२ ॥
अशिवाराधनोद्युक्ताः शिवार्चनपराङ्मुखाः । अशिव प्राप्नुवन्त्येव कुम्भीपाकादिलक्षणम् ॥
नरत्वमपि संप्राप्य यो नार्चयति शङ्करम् । संसार एव तं प्राप्नोत्यवश्यमिति निश्चितम् ॥ १२४ ॥

चण्डालजाताः परमादरेण नाराधयन्त्येव मृडं मृडानीम् ।
अतो भवन्त्येव विमूढचित्ताः पुनःपुनर्दुःखमहाब्धिमग्नाः ॥ १२५ ॥

यश्चण्डालान्मद्यभाद्रासभाद्वा जाता जात्या जन्मकोटिस्वघौघैः ।
व्याप्तो घोरैस्तं विहायापरः स्यात् पुण्यैः शैवः शङ्करध्यानपूतः ॥ १२६ ॥

न शाङ्कराणां यमदूतवार्ता यमः स्वतः किङ्कर एव तेषाम् ।
यमस्य का वा गणना गणानां ते शाङ्करा एव गणा भवन्ति ॥ १२७ ॥

काले काले स कालोऽपि कालकालार्चकान्मुहुः । कालकालभयादेव पूजयत्यतिभक्तितः ॥१२८॥
शाङ्कराराधनं धर्मः कालस्येत्यवधारितः । शिवाराधनतुल्यं हि शाङ्कराराधनं नृप ॥ १२९ ॥

सन्तुष्टो विषभक्षणेऽपि बहुधा सम्यक् समाराधितः शैवे शैवहृदम्बुजान्तरगतः कष्टापहारोद्यतः ।
गौरीमन्दिरवल्लभं परतरं तत्सुन्दरं मेनिरे हारान्तःकरणं प्रमाणविषये तत् किं भवेद्भूपते ॥१३०॥

जातिर्वा न विचार्यते शिवरते जाते भवानीपतिः
दृष्ट्वा तद्धृदयारविन्दमगजाकान्तः स्वकं मन्दिरम् ।
मत्वा तिष्ठति तत्र तत्र वसतीस्तावत् परं रोचते
कैलासेऽपि रुचिस्तथा भगवतः शंभोर्न नूनं नृप ॥ १३१ ॥

पूजयन्त्यतियत्नेन शाङ्करानमरा अपि । शिवमन्दिरमित्येव मत्वा शङ्करमानसम् ॥ १३२ ॥
अहो पुण्यवतामेव महादेवार्चने मतिः । सा मतिर्दुर्लभा लोके दुर्लभा दुर्लभा नृणाम् ॥ १३३ ॥
शिवभक्ताङ्कुरापारशङ्करापारचेतसाम् । धर्मादिफलपूर्णानां इयत्तावर्जितं सुखम् ॥ १३४ ॥
पदे पदेऽपि कल्याणं शाङ्करस्य महात्मनः । शङ्कराराधने प्रीतिर्बहुजन्मतपःफलम् ॥ १३५ ॥
या पिनाकिनमायाति नमस्या कल्मलीकिनम् । सैव तावन्नमस्कार्यं करोति नरमप्यहो ॥१३६॥
कल्मलीकी (?) स संप्रीतः कृपया स्वनमस्यया । सुरवन्द्यं करोत्येव नरं विगतकल्मषम् ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । भक्त्युद्रेको भवत्येव यस्य श्रवणमात्रतः ॥ १३८॥
शृणु तत् सावधानेन विश्वासं कुरु सादरम् । विश्वासः खलु धर्मेषु सर्वदा सुखदायकः ॥ १३९ ॥
अविश्वासेन दुःखानि भवन्त्येव पदे पदे । अतस्तावदविश्वासः परित्याज्योऽतिदूरतः ॥ १४० ॥
तत्र शांभवधर्मेषु विश्वासश्च विशेषतः । तदा तरति संसारशोकसागरमादरात् ॥ १४१ ॥
अविश्वासो यदि भवेत् शिवधर्मे कदाचन । तदा तद्वंशनाशः स्यात् स एवाशनिसन्निभः ॥१४२॥
कस्यचिद्भूरिभाग्यस्य शिवधर्मे रतिर्भवेत् । अभाग्यानां न तद्धर्मे रतिर्भवति सर्वथा ॥ १४३ ॥
अतस्त्वमपि विश्वासं कुरु मद्वचने नृप । यदि भाग्याभिवृद्धिस्ते सर्वदा समपेक्षिता ॥ १४४ ॥
भक्त्या क्षणं क्षणार्धं वा विश्वासेन सदाशिवम् । यः पूजयति तं तावद्धन्य इत्याहुरास्तिकाः ॥
महादेवकथालापे सुधाबुद्धिर्भवेद्यदि । तदा भवति संसारशोकराशिविनाशनम् ॥ १४६ ॥
संसारभोगनाशाय शिवपूजनमौषधम् । कल्पितं तेन तत्सेवा कर्तव्याऽतिप्रयत्नतः ॥ १४७ ॥
पुरा पुल्कस एवासीत् जात्या कश्चित् हिमालये । तस्य भाग्यवशाद् भक्तिः फालाक्षे समभून्नृप ॥
तेन विल्ववने तत्र निवासोऽपि कृतः पुरा । तत्फलानि समानीय क्रीत्वा जीवति सर्वदा ॥
तत्फलार्थं वनस्यापि कृतं तेनैव रक्षणम् । वृतिः संपादिता तेन कण्टकैरतिदारुणैः ॥ १५० ॥
वनद्विपप्रपीडापि तेन तस्य न जायते । न व्याघ्राणां प्रवेशोऽपि तस्मिन् विल्ववने नृप ॥ १५१॥
तेन संपादिता कुल्या तद्वनेन वनं नवम् । नवविल्वांकुराक्रान्तं सर्वदाऽपि मनोहरम् ॥ १५२ ॥

तस्यादूरे वनस्यैव ऋषीणामाश्रमः स्थितः । ते सर्वेऽपि समायान्ति तद्वनं प्रति सादरम् ॥१५३॥
ते तत्प्रदक्षिणीकृत्य नत्वा प्रत्यहमादरात् । तद्वनाद्बहिरासायं तिष्ठन्ति शिवतत्पराः ॥ १५४ ॥
सान्द्रबिल्ववनच्छायानिवारितमहाश्रमाः । तद्वातपोतसंवीताः पूतास्ते भूतिभूषिताः ॥ १५५ ॥
नित्यं वनाद्बहिः सर्वे धृत्वा शाखां प्रयत्नतः । द्वित्रान् गृह्णन्ति मुनयोऽप्यरुणान् बिल्वपल्लवान् ॥
स बिल्वपल्लवच्छेदं सहतेऽपि न पुल्कसः । तद्भीत्या ते परं द्वित्रान् गृह्णन्ति नवपल्लवान् ॥
तेषु कश्चिन्मुनिश्रेष्ठो युवा बलसमन्वितः । विलोक्य बिल्वानमलान् चिन्तयामास चेतसि ॥
इदं बिल्ववनं रम्यं अत्रैव नवपल्लवम् । एतादृशं वनं क्वापि नादूरे लभ्यते खलु ॥ १५९ ॥
स्थित्वाप्यरण्ये तपसा निराहारैरिहाधुना । स बिल्वपल्लवैरीशो बहुभिर्नार्चितो भवः ॥ १६० ॥
भवाम्बुराशिनाशोऽपि न शिवाराधनं विना । शिवाराधनसामग्री केवलं बिल्वपल्लवः ॥ १६१ ॥
न बिल्वपल्लवाभावे साङ्गं शाङ्गार्चनं भवेत् । तदभावे सुखं तावद्दुर्लभं सर्वदेहिनाम् ॥ १६२ ॥
इहामुत्र सुखं तावच्छङ्करलिङ्गार्चनात्खलु । शङ्करलिङ्गार्चनाभावे परलोकसुखं कुतः ॥ १६३ ॥

अहो न जानन्ति विमूढचित्ताः शैलेन्द्रजाकान्तसमर्चनानि ।
संसारदुःखाग्निभयापहानि मोक्षप्रदानीति विशेषतस्ते ॥ १६४ ॥

आशास्यमेतद्गिरिशार्चनं हि गौरीसहायस्य तदस्मदीयैः ।
भाग्यैः प्रसिद्धं कथमद्य कार्यं बिल्वैर्विना केवलमुक्तिहेतुः ॥ १६५ ॥

परं वनं निर्मितमीश्वरेण महावने दुर्लभमेतदद्य ।
भूतापि पुण्या समुपागतेयं बिल्वैर्विना किं भवतीशपूजा ॥ १६६ ॥

सायं यास्यत्ययं प्रायः स्वगृहं वनपालकः । वनमध्ये मयागत्य स्थातव्यमतियत्नतः ॥ १६७ ॥
तत्रैव पूजा कर्तव्या निशि जागरणैर्मया । आरक्तैः कोमलैर्बिल्वैः स्थूलबिल्वफलैरपि ॥ १६८ ॥
अनेन जन्मना तावदेतावत्कार्यमेव मे । स चेन्निरोधकस्तर्हि प्राणास्त्याज्या न संशयः ॥१६९॥
यद्वा तद्वेममभ्यर्च्य कर्तव्यं वनपालनम् । तेन व्याजेन कर्तव्यं बिल्वपत्रैः शिवार्चनम् ॥ १७० ॥
न तद्दास्यत्वमात्रेण हानिः कापि भविष्यति । येन केनापि रूपेण कर्तव्यं शिवपूजनम् ॥ १७१ ॥
किञ्चातिपावनो नूनं स बिल्ववनपालकः । स बिल्ववनवातेन कृतः किं नातिपावनः ॥ १७२ ॥
धन्योऽयमेव मान्योपि बिल्वभूरुहपालकः । बिल्वानां वनदो नित्यमतः पूज्यो न संशयः ॥
ते बिल्वतरवः सर्वे शर्वाकारास्तथा सति । स तद्वनप्रदानेन शङ्करार्चक एव हि ॥ १७४ ॥

कुल्याः प्रकल्पितास्तेन कर्तुं तद्वनवर्धनम् । ततोऽपि नाधिकः कोऽपि स शिवाराधको यतः ॥

बिल्वालवालजलबिन्दुकणार्धसंख्यातुल्यानि पातककुलानि लयं गतानि ।
तस्येति धन्यतम एव स एव नूनं वन्द्योऽपि तेन सकलाघविनाशनं स्यात् ॥

अयं महान् मुनिः प्रायो वेषान्तरसमन्वितः । करोति पालनं तावत् बिल्वानां पुण्यसागरः ॥

बिल्वभूरुहमेकं वा योऽभिषिञ्चति पाथसा । अल्पेनापि स यात्येव नरः शङ्करमन्दिरम् ॥

अनेन तवदेतस्य वनस्य परिपालनम् । क्रियते भाग्यमेतस्य हारेण परिवर्जितम् ॥ १७९ ॥

एतस्य दर्शनेनापि पापराशिलयो भवेत् । एतद्वन्दनमात्रेण शङ्करो वन्दितो भवेत् ॥ १८० ॥

मया त्ववश्यमेतस्य सर्वदा परिचर्यया । कालो नेयो विशेषेण बिल्ववृक्षावलोकनैः ॥ १८१ ॥

सत्यमूर्तिः —

इति निश्चित्य मनसा स एव शिवपूजकः । शिवढुण्ढिरिति ख्यातो बभाषे वनपालकम् ॥ १८२ ॥

क्व बिल्ववनपालकप्रवर सद्म ते केन वा महानिशि वनस्य वा भवति पालनं घातुकैः ।
वने द्विपवनैरिदं वनमिति प्रसन्नं कथं न नाशमुपयास्यति प्रबलकण्टकोद्घाटनैः ॥ १८३ ॥

इति तद्वचनं श्रुत्वा तामाह वनपालकः । कृताञ्जलिपुटो भूत्वा विनयावनतो मुदा ॥ १८४ ॥

वनपालकः —

एतावत्कालपर्यन्तं रक्षितं वनमादरात् । प्रबलास्तरवो जाताः तैर्जातं जीवनं मम ॥ १८५ ॥

अरुणोदयमारभ्य क्रियते वनपालनम् । सायङ्कालोत्तरं तावत् स्वगृहं प्रति गम्यते ॥ १८६ ॥

अभ्रङ्कषा वृतिस्तावदत्र संपादिता मया । एतेऽपि कण्टकाः क्रूराः प्रायः कुलिशसन्निभाः ॥

बिल्वशाखाग्रमात्राणां ग्रहणं वनदन्तिभिः । क्रियते वनमध्ये तु तत्प्रवेशो न सर्वथा ॥ १८८ ॥

नान्येषामत्र मार्गोऽस्ति प्रवेशः कण्टकावृते । मयापि सूक्ष्ममार्गेण जलदानाय गम्यते ॥ १८९ ॥

न जम्बुकप्रवेशोऽपि दुष्टकण्टकसङ्गमात् । शार्दूलानां प्रवेशस्तु तत्र संभावितोऽपि न ॥ १९० ॥

इतोऽधिकप्रयत्नोऽपि न ममात्र भवत्यतः । एवमेव मया नीतो भूयान् कालो मया द्विज ॥

इति तद्वचनं श्रुत्वा द्विजश्चिन्तापरोऽभवत् । तेन मार्गेण गन्तव्यं वनमध्ये मयेत्यपि ॥ १९२ ॥

ततः सोऽपि गतो भिल्लः सायङ्काले गृहं प्रति । स तत्रैव स्थितो विप्रश्चिन्ताव्याकुलमानसः ॥

अन्धकारोऽपि संवृत्तस्ततो गाढं तमस्ततः । हस्ती समागतः कोऽपि मदोन्मत्तो विशेषतः ॥ १९४ ॥

मदधारापरिक्रान्तः श्रान्तोऽपि वनलीलया । दूरात् तं द्विजमालोक्य स्थितः सोऽपि ददर्श तम् ॥

ततः सत्वरमादाय शुण्डादण्डेन तं द्विजम् । दधारोर्ध्वं पुष्कराग्रे चालयन् करिलीलया ॥ १९६ ॥
अन्तरिक्षं गतो विप्रस्तदा चिन्तासमाकुलः । किं कर्तव्यं मया किं वा चिन्तितं किमतः परम् ॥
सा चिन्ता विपुला जाता पुष्कराग्रस्थितस्य मे । किं कर्तव्यं भक्षणार्थमयं तावत् समुद्यतः ॥
अतः परं क्व वा नेष्यत्ययं हस्ती तनुं मम । न बिल्वतरुतीरे वा मरणं किं प्रजायते ॥ १९९ ॥
बिल्ववातोऽप्यन्त्यकाले यदि देहे पतिष्यति । तदा पूतो ब्रह्मलोकं प्रयास्यामि न संशयः ॥
किमयं सकृदादाय भक्षयिष्यति सत्वरम् । यद्वा वनान्तरे दूरे पातयिष्यति पातकैः ॥ २०१ ॥

हा हा महेश करुणाकर बिल्वपत्रैः नाराधितोऽपि शिवरात्रिमहानिशायाम् ।
व्यर्था गता जनिरियं विफला जनिर्मे धिग्धिक् ललाटलिखितं च विदूष्यमेव ॥ २०२ ॥

पाहि त्रिलोचन महापदियं त्वयापि दूरीकृता यदि न तर्हि कृपासमुद्र ।
का वा तवापि करुणा तरुणेन्दुमौले गौरीविलासनिलयानलजालफाल ॥ २०३ ॥

भूतित्रिपुण्ड्रललितामलफालदेश वीरेश शोकविनिवारक लोकहेतोः ।
का ते दयापि दयनीयतमे मयीश शश्वद्विलोकय विलोकय शूलपाणे ॥ २०४ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे बिल्वमहिमवर्णने शिवढुण्ढिपश्चात्तापवर्णनं नाम पञ्चचत्वारिंशोऽध्यायः ॥

— :×: —

## अथ षट्चत्वारिंशोऽध्यायः ।

रत्नाकरः —

इति तद्वचनं श्रुत्वा सत्यमूर्तिः स भूपतिः । अतिविस्मयमापन्नः प्राह मन्दं कृताञ्जलिः ॥ १ ॥

महारथः —

अतिकौतुकमद्योक्तं ईदृशं न श्रुतं मया । कदापि का गतिस्तस्य जाता तद्वद सादरम् ॥ २ ॥

सत्यव्रतः —

स करी पुष्कराग्रेण धृत्वा तं गगनान्तरे । भ्रामयित्वा वने तस्मिन् पातयामास सत्वरम् ॥ ३ ॥
विप्रो बिल्वतरुस्कन्धे पतितः सत्वरस्तदा । शाखां गृहीत्वा हस्ताभ्यां सन्तोषं परमं ययौ ॥ ४ ॥
अतिसन्तुष्टहृदयः स बिल्वतरुसंश्रितः । मेने कृतार्थमात्मानं करिणं च मदोद्धतम् ॥ ५ ॥

शिवढुण्ढिः —

किं देयं करिणे मया करुणया तावत् करी प्रेरितो
विश्वेशेन कृपालुना शिवपदे बिल्वीदलं दीयते ।
सन्तोषः खलु तावतैव गिरिजाभर्तुः प्रहर्तुः परं
[1] दुष्टानां स यमः किरातमधुना भूतोपकारक्षमः ॥ ६ ॥

न करी चरणाघातपीडितं मां चकार सः । न मां सन्ताडयामास स तावदुपकारकः ॥ ७ ॥
नान्यत्र पातयामास न चक्रे गिलनं मम । मदभीष्टं कृतं तेन बिल्वपत्रनिवेशनात् ॥ ८ ॥
[2] उन्मत्तकरिणोऽप्यस्य करुणा शङ्कराज्ञया । जाता सोऽप्युपकर्तव्यः किं तावदुपकारकम् ॥ ९ ॥
इत्युक्त्वा भूरुहात् तस्मादवतीर्यावनीतलम् । प्राप्य कुल्यां ददर्शाथ गङ्गायाः पापनाशिनीम् ॥
तत्तीरबिल्वमूलेषु लिङ्गानि विमलान्यपि । अतितुङ्गानि शाङ्गानि विमलानि ददर्श सः ॥ ११ ॥
ततः स्नात्वा स कुल्यायां भस्म नास्तीति चिन्तया । व्याकुलो भस्मराशिं च स ददर्श मुनीश्वरः ॥
स पश्चाद्भस्मनोद्धूल्य सर्वमङ्गं प्रयत्नतः । शिवपूजार्थमुद्युक्तः प्रापानन्दं स विस्मितः ॥ १३ ॥
बिल्वशाखां समादाय जलं लिङ्गेषु निक्षिपन् । पूजयामास विश्वेशं तल्लिङ्गे बिल्वपल्लवैः ॥ १४ ॥
स मुनिर्हस्तलभ्याभिः शाखाभिर्बिल्वपल्लवैः । मनोज्ञैः पूजयामास शिवलिङ्गानि शाङ्कराः ॥१५॥
एवं बिल्वार्चनेनैव नीता भूता शिवप्रिया । अरुणोदयपर्यन्तं चकार शिवपूजनम् ॥ १६ ॥
सन्तोषं परमं प्राप बिल्वपल्लवपूजया । सफलं जन्म संप्राप्तमतिदुर्लभमित्यपि ॥ १७ ॥

कुलं पवित्रं मम बिल्वपल्लवैः कृतं यतः शाङ्गसमर्चनं मया ।
लिङ्गेषु तुङ्गेषु मनोहरेषु विभूतियुक्तेषु विभूतिदेषु ॥ १८ ॥

अतः परं कालभयं न मे स्यात् संसारभीतिर्न मम प्रभूता ।
पापानि तावत्प्रलयं गतानि शिवार्चनेनैव विशेषतोऽद्य ॥ १९ ॥

शिवार्चनाकारमहानलेन दग्धानि पापामितकोटराणि ।
जितं जगत् सर्वमतः परं मे कर्तव्यमन्यन्न विभाति नूनम् ॥ २० ॥

अतः परं लौकिकमेकमस्ति भिल्लाद्भयं भूरुहरक्षकान्मे ।
तद्वारणं केन भविष्यतीति चिन्ता कृतान्तादिव साप्यपारा ॥ २१ ॥

---

1 दुष्टानामधमः किलायमधुना C 2 अयं श्लोकः C कोशेऽधिकः ।

ततः परं तद्वनपालकोऽपि प्रातः समुत्थाय ययौ वनाय ।
वनं प्रविष्टोऽपि जलं प्रदातुं स बालबिल्वांकुरपोषणाय ॥ २२ ॥

ततः परं स दूरेण दृष्ट्वा तं मुनिपुङ्गवम् । पूजितान्यपि लिङ्गानि बभाषे वचनं मुदा ॥ २३ ॥

वनमालः —

आगतं केन मार्गेण वनेऽस्मिन् कण्टकावृते । मया यश्चिन्हितो मार्गः स तथैव स्थितः खलु ॥
मार्गान्तरस्तु नास्त्यत्र प्रवेशः कठिनः खलु । मनुष्याणां पशूनां वा प्रमत्तवनदन्तिनाम् ॥ २५ ॥
इदमत्यद्भुतं दृष्टं कुल्यातीरे मनोहरे । बिल्वपल्लवसंक्रान्तं तदिदं लिङ्गमण्डलम् ॥ २६ ॥
सेयं सुरसरित्कुल्या शिवलिङ्गसमाकुला । एतेषां पूजनं केनाप्यत्र नैव कृतं पुरा ॥ २७ ॥
विशीर्णैरेव बिल्वानां पाण्डुपत्रैरिदं परम् । लिङ्गमण्डलमाक्रान्तं दवभूतिकणैरपि ॥ २८ ॥
इयं विभूतिरानीता दवपावकजा मया । बालबिल्वप्ररोहाणां वृद्ध्यर्थं केवलं खलु ॥ २९ ॥
तनुरप्यनया भूत्या तावत् पूतेति मन्महे । हस्तिप्रक्षेपचिह्नं च दृश्यते भस्मराशिषु ॥ ३० ॥
तव स्वरूपं किं वा मे वद किं किन्नरः सुरः । प्रवेशस्तावदन्येषामत्र नास्तीति मे मतिः ॥ ३१ ॥
इति तद्वचनं श्रुत्वा पूर्ववृत्तान्तमादितः । स तस्मै प्राह तेनैव विस्मितो वनपालकः॥ ३२ ॥
ततः प्रभावं लिङ्गानां लिङ्गे बिल्वार्चनस्य च । तद्बिल्वपोषणस्यापि पप्रच्छ वनपालकः ॥ ३३ ॥
इति तद्वचनं श्रुत्वा मुनिर्गतभयस्तदा । चकार परमप्रीत्या तत्प्रभावानुवर्णनम् ॥ ३४ ॥

शिवदुण्ढिः —

शिवस्वरूपाणि किलामलानि लिङ्गानि सर्वाणि शिवार्चनं च ।
लिङ्गे कृतं सर्वदमित्यवैमि लिङ्गार्चनेनापि समो न धर्मः ॥ ३५ ॥

अपारपुण्यैः शिवपूजनेषु भक्तिर्भवाम्भोधिविनाशनाय ।
भविष्यतीति स्फुटमेव मन्ये न तेन धर्मेण समोऽस्ति धर्मः ॥ ३६ ॥

संसाराघकुलाम्बुराशिरसकृत् कम्पं विधत्ते मुहुः कालोपि त्रिपुरारिपूजनरतो बिल्वीदलैः कोमलैः ।
लिङ्गे तुङ्गसरित्तरङ्गनिकरव्याप्ते सकृद्वा सुराः सर्वे तत्पदपूजनाय सततं कुर्वन्ति यत्नं मुदा ॥

लिङ्गाराधनमेव केवलमुमाकान्तप्रियं मुक्तिदं मन्ये पापहरं च सन्ततमिदं बिल्वीदलैः कोमलैः ।
कर्तव्यं सकृदेव वा सभसितैर्जेतुं यमं शांभवं संप्राप्तुं पदमप्यपारविभवं सत्यं त्रिसत्यं परम् ॥

भस्मालङ्कृतदेहमर्चकमुमाकान्तस्य बिल्वीदलैः
दृष्ट्वा पापमहाम्बुराशिकुलमप्यामूललूनं भवेत् ।

दुःखाब्धिः प्रलयं प्रयात्यपि भटाः कालस्य दूरं परं
यान्त्येवाशु शिवार्चनोद्यतमतिस्तस्मात् सुरैः पूज्यते ॥ ३९ ॥

लिङ्गाराधनपुण्यराशिजफलं वक्तुं न शक्ताः सुराः
सेन्द्रोपेन्द्रपुरोगमा अपि तथा सिद्धाः प्रसिद्धा अपि।
गन्धर्वा अपि किन्नरा अपि गणैर्ज्ञेयोऽथवा न त्वया
वेदैर्वा गिरिशः परं सुरवरो जानाति तत्वं परम् ॥ ४० ॥

अभ्यर्चितानि लिङ्गानि दृष्ट्वा वा परया मुदा। देहान्ते शाङ्करं स्थानं प्राप्नुवन्ति न संशयः ॥
प्रातः पूजितमालोक्य शिवलिङ्गं शिवात्मकम्। भवेद्रात्रिकृतैः पापैर्विमुक्तो विविधैरपि ॥ ४२ ॥
लिङ्गं मध्याह्नकालेऽपि पूजितं यस्तु पश्यति। स पूर्वाह्णकृतैः पापैः सर्वैरपि विमुच्यते ॥ ४३ ॥
प्रदोषकाले यः पश्येत् शिवलिङ्गं समर्चितम्। स सप्तकल्पपर्यन्तकृतैः पापैर्विमुच्यते ॥ ४४ ॥
यत् पुण्यं जायते भक्त्या शिवलिङ्गावलोकने। तत्पुण्यमन्तरहितं भुक्तिमुक्तिफलप्रदम् ॥ ४५ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम्। शृणु तत्सावधानेन महापापविनाशनम् ॥ ४६ ॥
पुरा कश्चिदभूद्राजा विन्ध्यशैलं समाश्रितः। स सर्वभाग्यसंपन्नः सुन्दरश्च विशेषतः ॥ ४७ ॥
तस्यासीद्यावदैश्वर्यं तावन्नान्यस्य भूतले। तस्य कन्याप्यभूत् कापि सा नाम्ना वरवर्णिनी ॥४८॥
सा यौवनं समासाद्य रम्भाधिकारकारिणी। सौन्दर्यवाहिनीरूपा रूपेणाप्रतिमैव सा ॥ ४९ ॥
तां कदाचित् समालोक्य रत्नप्रासादमण्डपे। राजा तया सह प्रीत्या रेमे रतिविशारदः ॥ ५० ॥
स सर्वदापि तत्रैव कार्यान्तरविवर्जितः। चक्रे तया सह क्रीडां व्रीडामानविवर्जितः ॥ ५१ ॥
तस्मिन् विन्ध्याचले लिङ्गं तस्य शृङ्गे मनोहरे। उत्तुङ्गतुङ्गमुत्कृष्टं स्थितं गन्धर्वपूजितम् ॥ ५२ ॥
तत् पश्यति प्रगे राजा तत्प्रासादवराश्रितः। मध्याह्नेऽपि विशेषेण प्रदोषेपि समर्चितम् ॥ ५३ ॥
कालान्तरे रतिं कृत्वा सर्वदा निजकन्यया। स्थितः पापसमुत्पन्नभयमात्रविवर्जितः ॥ ५४ ॥
तस्यै प्रदर्शयत्यादौ शिवलिङ्गं मनोहरम्। कुचाकारमिदं पश्य लिङ्गमित्यतिसादरम् ॥ ५५ ॥
तल्लिङ्गं कुचसङ्काशमिति प्रीत्या स चन्दनम्। दापयत्यतियत्नेन कस्तूरीकर्दमान्वितम् ॥ ५६ ॥
पुष्पमालापरिवृतं कारयत्यपि भूपतिः। विनोदं च करोत्येव पश्य पश्येति तां मुहुः ॥ ५७ ॥
तेन पापान्यपाराणि तदन्यानि कृतान्यपि। तत्संख्याकरणं तावदशक्यमिति निश्चितम् ॥ ५८ ॥
ततः सा दैवयोगेन कदाचिद्वरवर्णिनी। मृता तां स समालोक्य मग्नो दुःखाम्बुधौ नृपः ॥ ५९ ॥

ततः स तेन दुःखेन मृतो राजापि तत्क्षणे । तदानीमागताः क्रूराः प्रबलाः कालकिङ्कराः ॥ ६० ॥
तया सह नृपं दृष्ट्वा धर्मलोपविवर्जितम् । नेतुं समुद्यताः सर्वे मत्वा भ्रान्त्या प्रयत्नतः ॥ ६१ ॥
तदानीमागता एव कोटिशः शिवकिङ्कराः । विमाने तं समारोप्य सत्वरं चलिताश्च ते ॥ ६२ ॥
हत्वा तान् यमदूतांश्च पूर्वं तं नेतुमुद्यतान् । तद्विमानं यमो दृष्ट्वा विस्मयं परमं गतः ॥ ६३ ॥
ततः परं चित्रगुप्तं विलोक्याह यमो मुदा । कः पुण्यवान् प्रयात्यत्र विमानेनेति सादरम् ॥ ६४ ॥

चित्रगुप्तः —

यमायमखिलाघौघराशिरेव तथापि सः । लिङ्गावलोकनाद्याति विमानेन शिवालयम् ॥ ६५ ॥

दृष्ट्वा शङ्करपूजनार्जितफलेयत्ता न वेदैर्न वा
देवैर्वा मुनिपुङ्गवैरपि तथा सिद्धादिभिर्वा ध्रुवम् ।
एवं शङ्करलिङ्गदर्शनफलं वक्तुं न शक्यं परं
तत्तत्वं शिव एव वेद गिरिजा स्कन्दो गणेशोऽपि वा ॥ ६६ ॥

रतिर्दुहित्रा सह तेन तावत् कृतैव यावन्मरणं नृपेण ।
तथापि लिङ्गं खलु तुङ्गमेकं शाङ्गं विलोक्य स्थितमादरेण ॥ ६७ ॥

सायं प्रगेऽपि प्रमुदेन तेन मध्याह्नकालेऽपि स चन्दनाद्यैः ।
अलंकृतं कारयति प्रयत्नात् लिङ्गं स शाङ्गं कुचसन्निकाशम् ॥ ६८ ॥

लिङ्गं कुचाकारमिदं मनोज्ञं इदं प्रपश्येति मुहुः प्रपश्यन् ।
रतिं दुहित्रा स चकार राजा तत्पुण्यतो याति विमानरत्नात् ॥ ६९ ॥

कृतानि पापान्यमितानि तानि दग्धानि तल्लिङ्गविलोकनेन ।
जातानि पुण्यान्यमितानि काले तैरद्य यास्यत्यगजासहायम् ॥ ७० ॥

इति तद्वचनं श्रुत्वा यमोऽपि प्रीतमानसः । दूरात् प्रणम्य तं दृष्ट्वा विस्मयं परमं गतः ॥ ७१ ॥
ततः परं विमानेन स ययाविन्द्रपूजितः । ब्रह्मलोके ब्रह्मणापि पूजितः स नृपो यम ॥ ७२ ॥
पश्चाद्वैकुण्ठमासाद्य नारायणसमर्चितः । लक्ष्म्यापि पूजितः पश्चात् गरुडाद्यैश्च पूजितः ॥ ७३ ॥
ततस्तैरर्चितः प्राप कैलासं शिवमन्दिरम् । तत्रैव स गणैः साकं महादेवं विलोकयन् ॥ ७४ ॥

तस्माल्लिङ्गविलोकनेन सदृशं पुण्यं न लोकत्रये लिङ्गाराधनमुत्तमोत्तममिति ज्ञातं सुतैरप्यलम् ।
लिङ्गं मङ्गलदायकं यदि मुहुर्दृष्टं तदा मङ्गलान्यायान्त्येव मुहुर्मुहुः खलु मुदा लिङ्गोत्सवालोकने ॥

एतानि लिङ्गानि मनोहराणि बिल्वीदलालङ्कृतमस्तकानि ।
विलोकितान्याशु शुभानि दातुं सद्यः प्रवृत्तानि न संशयोऽत्र ॥ ७६ ॥

यो बिल्वमूलस्थितलिङ्गपूजां करोति भक्त्या नवबिल्वपत्रैः ।
तत्पुण्यराशिर्गणनामतीतः स एव कैलासपतिप्रियोऽपि ॥ ७७ ॥

बिल्वमूलस्थिते लिङ्गे शिवः सन्निहितः स्वयम् । बिल्वपत्राणि गृह्णाति शिवभक्तार्पितानि सः ॥

न रत्नानि गृह्णाति गौरीसहायो यथा बिल्वपत्राणि गृह्णाति मूर्ध्ना ।
स्वभक्तार्पितानि प्रियाणीति मत्वा ददात्येव मुक्तिं स तैरर्चितोऽपि ॥ ७९ ॥

किमन्यन्महादेवलिङ्गार्पितेन परिच्छिन्नबिल्वीदलेनापि तुल्यः ।
तदेकं महापातकापारशैलप्रदाहाय शक्तं महापावकाभम् ॥ ८० ॥

किमन्यन्महेशाय देयं प्रियं वा न बिल्वीदलान्यत् प्रियं भूतलेऽस्मिन् ।
पुरा बिल्वपत्रैः समाराध्य धीराः सुरत्वं च लब्ध्वा शिवं ते प्रपन्नाः ॥ ८१ ॥

अहो बिल्वमूलस्थलिङ्गार्चनेन प्रयान्त्येव सर्वेऽपि शर्वं महार्हम् ।
पदं प्राप्य तुष्टा भवन्त्येव सत्यं न तैरस्ति तुल्योऽत्र लोके परत्र ॥ ८२ ॥

यः कल्मलीकृतमनुत्तमबिल्वमूले बिल्वीदलेन कमलैरमलैश्च भक्त्या ।
संपूजयत्यसकृदादरतो विलोक्य तं पूजयन्ति बहुधा त्रिदशा मुनीन्द्राः ॥ ८३ ॥

न बिल्वपत्रार्पणपुण्यतुल्यं पुण्यं न वेदेषु यतस्तदेव ।
सर्वार्थसिद्धिर्भवतीति मन्ये धन्ये धन्येन मान्येन शिवार्चनेन ॥ ८४ ॥

पापानि तावत्प्रबलानि यावत् न बिल्वमूले शिवलिङ्गमूर्ध्नि ।
बिल्वीदलान्याशु समर्पितानि दत्तेषु नष्टानि भवन्ति तानि ॥ ८५ ॥

नीरैर्बिल्वतरुप्रवृद्धिजनकस्तद्बिल्वमूलस्थितं लिङ्गं पश्यति बिल्वपल्लवयुतं बिल्वैः समभ्यर्चयन् ।
तद्बिल्वीतरुसंभवैरभिनवैः शंभुप्रियो जायते साम्बस्तेन समर्चितोऽपि सदयो गौरीसहायो मुहुः ॥

एकं बिल्वतरुं स्वहस्तगलितैर्नीरैः प्रवृद्धं परं
कुर्यात् तस्य कुलं प्रवृद्धमसकृत् भुक्त्वाऽपि भोगान् बहून् ।
मुक्त्वा शङ्करमेव याति स सुराराध्यत्वमाप्नोत्यतो
धर्मो बिल्ववनानुपालनसमुत्पन्नोऽमितोऽत्यद्भुतः ॥ ८७ ॥

कृतेन बिल्वीवनपालनेन पुण्याम्बुराशिः खलु तत्प्रवृद्धः ।
तत्पुण्यतुल्यं किमिहास्ति पुण्यं प्रीतो भवत्येव शिवोऽपि तेन ॥ ८८ ॥

अत्रैवोदाहरन्तीममितिहासं पुरातनम् । तमतिप्रीतिदं तावद्वदाम्यघविनाशनम् ॥ ८९ ॥
रेवातीरे पुरा नारी कापि भिल्लस्य सुन्दरी । स्वकुटीनिकटे धूर्ता बिल्वबीजं ददर्श सा ॥ ९० ॥
आलवालं कल्पयित्वा जलं दत्त्वा प्रयत्नतः । चकार बिल्वबीजस्य तस्मिन् भक्त्या प्रपालनम् ॥
ततः सा जलपानेन कुर्वन्ती तस्य पोषणम् । वृतिं चकार तस्यैव कण्टकाद्यैर्विशेषतः ॥ ९२ ॥
तत्पोषितस्तरुर्जातः शाखाभिरभितो वृतः । तद्बिल्वतरुमूले सा चकार शयनस्थलम् ॥ ९३ ॥
सा बाणलिङ्गमादाय स तरुर्बालको यथा । वाताहतिभयात् तत्र स्थापयामास सुन्दरी ॥ ९४ ॥
बिल्वमूलैर्वेष्टितं च ववृधे बिल्वभूरुहैः । तत्तथैव स्थितं तत्र रेवालिङ्गं मनोहरम् ॥ ९५ ॥
तल्लिङ्गं च घटाकारं तल्लिङ्गोदरपूरितम् । कुम्भमात्रं जलं तत्र तिष्ठत्येवातिशीतलम् ॥
सा तल्लिङ्गजलं पीत्वा प्रत्यहं शीतले जले । प्रक्षाल्य लिङ्गममलं प्रयच्छति जलं पुनः ॥ ९७ ॥
पतन्ति जीर्णपर्णानि तस्य बिल्वतरोः स्वतः । तैः पत्रैः पूजितं लिङ्गं रेवातीरे मनोहरैः ॥ ९८ ॥
सा रात्रौ स्वोपभोगार्थं पदार्थानां प्रकाशनम् । बिल्वमूलस्थदीपेन कृत्वा कृत्वा स्थिता मुहुः ॥
सा जारिणी तया तत्र कृतं विटविडम्बनम् । नग्नया नर्तनेनापि गानैरपि विशेषतः ॥ १०० ॥
ततः पञ्चत्वमापन्ना कालेन यमकिङ्करैः । समावृता तदा तत्र यमोऽपि स्वयमागतः ॥ १०१ ॥
तामेव नेतुमुद्युक्तान् किङ्करानाह सत्वरम् । स्प्रष्टव्या पुण्यमूर्तिः सा न करैरिति विस्मितः ॥
तदानीमागतस्तत्र पुलोमा इति विश्रुतः । राजाप्याखेटकं कृत्वा श्रान्तः खेदलवाकुलः ॥ १०३ ॥
स राजा शिवपूजायां निरतः शिवतत्परैः । समावृतो बिल्वमूले ददर्श यममास्तिकम् ॥ १०४ ॥
चित्रगुप्तादिसंयुक्तं मृतालोकनतत्परम् । तमागतं यमो दृष्ट्वा विनतः प्रणयान्वितः ॥ १०५ ॥
यममाह तदा राजा श्रान्तोऽपि स शनैः परम् । सन्तोषं जनयन्नेव यमाय शिवपूजकः ॥ १०६ ॥

पुलोमा —

कुतः समागतं काल क वा गमनमीप्सितम् । अत्रावस्थानकृत्यं च किमस्ति वद तन्मम ॥ १०७ ॥
इत्युक्तस्तमुवाचाथ कृतान्तस्तं नृपोत्तम । अत्रैवागतमस्माभिः कौतुकं द्रष्टुमादरात् ॥ १०८ ॥
पुण्यपुञ्जस्वरूपेयं राजन् विगतकल्मषा । एतद्दर्शनमात्रेण कृतकृत्योऽस्म्यसंशयम् ॥ १०९ ॥
इति तद्वचनं श्रुत्वा स राजा प्राह तं यमम् । इयं विटगणाक्रान्ता चेटी प्रेक्ष्या कथं त्वया ॥

इति तद्वचनं श्रुत्वा यमः प्राह नृपं प्रति । इयं पुण्यस्वरूपेति ज्ञाता राजन् मया खलु ॥ १११ ॥
चित्रगुप्तो विजानाति किमेनां पावनामिति । नदीनामपि जानाति नदीमिति विनिश्चितम् ॥
अनया खलु रेवापि पुण्या पुण्येति विश्रुता । एतत्पुण्यप्रभावस्तु वक्तुमेव न शक्यते ॥ ११३ ॥
लिङ्गार्चनपरा सेयं जलैर्बिल्वदलैरपि । पश्य पश्योत्तमं लिङ्गं नार्मदं कुम्भसन्निभम् ॥ ११४ ॥
बिल्वमूलसमाक्रान्तं दीपशोभाविराजितम् । अनुलिप्तं बिल्वमूलं पश्य बिल्वदलावृतम् ॥ ११५ ॥
अनेन बिल्वतरुणा लिङ्गपूजा निरन्तरा । कल्पिता शीर्णपर्णानि पतन्ति शिवमस्तके ॥ ११६ ॥
तदास्तरणभूतानि जीर्णपर्णानि भूतले । पश्य पश्याधुना राजन् मरणे समुपस्थिते ॥ ११७ ॥
बिल्वपल्लवसंवीते भूतले यस्तनुं त्यजेत् । स याति परमं स्थानं देवानामपि दुर्लभम् ॥ ११८ ॥
अनया वर्धितः सोऽयममलो बिल्वभूरुहः । वातेन बिल्ववृक्षस्य पूतं रेवाजलं परम् ॥ ११९ ॥
ईदृशी पुण्यसामग्री लोके कस्यास्ति भूतले । इयं पुण्यवती मान्या नरकं नाभियास्यति ॥ १२० ॥
पुनर्लिङ्गार्चनं कर्तुं मानुषान्तरमाश्रिता । उद्यता पुण्यभारेण भोगवांछापि तिष्ठति ॥ १२१ ॥
कन्या तव भवित्री च सेयं शङ्करपूजका । इयं सौन्दर्यधाराभिराश्रितापि भविष्यति ॥ १२२ ॥
इन्द्रोऽपि ब्रह्मचर्येण दाराकांक्षां करोति सः । तस्मै देया त्वया कन्या सर्वसौभाग्यसंयुता ॥१२३॥

शिवदुण्ढिः —

इत्युक्त्वा स ययौ कालः स राजापि गृहं ययौ । तदुक्तां तत्कथां स्मृत्वा विस्मितः परया मुदा ॥
ततः परं पुलोम्नश्च पत्नी गर्भं दधार सा । गर्भेऽपि सा शिवध्यानरता समभवत् सदा ॥ १२५ ॥
ततः प्रजाता तद्गर्भं प्राप जातिस्मृतिं पराम् । शिवार्चनरता जाता पूर्वपुण्यगणैः परैः ॥ १२६ ॥
सा नालछेदनात् पूर्वं प्राह मातरमातरात् । सर्वेषां विस्मय तावत् जनयन्ती मुहुर्मुहुः ॥ १२७ ॥

पुलोमजा —

श्रीबिल्वतरुरस्त्येको रेवातीरे मनोहरे । तत्रास्ति लिङ्गमस्त्येकं कुम्भाकारं मनोहरम् ॥ १२८ ॥
तन्मध्ये यज्जलं तेन गर्भच्छेदनिवारणम् । कर्तव्यं यानमारुह्य गन्तव्यं सत्वरं मया ॥ १२९ ॥
विभूतिरधुना देया ललाटे तिर्यगादरात् । तिर्यक् त्रिपुण्ड्रं कर्तव्यं इति वाणीं वदत्यपि ॥ १३० ॥
इति तद्वचनं श्रुत्वा राजानं प्राहुरास्तिकम् । तदुक्तं सर्वमत्यन्तमाश्चर्यकरमद्भुतम् ॥ १३१ ॥
तदिदं नृपतिः श्रुत्वा स्मृत्वा यमवचः परम् । कथं कर्तव्यमित्याह महोत्साहसमन्वितः ॥ १३२ ॥
ततः परं समादाय बालां कुसुमसंवृते । याने संस्थाप्य राजापि ययौ रेवातटं प्रति ॥ १३३ ॥

पूर्वं संस्थापितं सापि दूरात् तं बिल्वभूरुहम् । दृष्ट्वा लिङ्गं च सुप्रीता प्रणतापि कृताञ्जलिः ॥
तत्र भूत्या समुद्धूल्य स्वाङ्गानि विमलान्यपि । रराज चन्द्ररेखेव भूतिरुद्राक्षभूषणा ॥ १३५ ॥
सा हस्तलभ्यानादाय कोमलान् बिल्वपल्लवान् । तल्लिङ्गं पूजयामास शङ्करं लोकशङ्करम् ॥ १३६ ॥
दृष्ट्वा तान् विस्मितो राजा स्वामात्यगणसंवृतः । धन्यां मेने शिवरतां तां कन्यां कमलाननाम् ॥
ततः प्रोवाच राजानं सा कन्या वरवर्णिनी । कर्णभूषणरूपाभिर्वाग्भिरादरपूर्वकम् ॥ १३८ ॥
राजन् अत्रैव नगरं कर्तव्यमतिसुन्दरम् । रत्नप्राकारसंकीर्णं रत्नमन्दिरसुन्दरम् ॥ १३९ ॥
अस्य लिङ्गस्य कर्तव्यं सदनं मणिकोटिभिः । रत्नप्रासादरचना कर्तव्याऽपि प्रयत्नतः ॥ १४० ॥
अस्य लिङ्गस्य पूजापि कर्तव्या सादरं मया । अहोरात्रमिह स्थेयं इतः क्वापि न गम्यते ॥ १४१ ॥
लिङ्गावलोकेनैव कालो नेयः कियानपि । इन्द्रोऽप्यत्र समायास्यत्यतः परमसंशयम् ॥ १४२ ॥
स मे परिणयं कृत्वा गमिष्यति महोत्सवैः । एतल्लिङ्गार्चनफलं ममैव हि भविष्यति ॥ १४३ ॥
तदिदं कामदं लिङ्गं रेवालिङ्गं विशेषतः । एतत्संपूजनात् सेव्यं मुक्तिश्चान्ते भविष्यति ॥ १४४ ॥
इत्याकर्ण्य वचस्तस्याः कुमार्याः कर्णभूषणम् । तथैव नगरं तत्र कारयामास भूपतिः ॥ १४५ ॥
ततो यौवनमासाद्य स्थिता सापि पुलोमजा । इन्द्रोऽप्यभ्यागतस्तत्र देवैरन्यैः समावृतः ॥ १४६ ॥
तमागतं नृपो दृष्ट्वा सन्तोषैरिदमादरात् । तद्बिल्वमूलसंविष्टं तल्लिङ्गार्चनतत्परम् ॥ १४७ ॥
तद्बिल्वतरुपत्रैस्तं पूजयन्तं महेश्वरम् । प्राह सन्तोषवचनैः पुलोमा श्रमवारकैः ॥ १४८ ॥

पुलोमा —

धन्योऽस्मि कृतकृत्योऽस्मि यस्मादिन्द्र त्वयाधुना । समागतं मे सदनं सदनं शुभसंपदाम् ॥ १४९ ॥
किमस्त्यपेक्षितं मत्तः तद्देयं तुभ्यमादरात् । तवाप्यवाप्तकामस्य कामना कुत्र वा वद ॥ १५० ॥
इति तद्वचनं श्रुत्वा तमिन्द्रः प्राह सादरम् । किमस्त्यपेक्षितं राजन् लिङ्गदर्शनमन्तरा ॥ १५१ ॥
एतल्लिङ्गप्रभावस्तु मह्यमुक्तो यमेन सः । स्मृतोऽपि तोषदः सोयं सर्वदोषनिवारकः ॥ १५२ ॥
तदानीमाह तं भूपं गुरुराहूय सादरम् । विवाहापेक्षयात्रेन्द्रः समागत इति स्मर ॥ १५३ ॥

ततः परं तद्वचनामृतेन स्फीतेन राजा परिपुष्टदेहः ।
तथास्त्विति प्राह ततश्चकार विवाहयत्नं स कृतार्थबुद्धिः ॥ १५४ ॥

ततः परं मण्डितमेव सर्वं पुरं महार्हं मणितोरणाद्यैः ।
सुभूषितं रत्नविभूषणाद्यैः पुलोमजा पुण्यवरेण्यपुञ्जा ॥ १५५ ॥

संपूर्णनगरं तस्य देवदुन्दुभिनिःस्वनैः । मन्दारपुष्पवृष्ट्यापि तूर्यैरन्यैर्विशेषतः ॥ १५६ ॥
सुमुहूर्ते ददौ कन्यां मङ्गलस्नानपूर्वकम् । राजाप्यलङ्कृतो राज्ञीं गृहीत्वा दिव्यभूषणैः ॥१५७॥
भोजिताः शांभवास्तेन कोटिशो रत्नभूषणैः । तोषिताश्च महादानैरपारैरमितोत्सवैः ॥ १५८ ॥

एवं विवाहोत्सवसंयुतोऽभूत् राजा ययाविन्द्रपुरीं स्वकन्याम् ।
इन्द्रं पुरस्कृत्य महोत्सवेन तूर्यैश्च संपन्नमतिप्रयत्नैः ॥ १५९ ॥

गृहप्रवेशोत्तरमिन्द्रदत्तैः कल्पद्रुमाद्यैः स नृपोऽतिहृष्टः ।
अभ्यागतः सन् नगरं मनोज्ञं स्वकन्यया साकममात्ययुक्तः ॥ १६० ॥

पुलोमजा लिङ्गविलोकनेन तत्पूजनेनापि पुनः प्रहृष्टा ।
तं बिल्वमालिङ्ग्य तदीयपत्रैरभ्यर्चयामास शिवासहायम् ॥ १६१ ॥

सा तं लिङ्गं पूजयित्वा यथेच्छं स्वर्गं गत्वा यानमारुह्य दिव्यम् ।
आयात्येव प्रत्यहं लिङ्गपूजां कर्तुं भर्त्रा साकमेवातिहृष्टा ॥ १६२ ॥

शङ्करः प्रेरयत्येव बिल्वाराधनकामुकः । स्वार्चनाय पुनर्नित्यं कृपालुर्बोधसागरः ॥ १६३ ॥
इति तद्वचनं श्रुत्वा सादरं भक्तिपूर्वकम् । प्रणतः प्राञ्जलिः प्राह तं मुनिं वनपालकः ॥ १६४ ॥
इतिहासः श्रुतः सोऽयं कृपया तत्र केवलम् । धन्योस्म्यतः परं वत्स हितं वद समाधुना ॥

शिवदुण्ढिः —

कृतार्थोसि न सन्देहो बिल्वभूरुहपालनैः । तव भाग्यस्य नान्तोऽस्ति जीवन्मुक्तोऽसि सर्वथा ॥
किञ्चात्र मुनयो नित्यमायास्यन्ति यथा तथा । कर्तव्यं द्वारमप्येकं वनस्यास्य विशेषतः ॥
मुनयोऽपि समागत्य कुल्यातीरे मनोहरे । लिङ्गार्चनं करिष्यन्ति कोमलैर्बिल्वपल्लवैः ॥ १६८ ॥
अपूजितानि लिङ्गानि न दृष्टान्यपि केवलम् । पूजितान्येव लिङ्गानि दृष्टानि फलदान्यपि ॥
शिवार्चकोपकारेण शिवस्तुष्टो भविष्यति । शिवार्चकापकारेण शिवो रुष्टो भविष्यति ॥ १७१ ॥
क्रोधं यदि महारुद्रः करिष्यति कदाचन । तदा ब्रह्माण्डविलयो जात इत्यवधारय ॥ १७१ ॥
येन केनापि रूपेण कर्तव्यं शिवतोषणम् । शिवार्चनोपकारोऽपि परमानन्दसाधनम् ॥ १७२ ॥
न कुर्वन्ति महादेवमज्ञात्वा शिवतोषणम् । अतः प्रयान्ति नरकं यावदाचन्द्रतारकम् ॥ १७३ ॥

धन्याः कृतार्थाः शिवतोषणार्थं कुर्वन्ति यत्नं विविधैरुपायैः ।
प्रमादहीनां शिवभक्तपूजां कुर्वन्ति विश्वेश्वरतोषणाय ॥ १७४ ॥

धन्यः स एव भुवनेषु य एव नित्यं गौरीपतिप्रियकराणि करोति भक्त्या ।
कर्माणि वेदविहितानि विभूतिपूतो रुद्राक्षलिङ्गसहितः शिवलिङ्गतुङ्गे ॥ १७५ ॥

सत्यमूर्तिः —

इति तद्वचनं श्रुत्वा फलानि विमलान्यपि । तस्मै ददौ मुनीन्द्राय स एव वनपालकः ॥ १७६ ॥
ततः परं मुनिस्तुष्टः स्नात्वा भूतिविभूषणः । चकार लिङ्गपूजां च बहुभिर्बिल्वपल्लवैः ॥ १७७ ॥
तद्दत्तैः परिपक्वैस्तैः स्थूलबिल्वफलैः शिवम् । पूजयित्वोपहारं च कल्पयामास सादरम् ॥ १७८ ॥
हारो हारोपहारेण क्षुधामपि निवार्य सः । तल्लिङ्गालोकनं कृत्वा स्थितस्तेनाभिवन्दितः ॥ १७९ ॥
ततः परं वनस्यापि द्वारमेवं चकार सः । येन प्रविष्टा मुनयो भवन्त्यपि वने सदा ॥ १८० ॥
तदाप्रभृति सन्तोषैर्मुनयस्तत्समीपगाः । प्रविश्य बिल्वकान्तारं सुखं प्रापुर्निजेच्छया ॥ १८१ ॥
शिवदुण्ढिप्रसादेन तस्मिन् बिल्ववने मुहुः । आयान्ति बिल्वपत्रार्थं पूजयन्ति महेश्वरम् ॥ १८२ ॥
शिवढुण्ढिं विलोक्यापि वार्तां श्रुत्वापि तस्य ताम् । हृष्टाः करिकराक्रान्तशरीरक्रान्तिगोचरम् ॥

रत्नाकरः —

इति सत्यव्रतोक्तानि वचनानि स भूपतिः । श्रुत्वा पृष्टः पुनः प्राह तं मुनिं स महारथः ॥१८४॥
स गजः क्व गतस्तस्य का गतिः समभून्मुने । शिवढुण्ढेः पुल्कसस्य एतन्मे वद सादरम् ॥

सत्यमूर्तिं —

कौतुकं शृणु राजेन्द्र तत्सर्वं विस्मयावहम् । पापप्रणाशकं पुण्यं शिवभक्तिप्रवर्धकम् ॥ १८६ ॥
स दन्ती सञ्चरंस्तस्मिन् वने मृगवराश्रिते । दैवादाहाररहितः क्षुधयापि प्रपीडितः ॥ १८७ ॥
तदा मृगेन्द्रः क्षुधया पीडितस्तं ददर्श सः । तुषारगिरिशृङ्गाग्रे स्थितोऽलितृषितोऽपि सः ॥
मत्तेभभक्षणोद्युक्तस्तमाहान्यो मृगाधिपः । त्वरा न कार्या सहसा कर्तुं तद्भक्षणं त्वया ॥ १८९ ॥
स तावत्पुण्यपूताङ्गः शिवानुग्रहभाजनम् । उपोषितोऽपि भूतायां पूर्वेद्युः शङ्करप्रियः ॥ १९० ॥
प्रक्षिप्तः शाङ्करस्तेन त्वरया बिल्वभूरुहे । ततः स पूजयामास शङ्करं बिल्वपल्लवैः ॥ १९१ ॥
ततः करी करिवरः शाङ्करस्योपकारकः । सर्वथा स न हन्तव्यः पापं तद्धननाद्भवेत् ॥ १९२ ॥
शैवोपकारको यस्मात् स तावत् पूज्यते सुरैः । पूज्यस्य मारणे तावत् नरकं याति सत्वरम् ॥

हितोपदेशः कुत एव तावत् स शैव एवेति न तस्य हिंसा ।
कार्या त्वया तावदवश्यमेव यमोऽनुधावत्यहिताय तुभ्यम् ॥ १९४ ॥

बिशेषतः शाङ्करोऽयं तुषारगिरिसंश्रितः । तुषारगिरिरप्यत्र शैवहिंसा हिताय न ॥ १९५ ॥
अशाङ्कराः करिवराः प्रभूताः पापकर्मणा । ते हन्तव्याः प्रयत्नेन करिणः किं न दुर्लभाः ॥ १९६ ॥
इति तद्वचनं श्रुत्वा स मृगेन्द्रः स्थितस्तदा । अन्यो मृगेन्द्रस्तं हत्वा दन्तपातैर्हतोऽपि सः ॥
तदानीमागताः क्रूराः कोटिशो यमकिङ्कराः । आगताः श्रीमहेशस्य किङ्करा अपि कोटिशः ॥
स मृगेन्द्रो यमभटैर्बद्धो युद्धोद्धटैर्भृशम् ॥ शस्त्रघातैः पीडितोऽपि तप्तायसजलैरपि ॥ १९९ ॥
तदानीं स करी त्यक्त्वा करिदेहं विलक्षणम् । रम्यं शिवगणाकारं प्राप सन्तोषपूर्वकम् ॥ २०० ॥
ततो विमानमारुह्य दयया शिवकिङ्करैः । प्राह विस्मयमापन्नः तं मृगेन्द्रं विलोकयन् ॥ २०१ ॥
अयं यद्यपि शत्रुर्मे वधार्होऽपि तथापि किम् । मोचनीयः प्रयत्नेन यमकिङ्करबन्धनात् ॥ २०२ ॥
मयि प्रीतिर्महेशस्य जाता शङ्करसेवया । तया शङ्कर एवाहं कृतकृत्यो न संशयः ॥ २०३ ॥
[1]अन्यथा दुर्लभं मह्यं विमानं प्रेषितं कथम् । भवेदागमनेनापि धन्योऽहं नात्र संशयः ॥
अयं मतङ्गसङ्गेन पावनेनातिपावनः । कथं वा नरके तस्य यातनाप्यतिदारुणा ॥ २०५ ॥
यथा शिवाङ्गसङ्गेन कृतकृत्योऽस्म्यहं तथा । शैवाङ्गसङ्गिसङ्गेन कथं पूतो न तद्वद ॥ २०६ ॥
इत्याकर्ण्य वचस्तस्य मोचितो दूतबन्धनात् । स मृगेन्द्रो ययौ स्वर्गं करी शङ्करमन्दिरम् ॥२०७॥
तौ मृगेन्द्रौ विलोक्यापि तं मृगेन्द्रं च तं करिम् । विस्मयं परमं प्राप्य शैलाग्रे संस्थितौ मुदा ॥
नीत्वा तद्वार्तया कालं स्मृत्वा शाम्भववैभवम् । एतादृशं महद्भाग्यं प्राप्तव्यमिति तौ स्थितौ ॥

प्रभावमीशार्चनतत्पराणां वक्तुं न शक्तोऽस्ति न वेदराशिः ।
श्रान्ताश्च वेदान्तविचारतान्तास्ते शाङ्कराराधनसेवकाः स्युः ॥ २१० ॥

अयं प्रभावो गिरिशप्रभावात् यथा कथञ्चित् कथितो मयापि ।
तत्तत्कथाशेषविशेषलेशः श्रुतोऽपि मुक्तिं स मुदे करोति ॥ २११ ॥

[2]धन्यं तदेतद्दिनमित्यवैमि यस्मिन् दिने शाम्भवपुङ्गवानाम् ।
कथा स्मृता सा सुरवाहिनीव पुनाति चित्तं स मुदं करोति ॥ २१२ ॥

धन्यं चित्तं शङ्करध्यानलोलं धन्ये नेत्रे लिङ्गसन्दर्शनेन ।
धन्यौ हस्तौ लिङ्गसंपूजनाद्यैः धन्या जिह्वा शाङ्गशङ्कीर्तनेन ॥ २१३ ॥

---

1 अयं श्लोकः C कोशे नास्ति । 2 अयं श्लोकः C कोशेऽधिकः ।

निश्वेशः कुलदैवतं मम महादेवः प्रभुर्मे पिता
दाता शङ्कर एव वेदविनुता माता भवानी मम ।
तेनेदं मम भाग्यमिन्द्रविनतं मत्सन्ततिः शांभवी
सौभाग्यं महदेतदिन्दुशकलालङ्कारपूर्वार्जितम् ॥ २१४ ॥

इति श्रीशिवरहस्ये तृतीयांशे हराख्ये उत्तरार्धे शिवढुण्ढि बिल्ववनपालकहस्ति सिंहकथावर्णनं नाम षट्चत्वारिंशोऽध्यायः ॥

—:×:—

# अथ सप्तचत्वारिंशोऽध्यायः ।

रत्नाकरः—

इति तद्वचनं श्रुत्वा स राजा वीतकल्मषः । शिवढुण्ढिगतिं वक्तुं सस्मार गिरिजापतिम् ॥ १ ॥
भगवन् पुण्यरूपेयं श्रुता शिवकथा मया । शिवढुण्ढिगतिं ब्रूहि किं चकार ततः परम् ॥ २ ॥

सत्यमूर्तिः— .

शिवढुण्ढिर्वनं प्राप्य बिल्वीवनमहत्तरम् । सुखं संप्राप तत्रैव निवासं च चकार सः ॥ ३ ॥
यावन्ति हस्तलभ्यानि बिल्वपत्राणि भूपते । तावद्भिः पूजयामास मासमात्रेण शङ्करम् ॥ ४ ॥
पश्चाद्भिन्वं समारुह्य गृहीत्वा बिल्वपल्लवान् । तैरीशं पूजयामास लिङ्गरूपिणमास्तिकः ॥ ५ ॥
एवं वत्सरमात्रेण सवने बिल्वपल्लवैः । लिङ्गेषु पूजयामास शिवं सर्ववनोद्भवैः ॥ ६ ॥
पुनरभ्यागता माघी सितान्या च चतुर्दशी । तां प्राप्य स मुनिस्तुष्टः प्राप्ता भूतेति सा मया ॥
तदानीं बिल्वपत्राणि न दृष्टान्येव तद्वने । अपत्रमेव तज्जातं वनं तत्कृतपूजया ॥ ८ ॥
ततश्चिन्तापरो जातो वने तस्मिन् महामुनिः । अलाभे बिल्वपत्राणां किं कर्तव्यं मयेत्यपि ॥ ९ ॥
तदानीमागताः शैवाः शिवपूजापरायणाः । आदातुं बिल्वपत्राणि शिवपूजार्थमादरात् ॥ १० ॥
ततः परं च ते खिन्नाः पत्रहीनं वनं पुनः । दृष्ट्वा तं मुनिशार्दूलं शिवढुण्ढिं च शाम्भवम् ॥ ११ ॥
तमागत्य महाशैवं ते सर्वे प्रणता परम् । ऊचुः खिन्नाननं राजन् अत्याश्चर्यसमन्विताः ॥ १२ ॥
स्वामिन् किमेवं म्लानं ते मुखं शिवमहोत्सवे । अद्य ध्येयो महादेवो विशेषेण तपोधनाः ॥
शिवार्चनधनस्यापि तव खिन्नं मनो यदि । अन्येषां तत्र का वार्ता वद संसारिणां मुने ॥ १४ ॥

दुःखानां विलयो भवत्यनुदिनं विश्वेश्वराराधनं ध्यानाद्यैरघकोटिकोटिविलये दुःखं कुतः स्यात् तव।
शाङ्काराधनमेव ते धनमिति ज्ञातं तदन्यैर्धनं नेतुं शक्यमपीति ते कथमिदं खिन्नं मनस्तद्वद ॥

सत्यमूर्तिः —

इति तद्वचनं श्रुत्वा तानाह मुनिपुङ्गवान् । शिवढुण्ढिः स्मरन्नेव शङ्करं करुणाकरम् ॥ १६ ॥

शिवप्रसादेन न दुःखमस्य सर्वात्मना सत्यमिदं वदामि ।
शिवार्चनं मे धनमेतदन्यैर्नेयं कथं वा शिवतत्परस्य ॥ १७ ॥

न चोरनेयं न च राजनेयं न शत्रुनेयं न तदन्यनेयम् ।
शिवार्चनाकारमिदं धनं मे वृद्धिं प्रयात्येव दिने दिने मे ॥ १८ ॥

न कालादपि भीतिर्मे नान्यस्मादपि सर्वथा । शिवप्रसादसंबन्धात् कथं भीतो भवेन्नरः ॥ १९ ॥
यद्यप्यन्यधनापेक्षा नास्त्यथापि ममाधुना । सुबिल्वपल्लवाभावात् खिन्नमद्य मनः खलु ॥ २० ॥
इयं माघी महाभूता लिङ्गं बिल्वदलान्यपि । दुर्लभानीति मे बुद्धिः सत्सङ्गोऽप्यतिदुर्लभः ॥ २१ ॥
मयापि श्वः परश्वो वा भावि किं वा ममेत्यपि । बिल्वपत्राणि दत्तानि सर्वाणि शिवमस्तके ॥
न बिल्वभूरुहाग्रेऽपि दृश्यन्ते पर्वताः खलु । अतः परं महाभूता वृथा स्यात् तैर्विना खलु ॥
यदर्थं करिपीडाऽपि सह्या जाता पुरा मया । तदभावे कथं प्रीतं मनो मम भविष्यति ॥ २४ ॥

तद्बिल्वपत्रग्रहणोद्यतानां निवारणं वा न कृतं मया तु ।
अतः कुतो वा नवबिल्वपत्रं न क्वापि दृष्टं खलु भूरुहेषु ॥ २५ ॥

भवद्भिरागत्य नवानि नीतान्यपारपत्राणि मयापि दैवात् ।
निवारणे भीतिमुपेत्य तूष्णीं स्थितं मनो मे स्थगितं किलाद्य ॥ २६ ॥

नचादूरे वनं किञ्चित् बिल्वमत्र न दृश्यते । अतिदूरे वनं तिष्ठत्येकं व्याघ्रकुलाकुलम् ॥ २७ ॥
तत्राद्य गमने मध्ये मध्याह्ने शिवपूजनम् । कर्तुं न स्थावरं लिङ्गं बिल्ववार्तापि दूरतः ॥ २८ ॥
अद्याहोरात्रमीशाय बिल्वपत्रसमर्चनैः । नेयमित्यपि बुद्धिः सा जाता मे विफला खलु ॥
एकः संस्थापितो बिल्वो बहुपल्लवसंकुलः । भूतापूजार्थमित्येव नीतास्तद्बिल्वका अपि ॥ ३० ॥
केन प्रविष्टं न ज्ञातं वनमद्यारुणोदये । रिक्तो बिल्वतरुर्दृष्टोः किं कर्तव्यमतः परम् ॥ ३१ ॥

धिग्जीवनं बिल्वदलार्चनेन बिनापि भूतानिशि लिङ्गमूर्ध्नि ।
ततो वरं मृत्युमुखे प्रवेशो न जीवनं बिल्वदलैर्विनापि ॥ ३२ ॥

बिल्वीदलं कोमलमीश्वराय भूतार्धरात्रौ शिवलिङ्गमूर्ध्नि ।
ददाति यस्तं प्रणमन्ति देवाः स एव वन्द्यो भवतीह सर्वैः ॥ ३३ ॥

इन्द्रादिकापारसुरैः समर्चितः स एव यः शङ्करमूर्ध्नि बिल्वम् ।
प्रयच्छति स्वच्छमतिर्विभूत्या लिङ्गस्वरूपे सुकृतार्थरूपे ॥ ३४ ॥

इति तद्वचनं श्रुत्वा तमूचुर्मुनिपुङ्गवाः । अत्यास्तिकं मुनिश्रेष्ठं शिवलिङ्गार्चने रतम् ॥ ३५ ॥

ऋषयः —

आसायमपि गन्तव्यं यत्र बिल्ववनं महत् । लिङ्गान्यपि समादाय नार्मदानि गृहात् परम् ॥
तत्र तिष्ठन्तु शार्दूलाः प्रबला अपि दन्तिनः । नगेन्द्रा अपि तिष्ठन्तु बिल्वभूरुहकानने ॥ ३७ ॥
अतः परं जीवनेन किं कृत्यमधुना वद । तत्र चेन्मरणं तेन मुक्तिर्बिल्वावलोकनात् ॥ ३८ ॥
कोटिशो मुनयः सर्वे वयं यामस्तथा यम । भीतः स्यादेव शार्दूलप्रभृतीनां तु का कथा ॥ ३९ ॥

अस्माभिरुच्चैः शिवनाम भक्त्या वक्तव्यमेवोरुवनप्रदेशे ।
तदा कथं तद्ध्वनयः प्रवृद्धाः तद्भूरिभूत्यै न भवन्ति सन्तः ॥

दवभस्म समादाय लिङ्गं चादाय सत्वरम् । गन्तव्यं न विलम्बोऽत्र साध्यः खलु महात्मनाम् ॥
भूतायामपि को न स्यात् निशि लिङ्गार्चने रतः । विहाय जारजान् दुष्टान् मद्यपानपि भूतले ॥
अयमेतादृशः कालः कदा वा समुपैष्यति । कदा शिवार्चनोद्योगो भविष्यति न विद्महे ॥ ४३ ॥
सकुटुम्बो बालकैश्च पुत्रपौत्रादिभिः सह । अद्य प्राप्तव्यमस्माभिः बिल्वभूरुहकाननम् ॥ ४४ ॥
इत्युक्त्वा चलिताः सर्वे कोटिशो मुनिपुङ्गवाः । पुत्रपौत्रादिसंयुक्ताः कलत्रैरपि संयुताः ॥ ४५ ॥
ते यदा प्रस्थिताः सर्वे सहैव शिवढुण्ढिना । तदा रिक्तमभूत् सर्वं शिवस्थानं मनोहरम् ॥ ४६ ॥
ततो गताः परिश्रान्ता मुनयो बालकैः सह । प्रविष्टास्तद्वनं यत्र बहवो बिल्वभूरुहाः ॥ ४७ ॥
तदानीं कोटिशो दृष्टाः शार्दूला विवृताननाः । मृगेन्द्राः शैलसंकाशाश्चन्द्रमण्डलसन्निभाः ॥
तदानीं मुनिदारास्ते गृहीत्वा स्तन्यपान् शिशून् । सगर्भाश्च भयत्रस्ताः किं कर्तव्यमिहेत्यपि ॥
हा महादेव गौरीश महादेवेति वादिनः । अत्युच्चैर्मरणं प्राप्तमित्येवं भयविह्वलाः ॥ ५० ॥

प्रदोषसमये परं हरविहारयोग्यं वरं विलोकितमघापहं वृतमपारबिल्वद्रुमैः ।
अतः परमघैर्भयं न भवतीति निश्चित्य ते शिवस्मरणतत्पराः परमुदारदारैः सह ॥ ५१ ॥

व्याघ्रान् विलोक्य सितभस्मविभूषिताङ्गाः सर्वेऽपि ते मुनिवराः शिवपूजनार्थम् ।

जातो विलम्ब इति सत्वरमेव तावत् प्राप्तास्तदेव विपिनं हतसत्वयुक्तम् ॥ ५२ ॥

तानागतान् विलोक्याशु सदारान् मुनिपुङ्गवान्। विस्मयं परमं प्रापुर्मृगेन्द्रा अपि कोटिशः ॥
किन्नराणां सुराणां च प्रवेशो नात्र सर्वथा। नराः कथमिहायान्तीत्यतिविस्मितमानसाः ॥ ५४ ॥
अस्मद्रक्षार्थमेवात्र ते सर्वेऽप्यतिपावनाः। इदं बिल्ववनं द्रष्टुं लिङ्गं चेदं शिवात्मकम् ॥ ५५ ॥
किञ्चाद्य स्यात् परो लाभो मुनिसन्दर्शनादिह। ते शाम्भवाः शिवाचारतत्पराः परमादरात् ॥
रुद्राध्यायं पठिष्यन्ति मुनयः शिवपूजने। स श्रोतव्यः पापराशिविनाशाय शिवालये ॥ ५७ ॥
शिवनामस्फुरद्रत्ननिधिरेव यतो महान्। रुद्राध्यायः श्रुतो मुक्तिं दास्यत्येव न संशयः ॥ ५८ ॥
अद्य शांभवयोगेन भूतानिशि शिवार्चने। पशुजन्मविनाशः स्यादस्माकं नात्र संशयः ॥ ५९ ॥
शिवेन प्रेरिताः सर्वे मुनयोऽत्र समागताः। शाङ्कराग्रेसराः सर्वे तद्दर्शनमघापहम् ॥ ६० ॥
कृतकृत्याः परं सर्वे वयमद्य महानिशि। शिवार्चने शिवाचारनिरतैः सह सादरम् ॥ ६१ ॥
दुष्टव्यापारनिरतैः अस्माभिः स्थेयमादरात्। अन्यथा तेतिभीताः स्युर्मृगेभ्यो भीरवो नराः ॥
बालका अपि ये सिंहाः युवानश्च महत्तराः। सदा मौनेन तिष्ठन्तु दुर्व्यापारविवर्जिताः ॥ ६३ ॥
अद्य चेद्गजयूथानि समायास्यन्ति कोटिशः। न तेषां हननं कार्यं भूतायां व्रततत्परैः ॥ ६४ ॥
इति सर्वे विचार्यैव मृगेन्द्रास्ते परस्परम्। भूतिरुद्राक्षवलयाः तद्वनं समुपाश्रिताः ॥ ६५ ॥
आदायादाय बिल्वेभ्यो नवकोमलपल्लवान्। राशीकृत्य स्थिताः सर्वे शिवपूजार्थमादरात् ॥
ते मृगेन्द्राश्च तैर्दृष्टाः सर्वे मुनिवरैर्नृप। स्वकरोपार्जितापारबिल्वराशिसमन्विताः ॥ ६७ ॥
तान् दृष्ट्वा मुनयः सर्वे प्रहृष्टाः शिष्टसंमताः। एतेऽपि मुनयः केऽपि न मृगा इति निश्चिताः ॥
ततः प्रविष्टाः सर्वेऽपि वनं बिल्ववनाश्रितम्। प्रशान्तसिंहसंकीर्णं संकीर्णं शिवमण्टपैः ॥ ६९ ॥
तत्र लिङ्गानि दृष्टानि तुङ्गानि विमलान्यपि। काश्मीरमणिरूपाणि मुनिभिस्तैर्महात्मभिः ७० ॥
तल्लिङ्गदर्शनादेव तुष्टास्ते मुनिपुङ्गवाः। धन्यं दिनमिदं जातं श्रमोऽपि गत इत्यपि ॥ ७१ ॥
ततः परं मुनिवरैर्दृष्टा सा सुरवाहिनी। तत्र स्नानं च तैः सर्वैः सकुटुम्बैः सबालकैः ॥ ७२ ॥
भस्मसंछन्नसर्वाङ्गाः ते रुद्राक्षविभूषणाः। धन्यत्वं मेनिरे सर्वे शिवलिङ्गार्चनोत्सुकाः ॥ ७३ ॥
ततः सुरसरित्तीरबिल्वेभ्यो बिल्वपल्लवान्। समादाय ययुः सर्वे गौरीलिङ्गालयं प्रति ॥ ७४ ॥
मणिदीपसमाक्रान्तं दृष्ट्वा शङ्करमन्दिरम्। प्रहृष्टास्ते मुनिवराः प्रदोषसमये नृप ॥ ७५ ॥
गङ्गाजलं समादाय रुद्राध्ययनपूर्वकम्। कृत्वाऽभिषेकं बिल्वैश्च पूजयामासुरादरात् ॥ ७६ ॥

बिल्वीदलं कोमलमीश्वराय भूतार्धरात्रौ शिवलिङ्गमूर्ध्नि ।
ददाति यस्तं प्रणमन्ति देवाः स एव वन्द्यो भवतीह सर्वैः ॥ ३३ ॥

इन्द्रादिकापारसुरैः समर्चितः स एव यः शङ्करमूर्ध्नि बिल्वम् ।
प्रयच्छति स्वच्छमतिर्विभूत्या लिङ्गस्वरूपे सुकृतार्थरूपे ॥ ३४ ॥

इति तद्वचनं श्रुत्वा तमूचुर्मुनिपुङ्गवाः । अत्यास्तिकं मुनिश्रेष्ठं शिवलिङ्गार्चने रतम् ॥ ३५ ॥

ऋषयः —

आसायमपि गन्तव्यं यत्र बिल्ववनं महत् । लिङ्गान्यपि समादाय नार्मदानि गृहात् परम् ॥
तत्र तिष्ठन्तु शार्दूलाः प्रबला अपि दन्तिनः । नगेन्द्रा अपि तिष्ठन्तु बिल्वभूरुहकानने ॥ ३७ ॥
अतः परं जीवनेन किं कृत्यमधुना वद । तत्र चेन्मरणं तेन मुक्तिर्बिल्वावलोकनात् ॥ ३८ ॥
कोटिशो मुनयः सर्वे वयं यामस्तथा यम । भीतः स्यादेव शार्दूलप्रभृतीनां तु का कथा ॥ ३९ ॥

अस्माभिरुच्चैः शिवनाम भक्त्या वक्तव्यमेवोरुवनप्रदेशे ।
तदा कथं तद्ध्वनयः प्रवृद्धाः तद्भूरिभूत्यै न भवन्ति सन्तः ॥

दवभस्म समादाय लिङ्गं चादाय सत्वरम् । गन्तव्यं न विलम्बोऽत्र साध्यः खलु महात्मनाम् ॥
भूतायामपि को न स्यात् निशि लिङ्गार्चने रतः । विहाय जारजान् दुष्टान् मद्यपानपि भूतले ॥
अयमेतादृशः कालः कदा वा समुपैष्यति । कदा शिवार्चनोद्योगो भविष्यति न विद्महे ॥ ४३ ॥
सकुटुम्बो बालकैश्च पुत्रपौत्रादिभिः सह । अद्य प्राप्तव्यमस्माभिः बिल्वभूरुहकाननम् ॥ ४४ ॥
इत्युक्त्वा चलिताः सर्वे कोटिशो मुनिपुङ्गवाः । पुत्रपौत्रादिसंयुक्ताः कलत्रैरपि संयुताः ॥ ४५ ॥
ते यदा प्रस्थिताः सर्वे सहैव शिवढुण्ढिना । तदा रिक्तमभूत् सर्वं शिवस्थानं मनोहरम् ॥ ४६ ॥
ततो गताः परिश्रान्ता मुनयो बालकैः सह । प्रविष्टास्तद्वनं यत्र बहवो बिल्वभूरुहाः ॥ ४७ ॥
तदानीं कोटिशो दृष्टाः शार्दूला विवृताननाः । मृगेन्द्राः शैलसंकाशाश्चन्द्रमण्डलसन्निभाः ॥
तदानीं मुनिदारास्ते गृहीत्वा स्तन्यपान् शिशून् । सगर्भाश्च भयत्रस्ताः किं कर्तव्यमिहेत्यपि ॥
हा महादेव गौरीश महादेवेति वादिनः । अत्युच्चैर्मरणं प्राप्तमित्येवं भयविह्वलाः ॥ ५० ॥

प्रदोषसमये परं हरविहारयोग्यं वरं विलोकितमघापहं वृतमपारबिल्वद्रुमैः ।
अतः परमघैर्भयं न भवतीति निश्चित्य ते शिवस्मरणतत्पराः परमुदारदारैः सह ॥ ५१ ॥

व्याघ्रान् विलोक्य सितभस्मविभूषिताङ्गाः सर्वेऽपि ते मुनिवराः शिवपूजनार्थम् ।

जातो विलम्ब इति सत्वरमेव तावत् प्राप्तास्तदेव विपिनं हतसत्वयुक्तम् ॥ ५२ ॥
तानागतान् विलोक्याशु सदारान् मुनिपुङ्गवान् । विस्मयं परमं प्रापुर्मृगेन्द्रा अपि कोटिशः ॥
किन्नराणां सुराणां च प्रवेशो नात्र सर्वथा । नराः कथमिहायान्तीत्यतिविस्मितमानसाः ॥ ५४ ॥
अस्मद्रक्षार्थमेवात्र ते सर्वेऽप्यतिपावनाः । इदं बिल्ववनं द्रष्टुं लिङ्गं चेदं शिवात्मकम् ॥ ५५ ॥
किञ्चाद्य स्यात् परो लाभो मुनिसन्दर्शनादिह । ते शाम्भवाः शिवाचारतत्पराः परमादरात् ॥
रुद्राध्यायं पठिष्यन्ति मुनयः शिवपूजने । स श्रोतव्यः पापराशिविनाशाय शिवालये ॥ ५७ ॥
शिवनामस्फुरद्रत्ननिधिरेव यतो महान् । रुद्राध्यायः श्रुतो मुक्तिं दास्यत्येव न संशयः ॥ ५८ ॥
अद्य शांभवयोगेन भूतानिशि शिवार्चने । पशुजन्मविनाशः स्यादस्माकं नात्र संशयः ॥ ५९ ॥
शिवेन प्रेरिताः सर्वे मुनयोऽत्र समागताः । शाङ्कराग्रेसराः सर्वे तद्दर्शनमघापहम् ॥ ६० ॥
कृतकृत्याः परं सर्वे वयमद्य महानिशि । शिवार्चने शिवाचारनिरतैः सह सादरम् ॥ ६१ ॥
दुष्टव्यापारनिरतैः अस्माभिः स्थेयमादरात् । अन्यथा तेतिभीताः स्युर्मृगेभ्यो भीरवो नराः ॥
बालका अपि ये सिंहाः युवानश्च महत्तराः । सदा मौनेन तिष्ठन्तु दुर्व्यापारविवर्जिताः ॥ ६३ ॥
अद्य चेद्गजयूथानि समायास्यन्ति कोटिशः । न तेषां हननं कार्यं भूतायां व्रततत्परैः ॥ ६४ ॥
इति सर्वे विचार्यैव मृगेन्द्रास्ते परस्परम् । भूतिरुद्राक्षवलयाः तद्वनं समुपाश्रिताः ॥ ६५ ॥
आदायादाय बिल्वेभ्यो नवकोमलपल्लवान् । राशीकृत्य स्थिताः सर्वे शिवपूजार्थमादरात् ॥
ते मृगेन्द्राश्च तैर्दृष्टाः सर्वे मुनिवरैर्नृप । स्वकरोपार्जितापारबिल्वराशिसमन्विताः ॥ ६७ ॥
तान् दृष्ट्वा मुनयः सर्वे प्रहृष्टाः शिष्टसंमताः । एतेऽपि मुनयः केऽपि न मृगा इति निश्चिताः ॥
ततः प्रविष्टाः सर्वेऽपि वनं बिल्ववनाश्रितम् । प्रशान्तसिंहसंकीर्णं संकीर्णं शिवमण्टपैः ॥ ६९ ॥
तत्र लिङ्गानि दृष्टानि तुङ्गानि विमलान्यपि । काश्मीरमणिरूपाणि मुनिभिस्तैर्महात्मभिः ७० ॥
तल्लिङ्गदर्शनादेव तुष्टास्ते मुनिपुङ्गवाः । धन्यं दिनमिदं जातं श्रमोऽपि गत इत्यपि ॥ ७१ ॥
ततः परं मुनिवरैर्दृष्टा सा सुरवाहिनी । तत्र स्नानं च तैः सर्वैः सकुटुम्बैः सबालकैः ॥ ७२ ॥
भस्मसंछन्नसर्वाङ्गाः ते रुद्राक्षविभूषणाः । धन्यत्वं मेनिरे सर्वे शिवलिङ्गार्चनोत्सुकाः ॥ ७३ ॥
ततः सुरसरित्तीरबिल्वेभ्यो बिल्वपल्लवान् । समादाय ययुः सर्वे गौरीलिङ्गालयं प्रति ॥ ७४ ॥
मणिदीपसमाक्रान्तं दृष्ट्वा शङ्करमन्दिरम् । प्रहृष्टास्ते मुनिवराः प्रदोषसमये नृप ॥ ७५ ॥
गङ्गाजलं समादाय रुद्राध्ययनपूर्वकम् । कृत्वाऽभिषेकं बिल्वैश्च पूजयामासुरादरात् ॥ ७६ ॥

मृगेन्द्राश्च समागत्य दिष्ट्या श्रीरुद्रजापकान् । श्रुत्वा रुद्रमनुं भक्त्या सन्तोषं प्रापुरद्भुतम् ॥
ते बिल्वपत्रैरीशानं पूजयित्वा स्थिता मृगाः । तान् दृष्ट्वा विस्मयं प्राप्ताः ते सर्वे शांभवोत्तमाः ॥
मृगेन्द्रमहिलाः सर्वाः स्वस्वबालकसंवृताः । समागत्यार्चयामासुरीशानं बिल्वपल्लवैः ॥ ७९ ॥
खर्जूरैर्नारिकेलैश्च बीजपूरादिभिः फलैः । पूजयामासुरीशानं शिवस्मरणपूर्वकम् ॥ ८० ॥
ततः परं दन्तियूथाः केऽपि भस्मविभूषिताः । बिल्वशाखाकरा दृष्टाः [1]करान्तरजलान्विताः ॥
तान् दृष्ट्वा विस्मयं प्राप्ताः ते सर्वे मुनिपुङ्गवाः । ते शिवं पूजयामासुः करिणो बिल्वपल्लवैः ॥
करान्तरालसंभूतैः गङ्गावारिभिरादरात् । अभिषिच्य महादेवं स्मरन्तः पार्वतीपतिम् ॥ ८३ ॥
व्याघ्राः समागताः पश्चात् शिवपूजार्थमादरात् । तैश्च संपूजितो भक्त्या शङ्करो बिल्वपल्लवैः ॥
ततः परं प्रहर्षेण वनगावः समागताः । ताभिः क्षीराभिषेकेण कृतं शङ्करपूजनम् ॥ ८५ ॥
क्षीरप्रवाहसंक्रान्तं तत्सर्वं शिवमन्दिरम् । बिल्वराशिसमाक्रान्तं फलराशिविजृम्भितम् ॥ ८६ ॥
बिल्वशाखाः समानीताः कोटिशो वनहस्तिभिः । ताभिः समर्चितो भक्त्या मध्यरात्रे महेश्वरः ॥

बिल्वभूरुहमहोन्नतशाखाभङ्गजातरवसङ्कुलमासीत् ।
तद्वनं स तु रवोऽपि कृतार्थं जातमद्य वनमित्यपि जातः ॥ ८८ ॥

तान् शिवाराधकान् दृष्ट्वा ते सर्वे मुनिपुङ्गवाः । शिवलिङ्गार्चनं चक्रुः निशि जागरणं मुदा ॥
अरुणोदयवेलायाः पुनः स्मृत्वा प्रयत्नतः । चक्रुः शिवार्चनं सर्वे भूतिरुद्राक्षभूषणाः ॥ ९० ॥
ततः सूर्योदये जाते मृगेन्द्रः शांभवोत्तमान् । प्रणम्य दण्डवद्भूमौ कृताञ्जलिपुटो मुहुः ॥ ९१ ॥
प्राह क्षुधासमाक्रान्तान् मुनिदारान् विलोक्य सः । दन्तियूथं विलोक्यापि शार्दूलानपि कोटिशः ॥

मृगेन्द्रः —

इयं पुण्यतमा शिष्टा भूता स्वल्पीयसी खलु । अधुना पारणा कार्या फलैः शिवनिवेदितैः ॥ ९३ ॥
अन्यैश्च विविधैर्भक्ष्यैः कृत्वा शङ्करपूजनम् । अतः परं विलम्बोऽपि कर्तुमेव न शक्यते ॥ ९४ ॥
कृत्वोपवासं भूतायां चतुर्दश्यां परेऽहनि । पारणायां महत्पुण्यैरन्नैः शिवनिवेदितैः ॥ ९५ ॥
त्वरया खलु कार्याणि नैवेद्यान्युत्तमान्यपि । परमान्नानि कार्याणि गोक्षीरैर्मधुरैरपि ॥ ९६ ॥
फलैरपारैर्विविधैः क्षुधाऽत्यद्य प्रवर्धते । अतः परं विलम्बोऽपि न कार्यः सर्वथा खलु ॥ ९७ ॥
बालकाश्च क्षुधाक्रान्ताः सर्वे वृद्धास्तथा तदा । पाकः संपादनीयोऽपि तण्डुलाद्यैर्मनोरमैः ॥

1 'शुण्डान्तर' इति युक्तं स्यात् ।

इत्युक्तं तद्वचः श्रुत्वा मुनयो विस्मयान्विताः । स्वदारानूचुरधुना पाकः कार्यः प्रिया इति ॥
मुनिदाराः प्रहृष्टास्ते चक्रुः पाकान् यथेच्छया । अन्नराशिभिराक्रान्तं तत्सर्वं शिवमन्दिरम् ॥
ततः समर्चयित्वेशं दत्वा नैवेद्यमास्तिकाः । ते सर्वे पारणां चक्रुः शिवस्मरणपूर्वकम् ॥ १०१ ॥
अन्नानि मुनिभिः सर्वैः भक्षितानि मृगैरपि । व्याघ्रैर्गोभिर्दन्तिभिश्च तदन्यैरपि भक्षितः ॥ १०२ ॥
तुष्टाः पारणया सर्वे पुष्टाङ्गास्तद्रसैरपि । उपविष्टाः प्रहृष्टास्तान् मुनीन् दृष्ट्वा शिवार्चकान् ॥
ततो मृगेन्द्रो बहुधा स्तुत्वा शङ्करमादरात् । शिवढुण्ढि विलोक्याह शिवधर्मान् वदेति मे ॥
शिवभूताव्रतप्रीतः शिवभक्तिसमन्वितः । तमाह मृगराजानं शिवनामजपोत्सुकम् ॥ १०५ ॥

शिवढुण्ढिः —

ज्ञातं सर्वैः शाङ्करं धर्मजालं नन्दीशाद्यैरुक्तमत्यादरेण ।
तत्तावन्मे किञ्चिदद्यास्ति पुण्यैर्वक्तव्यं स्यात् शङ्करस्य प्रसादात् ॥ १०६ ॥

केन शङ्करधर्माणां महिमा पुण्यसाधनम् । वक्तुं वा शक्यते सर्वमपराधविनाशकम् ॥ १०७ ॥
भवत्यपारपुण्याब्धिप्रवृद्धिरपि जायते । शिवधर्मप्रवाहेण नेयं सुरनदी समा ॥ १०८ ॥
अन्येषां तत्र का वार्ता स सर्वोत्कृष्ट एव हि । सर्वधर्मोत्तमं प्राहुः शाङ्करं धर्ममास्तिकाः ॥
अतस्तच्छ्रवणादेव मुक्तिः करतलाश्रया । धन्यानां शाङ्करे धर्मे भक्तिः कामदुघेव सा ॥ ११० ॥
सा भक्तिर्यस्य भाग्येन स एवं वेद संमतः ॥ १११ ॥

धर्मोत्तमत्वमतिगोचरमेतदेव धर्मं वदन्ति मुनयः शिवधर्ममार्याः ।
तं तावदद्य शृणु वेदशिरोमणिं तं स्वर्गापवर्गदममोघमघक्षयाय ॥ ११२ ॥

धर्मः शिवार्चनमिदं परमं पवित्रं धन्यं च मङ्गलकरं करणं च मुक्तेः ।
एतस्य तावदमितो महिमा न तावत् ब्रह्मादिभिश्च विदितोऽपि विशेषतस्तु ॥ ११३ ॥

इत्याकर्ण्य मुदा मुनीश्वरवचः सिंहः प्रहृष्टः परं
नत्वा शांभवपुङ्गवं भवपदाम्भोजार्चने सादरम् ।
भूतानिर्णयमेव मे वद कथं भूतार्चनं किं फलं
बिल्वैः शाङ्करलिङ्गमूर्ध्नि भगवन् तत्पारणायाः फलम् ॥ ११४ ॥

कस्याधिकारोऽपि वदाधुना मे तत्साधनान्यप्यखिलानि विद्वन् ।
इदं दिनं शम्भुकथाप्रसङ्गैः नेयं विशिष्टं दिनमीदृशं हि ॥ ११५ ॥

तवाप्यागमनं जातं दैवादत्र महावने । महेश्वरेण जनितः सङ्गोऽयं मुक्तिदायकः ॥ ११६ ॥
इति तद्वचनं श्रुत्वा पुरस्कृत्य स शांभवान् । प्रणम्य शङ्करं स्मृत्वा प्राह धर्मं स शाम्भवम् ॥

शिवढुण्ढिः —

भूतां कामदुघां निशार्धसमयव्यासां व्रती न त्यजेत्
शुद्धां तामपि तादृशीं यदि न सा पूर्वे परेद्युर्यदि ।
सायङ्कालसमन्विता भवति सा ग्राह्या परापेक्षया
पूर्वे सोमवदेव तत्प्रबलमित्याहुः शिवाराधकाः ॥ ११८ ॥

ब्रह्म भूतं तपस्तेजो यशो भुवनमित्यपि । वदिष्ये सत्यमित्येव वदिष्ये तन्महद्व्रतम् ॥ ११९ ॥
ब्रह्मभूतव्रतं कृत्वा मासि मासि विशेषतः । स सर्वबन्धनैर्मुक्तः शिवं याति न संशयः ॥ १२० ॥
तदिदं व्रतमुत्कृष्टं व्रतं वैदिकमित्यतः । एतद्व्रतपरित्यागाद्ब्राह्मणः पतितो भवेत् ॥ १२१ ॥
विशिष्टभूता संयुक्ता या रात्रिः सा शिवप्रिया । तस्यामुपोषणं कार्यं कर्तव्यं च शिवार्चनम् ॥
शिवलिङ्गे बिल्वपत्रैः जलैर्भक्त्यापि भक्तितः । निराहारेण वै स्थित्वा भूतायां शिवपूजनम् ॥
कर्तव्यमतियत्नेन कोमलैर्बिल्वपल्लवैः । निशा जागरणेनैव नेया सर्वप्रयत्नतः ॥ १२४ ॥
बिल्वपल्लवसंयुक्तं लिङ्गं कृत्वा शिवं स्मरन् । नयन्ति ये महाभूतां ते युक्ताः खलु सर्वथा ॥
भूरिपुण्यप्रभावेन भूतायां शिवपूजने । मतिर्भवति सा स्वर्गमपवर्गं च दास्यति ॥ १२६ ॥

तावद्धन्यं जीवनं यावदेषा भूता प्राप्ता शङ्कराराधनाय ।
तस्मात्पूजां बिल्वपत्रैर्महेशे कृत्वा मुक्तो जायते लिङ्गरूपे ॥ १२७ ॥

लिङ्गं दुर्लभमेव तावदमलं बिल्वीदलं दुर्लभं
सा भूताप्यतिदुर्लभा जनिरियं सर्वात्मना दुर्लभा ।
एतद्योगमपारपुण्यविभवैर्मन्ये स योगः परं
धन्यानां धनमेव तेन स शिवस्तुष्टो महेशः प्रभुः ॥ १२८ ॥

कोवा बिल्वदलेन सोऽपि गिरिजाकान्तस्य रते तथा
न प्रीतिर्न सरिद्वराम्भसि नवा प्रीतिः सुधासागरे ।
एकं वा नवबिल्वपल्लवसुमाकान्तं कपर्दे मुदा
धत्ते चन्द्रकलामिवातिविमलां स्वर्गापवर्गप्रदः ॥ १२९ ॥

अजारजा एव किलाधिकारं संप्राप्नुवन्तीश्वरपूजनेन ।

न जारजानां शिवभक्तिलेशोऽप्यतः कथं ते शिवपूजकाः स्युः ॥ १३० ॥

न यस्य भक्तिर्गिरिशार्चने स्यात् तं जारजं प्राहुरघाम्बुराशिम् ।
तं सत्यजन्त्यन्त्यजसन्निभं तं सन्तो वदन्त्येव महाघराशिम् ॥ १३१ ॥

भूतिरुद्राक्षपूताङ्गः शिवभक्तिपरायणः। शिवव्रताधिकारीति निर्णीतो वेदवित्तमः॥ १३२ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम्। शृणुध्वं मुनयः सर्वे मृगेन्द्राः सावधानतः॥ १३३ ॥
अत्रैव पूर्वमभवद्वने करिवरो मदैः। समाक्रान्तः सर्वदापि सर्वभूरुहपीडकः॥ १३४ ॥
उत्पाट्य मूलतो वृक्षान् स्थित्वा तत्पत्रभक्षणम्। कृत्वा व्याघ्रकुलं हत्वा भक्षयत्येव सन्ततम्॥

स सर्वतरुपीडकोऽप्यमलबिल्वसंरक्षकः शिवार्चनरतः प्रगे सुरसरिन्निमग्नो मुहुः ।
दधामलविभूतिभिः समतरोरुगात्रो गजः शिवस्मरणतत्परश्चरति तुङ्गलिङ्गालये ॥ १३६ ॥

अभिषिच्य महेश्वरं मुदा स्वकरानीतसरिद्वराम्भसा ।
नवकोमलबिल्वपल्लवैः शिवलिङ्गानि समर्चयत्यपि ॥ १३७ ॥

प्रदक्षिणीकृत्य महेश्वरं मुहुः प्रणम्य चाघ्राय स बिल्वपल्लवान् ।
प्रयाति भक्त्या शिवशङ्करेति वदन् वनव्याघ्रकुलप्रकीर्णम् ॥ १३८ ॥

हत्वा व्याघ्रकुलं तदीयममलं मांसं समादाय तैः
गङ्गावारिभिरादरेण विमलैः प्रक्षाल्य भूत्या युतम् ।
दत्वेशाय स भक्षयत्यतिमुदा रुद्रं मुहुः संस्मरन्
पक्वान्यन्यफलानि चारुपनसान्यादाय लिङ्गे करी ॥ १३९ ॥

एवं युगायुतं स्थित्वा शिवपूजापरायणः। योगेन विजहौ देहं संस्मरन्नेव शङ्करम्॥ १४० ॥
ततः स पुष्पकारूढो ब्रह्मलोकं ययौ मुदा। महादेवगणोपेतैः यमादिभिरभिष्टुतः॥ १४१ ॥
ब्रह्मणा पूजितस्तत्र विधिवद् विधितत्परः। ब्रह्मरत्नासने स्थित्वा तुष्टोऽपि मृगनायकः॥ १४२ ॥
तदा ब्रह्मसभासद्भिः महात्मा कोऽयमित्यपि। पृष्टश्चतुर्मुखः प्राह मुनीन् शिवपरायणान्॥१४३॥

ब्रह्मा —

अयं शिवाराधनतत्परोऽभूत् गन्धर्व एवामितगर्वपूर्णः ।
अयं प्रदोषे शिवपूजकोऽपि जगाद नारायणनाम मोहात् ॥ १४४ ॥

तेन पापेन स वने करीभूतः समन्ततः। शिवलिङ्गार्चनोत्कर्षात् जातो जातिस्मरोऽपि सः॥

तेन पुण्यप्रभावेन चकार स शिवार्चनम् । मदान्धोऽपि महादेवं स्मरत्येव मुहुर्मुहुः ॥ १४६ ॥

सत्यमूर्तिः —

इति तद्वचनं श्रुत्वा मृगेन्द्रं प्राह तं मुनिम् । तन्नामोच्चरणादेव कथं जातः करी वने ॥ १४७ ॥

इदं तु कौतुकं तावत् श्रोतव्यमधुना मम । इति तद्वचनं श्रुत्वा तं प्राह मुनिपुङ्गवः ॥ १४८ ॥

शिवढुण्ढिः —

पुरा भृगुरिति ख्यातो मुनिः शांभवपुङ्गवः । स गतो लोकसंचारं कुर्वन् वैकुण्ठमादरात् ॥ १४९ ॥

तस्मिन् काले द्वारभागे स्थितस्तं गरुडो मुनिम् । प्राहान्तिकं समापन्नो न गन्तव्यं त्वयेति सः ॥

तदानीं तद्वचः श्रुत्वा मुनिर्विस्मितमानसः । निरोधकः कथं जातो ममायमिति सत्वरम् ॥ १५१ ॥

ततस्तं विस्मितं दृष्ट्वा गरुडः प्राह तं भृगुम् । रतिकालो हरेः सोयं प्रयाहि परतो मुने ॥ १५२ ॥

इति तद्वचनं श्रुत्वा निष्ठुरं मुनिपुङ्गवः । गरुडं भस्मसात् कृत्वा कोपेन स ययौ हरिम् ॥ १५३ ॥

तदानीमुत्थितो विष्णुरसमाप्तमनोरथः । अवदन् वारयामास संज्ञया मुनिपुङ्गवम् ॥ १५४ ॥

ततो भृगुरुवाचेदं वचो नारायणं मुहुः । निष्ठुराणि वदन्नेव वचनानि मृगाधिप ॥ १५५ ॥

भृगुः —

धिग् धिग् धिगेतत् तव मौनमस्य सायं शिवाराधनवर्जितस्य ।
प्रदोपकालः शिवपूजनोचितो वदामि सत्यं महते फलाय ॥ १५६ ॥

सोऽयं कालः शङ्करलिङ्गार्चनेन नेयः सायं पूजयित्वागतोऽस्मि ।
द्रष्टुं लक्ष्मीनाथमुत्कण्ठयाहं प्राप्तः पुण्यं लोकमेतत् त्वदीयम् ॥ १५७ ॥

सायङ्कालः कालकालार्चनाद्यैः नेयो धन्यैः पुण्यरूपैस्ततस्त्वम् ।
उन्मत्तत्वं किं प्रयातोऽसि विष्णो नायं कालः सर्वथा दारयोगे ॥ १५८ ॥

सायं विशेषेण तवार्चनं यः कर्तुं प्रवृत्तो भवति प्रमोहात् ।
त्वन्नाम वक्तुं यतते स यातु संसारमादौ नरकं च पश्चात् ॥ १५९ ॥

शिवढुण्ढिः —

इति शप्त्वा भृगुर्विष्णुं ययौ क्रोधसमाकुलः । तद्दर्शनसमुद्भूतपापनाशाय काशिकाम् ॥ १६० ॥

स काशीयात्रया पापं विष्णुदर्शनजं मुनिः । नष्टं दृष्ट्वा प्रहृष्टोऽभूत् प्रविष्टः काशिकापुरीम् ॥

इति तद्वचनं श्रुत्वा स मृगेन्द्रोऽति विस्मितः । अन्यं धर्मवरं ब्रूहि मह्यमित्याह सादरम् ॥ १६२ ॥

शिवढुण्ढिः —

वेदैर्धर्मपरत्वेन श्रुतं शङ्करपूजनम् । न तस्मादधिको धर्मः सत्यमद्योच्यते मया ॥ १६३ ॥

विहितं शिवलिङ्गपूजनं श्रुतिभिः केवलमित्यघापहम् ।
क्रियते शिवलिङ्गपूजनं द्विजवर्यैरितरैश्च सादरम् ॥ १६४ ॥

लिङ्गार्चनेन न समं विहितं श्रुतं वा पुण्यं तदेव सकलेष्टदमित्यवैमि ।
तेनैव मुक्तिमुपयाति मृगेन्द्र तस्मात् ईशार्चनं परमिति प्रवदन्ति धन्याः ॥ १६५ ॥

अन्नानां पतिरिन्दुखण्डविलसन्मौलिस्तदीयं मुदा दिव्यान्नं विनिवेदितं शिवमहादेवेति तुभ्यं मया ।
कृत्वैवोदरपोषणं मुहुरुमाकान्तेति शर्वेति वा त्वन्नामस्मरणोद्यतो भव भवामीति स्मरन्ति ध्रुवम् ॥

एवं हि सर्वभावेन ये भवं शरणं गताः । ते धन्या इति विज्ञेयास्तदन्ये दुर्भगा मताः ॥ १६७ ॥

इति तद्वचनं श्रुत्वा मृगेन्द्रो हृष्टमानसः । मुक्ताफलान्यपाराणि ददौ तस्मै नराधिप ॥ १६८ ॥

उन्मत्तकुम्भिकुम्भेभ्यस्तानि जातानि भूपते । संचितानि ददौ तस्मै स मृगेन्द्रः प्रहृष्टधीः ॥१६९॥

विलोक्य तानि रम्याणि शिवढुण्ढिः स विस्मितः । मुक्ताफलैर्महादेवं पूजयामास सादरम् ॥

ततः स मुनिदारेभ्यो ददौ तानि प्रयत्नतः । सन्तोषं जनयन् तेषां शाम्भवानां प्रयत्नतः ॥ १७१ ॥

स मृगेन्द्राज्ञया तत्र चकार वसतिं मुनिः । सहैव मुनिभिः सर्वैः सकुटुम्बैः समागतैः ॥ १७२ ॥

तमुवाच मृगेन्द्रोऽपि शिवभक्तान् विलोकयन् । भूतिरुद्राक्षपूताङ्गान् शिवनामजयोत्सुकान् ॥

मृगेन्द्रः —

बिल्वभूरुहसंभूतमिदं वनमघापहम् । फलवृक्षाश्च सन्त्यत्र कोटिशोऽपि मनोहराः ॥ १७४ ॥

सरांसि विमलान्यत्र मधुद्रोण्यश्च कोटिशः । वनगावः कोटिशोऽत्र धान्यानि विविधान्यपि ॥

स्वप्रकाशाश्च मणयः कोटिशः सन्ति ते निशि । अतिप्रभावसङ्कीर्णास्ते दीपसदृशास्तदा ॥ १७६ ॥

न चात्र व्याघ्रपीडाऽपि कुम्भिपीडा च सर्वतः । कुम्भीनसानां पीडापि चोरपीडा कुतो भवेत् ॥

शिवार्चनार्हं वनमेतदेव शाङ्गानि लिङ्गान्यमलानि तानि ।
तुङ्गानि बिल्वीतरुमूलभागे तिष्ठन्त्यपाराणि मुनीन्द्र पश्य ॥ १७८ ॥

इदं महद्बिल्ववनं कदापि विवर्जितं बिल्वदलैर्न नूनम् ।
अखण्डबिल्वीदलभूरुहास्ते पश्याधुना पर्वतसानुमध्ये ॥ १७९ ॥

तेन पुण्यप्रभावेन चकार स शिवार्चनम् । मदान्धोऽपि महादेवं स्मरत्येव मुहुर्मुहुः ॥ १४६ ॥

सत्यमूर्तिः —

इति तद्वचनं श्रुत्वा मृगेन्द्रं प्राह तं मुनिम् । तन्नामोच्चरणादेव कथं जातः करी वने ॥ १४७ ॥

इदं तु कौतुकं तावत् श्रोतव्यमधुना मम । इति तद्वचनं श्रुत्वा तं प्राह मुनिपुङ्गवः ॥ १४८ ॥

शिवढुण्ढिः —

पुरा भृगुरिति ख्यातो मुनिः शांभवपुङ्गवः । स गतो लोकसंचारं कुर्वन् वैकुण्ठमादरात् ॥ १४९ ॥

तस्मिन् काले द्वारभागे स्थितस्तं गरुडो मुनिम् । प्राहान्तिकं समापन्नो न गन्तव्यं त्वयेति सः ॥

तदानीं तद्वचः श्रुत्वा मुनिर्विस्मितमानसः । निरोधकः कथं जातो ममायमिति सत्वरम् ॥ १५१ ॥

ततस्तं विस्मितं दृष्ट्वा गरुडः प्राह तं भृगुम् । रतिकालो हरेः सोयं प्रयाहि परतो मुने ॥ १५२ ॥

इति तद्वचनं श्रुत्वा निष्ठुरं मुनिपुङ्गवः । गरुडं भस्मसात् कृत्वा कोपेन स ययौ हरिम् ॥ १५३ ॥

तदानीमुत्थितो विष्णुरसमाप्तमनोरथः । अवदन् वारयामास संज्ञया मुनिपुङ्गवम् ॥ १५४ ॥

ततो भृगुरुवाचेदं वचो नारायणं मुहुः । निष्ठुराणि वदन्नेव वचनानि मृगाधिप ॥ १५५ ॥

भृगुः —

धिग् धिग् धिगेतत् तव मौनसस्य सायं शिवाराधनवर्जितस्य ।
प्रदोषकालः शिवपूजनोचितो वदामि सत्यं महते फलाय ॥ १५६ ॥

सोऽयं कालः शङ्कलिङ्गार्चनेन नेयः सायं पूजयित्वागतोऽस्मि ।
द्रष्टुं लक्ष्मीनाथमुत्कण्ठयाहं प्राप्तः पुण्यं लोकमेतत् त्वदीयम् ॥ १५७ ॥

सायङ्कालः कालकालार्चनाद्यैः नेयो धन्यैः पुण्यरूपैस्ततस्त्वम् ।
उन्मत्तत्वं किं प्रयातोऽसि विष्णो नायं कालः सर्वथा दारयोगे ॥ १५८ ॥

सायं विशेषेण तवार्चनं यः कर्तुं प्रवृत्तो भवति प्रमोहात् ।
त्वन्नाम वक्तुं यतते स यातु संसारमादौ नरकं च पश्चात् ॥ १५९ ॥

शिवढुण्ढिः —

इति शप्त्वा भृगुर्विष्णुं ययौ क्रोधसमाकुलः । तद्दर्शनसमुद्भूतपापनाशाय काशिकाम् ॥ १६० ॥

स काशीयात्रया पापं विष्णुदर्शनजं मुनिः । नष्टं दृष्ट्वा प्रहृष्टोऽभूत् प्रविष्टः काशिकापुरीम् ॥

इति तद्वचनं श्रुत्वा स मृगेन्द्रोऽति विस्मितः । अन्यं धर्मवरं ब्रूहि मह्यमित्याह सादरम् ॥ १६२ ॥

शिवढुण्ढिः —

वेदैर्धर्मपरत्वेन श्रुतं शङ्करपूजनम्। न तस्मादधिको धर्मः सत्यमद्योच्यते मया ॥ १६३ ॥

विहितं शिवलिङ्गपूजनं श्रुतिभिः केवलमित्यघापहम्।
क्रियते शिवलिङ्गपूजनं द्विजवर्यैरितरैश्च सादरम् ॥ १६४ ॥

लिङ्गार्चनेन न समं विहितं श्रुतं वा पुण्यं तदेव सकलेष्टदमित्यवैमि।
तेनैव मुक्तिमुपयाति मृगेन्द्र तस्मात् ईशार्चनं परमिति प्रवदन्ति धन्याः ॥ १६५ ॥

अन्नानां पतिरिन्दुखण्डविलसन्मौलिस्तदीयं मुदा दिव्यान्नं विनिवेदितं शिवमहादेवेति तुभ्यं मया।
कृत्वैवोदरपोषणं मुहुरुमाकान्तेति शर्वेति वा त्वन्नामस्मरणोद्यतो भव भवामीति स्मरन्ति ध्रुवम् ॥

एवं हि सर्वभावेन ये भवं शरणं गताः। ते धन्या इति विज्ञेयास्तदन्ये दुर्भगा मताः ॥ १६७ ॥

इति तद्वचनं श्रुत्वा मृगेन्द्रो हृष्टमानसः। मुक्ताफलान्यपाराणि ददौ तस्मै नराधिप ॥ १६८ ॥

उन्मत्तकुम्भिकुम्भेभ्यस्तानि जातानि भूपते। संचितानि ददौ तस्मै स मृगेन्द्रः प्रहृष्टधीः ॥१६९॥

विलोक्य तानि रम्याणि शिवढुण्ढिः स विस्मितः। मुक्ताफलैर्महादेवं पूजयामास सादरम् ॥

ततः स मुनिदारेभ्यो ददौ तानि प्रयत्नतः। सन्तोषं जनयन् तेषां शाम्भवानां प्रयत्नतः ॥१७१॥

स मृगेन्द्राज्ञया तत्र चकार वसतिं मुनिः। सहैव मुनिभिः सर्वैः सकुटुम्बैः समागतैः ॥ १७२ ॥

तमुवाच मृगेन्द्रोऽपि शिवभक्तान् विलोकयन्। भूतिरुद्राक्षपूताङ्गान् शिवनामजयोत्सुकान् ॥

मृगेन्द्रः —

बिल्वभूरुहसंभूतमिदं वनमघापहम्। फलवृक्षाश्च सन्त्यत्र कोटिशोऽपि मनोहराः ॥ १७४ ॥

सरांसि विमलान्यत्र मधुद्रोण्यश्च कोटिशः। वनगावः कोटिशोऽत्र धान्यानि विविधान्यपि ॥

स्वप्रकाशाश्च मणयः कोटिशः सन्ति ते निशि। अतिप्रभावसङ्कीर्णास्ते दीपसदृशास्तदा ॥ १७६ ॥

न चात्र व्याघ्रपीडाऽपि कुम्भिपीडा च सर्वतः। कुम्भीनसानां पीडापि चोरपीडा कुतो भवेत् ॥

शिवार्चनार्हं वनमेतदेव शाङ्गानि लिङ्गान्यमलानि तानि।
तुङ्गानि बिल्वीतरुमूलभागे तिष्ठन्त्यपाराणि मुनीन्द्र पश्य ॥ १७८ ॥

इदं महद्बिल्ववनं कदापि विवर्जितं बिल्वदलैर्न नूनम्।
अखण्डबिल्वीदलभूरुहास्ते पश्याधुना पर्वतसानुमध्ये ॥ १७९ ॥

गङ्गेयमुत्तुङ्गतरङ्गभङ्गा तान्येव तावत् कदलीवनानि ।
पक्वान्नपूर्णानि फलानि तेषु कपित्थवृक्षाणि नवानि पश्य ॥ १८० ॥

खर्जूरसारैरपि बिल्वपूरैः तैर्नारिकेलैरपि संवृतानि ।
वनानि जम्बीरफलावृतानि सुश्रृङ्गबेरैरपि संवृतानि ॥ १८१ ॥

एतादृशं नास्ति वनं मुनीश क्वापीति मन्ये भुवनत्रयेपि ।
न शांभवाग्रेसरवासयोग्यं स्थलं च लोके किल कामदं च ॥ १८२ ॥

वयं न तावन्मृगयोनिजाताः परन्तु गन्धर्ववराः प्रसन्नाः ।
अनेन वेषेण शिवालयेऽस्मिन् नित्यं वसामः शिवपूजनाय ॥ १८३ ॥

अन्यैस्तावत् ज्ञायते नास्मदीयं तत्वं तुभ्यं ज्ञापनीयं विशिष्य ।
शैवोऽसीति श्रीमहादेव पूजां अस्मिन् लिङ्गे सावधानं कुरुष्व ॥ १८४ ॥

सत्यमूर्तिः —

इत्युक्तं तद्वचः श्रुत्वा प्रहृष्टास्ते मुनीश्वराः । शिवढुण्ढिप्रभृतयश्चक्रुर्वासं मुदा युताः ॥ १८५ ॥
बहुकालमुषित्वा तु मृगेन्द्रवचनाद्वने । सन्तोषं परमं प्रापुः कृत्वा बिल्वैः शिवार्चनम् ॥ १८६ ॥
सन्तोषं जनयन्तस्ते मृगेन्द्राय महात्मने । महादेवकथालापैः पुत्रपौत्रादिसंयुताः ॥ १८७ ॥
ततः परं महादेवं पूजयित्वा कदाचन । शिवढुण्ढिमुवाचेदं वचनं शङ्करालये ॥ १८८ ॥
अग्रे कालः कथं भावी कालकालार्चने मतिः । भविष्यति मया तत्वं न तावत् ज्ञायतेऽधुना ॥
नारायणाद्याः सर्वेऽपि मोहिता यस्य मायया । मोहं प्राप्ताः सुराः सर्वे गणना तत्र का मम ॥
शिवार्चनं परित्यज्य स्थिताः पूर्वं सुरास्ततः । कुयोनिमपि संप्राप्ताः दुःखं प्राप्तमनेकधा ॥१९१ ॥
नारायणोऽपि भृगुणा शप्तस्त्यक्तशिवार्चनः । तस्मादवाच्यो जातोऽपि प्रदोषेषु विशेषतः ॥
शिवमायामोहितानां सुराणामपि दुर्गतिः । भवत्येव ततः सा तु शिवमाया बलीयसी ॥ १९३ ॥

यावन्न मोहाकुलमस्य चित्तं तावद्विशेषेण वनेऽपि भूत्वा ।
पूतैर्नवैर्बिल्वदलैर्महेशं समर्चयित्वा विसृजामि देहम् ॥ १९४ ॥

सत्यमूर्तिः —

इत्यालोच्य स पूतात्मा पूजयामास शङ्करम् । बिल्वीदलैः फलैः पुष्पैः धूपदीपादिभिर्मुहुः ॥
ततः सर्वेषु पश्यत्सु जहौ प्राणान् मुनीश्वराः । योगेनैव महेशाय प्राणान् प्रत्युच्चरन् शिवम् ॥

तदानीं प्रेषयामास विमानवरमीश्वरः । तद्विमानं समारुह्य शिवढुण्ढिर्ययौ शिवम् ॥ १९७ ॥

मन्दारकुसुमासारस्तदा समभवन्नृप । देवदुन्दुभयो नेदुर्जगुर्गन्धर्वनायकाः ॥ १९८ ॥

सुराश्च दृष्ट्वा तं हृष्टाः सर्वे नारायणादयः । शिवढुण्ढेर्महत्पुण्यं इति ते नृपसत्तम ॥ १९९ ॥

ततः परं तद्वनपालकोऽपि श्रुत्वा कदाचिच्छिवढुण्ढिवार्ताम् ।
सुदुःखितस्तादृशपुण्यमूर्तिर्न क्वापि दृष्टोऽस्ति मयेति राजन् ॥ २०० ॥

ततः परं सोऽपि च बिल्वमध्ये लिङ्गानि दृष्ट्वातिमनोहराणि ।
चकार पूजां नवबिल्वपत्रैः स्वारोपितापारवनप्रभूतैः ॥ २०१ ॥

ततः स्वपुत्रानाहूय स एव वनपालकः । तानुवाच प्रयत्नेन भार्यां कन्यां च सोदरीम् ॥ २०२ ॥

वनपालकः —

एते बिल्वाः पोषिताः प्रापुरेवं वृद्धिं तावद्वृद्धिरेतैर्ममापि ।
एते सर्वे पोषणीयाः प्रयत्नैः लिङ्गान्येतान्यर्चनीयानि नित्यम् ॥ २०३ ॥

यद्यत्र मुनयः केऽपि बिल्वपत्रार्थमादरात् । न तेषां वारणं कार्यं तदा सर्वात्मना खलु ॥ २०४ ॥

ते तावदर्चयिष्यन्ति बिल्वपत्रैर्मनोहरैः । शाङ्गलिङ्गानि तुङ्गानि गङ्गातीरे मनोहरे ॥ २०५ ॥

अद्यप्रभृति कस्यापि मास्तु बिल्वस्य शोषणम् । कर्तव्यं पोषणं तेषां छेदनं मास्तु सर्वदा ॥

बालबिल्वतरवोपि कोटिशः पोषिताः खलु वने वनैर्मया ।
ते सदापि जलदानतः पुनः वृद्धिमेवमुपयांतु बालकाः ॥ २०७ ॥

एतद्वियोगे न मतिर्ममापि संजायते जातु तनुव्ययोऽपि ।
अत्रास्तु मे पावनमेतदेव नासीच्छिवाराधनसाधनं मे ॥ २०८ ॥

इत्युक्त्वा तान् पुनर्दृष्ट्वा पोषितान् बिल्वभूरुहान् ।
लिङ्गान्यपि विलोक्यैव जहौ प्राणान् स भूपतिः ॥ २०९ ॥

ततः परं रत्नविमानमेकमानीतमीशस्य गणैर्विचितम् ।
ययौ समारुह्य गणैः स्तुतोऽपि स्तुतः स कालेन स पूजितोऽपि ॥ २१० ॥

इन्द्रेणापि स पूजितो बहुविधैः पुष्पैर्विशेषस्तवैः इन्द्रेणापि समन्वितो विधिपुरं संप्राप्य तेनार्चितः ।
तेनापि स्तुत एव तेन विधिना सम्यक् समाराधितो वैकुण्ठं प्रययौ गणैरपि युतो नारायणेनार्चितः ॥

ततो महोत्सवैर्युक्तो ययौ कैलासमन्दिरम् । रत्नसुन्दरमुत्कृष्टं यत्र क्रीडति शङ्करः ॥ २१२ ॥

न बिल्ववनपोषणप्रभवपुण्यतुल्यं परं श्रुतं सुकृतमित्यतः शिवमवाप सोऽपि श्रिया।
तदक्षयफलप्रदं वनमपारपुण्यप्रदं शिवालयमिति श्रुतं गिरिशलिङ्गसंवेष्टितम् ॥ २१३ ॥

ये ये शङ्करपूजकाः सितलसद्भस्मत्रिपुण्ड्राङ्किताः
ते रुद्राक्षविभूषणाः शिवमतास्ते लिङ्गसंसेवकाः
ते तावत् सुरवन्द्यतामुपगताः प्राणात्यये शङ्करं
ध्यात्वा मुक्तिमवाप्नुवन्ति परमां ते तेन मर्त्याः सदा ॥ २१४ ॥

ज्ञेयं तत् खलु जन्मनः फलमिति श्रीमन्महेशार्चनं
तल्लिङ्गे नवबिल्वपल्लवलसन्मालाकुलैरुज्ज्वलैः।
नीरैर्वा कुसुमैर्मनोहरलसद्दूर्वाङ्कुरैर्वा शिवः
सुप्रीतः स तनोति भाग्यमतुलं श्रीकालकालः खलु ॥ २१५ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवदुण्ढिचरिते शिवरात्रिनिर्णय शिवपूजाफलवर्णनं नाम सप्तचत्वारिंशोऽध्यायः ॥

—:×:—

## अथाष्टचत्वारिंशोऽध्यायः।

रत्नाकरः—

इति तद्वचनं श्रुत्वा स राजा प्रीतमानसः। प्रणम्य तं मुनिं भक्त्या ययौ स्वनगरं प्रति ॥ १ ॥
स राजा स सुतान् सर्वान् आहूय शिवतत्परान्। सत्यव्रतोक्तेतिहासान् श्रावयामास सादरम् ॥
श्रुत्वा तानितिहासांस्ते प्रहृष्टाः शिवतत्पराः। राजानमाहुरीशानं महादेवेति वादिनम् ॥ ३ ॥

राजपुत्राः—

शिवधर्मोपदेशेन कृतार्थाः स्मः परन्तप। अस्माकमधुना राज्ये तृष्णा भोगे विनिर्गता ॥ ४ ॥
आज्ञा देया सदाराणां शङ्कराराधना यतः। रेवातीरे संवसामः कृत्वा बिल्ववनं नवम् ॥ ५ ॥
इत्युक्त्वा प्रणताः सर्वे पुत्रास्ते गन्तुमुद्यताः। तानाह सोऽपि भूपालः कृतार्थोऽस्मीति विस्मितः ॥
वनमेकं तु कर्तव्यं सर्वैर्बिल्वकुलोज्ज्वलम्। तत्र स्थातव्यमस्माभिरधुना काद्य गम्यते ॥ ७ ॥
अभिषेकोऽपि कर्तव्यो यतो ज्येष्ठो मृडः स्मृतः। सोऽयं हरो राज्यरक्षां कर्तुं दक्षो न संशयः ॥

राज्ञां किलायं धर्मोऽपि राज्यस्य परिपालनम् । न तस्य पालनाभावे प्रजाः सन्तुष्टमानसाः ॥
शिवार्चनं च चलति राज्यस्य परिपालने । अन्यथा घातुकाक्रान्ते वने स्थातुं न शक्यते ॥ १० ॥
इत्युक्तं तद्वचः श्रुत्वा मृडोऽयं राज्यपालकः । भवत्वस्माकमत्रास्ति किं वा कार्यं नृपोत्तम ॥
ज्येष्ठेन राज्यं कर्तव्यं यथार्हं त्वदनुज्ञया । अस्माभिर्वनमाश्रित्य स्थातव्यं बिल्वसङ्कुलम् ॥
नवबिल्ववनारम्भः कदा भवति तद्वनम् । प्रवृद्धं च भवेत् तावदायुः केन विनिश्चितम् ॥ १३ ॥
अतःपरं न नगरे स्थातुं बुद्धिः प्रजायते । त्वयापि नात्र स्थातव्यं वृद्धेन नगरे नृप ॥ १४ ॥
भोगास्तावत् त्वया भुक्ताः पलिताश्च शिरोरुहाः । राज्ये तृष्णा परित्याज्या मृत्युः सन्निहितो यतः ॥

न राज्यमायास्यति मृत्युकाले न प्रासरत्नाभरणानि दाराः ।
शूराः कुमारा अपि शङ्करत्वं प्राप्याधुना शङ्करमर्चयाशु ॥ १६ ॥

रत्नैरपारैरमितैर्धनैश्च शर्वं समाराधय सावधानम् ।
तानि प्रयच्छातिमनोहराणि शैवेभ्य एवातिमुदा नृपेन्द्र ॥ १७ ॥

शैवार्चनं शङ्करपूजनं हि तेनैव मुक्तिर्भवतीति मन्ये ।
राज्यैषणा तावदिमां विहाय भजस्व शम्भुं भवभीतिशान्त्यै ॥ १८ ॥

इत्युक्तं तद्वचः श्रुत्वा तातालिङ्ग्य सुतान् नृपः । भवदुक्तिसुधापीता धन्योऽस्मीत्याह सादरम् ॥
ततः परं मृडं प्राह ज्येष्ठं राज्याधिकारिणम् । राज्यस्य पालनं कार्यं त्वया तावदतः परम् ।२०॥
वृद्धस्य सदने वासो नोचितो मम सर्वथा । रेवातीरवने स्थेयं बिल्वभूरुहशोभने ॥ २१ ॥
पुत्रकृत्यं त्वया कार्यं ज्येष्ठेन पितृसेवनम् । कर्तव्यं तद्वने वाससम्पादनमिति स्मर ॥ २२ ॥
न तथा शत्रवो राज्ये निष्कण्टकमहीतले । स्थातव्यमधुना राज्ये परिपालय सादरम् ॥ २३ ॥
प्रजापीडा न कर्तव्या कर्तव्यं शङ्करार्चनम् । शाङ्कराः पोषणीयाश्च विशेषेण प्रयत्नतः ॥ २४ ॥
यदि पीडा शांभवस्य यस्य कस्यापि सा परम् । राज्यनाशाय सहसा भविष्यति न संशयः ॥
रोगोद्रेकेपि दुर्भिक्षं मरणं च प्रतिक्षणम् । भविष्यत्येव राज्येषु नूनं शाङ्करपीडया ॥ २६ ॥
शङ्करस्यार्चनरताः चण्डाला अपि ते सुत । पालनीयाः प्रयत्नेन तत्पीडा न तवोचिता ॥ २७ ॥
अशाङ्कराणां विलये यत्नः कार्यो विशेषतः । अशाङ्करलये जाते न राज्ये मरणादिकम् ॥ २८ ॥
अशाङ्करो यदि भवेद्राज्ये राज्यं विनश्यति । दुर्भिक्षरोगचोराद्यैरतस्तद्विलयं कुरु ॥ २९ ॥
शिवपूजां प्रयत्नेन नवबिल्वादिसाधनैः । कुरु श्राव्या महादेव कथैव च मुहुर्मुहुः ॥ ३० ॥

भुङ्क्ष्वान्नानि महेशाय निवेद्य प्रत्यहं मुदा । तान्यन्नपतिदत्तानि भुक्त्वा सुखमवाप्स्यसि ॥ ३१ ॥
भस्मनोद्धूलनं कृत्वा कृत्वा रुद्राक्षधारणम् । पूजयस्व महादेवमप्रमादेन सादरम् ॥ ३२ ॥
कृतायां यदि पूजायां राज्यवृद्धिर्भविष्यति । शत्रुहानिर्दुःखनाशो रोगनाशोऽपि सर्वथा ॥ ३३ ॥
शृण्वन् शिवकथामेव पञ्चाक्षरजपं कुरु । तेन पातकसङ्घातो भयं च न भविष्यति ॥ ३४ ॥
ऋतुकाले स्वदारेषु रतिं कुरु कुमार ते । तत्रास्थापि न कर्तव्या तदापि स्मर शङ्करम् ॥ ३५ ॥
कुमारास्ते भविष्यन्ति तेषां शिक्षा त्वया मुहुः । कर्तव्या शिवपूजैव कर्तव्येति पुनः पुनः ॥
दाराश्च शिक्षणीयास्ते स्वतस्ते शाङ्करा अपि । पुनः पुनः शिवाचारः कर्तव्य इति सादरम् ॥
रेवातीरेष्वदूरेषु स्थातव्यं च मया सुत । त्वया प्रत्यहमागत्य प्रष्टव्योऽप्यस्मि बालक ॥ ३८ ॥
इति तद्वचनं श्रुत्वा राजानं तमुवाच सः । विलोक्य जननीं वृद्धां भ्रातॄनप्यतिबालकान् ॥ ३९ ॥

मृडः —

न राज्यतृष्णा मम सर्वथापि न भोगतृष्णापि परन्तु नित्यम् ।
महेश्वराराधनमेव कार्यं रेवासरित्तीरवने मयापि ॥ ४० ॥

राज्यं विनश्वरमिति स्मर सर्वथापि नूनं शरीरमपि नश्वरमेव राजन् ।
राज्येषु कस्य चिरसुस्थिरता मतिः स्यात् जातं स्वनाशनमयं समुपेक्षते च ॥ ४१ ॥

कालस्य तावत् करुणालवोऽपि नेति स्मरामि स्मरवैरिरूपम् ।
अतः परं का तव राज्यचिन्ता न देहचिन्ताप्युचिता तवाद्य ॥ ४२ ॥

मृत्युः सन्निहितो भवेद्यदि तदा राज्यस्य वार्तापि का
भोगस्यापि धनस्य वाजिनिकरापारोरुभाग्यस्य च ।
किं दन्तिप्रवरैरुदारचरितैर्दारैश्च तस्मादिदं
व्यर्थं सर्वमिति स्मर स्मरहरं वीरेश्वरं संस्मर ॥ ४३ ॥

अद्यापि भोगेषणया वयः किं नेयं मया मृत्युरुपागतश्चेत् ।
तद्वारकः कोऽपि न लौकिकोऽपि भवत्यतो मृत्युहरं स्मरामि ॥ ४४ ॥

इति तद्वचनं श्रुत्वा स राजापि तथास्त्विति । तमुक्त्वा निर्गतो गेहात् सादरः स्वसुतैः सह ॥
तदानीमागतः कश्चिदमात्यस्तस्य भूपतेः । बलवानिति विख्यातः प्राह राजानमास्तिकम् ॥ ४६ ॥

बलवान् —

राजन् किमिदमारब्धं राज्यनाशे सति त्वया । क्व स्थातव्यं पुत्रदारपरिवारैः सहाधुना ॥ ४७ ॥

चोराक्रान्ते वने क्वापि स्थातुमेव न शक्यते। तपोधनानां पीडा स्याद्रेवातीरनिवासिनाम्॥
राज्यभ्रंशे क्वास्माकमन्नपानादिकं नृप। तदभावे कथं वा स्यात् [1] जीवनानि कथं तु वा॥
यद्यप्यद्यापि वृद्धस्य वने युक्ता स्थितिस्तव। बालकानामवस्थानं दाराणां च कथं भवेत्॥ ५०॥
एतावत्कालपर्यन्तं कथं राज्यं कृतं त्वया। अद्यैव सर्वनाशार्थं प्रवृत्तिरुचिता कथम्॥ ५१॥
यतो युवानः सर्वेऽपि कुमारास्तव भूपते। अभुक्तभोगाः का वा स्यात् तपस्यापि विमुक्तये॥
अयं ज्येष्ठः कुमारस्ते मृडो मृड इवापरः। करोतु पालनं राजन् राज्यस्यास्य विशेषतः॥ ५३॥
वार्धके समनुप्राप्ते वार्धक्याय प्रयास्यति। कृत्वा कुमारं राज्यस्य पालकं सकलस्य च॥ ५४॥
अथवा भ्रातरः सन्ति ते तावत्परिपालनम्। करिष्यन्त्यधुना तावत् सर्वेषां गमनं कथम्॥ ५५॥
इत्यमात्यवचः श्रुत्वा स राजा मृडनामकम्। पुत्रं प्राह शृणुष्वैतदमात्यवचनं सुत॥ ५६॥
पुत्रकृत्यं त्वया कार्यं कियत् कालं ततः परम्। तपस्यार्थं समायाहि कृत्वा राज्यस्य रक्षणम्॥
किञ्चाधुनापि नास्माकं वन्याहारेण जीवनम्। आदौ ममाति वृद्धस्य ग्राम्यमन्नमपेक्षितम्॥
राज्यनाशे कथं तत् स्याद्बालानामपि रक्षणम्। पितरावतिवृद्धौ किं न पोष्यौ तव पुत्रक॥
इति तद्वचनं श्रुत्वा सिंहासनमधिष्ठितः। ज्येष्ठं कुमारं तं दृष्ट्वा प्रहृष्टः सोऽपि भूपतिः॥ ६०॥
तदानीमुत्सवं कृत्वा स्थित्वा तस्मिन् दिने नृपः। तदधीनं चकाराशु राज्यं सामात्यमण्डलम्॥
कियत् कालं गृहे स्थित्वा स भूपो महिलायुतः। रेवातीरे वने वासं चकार शिवतत्परः॥ ६२॥
पित्रा सह कुमाराश्च निर्गताः केचिदादरात्। स्वस्वदारान्विता एव शिवपूजापरायणाः॥ ६३॥
यत्र तेन स्थितं राज्ञा रेवातीरे मनोहरे। हराराधनसंपत्त्या स वृद्धः सुरसेवितः॥ ६४॥
स तत्र प्रेषयामास ज्येष्ठपुत्रः स्वकं बलम्। वने तद्रक्षणं कर्तुमन्नानि विविधान्यपि॥ ६५॥
गोसहस्राणि बद्धानि तस्मिन्नेव वने तदा। दधिदुग्धादिलाभाय तेन पुत्रेण धीमता॥ ६६॥
राजा वनमुपाश्रित्य तिष्ठतीति मुनीश्वराः। निर्भया एव ते सर्वे तेन राज्ञा समन्विताः॥ ६७॥
स पूजयति गौरीशं दधिक्षीरघृताम्बुभिः। रेवालिङ्गेष्वपारेषु चन्दनाद्यैर्मनोहरैः॥ ६८॥
अन्नराशिभिरीशानं पूजयामास सादरम्। शिवार्पितान्नैर्विप्राश्च भोजितास्तेन कोटिशः॥ ६९॥
कर्पूरदीपमालाभिर्नर्मदातीरमुज्ज्वलम्। सायङ्काले समारभ्य यावत्सूर्योदयं कृतम्॥ ७०॥
धूमानां पर्वता एव साग्नयो धूपराशिभिः। विराजमानाः सततं रेवातीरे विशेषतः॥ ७१॥

---

1 तपस्या जीवनानि वा C

प्रत्यहं स सुतस्तत्र समागत्य विलोक्य तौ। पितरौ पूजनं कृत्वा प्रयाति निजमन्दिरम् ॥ ७२ ॥
स राजा पालनोद्युक्तः शिवाराधनतत्परः। पितृसेवापरो जातस्तदभीष्टार्थदानतः ॥ ७३ ॥
स कृत्वा सर्वदा पूजां महादेवस्य साधनैः। अपारैरतिसन्तुष्टः शृण्वन् शिवकथाः शुभाः ॥ ७४ ॥
एवं वने स्थितो राजा देवैरपि समर्चितः। मुनिभिः संस्थितो नित्यं गन्धर्वैरपि किन्नरैः ॥ ७५ ॥
ततः कदाचिदागत्य तं दृष्ट्वा शिवपूजकम्। मुनयो भूपतिं प्राहुः कृतार्थोऽसीति विस्मिताः ॥
तपस्या सेयमुत्कृष्टा शिवपूजनलक्षणा। एतदन्यद्वृथा सर्वं देहशोषणकारणम् ॥ ७७ ॥
कोटिशः शाम्भवा एव शिवनैवेद्यभोजनैः। तृप्ताः कृताः पवित्राश्च तव भाग्यमिदं महत् ॥
वने फलान्यपाराणि त्यक्त्वापि मुनिपुङ्गवाः। आयान्ति सततं कर्तुं शिवनैवेद्यभोजनम् ॥ ७९ ॥
अपूपैः परमान्नैश्च घृतैरपि मनोहरैः। भुक्तैः शिवार्पितैः पुष्टाः सर्वेऽपि मुनिपुङ्गवाः ॥ ८० ॥
अस्थिमात्रावशिष्टास्ते पूर्वमाहारवर्जिताः। अधुना शिवनैवेद्यैः पुष्टास्तुष्टाश्च ते नृप ॥ ८१ ॥
अरण्ये स्वेच्छया गत्वा विल्वैरेव सुदुर्लभैः। आमध्याह्नं पूजयन्ति शिवलिङ्गानि सादराः ॥ ८२ ॥
पुनः पुनः पूजयन्ति कोमलैर्बिल्वपल्लवैः। आसायं गिरिजाकान्तं प्रणमन्ति स्तुवन्ति च ॥ ८३ ॥
सायं शिवार्चनं कृत्वा समायान्त्यत्र कोटिशः। मुनयः शिवनैवेद्यभोजनार्थं नृपोत्तम ॥ ८४ ॥
केन पुण्यवता पूर्वमुपदिष्टोऽसि भूपते। येनैवं शिवपूजायां प्रवृत्तिरभवत् तव ॥ ८५ ॥
तुरारगिरिवद्भान्ति सर्वदा ह्यन्नराशयः। रेवालिङ्गाङ्गणे राजन् तदिदं भाग्यमुत्तमम् ॥ ८६ ॥
एतादृशः पुण्यमूर्तिर्भूपालो न श्रुतः पुरा। महेशाराधनापारतपस्याफलपर्वतः ॥ ८७ ॥

धन्यः पिता ते जननी च धन्या धन्याः सुतास्ते महिलाश्च धन्याः।
यत्ते महद्भाग्यमवाप्य नित्यं समर्च्यते चन्द्रकलावतंसः ॥ ८८ ॥

भाग्यानामिदमेव तावदधुना निर्णीतमेतत् फलं
शर्वाराधनलक्षणं क्षणमपि प्रत्यक्षमावेक्षितम्।
मोक्षं वो विषमेक्षणाक्षयकृपाभावेऽपि दक्षं क्षणात्
एतत्प्रेक्षणमेव मोक्षजनकं फालेक्षणेनापि किम् ॥ ८९ ॥

रत्नाकरः —

इति स्तुत्वा नृपं सर्वे रेवातीरनिवासिनः। मुनयः शान्तहृदयाः स्थिताः शिवपरायणाः ॥ ९० ॥
ज्येष्ठपुत्रोऽपि कालेन राज्यभोगपराङ्मुखः। स्वकुमारं परं चक्रे राज्यपालनतत्परम् ॥ ९१ ॥

ततः परं स रेवायां कुर्वन् लिङ्गार्चनं सदा । पित्रा सह स्थितो भक्त्या शृण्वन् शिवकथार्णवम् ॥

नीताः कालाः पुण्यरूपास्तथा तैः पूतैर्भूत्वा भूतिरुद्राक्षभूषैः ।
रेवातीरं तैरपारैः सदापि व्याप्तं लिङ्गाराधनोद्युक्तचित्तैः ॥ ९३ ॥

पुत्रेषु तेषु बहुधा प्रथितेषु तस्मिन् दारेषु तेषु विविधेष्वपि संस्थितेषु ।
रेवातटेषु नवबिल्ववनानि चक्रे राजा महेश्वरसमर्चनसाधनानि ॥ ९४ ॥

पुत्रैः सह जलं दत्वा सुवर्णकलशैर्नवान् । पोषयामास तत्तीरे भूपालो बिल्वभूरुहान् ॥ ९५ ॥

तैरेव रेवातटमावृतं च छन्ना च रेवा नवबिल्ववृक्षैः ।
छत्रायमानाश्च सुखाय जाताः लिङ्गेषु रेवानिलयेषु तेषु ॥ ९६ ॥

तान् दृष्ट्वा भूपतिर्नित्यं हृष्टः शिवपरायणः । तद्बिल्वभूरुहदलैः पूजयामास शङ्करम् ॥ ९७ ॥

बिल्वभूरुहलिङ्गानि रेवातीरे तु कोटिशः । स्थापयामास भूपालः स कृत्वा रत्नमन्दिरम् ॥ ९८ ॥

रत्नैः स भूपः शिवमन्दिराणि प्रासादरम्याण्यमितानि तानि ।
स कारयामास शिवार्चनानि चकार तेष्वेव मनोहराणि ॥ ९९ ॥

बिल्वपल्लवपूर्णानि कुसुमैरावृतान्यपि । लिङ्गानि दृष्ट्वा सन्तुष्टः स कुमारः स भूपतिः ॥ १०० ॥

बिल्वपल्लवशाखाभिरानम्राभिः सपल्लवान् । गृहीत्वा गिरिशं भक्त्या पूजयामास भूपतिः ॥

पञ्चामृतप्रवाहाद्यैः शिवलिङ्गार्चनैर्नवैः । रेवा क्षीराम्बुधिप्राया घृतप्रायापि सा बभौ ॥ १०२ ॥

एवं भक्त्या समाराध्य महादेवं स भूपतिः । कदाचिद्विजहौ प्राणान् पूजयन् गिरिजापतिम् ॥

लिङ्गमण्डलमध्यस्थं भूतिरुद्राक्षभूषणम् । पृष्ठभागस्थलिङ्गाग्रे पतितं ददृशुः सुताः ॥ १०४ ॥

तदा गतासुं विज्ञाय कुमारास्तस्य शांभवाः । स्नेहपाशवशाः सर्वे चुक्रुशुर्भूतिभूषणाः ॥ १०५ ॥

तदानीमागतो नन्दी विमानवरमास्थितः । गणैर्नारायणाद्यैश्च सेवितः शिवलीलया ॥ १०६ ॥

नन्दिकेश्वरमालोक्य कुमारास्तमुपागतम् । प्राहुरश्रुजलाक्रान्ताः शिवस्मरणपूर्वकम् ॥ १०७ ॥

कुमाराः —

नन्दिन्नागतमद्य तावदधुना सम्यक् त्वया भूपतिः
द्रष्टव्यः खलु शांभवोत्तम इति ज्ञातः सुरैरप्ययम् ।
विघ्नः किं समभूदुमापति पदाम्भोजार्चकः किं नरो
मृत्युं याति महेश्वरस्य विभवः कोवा वदाद्याधुना ॥ १०८ ॥

मृत्युञ्जयार्चनोद्युक्तो यदि मृत्युवशो भवेत् । तदा का शिवपूजायाः शक्तिरत्यद्भुता वद ॥
[1]यदि क्षितायुरित्यादि वेदोऽप्युक्तः शिवेन यः । तस्मिंस्तावदविश्वासो जातस्तेन सुखं कुतः ॥

प्राणानामपि रक्षणे यदि महादेवार्चनस्याधुना
शक्तिर्नेत्यवधारणा भवति सा तस्याद्भुताघक्षये ।
संसारार्णवतारणादिषु कथं सा स्यात् समर्था तृणं
दग्धुं चेदसमर्थ एव सदवः किं वा [2]वनं नाशयेत् ॥ १११ ॥

न समाप्ता लिङ्गपूजा धूपदीपादयोऽपि च । तेनार्पितः किलाद्यापि कोऽयं विघ्नः समागतः ॥
कोटिशः शाङ्करास्तावत् शिवनैवेद्यभोजनम् । कर्तुमेवागताः सन्ति नैवेद्यं धातुमेव न ॥ ११३ ॥
पश्यान्नपर्वतान् पश्य मोदकापूपपर्वतान् । घृतपायसकुल्यानां कुरु तावद्विलोकनम् ॥ ११४ ॥
अपारशाकगिरयः पतिताः सन्ति पश्य तान् । दधिक्षीरप्रवाहांश्च पश्य पश्य प्रयत्नतः ॥ ११५ ॥

कर्पूरनीराजनपात्रकोटिं पश्याधुना धूपगिरिप्रधूपान् ।
तांबूलविल्वीदलपर्वतांश्च पूगीफलानामपि तुङ्गराशीन् ॥ ११६ ॥

एलालवङ्गलेह्यांश्च पश्य पश्य प्रयत्नतः । एते शैवोपहारार्हाः पश्यन्त्यवसरं मुहुः ॥ ११७ ॥

अधुना मरणे नृपस्य सर्वं कथमेतन्न वृथा भविष्यतीति ।
तव बुद्धिरुपैति किं विमानैः फलमस्माकमिहास्ति सर्वनाशे ॥ ११८ ॥

सर्वस्वं शिवपूजनं खलु महद्भाग्यं तदेवाधुना सप्रत्यूहमतःपरं वद परं निर्विघ्नमेकं पुनः ।
दुःखांभोधिलयात्तु यावदधुना लिङ्गार्चनं जायते लिङ्गाराधनसाधनान्यपि मुदा संपादितान्यादरैः ॥

रत्नाकरः —

इति तद्वचनं श्रुत्वा नन्दिकेशोऽपि विस्मितः । शिवपूजनसामग्रीं दृष्ट्वा प्राह मनोहरम् ॥ १२० ॥

नन्दिकेशः —

अनित्यं शरीरं कदाचिद्विनाशं प्रयास्यत्यवश्यं ततस्तद्वियोगे ।
न दुःखानि कार्याणि तत्वावबोधः कथं वा न चित्तं वदत्यादरेण ॥ १२१ ॥

---

1 "यदि क्षितायुर्यदि वा परेतो यदि मृत्योरन्तिकं नीत एव । तमाहरामि निर्ऋतेरुपस्थादस्पार्षमेनं शतशारदाय" इति खिलऋगियं मृतसञ्जीवनीसूक्तान्तर्गता ।

2 गिरिर्नाशकः C

इति तद्वचनं श्रुत्वा कोपव्याकुलमानसः । धिक् धिक् तत्वावबोधोऽपि तवेत्याहुर्विचक्षणाः ॥
ततः समुद्यताः पुत्राः पवित्राः शिवपूजया । द्वितास्तं मृत्युमानेतुं यमलोकं यमुस्ततः ॥ १२३ ॥
तद्विमानं समारुह्य गत्वा ते यममन्दिरम् । बध्वा पाशैर्यमं तीव्रं प्राहुः शङ्करपूजकाः ॥ १२४ ॥

राजकुमाराः —

रेरे काल दुराचार कालकालार्चवप्रियः । मृतो महारथः केन कर्मणा तद्वदाधुना ॥ १२५ ॥
[1] रे चित्रगुप्त तृप्तोऽसि वद तद्विघ्नकारणम् । क्वा महारथप्राणाः तानानीय प्रयच्छ मे ॥ १२६ ॥
तवायमधिकारोऽपि वारणीयो मयाधुना । [2] पूर्वजन्मार्जिताधानि नष्टानि शिवपूजया ॥ १२७ ॥
अधुना पापसंबन्धस्तस्य नास्त्येव सर्वथा । शिवार्चनान्तरायोऽपि कथं जातो वदाधुना ॥ १२८ ॥

रत्नाकरः —

इति तद्वचनं श्रुत्वा यमः प्राणान् प्रदर्शयन् । प्राहास्माकं नापराधः कालमृत्युर्नृपस्य सः ॥
ततः परं नृपप्राणानानीयाहुर्नृपात्मजाः । तदा तान् कम्पसंपन्नान् क्रोधारुणविलोचनाः ॥ १३० ॥

राजकुमाराः —

क्व गम्यते शिवाचारनिरताराधितं नृपम् । त्यक्त्वा क्व तादृशं स्थानं भवतामपि वर्तते ॥ १३१ ॥

त्वरया प्रविशन्तु भूपतिं शिवपूजानिरतं महारथम् ।
शिवपूजनसाधकाश्च यूयं प्रियभूताः खलु तस्य सर्वथा ॥ १३२ ॥

महामृत्युञ्जयस्याद्य विघ्नितं पूजनं यदि । भवत्कृतं तदा तावत् क्रुद्धः स्यादपि शङ्करः ॥ १३३ ॥
इति तद्वचनं श्रुत्वा तं प्राहुः प्राणदेवताः । नास्माकमपराधोऽस्ति महामृत्योरयं परम् ॥ १३४ ॥
महामृत्युः समागत्य प्रेरयामास सत्वरम् । इतो गन्तव्यमित्येव तेनास्माभिः समागतम् ॥१३५॥
इति तद्वचनं श्रुत्वा क्रुद्धास्तेऽपि नृपात्मजाः । महामृत्युं पाशबद्धं चक्रुरत्यद्भुतास्ततः ॥ १३६ ॥
ततः परं महामृत्युं कालमृत्युं च सत्वरम् । आनीय पातयामासुरगाधे नर्मदाह्रदे ॥ १३७ ॥
ततः प्रविष्टास्ते प्राणा नृपमाशु शिवार्चकम् । राजा समुत्थितः पश्य पश्य स्वप्नमिवाद्भुतम् ॥
ततः परं स भूपालो भस्मोद्धूलितविग्रहः । रुद्राक्षमालाभरणः पूजयामास शङ्करम् ॥ १३९ ॥
देवदुन्दुभयो नेदुः पुष्पवृष्टिरभूत् तदा । तदा पुनः समारब्धं शाङ्करैः शङ्करार्चनम् ॥ १४० ॥

1 'रे चित्रगुप्त' इत्यादि पादत्रयं C कोशे नोपलभ्यते ।

2 पूर्वजन्मेति पादत्रयं C कोशेऽधिकम् ।

उत्साहः परमो वृत्तः शाङ्कराणां महात्मनाम् । शिवाराधनविश्वासः प्रवृद्धोऽप्यभवत् तदा ॥
राजदारैः कुमारैश्च कृतं शङ्करपूजनम् । अमात्यैरपि वार्ता सा श्रुता सन्तोषवर्धनी ॥ १४२ ॥
राज्ञा राजाभिषिक्तेन राजपुत्रेण च श्रुता । तदा शिवाभिधानेन सा वार्ता परमाद्भुता ॥ १४३ ॥
अलं कृतं च नगरं तूर्यैर्व्याप्तं च तत्पुरम् । श्रुता नगरिकैः सर्वैः सा वार्ता परमाद्भुता ॥ १४४ ॥
मुक्तातोरणसंयुक्तं सर्वं नगरमण्डलम् । मण्डितं तद्वनं सर्वं मुक्तातोरण कोटिभिः ॥ १४५ ॥

ततःपरं तत्र महारथोऽपि महोत्सवेनैव महेश्वरार्चाम् ।
कृत्वा च नन्दीश्वरपूजनं च जगाद तं सोत्सवमादरेण ॥ १४६ ॥

महारथः —

नन्दिकेश्वर समागतं त्वया शङ्करानुचर चन्द्रशेखरः ।
मय्यपारकरुणां करोति किं किं करोमि वद तस्य पूजनम् ॥ १४७ ॥

यस्य प्रसादेन विरिञ्चिरासीत् नारायणो नाकपतिश्च कालः ।
तं कालकालं शरणं व्रजामि दारैः कुमारैरपि शाङ्करैस्तैः ॥ १४८ ॥

यस्य प्रभावो न मितोऽपि वेदैः ब्रह्मादिभिर्वा स महेश्वरो मे ।
पितापि मातापि सखापि दाता स एव सर्वामरसार्वभौमः ॥ १४९ ॥

इति तद्वचनं श्रुत्वा नन्दिकेशो महामतिः । प्राह राजानमाजानुरुद्राक्षकवचावृतम् ॥ १५० ॥

नन्दिकेशः —

धन्योऽसि राजन् शिवपूजनेन मृत्युर्जितः कालभयं कुतस्ते ।
शिवप्रभावोऽप्युमासहायः सुप्रीत एव त्वयि सर्वथाऽपि ॥ १५१ ॥

शिवः स सर्वज्ञशिरोमणिस्ते जानाति चित्तं स्वपदाब्जसक्तम् ।
महेश्वराराधनसक्तमेव तदप्रमत्तं शिवदत्तमेव ॥ १५२ ॥

दाराः कुमारास्तवतेऽपि शूराः तैरुद्धतैरद्य यमो हतोऽपि ।
रेवाहृदे तैः स निपातितोऽपि राजन्महामृत्युसमन्वितोऽपि ॥ १५३ ॥

इदं बलं शङ्करपूजनेन प्राप्तं महामृत्युविनाशदक्षम् ।
को वा विरूपाक्षपदारविन्दपूजारतादप्यधिकास्तिलोक्याम् ॥ १५४ ॥

धन्यं कुलं ते तव मृत्युमृत्युर्महेश्वरस्त्वत्कुलजार्चितोपि ।

अहोऽतिधन्योऽसि तवास्तु भक्तिः श्रीमन्महादेवपदार्चनेषु ॥ १५५ ॥

कौतुकं च महादेवः करोति निजलीलया । भक्तप्रभावानुभवप्रदर्शनपरः परम् ॥ १५६ ॥
रत्नसिंहासनासीनो रत्नमण्डपकान्तिभिः । सेवितः छत्रसङ्काशैः मामाह गिरिजापतिः ॥ १५७ ॥
महारथः समानेयः पुष्पकेणेति सत्वरम् । पश्यत्सु स्वगणेष्वन्येष्वाहूयाह मनोहरः ॥ १५८ ॥
धृत्वा तदाज्ञां शिरसा पुष्पकेण समागतम् । मयापि त्वरया राजन् सहैव गणकोटिभिः ॥१५९॥
पश्य पश्य गणान् सर्वान् अर्थवादो न तत्र मे । रेवातीरमभिव्याप्य तिष्ठन्ति शिवतत्पराः ॥
यद्विमानं समानीतं तदारुह्य सुतैस्तव । महामृत्युश्च मृत्युश्च समानीतो यमालयात् ॥ १६१ ॥
चित्रगुप्तादिभिः साकं पतितोऽत्र महाह्रदे । एतादृशं महद्भाग्यं फाललोचनपूजया ॥ १६२ ॥
अतः परं मया गत्वा किं वक्तव्यं शिवान्तिके । तद्वदाशु कुमाराणामशक्यं न जगत्त्रये ॥ १६३ ॥
दयया मय्यपि प्रीतिः क्रियते कापि तैरपि । किमस्त्यशक्यं वद मे हाराणां भुवि दुर्लभम् ॥

गन्तव्यं शिवसन्निधानमधुना विश्वेश्वराराधनं
रेवालिङ्गसमुच्चयेषु बहुधा कार्यं त्वया सादरम् ।
स्नेहः किन्तु विधेय एव मयि ते हारेषु संख्यास्तु मे
प्रीतिर्वृद्धिमुपैति सांबचरणाम्भोजे ममाप्यन्वहम् ॥ १६५ ॥

इत्युक्तं तद्वचः श्रुत्वा कुमारानाह भूपतिः । विनयावनतान् हारान् भूतिरुद्राक्षभूषणान् ॥ १६६ ॥

राजा —

किमेव मुच्यते बालाः कोमलं किं न मानसम् । कथं दूरे महामृत्युः पातितः स यमान्वितः ॥
आनेयः प्रीणनीयोपि दयनीयः स शांभवः । अशांभवाशनिः कालो महामृत्युश्च बालकाः ॥
इति राजवचः श्रुत्वा कुमारास्तेपि शाङ्कराः । तमानेतुं महामृत्युं दूतानाहुर्यमं च तम् ॥ १६९ ॥

राजपुत्राः —

पतितोऽपि महामृत्युरगाधे नर्मदाह्रदे । यमोपि स समानेयश्चित्रगुप्तादिभिः सह ॥ १७० ॥
इति तद्वचनं श्रुत्वा तदा ते तस्य किङ्कराः । पाशबद्धान् समानीय ह्रदात् तीरमुपागताः ॥ १७१ ॥

ततः परं शाङ्करमन्दिरस्य पुरः समानीय तमूचुरेवम् ।
राजन् यमो मृत्युसमेत एव सोयं समानीत इतीह दूताः ॥ १७२ ॥

ततः परं स राजापि दृष्ट्वा तं विस्मयं गतः । स्वकुमारकृतं कृत्यं स्मृत्वा स्मृत्वा हसन् शनैः ॥
शाङ्कराश्च यमं दृष्ट्वा महामृत्युसमन्वितम् । पाशबद्धं बलात्कृत्य प्रापुर्विस्मयमास्तिकाः ॥ १७४ ॥
यः श्रुतः पर्वताकारो महामृत्युर्यमः पुरा । स एवं दृष्टः कथमित्याहुरत्यन्तमास्तिकाः ॥ १७५ ॥

ततः परं राजविलोकनेन विछिन्नपाशः स यमोऽपि मृत्युः ।
नन्दीश्वरं लज्जित एव नत्वा राजानमालोक्य स विस्मितोऽपि ॥ १७६ ॥

अपारोरुहाराणि लिङ्गानि दृष्ट्वा असद्बिल्वमालाप्रसूनान्वितानि ।
प्रणम्याशु भक्त्या न विज्ञातमेकं स्वरूपं च राज्ञे ममेत्याह मृत्युः ॥ १७७ ॥

क्षन्तव्योपि ममापराध इति तं हारं नराधीश्वरं नत्वा हारकुमारवर्गमपि तान् दारानुदारानपि ।
एतद्भाग्यविलोकनार्थमधुना प्राप्तं महेशाज्ञया प्रायः प्राप्तमपारमेव सुकृतं दारोत्तमालोकनैः ॥

जन्मेदं सफलं शिवार्चनरतश्रीपादुकालोकनात्
लोके कोपि न दृश्यते शिवरतादन्योऽपि धन्यो जनः ।
न प्रागेवमभूतपूर्वविभवो भावो न संभावितो
भावैर्व्याप्तमिदं मनोरथवरं रेवातरं धूर्जटेः ॥ १७९ ॥

इति तद्वचनं श्रुत्वा राजा सन्तुष्टमानसः । नन्दिकेश्वरमालोक्य बभाषे वचनं मुदा ॥ १८० ॥

महारथः —

श्रौतं किलाद्य शिवपूजनमत्र कार्यं हरोपहारनिकरैरुदरं च पूर्णम् ।
तूर्णं विधेयमधुना विधुखण्डमौलिपूजाविलोकनपुरस्सरमादरेण ॥ १८१ ॥

इत्युक्त्वा स महादेवं पुनरत्यादरान्नवैः । बिल्वादिभिः प्रसूनाद्यैः पूजयामास भूपतिः ॥ १८२ ॥
अपारस्वर्णपात्राणि परमान्नादिसाधनैः । संपूर्णानि महेशाग्रे स्थापयामासुरास्तिकाः ॥ १८३ ॥

धूपप्रधूमैरिव दीपमालाकुलैरपि व्याप्तमथानुलिप्तम् ।
तन्नर्मदातीरमपारहारं दृष्ट्वा प्रहृष्टोऽपि स नन्दिकेशः ॥ १८४ ॥

ततः परं दुग्धघृतादिकुल्यापरिष्कृतापारनवान्नराशीन् ।
निवेद्य सांबाय सदाशिवाय नीराजनानि प्रददौ स भूपः ॥ १८५ ॥

ततः पुष्पाञ्जलिं दत्वा प्रणम्य च पुनः पुनः । नृत्यं कृत्वा पुनः पूजां चकार गिरिशाय सः ॥

ततःपरं हेमविराजमानपात्रेषु हारान् परमान्नराशीन् ।

ददौ शिवाचाररतेभ्य एव स कोटिशोभूपतिरादरेण ॥ १८७ ॥

हारोपहारेण स नन्दिकेशः तुष्टोऽपि पुष्टोपि यमोपि पुष्टः ।
पुष्टो महामृत्युरपि प्रपुष्टः स चित्रगुप्तोऽपि तथा प्रहृष्टः ॥ १८८ ॥

ततः परमपाराणि ददावाभरणान्यपि । तांबूलानि दुकूलानि भूपालस्तेभ्य एव सः ॥ १८९ ॥

ततस्तादृशसामग्रीं शङ्कराराधनोत्सवम् । दृष्ट्वा स नन्दिकेशोऽपि राजानं प्राह शांभवम् ॥ १९० ॥

नन्दिकेशः —

शिवाज्ञायाः पालनं हि प्रियं मृत्युञ्जयस्य च । न तवागमनं तत्र लिनेत्रः किं वदिष्यति ॥ १९१ ॥

न जाने गिरिजाकान्तप्रभावं भावमेव वा । भावं भावार्चनस्यापि प्रभावं भवसन्निभम् ॥ १९२ ॥

तत्रागत्य महेश्वराय निखिलं संज्ञाप्य यत्तत्र ते प्रीतिस्तर्हि शिवाज्ञया पुनरिदं प्राप्तव्यमेव स्थलम् ।
एतद् कामगमेव पुष्पकमतः चित्तं कथं ते वद व्यक्तं त्यक्तशिवेतरार्चनहरापारप्रभावादरात् ॥

इत्युक्तं तद्वचः श्रुत्वा स्मृत्वा शङ्करमादरात् । प्रणम्य नन्दिकेशं च प्राह हारादरेश्वरः ॥ १९४ ॥

राजा —

दुष्प्रापं तपसाऽपि केवलमुमाकान्ताङ्घ्रिपङ्केरुहध्यानैर्वा शिवलिङ्गपूजनवरैर्हारैरपारैरपि ।
धर्मैर्वा शिवसन्निधानमिति मे भात्येव सत्यं परं अलाप्यम्बिकया सहातिविमले लिङ्गे शिवस्तिष्ठति ॥

अत्रापारमहोत्सवैरनुदिनं लिङ्गार्चनैर्नीयते
काल: कोऽपि सुधामयः खलु महान् सर्वात्मना दुर्लभः ।
एतत्तावदुमासहायनिलयं त्यक्तुं न वाञ्छापि मे
ब्रह्मादिप्रलयेऽपि शाङ्गनिलये लिङ्गे वसामि ध्रुवम् ॥ १९६ ॥

पश्येदं नवबिल्वपल्लवकुलव्याप्तं मयेदं कृतं रेवातीरसमन्वितं वनमिदं लिङ्गैश्च तुङ्गैर्वृतम् ।
एतेनैव ममाक्षयं सुखमपि प्रायः प्रवृद्धं भवेत् इत्येवं स्फुरतीति शङ्करपदाम्भोजे भजे निर्भयः ॥

इत्याकर्ण्य वचस्तस्य सम्यगित्यभिनन्दितः । ययौ यमादिसंयुक्तो नन्दिकेशः प्रहर्षितः ॥ १९८ ॥
प्रभावं संस्मरन्नेव भूपतेः स पुनः पुनः । यममन्दिरपर्यन्तं ययौ नन्दीश्वरो मुदा ॥ १९९ ॥

तदानीं यममालोक्य प्राह नन्दी तमादरात् । चित्रगुप्तादिकं दृष्ट्वा महामृत्युं च शांभवः ॥ २०० ॥

नन्दिकेश्वरः —

दृष्टः किलायं महिमा शिवस्य स शांभवो भूपतिरुद्धतोऽपि ।

कथं प्रवृद्धोऽसि दृढोरुपाशैः प्रपातितोऽसि प्रबलैर्ह्रदेऽपि ॥ २०१ ॥
शिवपूजाबलं तेषां तत्तुल्यं न बलं खलु । शिवपूजाबलेनैव जितं लोकत्रयं च तैः ॥ २०२ ॥
अतः परं शांभवानां मार्गे गन्तव्यमेव नः । तवायमुपदेशोऽद्य स्मर्तव्यः खलु सर्वदा ॥ २०३ ॥
न तेषां गणनीयास्ते ब्रह्मा नारायणादयः । ते तानपि हि सत्कृत्य धीरास्तिष्ठन्ति शाङ्कराः ॥
कः शांभवसमो लोके भाग्यवानमितप्रभः । भवार्चनाद्भवत्येव स भवान् भवपूजकः ॥ २०५ ॥
अद्यप्रभृति कस्यापि शङ्करस्य महात्मनः । त्वया प्रतिभटत्वेन न स्थेयं मृत्युनापि वा ॥ २०६ ॥
मया तत्र स्थितं राजा बोधितोपि विशेषतः । भवबन्धविमोक्षाय मोक्षः स्यादन्यथा कथम् ॥
ते शाङ्कराश्च शूराश्च कुमारास्तस्य भूपतेः । तेषां पराभवः कोपि न कदापि भविष्यति ॥ २०८ ॥
ह्रदे प्रपातिताः सर्वे भवन्तस्तत्सुतैर्यदा । तदा कैरपि न ज्ञाता दुर्दशा भवतां खलु ॥ २०९ ॥
अतस्तन्नगरे तावद्भवद्भिः किङ्करैरपि । न गन्तव्यं न तद्देशेऽप्यतीव प्रबलं किल ॥ २१० ॥
कालकालार्चनबलात् प्रबला एव केवलम् । ते नमस्याश्च सततं तथा तद्देशवासिनः ॥ २११ ॥
स्वप्नेपि तत्र सहसा न गन्तव्यं भवादृशैः । न विस्मर्तव्यमेवेदं वचनं मुदुदीरितम् ॥ २१२ ॥
इत्युक्त्वा स यमेनापि पूजितो नन्दिकेश्वरः । सत्यलोकं ययौ तत्र ब्रह्मणापि समर्चितः ॥ २१३ ॥
अपूर्वं राजवृत्तान्तं यत्पृष्टं ब्रह्मणा तदा । तत् सर्वमुक्तं सन्तोषैर्ब्रह्मणे नन्दिना तदा ॥ २१४ ॥
तद्वृत्तान्तं समाकर्ण्य सर्वे ब्रह्मसभासदः । पुलकाञ्चितसर्वाङ्गाः तुष्टुवुः शिववैभवम् ॥ २१५ ॥
ततः परं स वैकुण्ठं ययौ विधिसमन्वितः । अर्चितस्तत्र नन्दीशस्तेन नारायणेन सः ॥ २१६ ॥
तत्रापि तेन वृत्तान्तः श्रुतस्तस्यैव भूपतेः । तेन स्तुतोऽपि विनतो ययौ कैलासमन्दिरम् ॥ २१७ ॥
तत्र गत्वा प्रणम्याशु महादेवं कृताञ्जलिः । सर्वं निवेदयामास सर्वज्ञाधीश्वराय सः ॥ २१८ ॥
गणाश्च तस्य वृत्तान्तं श्रुत्वा हृष्टाः परस्परम् । तद्वार्तया परं नीत्वा समयं ते स्थिताः परम् ॥
शङ्करोप्यम्बिकां दृष्ट्वा स्वाङ्कपङ्केरुहे स्थिताम् । शृणु प्रभावमित्याह भावानां भाग्यमीदृशम् ॥
रेवातीरवने वसामि सततं लिङ्गे च पूजां मुहुः दृष्ट्वा भूपमहाप्रभावविभवप्रख्यापनार्थं परम् ।
नन्दी प्रेरित इत्यतो न यमतो भीतिर्महामृत्युतो मद्भक्तस्य वरानने स कुशली शैवश्चिरं जीवतु ॥
इत्याशीर्वचनैर्महेश्वरकृतैः हाराः परं सादराः तल्लिङ्गार्चनसाधनेषु विविधेष्वाहारमात्रादराः ।
रेवातीरमुपाश्रिताः शिवपदध्यानेन नीत्वा दिनं तिष्ठन्त्येव सुखेन शाङ्करवरैः साकं महाशाङ्कराः ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे पुण्यमूर्ति रत्नाकरसंवादे महारथराजचरित्रवर्णनं नामाष्टचत्वारिंशोऽध्यायः ॥

# अथैकोनपञ्चाशोऽध्यायः ।

—:×:—

राजकन्या —

इति रत्नाकरेणोक्तां कथां पापप्रणाशिनीम् । शिवनामाङ्कितां श्रुत्वा प्रहृष्टाः पुण्यविग्रहाः ॥ १ ॥

शाङ्करान् स समुद्रोऽपि पुण्यरूपान् शिवार्चने । समुद्युक्तान् विलोक्याह धन्योऽस्मीति मुहुर्मुहुः ॥

ते कृत्वा विल्वपत्राद्यैर्हाटकेश्वरपूजनम् । स्वस्थानं गन्तुमुद्युक्तास्तमाहुः परमादरात् ॥ ३ ॥

अस्मदागमनस्यात्र कृत्यमासीन्महत्तरम् । यतः शिवकथारूपसुधापानं कृतं मुहुः ॥ ४ ॥

धन्याः स्मः शिवभक्ताः स्मः शिवभक्तावलोकनात् । शङ्करानुग्रहाज्जातमद्य शाङ्करदर्शनम् ॥ ५ ॥

इति तद्वचनं श्रुत्वा सागरः [1]शिवमन्दिरम् । तैः सहैव ययौ प्रीत्या शाङ्कराग्रसरप्रियः ॥ ६ ॥

समुद्रमध्ये नगरं मनोहरं रत्नप्रभामण्डलमण्डितानि ।
उत्तुङ्गलिङ्गामितमन्दिराणि स दर्शयामास मनोहराणि ॥ ७ ॥

अपाररत्नचीर्णानि गोपुराण्यपि कोटिशः । तेभ्यः प्रदर्शयामास सागरः शाङ्करप्रियः ॥ ८ ॥

ततः स्वनगरं रम्यं लिङ्गकोटिविराजितम् । अपारशिखरोपेतं दर्शयामास भक्तितः ॥ ९ ॥

ततस्ते तानि लिङ्गानि दृष्ट्वा रत्नमयान्यपि । अलंकृतानि पुष्पाद्यैर्ददृशुः प्रीतमानसाः ॥ १० ॥

दृष्ट्वा प्रणम्य भक्त्या ते तद्वृत्तमणिकोटिभिः । पूजयामासुरीशानं प्रसवाद्यैश्च कोटिशः ॥

पूजान्ते शङ्करं स्मृत्वा नत्वा तेपि मुहुर्मुहुः । रत्नासनेषूपविष्टाः प्रहृष्टाः शिवपूजकाः ॥ १२ ॥

तदानीं सागरस्यापि दारास्तावन्मनोहराः । अपाराः शङ्करं द्रष्टुमागतास्तुष्टुवुश्च तम् ॥ १३ ॥

पश्चान्मनोहरैर्हारैरपारैः शङ्करार्चितम् । कृत्वा नाटचोद्यताः सर्वे तं महेशगणैर्मुदा ॥ १४ ॥

शिवं नाट्यविशेषैस्तैस्तोषयित्वा प्रयत्नतः । नीराजनादि दत्वापि ययुरन्तःपुरान्तरम् ॥ १५ ॥

सोन्दर्यवाहिनीरूपानपाराभरणान्विताम् । त्रिपुण्ड्ररुद्राक्षधरान् दारान् ददृशुरादरात् ॥ १६ ॥

ततः परं तमूचुस्ते सागरं शङ्करोत्तमाः । अतिविस्मयमापन्नाः कृताञ्जलिपुटं मुदा ॥ १७ ॥

हारदारास्तवोदाराः सहाराः शाङ्करादराः । कस्मिन् कुले समुत्पन्नाः किं वा पुण्यं पुराकृतम् ॥

सौन्दर्यधारारूपास्ते यौवनोन्मादमन्थराः । परमैश्वर्यमापन्नाः केन पुण्येन तद्वद ॥ १८ ॥

हारत्वमप्यपाराणां पुण्यानां खलु तत्फलम् । सौन्दर्यं महदैश्वर्यं यौवनं च नवं नवम् ॥ २० ॥

---

1 निजमन्दिरम् C

अलङ्कृतानि तैरेव मन्दिराणि तवाधुना । एतादृशं महद्भाग्यं केन लब्धं त्वया वद ॥ २१ ॥
तवापि महदैश्वर्यं केन पुण्येन तद्वद । विचार्य पूर्ववृत्तान्तमप्रमादेन सादरम् ॥ २२ ॥

रत्नाकरः —

साधु पृष्टमिदं तावदधुना सादरं परम् । शृणुध्वं सावधानेन तद्वृत्तान्तं यथाक्रमम् ॥ २३ ॥
अहं पूर्वभवे विप्रः पिता मे काटकोटरः । स शाम्भववरस्तेन तुल्यः शैवो न भूतले ॥ २४ ॥
शिवापराधदुष्टोऽभूत् तस्यैव जनकः पुरा । स हतः पादघातेन तेनैव सुमहात्मना ॥ २५ ॥

स्वयं शिवाराधनसंभ्रमेण स्थितः पिता मे शिवलिङ्गमूर्धनि ।
क्षिप्रं पदं गोमयलिङ्गरूपे पितामहेनाशु मम भ्रमेण ॥ २६ ॥

तदा कुठारमादाय छिन्नं तच्चरणद्वतम् । ततः परं मृतः सोऽपि तं दृष्ट्वा हृष्टधीः पिता ॥

शिवापराधेन भवन्ति दुःखान्यपारदुःखाकरकालगेहे ।
अतः सतां शङ्करदुःखबीजसंपादनेन भ्रमतोऽपि दुःखम् ॥ २८ ॥

तेन पित्रा शिक्षितोऽहं सर्वदा शिवपूजने । ततः परं पिता प्राप विमानैः शिवमन्दिरम् ॥ २९ ॥
मया यौवनमासाद्य हारोदारविहारभूः । न त्यक्ता शङ्करार्चापि न त्यक्ता सर्वथा मया ॥ ३० ॥
प्रगे मध्याह्नकालेऽपि सायङ्काले विशेषतः । शिवार्चनं कृतं पूर्वं बिल्वपत्रादिभिर्मया ॥ ३१ ॥
ततः कदाचिद्विपिने बिल्वभूरुहसंकुले । प्रविष्टं बिल्वपत्रार्थं बिल्वैः सहचरैः सह ॥ ३२ ॥
तत्राद्भुतं दृष्टमेकं सुन्दरं शिवमन्दिरम् । लिङ्गानि तत्र दृष्टानि तुङ्गानि गिरिशालये ॥ ३३ ॥
बिल्वपल्लवपुष्पाद्यैराक्रान्तान्येव तान्यपि । सरांसि तत्र दृष्टानि कमलैराकुलान्यपि ॥ ३४ ॥
तत्र पुण्यवनं दृष्टं सदा वनसमन्वितम् । कनकान्यपि दृष्टानि सुवर्णकमलान्यपि ॥ ३५ ॥
तत्र गन्धर्वतनयाः कोटिशः समुपागताः । एकान्ते शिवपूजार्थे तस्मिन्नभिनवे वने ॥ ३६ ॥
तत्सौन्दर्यप्रभावस्तु वक्तुमेव न शक्यते । महदैश्वर्यसंपन्नाः ताः सर्वाभरणान्विताः ॥ ३७ ॥
ताः समागत्य वेगेन स्नात्वा सरसि निर्मले । भूतिरुद्राक्षमालाद्याः चक्रुः शङ्करपूजनम् ॥ ३८ ॥
रत्नैरपारैः पुष्पाद्यैर्धूपदीपादिभिर्मुदा । कृत्वा शिवार्चनं तत्र प्रहृष्टाः शिवतत्पराः ॥ ३९ ॥
ततः परं कृतं नाट्यं ताभिरत्यन्तमादरात् । शङ्कराग्रे शिवाचारनिरताभिर्यथेच्छया ॥ ४० ॥
तद्दर्शने मम प्रीतिर्जाता तावत् तदा खलु । तासामपि मयि प्रीतिः सुन्दरे शिवतत्परे ॥ ४१ ॥
अहं ताभिः समाहूतः तदा तन्निकटं गतः । इत्थमुक्तोऽस्मि ताभिर्यत् तच्छृणुध्वं प्रयत्नतः ॥

गन्धर्वकन्याः —

सौन्दर्यनिधिरेवासि युवा शिवपरायणः । अस्मिन् वा नगरे वासः सदनं कुत्र वा तव ॥ ४३ ॥
कः पिता कापि वा माता सन्ति किं भ्रातरस्तव । किं ते कुलं च शीलं च बलं च विपुलं तथा ॥
दाराः सन्ति न वा भाग्यं किमस्ति वद शाङ्कर । इच्छा किमधुना कापि तव दारपरिग्रहे ॥४५॥
दारापेक्षा यदि तव वयं गन्धर्वकन्यकाः । योग्यः परिणयः कार्यः कार्यमन्यत् भविष्यति ॥
रत्नाकरत्वमीशेन तुभ्यं देयमसंशयम् । अस्मत्प्रार्थनया शर्वः प्रसन्नोऽपि भविष्यति ॥ ४७ ॥
समुद्रस्याधिकारोऽद्य गमिष्यति विशेषतः । शिवद्रोहरतो जातः स समुद्रो यतोऽधुना ॥ ४८ ॥
इति तद्वचनं श्रुत्वा मयोक्तं किमभूत् तदा । येनाधिकारविलयः समुद्रस्यापि जायते ॥ ४९ ॥
ततः परं ताभिरुक्तं श्रोतव्यं तदिहादरात् । तेनापि तावदधुना सन्तोषो वृद्धिमेष्यति ॥ ५० ॥
गतः समुद्रं श्रीरुद्रो हारान् द्रष्टुं मनोहरान् । ततस्तमागतं दृष्ट्वा भ्रान्तिमाप स सागरः ॥ ५१ ॥
वेषान्तरेण संप्राप्तो महादेवो न पूजितः । तत्ते हरः प्रार्थितोऽपि न दाता वरमादरात् ॥ ५२ ॥
ततः परं महेशेन तं प्रत्युक्तं वचः किल । तदप्यभिनवं वक्ष्ये शृणुध्वमतिसादरम् ॥ ५३ ॥

श्रीसदाशिवः —

अपारास्ते महोदारा [1] दाराः सन्ति तवाधुना । तत्रैको वा प्रदेयो मे हारो हाराय सादरम् ॥
हरो दारप्रदानेन हारायादरपूर्वकम् । सन्तुष्टो महतीमृद्धिं तुभ्यं दास्यत्यसंशयम् ॥ ५५ ॥
ऐश्वर्ये सति हारस्य यः पूजां न करिष्यति । तदैश्वर्यं लयं याति स दरिद्रोऽपि जायते ॥ ५६ ॥
किं तेन वद भाग्येन यद्यादौ येन मे तदा । पात्रं हारं समासाद्य के वास्युस्तदनादराः ॥ ५७॥
किमैश्वर्यमदान्धेन हारवीरपराभवः । क्रियते स कृतः प्रायः स पराभवमिच्छति ॥ ५८ ॥
अत्रैवोदाहरन्तीममितिहासं पुरातनम् । तच्छृणुष्वातियत्नेन भवभाग्यप्रदं मुहुः ॥ ५९ ॥
पुरा कश्चिदभूद्राजा परन्तप इति श्रुतः । रिपवो विजितास्तेन शूरेणामिततेजसा ॥ ६० ॥
हतेष्वरिषु तद्राज्यं आक्रान्तं तेन शत्रवः । बहुवारं हताः सर्वे रिपुसैन्यं महीतलम् ॥ ६१ ॥
यावद्रिपुधनं तावत् समानीय स्वमन्दिरम् । पूर्णं कृतञ्जवाश्वाद्यैः कोटिशस्तस्य भूपतेः ॥ ६२ ॥
तस्य प्रतिभटः कोपि न दृष्टः खलु भूतले । सुवर्णमन्दिराण्येव तेन संपादितान्यपि ॥ ६३ ॥
रत्नप्राकारसंवीतं पुरं तेन कृतं पुरा । सर्वदा रत्नमालाभिर्नगरं समलंकृतम् ॥ ६४ ॥

1 हाराः C

तस्मिन् शासति भूपाले सभया एव सज्जनाः । अशांभवपरिक्रान्तं तद द्रष्टुमघसंकुलम् ॥ ६५ ॥
तस्मिन् राष्ट्रे वने कश्चित् ब्राह्मणः शिवतत्परः । सकुटुम्बः स्थितस्तत्र कृत्वा पर्णकुटीं तदा ॥
तत्र राजा गतो दैवात् सञ्चरन् विपिनं परम् । तृषार्तोऽपि क्षुधार्तोऽपि हयमारुह्य केवलम् ॥
स्थितमन्यत्र तत् सैन्यं स्थितं च परिचारकैः । एकाकी स्वयमागत्य वटच्छायामुपाश्रितः ॥ ६८ ॥
तदानीं तृषितो राजा ययाचे जलमादरात् । मुनिकन्यां समालोक्य वटमूलस्थितां तदा ॥ ६९ ॥
सा ददौ जलमानीय फलानि विमलान्यपि । तत्पीत्वा जलमश्रान्तो जगृहे स फलान्यपि ॥ ७० ॥
मूलानि परिपक्वानि तया दत्तानि कानिचित् । तैराशु पूजयामास सादरं स नराधिपः ॥ ७१ ॥
तदा तमाह सा कन्या तत्कण्ठे हारमुत्तमम् । दृष्ट्वा प्रहृष्टं राजानं जलमूलादिभिस्तदा ॥ ७२ ॥

कन्यका —

गौरीव्रतं समारब्धं गौरीमूर्तिरियं कृता । पुष्पैरलङ्कृता वन्यैः पाण्डुवर्णादिभिस्तदा ॥ ७३ ॥
[1]तेनायं मुनिकन्यानां गौरीपूजार्थमुत्तमम् । मुक्ताहारस्त्वया देयस्तारतारामलो नृप ॥ ७४ ॥
वाजिस्कन्धेऽपि तिष्ठन्ति मुक्ताहाराः सहस्रशः । तेषु को वा प्रदातव्यो मुक्तागुच्छो मनोहरः ॥
मुक्ताफलालंकृतायाः शिवान्याश्च विलोकने । प्रवृत्तं मे मनो राजन् तत्फलं श्रूयतां त्वया ॥
मुक्ताहारादिभिर्गौरीं यः पूजयति सादरम् । स मुक्तायानमासाद्य प्रयाति हरमन्दिरम् ॥ ७७ ॥
रत्नाभरणसंयुक्तामुमां शङ्करवल्लभाम् । दृष्ट्वा राज्यमवाप्नोति भोगेच्छायामिति श्रुतम् ॥ ७८ ॥
अलंकृतां शिवां दृष्ट्वा गौरीं हारादिभिर्मुदा । विरक्तोऽपि विमुक्तः स्यात् घोरात् संसारबन्धनात् ॥
हारैरप्यर्चिता देवी स्वस्वाभीष्टफलप्रदा । सुवर्णाभरणप्रीता निर्वाणमपि दास्यति ॥ ८० ॥
सर्वसौभाग्यसंपन्ना सा गौरी भववल्लभा । गृह्णाति भक्तदत्तानि फलं दातुं हि केवलम् ॥ ८१ ॥

तस्याः प्रीतिर्धीरहारप्रदाने कापि स्यादित्येव याच्ञा कृतापि ।
अन्यर्था चेत् सा तदा सार्थकं ते भाग्यं नो चेदस्तु किं तेन कृत्यम् ॥ ८२ ॥

इति तद्वचनं श्रुत्वा कृत्वा तदवधीरणाम् । ययौ वाजिनमारुह्य तदा सर्पः समागतः ॥ ८३ ॥
सोऽपि कोटीरमार्गेण राजकण्ठमुपागतः । सन्दष्टस्तेन भूपालो मृतः साश्वो महावने ॥ ८४ ॥
ततः परं तु तद्राष्ट्रं तत्र तत्र लयं गतम् । सैन्यं च तन्मृतं सर्वं गजाश्वादिसमाकुलम् ॥ ८५ ॥
तस्माद्भाग्यं च संप्राप्य दानपात्रमनुत्तमम् । न ददाति धनं यस्तु स विनश्यति सर्वथा ॥ ८६ ॥

---

1 न धनं C

अत्युत्कृष्टस्य भाग्यस्य फलं खलु तदेव यत्। सत्पात्रदानमन्यत्तु विफलं परिकीर्तितम् ॥ ८७ ॥
देयं दुर्लभमेवादौ दानपात्रं च दुर्लभम्। दातृत्वमपि लोकेऽस्मिन् सुतरामपि दुर्लभम् ॥ ८८॥
धने सति मया देयं धनमित्यपि केचन। प्राप्ते धने न दानेच्छां कुर्वन्त्यत्यन्तलोभतः ॥ ८९ ॥
भाग्यवन्तः प्रयच्छन्ति धनं पात्रे समागतम्। अभाग्यं न प्रयच्छन्ति तदभाग्यमदानतः ॥ ९० ॥

अदानाद्दरिद्रो भवत्येव हारं परं पातमासाद्य मृत्युं प्रयाति।
पुनः स्याद्दरिद्रः पुनर्मृत्युमेतीत्यवश्यं दरिद्रो भवत्येव हीनः ॥ ९१ ॥

स्वशक्त्या देयमल्पं वा संपाद्यापि स्वशक्तितः। दुर्मुखास्ते भवन्त्येव धनदानपराङ्मुखाः ॥९२॥
पुरा कश्चिदभूद्विप्रः कणयाचनतत्परः। स जीवति कुटुम्बेन कणैः क्लेशसमार्जितैः ॥ ९३ ॥
स कदाचित् स्वदारेभ्यः कणान् दत्वा वनं गतः। काष्ठाद्याहरणं कर्तुं तत्र दृष्टः शिवार्चकः ॥
तदा वात्यासमानीतदवभस्मसमावृतः। स काष्ठहरणोद्युक्तो दृष्टः शैवेन सादरम् ॥ ९५ ॥
स पृष्टस्तेन शैवेन दवभस्मकणावृतः। शैवोऽयमिति बुद्ध्यैव भस्मभूषितविग्रहः ॥ ९६ ॥

शैवः —

किमेवं खिन्नमधुना मुख तव महामते। कथमभ्यागतं कृत्यं किं वा वद तवाधुना ॥ ९७ ॥
इति तद्वचनं श्रुत्वा तं प्रणम्य शिवार्चकम्। स्वरूपं ज्ञापयामास तस्मै तेन सुदुःखितः ॥ ९८ ॥
तमुवाच ततः प्रीत्या कर्तव्यमिदमुच्यते। त्वया यत्नेन दातव्यं शैवायान्नं विशेषतः ॥ ९९ ॥
यदेव याच्ञया लब्धं तव किञ्चित् प्रयत्नतः। देयं तेन समृद्धिस्ते भविष्यति न संशयः ॥१००॥
नैवान्नपतये दत्तं येनान्नं किञ्चिदादरात्। स भवत्येव सहसा दरिद्रो नात्र संशयः ॥ १०१ ॥
अन्नं हारमुखे देयं ग्रासमात्रमपि प्रियम्। तेन तुष्टो महादेवो दौर्भाग्यं तेन नश्यति ॥ १०२ ॥
यदि हारमुखे दातुं न शक्तिः सर्वदा तदा। अन्नं शिवार्पणं कृत्वा भोक्तव्यं नित्यमादरात् ॥
अनर्पितं महेशाय भुङ्क्ते योऽन्नं स पापधीः। प्रतिजन्मनि पापिष्ठो दरिद्रो भवति ध्रुवम् ॥

अन्नानां पतये नमो नम इति स्मृत्वा प्रदेयं मुदा
शर्वायान्नमुदादरं च पुरतः कृत्वा प्रणम्यादरात्।
तेनान्नानि समृद्धिमेत्य सदने तिष्ठन्ति ये निष्ठुराः
ते गेहाद्विनिवृत्य यान्ति विपिनं यद्वा तदन्यालयम् ॥ १०५ ॥

इति तद्वचनं श्रुत्वा तमाह द्विजपुङ्गवम्। किमन्नपतिरूपं मे वदेति प्रीतमानसः ॥ १०६ ॥

तस्मिन् शासति भूपाले सभया एव सज्जनाः । अशांभवपरिक्रान्तं तद द्रष्टुमवसंकुलम् ॥ ६५ ॥
तस्मिन् राष्ट्रे वने कश्चित् ब्राह्मणः शिवतत्परः । सकुटुम्बः स्थितस्तत्र कृत्वा पर्णकुटीं तदा ॥
तत्र राजा गतो दैवात् सञ्चरन् विपिनं परम् । तृषार्तोऽपि क्षुधार्तोऽपि हयमारुह्य केवलम् ॥
स्थितमन्यत्र तत् सैन्यं स्थितं च परिचारकैः । एकाकी स्वयमागत्य वटच्छायामुपाश्रितः ॥ ६८ ॥
तदानीं तृषितो राजा ययाचे जलमादरात् । मुनिकन्यां समालोक्य वटमूलस्थितां तदा ॥ ६९ ॥
सा ददौ जलमानीय फलानि विमलान्यपि । तत्पीत्वा जलमश्रान्तो जगृहे स फलान्यपि ॥ ७० ॥
मूलानि परिपक्वानि तया दत्तानि कानिचित् । तैराशु पूजयामास सादरं स नराधिपः ॥ ७१ ॥
तदा तमाह सा कन्या तत्कण्ठे हारमुत्तमम् । दृष्ट्वा प्रहृष्टं राजानं जलमूलादिभिस्तदा ॥ ७२ ॥

कन्यका —

गौरीव्रतं समारब्धं गौरीमूर्तिरियं कृता । पुष्पैरलङ्कृता वन्यैः पाण्डुवर्णादिभिस्तदा ॥ ७३ ॥
[1] तेनायं मुनिकन्यानां गौरीपूजार्थमुत्तमम् । मुक्ताहारस्त्वया देयस्तारतारामलो नृप ॥ ७४ ॥
वाजिस्कन्धेऽपि तिष्ठन्ति मुक्ताहाराः सहस्रशः । तेषु को वा प्रदातव्यो मुक्तागुच्छो मनोहरः ॥
मुक्ताफलालंकृतायाः शिवान्याश्च विलोकने । प्रवृत्तं मे मनो राजन् तत्फलं श्रूयतां त्वया ॥
मुक्ताहारादिभिर्गौरीं यः पूजयति सादरम् । स मुक्तायानमासाद्य प्रयाति हरमन्दिरम् ॥ ७७ ॥
रत्नाभरणसंयुक्तामुमां शङ्करवल्लभाम् । दृष्ट्वा राज्यमवाप्नोति भोगेच्छायामिति श्रुतम् ॥ ७८ ॥
अलंकृतां शिवां दृष्ट्वा गौरीं हारादिभिर्मुदा । विरक्तोऽपि विमुक्तः स्यात् घोरात् संसारबन्धनात् ॥
हारैरप्यर्चिता देवी स्वस्वाभीष्टफलप्रदा । सुवर्णाभरणप्रीता निर्वाणमपि दास्यति ॥ ८० ॥
सर्वसौभाग्यसंपन्ना सा गौरी भववल्लभा । गृह्णाति भक्तदत्तानि फलं दातुं हि केवलम् ॥ ८१ ॥

तस्याः प्रीतिर्धीरहारप्रदाने कापि स्यादित्येव याच्ञा कृतापि ।
अन्यर्था चेत् सा तदा सार्थकं ते भाग्यं नो चेदस्तु किं तेन कृत्यम् ॥ ८२ ॥

इति तद्वचनं श्रुत्वा कृत्वा तदवधीरणाम् । ययौ वाजिनमारुह्य तदा सर्पः समागतः ॥ ८३ ॥
सोऽपि कोटीरमार्गेण राजकण्ठमुपागतः । सन्दष्टस्तेन भूपालो मृतः साश्वो महावने ॥ ८४ ॥
ततः परं तु तद्राष्ट्रं तत्र तत्र लयं गतम् । सैन्यं च तन्मृतं सर्वं गजाश्वादिसमाकुलम् ॥ ८५ ॥
तस्माद्भाग्यं च संप्राप्य दानपात्रमनुत्तमम् । न ददाति धनं यस्तु स विनश्यति सर्वथा ॥ ८६ ॥

---

1 न धनं C

अत्युत्कृष्टस्य भाग्यस्य फलं खलु तदेव यत् । सत्पात्रदानमन्यत्तु विफलं परिकीर्तितम् ॥ ८७ ॥
देयं दुर्लभमेवादौ दानपात्रं च दुर्लभम् । दातृत्वमपि लोकेऽस्मिन् सुतरामपि दुर्लभम् ॥ ८८॥
धने सति मया देयं धनमित्यपि केचन । प्राप्ते धने न दानेच्छां कुर्वन्त्यत्यन्तलोभतः ॥ ८९ ॥
भाग्यवन्तः प्रयच्छन्ति धनं पात्रे समागतम् । अभाग्यं न प्रयच्छन्ति तदभाग्यमदानतः ॥ ९० ॥

अदानाद्दरिद्रो भवत्येव हारं परं पातमासाद्य मृत्युं प्रयाति ।
पुनः स्याद्दरिद्रः पुनर्मृत्युमेतीत्यवश्यं दरिद्रो भवत्येव हीनः ॥ ९१ ॥

स्वशक्त्या देयमल्पं वा संपाद्यापि स्वशक्तितः । दुर्मुखास्ते भवन्त्येव धनदानपराङ्मुखाः ॥९२॥
पुरा कश्चिदभूद्विप्रः कणयाचनतत्परः । स जीवति कुटुम्बेन कणैः क्लेशसमार्जितैः ॥ ९३ ॥
स कदाचित् स्वदारेभ्यः कणान् दत्वा वनं गतः । काष्ठाद्याहरणं कर्तुं तत्र दृष्टः शिवार्चकः ॥
तदा वात्यासमानीतदवभस्मसमावृतः । स काष्ठहरणोद्युक्तो दृष्टः शैवेन सादरम् ॥ ९५ ॥
स पृष्टस्तेन शैवेन दवभस्मकणावृतः । शैवोऽयमिति बुद्ध्यैव भस्मभूषितविग्रहः ॥ ९६ ॥

शैवः —

किमेवं खिन्नमधुना मुख तव महामते । कथमभ्यागतं कृत्यं किं वा वद तवाधुना ॥ ९७ ॥
इति तद्वचनं श्रुत्वा तं प्रणम्य शिवार्चकम् । स्वरूपं ज्ञापयामास तस्मै तेन सुदुःखितः ॥ ९८ ॥
तमुवाच ततः प्रीत्या कर्तव्यमिदमुच्यते । त्वया यत्नेन दातव्यं शैवायान्नं विशेषतः ॥ ९९ ॥
यदेव याच्ञया लब्धं तव किञ्चित् प्रयत्नतः । देयं तेन समृद्धिस्ते भविष्यति न संशयः ॥१००॥
नैवान्नपतये दत्तं येनान्नं किञ्चिदादरात् । स भवत्येव सहसा दरिद्रो नात्र संशयः ॥ १०१ ॥
अन्नं हारमुखे देयं ग्रासमात्रमपि प्रियम् । तेन तुष्टो महादेवो दौर्भाग्यं तेन नश्यति ॥ १०२ ॥
यदि हारमुखे दातुं न शक्तिः सर्वदा तदा । अन्नं शिवार्पणं कृत्वा भोक्तव्यं नित्यमादरात् ॥
अनर्पितं महेशाय भुङ्क्ते योऽन्नं स पापधीः । प्रतिजन्मनि पापिष्ठो दरिद्रो भवति ध्रुवम् ॥

अन्नानां पतये नमो नम इति स्मृत्वा प्रदेयं मुदा
शर्वायान्नमुदादरं च पुरतः कृत्वा प्रणम्यादरात् ।
तेनान्नानि समृद्धिमेत्य सदने तिष्ठन्ति ये निष्ठुराः
ते गेहाद्विनिवृत्य यान्ति विपिनं यद्वा तदन्यालयम् ॥ १०५ ॥

इति तद्वचनं श्रुत्वा तमाह द्विजपुङ्गवम् । किमन्नपतिरूपं मे वदेति प्रीतमानसः ॥ १०६ ॥

शांभवः —

रुद्राध्यायेन तद्रूपं कथञ्चित् समुदीरितम् । तदेव रूपं विज्ञेयं त्वया गुरुमुखात् खलु ॥ १०७ ॥
शिवरूपपरिज्ञानं यद्यप्यत्यन्तदुर्लभम् । तथाप्यभ्यसनेनैव तद् ज्ञानं च भविष्यति ॥ १०८ ॥
हरो हारमुखे दत्तमाहारमतिसादरम् । गृह्णाति दातुमेवादावुदारस्य सहस्रधा ॥ १०९ ॥
न तथा ग्राहको लोके दातापि न हरात् परः । न हर्तापि न कर्तापि न भर्तापीति मन्यताम् ॥
सर्वसौभाग्यदातारं शङ्करं लोकशङ्करम् । गौरीभर्तारमज्ञात्वा दुःखितो मानवो भवेत् ॥ १११ ॥
न जानन्त्येव गौरीशं मोहपाशसमावृताः । अत एव महद्दुःखं प्राप्नुवन्ति पदे पदे ॥ ११२ ॥
केचित् तावद्धनोन्मादात् विस्मरन्ति महेश्वरम् । विस्मरन्ति भ्रमात् केचिन्महापातकराशिभिः ॥
ज्ञात्वा कथञ्चिदालस्यान्नाराधयति कश्चन । अधमाधमतां प्राप्य दुःखितः स्यादसंशयम् ॥ ११४ ॥
जलैर्बिल्वदलैर्वापि पूजितो गिरिजापतिः । ददाति परमामृद्धिमिति धन्यैः समीरितम् ॥ ११५ ॥
अतः प्रमादमुत्सृज्य शार्ङ्गं लिङ्गं समर्चय । निवेद्यान्नानि तत्रैव भुङ्क्ष्व चिन्तय शङ्करम् ॥११६॥
पापनाशो भवत्येव भवानीवल्लभे स्मृते । ततः परं भाग्यवृद्धिर्भवत्येव पदे पदे ॥ ११७ ॥
भक्त्या परं महेशस्य भजनं यदि जायते । तदा न भयलेशोऽपि भयभूतसमुद्भवः ॥ ११८ ॥
यस्माद्भवति भूरेषा भूतान्यपि भवन्त्यमी । तं भवं भावनाबद्धं भावयाशु भयापहम् ॥ ११९ ॥
इति तद्वचनं श्रुत्वा गत्वा कारुणिकोत्तमम् । ययौ स्वमन्दिरं विप्रः स्मरंस्तद्वचनान्यपि ॥ १२० ॥
ततः परं लिङ्गमेकं तेन संपादितं नवम् । तत्रार्चनं कृतं तेन बिल्वपत्रादिसाधनैः ॥ १२१ ॥
यदन्नमर्जितं स्वेन तत्सर्वमपि सादरम् । निवेद्य शम्भवे भुक्त्वा स्थितः स्मृत्वा महेश्वरम् ॥१२२॥
एवं संवसता तेन रेवातीरे गतं कचित् । तत्तीरे लिङ्गमभ्यर्च्य स्थितो बिल्वदलादिभिः ॥१२३॥
तदानीमागतः कश्चिद्राजा शिवपरायणः । तेन दृष्टः स विप्रोऽपि दवभस्मविभूषणः ॥ १२४ ॥
ततः परं तमागत्य राजा प्राह शिवार्चकम् । कोऽसि कुत्र स्थितस्तत्र क वा तव परिग्रहः ॥१२५॥
का वा विद्या समभ्यस्ता कथमभ्यर्च्यते शिवः । कथं ध्येयो महादेवः तत्स्वरूपं च कीदृशम् ॥
किं तज्ज्ञानफलं वा स्यात् तदज्ञानफलं च किम् । तत्सर्वं वद मे विद्वन् शांभवाग्रेसराधुना ॥
दुर्लभः शांभवो लोके शिवज्ञानपरायणः । रेवातीरं दुर्लभं च लिङ्गमत्यन्तदुर्लभम् ॥ १२८ ॥
रेवालिङ्गस्य महिमा तदर्चनफलं च किम् । लिङ्गबोधकवेदोऽपि तत्पूजाबोधकोऽपि कः ॥ १२९ ॥
वैराग्यं वा कथं जातं किञ्च तस्य फलं वद । इति पृष्टः स राजानं प्राह विप्रः स चिन्तया ॥

विप्रः —

महेशतत्वं निगमैर्न बुद्धं वेदैर्मुनीन्द्रैरपि सिद्धसंघैः ।
तज्जातवेदस्य कथं वदाद्य प्रतारकत्वं च न युक्तमेतत् ॥ १३१ ॥

अनन्तवेदान्तविचारतान्ताः शान्ताः प्रजानन्ति महेशतत्वम् ।
यथा कथञ्चित् कणशो महेशप्रसादलेशे सति पुण्यलभ्ये ॥ १३२ ॥

लिङ्गतत्वं च दुर्ज्ञेयं लिङ्गपूजाफलं तथा । रेवास्वरूपज्ञानं च दुर्लभं सुतरामपि ॥ १३३ ॥

दुर्ज्ञेय एव गिरिजारमणप्रभावः तद्ज्ञानमस्य निगमाविषयं कथं वा ।
दुर्ज्ञेय एव विषयानवगाहनेऽपि नास्यापराध इति मे प्रतिभाति राजन् ॥ १३४ ॥

इत्याकर्ण्य वचस्तस्य तमुवाच स भूपतिः । पूजाक्रमं वा वद मे लिङ्गस्येति विशेषतः ॥ १३५ ॥
न पूजापि परिज्ञाता न ज्ञातोऽपि कुतो मया । ब्रह्मादीनां च तद्ज्ञानं दुर्लभं खलु वस्तुतः ॥
तत्पूजाज्ञानविरहेऽप्येवं किञ्चिज्जलादिकम् । देयं लिङ्गे प्रयत्नेन तावता पातकक्षयः ॥ १३७ ॥
द्वित्राणि बिल्वपत्राणि क्षिप्तानि शिवमस्तके । अर्पितानि हरन्त्येव पातकानि बहून्यपि ॥ १३८ ॥

अग्निर्दाहक एव किं करतलस्पृष्टो न तद्वत् कथं
लिङ्गाराधनमप्यघप्रहरणे दक्षं विरूपाक्षताम् ।
दास्यत्येव तदक्षयं फलमिति ज्ञातं कथञ्चिन्मया
तद्भिन्नं तु न तत्फलं किमधुना तद्भिन्नसाध्येन वा ॥ १३९ ॥

अस्माभिर्दुरदृष्टनाशकमिति ज्ञातं शिवाराधनं
तत्तत्साधकसाधितं धनमिति ज्ञातं निधित्वेन च ।
तत्तावत् सुलभं जलैरपि कृतं संसारदावानल-
[1] व्यस्तादङ्कुरयत्यपारविभत(?)तत् केन वा ज्ञायते ॥ १४० ॥

रेवातीरे नीरमात्रेण लिङ्गं तुङ्गं बिल्वीपल्लवैर्वा फलैर्वा ।
भक्त्या नित्यं पूजयन् याति मुक्तिं संसाराधिव्याधिनाशेन सत्यम् ॥ १४१ ॥

रेवातीरप्रापकं पुण्यमेकं नैकं किन्तु प्रापकाणां सहस्रैः ।
धर्मैः प्राप्तं धर्महेतुस्वरूपैः धर्मावाप्तिस्तैः पुनर्जायते नः ॥ १४२ ॥

1 व्यस्थानं कुरुते ह्यपार C

जानन्ति केचिद्गिरिजासहाय पूजाविधानानि तथापि तानि ।
न भावनायाः परिपूरकाणि काम्यानि नित्यान्यपि तानि नूनम् ॥ १४३ ॥

कस्तत्प्रभावपरिभावनया महेशध्यानप्रवृत्त इति तं वद सावधानम् ।
[1]अङ्गं विधाय नियमो नियमेन तेन सा भावनापि विफला ननु सत्यमेव ।१४४॥

इत्याकर्ण्य वचस्तस्य तमाहूय स्वकं गृहम् । ययौ यानवरस्थेन सह तेन महात्मना ॥ १४५ ॥
तेन तद्भवनं दृष्टं मणिमण्डलमण्डितम् । तुङ्गलिङ्गसमाक्रान्तं हारकोटिसमन्वितम् ॥ १४६ ॥
तं दृष्ट्वा विस्मयाविष्टः प्रणतः शङ्करं पुनः । पूजयामास लिङ्गानि नवविल्वदलादिभिः ॥१४७ ॥
ततः प्रदोषपूजां च स चकार महीपतिः । ततस्तं भोजयामास पक्वान्नं रससंयुतम् ॥ १४८ ॥
भोजनान्ते महादेवकथया प्रीतमानसः । ददौ तस्मै महार्हाणि भूषणानि महीपतिः ॥ १४९ ॥
गोकुलान्यपि दत्तानि धनानि विविधान्यपि । दुकूलान्यपि दत्तानि वाहनानि महान्त्यपि ॥
तत् सर्वं समुपादाय स तावत् स्वगृहं ययौ । तं दृष्ट्वा विस्मयाविष्टाः तद्दारास्तत्सुता अपि ॥
महदैश्वर्यसंपन्नं दृष्ट्वा तद्ग्रामवासिनः । तमूचुरादरान्नत्वा कस्येदं फलमित्यपि ॥ १५२ ॥

पूर्वेद्युरेवागतमस्मदीये गेहे कणार्धं कणभक्षणं च ।
कृतं क्षणार्धेन पिपासुनापि पीतं जलं क्षारमलक्षितेन ॥ १५३ ॥

राज्ञा दत्तं केन तुभ्यं धनं वा का वा विद्या ते धनावाप्तिहेतुः ।
मन्त्रोऽप्येको ज्ञायते न त्वया तु व्याप्तं गेहं वाजिभिर्गोकुलैश्च ॥ १५४ ॥

दिव्यैराभरणैर्धनैश्च विविधैर्व्याप्तं कथं मन्दिरं मत्तैभैरमितैर्मदद्रवजलैः व्याप्तं गृहस्याङ्गणम् ।
एतैर्हेमरथैरपारविभवैश्चित्रैश्च मुक्ताफलैः व्याप्तैः सूर्यनिवारकैर्ध्वजपटैः कोऽयं प्रभावस्तव ॥१५५॥

इति पृष्टः स तैः सर्वैः सोऽपि विस्मितमानसान् । प्राह शङ्करलीलेयमिति स्मेराननस्तदा ॥१५६॥

किं विद्यया किं तपसापि भाग्यं महेश्वरानुग्रहमन्तरेण ।
अनुग्रहे तस्य भवन्ति मान्याः सामान्यतो धन्यतमाश्च सत्यम् ॥ १५७ ॥

विद्या तु कापि नाभ्यस्ता न तपश्च कृतं मया । नाराधितोऽपि गिरिशः सम्यगित्यवधार्यताम् ॥
द्वित्राणि विल्वपत्राणि जलान्यपि मया परम् । लिङ्गे क्षिप्तान्यभाग्येन विश्वासोऽपि न मे तदा ॥
ज्ञातोऽपि न महादेवः स सर्वाराध्य इत्यपि । स सर्ववेदवेदान्तज्ञेय इत्यपि नार्चितः ॥ १६० ॥

---

1 अङ्गल्यपायनियमैर्नियमेन C ।

आकर्णिताऽपि न महेशकथासुधापि तत्पानपीनहृदयोऽपि कदाप्यथापि ।
दत्तं शिवेन धनमेतदपारमेव वामीभिरागतमपारबलावृताभिः ॥ १६१ ॥

रत्नाभरणमालानामपाराणामनेकधा । कान्तिराच्छादयत्येव मन्दिराणि महान्ति च ॥ १६२ ॥
न दानानि कृतान्येव न च यागादिकान्यपि । तथापि शंभुर्भगवान् सुप्रीतो बिल्वपल्लवैः ॥

को वा रसः कोमलबिल्वपल्लवे महेश्वरस्यापि च तं न विद्मः ।
स तं यथा तेन समर्चितोऽपि ददाति भाग्यान्यमितानि शंभुः ॥ १६४ ॥

श्रीसोमेश्वरकुण्डमध्यविविधापारोरुसर्पाङ्किता
वृत्ता तुङ्गतरङ्गसङ्गतमहालिङ्गेषु तुङ्गेषु यः ।
बिल्वान्यप्यमलानि दास्यति जलाभ्यक्तानि भक्त्या मुदा
तस्मै दास्यति शङ्करः करुणया देवत्वमप्यन्ततः ॥ १६५ ॥

सन्तुष्टो गिरिशो ददात्यमितमप्यैश्वर्यमन्ते स्वकं
स्थानं दास्यति शङ्करः खलु महादाता स देवोत्तमः ।
तस्यादेयमिहापि किं यदि भवेत् तुष्टः स रुष्टोऽपि वा
कष्टं नष्टमिदं जगत्त्रयमिति ज्ञेयं स मृत्युञ्जयः ॥ १६६ ॥

इति ग्रामजनैः साकं कृत्वा वार्तामहोत्सवम् । ययौ वनं स यत्रासीच्छांभवः स्वोपदेशकः ॥
तदा तन्मार्गगमने कुंभिकुम्भस्थलागतैः । मदधारागन्धवाहैः व्याप्तमेव हि तद्वनम् ॥ १६८ ॥
तदा तद्गन्धमाघ्राय मृगेन्द्राः समुपस्थिताः । तत्कुंभिकुम्भदलनं कर्तुमेव मदोद्धताः ॥ १६९ ॥
करियूथं विलोक्याग्रे पश्चात् सिंहवरानपि । कालकालं स सस्मार निःशङ्कोऽपि स शाङ्करः ॥
आनीलभृङ्गसङ्काशकरिपोषणतत्परः । सिंहानभिमुखान् दृष्ट्वा प्राह शाङ्करसत्तमः ॥ १७१ ॥
इदं बिल्ववनं तावत् पावनं स च शङ्करः । लिङ्गरूपं समासाद्य तिष्ठतीत्यवगम्यते ॥ १७२ ॥
न चात्र गमनं युक्तं वैरेण करिवैरिणां । अवैरेण यथाकाममत्राप्यागमनं मतम् ॥ १७३ ॥
नवबिल्ववनापारपवनोऽतीव पावनः । यावत् प्रसरति स्वैरं तावद्वैरैरलं खलु ॥ १७४ ॥
इति तद्वचनं श्रुत्वा दृष्ट्वा सिंहाः परस्परम् । प्रभावं शांभवं स्मृत्वा तदा तस्मिन् महावने ॥
ततः परं स विप्रोऽपि रत्नसानुमुपाश्रितः । शांभवाश्रममागत्य सन्तोषं प्राप शङ्करः ॥ १७६ ॥
ततस्तं गुरुमालोक्य प्रणम्य च पुनः पुनः । कथयामास वृत्तान्तं स्वकं सर्वमशेषतः ॥ १७७ ॥

तदाकर्ण्य स शैवोऽपि तमाह प्रीतमानसम् । उत्साहं जनयन्नेव पुनः शङ्करपूजने ॥ १७८ ॥

शाम्भवः —

मत्पादुकाराधकपादुकार्चाऽप्यपारमैश्वर्यमयत्नलभ्यम् ।
करोति तल्लिङ्गसमर्चनेन किमेवमैश्वर्यमिति स्मरामि ॥ १७९ ॥

इन्द्रोपेन्द्रचतुर्मुखादिकसुराराध्यं परार्घ्यं वरं यल्लिङ्गं तदपेक्षितं सकृदपि प्रारब्धलब्धान्यपि ।
पापानि प्रहरत्यपारसुकृताम्भोधिप्रवृद्धिं करोत्यैश्वर्याण्यतुलानि मुक्तिरिति मे तावत् प्रमा जायते ॥

भूतिभूषितसर्वाङ्गो लिङ्गार्चनपरो भव । इतोऽपि कोटिगुणितं तवैश्वर्यं भविष्यति ॥ १८१ ॥
इन्द्रोपेन्द्रादयः सर्वे करिष्यन्ति तदर्चनम् । पुत्रपौत्रादिवृद्धिश्च भविष्यति शिवार्चनात् ॥ १८२ ॥

मुक्तिर्भविष्यत्यपि पापनाशः संसाररोगव्यसनक्षयोऽपि ।
अतो विरूपाक्षसमर्चनेन नेयस्त्वयाऽयं समयोऽभयेन ॥ १८३ ॥
अतः परं जन्मजरादिभीतिं विहाय मृत्युञ्जयमादरेण ।
भजस्व भाग्यानि लभस्व भोग्यान्यनुक्षणं श्रीफलवृक्षमूले ॥ १८४ ॥

इत्युक्तः स ययौ नत्वा तं गुरुं शङ्करोत्तमम् । तदाप्रभृति तस्यासीत् विश्वासः शिवपूजने ॥
ततः स कारयामास सदनान्यमितान्यपि । गजवाजिमहोष्ट्रादिवासयोग्यानि भूरिशः ॥ १८६ ॥
प्रातःकालं समारभ्य शिवलिङ्गार्चनोद्यतः । वनानि कारयामास शिवपूजार्थमादरात् ॥ १८७ ॥
बिल्वभूरुहमूलेषु शिवलिङ्गानि कोटिशः । तुङ्गानि स्थापयामास स एव शिवपूजकः ॥ १८८ ॥
पञ्चामृतप्रवाहाद्यैः पूजयामास शङ्करम् । कुमाराः शाङ्करास्तस्य जाता एव सहस्रशः ॥ १८९ ॥
तैरर्चितानि लिङ्गानि कोटिशः कुसुमादिभिः । शिवलिङ्गार्चनं त्यक्त्वा नान्यत् कुर्वन्ति तत्सुताः ॥
तत्प्रभावानुकथनं कर्तुमेव न शक्यते । शिवार्चनेन तैर्लब्धः प्रभावस्तादृशः खलु ॥ १९१ ॥
इन्द्रलोकादिलोकेषु गत्वा ते कुसुमान्यपि । समानीय महादेवं पूजयन्ति प्रयत्नतः ॥ १९२ ॥
ते नन्दनवनं गत्वा तत्र मन्दारसंभवैः । लिङ्गानि पूजयामासुः प्रसवैरमितैरपि ॥ १९३ ॥
प्रसूनमात्ररहितं तद्वनं समभूत् तदा । ततस्तत्पल्लवैर्भक्त्या शाखाभिरपि पूजनम् ॥ १९४ ॥
तदानीमागतैर्दूतैरपारैर्वनपालकैः । निवारिताः कुमारास्ते शाखादिछेदनादपि ॥ १९५ ॥
ततस्तानागतान् हत्वा ते सर्वे वनपालकान् । शाखाभिरपि लिङ्गानि पूजयामासुरादरात् ॥१९६॥
तेषु हतेषु यः कश्चित् तैर्हतोऽपि शनैः शनैः । गत्वा जयन्तं वृत्तान्तं वनस्याहातिदुःखितः ॥

ततो जयन्तः क्रोधेन निर्गतस्तद्वनं प्रति । गत्वा तानाह दुष्टात्मा वचनं क्रोधसाधनम् ॥ १९८ ॥
ते तद्वचनमाकर्ण्य शिवाराधनतत्पराः । क्रोधानलेन सन्दग्धं जयन्तं चक्रुरुद्धताः ॥ १९९ ॥
ततः परं समाकर्ण्य जयन्तं दग्धमुद्धतैः । इन्द्रः समाययौ तत्र तानाहातीव दुःखितः ॥ २०० ॥
निष्ठुरं वचनं तेन यदुक्तमतिदुःसहम् । तदाकर्णनमात्रेण तेऽपि क्रोधसमाकुलाः ॥ २०१ ॥
ततस्तमिन्द्रं ते सर्वे स्वपादतलघातनैः । अस्थिमात्रावशिष्टं च चक्रुः क्रोधानलैर्मुहुः ॥ २०२ ॥
इन्द्रेऽपि निहते तस्मिन् तत्क्रोधः शान्तिमाप सः । ततः समागताः सर्वे सुराः सूर्यादयस्तथा ॥
ते समागत्य तानाहुः पुरस्कृत्य गुरुं सुराः । क्षमध्वं च क्षमध्वं च क्षमध्वमिति तत्सुतान् ॥२०४॥
ततो गुरुरुवाचेदं वचनं शैवपुङ्गवान् । प्रणम्य विनयेनैव कृताञ्जलिपुटो मुहुः ॥ २०५ ॥

शिवाज्ञया जातमिदं समस्तं यद्भावि तद्भावि न संशयोऽत्र ।
अतः परं कोऽत्र शचीपतिः स्यात् सिंहासनस्याधिपतिः स एव ॥ २०६ ॥
इदं वनं शङ्करपूजनाय विनिर्मितं नन्दननामकं च ।
इन्द्रेण पूर्वं परतोऽधुनास्य कः पालकः स्याच्छिवपूजकोऽपि ॥ २०७ ॥
अनायकं चेद्वनमेतदस्य शिवार्चनाय प्रसवाः कुतः स्युः ।
एतानि लिङ्गानि नवप्रसूनैः पूज्यानि सर्वैरमरैः प्रयातैः ॥ २०८ ॥

इति तद्वचनं श्रुत्वा ते सर्वे हृष्टमानसाः । ज्येष्ठं भ्रातरमूचुस्ते फाललोचननामकम् ॥ २०९ ॥

कुमाराः —

इन्द्रो हतो दैवयोगादिन्द्रस्थाने भवान् भव (?) । अन्यथास्य वनस्यापि पालनं न भविष्यति ॥
इति तद्वचनं श्रुत्वा प्राह तान् फाललोचनः । प्रहस्य किञ्चिदुत्साहं वर्धयन्नेव तान् प्रति ॥
ममेन्द्रत्वपदे वांछा कथं तुच्छे भविष्यति । बालकानां तथा वांछा कदाचित्खलु जायते ॥२१२॥
अयं कनिष्ठो देवेन्द्रो भविता भवनामकः । बालकत्वात् पालकोऽयं स्याच्छचीनायकः खलु ॥
अयं लिङ्गार्चने नित्यं सादरो नन्दनोद्भवैः । पुष्पैर्लिङ्गार्चनं कृत्वा स्थास्यत्यत्र न संशयः ॥

नित्यं लिङ्गशतप्रपूजनरतः सोऽयं युवा नन्दने
स्थित्वा शक्रपदं मनोहरमिदं सिंहासनं स्वासनम् ।
कृत्वा प्राप्य शचीपतित्वमधुना तिष्ठत्वपारं सुखं
प्राप्यान्ते शिवमन्दिरं प्रति समायास्यत्युमा[6]वल्लभः ॥ २१५ ॥

---

6 वल्लभम् C

इत्युक्त्वा भ्रातरं ज्येष्ठस्तमुमावल्लभाभिधम् । पुनः शिवार्चनोद्युक्तस्तत्र दूर्वाङ्कुरादिभिः ॥ २१६ ॥
ततः सूर्यादयः सर्वे तमेव भवनामकम् । इन्द्रं चक्रुः स एवासीत् शचीकान्तः शिवार्चकः ॥

सदाशिवः —

शिवार्चनाद्यैः संप्राप्यमैश्वर्यं शिवपूजकैः । तादृशं तत्फलं तावत् ततोऽप्यधिकमेव हि ॥ २१८ ॥
अतः समर्चयामीति शङ्करं शाङ्करानपि । क्षीरहारादिदानाद्यैः कुरु शङ्करतोषणम् ॥ २१९ ॥
इत्युक्तोऽपि महेशेन विप्रवेषेण सादरम् । हारं मनोहरं तस्मै न ददौ दुर्मतिस्तदा ॥ २२० ॥
ततः स कुपितः शम्भुः तत्कोपेन स सागरः । निहतो दुःखितो विप्र सदारः ससुहृद्गणः ॥
अस्मभ्यमधुना शम्भुः प्रसन्नोऽपि भविष्यति । तुभ्यं रत्नाकरत्वं च दास्यत्यस्मदभीप्सितम् ॥

रत्नाकरः —

इति तद्वचनं श्रुत्वा तथास्त्वित्युक्तमादरात् । मह्यं रत्नाकरत्वं च ददौ तत्प्रार्थितः शिवः ॥ २२३ ॥
ततस्ताभिरहं तत्र जातो भूयान् महोत्सवः । एताः सर्वाः शिवार्चायां निरताः शङ्करार्चकाः ॥
गन्धर्वतनया एव मम दारा मनोहराः । एतादृशं महद्भाग्यं प्राप्तं शङ्करपूजया ॥ २२५ ॥
संप्राप्तं महदैश्वर्यं पूर्वैः सर्वैः सुरासुरैः । शिवलिङ्गार्चनेनैव वेदोक्तेन मुनीश्वरैः ॥ २२६ ॥

लिङ्गार्चनेनापि समं न पुण्यं ततोऽपि नैवाधिकमस्ति पुण्यम् ।
अतस्तदेवामितपुण्यपुञ्जाः कुर्वन्ति नित्यं खलु सावधानम् ॥ २२७ ॥

नित्यं शङ्करपूजनेन सुधियः कालं नयन्त्यादरात्
भूतिव्यापृतफालभागकलिकापञ्चाक्षरात्युत्सुकाः ।
रुद्राक्षाभरणाः क्षणार्धमपि ते फालाक्षपूजां विना
तिष्ठन्त्येव न सर्वथा शिवकथापीयूषपानोद्धताः ॥ २२८ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे शिवभक्तगन्धर्वकन्यकासंवादे अशांभवदेशराज-कणयाचक-ब्राह्मणचरित्रवर्णनं नामैकोनपञ्चाशोऽध्यायः ॥

---

## अथ पञ्चाशोऽध्यायः ।

—:×:—

धर्मसेनकुमारी —

इत्थं कथा नारदेन प्रोक्ता पापविनाशिनी । मया श्रुता तथा भक्तिः शिवलिङ्गार्चने ततः ॥

अतः शङ्करपूजा मे कर्तव्या जन्मनः फलम् । शिवार्चनं परं मन्ये तदन्यन्नाधिकं फलम् ॥ २ ॥

इति तद्वचनं श्रुत्वा स गन्धर्वोऽपि विस्मितः । तामेवाह पुनः प्रीत्या शिवपूजनलालसाम् ॥

गन्धर्वः —

तव भर्ता यदि भवेद्गिरिशाराधनप्रियः । तदा तत्सदने वासस्तवास्तु कमलानने ॥ ४ ॥

तस्य प्रीतिर्यथा वत्से महादेवे भविष्यति । तथोद्योगो मया कार्यः त्वया कार्यं शिवार्चनम् ॥

रविः —

इत्युक्तः सोऽपि गन्धर्वः तद्भर्तुर्निकटं ययौ । तदा तद्देशभागस्थं तं ददर्श नृपात्मजम् ॥ ६ ॥

तदा तमाह गन्धर्वो राजानमतिसुन्दरम् । हारं कर्तुं महोदारं हारदारवरार्चकः ॥ ७ ॥

गन्धर्वः —

रेरे भूपाल ते बालो निमीलितविलोचनः । किमपेक्षितमत्रास्ति वद तावन्निशामुखे ॥ ८ ॥

राजा —

बाला मे महिला सापि कालकालार्चनप्रिया । श्रीकालकालसदनं प्रविष्टा रोषसंयुता ॥ ९ ॥

मम तावन्न गमने शक्तिरस्त्यधुना खलु । मत्कृताकृत्यदोषेण प्रतिबद्धोऽस्मि सत्वरम् ॥ १० ॥

तया सङ्गः कथं भावी सा सौन्दर्यनिधिः खलु । तद्देहवातपोतेनाप्येतस्य खलु जीवनम् ॥ ११ ॥

इति तद्वचनं श्रुत्वा गन्धर्वः प्राह तं नृपम् । मदुक्तं कुरु सा तेन नृप त्वद्वशमेष्यति ॥ १२ ॥

शैवीं दीक्षां गृहाणाद्य शिवव्रतरतो भव । शपथं कुरु गौरीशे तथा शङ्करपूजने ॥ १३ ॥

शिवपूजैव कर्तव्या यावज्जीवं मयेत्यपि । प्रतिज्ञा सा प्रतिज्ञैव तव स्यात् सुखदायिनी ॥ १४ ॥

रत्नैरपारैर्विविधैः प्रसूनैरपि कोटिशः । पूजयस्व महादेवं तेनेष्टं तव सिद्ध्यति ॥ १५ ॥

यदि मध्ये परित्यक्ता शिवपूजा तदा त्वया । हानिस्तावद्भवत्येव धनधान्यादिकस्य ते ॥ १६ ॥

रविः —

इति तद्वचनं श्रुत्वा स राजा प्रीतमानसः । चकार शपथं प्रीत्या महादेवपदाम्बुजे ॥ १७ ॥

यावज्जीवं शङ्कराराधनं मे काले काले कार्यमेवादरेण ।
दत्तं सर्वं रत्नकोशादिकं च विश्वेशार्चासाधनं तत् समस्तम् ॥ १८ ॥

इति प्रतिज्ञां कृत्वैव तमुवाच स भूपतिः । शिवदीक्षा कथं प्राप्या मयेति प्रीतमानसः ॥ १९ ॥
तुभ्यं मयैव दातव्या शिवदीक्षेति सादरम् । ययौ तेन सरस्तीरं महालिङ्गसमन्वितम् ॥ २० ॥
ततः परं स गन्धर्वः स्नातः शिवसरोवरे । विभूतिभूषिताङ्गं च नृपमाहातिविस्मितः ॥ २१ ॥
शिवसन्निधिमायाहि दीक्षा तत्र भविष्यति । संपादनीया सामग्री ममेत्याह विचक्षणः ॥ २२ ॥
ततो गत्वा कालकालमन्दिरं लिङ्गसन्निधौ । दीक्षां ददौ महाशैवीं सर्वदा फलसिद्धिदाम् ॥ २३ ॥
ततस्तद्देहनिलयाः पापशैलाः परस्परम् । निलयङ्गतमित्युचै(?)रुच्चरन्तोऽतिविस्मिताः ॥ २४ ॥
धूमाकारान् गिरीन् दृष्ट्वा पापरूपान् नृपात्मजः । विस्मयं परमं प्राप्य कृतार्थोऽस्मीति सादरम् ॥
ततः पूतश्च पुण्यात्मा तदानीं शिवविद्यया । चकार पूजनं शंभोरपारैः साधनैर्नृपः ॥ २६ ॥

तदा प्रतिज्ञापि कृता नृपेण शम्भोः पदाम्भोरुहपूजनं मे ।
कर्तव्यमन्यत् परिहृत्य कार्यं इतः किमन्यन्मम कार्यमिष्टम् ॥ २७ ॥
अपारापराधान् क्षमस्वाद्य शम्भो मदीयानमोघानदेयोऽपि देयः ।
वरोऽयं वरो मेऽस्तु संसारबन्धः प्रतिच्छिन्न एवास्तु तुभ्यं नमो मे ॥ २८ ॥

इति स्तुत्वा महादेवं लिङ्गार्चनरतं नृपः । ततस्तमाह गन्धर्वो निमीलितविलोचनम् ॥ २९ ॥
राजन् प्रदोषकालस्तु जातः शङ्करपूजनम् । जातं च मन्दिरं याहि तया महिलया सह ॥ ३० ॥
इति तद्वचनं श्रुत्वा गन्धर्वं प्राह भूपतिः । शिवलिङ्गं समानीय कामुकः कामिनीमिव ॥ ३१ ॥

राजा —

अतः परं लिङ्गसमर्चनेन नेयं वयो मे शिवलिङ्गपूजा ।
कृता न पूर्वं दुरदृष्टयोगात् कष्टानि भुक्तान्यमितानि तानि ॥ ३२ ॥
संसारवाञ्छा विफलाऽतितुच्छा स्वच्छस्य सा किं भवति प्रबोधे ।
भ्रमान्धकारो न रविप्रकाशे तैर्मन्दिरैरप्यलमेव भोगैः ॥ ३३ ॥
रत्नैरपारैर्विविधैः प्रकामं पुनः पुनः शङ्करमन्दिराणि ।
कार्याणि यत्नेन शिवार्चनानि बिल्वप्रसूनादिभिरादरेण ॥ ३४ ॥

शिवाधीनं मत्वा सकलमतिपुण्यैः शिवजनः करोति व्यासङ्गं कमपि खलु हित्वैव सततम् ।
महादेवध्यानं नवविधिसमानानि बहुधा फलानि त्यक्त्वातः शिवभजनमेवास्य शरणम् ॥ ३५ ॥

सदनं मदनान्तकालये वसनं भूतिरियं ममाशनम् ।
शिवलिङ्गसमर्चितं नवं कमलं बिल्वसुपल्लवमाला (?) ॥ ३६ ॥

इति तद्वचनं श्रुत्वा विमला महिलापि सा । तस्य भूपस्य सस्मेरा स्मितैरानन्दमाप च ॥ ३७ ॥
एतावत् तस्य वृत्तान्तं धर्मधेतुः शिवार्चकः । श्रुत्वा विस्मयमापन्नः संप्राप शिवमन्दिरम् ॥ ३८ ॥
ततस्तं भूतिपूताङ्गं रुद्राक्षाभरणान्वितम् । लिङ्गालिङ्गितशाङ्गाङ्गं ददर्श प्रीतमानसः ॥ ३९ ॥
तं दृष्ट्वा कन्यकां दृष्ट्वा गन्धर्वं च शिवार्चकम् । प्राह गम्भीरवचनैः चतुरः स नराधिपः ॥

धर्मधेनुः —

केनोपदिष्टः शिवलिङ्गपूजां कर्तुं प्रवृत्तोऽपि निवृत्तकामः ।
प्रवृत्तिरेतस्य न भाविनी वा कापीति मन्ये शिवपूजनेन ॥ ४१ ॥

धन्योपदेशेन भवन्ति धन्याः सर्वेऽपि मान्याश्च शिवार्चनेन ।
किमेतदाश्चर्यकरं करोति स शङ्करः सुन्दरलीलयाऽपि ॥ ४२ ॥

अहो महद्भाग्यमिदं ममापि मत्कन्यकायाश्च विशेषतस्तु ।
यतो महादेवपदारविन्दमानन्दकन्दं परमाश्रितोऽयम् ॥ ४३ ॥

संसारसागरस्तीर्णस्तूर्णमेतेन शङ्करः । प्रायः पूर्वभवेप्येवं सोऽयं शिवपरायणः ॥ ४४ ॥
अन्यथा कथमेतस्य शिवभक्तिर्दृढाऽधुना । कथं वा समभूदेवमन्यालभ्या विशेषतः ॥ ४५ ॥

एवं भक्तिः शङ्करे यस्य तस्य भाग्यं नूनं तावदुत्कृष्टमेव ।
नष्टं कष्टं शङ्कराराधनेन हृष्टं स्पष्टं मानसं शाङ्कराणाम् ॥ ४६ ॥

जन्मान्तरार्जितमहाघलयात् किलायं मृत्युञ्जयार्चनरतो विरतोऽपि भोगात् ।
भाग्यं तदेतदनुवासरमेवमत्र संप्रार्थनीयमिति मे मतिरत्र जाता ॥ ४७ ॥

इत्युक्त्वा प्राह गन्धर्वं स चित्ररथनामकम् । त्वदाज्ञया गृहं यातु सोऽयं महिलया सह ॥ ४८ ॥
ततः परं स गन्धर्वस्तमाह शिवपूजकम् । मन्दिरं सुन्दरं प्राप्य स्थातव्यमिति सादरम् ॥ ४९ ॥
भोक्तव्यं शिवनैवेद्यं कर्तव्यं च शिवार्चनम् । शिवोपहारममृतं वृद्धिसिद्धिकरं परम् ॥ ५० ॥
इति तद्वचनं श्रुत्वा चिताश्च इति भूपतिः । तमाह लिङ्गमालिङ्ग्य गाढं दृढमतिर्दृढम् ॥ ५१ ॥

चिताश्वः —

अमोघाघसङ्घानलालोलशीलप्रभावाभिभावाय भावार्चनाम्बु ।
महेशाभिषेकाम्बु पीतं स्वमूर्ध्ना स्वमूर्ध्ना भवत्येतदेवामृतं मे ॥ ५२ ॥

शिवाराधनानन्दसन्दोहविघ्नो न कार्यस्त्वया तावदस्मान्निवृत्तिः ।
तवास्तु प्रशस्तं [1]तदेवास्तु वस्तु स्वतः स्वस्ति तेनैव तन्मे प्रशस्तम् ॥ ५३ ॥

दारेषणादिविषपानविमूढचित्तैः नाराधितं गिरिशपादपयोजमज्ञैः ।
ते तावदन्धतमसं समवाप्य शोकैः लोके न सन्ति कलिकालभयाब्धिमग्नाः ॥ ५४ ॥

इति तद्वचनं श्रुत्वा स राजा प्राह तं नृपम् । अश्वमेधाधिकं कार्यं तत्कर्तव्यं शिवार्पणम् ॥५५॥
अश्वमेधः कृतः पूर्वं पूर्वजैस्तव भूपते । इन्द्रत्वमपि संप्राप्तं भुक्त्वा भोगाननेकधा ॥ ५६ ॥
संपादिताः कुमाराश्च शूराः परपुरञ्जयाः । सर्वात्मना न संसारस्त्याज्योऽपि खलु भूपते ॥ ५७ ॥
त्वदीयमपि यद्राज्यं तत् प्राज्यं रिपुसंकुलम् । उपेक्षितं भवत्येव तदुपेक्षापि नोचिता ॥ ५८ ॥
इति कर्णकठोराणि श्रुत्वा वाक्यानि भूपतेः । धर्मधेनुरुवाचेदं वचनं सोऽपि भूपतिः ॥ ५९ ॥

किमश्वमेधावभृथैर्वृथा तैः तीर्थाटनैर्वा न वराटवीषु ।
मुदा जटाजूटतटेन्दुखण्डखण्डावतंसं भज शैलजांशम् ॥ ६० ॥

अलं व्यर्थालापैरलमलमलं व्याकुलबलैः खलैर्व्यालैर्वालप्रबलमहिलालोकनरसैः ।
असारे संसारे विरतिरधुना साधु जनिता शिवेनातः कृत्यं किमपि न विभाति प्रतिभया ॥ ६१ ॥

रविः —

एवं संभाषणेनैव गता रात्रिस्ततः परम् । प्रातरुत्थाय च स्नात्वा शिवपूजारतोऽभवत् ॥ ६२ ॥
सा तस्य महिला दृष्ट्वा तं पतिं शिवपूजकम् । स्वयमप्यर्चयामास सह तेन महेश्वरम् ॥ ६३ ॥
ततस्तमाह महिला चित्राश्वं तस्य कोमलैः । वचनैश्च विलासैश्च मन्दहासपुरःसरम् ॥ ६४ ॥

सुलोचना —

राजन् शिवप्रसादेन शिवपूजारतिस्तव । जातं महदिदं भाग्यं इतः किमधिकं सुखम् ॥ ६५ ॥
परन्तु रत्नकोशस्य हेमकोशस्य चाधुना । शिवप्रसादकरणे व्ययोऽस्तु शिवपूजया ॥ ६६ ॥
गजवाजिसहस्राणां गोकोटीनां च किं फलम् । शाङ्करेभ्यः प्रदातव्या तेन स्यात् पुण्यमक्षयम् ॥
धान्यानां गिरयो गेहे तिष्ठन्त्येव नृपोत्तम । तदन्नैः शिवनैवेद्यं कर्तव्यमतियत्नतः ॥ ६८ ॥
भोजनीयाः प्रयत्नेन शांकराः सर्वदा त्वया । शिवपूजैव कर्तव्या सर्वथा विविधैर्धनैः ॥ ६९ ॥
इति तद्वचनं श्रुत्वा गन्धर्वेणाभिनन्दितः । राजाऽपि स्वगृहं प्राप नृपो (?) महिलया सह ॥ ७० ॥

---

1 यदेवास्ति C

तत्र लिङ्गानि तुङ्गानि नार्मदानि स भूपतिः । स्थापयामास यत्नेन रत्नागारेषु कोटिशः ॥ ७१ ॥
नित्यं शिवार्चनरतः शृण्वन् शिवकथा मुहुः । पुत्रानुत्पादयामास तस्यां शङ्करपूजकान् ॥ ७२ ॥
तं तादृशं नृपो दृष्ट्वा धर्मधेनुर्नृपात्मजान् । गन्धर्वोऽपि सुसन्तुष्टो ययौ स्वनगरं प्रति ॥ ७३ ॥

भानुः —

इति स्वप्नो महान् दृष्टस्तया चारणभार्यया । ततः समुत्थिता सापि ददर्श शिवकिङ्करान् ॥७४॥
ततस्ते तां विलोक्याहुर्विनयेनैव सुन्दरीम् । विमानवरमानीतं तुभ्यं चारणसुन्दरि ॥ ७५ ॥
आयाहि यामः कैलासं दुर्लभं योगिनामपि । शिवप्रसादलभ्यं तं विद्धि बुद्धिविशारदे ॥ ७६ ॥
इति तद्वचनं श्रुत्वा स्मृत्वा भूयो महारथम् । प्राह स्मेरानना मन्दं भृङ्गीश्वरमनाकुला ॥ ७७ ॥
दीनवत्सलता तावल्लीलया प्रकटीकृता । शङ्करेणेति विज्ञातमनाथायामपि ध्रुवम् ॥ ७८ ॥
नार्पितानि महेशाय नवबिल्वदलानि वा । द्वित्राणि भक्त्या दत्तं वा नेदं सुरसरिज्जलम् ॥ ७९ ॥
न चन्दनादिभिर्भक्त्या लिङ्गमेतत् समर्चितम् । यद्यप्यथापि भगवान् मामद्योद्धर्तुमिच्छति ।८०॥

न श्रान्तौ शिवपूजनेन विमलौ हस्तौ प्रसूनार्चितं
लिङ्गं नानिमिषेण लोचनयुगेनाद्यापि संवीक्षितम् ।
न ध्यातं शिवलिङ्गमिन्दुशकलालङ्कारपूजालयं
व्यर्थं जन्म गतं ममेदमधुना कैलासवासेन किम् ॥ ८१ ॥

न श्रान्ता रसनापि शङ्करपदाम्भोजस्तवैर्मानसं
नाक्रान्तं शिवचिन्तनैरनुदिनं भूरिप्रसूनैरपि ।
रम्यं तावदिदं शरीरमपि मे श्रान्तिर्न मे पादयोः
श्रीकाशीगमनेन हन्त वद मे कैलासवासेन किम् ॥ ८२ ॥

कर्णाभ्यां करुणारसार्णवशिवाकान्तातिकान्तामित
स्वान्तानन्दकरातिशोभनकथापीयूषधारा परा ।
पीता नापि पुरा पुरारिनगरे वीरेश्वराराधनैः
नीतं नैव वयो मया च वद मे कैलासवासेन किम् ॥ ८३ ॥

नाभूत् फालतलं त्रिपुण्ड्ररुचिरं रुद्राक्षमालालयः
कायो नायमुमासहायविलसन्नैवेद्यपुष्टोऽधुना ।

तुष्टं वा हृदयं शिवाङ्गणमहानाद्यैश्च नाद्योत्सवैः
जप्तः शैवपडक्षरोऽपि न मया कैलासवासेन किम् ॥ ८४ ॥

तीर्थेशोऽपि न पूजितो न विलसद्बिल्वीदलैः कोमलैः
श्रीशैलोऽपि न वीक्षितः क्षणमुमा सा चण्डला नेक्षिता ।
दृष्टा न भ्रमराम्बिकाऽपि कमलैर्नाराधिता सादरं
मन्दं भाग्यमतः परं तदधुना कैलासवासेन किम् ॥ ८५ ॥

कर्तव्यं गिरिशार्चनं सुरसरित्तीरोरुधाराभरैः बिल्वीकोमलपल्लवैर्मृगमदैः पाटीरसारैरपि ।
गोक्षीराद्युपहारकोटिभिरतः कैलासवासेन किं वक्तव्यः स महेश्वरोऽपि वचनैरेवं कृपासागरः ॥

अत्रैवामितरत्नगोपुरवरप्राकारधीरस्फुरत्प्रासादामितमन्दिरैरुरुतरैर्लिङ्गाङ्गणस्थैरलम् ।
कर्तव्यं विमलं सहारमपरो मेरुर्यथा सुन्दरं तद्वन्मन्दिरमत्र चित्रमधुना कर्तव्यमेव ध्रुवम् ॥८७॥

न ब्रह्मकल्पोपशमेपि शाङ्गं तुङ्गश्च लिङ्गं परिहार्यमस्याः ।
लिङ्गार्चने मे मतिरस्तु नित्यं कैलासवासे न मतिर्ममाद्य ॥ ८८ ॥

रविः —

इत्युक्तं तद्वचः श्रुत्वा भृङ्गीशो विस्मयान्वितः । ययौ कैलासनिलयं स्मरन् शङ्करवैभवम् ॥ ८९ ॥
गतेषु तेषु सर्वेषु गणेषु विमलानने । देवेष्वपि महाशैवं सा ददर्शातिविस्मितम् ॥ ९० ॥
तं विलोक्य प्रणम्यापि तमेव शिवपूजनम् । कृताञ्जलिपुटा प्राह चारणेन सहादरात् ॥ ९१ ॥
शिवविद्यां प्रयच्छाद्य यद्यस्ति करुणा मयि । अनवद्यानवद्यां मे सिद्धविद्याधरेप्सिताम् ॥ ९२ ॥
शिवपूजाप्रकारेपि कर्तव्यं शिक्षयाधुना । अदेयमपि तद्देयं यदस्ति मम शांभव ॥ ९३ ॥
अतः परं न संसारे रतिरस्याः प्रजायते । शिवार्चनरतिर्जाता शङ्करानुग्रहान्मम ॥ ९४ ॥
इदं सुरसरित्तीरे लिङ्गं तुङ्गं मनोहरम् । सोऽयं बिल्वतरुश्चेति दुर्लभं तदिदं त्रयम् ॥ ९५ ॥
तदेतत् कामदं लिङ्गं अकामैरपि पूजितम् । ददाति परमैश्वर्यं सुरवन्द्यमनामयम् ॥ ९६ ॥

दृष्टं विमानमधुना गणकोटिनीतं मां नेतुमागतमुमापतिरक्षितं च ।
त्यक्तं तदेतदधुना शिवलिङ्गपूजां कर्तुं शिवार्चनरतास्मि न संशयोऽत्र ॥ ९७ ॥

रविः —

इत्युक्तं तद्वचः श्रुत्वा ददौ तस्यै स शांभवः । पञ्चाक्षरं परं शैवमशेषाघविनाशकम् ॥ ९८ ॥

सा तेन रुरुचे तत्र [1] विष्णुदारमहोत्सवैः । ततश्चकार सा पूजां शाङ्गलिङ्गेऽतिनिर्मलाम् ॥ ९९ ॥
नगरं कल्पितं तत्र रत्नराजिविराजितम् । मन्दिरं शङ्करस्यापि चित्ररत्नविजृम्भितम् ॥ १०० ॥
अपारैरुपचारैः सा पूजयामास शङ्करम् । श्रुत्वा शिवकथामेव स्मृत्वा च गिरिजापतिम् ॥ १०१ ॥

भानुः —

अतस्त्वमपि यत्नेन कुरु शङ्करपूजनम् । भज मृत्युञ्जयं नित्यं जप पञ्चाक्षरं शुभम् ॥ १०२ ॥
यावत् सौभाग्यमारोग्यं तावदाशु शिवं यज । शिवार्चनं परं भाग्यं सूते कल्पतरुर्यथा ॥ १०३ ॥

आलस्येन विना शिवार्चनरतिर्लिङ्गेषु तुङ्गेषु ते
जाता चेदधुना परं नवनिधिः प्राप्तः करे संततम् ।
एतत्तावदिहानुपङ्क्तिकमिति ज्ञेयं फलं तत्फलं
यत्तद्वक्तुमपारवेदशिखरैः वक्तुं न शक्यं खलु ॥ १०४ ॥

यावत्ते धनमस्ति तावदधुना सांबाय भक्त्या परं
देयं तत्तु सहस्रकोटिगुणितं दास्यत्यवश्यं धनम् ।
तच्चास्मद्वचने तवापि बहुधा विश्वास एवास्त्वतः
पापाब्धिप्रलयो भविष्यति शुभांभोधिश्च संभावितः ॥ १०५ ॥

याज्ञ्यवल्क्यः —

इति भानुवचः श्रुत्वा सापि पद्मावती शुभा । शुभं संभावितं सर्वं भविष्यति भवद्गिरा ॥ १०६ ॥
इत्युक्त्वा सा महोत्साहैरुत्साहजनकं शिवम् । पूजयामास रत्नाद्यैरपारैर्नृपभामिनी ॥ १०७ ॥

शिवार्चनादन्यदयत्नतो वा यत्नेन वा सा न चकार धीरा ।
परात्परं शङ्करमेव मत्वा सदा तदाराधनतत्पराऽभूत् ॥ १०८ ॥

कोवा नार्चयति प्रभावमतुलं भावं भवाराधको
धृत्वा पातककञ्चुकानि बहुधा युक्तोऽपि मुक्तिप्रदम् ।
गोविन्दाक्षिसरोजपूजितपदं मन्दारकुन्दादिभिः
माकन्दैरतिसुन्दरैरपि मुदाऽमन्दैर्मरन्दैरपि ॥ १०९ ॥

मनोभवमनोभवप्रभवभूतभीतिं यतो न वेद तत एव तद्विपुलफाललोलानलैः ।
विदग्धमपि दग्धमित्यपि वदन्ति वृन्दारकाः [2] शिवावगणनाफलैरशुभत्रीक्षणैर्दुःखिताः ॥ ११० ॥

1 विद्युदाभा C 2 शिवार्चगणनाफलैरशुभलक्षणैर्दुःखितम् C

विवेकविगमे कथं गिरिशतुङ्गलिङ्गार्चनं तदक्षयसुखप्रदं विदितवेदतत्वो बुधः ।
जहाति न तदादराः परमुदारहाराः पुरा पुरारिपदपूजनादखिलसिद्धिमापुर्नृप ॥ १११ ॥

नन्दिकेशः —

इत्युक्तो याज्ञ्यवल्क्येन मुदा जनकभूपतिः । प्रणम्य तं मुनिं भक्त्या प्राह देवः(?)कृताञ्जलिः ॥

जनकः —

[1] वेदोक्तरीत्या शिवपूजनेषु ममाधिकारः शिवदीक्षितस्य ।
स्यादित्यवैमि त्वरया ममाद्य पञ्चाक्षरं शैवमिह प्रयच्छ ॥ ११३ ॥

सेयं गङ्गा तुङ्गरङ्गत्तरङ्गा लिङ्गं तुङ्गं शाङ्गमेतेऽपि बिल्वाः ।
कालः पुण्यः कार्तिकः पुष्ययुक्तः मासः पुण्यः सोमपूजोपयुक्तः ॥ ११४ ॥

गुरुरपि मम मान्यो मान्यधन्याग्रगण्यः त्वमसि गुरुरपारासारसंसारबन्धात् ।
कुरु कुरु कुरु मुक्तं मुक्तिलाभाय शैवं दिश दिश दिश मह्यं मन्त्रमप्राप्ततन्त्रम् ॥ ११५ ॥

नन्दिकेशः —

इति तद्वचनं श्रुत्वा याज्ञ्यवल्क्यो यथाविधि । ददौ पञ्चाक्षरं तस्मै सकुटुम्बाय धीमते ॥ ११६ ॥

ततस्तया बभासेऽसौ शुभया शैवविद्यया । नवेन्दुरिव वृन्दारवृद्धिहेतुः स भूपतिः ॥ ११७ ॥

पञ्चाक्षरजपं कुर्वन् कुर्वन् लिङ्गार्चनं मुहुः । पिबन् शिवकथालापसुधां सुखमवाप सः ॥ ११८ ॥

तस्माद्भवद्भिरभयाय शुभाय नित्यं सेव्यं महेश्वरपदाम्बुजमादरेण ।
उक्ता कथापि मुहुरादरतोऽनुवारं भक्त्या स्मृतापि शुभदा भवतीति मन्ये ॥ ११९ ॥

यः कण्टकारिप्रसवोऽपि लिङ्गे निपातितस्तेन गताधसंधः ।
अयं शिशुः शङ्करमन्दिराय नेयो विमानेन मयाद्य सद्यः ॥ १२० ॥

व्यासः —

इति तद्वचनं श्रुत्वा पुनरूचुः सुरास्तदा । नन्दिकेश्वरमाश्चर्यकरैरेव करैर्नताः ॥ १२१ ॥

देवाः —

अयत्नलभ्यः कथमेवमासीत् कैलासवासः सविलासहेतुः ।
सांबस्य संसारविमोचकस्य तत्वं च दुर्ज्ञेयमिदं शिवस्य ॥ १२२ ॥

---

1 त्वदुक्तरीत्या C

जन्म भिल्लकुले तस्य बालकस्यातिकुत्सिते । धर्मवाक्यपरिज्ञानशून्यास्तत्कुलजाः खलु ॥

योगिनोऽपि न विदुः शिवरूपं सन्ततेन तपसातिकृशास्ते ।
तद्विचारविरतिः कथमासीत् अस्य पुण्यमधिकं कथमेवम् ॥ १२४ ॥

दृष्टा पूर्वं तेन काशीपुरी वा पीतं नाल्पं ज्ञानवापीजलं वा ।
लिङ्गं तुङ्गं विश्वनाथस्य बिल्वैरुत्फुल्लैर्वा पूजितं तेन पुष्पैः ॥ १२५ ॥

न चाविमुक्तेश्वरलिङ्गपूजा कृता कृतान्तान्तकतोषहेतुः ।
न चान्नपूर्णापि विलोकिता सा न चार्चितं तत्पदपङ्कजं वा ॥ १२६ ॥

न ढुण्ढिराजांघ्रिसरोजपूजा प्रत्यूहनाशाय कृता चतुर्थ्यां ।
दूर्वाङ्कुरैर्वा घृतलड्डुकैर्वा न पूरिकैर्वा नच पुण्डरीकैः ॥ १२७ ॥

न क्षिप्रविघ्नेश्वरपादपूजा कृता प्रसूनैर्नवबिल्वपत्रैः ।
छिद्रैः पवित्रैर्न कृतातिभक्त्या वीरेश्वरायार्चनमद्य तेन ॥ १२८ ॥

विकटाचरणारविन्दयोररविन्दैर्नवबिल्वपल्लवैः ।
न कृतं खलु पूजनं मुदा न च तेन प्रणतापि सा शिवा ॥ १२९ ॥

सेनाविनायकः पुष्पैः चिन्तामणिविनायकः । मङ्गलेशोऽपि धर्मेशो न तया सर्वदार्चितः ॥ १३० ॥

बृहस्पतीश्वरस्यापि विश्वकर्मेश्वरस्य वा । विश्वेश्वरस्य वा पूजा न कृता बिल्वपल्लवैः ॥ १३१ ॥

चन्द्रेश्वरो नार्चित एव तेन सिद्धेश्वरी वा न समर्चितापि ।
अमर्दकेशो न समर्चितोऽपि न पापभक्षोऽपि समर्चितोऽभूत् ॥ १३२ ॥

श्रीकालभैरवपदाम्बुजपूजनं च बिल्वादिभिर्न कृतमेव कदापि तेन ।
काशीपुरामितशिवालयलिङ्गपूजासंजातपुण्यफलमप्यमलं श्रुतं नु ॥ १३३ ॥

भवदागमनाज्जातं रूपं तस्य विशेषतः । अन्यथा पूज्यताबुद्धिरीदृशेषु कथं भवेत् ॥ १३४ ॥

महेशार्चकचिह्नानि दुर्ज्ञेयान्यपि लेशतः । ज्ञायन्ते कानिचित् तेषु तानि सन्त्येव नेदृशे ॥

एवं सति कथं वा स्यादधिकारस्य लक्षणम् । अलमेवाधिकारेण जीवनेनाप्यलं खलु ॥ १३६ ॥

योगाभ्यासेनापि सर्वज्ञता न सर्वज्ञत्वं दुर्लभं मानुषेषु ।
तस्मान्नास्मिंस्तावदस्माकमिच्छा यच्छान्यस्मै स्वच्छमच्छाधिकारम् ॥ १३७ ॥

व्यासः —

इत्युक्त्वा प्रणताः सर्वे मुद्रिकां विनिवेद्य ते । ततस्तानाह नन्दीशो महेश्वरमनुस्मरन् ॥ १३८ ॥

बुद्ध्वा ज्ञेयं शांभवं चिह्नमादौ पश्चात् कृत्यं कार्यमन्यद्भवद्भिः ।
धर्माधर्मज्ञानसिद्धिः फलं किं विद्यानां वा स्वाश्रितानां विशेषात् ॥ १३९ ॥

महेश्वरश्चेदधिकारमन्यं प्रदातुमिच्छत्यपि शोभनेच्छाः ।
तदा प्रसङ्गोऽप्ययमपीति मन्ये महेश्वरस्तावदतिस्वतन्त्रः ॥ १४० ॥

महेश्वराज्ञावशगत्वमेव संप्रार्थनीयं तदिदं हि भाग्यम् ।
एतत्परित्यागमतिः कुबुद्ध्या मोहादभूदेवमिति प्रबुद्धम् ॥ १४१ ॥

व्यासः —

इत्युक्तास्ते सुराः सर्वे नन्दिकेशेन धीमता । तदाज्ञां शिरसा धृत्वा कृताञ्जलिपुटाः स्थिताः ॥

ततः परं तैः प्रणतोऽतिभक्त्या च नन्दिकेशोऽपि चतुर्मुखाद्यैः ।
विमानमारुह्य ययौ गृहीत्वा तं बालकं शङ्करमन्दिराय ॥ १४३ ॥

गाणापत्यं ददौ तस्मै बालकाय कृपानिधिः । तत्पित्रे प्राज्यराज्यानि ददौ पूजामनुस्मरन् ॥१४४॥

तस्मादपारकरुणारससागरस्य विश्वेश्वरस्य महिमा स महानतो मे ।
तद्वर्णनाय सहसा न मनः प्रवृत्तं निःशेषतद्गुणविशेषणवर्णनाय ॥ १४५ ॥

चित्तं शङ्करतद्गुणार्णवलसत्कल्लोलमालास्फुरत्कोट्यंशांशविशेषभूरिमहिमासन्दोहमानन्ददम् ।
स्मृत्वा पातकभीतिमात्ररहितं पापाब्धिसंशोषणं मत्वा तिष्ठति नीलकण्ठचरणाम्भोजार्चनात्यादरम् ॥

भूत्या संवलयन् ललाटमसकृद्रुद्राक्षमालां वहन् तुङ्गं लिङ्गमुपस्पृशन्नभिनवैर्बिल्वीदलैरर्चयन् ।
वारं वारमुमामनोहरपदाम्भोजस्वरूपं स्मरन् कुर्वन् पातकपावकाचललयं शैवः शिवं वांछति ॥

हाराचारपरादराननुसरन् श्रीरुद्रमावर्तयन् श्रीपञ्चाक्षरमक्षरं प्रति जपन् लिङ्गानि पश्यन् मुहुः ।
श्रीविश्वेश्वर पाहि मामिति वदन् वीरेश्वरं संस्तुवन् कुर्वन् पातकपावकाचललयं शैवं शिवं वांछति ॥

ध्यायन् मारहरं सुमेरुशिखरापारस्फुरन्मन्दिरा हारस्वान्तसरोजकेसरवरासाराकरं शङ्करम् ।
रोमाञ्चोच्चयमञ्चयन् प्रसरयन्नानन्दजाश्रुद्रवं कुर्वन् पातकपावकाचललयं शैवः शिवं वांछति ॥

दुर्दिनानि सुदिनानि न रेवातीरनीरजनिरन्तरबिल्वैः ।
बिल्वमूलकमलामललिङ्गे शङ्गमङ्गलकराङ्गकराग्रैः (?) ॥ १५० ॥

इयं शिवकथासुधामुहुरुमामनोहारिणी शिवेन कथिता पुरा त्रिपुरवैरिणा सादरम् ।
अपारसुकृतार्णवैः परमवाप भूमण्डलं महाघलयकारणं करणमाशु मुक्तेः परम् ॥ १५१ ॥

रहस्यमेतद्रहसि श्रुतं पुरा पुरारिवक्त्राम्बुरुहेण गौर्या ।
अनेककल्पावधिसावधानमाम्रेडितं साधु सुधारसेन ॥ १५२ ॥

ततः कदाचिद्गणनायकेन श्रुतं शिवावक्त्रसरोरुहेण ।
स्कन्देन तस्मात् श्रुतमादरेण श्रीनन्दिकेशेन ततः श्रुतं च ॥ १५३ ॥

ततः सुरैरेतदतिप्रयत्नैः प्राप्तं रहस्यं मुनयो मयेदम् ।
नारायणेनोक्तमतिप्रयत्नात् आराधितेनैव मुहुर्मयापि ॥ १५४ ॥

इदं रहस्यं खलु गोपनीयं रत्नस्वरूपं खलु रत्नरत्नम् ।
भक्ताय देयं खलु शांभवाय ज्ञात्वा स्वरूपं पुनरादरेण ॥ १५५ ॥

एतद्यथा कर्णपथं प्रयाति शैवं रहस्यं परमं पवित्रम् ।
करोति तावत् सकलाधनाशं संसारघोराद्भुतराशिनाशम् ॥ १५६ ॥

अत्रैवोदाहरन्तीममितिहासं बुधोत्तमाः । शृणुध्वं सावधानेन सर्वदुःखविनाशकम् ॥ १५७ ॥
पुरा रेवासरित्तीरे शौनकः शिवतत्परः । शिवलिङ्गार्चनं कुर्वन् उवास कमलादिभिः ॥ १५८ ॥
ततः परं बिल्वपत्राण्यादातुं बिपिनं ययौ । भार्यया सह लिङ्गं च समादाय स नार्मदम् ॥ १५९ ॥
वनजैः कुसुमैरेव पूजयन् गिरिजापतिम् । शिवलिङ्गे शिवाकारे सर्वसिद्धिप्रदायकम् ॥ १६० ॥
ततः परं स शुश्राव रहस्यं दूरतः स्थितः । गीयमानं शुकेनैव कुमारेण महादरात् ॥ १६१ ॥
कुमारस्य रहस्येऽस्मिन् प्रीतिरप्यक्षता सदा । सर्वोपनिषदां सारैः परमानन्दसागरे ॥ १६२ ॥
ततः श्रुत्वा शौनकोऽपि रहस्यं शैवमादरात् । शिष्यानध्यापयामास वेदसारत्वनिर्णयान् ॥ १६३ ॥
ततस्तेष्वेव शिष्येषु कोऽप्यभ्यस्य विशेषतः । गर्गाख्यः प्रययौ स्वीयं देशं हिमगिरेः परम् ॥
स्वकलत्रेण [1] संयुक्तो यथाभ्यासेन तस्य सः । सूर्यमण्डलसंकाशः पिशाचैरवलोकितः ॥ १६५ ॥
ततस्ते समुपागत्य प्राहुरत्यन्तमादरात् । परिवृत्य कलत्रेण सहितं भीतिसंयुतम् ॥ १६६ ॥

पिशाचाः —

मानुष्यो हि तवाकारः सूर्यमण्डलसन्निभः । कथमासीदिदं प्राप्तं वनं परमपावनम् ॥ १६७ ॥

---

1 संयुक्तः पथ्यभ्यासेन C

भवद्दर्शनमात्रेण तृषितानां तृषा गता। क्षुधापि शान्ता बहुधा वदास्मभ्यं विशेषतः ॥ १६८ ॥
सत्यं चेदुच्यते तर्हि बहु देयं धनं मुदा। अत्रास्त्यगणितं द्रव्यमस्माभिरिह पालितम् ॥ १६९ ॥
अस्माभिः पापचारेण पिशाचत्वमुपागतम्। अस्मत्कृतानां पापानामियत्तापि न दृश्यते ॥

अपारजन्मार्जितपापसंघैः अशाङ्करत्वेन कृतानि भूयः।
पापान्यपाराणि पिशाचयोनिः प्राप्ता मुहुर्दुःखविशेषभोगैः ॥ १७१ ॥

पिपासयापि क्षुधयापि नित्यं प्रतिक्षणं नो मरणोपमानि।
दिनानि यान्त्येव न तद्विनाशः संभावितोऽपीत्यतिदुःखमेव ॥ १७२ ॥

तव प्रभावोप्यघनाशकोऽयं तमेव तावद्वद सत्यमत्र।
तेनास्मदीयानि किलात्यघानि नाशं प्रयास्यन्ति न संशयोऽत्र ॥ १७३ ॥

पिशाचत्वविनाशार्थं त्वत्प्रभावोपयोगिनम्। वदान्यथा वधोपायश्चिन्तनीयो न संशयः ॥ १७४ ॥
इति तद्वचनं श्रुत्वा तद्भार्या भयविह्वला। प्राह भर्तारमत्यार्ता दृष्ट्वा तानुद्यतान् वधे ॥ १७५ ॥
रहस्यश्रवणादेव तेन मुक्ता भवन्त्वतः। तावता तद्भयाद्भीतिर्न भविष्यति सर्वथा ॥ १७६ ॥
इति तद्वचनं श्रुत्वा सम्यगित्यवधार्य च। रहस्यमादितो वक्तुं चकारोपक्रमं मुनिः ॥ १७७ ॥
ते सर्वे मेचकाकाराः शृण्वन्तः सादरं कथाम्। पूर्णं हिरण्यरूपत्वमापुर्महितमास्तिकाः ॥ १७८ ॥
ततस्तानपि दृष्ट्वायं गर्गो विस्मयसंयुतः। मेने शिवरहस्यस्य प्रभावमतुलं तदा ॥ १७९ ॥
तन्मुखप्रमुखाङ्गेभ्यः शनैर्मेचकवर्णता। निर्गता तत्कथालापश्रवणान्मुनिपुङ्गवाः ॥ १८० ॥
सन्तुष्टास्ते ततः सर्वे प्रणम्य मुनिपुङ्गवम्। तत्तन्निक्षेपदानेन चक्रुः प्रीतमनुत्तमम् ॥ १८१ ॥
ततस्तानाह स मुनिः केन पापेन दुर्दशा। प्राप्तेयमिति ते प्राहुः स्वकीयाघकुलं तदा ॥ १८२ ॥

श्रुत्वा तदीयाघकुलानि दृष्ट्वा तदङ्गकान्तिं च महोत्सवं च।
उवास तत्रैव वने निधानैरनन्तधा प्राप्य सुखं नितान्तम् ॥ १८३ ॥

ते सन्त्यक्तपिशाचदेहनिकराः सर्वेऽपि गन्धर्वतां
प्राप्ताः पुण्यगणान्विताः शिवकथालापानुसंसेवनात्।
तस्मात् पुण्यकरप्रभावमतुलं श्रोतव्यमत्यादरा-
देवं शैवरहस्यमीश्वरपदाम्भोजार्चकैः केवलम् ॥ १८४ ॥

एतत्पुस्तकमादरेण लिखितं यः पूजयेत् सन्ततं तत्सन्तानसमृद्धिरक्षयसुखावाप्तिर्महाघक्षयः।

स्यादेवेति शिवप्रसाददमिदं शैवं रहस्यं परं श्रोतव्यं शिवपूजनादररसैर्माहेश्वरैरन्वहम् ॥ १८५ ॥

कः कर्पूरपरागभासुरगिरिस्फारस्फुरच्चन्द्रिका तारापारसुधाकरोरुरुचिरव्याहारहीराकरात् ।
... ... ... ... ... दूरीकर्तुमनङ्गहर्तुरपरः शक्तोऽस्त्यभिव्याकुलैः ॥ १८६ ॥

सोऽहं मोहसमूहवाहतिमिरासारप्रसाराकरापारक्रूरकठोरस्वरनिकराकाराकरं शङ्करम् ।
वारं वारमनुस्मरामि स परं गौरीविहारादरः संसारज्वरसागरज्वरकरो ध्येयो दयासागरः ॥१८७॥

धन्यं फालतलं विभूतिलखितं रुद्राक्षमालाङ्कितं धन्यं कर्णतलं च नेत्रयुगलं धन्यं शिवालोकनैः ।
धन्यं श्रोत्रयुगं च शङ्करकथापीयूषधारावृतं धन्यं मानसमम्बिकापतिपदध्यानानुरक्तं सदा ॥१८८॥

धन्यं मन्दिरमिन्दुशेखरपदाचारादरात्यादरव्याहारव्यवहारधीररुचिरव्यापारदाराकरम् ।
हारापारकुमारवीरसुकरासारप्रसाराचिरं प्राकारप्रवरं परं परमिदं किं धन्यमन्यद्भवेत् ॥ १८९ ॥

श्रीकालकालमहिलावलकालकालहालाहलामलगलासलजालभाल ।
कल्लोललोलकमलामलपत्रजालमूलत्रिशूलममलं कलयेऽनुवेलम् ॥ १९० ॥

श्रीगौरीरमणप्रभावकथनानन्देन मन्मानसं व्याप्तं प्राप्तमतःपरं शिवपदाम्भोजार्चनानां फलम् ।
स्कन्दानन्ददमेतदेव परमं शैवं रहयं मुहुः मोहाग्निप्रलयाम्बुवाह इति मे वृद्धिः प्रवृद्धा मुदे ॥

सदाशिवः —

इति तद्वच श्रुत्वा नत्वा व्यासं पुनः पुनः । सूताश्रमं ययुः सर्वे शौनकाद्याः शिवे शुभे ॥

तत्र सूतं पुनर्नत्वा ते सर्वे मुनिपुङ्गवाः । तुष्टुवुर्विविधैः स्तोत्रैः मद्भक्तं रोमहर्षणम् ॥ १९३ ॥

ऋषयः —

व्यासस्त्वया प्रेरित एव सूत श्रीमन्महादेवकथासुधायाम् ।
अतो वयं धन्यतमाः कृतार्थाः कृताः कृतान्तान्तकसेवया च ॥ १९४ ॥

श्रुत्वा चैव महेश्वरामृतकथां भूमौ वसामो वयं सत्सङ्गः खलु शाङ्ग इत्यभिगतः सङ्गोऽयमत्युत्तमः
अस्माकं धनमेतदेव बहुधा तावद्विधेया दया शैवाग्रेसरपादपद्मभजनं धन्यं परं जीवनम् ॥ १९५ ॥

श्रीविश्वेश्वरनामकीर्तनसुधासिन्धुः प्रवृद्धोऽधुना तत्कल्लोलपरंपरा वितनुते कल्याणराशीन् मुहुः ।
उत्सेकं समवाप्य तावदधुना पुण्याम्बुराशिः परं ब्रह्मानन्दद एव शोभनकुलं दास्यत्ययं सर्वथा ॥

इत्याकर्ण्य शिवप्रभावकथनोद्भूताद्भुतानन्दजापाराश्रुप्रगलत्सुधोन्मुखशुकाद्यास्यास्यसज्ञान् मुनीन् ।
दृष्ट्वा शङ्करपूजनोत्सवरसाविर्भावसम्भावनः संसारप्रवरावबोधककथासामर्थ्यमाहास्तिकः ॥१९७॥

वेदान्ता अपि तावदन्तरहिताः श्रान्ताः शिवाराधनं
ध्यानापारकथाफलानुकथने स्यादत्र का वा कथा ।
देवानामुरगेन्द्रकिन्नरगुरुव्यासादिकानां कथा
दूरे धूर्जटिवाग्विशेषरचना विज्ञेयमेतत् फलम् ॥ १९८ ॥

ये वांछन्ति शिवं शिवामितकथारूपस्फुरत्स्वर्धुनी
निर्धूताखिलपातकात्मकमलाः शीलाः सुशीलाः कलौ ।
ते सर्वे वयमेव सन्ततमुमाकान्तप्रसादात् परं
संप्राप्यात्र शिवङ्करं शिवमिति ध्यात्वा शिवं यान्त्यपि ॥ १९९ ॥

अज्ञानोरुतरान्धकारलहरीपूरारुणः कोप्ययं विज्ञानामृतसागरः शिवकथारूपो विरूपं परम् ।
सर्वं शर्वसुरूपमेव कुरुते मुक्तानमुक्तानहो तद्बिन्दुस्फुरदिन्दिराकरकरं कर्तुं समर्थः श्रुतः ॥२००॥

योगाभ्यासरता भवन्तु बहवः तीर्थाटनाद्युद्यताः तीर्थावासरताश्च निष्ठुरगिरिद्वारान्धकारादराः ।
तत्रास्था मम मास्त्वहं शिवरहस्यापारवर्णस्फुरन्निश्रेणीशिखरेण शङ्करकुलालम्बी शिवं प्रार्थये ॥

कण्ठे तिष्ठति यस्य वा शिवरहस्यानन्तचिन्तामणिः
नित्यं तद्वशतां प्रयान्ति विबुधाः कालान्विताः स्वान्विताः ।
तद्देहाङ्गणमेत्य तिष्ठति रमा वाणीशचीसंयुता
तद्भाग्यावधिमिन्दुखण्डविलसन्मौलिः परं वेत्त्यहो ॥ २०२ ॥

आरुह्याहमहं मुहुः शिवरहस्यानन्ददं स्यन्दनं ऋग्वेदादिकवेदचक्रघटितं व्यासादिकैश्चाश्रितम् ।
हारापारवरध्वजं शिवकथाशय्यावितानान्वितं शर्वाधिष्ठितमन्तरायरहितव्यापारमानन्दये ।२०३॥

पश्यामः शतशः शिवङ्करशिवाकान्तातिकान्तामितानन्तानन्दकथासुधाकरकरव्यापारसाराकरम् ।
हारश्रीकरतारकं शिवरहस्यानन्दमत्यद्भुतं हाराचारचिराचिरद्युतिहरव्याहारगङ्गावृतम् ॥ २०४ ॥

अत्यल्पं फलमिन्दिरारमणतारूपं विधिस्वात्मकं त्रैलोक्याधिपतित्वमप्यगसुताकान्तार्चकस्येत्यतः ।
अन्यत् तावदभूतपूर्वममराप्राप्यं किमप्यम्बिकाकान्तानन्दकथोत्सुकस्य च परं कल्प्यं फलं तद्विधेः ॥

श्रुत्वापि प्रयतो द्विजः शिवरहस्यार्धार्धभागाक्षरा पारश्रीकरधीरवीररवमप्यस्ताघकोटिर्भवेत् ।
मुक्तोऽपीति शपामि शङ्करपदाम्भोजे भुजावुन्नतौ कृत्वा देवगणस्तुतां शिवकथां मत्वापि नत्वा शिवौ॥

सत्यं तावदिहोच्यते शिवरहस्यानन्दमन्दाकिनी कल्लोलानिलपोतपूतहृदयांभोजेषु मृत्युञ्जयः ।
नृत्यत्यम्बिकया सहामृतरसैः कैलासवासेन वा कृत्यं नेति मुहुर्मुहुः शिवरहस्यानन्दकन्दादरः ॥

श्रुत्यन्ताः प्रमथाधिनायककथापूतास्ततस्तत्कथामध्यस्थाक्षररूपमप्यघगिरिप्रध्वंसवज्रायुधम् ।
तत्पादाम्बुधिवाडवोऽप्यघकुलापारान्धकारामितानम्रार्कामृतरश्मिमण्डलकुलं किं वा सुधासागरः ॥

[1]कस्तूरीखल्यबिल्वश्रमिव सुकरापाररत्नाकरोरु
श्रीयुक्तानन्तमुक्ताफलमिव विमलं शैवमेतद्रहस्यम् ।
धृत्वा भावोऽपि भाति प्रभुरिव जगतां शंभुभक्तप्रभावो
भावो भाग्याम्बुराशिः शिवपदकमलाराधकः कोपि लोके ॥ २०९ ॥

किं तस्यावभृथाप्लवैः सुरसरिद्रेवादितीर्थाप्लवैः किं गोकोटितुलादिदाननिकरैः किं दिव्यतीर्थाटनैः ।
भक्तिश्चेद्गिरिशार्चने शिवरहस्यानन्दसिन्धुस्फुरद्वीरापारतरङ्गमङ्गलकथाभागार्धभागोऽपि वा ॥

संसाराद्भुतसागरं शिवरहस्योत्कृष्टलोकाश्रितः श्रीविश्वेश्वरकर्णधारकृपया तीर्त्वाद्य नक्रैर्भयम् ।
त्यक्त्वा तत्परपाररूपपरमानन्दस्वरूपाम्बिका कान्तानन्ददपादपद्मपुलिनासीनो न सीदाम्यहो ॥

पायादन्वहमेव वः शिवरहस्याम्भोरुहं कन्दति स्कन्दो नालति तन्मनःशिवपदाम्भोजप्रभा कोशति ।
पत्रन्तीशगुणाः शिवांघ्रिकमलं तत्कर्णिकारूपति स्वान्तं मे भ्रमरत्युमापतिकथा तत्केसरन्ति स्वतः ॥

पायादङ्कगताम्बिकाङ्कविलसत्पर्यङ्कलीलालतापारानन्ददसिन्दुराननसुधादानाकरः शाङ्करः ।
स्कन्दालोकनसादरो गिरिसुतास्मेराधरास्वादनानन्दालोलितविग्रहो मुहुरुमादिव्याङ्गसङ्गप्रियः ॥

पायादव्ययभव्यभूरिविभवो भूभृत्कुमारीकरापारश्रीकरतारहाररुचिरालङ्कारशङ्काकरः ।
किं गौरीकरजाजिरातिरुचिरश्रीः पद्मरागाधराधारश्रीरियमित्युमापरिवृढो गाढं शिवालिङ्गितः ॥

पायादर्धेन्दुमौलिः श्रुतिकथितकथाकल्पवृक्षोऽतिदक्षो
दिक्षु व्याप्तः क्षणं वा भवभवभवजापारतापापहारः ।
स्मृत्यारूढोपि योषित्परिवृढगिरिजारक्षितो वेदशाखः
नन्दीशादिप्रसूनो मुनिजनमधुपो मोक्षलक्ष्मीफलाढ्यः ॥ २१५ ॥

पायादर्धाङ्गगौरीकरकमलकथारत्नसिन्धुर्यतोऽभूत्
तत्वज्ञानामृतांशुः शिवभजनसुधाशैवकल्पद्रुमोऽपि ।
शङ्खश्रीलिङ्गपूजाव्रतनियममणिर्भक्तिभूकामधेनुः
वैराग्यैरावृतोऽपि त्रिनयनचरणध्यानरूपापि लक्ष्मीः ॥ २१६ ॥

---

1 कस्तूरीस्वल्पखिल्यामिव सुकृतकरापार C

पायादर्धशशाङ्कशेखरकथाश्रीकामधेनुर्यया
लिङ्गाराधनपुण्यलक्षणमभूत् क्षीरं तदप्यक्षरम् ।
आमिक्षापि विलक्षणा शिवयशोरूपा शिवाधिक्यता (?)
धीरूपं दधि शङ्कराङ्घ्रिकमलस्नेहावृतं तद्घृतम् ॥ २१७ ॥

कर्तव्या नगनिम्नगाब्धिसिकतानीरांशभूभृद्भवा पारांशांशधनांशभागगणना कालेन कालेन वा ।
ब्रह्माद्यैरपि सादरैः शिवरहस्योक्ताक्षरार्धाक्षर व्यक्ताकर्णनपुण्यशैलगणना कर्तुं न शक्या द्विजाः ॥

स्वस्त्यस्तु प्रियमस्तु शं शिवरहस्याकर्णने सन्ततं
विश्वासोऽस्तु शिवार्चने शिवजने भूतित्रिपुण्ड्रे शिवे ।
रुद्राक्षाभरणे शिवार्चनरताः पुत्राः पवित्रास्ततः
पौत्राद्या अपि सन्तु शोभनकुलान्याकल्पमायुश्च वः ॥ २१९ ॥

भो भो भवाद्भुतदवानलजालमालासन्तापभीः शिवरहस्यकथाभिवृष्ट्या ।
शान्ताः प्रशान्तहृदयाः सदया भवन्तः स्वात्मन्युमारमणपादरजो भजध्वम् ॥ २२० ॥

संसारोरुवसन्तसूरकिरणव्यापारतापातुरा-
पारं श्रान्तिविनाशिनीं शिवरहस्याभूतपूर्वप्रपाम् ।
को वा नेच्छति वांछितं यदि भवेदिष्टं परं जीवनं
त्यक्त्वा स्वात्मविघातकं कलिमलाक्रान्तं कलौ केवलम् ॥ २२१ ॥

स्कन्दः —

इत्युच्चैर्गिरिशार्चनोत्सवरतान् कर्तुं प्रवृत्तस्तदा सूतो भूतिविभूषितः सितलसत्फालत्रिपुण्ड्राङ्कितः ।
सायङ्कालशिवार्चनोद्यतमतिः सूर्योऽस्तभृङ्गं यथा उत्तुङ्गोन्नतशृङ्गलिङ्गममलं दृष्ट्वैव दूरान्मुने ॥

सायंकालशिवार्चनोत्सवरतान् दृष्ट्वा मुनींस्तत्सुतान्
तद्दारान् तरवः शुका अपि पिकाः काला मराला अपि ।
शार्दूलास्तरवोपि गोकुलयुताश्चक्रुः शिवाराधने
यत्नं भूतिविभूषिताः शिवमहादेवेत्युदीर्योच्चकैः ॥ २२३ ॥

एवं शङ्करशङ्करामृतकथापीयूषधारामृतं सर्वे ते मुनयः प्रदोषसमये संवीक्ष्य फालेक्षणम् ।
लिङ्गे पूजयितुं त्रयीमपि मुहुः स्मृत्वा प्रवृत्तास्ततः प्राज्ञाः सूतमुमासहायकलने कालोऽयमित्यूचिरे ॥

इत्याकर्ण्य वचो विलोक्य रविमप्युद्धूलिता भूतिभिः
बिल्वाद्यैः शिवपूजनोत्सवरताः सिद्धेश्वरं वीक्ष्य च ।

धृत्वा मौनमुमासहाय शिव इत्युक्त्वा शिवाराधनं
चक्रुस्ते क्रतुकोटिपुण्यफलदं लिङ्गार्चनं कुम्भज ॥ २२५ ॥

श्रीकालभैरवषडाननढुण्ढितुण्डनन्दीशभृङ्गिवृषभेश्वरवीरभद्रैः ।
ब्रह्मादिभिश्च कनकाञ्चितवेत्रहस्तैः आराधितः स पुरतोऽस्तु शिवः शिवो नः ॥२२६॥

आचन्द्रार्कमिदं रहस्यमनिशं शैवं शिवार्थे मुदा
श्रोतव्यं सुखसंततिप्रदमुमाकान्तप्रियं सादरम् ।
एतत्पुस्तकदानमप्यघहरं पुण्याम्बुराशिप्रदं
सर्वाभीष्टदमप्यतः शिवरतैः श्राव्यं श्रुतिव्याहृतम् ॥ २२७ ॥

इति श्रीशिवरहस्ये हराख्ये तृतीयांशे उत्तरार्धे श्रीजनकयाज्ञवल्क्यसंवादे धर्मवेनुचित्राम्बरसंवादे शिवपूजामहिमावर्णनं नाम पञ्चाशोऽध्यायः ॥

॥ **तृतीयांशः समाप्तः** ॥



---

भग्नपृष्ठकटिग्रीवः स्तब्धदृष्टिरधोमुखः । यत्नेन लिखितं ग्रन्थं सुखेन परिपालय ॥

विजयनामसंवत्सरे वैशाखवदि एकादश्यां बुधवासरे काश्यां विश्वेश्वरराजधान्यां इदं पुस्तकं समाप्तम् ॥

इदं पुस्तकं **केशवभट्टबाबुभट्टेन** लिखितम् ।

यो रुद्राक्षविभूतिभूषितवपुर्विप्रः सदा हस्तकं चासक्तं शिवपूजने हि तनुते ध्याने मनः शस्तकम् ।
दादाख्यः प्रगृणन् शिवं च भटगोस्वामी जटामस्तकं तस्यैवामृतदायकं शिवरहस्याख्यं त्विदं पुस्तकम् ॥

——:o:——